चतुर्थ, सुखादावतिव्याप्तेः सुखादेरपि स्वसत्तायां प्रकाशाव्यभिचारात्। न पञ्चम', प्रदीपादावतिव्याप्ति., प्रदीपादेरपि स्वव्यवहारे हेतुत्वात्प्रकाशत्वाच्च। अथ ज्ञानव्यवहारहेतुप्रकाशत्व विवक्षितं, तदपि न, अनुव्यवसायेऽतिव्याप्ते। तस्य वेद्यत्वेऽपि व्यवसायज्ञानव्यवहारहेतुप्रकाशत्वात्, प्रदीपज्ञानमिदमिति व्यवहारहेतौ प्रदीपप्रकाशेऽतिव्याप्तेश्च। किंच व्यवहारहेतुत्वं विशेषणम्? उपलक्षणं वा? नाद्य; मुक्तिप्रलयादावव्याप्ते'। न द्वितीय, उपलक्षितत्वस्यापि विशेपणत्वे प्रागुक्तदोषानुषङ्गात्, स्वरूपमात्रत्वे तु ज्ञानं प्रकाश इत्येव

तुल्यमेतत्। **स्वव्यवहारे हेतुत्वादिति**। व्यवहारो ह्येतद्विषयोऽभिज्ञाभिवदनं वा हानादिर्वा कर्मकारकप्रदीपजन्य इत्यर्थः। **अथ ज्ञानेति**। स्वव्यवहारेत्यत्र प्रस्तुत ज्ञानमेव स्वशब्देनाभिधीयते न विषयमात्रम्। तद्व्यवहारहेतुत्व च न दीपादेरस्ति, प्रदीपादेर्ज्ञानाप्रकाशत्वात्। अतो नातिव्याप्तिरिति भावः। अनुव्यवसायेतीश्वरज्ञानस्याप्युपलक्षणम्। अथानुव्यवसायज्ञानमेव स्वप्रकाशवादे न सप्रतिपन्न, यत्रातिव्याप्तिरुच्येत सप्रतिपन्नत्वे वा तस्यापि व्यवसायवदेव पक्षतेति तत्राह—**प्रदीपज्ञानमिति**। विशिष्टवेदनस्य विशेषणालम्बनत्वनियमात् विषयजन्यत्वाच्च तज्ज्ञानस्य प्रदीपज्ञानमिदमित्यनुव्यवसायस्याभिज्ञारूपव्यवहारस्य स्वविषयज्ञानविशेषणीभूतप्रदीपजन्यत्वमस्तीति ज्ञानव्यवहारहेतौ प्रदीपेऽतिव्याप्तिः स्यादेवेत्यर्थः। अभिवदन वा व्यवहारस्तस्यापि परम्परया व्यावर्तकप्रदीपजन्यत्वाद्व्यवहारहेतुत्वमिति। **व्यवहारहेतुत्वमिति**। स्वव्यवहारहेतुप्रकाशत्वमित्यत्र व्यवहारहेतुत्व प्रकाशस्य विशेषणमुपलक्षण वेत्यर्थः। उपलक्षितत्वमप्युपलक्षिते नाम तस्य धर्मः? स्वरूप वा? आद्ये, तदप्युपलक्षण? विशेषण वा? नाद्य., अनवस्थापातात्। द्वितीय

हो सकता। अत सुख–आदि की सत्ता सदैव ज्ञान-नियत होती है। ]

(५) पञ्चम लक्षण (स्वव्यवहार–हेतुता–विशिष्ट प्रकाशता) भी समुचित नहीं, क्योंकि प्रदीप-आदि में अतिव्याप्त है–प्रदीप–आदि में भी अपने व्यवहार की हेतुता है और प्रकाशता भी है। यदि कहे कि ज्ञानरूप व्यवहार की हेतुता लक्षण-गत व्यवहार-हेतुता से विवक्षित है, तो वह भी नही कह सकते, क्योकि व्यवसायरूप ज्ञान-व्यवहार के हेतु अनुव्यवसाय में अतिव्याप्ति होगी। वह (अनुव्यवसाय) वेद्य (अस्वप्रकाश) है। फिर भी व्यवसाय रूप ज्ञानके व्यवहार का हेतु प्रकाश है ही। 'यह प्रदीपका ज्ञान है'—इस प्रकारके व्यवहारके हेतु प्रदीप प्रकाश में भी अतिव्याप्ति होती है। और भी जिज्ञासा होती हे कि व्यवहार-हेतुत्व–यह प्रकाश का विशेषण है? अथवा उपलक्षण? प्रथम (विशेषण) पक्ष ठीक नहीं, क्योकि मुक्ति तथा प्रलय–आदि अवस्थाओं में व्यवहार–हेतुत्वरूप विशेषण आत्मामे न रहने से अव्याप्ति होती है। द्वितीय (उपलक्षण) पक्ष भी उचित नही, क्योकि [ उपलक्षणत्व धर्म के विषय में वही जिज्ञासा होगी कि वह विशेषण है? या उपलक्षण? ] 'उपलक्षणत्व' को विशेषण मानने पर वही पहले का (मुक्ति तथा प्रलयकालीन आत्मा से अव्याप्ति) दोष प्राप्त होगा। (उपलक्षण पक्ष में अनवस्था दोष स्पष्ट ही है)। यदि 'उपलक्षितत्व' को उपलक्षित का विशेपण या उपलक्षण न मानकर स्वरूप माने, तो "ज्ञान प्रकाश" (ज्ञान रूप प्रकाश) इतना ही लक्षण रह जाता है। फिर तो लक्षण ही सिद्ध न होगा (क्योंकि लक्ष्य भी वही है। लक्ष्य से अभिन्न लक्षण नही होता। घट का लक्षण 'घट'—यह कैसे होगा? और दूसरी बात यह है कि जड ज्ञान में भी ज्ञानत्व, प्रकाशत्व है ही। अत उसमें "ज्ञान

१. दृष्टिसृष्टरूपघटादावित्येके, स्वाप्नघटादावित्यन्ये, तत्रेव साक्षिप्रकाशाव्यभिचारात्। मानसोपनीते घटादावित्यपरे, तथैव मानसप्रत्यक्षाव्यभिचारात्। ईश्वरज्ञानाव्यभिचरितत्वपक्ष एवेद तुल्यताभिधानमिति ऋजवः। २. वेदान्तशास्त्र इति भाव।

स्यात्, तथा सति न लक्षणसिद्धि'। नापि षष्ठ, स्वयंप्रकाशत्वसाधकानुमानागमादिजन्यज्ञानविषयत्वेन लक्षणस्यासंभवित्वात्तस्याऽविषयत्वे कथाप्रवृत्त्यनुपपत्ते.। नापि सप्तम, अविषयत्वस्यैवासंभवेन निरस्तत्वाद्विषयत्वशब्देन कर्मत्वविवक्षायां गुरुमतानुसारिणामात्मन्यतिव्याप्तेश्च तस्य ग्राहकतया सिद्धस्याविषयत्वेऽप्यपरोक्षतायास्तैरङ्गीकारात्। नाप्यष्टम, प्राचीनदोषानुषङ्गात्, शुक्तिरजतादिससर्गेऽख्यातिवादिनामतिव्याप्तेश्च। तस्य व्यहारविषयत्वे-

---

निरस्य द्वितीयद्वितीय शङ्कते—स्वरूपमात्रत्वे त्विति। न लक्षणसिद्धिरिति। लक्ष्यस्वरूपमात्रत्वात्तस्य, जडज्ञानवादिभिरपि तावन्मात्राङ्गीकाराच्चेत्यर्थ। ज्ञानाविषयत्वे सतीत्यत्र यदिद ज्ञानविषयत्व प्रतिषिध्यते तत्कि वेद्यत्व? ज्ञानकर्मत्व वा? नाद्य:, तन्निषेधासभवस्य दर्शितत्वादित्याह—अविषयत्वस्येति। द्वितीय निषेधति—विषयत्वेति। प्राभाकराणा मते सविदाश्रयतया सिद्धस्यात्मनो ज्ञानाकर्मत्वेनापरोक्षतास्तीत्यङ्गीकारादतिव्याप्तिरित्यर्थः। ईश्वरवादिना तज्ज्ञानाकर्मतयाऽपरोक्षे जगति भ्रमविषयससर्गे च वेदान्तिना च साक्षिवेद्यसुखादावतिव्याप्तिरित्यपि द्रष्टव्यम्। प्राचीनदोषानुषङ्गादिति। व्यवहारविषयत्वस्य मुक्तिदशायामसभवाज्ज्ञानाविषयत्वनिरासाच्चेत्यर्थ.। अतिव्याप्ति चाह—शुक्तीति। शुक्तिरूप्यससर्गस्य ज्ञानविषयत्व तेषामनभिमत तथा सत्ययथार्थज्ञानाङ्गीकारापातादिति भावः। साजात्य किमत्यन्त? यथाकथचन वा? आद्ये, प्रदीपे प्रसक्तिरुक्ता, द्वितीयेऽप्यनपेक्षामात्र घटादेरप्यस्ति। अपेक्षावत्त्वानधिकरणत्वविवक्षायामाह—

---

प्रकाश"—इतने लक्षण की अव्याप्ति भी होती है)।

(६) षष्ठ लक्षण (ज्ञानाविषयत्व) भी सम्भव नही, क्योकि स्वयं प्रकाशत्व-साधक अनुमान, आगम-आदि प्रमाणो से जन्य ज्ञान की विषयता ही (स्वय प्रकाश ब्रह्म मे) रहती है, अविषयता नही। अत इस लक्षणमें असम्भव दोष है। यदि (ब्रह्ममे) प्रमाण-जन्य ज्ञान की विषयता न मानें, तो उस विषय पर कथा-प्रवृत्ति (विचार करना) ही सम्भव नही रह जाती।

(७) सप्तम लक्षण (ज्ञानाविषयता-विशिष्ट अपरोक्षता) भी निर्दोष नही, क्योकि 'अविषयत्व' का तो असम्भव के कारण निराकरण हो ही चुका है। 'विषयता' शब्द का अर्थ यदि 'कर्मत्व' करना चाहे, तो प्रभाकर-पन्थियों के आत्मा में अतिव्याप्ति भी है, क्योकि वे आत्मा मे ज्ञान की कर्मता नही मानते, फिर भी ज्ञान की आश्रयता रहने के कारण अपरोक्षता मानते है। (अत ज्ञानाविषयत्व = ज्ञानाकर्मत्व-विशिष्ट अपरोक्षता उनके आत्मा में रह गई। किन्तु उनका आत्मा जड है, ज्ञानस्वरूप नही फिर तो लक्ष्य स्वयं प्रकाश होगा ही कैसे? अलक्ष्य ही है। उसमे लक्षण जाता है।)

(८) अष्टम लक्षण (व्यवहार-विषयता-विशिष्ट ज्ञानाविषयता) भी समुचित नही, क्योंकि इसमे वही पूर्व के दोष (मोक्षादि-कालीन आत्मा में अव्याप्ति तथा ज्ञानाविषयता का असम्भव) है। अख्याति-वादी (प्रभाकर) के मतसे शुक्ति-रजतादि-संसर्ग में अतिव्याप्ति भी है, क्यो कि उस (शुक्ति-रजतादि-ससर्ग) में व्यवहार-विषयता होने पर भी प्रभाकर ज्ञानविषयता नही मानते। [आशय यह है कि प्रभाकर के मतमे शुक्ति सामने है और रजत सामने नही, अपितु दूकान पर है। शुक्ति और रजत का सम्बन्ध असत् है = है ही नही। अब यदि "इदं रजत"—यह ज्ञान उस ससर्ग को विषय करे, तब यह ज्ञान असन्-विषयक या मिथ्या कहा जायगा। किन्तु प्रभाकर मिथ्या ज्ञान मानते ही नही। अत. वे कहते है कि "इद रजत"—इस ज्ञान का विषय शुक्ति रजतससर्ग नहीं है।]

---

१. तार्किकैरित्यर्थ.। ज्ञानवान् आत्मा चेतनस्तद्भिन्न सर्व ज्ञानादि जडमिति हि तेषा दर्शनम्।
२. परोक्षज्ञानविषयत्वम्।

ऽपि तैर्ज्ञानविपयतानङ्गीकारात् । नापि नवम, स्वप्रतिबद्धव्यवहारे सजातीयपरानपेक्षत्वस्य प्रदीपादौ घटादौ च भावेनातिव्याप्ते । सत्तया सजातीयत्वविवक्षायां तु तद्व्यवहारस्यापि सत्तया सजातीयादृष्टादिजन्यतया तदपेक्षत्वेन लक्षणस्यासंभवित्वप्रसङ्गात् । नापि दशम, अवेद्यत्वेऽनुमानाद्यगोचरतया कथानवतारप्रसङ्गस्य दर्शितत्वात्, अपरोक्षव्यवहारविषयत्व-मिति[2] शब्देन प्रत्यक्षज्ञानविषयत्वस्य कण्ठोक्तत्वात् तद्विपरीतावेद्यत्वाभिधाने मे माता वन्ध्ये-तिवद्व्याघाताच्च सुषुप्तिप्रलयमोक्षेष्वव्याप्तेश्च तदा व्यवहारस्यैवासम्भवेन तद्विषयताभावात् । नाप्येकादश, उक्तव्यवहारयोग्यताया धर्मत्वे मोक्षदशायामव्याप्तेरद्वैतवादिनामपसिद्धान्ता-पातात्, स्वरूपत्वे च ज्ञानस्वभावस्यात्मनो व्यवहारनिरूपणीयत्वात्सप्रतियोगिकत्वप्रसङ्गात्[3] । तदेव न स्वप्रकाशलक्षण पश्याम. ।

सत्तयेति । अदृष्टादे· सर्वोत्पत्तिमन्निमित्ततया सत्तावत्तया च तज्जन्यव्यवहारस्य सजातीयपरसापेक्षतया लक्षणासभवादित्यर्थः । पूर्वोक्तव्यर्थविशेषणत्वमपि द्रष्टव्यम् । अपरोक्षेति । अपरोक्षज्ञानमप्यपरोक्षव्यवहारो भवत्येवाभिज्ञारूपत्वात्ततश्च व्याघात इत्यर्थ. । अभिवदनविवक्षाया तु तस्य स्वविषयज्ञानप्रयोज्यत्वाद्व्याघात. ।

( ९ ) नवम लक्षण ( स्व-सम्बन्धी व्यवहार मे सजातीय अन्य की अनपेक्षता ) भी युक्त नहीं, क्योंकि सजातीय पर की अपेक्षा प्रदीप–आदि और घट–आदि मे भी नही । अत. उनमें अतिव्याप्ति है । यदि कहा जाय कि प्रदीप आदि को स्व-विषयक व्यवहार मे ज्ञान–आदि की अपेक्षा है और ज्ञान–आदि प्रदीप–आदि के सजातीय भी है, क्यो कि एक ही सत्ता जाति दोनो में रहती है । तब तो यह लक्षण असम्भव ही हो जायगा, क्यो कि जन्यमात्र में अदृष्ट-आदि निमित्त हैं । स्वय प्रकाश आत्मा को भी अपने व्यवहार मे अदृष्ट–आदि की अपेक्षा है और वे ( अदृष्ट–आदि ) सत्ता के द्वारा सजातीय है ।

( १० ) दशम लक्षण ( अवेद्यता–विशिष्ट–अपरोक्ष–व्यवहार–विषयता ) भी संगत नही, क्यो कि स्वयप्रकाश वस्तु के अवेद्य होने पर उसके विषयमें विचार-विनिमय की असभावना दिखाई जा चुकी है । दूसरी बात यह है कि 'अपरोक्ष-व्यवहार-विषयता'—इस शब्द से नितान्त स्पष्ट कह दिया गया कि स्वयप्रकाश आत्मा मे अपरोक्ष ( प्रत्यक्ष ) ज्ञान की विषयता है । अब उसके विपरीत अ-वेद्यत्व ( विषयताभाव ) कहना उतना ही विरुद्ध है, जितना कि "मेरी माता बन्ध्या है"—ऐसा कहना । सुषुप्ति, प्रलय और मोक्ष-कालीन आत्मा मे इस लक्षण की अव्याप्ति भी है, क्योकि वहाँ ( सुषुप्ति–आदि अवस्थाओ मे ) कोई व्यवहार ही सम्भव नही, अत. उसकी विषयता का अभाव होता ही है ।

( ११ ) एकादश लक्षण ( अ-वेद्यता-विशिष्ट अपरोक्ष-व्यवहार-योग्यता ) भी समीचीन नही, क्योकि ( उक्त योग्यता स्वयप्रकाश का धर्म है ? अथवा स्वरूप ? ) यदि उक्त योग्यता स्वयं–प्रकाश का धर्म है, तब तो मोक्ष-दशामे अव्याप्ति होगी, क्योकि उस दशामे आत्मा मे कोई धर्म नही माना जाता । यदि कोई धर्म माना जायगा, तो अद्वैतवादियो के लिए यह अपसिद्धान्त होगा, क्योकि अद्वैत-वाद मे किसी प्रकार का धर्म आत्मवस्तु मे वास्तविक नही माना जाता । यदि उक्त योग्यता को स्वयप्रकाश का स्वरूप माने, तब ज्ञानस्वरूप आत्मा मे भी व्यवहार-निरूपणीयता आ जाने से ह्रस्वत्व–आदि की भाति नित्य सापेक्षता आजायगी । इस प्रकार स्वयंप्रकाश-लक्षण बनता नही दिखाई देता ।

१—ज्ञानविषयकव्यवहारस्येत्यर्थ. ।

२—इत्याकारकशब्दाभिन्ना या कण्ठद्वारा नि.सृतोक्तिस्तद्विषयत्वादित्यर्थ. ।

३—व्यवहारनिष्ठनिरूपकतानिरूपितनिरूप्यतावत्त्वादित्यर्थः ।

नापि प्रमाणम् । अथानुभूतिरनुभूतिव्यवहारहेतुप्रकाशोऽनुभूतित्वात् यन्नैव तन्नैव यथा घट इत्यनुमानं प्रमाणम् । नचाप्रसिद्धविशेषण. पक्ष , अनुभूतिव्यवहारस्य हेतुभूत प्रकाश' परेषामपि हि प्रसिद्धस्ततोऽनुभूतेस्तत्स्वरूपत्वप्रतिज्ञोपपद्यते । न चानुव्यवसायज्ञाने साध्यस्य सिद्धत्वाद्भागे सिद्धसाधनता, तत्स्वरूपस्यैवासंमतत्वेन तस्य धर्मिभागतानङ्गीकारादिति चेत्, मैवम्, अनुभूतिव्यवहारस्य हेतुभूतः प्रकाशो यत्र सिद्धस्तत्र हेतोर्वृत्तौ, केवल-

---

ननु प्रमाणबलात्स्वप्रकाशत्वे सिद्धे तदनुगुण यत्किञ्चिल्लक्षणमपि भविष्यति यतो लक्षणमपि प्रमाणान्तरसिद्धस्येतरेभ्यो व्यावर्तक व्यवहारहेतुर्वा भवेदित्यत आह—**नापि प्रमाणमिति** । न्यायरत्नदीपावलीकृतमनुमानमुपन्यस्यति—**अथानुभूतिरित्यादिना** । प्रकाशत्वस्य यत्किञ्चिद्व्यवहारहेतुत्वस्य च परैरप्यङ्गीकारात्सिद्धसाधनता स्यादित्यनुभूतिग्रहणम् । नचाप्रसिद्धविशेषणता, अनुभूतिव्यवहारस्योभयसिद्धतया तद्धेतुभूतप्रकाशस्यापि समतत्वात्केवल व्यतिरेकाव्यतिरेकयोर्विप्रतिपत्ते , तथाचानुभूतिव्यवहारहेतुत्वाप्रसिद्धिरलकार एव । वह्निमत्त्वादीनामपि महीधरादिसबन्धस्यानुमानगम्यत्वादितरथा सिद्धसाधनतापातादिति—तदिदमाह—**नचाप्रसिद्धविशेषण** पक्ष इत्यादिना । तदेतद्दूषयति—**मैवमिति** । अयमभिसधि —न तावदनुभूतिव्यवहारहेतुरविवक्षितस्थलविशेषः प्रकाश सिद्ध्यतीति शक्याङ्गीकार, नह्यस्ति सभव', सप्रतिपन्नमुभयोः क्वेति न ज्ञायत इति । कस्य चायमविवक्षितस्थलविशेषः सिद्ध्यतीति विवेचनीयम् ? न तावत्त्वत्पक्षे, तस्य स विद्रूपतया निर्णीतत्वादपरथा पर प्रति प्रसाधनायोगात् । यदाह 'निश्चितौ हि वादं कुरुत' इति । नापि परस्य, तस्याप्यनुव्यवसायेन निर्णीतत्वात् । अतएव नोभयो । तस्मादविवक्षितस्थलविशेष सिद्ध्यतीत्यस्य न कञ्चनार्थं पश्याम । न च केवलव्यतिरेकिण्यप्रसिद्धविशेषणता नाम न दूषणमिति मन्तव्य, तथा सति वसुधा शशविषाणोल्लिखिता वसुधात्वादित्यादिना शशविषाणादेरपि सिद्धिप्रसङ्गात् । अथ तत्र प्रमाणान्तरबाध्यतया दुष्टता नाप्रसिद्धविशेषणतयेति ब्रूषे, तन्न, बाधकासिद्धेः । नहि शशविषाणादीनामभावावेदक प्रमाणमस्ति । तस्य प्रमाणान्तरयोग्यताऽयोग्यतयोरभावासिद्धे । अथ नियमेन

---

स्वप्रकाशत्व मे प्रमाण भी कोई नही है । शङ्का—"अनुभूति , अनुभूतिव्यवहारहेतुप्रकाश', अनुभूतित्वाद् यन्नैव तन्नैव यथा घट " [ अनुभूति अनुभूति-व्यवहार का हेतुभूत प्रकाश है, क्योंकि अनुभूतित्व-युक्त है, जो वैसा ( अनुभूतिव्यवहार का हेतु प्रकाश ) नही होता, वह ऐसा ( अनुभूतित्व-युक्त) नहीं होता जैसे घट ]—यह अनुमान प्रमाण हो सकता है । इस अनुमान मे अप्रसिद्धविशेषणता ( पक्षके साध्य रूप विशेषण की अप्रसिद्धि ) दोष है—यह सन्देह नही किया जा सकता, क्योकि अनुभूति-व्यवहार का हेतुभूत प्रकाशत्व दूसरो के मत मे भी प्रसिद्ध है । अत अनुभूति में तत्स्वरूपत्व ( अनुभूति-व्यवहार–हेतु प्रकाशत्व ) की प्रतिज्ञा युक्त हीं है । अनुव्यवसाय ज्ञान मे साध्य निश्चित होने के कारण अनुभूति के उस ( अनुव्यवसाय ) भाग में सिद्धसाधनता दोष है–ऐसा भी सन्देह नही करना चाहिए, क्योकि वेदान्त-मत मे अनुव्यवसाय माना नही जाता, तब वह ( अनुव्यवसाय ) धर्मी ( पक्ष ) का एकदेश कैसे बनेगा ?

समाधान—उक्त शङ्का उचित नही, क्योकि अनुभूति-व्यवहार-हेतुभूत प्रकाशत्वरूप साध्य जहाँ ( ज्ञान मे ) प्रसिद्ध ( निश्चित ) है, वहाँ यदि हेतु रहता है, तब केवलव्यतिरेकिता भङ्ग हो जाती है । [ आशय यह है कि "अनुभूति अनुभूतिहेतुप्रकाश "—यह अनुमान केवल व्यतिरेकी मानकर प्रयुक्त हुआ है । केवलव्यतिरेकी वही अनुमान होता है, जिस के साध्य और हेतुका का सहचार कही निश्चित न हो । किन्तु यहां साध्य ( अनुभूति-व्यवहार-हेतुभूत प्रकाशत्व ) के अधिकरण मे हेतु की सत्ता निश्चित हो जाती है । तब तो केवलव्यतिरेकिता नही रही, अन्वयव्यतिरेकी प्रयोग हो गया ] । यदि वहाँ हेतु नही रहता, तब अनुभूतित्व हेतु असाधारणरूप अनैकान्तिक ( सव्यभिचार ) हो जाता है । [ साध्य का जहाँ निश्चय होता है, वह सपक्ष कहलाता है । वहाँ यदि हेतु नहीं रहता

-व्यतिरेकित्वव्याकोपात्, अवृत्तौ सपक्षाप्रवेशिनोऽसाधारणानैकान्तिकत्वापातात्। वृत्तावपि भागे सिद्धसाधनताया दुष्परिहरत्वात्। न च स्वस्यासिद्धतामात्रेण परसिद्धे साध्यवति धर्मिणि सिद्धसाधनताया परिहार। अन्यथाऽन्यथाख्यातिवादिभि केनचिद्धेतुना रजतज्ञानस्य पुरोवर्तिविषयत्वे साधिते वेदान्तिना चानिर्वचनीयपुरोवर्तिरजतविषयत्वेन सिद्धसाधनत्वेऽभिहिते नास्माकं तत्सिद्धमिति वचनमात्रेणान्यथाख्यातिवादिनश्चरितार्था भवेयु.। अथ नानिर्वचनीयवादिनं प्रति अय प्रयोगस्तस्य सिद्धसाधनतापत्ते, तर्ह्यनुव्यवसायवादिन प्रत्यप्ययं प्रयोगो न स्याद्भागे सिद्धसाधनत्वप्रसङ्गात्, स्वप्रकाशवादिनं प्रति सिद्धसाधन-

प्रमाणानुपलम्भो बाधक, ततोऽतिरिक्ता तर्हि का नामाप्रसिद्धविशेषणतेति घट्टकुटीप्रभातायितम्[1]। अथ विपक्षे बाधकतर्काभावात्स किं विपक्षे बाधकस्तर्कः प्रमाणानुज्ञाद्वारोपयोगी ? स्वातन्त्र्येण वा ? नान्त्यः, तर्कस्य प्रमाणानुज्ञाव्यापारमन्तरेणोपयोगाभावात्। प्रथमे तु तर्काभावात्प्रमाणाभाव एव सिद्ध्यति सैव चाप्रसिद्धविशेषणतेति सिद्ध न. समीहितम्। किंच केवलव्यतिरेकित्वादेव केवलव्यतिरेकिणि न दूषणमप्रसिद्धविशेषणता केवलान्वयिन्यन्वयव्यतिरेकिणि च सपक्षवत्यप्रसिद्धविशेषणताशङ्कैव नास्तीति हता बतेयमप्रसिद्धविशेषणताकथा तपस्विनी। तस्माद्यत्रायं प्रसिद्धः स सपक्ष स्वीकर्तव्यस्तथाचोच्यमानदूषणगणग्रासो दुर्निरसन इति। सपक्षवृत्त्यवृत्त्यो केवलव्यतिरेकिताहानिरसाधारणाऽनैकान्तिकता चेति दूषणद्वयमुक्तम्, तत्र मा नामाय भूत्केवलव्यतिरेक्यन्वयव्यतिरेक्येव भवत्विति शङ्कमान प्रत्याह— वृत्तावपीति। यत्तूक्त स्वप्रकाशवादिनो नानुव्यवसायो नाम ज्ञानग्राहकं ज्ञानमस्ति तत्कथ तस्य धर्मिता कथतरा तत्र सिद्धता कथतमा सिद्धसाधनतेति तत्राह—नच स्वस्यासिद्धतामात्रेणेति। विपक्षे बाधिका प्रतिबन्दी गृह्णाति—अन्यथान्यथेति। केनचिद्धेतुनेति। रजतार्थिनो नियमेन पुरोवर्तिप्रवृत्तिहेतुत्वाद्रजतेच्छाधीनपुरोवर्तिप्रवृत्तिहेतुत्वाद्वेत्यादिनेत्यर्थ.। अस्त्वनुव्यवसायवादिन प्रत्यप्रयोग यस्य तु तन्नास्ति त प्रति निरुपसर्ग[2]. प्रयोग इत्यत आह—स्वप्रकाशवादिनमिति। ननु विवादपद-

**तब वह सपक्षावृत्ति कहा जाता है। साध्याभाव के आधार ( विपक्ष ) में हेतु का रहना अनुमान-प्रयोक्ता को ही मान्य नही, नही तो हेतु साधारण ( विपक्ष-वृत्ति ) हो जायगा। अत सपक्ष और विपक्ष—दोनों में यह हेतु नही रहता—यही स्थिर हुआ। बस यही असाधारणता है—सपक्ष-विपक्ष मे न रहना, केवल पक्ष मे रहना ]। सपक्ष मे हेतु के रहने पर भाग ( पक्ष के एक देश ) में सिद्ध साधनता दोष भी है। जब कि दूसरे ( प्रतिवादी ) के मत मे साध्यवाला धर्मी ( अनुव्यवसाय ) प्रसिद्ध है, तब यह कह देने मात्र से कि हमारे ( वेदान्ती के ) मत मे अनुव्यवसाय सिद्ध (मान्य) नहीं, सिद्ध साधनता का परिहार नही हो सकता। नही तो जहाँ अन्यथाख्यातिवादी किसी ( रजत-लिप्सा-जन्य पुरोवर्तिप्रवृत्तित्वादि ) हेतु के बल पर यह सिद्ध करना चाहते है कि "इदं रजतं"—यह ज्ञान पुरोवर्ति वस्तु-विषयक है। वहाँ वेदान्ती सिद्धसाधनता दोष का उद्भावन करता है कि वह ज्ञान पुरोवर्ति अनिर्वचनीय रजत-विषयक है ही ( रजतज्ञानं पुरोवतिविषयकं रजतेच्छाधीनपुरोवर्ति-प्रवृत्तिहेतुत्वाद् )। तब अन्यथा-ख्याति-वादी केवल यह कहकर कि 'अनिर्वचनीय रजत हमारे मत मे सिद्ध ही नहीं' कृतकृत्य ( सिद्ध साधनता के परिहार मे सफल ) हो जॉयगे। यदि कहा जाय कि अन्यथाख्याति-वादी का वह प्रयोग ( रजतज्ञानमित्यादि ) अनिर्वचनीय-वादी के प्रति है ही नही, क्योकि उसके मत से सिद्धसाधनता दोष आ जाता है, तब तो उन्हें मौन ही धारण करना होगा, क्योकि अनुव्यवसाय-वादी के प्रति यह प्रयोग ( अनुभूति अनुभूतिव्यवहारहेतुप्रकाश अनुभूति-**

१. घट्टे नदीतीरस्थलविशेषे ( अवतारे ) या कुटी ( शुल्कग्रहणार्था ) तस्या प्रभातम्, तत्तथा तदिवाचरितमितिभाव.। २ निराबाध इत्यर्थ।

त्वादप्रयोग इति मूकीभाव एव स्यात्। अथ विवादपदेनानुव्यवसायस्य व्यवच्छेदान्नास्य धर्मिभागतेति मति, तथापि तस्य साध्यविशेषणप्रसिद्धस्थलत्वेनाभ्युपगमाद्धेतो केवलव्यतिरेकित्वाभावस्तदवस्थ, तदनङ्गीकारे च न विशेषणप्रसिद्ध्युपपत्ति.। अथ पर प्रत्येव तस्य प्रसिद्धिस्थलता, तर्हि त प्रति केवलव्यतिरेकिप्रयोगायोग। कि च व्यवहारहेतुत्वस्य प्रकाशविशेषणतायां, कैवल्ये तदभावात्स्वयप्रकाशताभाव, व्यवहारहेतुत्वयोग्यतायां च स्वरूपातिरिक्ताया स एव दोष। अथ तदुपलक्षितप्रकाशात्मत्वमेव साध्य, तथाप्युपलक्षितत्वस्य

मित्यनुभूतेर्विशेषण प्रक्षिप्यते तथानुव्यवसायस्य परसप्रतिपन्नसाध्यस्य व्यावर्तनमिति तदाह—**अथेति**। तत्रेद वक्तव्य—किमनुव्यवसायज्ञान स्वमतसमत ? न वा ? न यदि, तदा व्यर्थविशेषणता। अथ समत, तदा कथ स्वप्रकाशता, कथ वा केवलव्यतिरेकितेति। तदेतदपिना सूचयन्भङ्ग्यन्तरेण पुरोदित केवलव्यतिरेकिताकोपमाह—**तथापीति। साध्यविशेषणेति**। साध्यमेव विशेषण, पक्ष प्रति विशेषणत्वात्तस्य। नच व्यवसाय पक्षीकृत्यानुव्यवसायवदनुभूतिव्यवहारहेतुप्रकाशत्वसाधनादन्वयव्यतिरेकितास्तु। अनुव्यवसायाङ्गीकारानङ्गीकारयोर्व्याहतिदृष्टान्ताभावयोः प्रसङ्गात्[1]। यानि च स्वव्यवहारहेतुप्रकाशत्वमिति पञ्चमेपक्षे व्यवहारहेतुत्वस्य विशेषणोपलक्षणपक्षविकल्पेन दूषणान्युक्तानि तान्यत्र प्रसरन्तीत्याह—**किंच व्यवहारहेतुत्वस्येति**। ननु व्यवहारहेतुत्वयोग्यता विवक्षिता। सा च तदानीमप्यस्ति योग्यताया यावद्वस्तुभावित्वादित्याशङ्क्य, तर्हि सा स्वरूपातिरिक्ता ? तदनतिरिक्ता वा ? अतिरिक्तापि विशेषणम् ? उपलक्षण वेति विकल्प्य, विशेषणपक्ष दूषयति—**व्यवहारेति**। स्वरूपातिरिक्ताया विशेषणताया चेत्यध्याहर्तव्यम्। उपलक्षणत्वे पक्षद्वय[2] शङ्कते—**अथेति**। तया योग्यतया, तेन व्यवहारहेतुत्वेन

त्वाद् ) हो ही नही सकता, क्योकि एक देश मे उक्त सिद्धसाधनता प्राप्त होगी और स्वप्रकाश-वादी के प्रति तो यह प्रयोग निरर्थक ही है, क्योकि वह पहले से ही स्वप्रकाशता मानता है, फिर प्रयोग किसके लिए ? यद्यपि यहाँ यह कह सकते है कि ( 'अनुभूति' रूप पक्ष का विशेषण लगायेंगे—विवादपद। विवादपद का अर्थ होता है—विवादग्रस्त। अर्थात् जहाँ साध्य की सत्ता निश्चित न हो, अपितु विवाद का विषय हो। अनुव्यवसाय मे तो साध्य का निश्चय ही है। अत ) विवादपद से अनुव्यवसाय का व्यवच्छेद हो जायगा, पक्ष-कोटि मे समावेश ही नही होगा कि वह धर्मीका भाग बने। तथापि उस ( अनुव्यवसाय ) को साध्य-प्रसिद्धि का स्थल मानने पर केवल व्यतिरेकिता की हानि और न मानने पर साध्याप्रसिद्धि जैसी-की-तैसी बनी रहती है। यदि कहे कि दूसरे (नैयायिक) के प्रति ही अनुव्यवसाय साध्य-प्रसिद्धि का स्थल है, तब तो उसके प्रति केवल व्यतिरेकी प्रयोग क्योकर हो सकेगा ?

और भी जिज्ञासा होती है कि 'व्यवहारहेतुत्व' प्रकाश का विशेषण है ? या उपलक्षण ? विशेषण मानने पर मोक्षावस्थापन्न आत्मा मे उसका ( व्यवहारहेतुत्वरूप विशेषण ) का अभाव होने से स्वयंप्रकाशता का अभाव हो जायगा। ( 'व्यवहार-हेतुत्व' का अर्थ 'व्यवहार-हेतुत्व योग्यता' करने पर भी जिज्ञासा होती है कि उक्त योग्यता स्वयप्रकाश वस्तु का स्वरूप है ? अथवा अतिरिक्त ? स्वरूप पक्ष में सप्रतियोगिकत्व = नित्य सापेक्षतापत्ति दोष कहा ही जा चुका है ) स्वरूपातिरिक्त उक्त योग्यता को विशेषण माननेपर वही ( मोक्ष-कालीन आत्मामें स्वयप्रकाशताभाव ) दोष होता है। व्यवहार-हेतुत्व अथवा व्यवहार-हेतुत्व-योग्यता को उपलक्षण मानकर

१. अनुव्यवसायाङ्गीकारे सति व्यवसायस्य स्वप्रकाशत्वव्याघातो व्यवसायप्रकाशज्ञानस्यैवानुव्यवसायत्वाङ्गीकारादिति भावः। २ यो व्यवहारहेतुत्वनिष्ठोपलक्षणत्वपक्षो यश्च योग्यतानिष्ठोपलक्षणत्वपक्ष. तद्द्वयम्। वस्तुत उपलक्षणपक्षमित्येव पाठः सुश्लिष्टः।

साध्यान्तर्भावे स एव दोष । अनन्तर्भावे च प्रकाशस्वरूपताया एव साध्यत्वात् तस्याश्चान्यत्रापि सिद्धत्वान्न केवलव्यतिरेक्यनुमानावकाश । एतेनानुभूतिरनुभाव्या न भवत्यनुभूतित्वादित्यादिप्रयोगोऽपि परास्त, तत्राप्यप्रसिद्धविशेषणताया दुष्परिहरत्वात्, ज्ञानं वेद्यं वस्तुत्वाद्घटवदिति प्रतिप्रयोगसंभवाच्च । नच हेत्वसिद्धि, सत्ताधिकरणत्वलक्षणवस्तुत्वस्यावधीरितकल्पिताकल्पितविशेषस्यानुभूतित्वादिवद्धेतुत्वोपपत्ते ।

ननु किमिद साध्यमान वेद्यत्व—वास्तवम्? उतावास्तवम्? आहोस्विद्व्यावहारिकम्?

---

वोपलक्षित यत्प्रकाशात्मकत्व तदेव साध्यमित्यर्थ । तदापि वक्तव्य यत्तदुपलक्षितत्व तद्विशेषणम्? उपक्षलणं वा? आद्य दूषयति—**तथापीति । स एव दोष इति ।** कैवल्यावस्थाया तदभावादस्वयप्रकाशत्वप्रसङ्ग इत्यर्थः । उपलक्षितत्वस्योपलक्षणत्वपक्ष दूषयति—**अनन्तर्भावे चेति । तस्याश्चान्यत्रापीति ।** अनुव्यवसायादिष्वपीत्यर्थ. । एतेनानतिरिक्तपक्षोऽपि निरस्तो वेदितव्यः । उक्तदूषणजात प्राचीनाचार्योदीरितानुमानेऽप्यतिदिशति—**एतेनेति ।** एतेनेत्येतदेव विवृणोति—**तत्रापीति ।** तदेव स्वप्रकाशत्वे सभाव्यमानानुमानानि दूषयित्वा वेद्यत्वेऽप्यनुमानमाह—**ज्ञानमित्यादिना । प्रतिप्रयोगेति ।** प्रतिपक्षसाधकेत्यर्थ', सत्प्रतिपक्षता वा । **ननु** किमिद वस्तुत्व हेतूकृत किं काल्पनिकसत्त्वम्? आहोस्विद्वास्तवसत्त्वमिति? नाद्य, उभयासिद्धे' । नोत्तरः, अद्वैतवादिनः साधनविकलत्वादित्यत आह—**नचहेत्वसिद्धिरिति ।** साधनवैकल्यस्याप्युपलक्षणमेतत् । अथवा किं वस्तुत्व नाम काल्पनिको धर्मः? उताकाल्पनिक? नाद्य, तवासिद्धेः । नोत्तर, ममासिद्धेरित्याशङ्क्याविवक्षितविशेषमादायाय परिहारः । **सत्ताधिकारणत्वेति ।** स्वरूपसत्ता विवक्षिता । **अनुभूतित्वादिवदिति ।** यथाह्यनुभूतित्वादिति स्वप्रकाशत्वादिहेतौ कोऽयमनुभूतित्व नाम धर्म. किं कल्पितः? उताकल्पित.? नाद्य, परस्यासिद्धे । न द्वितीय स्वस्यासिद्धेरिति विकल्पिते साधारण्येनैव परिहारस्तद्वदित्यर्थ. ।

अत्र गङ्गापुरीभट्टारकोदीरितदूषणमनुवदति—**ननु किमिदमित्यादिना । मैवम् । घटादेरिवेति ।**

---

तदुपलक्षित प्रकाशात्मत्व को ही साध्य बनाये, तो भी तदुपलक्षितत्व को साध्यके अन्तर्गत अर्थात् विशेषण माने तो वही ( मोक्ष-कालीन आत्मा मे स्वयप्रकाशत्वाभाव ) दोष है। यदि तदुपलक्षितत्व को साध्य के बहिर्गत अर्थात् उपलक्षण माने, तो कहना होगा कि प्रकाशरूपतामात्र ही साध्य है। वह अन्यत्र ( अनुव्यवसाय मे ) भी सिद्ध है, अत केवलव्यतिरेकी अनुमान को अवकाश नही मिलता।

इन्ही दोषो के कारण "अनुभूति अनुभाव्या न भवति, अनुभूतित्वात्" ( अनुभूति, अनुभाव्य नही होती, क्योकि अनुभूतित्व-युक्त है )—आदि प्रयोग भी खण्डित हो जाते हैं । यहाँ पर भी अप्रसिद्धविशेषणता दुष्परिहार्य है। "ज्ञान वेद्य वस्तुत्वाद् घटवद्" ( ज्ञान वेद्य = अनुभाव्य है, क्योकि वस्तुत्वविशिष्ट है, जैसे घट )—इस प्रकार के विरोधी प्रयोगों के द्वारा सत्प्रतिपक्षितत्व दोष भी संभावित है । यहाँ यह सन्देह नही करना चाहिए कि वस्तुत्वरूप हेतु ही पक्ष मे असिद्ध है, क्योकि सत्ताधिकरणत्वरूप वस्तुत्व वैसे ही पक्ष मे सिद्ध है जैसे कि अनुभूतित्व। [ 'वस्तुत्व' हेतु के विषय मे यह कुछ नही पूछना चाहिए कि कल्पित है या अकल्पित, नही तो अनुभूतित्व के विषय मे भी वही प्रश्न और वही दोष होगा । अत ] कल्पिताकल्पित-कोटि-निरपेक्ष अनुभूतित्व के समान वस्तुत्व भी हेतु है ।

शङ्का—"ज्ञान वेद्यं—यहाँ पर साध्यमान 'वेद्यत्व' कैसा है? क्या वास्तविक है? अथवा

---

१. तपोधनेत्यर्थ., "भट्टारको नृपे नाट्यवाच्या, देवे तपोधने" इति मेदनी।

अथवा साधारणम् ? आद्ये, साध्यविकलं निदर्शनमितरेषु सिद्धसाधनत्वमिति चेत्, मैवम्; घटादेरिव व्यावहारिकप्रमाणसिद्धवेद्यतापादनेऽपि स्वप्रकाशत्वासिद्धेः । किं चानुभूतिपदं स्वगोचरगोचरज्ञानजन्यं पदत्वात्कुम्भपदवत् । ननु किमत्र गोचरशब्देन विषयमात्रमुच्यते ? किंवा वाच्योऽर्थः ? अथ लक्ष्यो वा ? न तावत्प्रथमद्वितीयौ, सिद्धसाधनतापत्तेः । अभ्युपेयते हि अनुभूतिशब्दवाच्यस्यान्तःकरणवृत्तिविशिष्टस्य ज्ञानस्य ज्ञानगोचरता । तृतीये, तु मुख्या-

नहि घटादेरिवानुभूतेरपि वेद्यत्वं प्रत्यक्षादिप्रमाणसिद्धमिति मन्तुमुचितम् । तथा सति नैयायिकादेरिव जडत्वापि संविदाऽर्थप्रथनसिद्धौ घटादिप्रतीत्यन्यथानुपपत्त्युपन्यासानवसरात्तद्दूषणानां स्वमतेऽप्यनुषङ्गप्रसङ्गाच्च । न च नैयायिकाद्युपगतजडताया समारोपितत्वाङ्गीकारादस्त्येवानुभूतेरपि व्यावहारिकवेद्यतेति साम्प्रतं, तस्या शुक्तिरजतादेरिव व्यवहाराक्षमत्वात् । अतो व्यावहारिकवेद्यत्वसाधनमपि विरुद्धमेव राद्धान्तमिति भावः । वेद्यत्वेऽनुमानान्तरमाह—किंचानुभूतिपदमित्यादिना । स्वगोचर एव गोचरो यस्य तज्ज्ञानं स्वगोचरगोचरज्ञानं तज्जन्यं, शब्दनित्यत्ववादिना प्रयोगस्य तज्जन्यत्वाच्छब्दोऽपि तज्जन्य इत्युच्यते । सिद्धसाधनतानिवृत्त्यै[1] स्वगोचरग्रहणम् अत्रापि तैरुद्भावितदूषणमनुवदति—ननु किमत्रेति। सिद्धसाधनतामेव विवृणोति—अभ्युपेयते हीति । अन्तःकरणवृत्तिविशिष्टस्येति हेतुगर्भं विशेषणम् । यस्मादन्तःकरणवृत्तिविशिष्टमतो ज्ञानगोचरतेत्यर्थः । मुख्यार्थविवक्षयेति । एवं हि तदा प्रयोगः स्यात्—विवादपदं स्वलक्ष्यविषयज्ञानजन्यं पदत्वात्सम्प्रतिपन्नवदिति । एतच्चानैकान्तिकं, मुख्यार्थविवक्षया प्रयुक्त-

व्यावहारिक ? अथवा साधारण ( वास्तविक, व्यावहारिक-उभय-समान ) ? प्रथम पक्षमें दृष्टान्त ( घट-आदि ) साध्य-शून्य होगे, क्योकि पारमार्थिक वेद्यत्व वहाँ मायावादी नही मानते । अन्य पक्षो मे सिद्धसाधनता दोष होगा, क्योकि अपारमार्थिक (व्यावहारिक) अथवा साधारण वेद्यत्व अनुभूति मे मानते ही है । वह पारमार्थिक वेद्यत्वाभाव का विरोधी नही कि हम स्वयप्रकाशत्व सिद्ध न कर सके ।

समाधान—घट-आदि मे जैसा व्यावहारिक प्रमाण-सिद्ध वेद्यत्व है, वैसा ही अनुभूति में आपादन करने पर भी स्वप्रकाशत्व सिद्ध नही हो सकता । ( यदि व्यावहारिक वेद्यत्व रहने पर भी अनुभूति मे स्वप्रकाशत्व मानेंगे, तो, घट-आदि भी स्वप्रकाश क्यो नही होगे ? अत व्यवहारिक वेद्यत्व को भी स्वप्रकाशत्व का विरोधी मानना ही होगा । फिर तो अनुभूति मे व्यावहारिक वेद्यत्व रहने पर स्वप्रकाशत्व कैसे सिद्ध होगा ? ) । दूसरे अनुमान-प्रयोग से भी अनुभूति में वेद्यत्व सिद्ध किया जा सकता है— "अनुभूतिपद, स्वगोचरगोचरज्ञानजन्यं, पदत्वात्, कुम्भपदवत्" ( 'अनुभूति' पद स्व-वाच्य-विषयक ज्ञान से जन्य है, क्योकि पदत्व-युक्त है, जैसे—कुम्भपद )

शङ्का—उक्त अनुमान मे प्रथम 'गोचर' शब्द से विषय मात्र विवक्षित है ? अथवा वाच्य अर्थ ? या लक्ष्य ? प्रथम ( विषयमात्र ) एव द्वितीय ( वाच्य अर्थ ) पक्ष ठीक नही, नही तो सिद्धसाधनता की आपत्ति होगी, क्योकि 'अनुभूति, शब्द के विषय या वाच्य अन्त करण-वृत्ति-विशिष्ट ज्ञान में ज्ञान-गोचरता मानी ही जाती है । तृतीय ( लक्ष्य ) पक्ष लेने पर मुख्य अर्थ की विवक्षा से प्रयुक्त ( बोले गये ) गङ्गा-आदि पदो मे व्यभिचार होगा । [ भाव यह है कि इस तृतीय पक्ष मे अनुमान का आकार यह होगा—"अनुभूतिपदं, स्वलक्ष्यविषयकज्ञानजन्य पदत्वाद् गंगापदवत् ' । यहाँ 'पदत्व' हेतु व्यभिचारी है, क्योकि मुख्यार्थ ( प्रवाह ) की बोधेच्छा

१ स्वगोचरपदानुपादाने गोचरज्ञानजन्यत्वं साध्यमवशिष्टम् । तथा च गोचरः = श्रावणज्ञानविषयीभूतोऽनुभूतिशब्दस्तद्विषयकज्ञानजन्यत्वं वालोच्चरितानुभूतिपदेऽभ्युपेयत एवेति सिद्धसाधनम् । यद्वा चक्षुरादिप्रमाणबोधेच्छयोच्चरितेऽनुभूतिपदे गोचरज्ञानजन्यत्वमस्त्येवेति सिद्धसाधनता ।

र्थविवक्षया प्रयुक्तगङ्गादिपदैर्व्यभिचार इति चेत्, मैवम्, लक्षकपदं पक्षीकृत्य लक्षकपदत्वेन लक्षकगङ्गादिपदवल्लक्ष्यज्ञानजन्यत्वानुमानात्। किंचानुभूतिपदाभिधेयस्य स्वप्रकाशत्वमभिधीयते भवद्भिः? उत लक्ष्यस्य? नाद्य, अपसिद्धान्तापातात्। न द्वितीय, प्रतिवादिनं प्रत्याश्रयासिद्धेः। सकलधर्मातीतस्याद्वितीयस्यानुभूतिपदलक्ष्यस्य परैरनङ्गीकारात्। किं च स्वप्रकाशतायां सति प्रमाणे तद्वैयर्थ्यमसति च साधकाभावादेव न तत्सिद्धिरिति सैषौपनिषदानामुभयत पाशा रज्जुरित्यलमतिविस्तरेण।

गङ्गादिपदाना तल्लक्ष्यतीरादिज्ञानजन्यत्वाभावात्तेषा मुख्यार्थज्ञानमात्रजन्यत्वादित्यर्थ। तदेतद्दूषयति—मैवमिति। लक्षकपदत्वं हेतुस्तथाच नानैकान्तिकमित्यर्थ। पदमात्रं पक्षीकृत्य लक्षकपदत्वादित्युक्ते भागासिद्धिबाधौ स्यातामिति लक्षकपदमित्युक्तम्। उभयवादिसप्रतिपन्नानुभाव्यवाचकानुभूतिलक्षकपदं चात्र विवक्षित, तेन नाश्रयासिद्धिसिद्धसाधने। किंच यावत्किंचित्स्वप्रकाशत्वानुमानमुपन्यस्तं ते तस्य सर्वस्य धर्म्येव तावन्न निरूपणपद्धतिमध्यास्ते इत्याह—किंचानुभूतीति। अपसिद्धान्तेति। अन्त करणवृत्तिविशिष्टस्य स्वप्रकाशत्वानाश्रयणादित्यर्थ। प्रतिवादिनं प्रतीति। न तावदनुभूतिपदलक्ष्यस्य यस्य कस्यचित्प्रमातुर्वा प्रमेयस्य वा स्वप्रकाशता सिसाधयिषिता, येनाश्रयासिद्धिर्न भवेत्, किंत्वद्वितीयानादिनिधनात्मभूतज्ञानस्य, तस्य पर प्रत्यसिद्धेराविशत्येवाश्रयासिद्धिपिशाचिकेति भाव। किंच स्वप्रकाशताया प्रमाणसद्भावासद्भावयोः प्रमेयासिद्धिरिति व्याघातलक्षणतर्कयुगलविरोध इत्याह—किंच स्वप्रकाशतायामिति।

से उच्चारित "गगाया नाव सन्ति" इत्यादि वाक्यों के गगापद में पदत्व हेतु तो है, किन्तु लक्ष्य-विषयक ज्ञान की जन्यता रूप साध्य नहीं। यहाँ का गंगापद मुख्य अर्थ ( प्रवाह ) विषयक ज्ञान से जन्य है, न कि लक्ष्य अर्थ ( तीर ) विषयक ज्ञान से ]

समाधान—तृतीय पक्ष ( गोचर शब्द का लक्ष्य अर्थ मानने ) में कोई दोष नहीं, क्योंकि लक्षक पद को पक्ष बनाकर लक्षकपदत्वरूप हेतु से लक्षक गंगादि पद के दृष्टान्त से लक्ष्यविषयक ज्ञान-जन्यत्व का अनुमान किया जाता है। [ "लक्षकमनुभूतिपद, स्वलक्ष्यविषयकज्ञानजन्य, लक्षकपदत्वात् लक्षकगगादिपदवत्" इस अनुमान में उक्त व्यभिचार नहीं, क्योंकि जब पदत्व मात्र हेतु करते थे तब लक्षक गगा पद को छोडकर मुख्यार्थक गगापद भी ऐसा ले लिया जाता था, जिसमें पदत्व हेतु रहता था, साध्य नहीं, अत व्यभिचार होता था। किन्तु लक्षक पदत्व रूप हेतु मुख्यार्थक गगा पद में नहीं रहता, इसलिए व्यभिचार नहीं। ]

एक और जिज्ञासा यह उठती है कि स्वप्रकाशत्वानुमान ( अनुभूति, अनुभूतिव्यवहारहेतु-प्रकाश, अनुभूतित्वाद् ) में पक्षभूत अनुभूति का अर्थ क्या है? 'अनुभूति' पद का वाच्य अर्थ? अथवा 'अनुभूति' पद का लक्ष्य अर्थ? यदि 'अनुभूति' पद के वाच्य अर्थ में स्वप्रकाशत्व सिद्ध करना चाहते है, तब तो आप 'अपसिद्धान्त' नाम के निग्रहस्थान से निगृहीत हो जाते हैं। [ आशय यह है कि 'अनुभूति' पद का वाच्य अर्थ है—अन्त करण-वृत्ति-विशिष्ट चेतन। यह वेदान्तियों के मत में स्वप्रकाश नहीं। किन्तु शुद्ध चेतन ही स्वप्रकाश है। अब यदि अन्त करणवृत्ति विशिष्ट में स्वप्रकाशता सिद्ध करना चाहते है, तो अपसिद्धान्त होगा, क्योंकि सिद्धान्त-विरुद्ध कथा-प्रसग का ही नाम अपसिद्धान्त है—"स्वसिद्धान्तमभ्युपेत्यानियमात् कथा-प्रसगोऽपसिद्धान्त" (न्या० सू० ५।२।२३) ] द्वितीय (लक्ष्य) अर्थ भी पक्ष नहीं बनाया जा सकता, क्योंकि दूसरों के मत से वह प्रसिद्ध नहीं, अत आश्रयासिद्धि दोष होगा। अर्थात् प्रमातृत्व-आदि सकल धर्म-शून्य कोई अद्वितीय वस्तु ही आपके मत में 'अनुभूति' पद का लक्ष्य है, उसे दूसरे मानते नहीं।

अत्रोच्यते—'अपरोक्षव्यवहृतेर्योग्यस्याधीपदस्य[1] न ।
सभवे स्वप्रकाशस्य लक्षणासंभव. कुत ॥ १ ॥

न तावत्स्वयंप्रकाशे लक्षणासंभव, अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यतायास्तल्लक्षणत्वात् । नच योग्यतालक्षणधर्माङ्गीकारेऽव्याप्तिर्मोक्षदशायां तदसभवादपसिद्धांतापत्तिश्चेति शङ्कनीयं, योग्यत्वात्यान्ताभावानधिकरणत्वस्य तत्त्वात्, गुणवत्त्वात्यन्ताभावानधिकारणस्य

एव स्वप्रकाशत्वे प्रमाणलक्षणे समाक्षिप्य समाधातुमुपक्रमते—**अत्रोच्यत** इत्यादिना । तत्र लक्षण तावच्छ्लोकेन गृह्णाति—**अपरोक्षेत्यादिना** । न: अस्माक पक्षे अपरोक्षव्यवहृतेर्व्यवहारस्य योग्यस्य । व्यधिकरणे षष्ठ्यौ । तथाऽधीपदस्य सविदविषयस्य स्वप्रकाशस्य सभवे सति, स्वप्रकाशस्येति पदमुपर्यपि सबध्यते द्वारमध्यस्थमणिवत् । अतस्तस्य स्वप्रकाशस्य लक्षणासभव. कुत ? न कुतोपीति योजना । सगृहीतलक्षण विवृणोति—**न तावदित्यादिना** । अपसिद्धान्तापत्तिश्चाद्वैतवादिन इतरदशायामपीति शेष. । नच शङ्कनीयमित्युक्त तत्र हेतुमाह—**योग्यत्वात्यन्तेति** । कदाचिदपि योग्यताधिकरण तदत्यन्ताभावानधिकरणमेव । अनुत्पत्तिविनाशवन्त[2] हि ससर्गाभावविशेषमत्यन्ताभावमुपगच्छन्ति तार्किका । तथा च यदि कदाचिदपि तत्प्रतियोगी स्यात्तदा तत्पूर्वं वा तदुत्तरकाल वा तदभावो मन्तव्य. न समसमय विरोधात् । नचान्योन्याभावतत्प्रतियोगिघटयोश्च समसमय वर्तमानत्वान्न विरोध इति वचनीयम्, तस्य तादात्म्यप्रतियोगित्वात्तस्य कदाचिदप्यभावात् । इतरथा घटससर्गाभावघटान्योन्याभावयो सकरप्रसङ्गात् । अथ घटप्रतियोगित्वे समानेऽपि ससर्गतादात्म्यरूपविशेषणभेदादसकरस्तयोरेव तर्हि प्राप्ताप्राप्तविवेकेन ससर्गतादात्म्ययोरेवोभयत्र प्रतियोगित्व न घटस्येति मूकीभाव., तदितराभावेषु वाय नियम. । विस्तरेण चैतदुपरिष्टादुपपादयिष्यते । ततश्च प्रतियोगिपूर्वकालीनत्वे विनाशित्वमुत्तरकालीनत्वे तूत्पत्तिमत्त्व स्यात्ततश्च प्रागभावप्रध्वसयोरन्यतरत्वं प्रसज्येत । तस्मात्कदाचिदपि योग्यताधिकरण तदत्यन्ताभावानधिकरणमेवेति सिद्धम् । ततश्चैतदङ्गीकर्तव्यम् । इतरथा गुणवद् द्रव्यमिति कणादोक्तगुणवत्त्वस्य द्रव्यलक्षणत्वभङ्गप्रसङ्गात् । प्रथमक्षणे हि गुणवत्त्वाभावेन व्याप्ते. । यथा चैतत्तथा द्वितीयपरिच्छेदे द्रव्यलक्षणखण्डनप्रस्तावे विस्तरेण निवेदयिष्यते । तस्मात्तदत्यन्ताभावानधिकरणत्वमेव तत्र शरण, तदत्रापि समानमभिनिवेशमपहायेत्यभिसधेराह—**गुणवत्त्वात्यन्तेति** । यद्यप्यपरोक्षव्यवहारविषयत्वात्यन्ताभावानधिकरण-

**यह भी पूछा जा सकता है कि स्वप्रकाशता मे कोई प्रमाण है ? कि नही ? यदि है, तो उस प्रमाण की वेद्यता ( प्रकाश्यता ) आ जाने से स्वप्रकाशता भग हो गई । यदि परप्रकाशता के भय से यह कहा जाय कि स्वप्रकाशता मे कोई प्रमाण नही, तब तो बिना प्रमाण के उसकी सिद्धि ही कैसे होगी ?—इस प्रकार वेदान्तिगण उभयत पाश रज्जु मे बध जाते है । इससे अधिक उनपर और संकट क्या होगा ?**

**उत्तरपक्ष—'हमारे ( वेदान्ती के ) मत मे अपरोक्ष-व्यवहार-योग्य अधीपद ( अवेद्य ) स्वप्रकाश के सम्भव होने पर लक्षण का असम्भव क्यो होगा ?' अर्थात् स्वयप्रकाश का लक्षण असम्भव नही, क्योकि अवेद्यत्व-विशिष्ट अपरोक्ष-व्यवहार-योग्यता ही उसका लक्षण है । यह जो शङ्का की थी कि उक्त व्यवहार-योग्यता को ( लक्ष्यका ) धर्म मानने पर अव्याप्ति होगी, क्योकि मोक्षावस्था पन्न आत्मा में वह सम्भव नही और ( उक्त योग्यता को वहाँ मान लिया जाय, तब ) अपसिद्धान्त होगा—यह शङ्का नही करनी चाहिए, क्योकि उक्त योग्यता के अत्यन्ताभाव की अनधिकरणता ही उक्त योग्यतावत्ता है, जैसे कि गुणत्वात्यन्ताभाव की अनधिकरणता द्रव्यत्ववत्ता होती है । [ आशय यह है कि न्यायलीलावतीकार ने द्रव्य का लक्षण किया—"गुणाश्रयो द्रव्यम्"**

-१. धिय. पद ( विषय. ) धीपद, न धीपदमित्यधीपद तस्य । २. उत्पत्तिविनाशरहितमित्यर्थः ।

द्रव्यत्ववत्, तेन नाव्याप्तिः। नाप्यपसिद्धान्त, काल्पनिकधर्माणां संसारदशायामभ्युपगमात्।

"अक्षमा भवत केयं साधकत्वप्रकल्पने।
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम्"

इति सुरेश्वराचार्यवचनात्। "आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा" इति पञ्चपादिकाचार्यवचनाच्च। मोक्षदशायां च विवक्षितधर्माभावेऽपि कदाचित्सत्त्वेन तदत्यन्ताभावानधिकरणत्वस्य गुणाश्रयो द्रव्यमितिवत्सिद्धे।

अपरोक्षव्यवहारयोग्यघटादावतिव्याप्तिपरिहारार्थमवेद्यत्वे सतीति विशेषणम्। नचैतावदस्तु लक्षणमिति वाच्यम्, तथा सत्यतीतानागतयोर्नित्यानुमेयेषु च धर्मादिष्वतिव्याप्तेः। ननु तेषामप्यागमवेद्यत्वान्नावेद्यत्वमिति चेत्, मैवम्, फलव्याप्यतालक्षणवेद्यत्वस्य तत्रा-

---

त्वमेव लक्षण सभवति तथाप्यामुक्तेर्विद्यमानयोग्यताऽत्यागायेदमुक्तम्। भवत्वेवमव्याप्तिपरिहारोऽपसिद्धान्तव्याधे किमौषधमित्यत आह—**नाप्यपसिद्धान्त इति**। कः खल्वेव वदेत्ससारदशायामपि काल्पनिकधर्मा न सन्तीति कि पर ? किं वा स्वयूथ्यः कश्चित् ? परश्चेद्द्वियदाद्यारोपसमर्थनेन समर्थनीय उत्तरमाप्तवाक्येन संमतयति—**अक्षमा भवत** इत्यादिना। अद्वितीयात्मन साधकत्वकल्पनाया केयमक्षमा असहिष्णुता भवत कि तत्रैव समस्तप्रपञ्चं कल्पित न पश्यसि ततोऽत्यल्पमिदमित्यर्थः। "विषयिणस्तद्धर्माणा चे"त्यध्यासभाष्यावयव व्याचक्षाणैः पञ्चपादिकाकृद्भि —ननु विषयिणश्चिदेकरसस्य कुतो धर्मा ये विषयेऽध्यस्येरन्नित्याक्षिप्य समाहित—

'आनन्दो विषयानुभवो नित्यत्व चेतिसन्ति धर्माः।
अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्त'॥ इति।

**ननु** ससारदशाया कल्पनासभव· मोक्षदशाया तु तदभावादव्याप्तिरित्यत आह—**मोक्षदशायामिति**। यद्यप्ययमपि कश्चन धर्मस्तथापि परैस्तदभावरूपत्वेनाङ्गीकृतत्वाद् अभावभावयोर्ग्वेविधस्थलेष्वनतिरेकस्वीकाराच्च न दोष। एतच्च पूर्वोक्तस्यैव विवरणम्।

इदानी लक्षणविशेषणाना कृत्यमाह—**अपरोक्षेत्यादिना**। अवेद्यत्वशब्देन ज्ञानाविषयत्वमभिमतमिति भ्रान्त· शङ्कते—**नन्विति**। **फलव्याप्यतेति**। विषयावच्छिन्न चैतन्यमभिव्यक्त फलमिति वेदान्त-

---

किन्तु उत्पत्तिक्षणावच्छिन्न द्रव्य मे गुणाश्रयता वैशेषिक सिद्धान्त से है नही, अत उस द्रव्य मे अव्याप्ति देखकर 'गुणाश्रयता' का अर्थ किया गया—"गुणात्यन्तायोगव्यवच्छेद" अर्थात् गुण के अत्यन्ताभाव की अनधिकरणता। यह उत्पत्तिक्षणावच्छिन्न द्रव्य मे भी है। ठीक उसी प्रकार वेदान्ती भी उक्त योग्यता का अर्थ उक्त योग्यता के अत्यन्ताभाव की अनधिकरणता करके अपने लक्षण की अव्याप्ति हटा सकते है।] ( दूसरा दोष ) अपसिद्धान्त भी नही, क्योकि काल्पनिक धर्मों को संसारी आत्मा मे मानते है, जैसाकि सुरेश्वराचार्य ने ( बृह० वा० १।४।१२१९ मे ) कहा है—'अद्वितीय आत्मा मे साधकत्व की कल्पना आपको असह्य क्यो हो रही है ? क्या आप यह नही देखते कि आत्मा मे ही समस्त ससार अज्ञान-कल्पित है।' पञ्चपादिकाचार्य ने भी कहा है—'आनन्द, विषयानुभव तथा नित्यत्व—ये सब धर्म आत्मा मे है।' मोक्षावस्था मे यद्यपि आत्मा मे विवक्षित धर्म नहीं रहते, तथापि किसी ( संसार ) अवस्था मे रहने के कारण उनके अत्यन्ताभाव की अनधिकरणता की सिद्धि आत्मा मे वैसे ही है, जैसे गुणाश्रयता द्रव्य मे।

अपरोक्ष-व्यवहार के योग्य घटादि मे अतिव्याप्ति हटाने के लिए उक्त योग्यता का 'अवेद्यत्वे सति' यह विशेषण दिया। 'अवेद्यत्व'—इतना ही लक्षण क्यो न रखा जाय—ऐसी शङ्का नही करनी चाहिए, क्योकि अतीत तथा भावी ( घटादि ) पदार्थों एवं नित्य अनुमेय धर्मादि मे अतिव्याप्ति होगी। यदि

भावात् । तत्र विशिष्टशब्दप्रमाणबलात्तदाकारधीवृत्तिसमुल्लासमात्रादेव तद्व्यवहार इति वेदवादिनां प्रक्रिया । न च योगिप्रत्यक्षगम्यतया अपरोक्षत्वं धर्मादीनां, चोदनैकप्रमाणवेद्यत्वात्तेषाम् । न चैतावता सर्वदर्शित्वाभावो योगिनाम्, सर्वदर्शित्वशब्देन योग्यसर्वद्रष्टृत्वस्य विवक्षितत्वात्—

वादिना मतम् । अभिव्यक्तिश्चेन्द्रियद्वारा अर्थसन्निकृष्टमन परिणामविशेषः । नचैवंविध. परिणामविशेषोऽदृष्टादिषु सभवति, तेषामिन्द्रियायोग्यत्वात् । एतेनातीतादि व्याख्यातम् । तस्मान्न धर्मादीना फलावच्छेदकतया वेद्यत्वमित्यर्थः ।

'यथानयैव[1] व्यवहार[2]सिद्धिरद्धा भवेत्कल्पनयान्यथा न ।
तथोदित ततदगाधधीभिरतो वय विस्तरतो विभीताः ॥'

ननु यदि न वेद्यत्व तेषा[3] कथं तर्हि तेषु विज्ञानमनुष्ठानमित्यादिव्यवहार इत्यत आह—तत्रेति । विशिष्टशब्दप्रमाण विधिवाक्यादि । धीवृत्तिरन्त करणपरिणामस्तस्य समुल्लास उदयस्तन्मात्रादित्यर्थः । ननु यद्यपि धर्मादीना नास्मदादिप्रत्यक्षगम्यत्व तथापि योगिना भवति तत्प्रत्यक्षमतएव वेद्यत्वमित्यत आह—नचेति । अयमभिसधि.—न तावद्धर्मादीना बाह्येन्द्रियग्राह्यत्वं, रूपादिहीनतया तदुपहितमर्यादविषयाणामिन्द्रियाणा तत्राप्रवृत्तेः । मानसत्व तु तेषामात्मगुणत्वेऽपि संस्कारवदयोग्यत्वेन दूरनिरस्तम् । अथ [4]विशिष्टादृष्टसामर्थ्यात्तेषा[5] तेषु विषयेषु सामर्थ्यमिति मत, तर्हि तदेव हि विशिष्टादृष्टज्ञानं कथकारमेषामुदेति ? अज्ञातेषु तेषामनुष्ठानायोगात् । अथ योग्यन्तरवचनात्तदाऽन्धपरम्परा । अथ नित्यसिद्धेश्वरवचनात्, स्यादेव यदि नित्यसिद्ध ईश्वर सिद्ध्येत । आगमबलादीश्वरसिद्धिरितिचेत्स किमीश्वरवचनतया प्रमाणमपौरुषेतया वा । प्रथमे त्वितरेतराश्रय तद्विरचनात्तत्प्रामाण्य तत्प्रामाण्याच्च तत्सिद्धिरिति । उत्तरे

कहें कि उन ( धर्मादि ) मे आगम की वेद्यता ही रहती है, अवेद्यता नहीं, तो यह भी नहीं कह सकते, क्योकि फलव्याप्यतारूप वेद्यता का उनमे भी अभाव है । उनमे विशिष्ट शब्द प्रमाण ( विधि वाक्यादि ) के बल से तदाकार परोक्ष बुद्धि-वृत्ति के हो जाने मात्र से ही उनका ( धर्मादि का अनुष्ठानादि ) व्यवहार निभ जाता है—यह वेदवादियों की प्रक्रिया है । [ भाव यह है कि पूर्वपक्षी ने 'अवेद्यता' का अर्थ समझा था—अविषयता सामान्य । तभी तो उसने सन्देह कर दिया कि धर्मादि में शब्द-जन्य ज्ञान की विषयता ही है, अविषयता कैसे ? फिर तो 'अवेद्यता'—इतने लक्षण की भी धर्मादि मे अतिव्याप्ति नहीं । सिद्धान्ती ने उसे समझाया कि 'अवेद्यता' का अर्थ है फलव्याप्यता का अभाव । धर्मादि मे शब्द-जन्य वृत्ति की विषयता रहने पर भी फलव्याप्यता नहीं रहती, अत 'अवेद्यत्व' मात्र की उनमे अतिव्याप्ति होती ही है । धर्मादि में फलव्याप्यता न रहने का कारण यह है कि अभिव्यक्त विषयावच्छिन्न चैतन्य ही कहलाता है—फल । विषयावच्छिन्न चैतन्य की अभिव्यक्ति वहीं होगी, जहाँ इन्द्रियका अपने योग्य विषय से सन्निकर्ष हो । धर्मादि तो इन्द्रिय के योग्य ही नहीं, अत उनमे फल-विषयता रूप वेद्यत्व का अभाव है । ]

धर्मादि का योगिगण प्रत्यक्ष कर लेते है,अत उनमे अपरोक्षता (फलव्याप्यता) भी रह जाती है—यह सन्देह नहीं करना, क्योकि धर्मादि केवल वेद प्रमाण से ही जाने जा सकते है, योगी उनका प्रत्यक्ष नहीं कर सकते । [ "चोदनालक्षणोऽर्थो धर्मः"—इस ( जै० सू० १।१।२ ) में स्पष्ट कर दिया गया है कि 'चोदनैव लक्षण = प्रमाणं यस्य' अर्थात् धर्म मे एक वेद ही प्रमाण है ।

१ फलव्याप्यतालक्षणवेद्यत्वकल्पनयेत्यर्थः । २ आत्मनि स्वप्रकाशत्वव्यवहारसिद्धिरित्यर्थ. । ३. धर्मादीनामित्यर्थ. । ४. योगजधर्मरूपाद्विशिष्टादृष्टेत्यर्थ । ५ योगीन्द्रियाणामित्यर्थ ।

'यत्राप्यतिशयो दृष्ट: स स्वार्थानतिलङ्घनात् ।
दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता ॥'

इति न्यायात् । अतो धर्मादिव्यवच्छेदार्थमपरोक्षव्यवहारयोग्यत्वे सतीति विशेषणम् । नन्वज्ञानान्त:करणतद्धर्मेच्छादिषु शुक्तिरजतादिषु च लक्षणातिव्याप्तिस्तदवस्था, तेषामपि फलव्याप्यत्वाभावेनावेद्यत्वात्, अहमज्ञ इत्याद्यपरोक्षव्यवहारयोग्यत्वाच्चेति चेत्, सत्यम्; अवेद्यत्वेऽपि नापरोक्षव्यवहारयोग्यता तेषाम्, अध्यस्ततयैव तेषां सिद्धे: । ननु तथाप्यपरोक्षमिति व्यवहारदर्शनात्तद्योग्यता तत्र कल्पनीयेति चेत्, मैवम्, रजतादिव्यवहारयोग्येऽपि शुक्ति-

त्वपराद्धान्त: । यथा चानुमानजातमपि न पराभिमतेश्वरे वर्तते, यथा चापौरुषेयत्वं वेदस्य, तत्सर्वमव्यग्रमग्रे निवेदयिष्यते । अथागमाज्ज्ञातेष्वनुष्ठानमिति । अस्तु तर्हि स एवागमस्तत्र प्रमाणम्, अवश्यापेक्षणीयत्वात्कृत तदुपजीविभिर्योगिभिरिति । ननु यदि न योगिनामयोग्यविषयेषु सामर्थ्यं, कुत तर्हि तेषां सर्वदर्शित्वप्रदर्शकशास्त्रराशिना । अत आह—**नचैतावतेति** । प्रमाणान्तरबलात्सर्वशब्द: सकोचनीय इत्यर्थ । यत्रापि विषयेऽतिशयो दृष्ट: पार्थसपातिप्रभृतीनां विश्वरूपाशोकवनिकानिहितसीतादिषु, सोऽतिशय स्वार्थानतिलङ्घनाद् द्रष्टव्य: । अनतिलङ्घनमेवाह—**दूरसूक्ष्मादीति** । योग्य एव विषये दूरवर्तिनि सूक्ष्मे वा दर्शनं तत्र, न पुना रूपादौ श्रोत्रादेर्वृत्तिरिति भट्टोक्तेरर्थ । **फलव्याप्यत्वाभावेनेति** । प्रमाणाविषयत्वेन केवलसाक्षिवेद्यत्वादित्यर्थ: । परिहरति—**सत्यम्** । **अवेद्यत्वेऽपीति** । नाज्ञानादीनां साक्षादपरोक्षतासाक्षिवेद्यतया तेषां साक्ष्यापरोक्ष्याध्यासादेवापरोक्ष्यादित्यर्थ: । उत्तरौ चोद्यपरिहारौ स्पष्टार्थौ ।

**प्रत्यक्षादि धर्म में प्रमाण नहीं—यह बात भी सू० १।१।४ मे कह दी गई है । ]। यदि योगी धर्मादि को नही देख सकेंगे, फिर उनमे सर्वदर्शिता कैसे रहेगी—यह भी सन्देह नही करना, क्योकि उनमे जो सर्वदर्शित्व प्रसिद्ध है, उसका अर्थ है—सर्वयोग्य पदार्थों का द्रष्टृत्व । [ यह बात मानी जा सकती है कि साधारण व्यक्तियो की अपेक्षा योगी विशेष सामर्थ्य रखता है, जैसे योग-प्रभाव से अर्जुन ने विश्व रूप का दर्शन किया, सम्पाति ने चार सौ योजन पर सीताजी को देख लिया । किन्तु इसका अर्थ यह कदापि नही कि योगी के इन्द्रिय नितान्त अयोग्य पदार्थ को विषय कर लेगे ]। कुमारिल भट्ट ने स्पष्ट कहा है—'जहाँ कही किसी की इन्द्रियो मे कुछ उत्कर्ष देखा जाता है, वहाँ भी इन्द्रियो मे अपने विषय का उल्लघन नही हो सकता, हो सकता है कि कुछ लोग दूर या सूक्ष्म दृश्य को देख ले । किन्तु यह कभी नहीं हो सकता कि योगी के श्रोत्र नीलादि रूप को देख ले ।' अत: ( फलव्याप्यता न रहने से ) धर्मादि मे 'अवेद्यत्व' मात्र लक्षण अतिव्याप्त होता है, उनकी व्यावृत्ति के लिए लक्षण मे 'अपरोक्षव्यवहार-योग्यत्व'—यह विशेष्य भाग आवश्यक है ।**

**पूर्वपक्षी—अज्ञान, अन्त करण, अन्त करण के धर्म इच्छादि एव शुक्ति-रजतादि मे पूरे लक्षण की अतिव्याप्ति जैसी-की-तैसी रह गई, क्योंकि उनमे भी फल-व्याप्यता न रहने के कारण अवेद्यता है और 'मै अज्ञानी हूँ'—इस प्रकार के अपरोक्ष व्यवहार की योग्यता भी है ।**

**सिद्धान्ती—आपका कहना ठीक है, कि उनमे अवेद्यता है, किन्तु अपरोक्ष-व्यवहार योग्यता नही, क्योकि अपरोक्ष साक्षी मे अध्यस्त होने के कारण ही उनकी सिद्धि होती है । [ आशय यह है कि "य साक्षाद् अपरोक्षाद् ब्रह्म"—इस श्रुति से निश्चय होता है कि साक्षाद् अपरोक्षता तो ब्रह्म में ही है और उसमे अध्यस्त होने के कारण अज्ञानादि मे अपरोक्षता की प्रतीति होती है । "मै अज्ञानी हूँ"—इस प्रतीति के आधार पर उनमे अपरोक्षता मानने की कोई आवश्यकता नही । ] यदि कोई शका करे कि अज्ञानादि मे अपरोक्ष-व्यवहार देखकर अपरोक्ष-व्यवहार की योग्यता भी उनमे कल्प-**

१. श्लो० वा० २।११४ । २. प्रकृते चोक्तमाङ्क्वंचोरूपं प्रमाणान्तरमूह्येयम् । ३. अध्यासमन्तरा ।

शकलादौ रजतादिव्यवहारदर्शनात् । नन्वेवं सत्यवेद्यत्वविशेषणस्य न व्यवच्छेद्यमस्ति, त्वन्मते घटादेरप्यध्यस्ततया अपरोक्षव्यवहारयोग्यत्वाभावात्, मैवम्, व्यवहारदशायां तेषां प्रत्यक्षप्रमाणविषयाणामपरोक्षव्यवहारयोग्यताङ्गीकरात् । तथाप्यवेद्यत्वे सत्यपरोक्षत्वमेव लक्षणमस्तु. व्यभिचाराभावादिति चेत्, सत्यम्, अपरोक्षज्ञानविषयत्वेनैव घटादेरपरोक्षत्वाङ्गीकाराद्, अत्रापि तथात्वाद्व्याघात इति विभ्रमो माभूदिति तद्व्यवहारेणैव प्रतिवादिनामपि

ननु यदि स्वतोऽपरोक्षत्व चैतन्यस्यैवाज्ञानादीना तु तदध्यासादापरोक्ष्यमध्यस्तमिति नापरोक्षव्यवहार-योग्यत्वमिति ब्रूषे, तर्हि तद्धटादावपि तुल्यमिति न तेषामप्यपरोक्षव्यवहारयोग्यत्वप्राप्तिरतस्तद्व्यवच्छेदार्थमवेद्यत्वविशेषण व्यर्थमिति शङ्कते—**नन्वेवमिति** । **व्यवहारदशायामिति** । यद्यपि वास्तवापारोक्ष्याभावो घटादेरज्ञानादेश्च समानस्तथाप्यर्थक्रियोक्षममापरोक्ष्य प्रत्यक्षादिप्रमाणसिद्ध सत्वमिव घटादेरस्ति अज्ञानादेस्तु तन्नास्ति प्रत्यक्षादिविषयताया अप्यभावात् । अत शुक्तिरजतादिसत्तावत्प्रातीतिकमित्यर्थ[1] । ननु तथापि व्यवहारयोग्यतापदस्य कृत्य न पश्याम, अवेद्यतापदेन घटादिव्यावृत्तेरपरोक्षतापदेनाज्ञानादिव्यावृत्तेरिति शङ्कते—**तथापीति** । परिहरति—**सत्यमिति** । अयमर्थः—अपरोक्षज्ञानविषयेष्वपि तावदपरोक्षशब्दः प्रयुज्यते । तत्रापरोक्षमित्युक्ते व्याहतिशङ्का स्यात्तन्निवृत्त्यर्थमवेद्यत्वेऽप्युपपद्यमान व्यवहार-योग्यतापदग्रहणमिति । वस्तुतस्तु न प्रसरत्येव घटादिष्वपरोक्षत्व, तस्य प्रमात्वावान्तरजातितयाऽप्रमाया घटादावभावात् । नच मिथ्याज्ञानेऽपि भावात्प्रमात्वेन [2]परापरभावाभावान्न जातिरिति वाच्यम्, तत्रारोपाङ्गीकाराच्छब्दप्रयोगस्यापि तन्मार्गत्वात् । अन्यथा [3]घटत्वादेरप्यपलापप्रसङ्गात्सुवर्णनिर्मितेऽपि घटशब्द-प्रयोगेण पृथिवीत्वादिना परापरभावाभावस्यापि शक्यवचनत्वात् । यद्यपि व्यवहारो ज्ञानमपि भवति तथाप्यवेद्यत्वविशेषणानुरोधेन शब्दप्रयोग एव स्वीक्रियते । तेन न पूर्वपक्षावसरोक्तदूषणप्रसरः । यद्यपि योग्यताव्यतिरेकेणापि लक्षण शक्यसमर्थन तथापि सुषुप्तौ तदभावेऽपि योग्यत्वस्य सतोऽत्यागाय तद्ग्रहणम् ।

नीय है । तो उसकी यह शंका उचित न होगी, क्योंकि रजतादि-व्यवहार के अयोग्य शुक्ति-खण्डों में भी रजतादि-व्यवहार देखा जाता है [ अत. व्यवहार-योग्यता के बिना भी जो व्यवहार सिद्ध हो जाता है, उससे योग्यता की कल्पना नहीं हो सकती ] ।

पूर्वपक्षी—इस प्रकार आप ( वेदान्ती ) के मत में 'अवेद्यत्व' विशेषण की सार्थकता नहीं रह जाती, क्योंकि ( घटादि की व्यावृत्ति तो 'अपरोक्ष-व्यवहार-योग्यता' पद से ही हो जाती है ) घटादि में अध्यस्तता होने के कारण अपरोक्ष-व्यवहार-योग्यता का अभाव है ।

सिद्धान्ती—व्यवहार दशा में प्रत्यक्ष प्रमाण के विषयीभूत घटादि में अपरोक्ष-व्यवहार-योग्यता मानी जाती है । फिर भी 'अवेद्यत्व-विशिष्ट अपरोक्षत्व'—इतना ही लक्षण क्यों न रखा जाय ? इतने का भी तो कहीं व्यभिचार ( अतिव्याप्ति दोष ) नहीं है—यह सन्देह भी बहुत उचित नहीं, क्योंकि जैसे अपरोक्ष ज्ञान की विषयता रहने के कारण ही घटादि में अपरोक्षता मानी जाती है, वैसे ही इस ( स्वप्रकाश वस्तु ) में भी अपरोक्ष-विषयता के कारण ही अपरोक्षता होगी, फिर तो उसमें अवेद्यता कैसे रहेगी ?—इस प्रकार का विरोध-भ्रम किसी को न हो, इसलिए केवल अपरोक्षत्व न कहकर अपरोक्ष-व्यवहार-योग्यता कही । इससे यह भी स्पष्ट हो गया कि प्रतिवादी-सम्मत अपरोक्ष-व्यवहार-योग्यता रहने के कारण ही ब्रह्म में अपरोक्षत्व है, न कि अपरोक्ष ज्ञान-विषयता के कारण ।

पूर्वपक्षी—तब तो आपके अवेद्य ( ब्रह्म ) में व्यवहार-योग्यता भी भला कैसे रहेगी ?

१. व्यावहारिकमित्यर्थ । २ प्रमात्व विहायापरोक्षत्व रजतभ्रमे, अपरोक्षत्व विहाय प्रमात्वमनुमित्यादौ । उभयोः समावेश इति साङ्कर्यस्य विद्यमानत्वेन न तस्य प्रमात्वावान्तरजातित्वमिति भावः । ३ घटत्व-निष्ठजातित्वापलापेत्यर्थ. । ४. अस्माक सौवर्णघटे घटत्वारोपाङ्गीकारान्नदोष इतिशेष. ।

संप्रतिपन्नेन तदेव स्फुटीक्रियत इति न कश्चिद्दोष । कथं तर्हि अवेद्यस्य व्यवहारयोग्यत्वमिति चेत्, किमिदमवेद्यत्वे व्यवहारविषयत्व न स्यादित्यनिष्टप्रसञ्जनम् ? उत व्यवहारविषयत्वाद्वेद्यत्वानुमानम् ? नाद्य, आपाद्यापादकयोरुभयोरपि परेषामप्रसिद्धे.। नेतर, तस्य सप्रतिसाधननिराससमये निराकरिष्यमाणत्वात् । तस्मादनाविल स्वप्रकाशलक्षणम् ।

प्रमाणमपि—अनुभूति. स्वयप्रकाशा अनुभूतित्वाद्यन्नैवं तन्नैव यथा घट इत्यनुमानम् । न चाप्रसिद्धविशेषणत्वम्, यत —

सामान्यतोऽनुमानेन प्रसिद्धेऽपि विशेषणे ।
कथ कथय पक्षोऽयमप्रसिद्धविशेषण ॥ २ ॥

तथा हि—वेद्यत्व किचिन्निष्ठात्यन्ताभावप्रतियोगि, धर्मत्वात् शौक्ल्यवदिति सामा-

---

व्यवहारविषयत्वादेव ज्ञानविषयत्वमपि सिद्धयतीत्यभिप्रेत्य शङ्कते—**कथं तर्हीति** । तदेतत्प्रसङ्गो वा ? प्रसाधन वेति विकल्प्य दूषयति—**किमिदमवेद्यत्वे व्यवहारविषयत्वमित्यादिना** । **आपाद्यापादकयोरिति** । क्वचित्प्रमितेन पक्षे चाहार्यारोपितेन क्वचिद्व्यापकतया प्रमित पक्षे चानभिमतमापाद्यत इति हि स्थितिस्तदिहावेद्यत्वेनापादकेन प्रमितेन भवितव्यम् । नचैतत्सर्वं प्रत्यक्षमिति मन्यमानस्य संभवति । नापि व्यवहाराविषयत्वस्य प्रमितिरिति केन किमापाद्यत इत्यर्थः । **तस्य सप्रतिसाधननिराससमय इति** । लक्षणदूषणसमये प्रत्यनुमानप्रयोगोऽनवसरनिरस्त इत्यर्थः ॥

तदेव लक्षण समर्थयित्वा प्रमाण समर्थयितुमुपक्रमते—**प्रमाणमपीति** । स्वप्रकाशलक्षणसभवेऽपि तादृग्रूप साध्य प्रसिद्धमप्रसिद्ध वा । आद्ये सिद्धसाधनता केवलव्यतिरेकिताव्याकोपश्च । द्वितीयेऽप्रसिद्धविशेषणता इत्यत आह—**नचेति** । हेतुमवतारयति—**यत इति** । श्लोकेन हेतुमाह—**सामान्यत इति** । सामान्यतोऽनुमानेन सामान्यतोदृष्टेन । प्रसिद्धेऽपि विशेषण इत्यत्रापि सामान्यत इत्यनुषञ्जनीयम्। अनिर्धारितधर्मिविशेषतयेत्यर्थः । अतएव सामान्यतोदृष्टानुमाने नानिर्धारितधर्मिविशेषनिष्ठस्येति विवरणम् । अपिर्भिन्नक्रम । सामान्यतोऽपि प्रसिद्धे विशेषणे अप्रसिद्धविशेषण. पक्ष· कथमिति कथय ? न कथमपीति योजना । अत्र च सामान्यत इति सिद्धसाधनतापि परिहृता वेदितव्या । सामान्यतोदृष्टमेवाह—**तथाहि वेद्यत्वमित्यादिना** । अभावप्रतियोगीत्युक्ते अन्योन्याभावेन वेद्यत्वेऽप्युपपद्यमानेनार्था-

---

सिद्धान्ती—आपका आशय क्या है ? क्या वेद्यत्व न होने के कारण व्यवहार-विषयता नही रहेगी—यह अनिष्ट-प्रसक्ति दे रहे है ? या अपरोक्ष-व्यवहार-विषयता से वेद्यत्व का अनुमान करना चाहते है ? अनिष्टापत्ति तो दे.नही सकते, क्योकि आपाद्य और आपादक दोनो ही तार्किको के मत में प्रसिद्ध नही । [ तात्पर्य यह है कि 'यदि आत्मा मे वेद्यत्व का अभाव होगा, तब अपरोक्ष-व्यवहार-विषयता का अभाव भी होगा—इस प्रकार के अनिष्ट-प्रसञ्जन मे आपादक है–वेद्यत्व का अभाव और आपाद्य है–अपरोक्ष-विषयता का अभाव । तार्किको के मत मे वेद्य और अपरोक्ष-व्यवहार-विषयत्व—दोनो ही केवलान्वयी धर्म है, उनका अभाव कही प्रसिद्ध ( प्रमित ) ही नही । फिर किससे किसका आपादन होगा ? ] दूसरा विकल्प (अपरोक्ष-व्यवहार-विषयत्व से वेद्यत्व का अनुमान करना) भी ठीक नही, क्योकि सत्प्रतिपक्ष-निराकरण के अवसर पर उसका निराकरण होनेवाला है । अत उक्त स्वप्रकाश-लक्षण नितान्त निर्दुष्ट है ।

प्रमाण भी है—'अनुभूति स्वयप्रकाशा, अनुभूतित्वाद्, यन्नैव तन्नैव यथा घट."—यह अनुमान । इस अनुमान में अप्रसिद्ध विशेषणता ( साध्याप्रसिद्धि ) नही, क्योंकि—'सामान्यतोदृष्टानुमान के द्वारा विशेषण की सिद्धि हो जाने पर, बताइए यह पक्ष ( अनुभूति ) अप्रसिद्धविशेषणक कैसे रहेगा ? अनुमान का आकार यह है—'वेद्यत्वे, किसी-न-किसी धर्मी मे रहनेवाले अत्यन्ताभाव

न्यतो दृष्टानुमानेनानिर्धारितधर्मीविशेषनिष्ठस्यावेद्यत्वधर्मस्य प्रसिद्धत्वात्, केवलव्यतिरेकिणश्चोभयवादिसम्प्रतिपन्नापरोक्षव्यवहारयोग्यानुभूतिविशेषावलम्बनताया एव समर्थ्यमाणत्वात् नाप्रसिद्धविशेषणता। यद्वा यद्विपर्यये असमीहितप्रसक्तिस्तत्कचिन्मानयोग्यमिति सामान्यव्याप्ति। इह चानुभूतिरनुभाव्या भवति नवेति वादिविप्रतिपत्तेः संशये सत्यनुभाव्यत्वे

न्तरता स्यात्तन्निवृत्त्यर्थमत्यन्ताभावग्रहणम्। नचास्तित्वेन व्यभिचार, तस्य पक्षत्वात् पक्षतुल्यत्वाद्वा। अभिधेयत्वादिष्वपीयमेव गतिः। अन्ततः स्वस्मिन्नेवाभावादात्माश्रयप्रसङ्गात्, उत्पत्तिज्ञप्तिप्रतिबन्धकस्यैव दोषत्वमिति प्रक्रियामात्र, नियमेन प्रमाणानुपलब्धेरविशेषादिति। अत्र च वेद्यत्वप्रसिद्धैयव यद्यपि तदन्विकरणत्वमपि प्रसिद्ध, प्रतियोगिप्रसिद्धैयवाभावप्रसिद्धेः तथापि सुहृद्भूत्वेदमाहेति द्रष्टव्यम्। **अनिर्धारितेति**। अनिर्धारितो यो धर्मिविशेषस्तन्निष्ठस्येत्यर्थः। ननु भवत्ववेद्यत्वसिद्धिरपरोक्षव्यवहारयोग्यत्वे सत्यवेद्यत्वस्य कुतः सिद्धिरित्यत आह—**केवलव्यतिरेकिणश्चेति**। अथवा मानान्तरेणावेद्यत्वसिद्धौ किमनेनानुमानेनेत्यत आह—**केवलेति**। केवलव्यतिरेकिण इति पञ्चमी। प्रथमपक्षे त्वयमर्थः। अपरोक्षव्यवहारविषयत्व तावदनुभूतावेव तत्रापि सम्प्रतिपन्न तादृगनुभूतौ चावेद्यत्वमन्यतः स्वरूपेण सिद्ध यदा साध्यते तदा किमपरमत्राप्रसिद्ध येनाप्रसिद्धविशेषणता स्यादिति। द्वितीये तु सामान्यतः सिद्धस्यानुमनेन धर्मिविशेषे साधनान्नानर्थक्यमित्यर्थः। एतेन केवलव्यतिरेकितापि रक्षिता अन्यत्र प्रसिद्ध्यनभ्युपगमात्। एवमुदयनरीत्या केवलव्यतिरेकिणः प्रामाण्य समर्थितम्, सम्प्रति लीलावतीकाररीत्याप्याह—**यद्वेति**। यस्य वैपरीत्याङ्गीकारे प्रमाणान्तरबाधादिप्रसक्तिस्तत्प्रमाणयोग्यमिति सामान्यकारेण व्याप्ति। व्याप्तहेतो पक्षधर्मतामाह—**इह चेति**। त[3]त्कि सर्वत्र विपक्षबाधात्प्रमाणोन्नयनम्? तथाच गत घटादिप्रत्यक्षेणाविमर्शपूर्वकेणेत्यत आह—**संशये सतीति**। कोटिद्वयाप्रसिद्ध्या साधारणधर्मदर्शनाभावान्न संशयोऽत उक्तम्—**विप्रतिपत्तेरिति**। इद च प्रयोगशरीर—वेद्यत्वमनुभवनिष्ठप्रामणिकात्यन्ताभावप्रतियोगि तर्कादिव्रावितत्वात् यदेव तदेव यथा शुक्तिरजतादि यथा वा घटत्वादीति। तर्कमात्र चेदिमित्याशङ्क्य प्रस्तुतानुमानो-

का प्रतियोगी है, क्योंकि धर्म है, जैसे शुक्लत्व[4] (जिस धर्मी में रहनेवाले अत्यन्ताभाव का प्रतियोगी वेद्यत्व है, वह अवश्य वेद्यत्वात्यन्ताभाव ( अवेद्यत्व ) वाला होगा ) उस धर्मी का विशेष रूप से भले ही निर्देश न किया जा सके, इतना अवश्य कहा जा सकता है कि अवेद्यत्व कहीं-न-कहीं प्रसिद्ध है। उस अवेद्यत्व में "अनुभूति स्वयप्रकाशा"—इस केवलव्यतिरेकी अनुमान से ऐसे अनुभूति ( पक्ष ) विशेष की आश्रितता सिद्ध की जाती है, जिसमें अपरोक्ष-व्यवहार-विषयता सर्वसम्मत है। [ आशय यह है कि उक्त अनुमान में अप्रसिद्ध-विशेषणता दूर करने के लिए सिद्धान्ती ने 'वेद्यत्व किञ्चिन्निष्ठ'–इत्यादि अनुमान का सहारा लिया। पूर्वपक्षी का कहना है कि इस अनुमान से भी केवल 'अवेद्यत्व' साध्यका विशेषण भाग ही प्रसिद्ध होगा, पूरा साध्य ( अवेद्यत्वे सति अपरोक्षव्यवहार योग्यता ) नहीं। इस पर सिद्धान्ती का कहना है कि अनुभूति रूप पक्ष में अपरोक्ष-व्यवहार-योग्यता के रहने में विवाद ही नहीं, वह तो उभय-सम्मत है। विवाद है केवल अवेद्यत्व रूप विशेषण भाग में, उसकी तो प्रसिद्धि सामान्यतः कर ही दी गई है ] अतः अप्रसिद्ध विशेषणता नहीं।

अथवा "यद्विपर्ययेऽसमीहितप्रसक्ति तत् किञ्चिन्मानयोग्यम्" ( न्यायलीलावती पृ० ७३९ ) अर्थात् 'जिस पदार्थ का अभाव मानने पर अनवस्थादि अनिष्ट दोषों की प्राप्ति हो, वह पदार्थ अवश्य किसी प्रमाण का विषय है'—यह एक सामान्य नियम है। प्रकृत में 'अनुभूति अनुभव का विषय है ? कि नहीं ?—इस प्रकार का वादि-विप्रतिपत्ति वाक्यों से सशय होनेपर यदि अनुभूति में किसी

१. परिभाषामात्रमित्यर्थः। २. धर्मत्वादित्यनुमानेनेत्यर्थः। ३ तत् = तर्हि ( सामान्याकारेण व्याप्तिस्वीकारे )। ४. घटादिविषयकानुमानादिकल्पनम्।

सत्यसमीहितप्रसक्तेस्तद्विपर्ययस्य सामान्यतो मानयोग्यत्वाधिगमात्, विशेषप्रमाणापेक्षायां व्यतिरेकिण उपन्यासात् नाप्रसिद्धविशेषणता। अन्यथा कथमिच्छादीनामष्टद्रव्यव्यतिरिक्त द्रव्याश्रितत्वं नैयायिकादयोऽपि साधयेयुरष्टद्रव्यव्यतिरिक्तद्रव्यस्याप्रसिद्धावप्रसिद्धविशेषणता, प्रसिद्धौ च हेतोस्तत्र वृत्तावन्वयव्यतिरेकितया केवलव्यतिरेकित्वासंभव, अवृत्तौ चासाधारणानैकान्तिकतापत्तिः। न चैव सत्यप्रसिद्धविशेषणताया अदूषणतापत्ति, उक्तसामान्यतोदृष्टानुमानगोचरत्वासंभवे शशविषाणोल्लिखिता भूरित्यादौ तस्या सावकाशत्वात्।

---

पयोगमाह—**विशेषप्रमाणापेक्षायामिति**। अत्र सामान्यतोऽनुमानेनेति सामान्येन प्रमाणोन्नयनेनेति योजनीयम्। एतदेव प्रतिबन्द्या साधयति—**अन्यथेति**। अनुपपत्तिसाम्य तावदाह—**अष्टद्रव्यव्यतिरिक्तेति। तत्र वृत्ताविति**। अत्र ह्यष्टद्रव्यातिरिक्तद्रव्यप्रसिद्धौ तदाश्रितगुणादीना सपक्षत्वम्। तथाच तत्र हेतुवृत्त्यवृत्त्योर्दूषणद्वय स्यादित्यर्थ। एवमनुपपत्तौ समानायामस्मदुक्तविधामन्तरेण नापरा विधास्तीति भाव। तथाहि इच्छादयो गुणा अनित्यत्वे सत्यस्मदाद्यचाक्षुषप्रत्यक्षत्वात् गन्धवदित्यादिना गुणत्वे स्थिते गुणत्वापरजातिमनया नियतैकद्रव्यव्यवच्छेदकतया विशेषगुणत्वे च सिद्धे सतीच्छादय क्वचिदाश्रिता, गुणत्वाद्रूपवदिति सामान्यतोदृष्टानुमानेनानिर्धारिते कस्मिंश्चिदाश्रये सिद्धे न तावत्स्पर्शवद्विशेषगुणा प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वात्, प्रत्यक्षत्वे सत्ययावद्द्रव्यभावित्वाद्वा। नाप्याकाशविशेषगुणा बाह्येन्द्रियाप्रत्यक्षत्वात्। नापि दिक्कालमनसा विशेषगुणत्वादित्यादिनाऽष्टद्रव्याश्रयत्वानुपपत्तौ सिद्धायामिच्छादयोऽष्टद्रव्यव्यतिरिक्तद्रव्याश्रयाः, तेष्वनुपपद्यमानत्वे सति गुणत्वाद्यन्नैव तन्नैव यथा गन्धादीति केवलव्यतिरेकिणैव सिद्धिरिति। नन्वेवविधपरिहारज्ञानस्य सर्वत्र सुलभत्वाद्धता बताप्रसिद्धविशेषणतातपस्विनीत्यत आह—**नचैवं सतीति**। एतदुक्त भवति—न सर्वत्रैवविध परिहारः सुलभ असमाधेयाप्रसिद्धविशेषणत्वानामपि 'भूमिः शशविषाणोल्लिखिता' इत्यादीना संभवात् तेषु चास्या साम्राज्यमिति। तदेवमृजुरीत्याऽप्रसिद्धविशेषणता परिजहार। येतु वक्ररीति रोचयन्ते तान्प्रति महाविद्याभिरपि साध्यप्रसिद्धिसुलभयति—

---

दूसरे अनुभव की विषयता मान ले, तब अनवस्थादि दोषो की प्राप्ति होती है, अत उस ( अनुभव विषयता ) का अभाव ( अवेद्यता ) किसी प्रमाण का विषय अवश्य है—ऐसा सामान्य रूप से ज्ञान होने पर विशेष प्रमाण की जिज्ञासा होती है। तब "अनुभूति स्वयप्रकाशा"—इस केवलव्यतिरेकी अनुमान का उल्लेख किया गया है, अत अप्रसिद्धविशेषणता नही। अन्यथा ( उक्त सामान्य व्याप्ति न मानने पर ) नैयायिकादि भी "इच्छादयोऽष्टद्रव्यातिरिक्तद्रव्याश्रिता अष्टद्रव्यानाश्रितत्वे सति गुणत्वात्"—इस अनुमान के द्वारा इच्छादि मे आठ द्रव्यो से अतिरिक्त द्रव्य की आश्रितता कैसे सिद्ध करेगे? क्योकि आठ द्रव्यो से भिन्न द्रव्य के अप्रसिद्ध होनेपर अप्रसिद्धविशेषणता और प्रसिद्ध होने पर भी यदि वहाँ हेतु रहता है, तब तो अन्वयव्यतिरेकिता आ जाने से केवल व्यतिरेकिता असम्भव हो जाती है। यदि हेतु वहाँ नही रहता, तब असाधारण अनैकान्तिकता की प्राप्ति होती है। यदि शका हो कि ( उक्त सामान्य व्याप्ति के आधार पर तो सब कही विशेष प्रसिद्ध किया जा सकता है ) फिर तो अप्रसिद्ध विशेषणता दोष ही कहाँ लगेगा। तो शंका उचित नही, क्योकि उक्त सामान्यतोदृष्टानुमान की सामर्थ्य के बाहर 'शशविषाणोल्लिखिता भू' ( यह खेत खरगोश के सीगो से जोता गया है ) इत्यादि स्थलो पर उक्त दोष को पूरा अवकाश है।

---

१ व्याख्येयमित्यर्थ। २ अनित्यत्वविशिष्टोयोऽस्मदादिचाक्षुषप्रत्यक्षत्वाभावस्तद्वत्त्वादित्यर्थ। परमाण्वादौ व्यभिचारवारणायानित्यत्वविशिष्टेति। ईश्वरस्य चक्षुरिन्द्रियाभावेनेश्वरीयचाक्षुषप्रत्यक्षत्वाभाववति द्रव्यादौ व्यभिचारनिरासायास्मदादीति चाक्षुषत्वविशेषणम्। द्व्यणुके परमाणुक्रियायां व्यभिचारवारणाय तद्भिन्नत्वेसतीत्यादि देयम् ३ महती विद्या-महाविद्या, तदुपयोग्यनुमान महाविद्यानुमानम्। विद्याया

अथवा अयं घट एतद्घटान्यत्वे सति वेद्यत्वानधिकरणान्य पदार्थत्वात्पटवदित्यादिमहाविद्याप्रयोगैरप्यवेद्यत्वप्रसिद्धिरप्यूहनीया ।

नाप्रसिद्धविशेष्यतापि, अनुभूते प्रसिद्धत्वात् । अतएव नाश्रयासिद्धिरपि हेतो ।

---

**अथवेति** । अयं घटः वेद्यत्वानधिकरणान्य इत्युक्तेऽप्रसिद्धविशेषणता सर्ववेद्यत्ववादिनोऽनुमानात्पुरस्तात्तदनधिकरणासिद्धेरत उक्त—**घटान्यत्वे सतीति** । घटत्वानधिकरणत्व इति यावत् । तथाच सर्वघटेषु सिद्धसाधनं, तत उक्तं—**एतदिति** । एतस्य च घटस्य वेद्यत्वाधिकरणत्वेऽपि स्वान्यत्व प्रत्यनधिकरणत्वात्तथाविधघटान्यत्वस्य च पटादावेव प्रसिद्धेर्नाप्रसिद्धविशेषणतासिद्धसाधनते इत्यर्थः । घटमात्र पक्षीकृत्यैतद्घटान्यत्वेसति । वेद्यत्वानधिकरणान्य इत्युक्ते घटान्तरमादायार्थान्तरता, घटान्तरस्याप्येतद्घटान्यत्वेसति वेद्यत्वानधिकरणादेतस्मादन्यत्वात्तद्व्यवच्छेदार्थमयमितिपदम् । एतस्यैव घटस्य एतद्घटान्यत्वेसति वेद्यत्वानधिकरणान्यत्वे साध्यमाने घटान्तरमादायार्थान्तरताया अनवकाशात् । एतद्घटान्यत्वानधिकरणान्य इत्युक्ते व्याहतिः स्यादेतद्घटस्यैतद्घटान्यत्वायोगात् तदर्थं[२] वेद्यत्वपदम् । अत्र चैतद्घटान्यत्वेसति वेद्यत्वानधिकरणमय घटस्तदन्यत्वमादाय पटादौ साध्यप्रसिद्धिः । पक्षे त्वेतद्घटस्यैतद्घटान्यत्वेसति वेद्यत्वानधिकरणान्यत्वमेतद्घटान्यत्वानधिकरणान्यत्वेन वा ? वेद्यत्वानधिकरणान्यत्वेन वा स्यात् ? आद्ये, व्याहति । एतस्यैव घटस्यैतद्घटान्यत्वायोगात् । अत एतद्घटान्यत्वेसति वेद्यत्वानधिकरणमन्यत्किंचिदादाय तदन्यत्वसिद्धिरित्यवेद्यत्वसिद्धि । आदिग्रहणेन 'वेद्यत्व स्वस्वेतरवृत्तित्वानधिकरणात्यन्ताभावप्रतियोगिवृत्तिधर्माधिकरण[३] मेयत्वादि'त्यादि सगृहीतम् । एतदपि सामान्यतोऽनुमानेनेति सगृहीतमेव । **नाप्रसिद्धविशेष्यतापीति** । विशेष्य धर्मि ।

---

अथवा "अय घट, एतद्घटान्यत्वे सति वेद्यत्वानधिकरण., पदार्थत्वात्, पटवत्" ( यह घट, इस घट से अन्य मे रहनेवाले वेद्यत्व के अधिकरण से अन्य है, क्योकि पदार्थ है, जैसे पट ) इस प्रकार के महाविद्या प्रयोग द्वारा भी अवेद्यत्व की प्रसिद्धि कर लेनी चाहिए । [ महाविद्या प्रयोग, उस अनुमान को कहते है, जिसके साध्य का समन्वय दृष्टान्त मे और रीति से हो और पक्ष मे और रीति से । जैसे कि प्रकृत अनुमान मे साध्य है—एतद्घटान्यत्वविशिष्ट वेद्यत्व के अनधिकरण का भेद । शुद्ध वेद्यत्व सब कही रहता है, किन्तु एतद्घटान्यत्वविशिष्ट वेद्यत्व इस घट से भिन्न पटादि मे ही रहेगा, अत विशिष्ट वेद्यत्व का अधिकरण होता है—पटादि और अनधिकरण—एतद्घट । उस अनधिकरण का भेद पट रूप दृष्टान्त में है ही । यहाँ ध्यान देने की बात यह है कि पट में साध्य प्रसिद्ध क्यो हुआ ? उसमें एतद्घटान्यत्व था इसलिए । किन्तु पक्षरूप एतद्घट मे एतद्घटान्यत्व है नही, अत पक्ष मे साध्य का समन्वय करने के लिए हमे बाध्य होकर पक्ष से भिन्न कोई वेद्यत्व का अनधिकरण अवश्य मानना होगा जो एतद्घटान्यत्वविशिष्टवेद्यत्व का अनधिकरण हो ( उसमे यद्यपि एतद्घटान्यत्वरूप विशेषण है, किन्तु वेद्यत्व रूप विशेष्य न रहने से ही विशिष्ट का अनधिकरण होगा ) और उससे अन्य होगा पक्ष । इस प्रकार बाध्य होकर हमे जो वेद्यत्व का अनधिकरण मानना पडा उस अवेद्य मे अवेद्यता प्रसिद्ध हो गई ] प्रकृत स्वयप्रकाशत्व अनुमान मे अप्रसिद्ध विशेष्यता भी नही, क्योकि अनुभूति रूप विशेष्य प्रसिद्ध है ।

---

महत्त्व च द्वाराल्पत्वरूपलाघवशालित्वे सति सिषाधयिषितार्थसाधकत्वम् । वक्ष्यति हि टीकाकृद् द्वितीयपरिच्छेदे—केवलान्वयिनि व्यापके प्रवर्तमानो हेतु पक्षे व्यापकप्रतीत्यपर्यवसानबलादन्वयव्यतिरेकि साध्यविशेष साधयन् हि महाविद्येति । १. बाध इत्यर्थः । २ तदर्थं = तद्वारणार्थमित्यर्थ. । ३. वेद्यत्वादि धर्ममादायार्थान्तर तद्वारणाय—अत्यन्ताभावप्रतियोगिवृत्तीति धर्मविशेषणाप्रमेयत्वाद्यादाय पुनःस एवदोषस्त वारयितु स्वस्वेतरवृत्तित्वानधिकरणेति धर्मविशेषणम् । तथा च स्ववृत्तित्वविशिष्टस्य स्वेतरवृत्तित्वस्याधिकरण प्रमेयत्वादि तद्भिन्नो योऽत्यन्ताभावप्रतियोगिवृत्तिधर्मो घटत्वादिस्तदधिकरण घटादीतिदृष्टान्ते

नापि स्वरूपासिद्धि , कल्पितव्यक्तिभेदनिष्ठस्य चन्द्रत्वसामान्यस्येवानुभूतित्वसामान्यस्याभ्युपगमे सिद्धान्ताविरोधात् । कल्पितस्यापि प्रतिबिम्बादिवत्साधकत्वसम्भवात् । न च प्रतिवाद्यसिद्धिस्तेनाप्यनुभूतित्वसामान्यस्याभ्युपगमात् । नच कल्पिताकल्पितत्ववैषम्याद्धेतोरन्यतरासिद्धिराशङ्कनीया, अवधीरितकल्पिताकल्पितविशेषस्यानुभूतित्वमात्रस्योभयवादिसिद्धत्वात् । अन्यथा धूमवत्त्वादावपि तदेतद्देशनिष्ठत्वादिविकल्पेनासिद्ध्यादेर्दुष्परिहरत्वात् । न च

---

तदेव पक्षदूषणान्यपाकृत्य हेतुदूषणान्यपाकरोति—**अतएवेत्यादि** । यत एव विशेष्यरूपस्य धर्मिणः प्रसिद्धिस्तत एवेत्यर्थः । ननु किमिदमनुभूतित्व नाम ? न तावज्जाति , अनुभूतेरेकत्वाङ्गीकारेण व्यक्त्यभेदस्य जातिबाधकत्वात् । यथाह—

'व्यक्तेरभेदस्तुल्यत्व सङ्करोऽथानवस्थितिः ।
रूपहानिरसम्बन्धो जातिबाधकसग्रह' इति ।

अतएव नोपाधिरपि । अनुगतो ह्युपाधिर्भवति अद्वैतविरोधश्चोभयत्रापि तुल्य इत्यसिद्धिरेव हेतोरित्यत आह—**नापीति** । यथाच कल्पितस्यापिसाधकत्व तथा मिथ्यात्ववादे व्युत्पादयिष्यते । ननु प्रतिवादिना पारमार्थिकी जातिराद्रियते, भवता तु काल्पनिकीत्यन्यतरासिद्धिरित्यत आह—**नच कल्पितेति** । अवधीरितः काल्पताकल्पितरूपो विशेषो येनानुभूतित्वमात्रेण तत्तथोक्तम् । उक्तपरिहारानङ्गीकारे स्वव्याहति बाधकमाह—**अन्यथेति** । **तदेतद्देशेति** । धूमवत्त्वं कि महानसनिष्ठ

---

इसीलिए हेतु मे आश्रयासिद्धि दोष भी नही । स्वरूपासिद्धि भी नही, क्योकि कल्पित अनेक व्यक्तियो मे रहनेवाली 'चन्द्रत्व' जाति के समान 'अनुभूतित्व' जाति के मान लेने पर किसी प्रकार का सिद्धान्त-विरोध उपस्थित नही होता [ आशय यह है कि उदयनाचार्य ने किरणावली मे छह धर्मो को जातित्व-बाधक कहा है, जिनका निरूपण इसी परिच्छेद मे आनेवाला है । उनमे 'एक-व्यक्ति-वृत्तित्व' भी एक है । जैसे आकाश एक ही व्यक्ति है अत उसमे रहनेवाले आकाशत्व धर्म को जाति नही माना जा सकता । यद्यपि इसी प्रकार अनुभूति ( चैतन्य ) एक ही है, अत 'अनुभूतित्व' जाति भी नही मानी जा सकती, तथापि औपाधिक भेद से अनुभूति व्यक्तियो को अनेक मानकर अनुभूतित्व जाति का वैसे ही समर्थन किया जा सकता है, जैसे कल्पभेद से अनेक चन्द्र-व्यक्तियो की कल्पना करके 'चन्द्रत्व' जाति का समर्थन किया जाता है ]। काल्पनिक अनुभूतित्वरूप हेतु भी वैसे ही ( अपने साध्य का ) साधक होता है, जैसे काल्पनिक प्रतिबिम्ब अपने बिम्बका ।

प्रतिवादी के मत मे भी हेतु की असिद्धि नही, क्योकि वह भी अनुभूतित्व जाति मानता है । यदि कहें कि वेदान्ती 'अनुभूतित्व' को कल्पित मानते है और प्रतिवादी पारमार्थिक— इस विषमता के कारण अन्यतरासिद्धि ( वेदान्ती की कल्पित अनुभूतित्व जाति की प्रतिवादी के मत मे और प्रतिवादी की पारमार्थिक जाति की वेदान्ती के मत मे असिद्धि ) है । तो यह भी नही कह सकते, क्योकि अनुभूतित्व मात्र को हेतु बनाया गया है । उसमे कल्पितत्व एवं अकल्पितत्व की विशेषता विवक्षित नही । वैसा अनुभूतित्व मात्र तो दोनो वादियो को मान्य है । नही तो धूमवत्त्वादि हेतु के विषय मे भी यही पूछा जा सकता है कि महानसवृत्ति धूम पर्वत मे हेतु है ? कि पर्वतवृत्ति ? प्रथम कल्प मे स्वरूपासिद्धि, क्योकि महानसीयधूम पर्वत मे नही रहता और दूसरे कल्प मे दृष्टात में साधनाभाव, क्योकि पर्वतीय धूम महानसरूप दृष्टान्त मे नही रहता । [ अत कहना होगा कि 'धूमवत्ता' मात्र हेतु है । उसमे महानसीयत्व या पर्वतीयत्व कुछ भी विवक्षित नही ।

---

साध्यसमन्वयः, घटत्वादे स्वेतरघटादिनिरूपितवृत्तित्वाधिकरणत्वेऽपि स्वनिरूपितवृत्तित्वानधिकरणत्वात् ।

व्याप्यत्वासिद्धि', सोपाधिकस्यैव तथात्वात्, केवलव्यतिरेकिणि चोपाधेरसंभवात्। उपाधिर्हि—साध्यव्यापकत्वे सति साधनाव्यापक, स चान्वयव्यतिरेकी कश्चिद्धर्म । स कथं केवलव्यतिरेकिणि पक्षव्यतिरिक्तभूमौ साध्येनान्वयी स्यात्। न च पक्षे साध्येनान्वय, तत्र साध्यस्याद्यापि सदिग्धत्वात्। निश्चये च सिद्धं न. समीहितमिति किमुपाधि. करिष्यति।

---

हेतुरुत पर्वतनिष्ठम्। आद्येऽसिद्धिः, द्वितीये साधनविकलं निदर्शनमिति दूषणे नोदीरितपदवीव्यतिरेकेण परित्राणमस्तीत्यर्थः। अन्यथाऽसिद्धि परिहरति—नच व्याप्यत्वासिद्धिरिति। एषा हि हेत्वाभासाना स्थितिर्व्याप्यत्वेसति पक्षधर्मतया प्रमितत्व सिद्धत्व तद्विपरीतमसिद्धत्वम्। तत्र व्याप्तेरसिद्धौ व्याप्यत्वासिद्धिरित्यभिधीयते । पक्षधर्मत्वाऽसिद्धिस्तु त्रिधा। तत्राश्रयस्वरूपासिद्धावाश्रयासिद्धिस्तद्विशेषणपक्षसत्त्वाप्रतीत्या तु सिद्धसाधनमिति । इमामपिद्विविधा केचिदभिदधति साध्याकाराप्रसिद्ध्या साध्यस्वरूपासिद्ध्या चेति, प्रथमाऽसिद्धसाधनताभिधाना द्वितीया त्वप्रसिद्धविशेषणमिति। एतत्तु केवलपक्षदूषणतयैव वृद्धव्यवहारे प्रसिद्ध, हेतुस्वरूपासिद्धौ तु स्वरूपासिद्धिरिति। तत्र व्याप्यत्वासिद्धिर्नाम सोपाधिकः सम्बन्ध., निरुपाधिकसबन्धस्य व्याप्तित्वात्सोपाधिकत्वे च निरुपाधिकसम्बन्धवैधुर्यादित। तदेतत्सर्वमभिसधायाह—सोपाधिकस्यैव तथात्वादिति। भवतु तर्ह्युपाधिरपि किमेतावता ? इत्यत आह—केवलव्यतिरेकिणि चेति। केवलव्यतिरेकिण्युपाध्यभाव वक्तुमुपाधिलक्षणमनुवदति – उपाधिर्हीति। साधनाव्यापक उपाधिरित्युक्ते शब्दोऽनित्यः कृतकत्वादित्यत्र सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्रहणार्हत्वमुपाधि. स्यात्तदर्थं साध्यव्यापक इत्युक्तम्, तथेत्युक्ते सामान्यवत्त्वादिनाऽनित्यत्वसाधने कृतकत्वमुपाधिः स्यात्तदर्थं साधनाव्यापक इत्युक्तम्। एतेन पक्षेतरत्वमपि व्याख्यात, तस्यापि साध्यव्यापकत्वे उपाधित्वादितरथाऽनुपाधित्वादिति । भवत्वेव ततः किमायातमित्यत आह—सचान्वयव्यतिरेकीति। साध्यव्यापकत्वमन्वय, साधनाव्यापकत्व व्यतिरेक., तदुभयवान्धर्म. कश्चिदुपाधिरित्यर्थः। अस्त्वेतावतापि प्रस्तुते किमित्यत आह—स कथमिति। तत्र वक्तव्य कि पक्षव्यतिरिक्तस्थले साध्यव्यापकत्व किंवा पक्ष एवाभिप्रेतमिति। नाद्य इत्याह—स कथमिति। केवलव्यतिरेकिणि प्रवर्तमानः स उपाधिः पक्षव्यतिरिक्तभूमौ साध्येन कथमन्वियान्न कथमपीति योजना। केवलव्यतिरेकिणीति हेतुगर्भं विशेषणम्। नहि केवलव्यतिरेकिणि पक्षव्यतिरिक्तस्थले साध्य सभवति अविद्यमानसपक्षत्वादित्यर्थः। न द्वितीय इत्याह—नच पक्ष इति। तत्र साध्यानिर्णयादित्याह—तत्र साध्येति। विपक्षे दण्डमाह—निश्चये चेति। साध्यापहारो ह्युपाधेः कृत्य, तत्र साध्यमेव चेन्निर्णीत कि कुर्वन्नयमुपाधि' स्यादित्यर्थः। दूषणान्तरमाह—

---

फिर तो वैसा ही उत्तर अनुभूतित्व के विषय में भी है।]

व्याप्यत्वासिद्धि भी 'अनुभूतित्व' हेतु मे नही, क्योकि सोपाधिक हेतु मे ही व्याप्यत्वासिद्धि दोष लगा करता है। किन्तु प्रकृत केवल व्यतिरेकी हेतु मे उपाधि की सम्भावना ही नही। कारण यह है कि उपाधि कहते है—साध्य के व्यापक और साधन के अव्यापक किसी एक धर्म को। ऐसा धर्म अन्वयव्यतिरेकी ही होगा। वह धर्म प्रकृत केवलव्यतिरेकी हेतु के साध्य के साथ पक्ष से बाहर कही अन्वयी कैसे होगा ? [ क्योकि जिसके साध्य की सत्ता अन्यत्र कही निश्चित न हो उस हेतु को ही केवलव्यतिरेकी कहते है। वैसे साध्य का सहकार पक्ष से भिन्न स्थल पर हो ही नही सकता।] पक्ष मे साध्य के साथ अन्वयी होगा—यह भी नही कह सकते, क्योकि पक्ष मे साध्य का सदेह ही है, निश्चय नही। यदि पक्ष में साध्य का निश्चय मान ले , तब हमारा अभीष्ट ( अनुभूति मे स्वयंप्रकाशिता सिद्ध करना ) सिद्ध ही हो गया, अब उपाधि हमारा क्या बिगाड लेगी ? दूसरी बात यह भी है कि पक्ष मे उपाधिके रहने पर उसमे साधन की भी व्यापकता अनिवार्य हो जायगी।

---

१ सतीति शेषः। २. प्रकारान्तरेणाशङ्कितामित्यर्थः।

पक्षे चोपाधिवृत्तौ, साधनव्यापकता च दुर्वारा । न च साध्यसद्भावे मा भूदुपाधि, साध्याभावे पुनरुपाधि कश्चिद्भविष्यतीति वाच्यम्, तथाहि—यत्रोपाधिरस्ति तत्र साध्य नास्तीति साध्याभावस्य गमकत्वेनोपाधिरेष्टव्य । अन्यथोपाधिसद्भावेऽपि साध्याभावो व्यापकतया न वर्तते चेत्, उपाधिसद्भावे साध्य स्यात् । तच्च न पक्षे, तत्रोपाधिसद्भावे तस्य साधनव्यापकत्वप्रसङ्गात् । तस्मादन्यत्रोपाधिसत्त्वे साध्यस्य सत्त्व स्यादिति वाच्यम् । तथा च केवलव्यतिरेकित्वभङ्गप्रसङ्ग । प्रकृते चानुभूतिर्वेद्या वस्तुत्वाद्घटवदिति केवलान्वयिनानुमानेन हि स्वयंप्रकाशत्वव्यतिरेको वक्तव्य । तत्र च नोपाधि सभवति, साधनाव्यापकत्वस्य वक्तुमशक्य-

पक्षे चेति । साधनवन्निष्ठात्यन्ताभाववत्त्व ह्युपाधेः साधनाव्यापकत्वम् । तत्र पक्षेऽपि चेदुपाधिर्वर्तते कथ तत्रैव तस्यात्यन्ताभावः स्यात् । नचान्यत्र, केवलव्यतिरेकिसाधनस्यान्यत्राभावादिति भावः । ननु न वय साध्यसद्भावे उपाधि ब्रूमः, येन साध्यव्यापकता दुःसाध्या अपितु साध्याभाव इत्यत आह—**नच साध्यसद्भाव इति** । नच वाच्यमित्युक्त तत्र हेतुमाह—**तथाहि यत्रोपाधिरिति** । तथाहि तथासतीत्यर्थः । उपाधिना हि साध्याभावप्रमिति वाञ्छता साध्याभाव प्रति गमकत्वेन व्याप्यत्वेनोपाधिरेष्टव्य इत्युक्तम् । व्यापकत्वे दोषमाह—**अन्यथेति** । अन्यथा व्यापकत्वेनाङ्गीक्रियमाणे, व्यापकतयोपाधेरिति सबन्धः । व्यापकस्य चोपाधेरधिकवृत्तित्वसभवात्, उपाधिसद्भावेऽपि साध्याभावो यदि न वर्तेत, सभवति ह्यवर्तन न्यूनवृत्तेः साध्याभावस्य । तत उपाधिसद्भावेऽपि साध्यसद्भावः स्यात्साध्याभावाभावस्य साध्यरूपत्वात्तन्नान्तरीयकत्वाद्वेत्यर्थः । अव्यापकतयेति वा पदच्छेदः । साध्याभावस्य व्यापकत्वाभावेनेत्यर्थः । भवतूपाधिसद्भावेऽपि साध्यसद्भाव किमत ? तत्र वक्तव्य कि पक्षे ? उत तद्व्यतिरिक्तस्थले ? आद्य प्रत्याह—**न पक्ष इति** । तत्र हेतुमाह—**तत्रोपाधिसद्भाव इति** । यदत्र वक्तव्य तत्पुरस्तादेवोक्तम् । द्वितीय परिशेषयति—**तस्मादिति** । भवत्वेव तत किमिति । केवलव्यतिरेकिताकोपमपहाय न किंचिदित्याह—**तथाचेति** । ननु मा भूदुक्तदोषराशिक्लेशानुकर्षितया[1] साध्याभाव प्रति व्यापकत्वमुपाधे., व्याप्यत्वे का नामानुपपत्तिरिति तत्राह—**प्रकृते चेति** । **अनुमानेनेति** । हेतुनेत्यर्थः । अत्रहि स्वप्रकाशत्वलक्षणसाध्याभावो वेद्यत्वम् । यत्रच वस्तुत्व तत्र च वेद्यत्व गमकत्वेनाभिमतामति तदेवोपाधिस्तस्य च केवलान्वयित्वेनाभिमततया सर्वनिष्ठस्य साधनवत्यपि विद्यमानत्वात्साधनाव्यापकत्व दुर्लभमित्यर्थ । अत्र च प्रकृतग्रहण केवलान्वयिग्रहण

**यदि शङ्का हो कि यदि साध्य के सद्भाव में ( साध्यसमानाधिकरणक ) कोई उपाधि नहीं बनती, तो साध्य के अभाव में ही वस्तुत्व–आदि कोई उपाधि बन जायगी । तो यह शङ्का भी ठीक नहीं, क्योंकि उस ( वस्तुत्वादि ) उपाधि को भी साध्याभाव का साधक बनाने के लिए व्याप्य मानना होगा । अर्थात् 'जहाँ-जहाँ उपाधि है, वहाँ-वहाँ साध्याभाव है'—इस प्रकार की व्याप्ति बनानी होगी । अन्यथा ( उपाधि को व्याप्य और साध्याभाव को व्यापक न मानने पर ) उपाधि के रहने पर भी ( अव्यापक होने के कारण ) साध्याभाव नहीं रहेगा, अपितु साध्य ही रह जायगा । ( यदि उपाधि के आधार में साध्य माना जाय, तो कहाँ ? पक्ष में ? या बाहर ? ) पक्ष में तो वह माना नहीं जा सकता, क्योंकि वहाँ उपाधि के रहने पर उसमें साधन-व्यापकता की प्राप्ति होगी । अत अन्यत्र ही उपाधि के रहने पर साध्य का सद्भाव कहना होगा, फिर तो केवलव्यतिरेकिता का भङ्ग हो जायगा । ( इन दोषों से बचने के लिए उपाधि को साध्याभाव का व्याप्य मानना भी उचित नहीं जँचता, क्योंकि )"अनुभूति वेद्या वस्तुत्वाद् घटवत्"–इस केवलान्वयी अनुमान के द्वारा प्रकृत पक्ष में स्वयं प्रकाशत्वरूप साध्य का अभाव ही सिद्ध करना होगा । किन्तु ( तत्र ) वस्तुत्व में उपाधित्व सम्भव नहीं, क्यों कि वस्तुत्व तो केवलान्वयी धर्म है, उसमें साधन की व्यापकता ही**

१. क्लेशकृशानुकर्षिततयेत्यपि पाठ तत्र कृशानु. = वह्निः कर्षिततया = दग्धतयेत्यर्थ ।

त्वात् । तदेवं नासिद्धो हेतुः । नापि विरुद्धः, वेद्येषु विपक्षेष्वनुभूतित्वहेतोरवृत्तेः । नाप्यनैकान्तिकः, विपक्षाद्व्यावृत्तेरेव । नाप्यसाधारणः, सपक्षाभावात् । विपक्षे बाधकतर्काभावात्सन्दिग्धानैकान्तिकतेति चेत्, मैवम्, अनुभूतेरनुभाव्यत्वेऽनवस्थापातात् । न च वाच्यमवश्यवेद्यत्वाभावान्नानवस्था व्यवहारस्य तत्स्वरूपसत्तामात्रेणाप्युपपत्तेरिति, तद्विषयप्रमाणानुदये तत्सत्ताया अप्यनिश्चयात् तत एव व्यवहार इत्यप्यसिद्धेः । अथ यदा कदाचित्तत्सत्ताजिज्ञासोदये

---

चोपलक्षणम् । सर्वकेवलव्यतिरेकिणि पक्षनिष्ठतयाशङ्क्यमानसर्वोपाधेः साधनव्यापकत्वात् । एतेन साध्याभावसमव्याप्तः कश्चिदुपाधिरस्तीति पक्षोऽपि निरस्तः । किञ्च यदा साध्याभावं प्रति व्याप्य उपाधिरिष्यते, तदा साध्याभावव्यावृत्तावुपाधिव्यावृत्तिरप्येष्टव्या, व्यापकात्यन्ताभाववन्निष्ठात्यन्ताभावप्रतियोगिनो व्याप्यत्वात्, समव्याप्तयोर्व्यतिरेकयोश्च व्यतिरेकव्याप्तेरप्येष्टव्यत्वात् । तथाच साध्याभावव्यावृत्तावुपाधेरपि व्यावृत्तिः किं पक्षे ? उतान्यत्र ? नाद्यः, पक्षे साध्याभावाभावरूपसाध्यस्याद्याप्यनिर्णयात् । नाप्यन्यत्र, केवलव्यतिरेकिताकोपादिति । अत्र कश्चित्—साध्याभावसाधनाभावसम्बन्धभञ्जकतया विपक्षे एवोपाधिं निदध्यादिति, तत्तु साध्यशब्दार्थानवबोधविजृम्भितमिति न तदपराधः कश्चित् । एवं हि साध्याभावाव्यापकत्वे सति साधनाभावव्यापक उपाधिरित्युक्तस्यात्तथा च कथं साध्यव्यापकत्वम्? न हि साधनाभावः साध्यम् । अविप्रतिपन्नत्वात् । कुत्र च साध्याभावाव्यापकत्वमवसेयम् ? न तावत्पक्षे, तत्र साध्याभावानिर्णयात् । नाप्यन्यत्र, तथासति साधनाभावाव्यापकतया तत्पक्षव्यतिरिक्तस्य सर्वस्य केवलव्यतिरेकिसाधनाभाववत्त्वात् । बहु चात्र वक्तव्यमस्ति विस्तरभयात्तु नोच्यते । ननु भवतु विपक्षवृत्त्यभावात्सपक्षेऽसति सपक्षाप्रवेशाभावाच्च विरुद्धानैकान्तिकतानामव्यवसितानामभावः । विपक्षे बाधकतर्काभावात्तु सन्दिग्धानैकान्तिकताकिंवदन्त्याः का नु प्रतिक्रियेति शङ्कते—**विपक्षे बाधकेति** । नन्वनुभूतिरनुभाव्यैवेति यदि नियमः स्यात्, स्यादनवस्था । नत्वयं नियम इति मतमाशङ्क्य निषेधति—**नच वाच्यमित्यादिना** । ननु यदि नानुभाव्यतानियमः, अननुभूततया तर्हि कथमर्थे व्यवहार इति शङ्का स एव परिहरति—**व्यवहारस्येति । तत्स्वरूपसत्तामात्रेण** । अज्ञातत्वेनेत्यर्थः । नच वाच्यमित्युक्तं तत्र हेतुमाह—**तद्विषयेति** । स्यादेव, यदि तज्ज्ञानमन्तरेण तत्सत्ता निश्चीयेत, नत्वेतदस्ति प्रमाणाभावे दुरवधारणसत्तावत्त्वादितरथाऽसत्त्वमेव कथं नाध्यवसीयते । यथोक्तं "को ब्रूते सती सा वित्तिरिति" । तस्मात्सत्त्वमपि तस्य प्रमाणादेवावगन्तव्यमित्यर्थः । यदत्र तात्पर्यपरिशुद्धावुदयनेनोक्तं तदाशङ्कते—**अथेति** । अयमर्थः—नास्माभिः सत्तायां प्रमाणमेव नास्तीत्युच्यते,

---

रहेगी, अव्यापकता नहीं । अतः अनुभूतित्व हेतु किसी प्रकार से भी असिद्ध नहीं ।

'अनुभूतित्व' हेतु विरुद्ध भी नहीं, क्योंकि वेद्यरूप ( घटादि ) विपक्षों में वह नहीं रहता । विपक्ष में अवृत्ति होने से ही अनैकान्तिक (साधारण) भी नहीं । असाधारण भी नहीं, क्योंकि उसका सपक्ष ही नहीं । [ भाव यह है कि जिस हेतु मे सपक्षवृत्तित्व और विपक्षवृत्तित्व—दोनो का अभाव हो, उसे ही असाधारण कहते हैं, किन्तु जिसका विपक्ष ही प्रसिद्ध नहीं, उसका विपक्षवृत्तित्व रूप प्रतियोगी अप्रसिद्ध होने से विपक्षवृत्तित्वाभाव भी हेतु मे नहीं कहा जा सकेगा ] । विपक्ष-बाधक तर्क का अभाव होने के कारण सन्दिग्ध अनैकान्तिकता अवश्य होगी—यह भी सन्देह नहीं करना, क्योंकि विपक्ष-बाधक तर्क है—'अनुभूति यदि वेद्य होगी, तो अनवस्था होगी' । यह भी कहना न होगा कि ( सभी अनुभूतियों में ) वेद्यता आवश्यक न होने से अनवस्था नहीं होगी, व्यवहार तो अनुभूति की स्वरूपसत्ता ( अज्ञात सत्ता ) से भी चल सकता है, क्योंकि जिस अनुभूति मे कोई प्रमाण प्रवृत्त न हुआ, उसकी अज्ञात सत्ता का निश्चय नहीं हो सकता । इसीलिए ( निष्प्रमाण होने से ही ) उससे व्यवहार भी सिद्ध नहीं हो सकता ।

जब कभी अज्ञात सत्ता की जिज्ञासा पैदा होगी, तब किसी व्यवहारादि हेतु के द्वारा उसका

व्यवहारादिना केनचिल्लिङ्गेन सापि प्रमीयत इति मतं, तन्न, घट इति घटमनुभवामीति चानुभूतिद्वयातिरिक्तायास्तत्तदनुभूतिपरम्परावगाहिकायाः कस्याश्चिदनुभूतेरनुभवागोचरत्वात्। अन्तरेण तदनुभवं तत्सत्ताभ्युपगमे, प्रमेयसत्ताया अपि तथाभ्युपगमोपपत्तौ प्रमाणगवेषणावैयर्थ्यापातात् तत्रापि च प्रमाणगवेषणायां पूर्वोक्तानवस्था तदवस्थैव स्यात्। अथ सा स्वविषयप्रमाणमन्तरेण स्वभावभेदादेव स्वविषयभेदव्यवहारं जनयेत्, जनयेत् सैव तर्हि तथा स्वव्यवहारमिति व्यर्थाऽनुभूतिपरम्पराभ्युपगतिः। तदेवमनुभूतेरनुभाव्यत्वेऽनुभूतिस्वरूपासिद्धिप्रसङ्गस्यैव विपक्षे बाधकतर्कत्वात्, न सन्दिग्धानैकान्तिकता। किञ्चानुभूतिरर्थप्रकाशनसमये

अपितु जिज्ञासायां सत्यां, नतु पुनः स्वोदयसमसमयमेवेति। तस्याश्चातीतायाः प्रत्यक्षाविषयत्वात् व्यवहारादिना लिङ्गेनेत्युक्तम्। आदिशब्देन च स्मरणं गृह्यते। परिहरति—तन्नेति। अयं भावः—भवेदेव यदि काचिदेवंविधा वित्तिः स्यात्सैव त्वनुपलब्धिविरुद्धा। न हि संसारमण्डले कस्यचिदर्वाग्दृशो व्यवसायानुव्यवसायातिरिक्ता तत्तद्वित्तिपरम्पराग्राहिका काचिदपि वित्तिरनुभूयते। किन्तु तेनोपलब्धियोग्यत्वे सत्यनुपलब्धेरभाव एवावसीयते। योगिप्रभृतीनां तु तदस्तित्वे न ते प्रमाणमस्तीति। अथ माभूदनुभवस्तथापि तत्कल्पयाम इत्यत आह—अन्तरेणेति। तदनुभवं तादृशवित्त्यनुभवमित्यर्थः। न वयमेवमेव कल्पयामः अपितु प्रमाणबलादिति चेत्तत्राह—तत्रापीति। तृतीयज्ञान इत्यर्थः। ननु तादृशी संवित् स्वज्ञापकप्रमाणमन्तरेणैव स्वरूपविशेषात्स्वविषये व्यवहारं प्रवर्तयतु, नह्येकस्य यादृगेव स्वभावस्तादृगेव सर्वस्येति शक्यनियमनं, जगद्वैचित्र्यभङ्गप्रसङ्गादिति शङ्कते—अथ सेति। स्वभावभेदात्। स्वभावविशेषादित्यर्थः। स्वविषयभेदव्यवहारमिति। स्वविषयविशेषव्यवहारमित्यर्थः। परिहरति—सैव तर्हीति। स्वव्यवहारमिति। स्वविषयव्यवहारमिति यावत्। अन्तिमाया यो न्यायः स प्रथमायामेवास्तु, "प्रथमस्य तथाभावे प्रद्वेषः किंनिबन्धनः" इति न्यायादित्यर्थः। तृतीयज्ञानमेव वा तच्छब्दावमृष्टं तदा स्वविषयवत्स्वस्मिन्नपि तथाव्यवहारं प्रवर्तयेत्तन्न्यायेन चाद्यस्य स्वप्रकाशता सिद्ध्यतीति द्रष्टव्यम्। किञ्चानुभूतित्वं भवतु स्वप्रकाशत्वं च माभवत्विति वदन्प्रष्टव्यः किं अर्थप्रकाशनसमयेऽनुभूतेर्न प्रकाशत एव? प्रकाशमाना वा परतः? इति। नाद्य इत्याह—किंचानुभूतिरिति। अप्रकाशमानेपि सर्वत्र सदेहादिर्नास्ति जिज्ञासाभावादपि तदभावोपपत्तेः। नहि हिमगिरिदरिविहारिकेसरिसटासंख्यासु संदिहते जनाः, असंदिहाना वा विपर्यस्यन्ति, अविपर्यस्यन्तो वाऽभावं प्रमिण्वन्ति, अप्रमिण्वन्तो वा तत्त्वं विनिश्चिन्वन्तीत्यत उक्तं—जिज्ञा-

अनुमान कर लिया जायगा—यह मत भी ठीक नहीं, क्योंकि "यह घट है", "मैं घट का अनुभव करता हूँ"—इस प्रकार की दो अनुभूतियों ( व्यवसाय और अनुव्यवसाय ) से अतिरिक्त अनुभूति-परम्परा अनुभव में नहीं आती। बिना अनुभव के उस ( अनुभूति परम्परा ) की सत्ता यदि मान ली जाय, तब तो उसी प्रकार प्रमेय की सत्ता भी मानी जा सकेगी, फिर तो ( प्रमेय सत्ता के लिए) प्रमाणों की गवेषणा ( खोज ) व्यर्थ ही होगी। प्रमाणान्तर के आधार पर अनुभूति परम्परा यदि मानी जाय, तब तो वही पुरानी अनवस्था जैसी-की-तैसी होगी। यदि कोई शङ्का करे कि द्वितीय अनुभूति ( स्वविषयक ) प्रमाण के बिना ही अपने स्वभाव विशेष से अपने विषय ( प्रथम अनुभूति) का व्यवहार सम्पन्न कर देगी, तो यह शङ्का युक्त नहीं, क्योंकि फिर तो प्रथम अनुभूति ही किसी प्रमाण के बिना ही अपना व्यवहार चला लेगी, अतः अनुभूति-परम्परा का मानना व्यर्थ ही हो जायगा। ( इस प्रकार यही सिद्ध हुआ कि अनुभूति को वेद्य मानने पर अनवस्था होगी और यदि आगे चल कर किसी अनुभूति में प्रमाण नहीं दे सके, तो उसकी असिद्धि हो जाने से पूर्व-पूर्व की ) सभी अनुभूतियों का स्वरूप असिद्ध हो जायगा—यही विपक्ष-बाधक प्रबल तर्क है, अतः सन्दिग्ध अनेकान्तिकता नहीं लग सकती।

दूसरी बात है यह कि विषय-प्रकाश के समय में यदि अनुभूति भी प्रकाशित न हो, तब तो

यदि न प्रकाशेत, तथा सत्यनन्तरक्षणे जिज्ञासोस्तत्र संदेहो विपर्ययो वा विपरीतप्रमा वोदियात्। न च कश्चिदमुमद्राक्षीन्नो वा भवानिति पृष्टोऽनन्तरक्षणे सदिग्धे विपर्यस्यति सविद्भाव वा प्रमिणोति, किन्तु निश्चिनोत्येव 'इदमहमद्राक्षम्' इति तेन प्रकाशमानैवानुभूतिरर्थे व्यवहार जनयतीति युक्तम्। न च सुखादिवदन्याधीनप्रकाशत्वेऽपि सशयाद्यविषयत्वोपपत्ति, सति धर्मिणि तद्वदेवावश्यवेद्यत्वेऽनवस्थादौस्थ्यात्। किञ्च येन मन संयोगेन घटानुभूतिर्जनिता तेनैवानुव्यवसायस्यापि जन्म ? उत सयोगान्तरेण ? नाद्य, अनुव्यवसायं प्रति कर्मकारकतया जनकस्य व्यवसायस्य तज्जन्यानुव्यवसायस्य च यौगपद्यायोगात्, करणस्य प्रत्यय-

सोरिति। जिज्ञासाया सत्यामपि सदेहादिर्नोदेति अभावनिर्णयादपि तेषामभावोपपत्तेरत उक्त—**विपरीतप्रमा वोदियादिति**। एतदुक्त भवति—यत्र विषये प्रमितिरपि नास्ति जिज्ञासा च चकास्ति तस्याः स्फुरणदशाया सदेहादिर्भवेदेवेति। नचैतदत्रास्तीत्याह—**नच कश्चिदिति**। निश्चयमेवाभिनयति—**इदमहमद्राक्षमिति**। इदानी द्वितीय निषेधति—**नच सुखादिवदिति**। हेतुमाह—**सति धर्मिणीति**। धर्मी अनुभव। तद्वदेवेति सुखादिवदेवेत्यर्थः। अथवा **सति धर्मिणीति**। द्वितीयज्ञाने सतीत्यर्थ.। **तद्वदेवेति** प्रथमज्ञानवदित्यर्थः। तथास्त्यनवस्था प्रसरत्येवेति भाव.। नच सुखादिप्रतिबन्दी, तत्राप्यस्मन्मते तत्साधकसाक्षिण[1] स्वप्रकाशत्वेनानवस्थानवतारात्, भवतामेव तत्रापि दौस्थ्यात्। तदेवमर्थप्रतीतिसमये सविदः स्फुरणमनवस्थाभयादन्यनिबन्धन न भवतीत्युक्तम्। इदानी तात्कालिक तद्विषय ज्ञानमेव निरूपयितु न शक्यते कारणाभावादित्याह—**किंच येनेति**। व्यवसाजनकसयोगेनैवानुव्यवसायजन्मेत्याद्य पक्ष निराचष्टे—**नाद्य इति**। तत्र कि युगपदेव ज्ञानद्वय जनयति स मन सयोग ? उत पर्यायेण ? नाद्य[2], जन्यजनकयो समसमयमेव जन्माभावादित्याह—**अनुव्यवसायं प्रतीति**। न द्वितीय इत्याह—**करण-**

विषय प्रकाश के अनन्तर जिज्ञासु को अपनी अनुभूति मे सन्देह (मुझे घट का ज्ञान हुआ? कि नही?) या विपर्यय ( मुझे घटाभाव का ज्ञान हुआ ) अथवा विपरीत-निश्चय ( मुझे ज्ञान ही नही हुआ ) होना चाहिए। किन्तु 'क्या आपने अमुक वस्तु देखी ? कि नही ?—इस प्रकार पूछे जाने पर दर्शक न तो सन्देह प्रकट करता है, न विपर्य और न विपरीत-प्रथा, अपितु दृढ़ता-पूर्वक अपना निश्चय ही प्रकट करता है कि "मैने अमुक वस्तु देखी है।" अत मानना होगा कि अनुभूति स्वय प्रकाशित होती हुई अपने विषय का व्यवहार पैदा करती है। यदि शङ्का हो कि जैसे सुखादि स्वय प्रकाश नही, दूसरे ज्ञान से ही प्रकाशित होते है, फिर भी उनके विषय मे किसी प्रकार का संशय नही होता। वैसे ही विषय-प्रकाश के साथ-साथ प्रथम अनुभूति भी किसी दूसरी अनुभूति से प्रकाशित हो जायगी, उसमे संशयादि का न होना उचित ही है। तो यह शङ्का उचित नही, क्योकि दूसरी अनुभूति ( धर्मी ) मे भी वेद्यत्व अवश्य ही रखना होगा। उसमे वेद्यत्व तीसरी अनुभूति से, तीसरी मे चौथी से—इस प्रकार अनवस्था के पञ्जे से छुटकारा सम्भव न होगा।

और भी जिज्ञासा होती है कि जिस मन सयोग ( असमवायिकारण ) से घट की अनुभूति पैदा हुई, क्या उसी ( मन सयोग ) से अनुव्यवसाय ( दूसरी अनुभूति ) का जन्म होता है ? अथवा दूसरे मन.सयोग से ? प्रथम पक्ष ठीक नही, क्योकि ( अनुव्यवसाय और व्यवसाय—दोनो का यदि एक ही मन सयाग कारण है, तब तो उन दोनो की उत्पत्ति एक काल मे होनी चाहिए। किन्तु यह सम्भव नही, कारण यह है कि ) अनुव्यवसाय का कर्मकारक होने से व्यवसाय जनक है और अनुव्यवसाय उससे जन्य होता है, जन्य और जनक—दोनो एक काल मे उत्पन्न हो ही नही सकते। एक ही मन सयोग अपने दोनो कार्यों ( व्यवसाय तथा अनुव्यवसाय ज्ञानो ) को क्रमश जन्म

१. द्र० न्यायमकरन्द. ( पृ०१३८ )। २. व्यवसायकालिकमित्यर्थ.।

पर्याये सामर्थ्यानङ्गीकाराच्च यतोऽसमवायिकारणभेद एव ज्ञानभेदहेतुरभ्युपेयते । अन्यथा-पेक्षणीयान्तरासंभवेन युगपदेव घटानुभवस्मरणयोरनुभवान्तरस्य च तद्विषयस्योत्पत्तिप्रसङ्गात् । अक्रमाच्च कारणात्कार्यभेदक्रमायोगात् , बाह्यसामग्र्यवच्छेदकक्रमभेदेन कार्यक्रमाभ्युपगमे युग-पदेव सम्प्रयुक्तेषु घटपटादिषु युगपदेवानेकज्ञानजन्मप्रसङ्गात् । न द्वितीयः, घटज्ञानोदयसमये मनसि क्रिया ततो विभागस्ततः पूर्वसंयोगविनाशस्ततः उत्तरसंयोगोत्पत्तिस्ततो ज्ञानान्तर-मित्यनेकक्षणविलम्बेनोत्पद्यमानस्य ज्ञानस्यापरोक्षतया पूर्वज्ञानग्राहकत्वानुपपत्तेः । किञ्च चक्षुरादिवदप्रकाशमानस्यैव ज्ञानस्य स्वातिरिक्तज्ञानजननेनार्थव्यवहारहेतुत्वाभावात् जडाना

स्येति । प्रत्ययपर्यायः प्रत्ययपरम्परा । प्रत्ययपर्याये सामर्थ्याभाव विवृणोति—**यत इति** । अस्यैव भेद-कत्वानङ्गीकारे दण्डमाह—**अन्यथेति** । यत्र संस्कारसहितमिन्द्रियं प्रत्यभिज्ञां जनयति तत्र घटविषय-योरनुभवस्मरणयोस्तद्वद्विषयानुभवान्तरस्य चेति ज्ञानत्रयस्य युगपदुत्पत्तिप्रसङ्गात् । तत्र हेतुः—**अपेक्ष-णीयांतरासंभवेनेति** । संयोगभेदस्यानङ्गीकारात्, विषयस्य चैकत्वादेव सपन्नत्वात्संस्कारस्य संप्रयो-गस्य च विद्यमानत्वादिति भावः । तदेवं कार्यभेदो दृश्यमानस्तदुपपादकासमवायिकारणभेदं कल्पयतीत्युक्तम् । इदानीं कार्यक्रमोऽपि क्रमवत्कारणमन्तरेणानुपपद्यमानोऽसमवायिकारणक्रमं कल्पयति, ततश्च तस्यानेकत्व-मित्याह—**अक्रमाच्चेति** । ननु भवतु कारणक्रमः, स त्वसमवायिकारणस्य न भवति, अपि तु बाह्यसामग्री या विषयेन्द्रियसंप्रयोगादिस्तदीय इत्याशङ्क्य तर्हि यत्र युगपदेव विषयेन्द्रियसंप्रयोगस्तत्र युगपदेवाने-कानि ज्ञानानि जायेरन् न तु तदस्ति, तस्मात्तत्रापि कार्यक्रमप्रयोजनको बाह्यसामग्र्यतिरिक्तस्यान्तरस्य कारणस्य क्रमो वक्तव्यस्तत्र चात्ममनसोरेकत्वेन क्रमायोगात्परिशेषात्तयोः संयोगलक्षणासमवायिकारणक्रमएव प्रयोजक इत्याह—**बाह्यसामग्रीति** । न चादृष्टमात्रभेदाद्, अतिप्रसङ्गात् । तदेवं प्रथमज्ञानजनकसंयोगा-देव द्वितीयज्ञानजन्मेत्ययं पक्षो निरस्तो वेदितव्यः । इदानीं संयोगान्तरादनुव्यवसायजन्मेति द्वितीयं पक्षं निरस्यति—**न द्वितीय इति** । अवर्तमानग्राहकप्रत्यक्षाभावादित्यर्थः । पूर्वं सवित्स्फुरणानुपपत्तिर्बाधि-केत्युक्तमिदानीं सर्वस्फुरणानुपपत्तिरूपं बाधकमाह—**किंचेति** । एवं हि तेषामभ्युपगमः, ज्ञायमानमेव

देगा—ऐसा सामर्थ्य उसमें माना नहीं जा सकता, क्योंकि असमवायिकारण का भेद ही ज्ञानों के भेद का नियामक माना जाता है । अन्यथा दूसरा कोई (संयोग) अपेक्षणीय है नहीं, फिर तो एक ही समय में घटानुभव, घटस्मरण और उन दोनों को विषय करनेवाला ( प्रतिभिज्ञा ) अनुभव—ये तीनों एक काल में उत्पन्न होने लग जायेंगे । ( किन्तु वे एक काल में होते नहीं, अपितु क्रमशः । अतः मानना होगा कि उन तीनों ज्ञानों के असमवायिकरण ( मन संयोग ) भिन्न-भिन्न हैं और क्रमिक हैं अक्रमिक ( क्रम-शून्य ) कारण से कभी कार्यों की क्रमशः उत्पत्ति न बन सकेगी । विषय–इन्द्रिय–सन्निकर्षादि बाह्यसामग्री के क्रम-भेद से कार्य का क्रम मानने पर एक साथ इन्द्रिय-संयुक्त घट, पटादि अनेक विषयों के अनेक ज्ञान एक काल में ही पैदा होंगे ।

दूसरा पक्ष भी ( दूसरे मन संयोग से अनुव्यवसाय की उत्पत्ति ) भी समीचीन नहीं, क्योंकि घट-व्यवसाय के क्षण में संयोगान्तर पैदा करने के लिए मन में क्रिया, दूसरे क्षण में ( उक्त क्रिया-जन्य ) विभाग, तीसरे क्षण में ( विभाग-जन्य ) पूर्व-संयोग का नाश, चौथे क्षण में उत्तर-संयोग उत्पन्न होगा, तब कहीं पाँचवे क्षण में दूसरा ( अनुव्यवसाय ) ज्ञान होगा—इस प्रकार अनेक क्षणों के विलम्ब से ( व्यवसाय के नष्ट हो जाने पर ) उत्पन्न होनेवाला अनुव्य-वसाय अपरोक्षस्वरूप से पूर्व ( व्यवसाय ) ज्ञान का ग्राहक नहीं बन सकेगा, क्योंकि अविद्य-मान विषयक प्रत्यक्ष नहीं होता । ( अप्रकाशित ज्ञान को व्यवहार-साधक मानने पर एक और दोष होगा कि ) जैसे अर्थ स्वयं-प्रकाश स्वरूप नहीं; अपितु अर्थ-प्रकाश का जनक है, वैसे ही ज्ञान भी

च स्वत. परस्परतो वा प्रकाशमानत्वायोगात् ज्ञानमपि न प्रकाशते चेत्, किमपि न प्रकाशेतेति जगदान्ध्यप्रसङ्ग इत्यादिविपक्षबाधकस्तर्क उन्नेय । ननु घटज्ञानवानहमस्मि ज्ञातो घट इति प्रत्यक्षेणैवानुभूतेर्वेद्यत्वप्रतीते. कालात्ययापदिष्टतेतिचेत्, न, वेद्यत्वव्यतिरेकेण तस्या स्वत स्फुरणेनापि तादृग्व्यवहारोपपत्ते । किञ्च विदितो घट इत्यत्रानुव्यवसायेन घटस्यैव विदित्वमवसीयते न तु वित्ते, विदितत्वस्य घटविशेषणत्वात् । अपि चानुभूते प्रत्यक्षतायामपि तत्प्रत्यक्षेणैव तदनुभाव्यत्वस्याप्रत्यक्षीकरणान्न प्रत्यक्षविरुद्धता । अन्यथानुव्यवसायेन व्यवसायस्य स्वविशेषितवेद्यत्वग्रहणे विशेषणतया स्वस्यापि स्वेन वेद्यत्वापातात् सौगतमतानुमति-

ज्ञानमर्थव्यवहारहेतुरिति न नियमो निलीनस्यापि तस्य चक्षुरादिवद्व्यवहारहेतुत्वसम्भवादिति । नचैषोऽपि युक्तः । तथा सति चक्षुरादिवदेवार्थप्रकाशकत्व स्यान्नतु प्रकाशत्व, प्रकाशत्व च सिद्धमतो न चक्षुरादिसाम्यमित्यर्थ । किंच तदपि ज्ञान पूर्वज्ञानवदेवेति न किञ्चिदपि ज्ञानमर्थप्रकाश स्यात् । जडाना च जडत्वादेव न स्वय परस्परेण वा प्रकाशसम्भव इति 'अन्धस्येवान्धलग्नस्य विनिपातः पदे पदे' इत्याभाणकभागितयैव जगत एव घोरान्धकारनिरन्तरकूपोदरनिपातापात इत्याह—**जडानां चेत्यादिना** । प्रत्यक्षविरुद्धकालातीततामाशङ्कते—**नन्विति** । घटविशेषितज्ञानावग्राहि वा ज्ञानविशेषितघटावग्राहि वोभययापि ज्ञानग्राह्यमेवेदमित्यर्थ. । अत्र तावदेवविधशब्दप्रयोगस्य विषयस्फुरणेन भवितव्य, तत्तु[3] यथायथ ज्ञानस्य स्वरूपस्फुरणेन घटस्य तु तेनैव स्फुरणेनेत्येव स्फुरणेऽपि सम्भवत्येवाय व्यवहार इति नाय ज्ञानस्य वेद्यत्वापादनक्षम इत्याह—**न । वेद्यत्वव्यतिरेकेणेति** । विदितो घट इत्यत्राधिकमाह—**किंचेति** । अथवा व्यवहारस्यानुभूतिविषयत्वमङ्गीकृत्यान्यथासिद्धिरभिहिता । इदानी तु तदेव नास्तीत्याह—**किंचेति** । एव हि वेदनस्यापि विदितत्व व्यवहारविषयत्व वा स्यात् । यदि विदित इति पद वेदनेन समन्वियान्नत्वेतत्, घटेनैव तस्यान्वयादित्यर्थ. । किंच भवतु वानेन ज्ञानेन स्फुरण तथाप्येतज्ज्ञानवेद्यत्वमनेनैव गृह्यते ? अन्येन वा ? न तावदन्येन, तदानी प्रथमस्यातीततया तन्निष्ठवेद्यताया अप्रत्यक्षत्वात् । न द्वितीयः, अपराद्धान्तापातादित्याह – **अपिचानुभूतेरिति** । सौगतमतानुप्रवेशो ज्ञानस्यैव स्वग्राहकत्वेन क्रियाकर्मभावस्वीकारः । सत्प्रतिपक्षता परिहरति—**नचेति** । येय व्याप्तिग्रहिणी सवित्समस्त वस्तु तद्गतवेद्यत्व च गृह्णाति, सापि स्फुरति ? न वा ? यदि स्फुरति ? तदा स्वेनान्येन वा ? स्वेनेति तावन्न घटत इत्याह—**स्वेनेति** । न वय

दूसरे ज्ञानमात्र का जनक ही होगा, स्वय अर्थ-प्रकाश स्वरूप न होने से अर्थ-व्यवहार-हेतु न बन सकेगा । घट, पटादि जड पदार्थ न तो स्वय प्रकाशमान है और न परस्पर (घट से पट, पट से घट) प्रकाशित है, अब यदि ज्ञान भी प्रकाशमान नही, तब तो कुछ भी प्रकाशित न होगा, जगत अन्धकार मय हो जायगा—इस प्रकार की विपक्ष-बाधक तर्कों की कल्पना कर लेनी चाहिए ।

'मै घट-ज्ञानवाला हूँ,' 'घट ज्ञात है'—इस प्रकार के प्रत्यक्ष से ही अनुभूति मे वेद्यत्व प्रतीत होता है, अत (उक्त अनुभूतित्व हेतु) बाधित है—ऐसी शङ्का नही करनी चाहिए, क्योकि वेद्यत्व के बिना भी अनुभूति की स्वयप्रकाशता से उक्त व्यवहार की उपपत्ति हो सकती है । दूसरी बात यह भी है कि "घट विदित है"—इस अनुव्यवसाय से घट मे वेद्यत्व का भान होता है, न कि अनुभूति मे, क्योकि विदितत्व घट का विशेषण है । मान भी ले कि अनुभूति का (उक्त अनुव्यवसाय से) प्रत्यक्ष होता है, फिर भी उसके प्रत्यक्ष (अनुव्यवसाय) से ही अनुभूतिगत वेद्यत्व का प्रत्यक्ष नही होता, अत प्रत्यक्ष से (अवेद्यत्व का) बाध नही । यदि अनुव्यवसाय से ही व्यवसाय मे रहनेवाले अनुव्यवसाय के वेद्यत्व का ग्रहण हो जाय, तब तो अनुव्यवसाय मे भी अनुव्यवसाय की वेद्यता आ

१. अज्ञायमानस्येत्यर्थः । २. प्रत्यक्षविरुद्धार्थविषयकानुमितिजनकता बाधिततामित्यर्थः । ३. विषयस्फुरणन्तु ।

प्रसङ्ग· । न च वेद्यत्वापादकवस्तुत्वाद्यनुमानविरोध·, व्याप्तिग्रहणासिद्धे· । तथाहि–वस्तुत्वाद्वेद्यत्वं साधयता यद्यद्वस्तु तत्तद्वेद्यमिति व्याप्तिरभ्युपेया । तथासत्यस्या व्याप्तेर्ग्राहिका संविद्व्याप्तिग्रहणसमये स्फुरति ? न वा ? आद्ये, स्वेनैव स्फुरणे सौगतमतानुमतस्वप्रकाशतापत्ति । तत्स्फुरणस्य स्वहेतुताया अप्यनङ्गीकारे वेदान्तसिद्धान्ताभिमतं स्वयंप्रकाशत्व त्वयाभ्युपगत स्यात् । द्वितीये तु सविल्लक्षणवस्तुविशेषस्यास्फुरणादेव सर्वोपसंहारवती व्याप्तिरेवास्तमियात्तत्र कुतोऽनुमानप्रसर कुतस्तरां च प्रकृतस्य हेतो सप्रतिसाधनता । अपि च भाट्टाना ज्ञातताया व्यभिचारात् नैयायिकादेश्च वेद्यत्वस्यापि धर्मतयात्यन्ताभावप्रतियोगित्वादवेद्यस्यापि कस्यचित्सम्भवेन वस्तुत्वादे केवलान्वयित्वेनाभिमतस्यापि हेतो सभावितविपक्षतया

---

क्रियाकर्मभाव ब्रूमो येन तथागतमतापात· स्यात्किंतु सविद्रूपत्वमित्यत आह—**तत्स्फुरणस्येति** । अन्येनेति त्वनवस्थया दूषितप्रायमित्युपेक्षितम् । अस्फुरण दूषयति—**द्वितीये त्विति** । सर्वोपसहारवती सर्वकोडिका । सर्वव्यक्तिनिष्ठा इति यावत् । तदेव साधारण्येन व्याप्त्यसिद्धिमभिधाय प्रतिदर्शनमपि दर्शयति—**अपिचेति** । भाट्टाना प्राकट्य स्वप्रकाशमित्यर्थः । यस्य तु नैयायिकस्य स्वप्रकाश न किंचिदप्यस्ति तस्य पूर्वोदितानुमानेन वेद्यत्वरहित किंचित्साधयित्वा तत्र हेतोरवृत्त्यनिश्चयात्सदिग्धानैकान्तिकता वक्तव्या इत्याह—**नैयायिकादेश्चेति** । नन्वेतदेव विपक्षे बाधक यद्वस्तुत्वहानिरित्यत आह—**नहीति** । वस्तुत्व

---

जायगी, क्योंकि अनुव्यवसाय वेद्यत्व का विशेषण है । [ अभिप्राय यह है कि वेद्यत्व एक सापेक्ष धर्म है, जैसे सादृश्यादि । केवल सादृश्यका ग्रहण कभी नही होता, अपितु चन्द्रादि-विशेषित सादृश्य का ही ग्रहण होता है । इसी प्रकार यहाँ अकेले वेद्यत्व का ग्रहण न होकर अनुव्यवसाय-विशेषित (अनुव्यवसाय-निरूपित या निरूपितत्व सम्बन्धेन अनुव्यवसाय विशिष्ट ) वेद्यत्व का अनुव्यवसाय से ग्रहण करना होगा । अत अनुव्यवसाय का वेद्यत्व ( ग्राह्यत्व ) अनुव्यवसाय-विशिष्ट वेद्यत्व में होने के कारण विशेषण भूत अनुव्यवसाय मे भी वेद्यत्व मानना होगा ] फिर तो बौद्ध-सिद्धान्त ( वही ग्राहक, वही ग्राह्य ) गले पड़ जायगा ।

वेद्यत्व-साधक वस्तुत्व हेतुवाले अनुमान का विरोध ( सत्प्रतिपक्ष ) जो दिया था, वह भी नहीं लगता, क्योंकि व्याप्ति-ग्रहण ही सम्भव नहीं—वस्तुत्व से वेद्यत्व सिद्ध करनेवाले को 'जो जो वस्तु है वह-वह वेद्य है,—यह व्याप्ति माननी होगी । तब प्रश्न उठेगा कि इस व्याप्ति का ग्राहक ज्ञान व्याप्ति-ग्रहण-काल में प्रकाशित होता है ? कि नही ? पहले पक्ष मे तो उसी से उसी का ग्रहण—यह बौद्धो की स्वप्रकाशता प्राप्त होती है । उसके ग्रहण मे उसकी हेतुता न मानने पर वेदान्ति-सिद्धान्त-सिद्ध स्वय प्रकाशता आपको माननी पड़ जायगी । द्वितीय पक्ष मे ( व्याप्ति-ग्रहण-काल मे व्याप्ति-ग्राहक ज्ञान का भान न मानने पर ) ज्ञान-स्वरूप वस्तु का प्रकाश न होने से सर्वोपसहारवती व्याप्ति ही समाप्त हो जायगी [ अर्थात् जहाँ-जहाँ वस्तुत्व है, वहाँ-वहाँ वेद्यत्व है—इस प्रकार वस्तुत्व के सभी आधारो मे वेद्यत्व का समन्वय होना चाहिए । किन्तु उक्त व्याप्ति-ग्राहक ज्ञान का प्रकाश न होने से उस ज्ञान में वेद्यत्व नही और वस्तुत्व है । अत वस्तुत्व हेतु वेद्यत्व का व्यभिचारी है, उसमे वेद्यत्व की व्याप्ति नही रह सकती ] । जब व्याप्ति ही भग हो गई, तब कैसे अनुमान का उदय होगा और कैसे प्रकृत ( अनुभूतित्व ) हेतु मे सत्प्रतिपक्षता लगेगी ? वस्तुत्व हेतु भाट्ट-मत मे भी व्यभिचरित है, क्योंकि भाट्ट अपनी स्वयप्रकाश ज्ञातता मे वेद्यत्व नही मानते और वस्तुत्व हेतु वहाँ भी है । नैयायिकादि के मत में भी वेद्यत्व, धर्म होने के कारण किसी-न-किसी मे रहनेवाले अत्यन्ताभाव का प्रतियोगी होगा, फिर तो कोई-न-कोई अवेद्य पदार्थ भी सम्भव होगा । वस्तुत्व हेतु तो केवलान्वयी माना जाता है, उसका भी विपक्ष ( कोई अवेद्य पदार्थ ) सभा-

विपक्षबाधकतर्कमन्तरेणाप्रयोजकत्वात् । नह्यनुभूतेरवेद्यत्वे वस्तुत्वानुपपत्ति , स्वत.सिद्धतायामपि तदुपपत्ते । लक्ष्यत्वन्यायविषयत्वहेत्वोरपि यथोक्तमूहनीयम् ।

नच लक्षकपदत्वेन लक्ष्यविषयज्ञानजन्यत्वमनुमेयं, हेतोरसिद्धत्वात् । न ह्यनुभूतिपदमनुभूति लक्षयतीति तवाभिमत, तद्वाचकत्वेनैव स्वीकारात् । किंच लक्ष्यज्ञानशब्देन लक्ष्यकर्मक स्फुरण ? किंवा तद्विषयम् ? उत स्फुरणमात्र ? किंवा तद्विषयान्त. करणवृत्तिर्विवक्ष्यते ? नाद्य , अतीताद्यर्थलक्षकपदेषु व्यभिचारात् । नेतरे, सिद्धसाधनत्वात् । अस्ति हि तत्स्वभावस्यापि स्फुरणस्य तद्व्यवहारजनकत्वेन तद्विषयत्वम् । अस्ति च स्फुरणमात्रमनुभूतेः स्फुरणरूपत्वात्तदाकाराया वृत्ते· स्वीकाराच्च । अनुभूतिपदवाच्यस्य लक्ष्यस्य वा स्वप्रकाशत्व-

---

हि स्फुरणाभावे निवर्तेत अवेद्यस्यापि स्वतःस्फुरणोपपत्तेः । नान्तरेण वेद्यत्वमनुपपत्तिर्वस्तुत्वस्येत्यर्थः । एतेनेदमप्यपास्त यदाह मानमनोहरकारः "ज्ञान प्रत्यक्षवेद्य वस्तुत्वाद्घटव" दिति । यच्च तार्किकैरुत्प्रेक्ष्यते वेद्यत्वसाधानाय लक्ष्यत्वान्न्यायविषयत्वादिति च, तत्रापि यल्लक्ष्य यच्च न्यायविषय तद्वेद्यमिति व्याप्तिग्राहिणि ज्ञाने लक्ष्ये न्यायविषये च स्फुरत्यस्फुरति च पूर्वोक्तविकल्पदोषाः समाना इत्याह—**लक्ष्यत्वेति** ।

यत्तूक्त लक्षकपदत्वादेव लक्षकपद पक्षीकृत्य लक्ष्यविषयज्ञानजन्यत्वमनुमीयत इति तत्राह—**नचेति** । हेतुमाह—**नहीति** । अयमर्थ —नहि यस्य कस्यचिल्लक्षकमनुभूतिपद पक्ष । तथा सति प्रमात्रादिलक्षकानुभूतिपदस्य लक्ष्यविषयज्ञानजन्यत्वेन सिद्धसाधनताप्रसङ्गात् । तस्मादनुभूतिलक्षकमनुभूतिपद पक्ष इति वक्तव्यम् । तथाच तादृशानङ्गीकाराङ्गीकारयोराश्रयासिद्ध्यपसिद्धान्तयोरन्यतरापात इति । अथानुभाव्यवाचकानुभूतिलक्षकपद पक्षीकुर्यात्त प्रति साध्य विकल्पयति—**किंचेति** । लक्ष्यकर्मकस्फुरणजन्यत्वमतीतादिवस्तुलक्षकपदस्यनास्ति । अतीतादीनामिदानीमभावेनानुभवावच्छेदकत्वाभावात् । अतोऽनैकान्तिकमित्याह—**अतीताद्यर्थेति** । तद्विषयस्फुरणजन्यत्वसाधने सिद्धसाधनतामुपपादयति—**अस्ति हीति** । येन हि यस्य व्यवहार.प्रवर्तते तस्य हि स विषयभेद स्वतन्त्र इत्यभिप्राय· । तत्स्फुरणमात्रेण जन्यत्वसाधने तृतीयपक्षे सिद्धसाधनतामाह—**अस्तिचेति** । लक्ष्यस्वभावभूतस्फुरणस्यापि लक्ष्यस्फुरणत्वादित्यर्थ. । चतुर्थे पक्षे सिद्धसाधनता

---

वित हो गया । उस विपक्ष में हेतु की अवृत्तिता विपक्ष-तर्क के बिना निश्चित नही हो सकती, अत हेतु मे सन्दिग्ध अनैकान्तिकता रहने से साध्य-साधकता नही रह सकती । यदि कहा जाय कि 'वेद्य के न मानने पर वस्तुत्व की उपपत्ति ही नही होगी'—यही विपक्ष-बाधक तर्क है, तो यह नही कह सकते, क्योकि वेद्यत्व के बिना भी ( स्वयंप्रकाश) अनुभूति में वस्तुत्व उपपन्न है । इसी प्रकार वेद्यत्व-साधक लक्ष्यत्व, न्याय-विषयत्वादि हेतुओ मे भी उक्त दोष समझ लेने चाहिएँ ।

यह जो आक्षेप किया था कि लक्षकपदत्व हेतु से लक्ष्यविषयकज्ञान-जन्यत्व का अनुमान करना चाहिए, वह भी ठीक नही, क्यो कि हेतु असिद्ध है । कारण यह कि आप के मत मे 'अनुभूति' पद में अनुभूति रूप अर्थ की वाचकता ही है, लक्षकता नही । दूसरी बात यह है कि 'लक्ष्य-ज्ञान' शब्द से लक्ष्यकर्मक स्फुरण ? अथवा लक्ष्यविषयक स्फुरण ? अथवा स्फुरणमात्र ? अथवा लक्ष्यविषयक अन्त करण-वृत्ति विवक्षित है ? प्रथम कल्प ठीक नही, क्योकि अतीतादि पदार्थो के लक्षक पदो मे व्यभिचार है । द्वितीय, तृतीय और चतुर्थ कल्प मे तो सिद्ध-साधन दोष आ जाता है, क्योकि अनुभूतिस्वरूप स्फुरण मे भी अनुभूति-विषयकत्व है ( अत अनुभूति विषयक स्फुरण की जन्यता 'अनुभूति' पद मे सिद्ध ही है ) । स्फुरण मात्र भी है, क्योंकि अनुभूति स्फुरण स्वरूप ही है ( अत स्फुरण मात्र-जन्यता भी 'अनुभूति' पद में सिद्ध है ) । तदाकार ( अनुभूत्याकार ) अन्त करण की वृत्ति भी मानी जाती है ( इसलिए लक्ष्यविषयक अन्त करण-वृत्ति जन्यता 'अनुभूति' पद मे सिद्ध है ) । 'अनुभूति' पद के वाच्य मे ? या लक्ष्य मे स्वय प्रकाशता सिद्ध करते है ?—यह आपका

मित्यपि विकल्पोऽनुपपन्न, उभयवादिसंप्रतिपन्नस्फुरणमात्रस्य स्वप्रकाशत्वप्रतिपादनात्। अन्यथा वेद्यत्वसाधनेऽपि तवास्य विकल्पस्य दुष्परिहरत्वात्। नन्वेवमपि घट स्वयंप्रकाशो घटत्वाद्य-न्नैवं तन्नैवं यथा पट इत्याभाससमानयोगक्षेमता हेतोरितिचेत्, मैवम्; पृथुबुध्नोदराकारस्य घट-शब्दवाच्यस्य स्पर्शरूपादिमतश्चक्षु स्पर्शनप्रमाणसिद्धत्वेन संमतस्य स्वप्रकाशत्वसाधने प्रत्य-क्षविरोधादतद्विषयस्य चाप्रसिद्धत्वेन धर्म्यसिद्धि। न चात्राप्यवेद्यस्यानुभूतित्वमप्रसिद्धमिति वाच्यम्, तथा सति तस्या वेद्यत्वावेद्यत्वयोर्वादिनां विप्रतिपत्त्यभावप्रसङ्गात्। न चैवमुभयतः पाशा रज्जु, अनुभूते प्रमाणजन्यस्फुरणाश्रयतया स्फुरणकर्मतया वा घटादिवद्विषयभावा-भावेऽपि प्रमाणजनितान्त करणवृत्तिव्याप्यत्वेन विषयताङ्गीकारेऽपि स्वप्रकाशत्वाव्याघातात्। उक्तवृत्तिव्याप्यत्वेऽपि स्फुरणव्याप्यत्वाभावापराधेन नाप्रामाणिकतापि, केवलव्यतिरेकाभावात्,

---

दर्शयति – तदाकाराया इति। अन्यथेति। अनुभूतिपदवाच्यस्य चेत्सिद्धसाधनं, लक्ष्यस्य चेत्तवासिद्धि-रिति विकल्प्य दूषणे साधारणाशग्रहगमेव शरणमित्यर्थः। उक्तानुमानस्य यद्यपि विशेषतो दूषण न स्फुरति तथापि अस्याभाससमानयोगक्षेमत्व, तथाच यदितरस्य दूषणं तदस्यापि समानमिति शङ्कते— नन्वेवमिति। अत्र किं रूपादिमान्घट. पक्षीक्रियते? उतालौकिकः कश्चित्? नाद्य, धर्मिग्राहकप्रमाण-बाधादित्याह—मैवमिति। चक्षु स्पर्शनप्रमाणसिद्धत्वे हेतु —स्पर्शरूपादिमत इति। द्वितीय दूष-यति—अतदिति। नचात्रापीति। रूपादिहीनस्य यथा घटत्वमप्रसिद्धमेवमित्यर्थः। हेतुमाह—तथा सतीति। विप्रतिपत्तिरेव वेद्यावेद्यसाधारणानुभूतिप्रसिद्धौ प्रमाणमित्यर्थ। यच्च प्रमाणसद्भावे वेद्यत्वाद-स्वप्रकाशत्वमभावे च प्रमाणाभावादसिद्धिरित्युभयत पाशा रज्जुरित्युक्तं तदपि नास्तीत्याह— नचैवमिति। स्फुरणाश्रयतयेति भाट्टाभिप्रायेणोक्त, स्फुरणकर्मतयेतीतराभिप्रायेण। एतदुक्त भवति—न प्रमाणप्रवृत्ति-मात्रादनुभवकर्मत्वं येनास्वप्रकाशता स्यादपि तु तदाकारान्त करणवृत्तिरेव प्रमाणैर्जन्यते। नच वृत्तिविषय-तामात्रादस्वप्रकाशता स्यात्प्रकाशप्रकाश्यत्वाभावात्स्वरूपप्रकाशाभिव्यञ्जकमात्रत्वाद्वृत्तेः। तेन न वेद्यत्वप्रसक्ति-र्नाप्यप्रामाणिकमिति। ननु वृत्तिव्याप्यत्वमात्रान्न प्रामाणिकत्वमपितु स्फुरणव्याप्यतया, घटादौ तथा दर्श-नादित्यत आह—उक्तेति। कुत.? केवलव्यतिरेकाभावात्। नहि सम्भवद्व्यतिरेकयोरन्वयमात्राद्धेतुहेतु-

---

विकल्प भी असगत है, क्योकि उभय-वादि-स्वीकृत स्फुरणमात्र मे हम स्वय प्रकाशता सिद्ध करते है। नही तो आपके वेद्यत्व-साधन मे भी यह विकल्प अपरिहार्य रूप से उपस्थित होगा।

पूर्वपक्षी—"घट स्वयं प्रकाश है, क्योकि घटत्ववाला है, जो वैसा नही, वह ऐसा नही, जैसे–पट"—इस अनुमानाभास के ही समान आपका स्वय प्रकाशत्व-अनुमान भी है।

सिद्धाती—ऐसा मत कहिए, क्योकि बडे, गोल-मटोल पेट के आकारवाले, लोक मे 'घट' नाम से प्रसिद्ध, स्पर्श रूपादि गुणो वाले पदार्थ मे स्वयं प्रकाशत्व तो आप सिद्ध नही कर सकते, कारण कि उसकी सिद्धि ही चक्षु और त्वक् प्रमाणो से होती है फिर तो उसकी स्वय प्रकाशता के साधन मे धर्मिसाधक प्रत्यक्ष प्रमाण ही बाधक है और चाक्षुषादि प्रत्यक्ष के अविषय ( किसी लोकोत्तर ) घट मे भी स्वयं प्रकाशता सिद्ध नही कर सकते, क्योकि इस प्रकार के धर्मी की ही असिद्धि है। यदि आप कहें कि वेदान्ती के स्वयं प्रकाशत्व-अनुमान मे भी अवेद्य अनुभूति रूप धर्मी भी अप्रसिद्ध ही है, तो ऐसा नही कह सकते, क्योकि यदि वह धर्मी ही प्रसिद्ध नहीं, फिर तो वेद्यत्व और अवे-द्यत्व का यह वादियो का विवाद किसमे होगा? उभयत पाशा रज्जु भी वेदान्त-मत में नही, क्यों-कि प्रमाण-जन्य स्फुरण ( ज्ञातता ) की आश्रयता अथवा स्फुरण ( ज्ञान ) की कर्मता होने के कारण घटादि मे जैसी विषयता है, वैसी विषयता का अनुभूति मे अभाव होने पर भी प्रमाण-जन्य अन्त करण वृत्ति की विषयता मान लेने पर भी स्वय प्रकाशता का बाध नही होता। उक्त वृत्ति की

अतीतानागतयो स्फुरणविरहिणोरुक्तवृत्तिव्याप्ययोर्भाट्टै प्रामाणिकत्वाभ्युपगमात्, चेष्टादिलिङ्गकानुमानविषयस्यापि परज्ञानस्य स्वाश्रये स्वविषयापरोक्षव्यवहारजनने ज्ञानान्तरनिरपेक्षतया स्वप्रकाशत्वोपपत्तेश्च। किंच त्वज्ज्ञानं तवापरोक्षव्यवहारयोग्यत्वे सति वेद्यं न भवति ज्ञानत्वान्मदीयज्ञानवत्। न च मदसमवेतत्वं मदन्यसमवेतत्वं वोपाधिः, साध्याव्याप्तेः, त्वदी-

मद्भावनिश्चय., अतिप्रसङ्गात्। माभूत्तुरगखरवर्णयोर्हेतुहेतुमद्भावः, सभवति ह्यन्वय इति भाव। किंच तौतातितैस्तावदेव वक्तुमयुक्तं, प्राकट्यानाधारयोरप्यतीतानागतयो ज्ञानमात्रविषयतया प्रामाणिकत्वाङ्गीकारान्नित्याह—अतीतेति। तार्किकाणा वृत्तिफलविभाग एव नास्तीति न पर्यनुयोगावकाश। तदेव वृत्तिविषयत्वमात्रेणापि प्रामाणिकत्वमस्तीत्युपपादितम्। इदानी वृत्तिविषयत्वेऽपि स्वप्रकाशत्वक्षतिर्नास्तीत्युपपादयति—चेष्टादीति। स्वाश्रये स्वाधारे। नहि प्रमाणावेद्यत्व स्वप्रकाशत्व किंतु स्वविषयापरोक्षव्यवहारजनने प्रकाशान्तरनिरपेक्षत्वम्। तच्च स्वप्रकाशत्वसाधकप्रमाणगम्यत्वेपि न विरुद्ध्यते प्रमाणान्तरनिरपेक्षतयैव स्वाश्रये स्वविषयापरोक्षव्यवहारजनकत्वादित्यर्थः। एव व्यतिरेक्यनुमानेन स्वप्रकाशत्व समर्थितम्। ये तु वक्रनयवर्त्मानुसारिणस्तान्प्रत्यभिनवरीतिसुरभिमन्वयव्यतिरेकिप्रयोगमाह—किंच त्वज्ज्ञानमिति। त्वज्ज्ञान वेद्य न भवतीत्युक्ते अप्रसिद्धविशेषणता। तन्निवृत्त्यर्थमपरोक्षव्यवहारयोग्यत्वे सतीत्युक्तम्। वेद्यत्वाभावस्याप्रसिद्धत्वेऽप्यपरोक्षव्यवहारयोग्यत्वे सति वेद्यत्वरहितस्य परमाण्वदृष्टादेः प्रसिद्धत्वेन नाप्रसिद्धविशेषणता। तावत्युक्तेऽर्थान्तरता तदीयज्ञानस्य परं प्रत्युक्तरूपत्वात्, तदर्थं तवेत्युक्तम्। एवमपि परकीयज्ञानमादायार्थान्तरता तस्येत प्रति तथात्वादत उक्तं—त्वदिति। एतदीयस्य च ज्ञानस्यैतं प्रत्यपरोक्षव्यवहारयोग्यत्वे सति वेद्यत्वानधिकरणत्वमपरोक्षव्यवहारयोग्यत्वानधिकरणत्वाद्वा १ वेद्यत्वानधिकरणत्वाद्वा १ नाद्यः, व्याघातात्। उत्तर तु सिद्ध्यदपरोक्षव्यवहारयोग्यत्वेसत्यवेद्यत्वलक्षण स्वप्रकाशत्व-

विषयता रह जाने के कारण ही स्फुरण ( फल ) विषयता न होने मात्र से अनुभूति में अप्रामाणिकता भी न आई, क्योंकि व्यतिरेकव्यभिचार है [ आशय यह है कि फल-व्याप्यता और प्रामाणिकता का यदि कार्यकारण भाव निश्चित होता, तब अनुभूति में फलव्याप्यता न होने से प्रामाणिकता भी न रहती। किन्तु उनका कार्यकारण भाव बन नहीं सकता, क्योंकि कार्यकारण भाव के निश्चायक होते हैं—अन्वय और व्यतिरेक। प्रकृत में 'यत्र फलव्याप्यत्वमस्ति तत्र प्रामाणिकत्वमस्ति'—इस प्रकार का अन्वय होने पर भी 'यत्र फलव्याप्यत्व नास्ति तत्र प्रामणिकत्वमपि नास्ति'—इस प्रकार का व्यतिरेक नहीं घटता क्योंकि ] अतीतादि पदार्थों में फलव्याप्यता न होने पर भी ( वृत्तिव्याप्यता के कारण ) प्रामाणिकता है—ऐसा भाट्ट मानते हैं। चेष्टादिलिङ्गक अनुमान का विषय भी पर पुरुष का ज्ञान अपने आधार में स्वविषयक अपरोक्ष व्यवहार के उत्पन्न करने में ज्ञानान्तर-निरपेक्ष होने के कारण स्वयप्रकाश ही रहता है [ भाव यह है—किसी प्रमाण का विषय न होना स्वयप्रकाशता नहीं, अपितु अपने अपरोक्ष व्यवहार में दूसरे ज्ञान की अपेक्षा न रखना ही स्वयप्रकाशता है। इस प्रकार की स्वयप्रकाशता अनुभूति में अक्षुण्ण है ]।

(अन्वयव्यतिरेकी अनुमान से भी स्वयंप्रकाशता की सिद्धि हो सकती है—) 'त्वज्ज्ञानं तवापरोक्षव्यवहारयोग्यत्वविशिष्टवेद्यत्ववत् न भवति, ज्ञानत्वात् मदीयज्ञानवत्' ( आप का ज्ञान आप के अपरोक्ष व्यवहार की योग्यता के सहित वेद्यत्ववाला नहीं, क्योंकि ज्ञानत्ववाला है, जैसा हमारा ज्ञान )। यहाँ मदसमवेतत्व या मदन्यसमवेतत्व उपाधि है—ऐसी आशका नहीं करनी, क्योंकि उसमें साध्य की व्यापकता नहीं—आपके आत्मा में समवेत आपके धर्मादि में तथा आप के आत्मा में

१. कौमारिलैः। तुतात इति कुमारिलस्य नाम।

**यधर्मादिषु त्वत्समवेतेष्वसमवेतेषु च परमाणुषूक्तसाध्यसद्भावेऽप्युपाधेरभावात्। न च ममापरोक्षव्यवहारायोग्यत्वमुपाधिः, ममापरोक्षव्यवहारयोग्यत्वादिदं ममापरोक्षव्यवहारयोग्यत्वे**

मादाय सिद्धयतीति स्वप्रकाशत्वसिद्धिः, अन्यज्ञाने चैतदपरोक्षव्यवहारयोग्यत्वानधिकरणत्वात् तद्धर्मवेद्यत्वानधिकरणत्वमिति साध्यप्रसिद्धिः। अन्यदीयज्ञानस्योक्तसाध्यवत्त्वे मदसमवेतत्वं मदन्यसमवेतत्वं वोपाधिरित्याशङ्क्य निरस्यति—**नचेति**। कुतः? साध्याव्यापकत्वात्। तदेव विवृणोति—**त्वदीयेति**। त्वददृष्टसंस्कारयोस्त्वदपरोक्षव्यवहारयोग्यत्वे सति वेद्यत्वरहितयोस्त्वदसमवेतत्वत्वदन्यसमवेतत्वयोरुपाध्योरभावेन साध्याव्यापकत्वादित्यर्थः। उत्तरस्योपाधेः साध्याव्याप्त्युदाहरणान्तरमाह—**असमवेतेष्विति**। परमाण्वाकाशादीनानित्यत्वादसमवेतत्वेनान्यसमवेतत्वस्य सुतरामभावादित्यर्थः। उपाध्यन्तरमाशङ्क्य निराकरोति—**नचेति**। प्रतिवादिज्ञानस्य तदपरोक्षव्यवहारयोग्यत्वे सति वेद्यत्वानधिकरणत्वे तदपरोक्षव्यवहारायोग्यत्वमुपाधिस्तथाच वादिज्ञानेऽयमुपाधिर्व्यावर्तमानः साध्यमपहरतीत्युपाधिवादिनोऽभिमतं तद्दूषयितुं हेतुमाह—**ममापरोक्षव्यवहारयोग्यत्वादित्यादिनोपाधित्वादित्यन्तेन**। उपाधिं वदतोपाधिव्यतिरेकेण साध्यव्यतिरेकोऽनुमातव्यः, सर्वोपाधीनामेवस्वाभाव्यात्। युक्तं चैतत्साध्योपाध्योर्व्याप्यव्यापकभावार्थं तदभावयोरपि व्याप्यव्यापकभावनियमात्। तत उपाध्यभावसाध्याभावयोरपि निरुपाधिसम्बन्धो वक्तव्यः। तस्माद्भावयोरप्युपाधिर्निविशमानो दूषयेदेव प्रथमोपाधिमित्यभिसधाय तद्व्यतिरेकयोरयमुपाधिरुपन्यस्तस्तत्र ममापरोक्षव्यवहारयोग्यत्वादित्युपाधिव्यतिरेकनिर्देशः। शेषः साध्यव्यतिरेकनिर्देशः। अनयोः सबन्धे ज्ञानेतरत्वमुपाधिरित्यर्थः। तदेव व्यतिरेकानुन्नायकत्वात्साध्याव्यापकं वाचानुपाधित्वे सिद्धे पूर्वोक्तहेतुरप्रत्यूह इत्यभिप्रायः। ननु यथाज्ञानत्वव्यतिरेकस्य ज्ञानेतरत्वस्योपाधित्वं ब्रूषे एवं ममापरोक्षव्यवहारयोग्यत्वादित्यस्य हेतोर्व्यतिरेकस्य ममापरोक्षव्यवहारायोग्यत्वस्योपाधित्वं परेणापि सुवचमिति षण्ढमैथुनायितं चक्रकापत्तिश्च—ज्ञानेतरत्वव्यतिरेकस्य ज्ञानत्वस्य प्रतिवादिसाध्यव्यतिरेकरूपत्वदीयसाध्योन्नायकत्वे सिद्धे ज्ञानेतरत्वस्योपाधित्वं, तस्योपाधित्वे व्यतिरेकानुन्नायकत्वान्ममापरोक्षव्यवहारायोग्यत्वस्यानुपाधित्वं, तस्यानुपाधित्वे च ज्ञानत्वस्य प्रथमसाध्यं प्रति हेतुत्वमिति। तस्मान्नेयं रीतिश्चतुरश्रेणीरीतिसरणिमधिरोहतीति। आकर्ण्यतां तावदवहितहृदा ग्रन्थकारहृदयं, ममापरोक्षव्यवहारयोग्यत्वस्य प्रथमसाध्यव्यतिरेकोन्नायकत्वं तावदसंगतम्। वेद्यत्वं ह्यनेन साधनीयम्। नच तदप्रसिद्धं, येन ममापरोक्षेति विशेषणान्तरसार्थक्यं स्यात्। तस्मान्मद्वेद्यमिदं मद्व्यवहारयोग्यत्वादित्येवालमिति व्यर्थविशेषणत्वादहेतुरेवायम्। अत एव न तद्व्यतिरेकस्योपाधितेति। ननु एतदेवोच्यतां किमनेनाजागलस्तनायमानेन, सत्यम्, इयमपि काचन रीतिस्तार्किकैरुरीकृतेति प्रदर्शनार्थम्। तथाहि मानमनोहरकारेण वादिवागीश्वरेणात्मप्रकरणे—विवादाध्यासितं बोधाधारजन्यं कार्यत्वात् चेष्टादिवदित्यनुमानम्, व्यर्थविशेषणेनापि शरीरिजन्यत्वव्यतिरेकेण 'विवादाध्यासितं बोधाधारजन्यं न भवति। शरीर्यजन्यत्वाद्', इति सत्प्रतिपक्ष्यते स्म। तथा, विवादाध्यासितमूर्तं प्रयत्नजं परमाणुव्यतिरिक्तत्वे सति मूर्तत्वात्, गन्धः प्रयत्नजः गन्धत्वात्पटवत्तद्गन्धवच्चेति, ईश्वरानुमाने च, न शरीरिणाऽजन्यत्वादित्यनेन प्रकरणसमत्वम्। नापि तज्जन्यत्वमुपाधिरकार्यत्वस्योपाधेर्व्यतिरेकस्य व्यर्थविशेषणत्वाच्चेतिवत्। तस्मान्न

**असमवेत परमाणुओं में उक्त साध्य का सद्भाव होने पर भी उक्त उपाधियों का अभाव है। 'ममापरोक्षव्यवहारायोग्यता'–यह भी उपाधि नहीं कही जा सकती, क्योंकि ममापरोक्षव्यवहारयोग्यता के कारण यह (ज्ञान) ममापरोक्षव्यवहार योग्यत्वविशिष्टवेद्यत्ववाला है, जैसे पट–इस प्रकार के व्यतिरेक में ज्ञानेतरत्व उपाधि है।] तात्पर्य यह है कि उपाधि का फल होता है–पक्ष में उपाधि के अभाव से साध्य के अभाव की अनुमिति। साध्याभाव रूप हेतु में उपाधि लग जाने से उपाध्यभाव रूप हेतु व्याप्यत्वासिद्ध हो जाता है, अतः वह साध्याभाव का अनुमापक नहीं बन सकता, फिर तो प्रथम उपाधि निरर्थक है]।**

सत्यवेद्यं न भवति घटवदिति व्यतिरेके ज्ञानेतरत्वस्यैवोपाधित्वात्। विवादपदानि ज्ञानानि घटज्ञानान्यत्वेसति वेद्यत्वानधिकरणानि ज्ञानत्वाद्घटज्ञानवत्। नच घटज्ञानत्वमुपाधि, शरीरिजन्यत्वोपाधाविव व्यर्थविशेषणत्वात् तस्माद्विगलितसकलकलङ्कमनुभूते स्वप्रकाशत्वानुमानमिति सिद्धम्।

एतेनात्मनोऽपि स्वप्रकाशत्वं व्याख्यातम्। तथाहि—

'चिद्रूपत्वादकर्मत्वात्स्वयञ्ज्योतिरिति श्रुतेः।
आत्मन स्वप्रकाशत्वं को निवारयितु क्षम'॥ ३॥

कश्चिदपि कलङ्कशङ्कावकाश.। तथैव रीत्यानुमानान्तरमाह—**विवादपदानीति**। ज्ञानमात्रपक्षीकरणे घटज्ञानांशे सिद्धसाधनता, तदर्थं विवादपदानीति ग्रहण, वेद्यत्वानधिकरणमित्युक्तेऽसिद्धविशेषणता, तन्निवृत्त्यर्थं घटज्ञानान्यत्वे सतीति विशेषण वेद्यत्वानधिकरणत्वस्याप्रसिद्धत्वेऽपि घटज्ञानान्यत्वे सति वेद्यत्वानधिकरणत्व घटज्ञाने प्रसिद्ध घटज्ञानस्य घटज्ञानान्यत्वानधिकरणत्वादेव, अन्यत्व चात्र तत्त्वानधिकरणत्वं, घटज्ञानान्यत्वानधिकरणानीत्युक्ते व्याहतिस्तेषा घटज्ञानान्यत्वादेव, तदर्थ वेद्यत्वग्रहण, घटज्ञानान्यत्वेसति वेद्यत्वानधिकरणत्वं घटज्ञानान्यत्वानधिकरणत्वान्न सभवति, व्याघातात्। तस्माद्वेद्यत्वानाधकरणत्वसिद्धि। पूर्वानुमान समग्रलक्षणवतः सद्भावे, इद त्ववेद्यत्वमात्र इति विशेषः। घटज्ञानस्योक्तसाध्यवत्त्वे घटज्ञानत्वमुपाधिमाशङ्क्य निषेधति—**नचेति**। यथाहि—विवादपद सकर्तृक कार्यत्वात्कुम्भवदित्यत्र शरीरिजन्यत्व व्यर्थविशेषणत्वादनुपाधिः, जन्यत्वमात्रेण साध्यव्याप्तिसिद्धेरितरस्य पक्षमात्रव्यावर्तकत्वात्, एव ज्ञानत्वमित्येनैव ज्ञानव्यतिरिक्तव्यावृत्तौ सिद्धाया घटपदस्य पक्षीकृतघटज्ञानव्यतिरिक्तज्ञानव्यवच्छेदकत्वात्पक्षेतरतयाऽयमनुपाधिरित्याह—**शरीरीति**।

अवीतपदमाचार्यैरकार्यन्वयगोचरा'।
महाविद्याः पुनर्दिव्या दीव्यन्त्यत्रानिवारितम्॥

तथाहि—विमत ज्ञानमेतज्ज्ञानविज्ञानविषयत्वे सति वेद्यत्वरहितज्ञानविषय. पदविषयत्वात् घटवदित्यादिमहाविद्याभिरपि समर्थनीय स्वप्रकाशत्व, फलाविषयत्वादिसाधनान्न व्याहतिः। स्वप्रकाशसमर्थनमुपसहरति—**तस्मादिति**।

विज्ञानस्वप्रकाशत्वमात्मस्वप्रकाशत्वेऽप्यतिदिशति—**एतेनेति**। यद्यपि विज्ञानस्वप्रकाशतयैव तद्रूपस्यात्मनः स्वप्रकाशता सिद्धा, तथापि तद्रूपतायामेव विवादात्तत्समर्थनार्थमधिकयुक्तिप्रदर्शनार्थं च वादान्तरारम्भः। हेतून्प्रमाणानि सगृह्णाति श्लोकेन—**चिद्रूपत्वादित्यादिना**। प्रथम समर्थयते—

**विवादास्पद ज्ञान, घटज्ञान-भेद-विशिष्ट वेद्यत्व के अनधिकरण है, ज्ञानत्वयुक्त होने से, जैसे-घट ज्ञान-(इस प्रकार के अनुमानो के द्वारा भी स्वयंप्रकाशत्व की सिद्धि होती है)। यहाँ 'घटज्ञानत्व' उपाधि है-यह शङ्का नही कर सकते, क्योकि 'शरीरिजन्यत्व' उपाधि के समान इस उपाधि में भी व्यर्थविशेषणता है [ भाव यह है कि ईश्वर की सिद्धि के लिए नैयायिक अनुमान करते है-"क्षित्यादिकं सकर्तृकं कार्यत्वाद् घटवत्।" इस अनुमान मे शङ्कावादी 'शरीरिजन्यत्व' उपाधि देता है। तब नैयायिक कहते है कि इस उपाधि में व्यर्थ विशेषणता है। अर्थात् केवल 'जन्यत्व' ही साध्य का व्यापक है, शरीरिजन्यत्व नही, क्योकि 'शरीरी' विशेषण व्यर्थ है। इसी प्रकार 'घट' विशेषण व्यर्थ होने के कारण 'घटज्ञानत्व' साध्य का व्यापक नही अत उपाधि कैसे होगा ? ]। अत अनुभूति में स्वयप्रकाशत्व का अनुमान सर्वथा निर्दोष है।**

**इससे ही यद्यपि आत्मा मे भी स्वप्रकाशत्व सिद्ध हो गया, तथापि ( १ ) 'चिद्रूपत्व', ( २ ) 'अकर्मत्व' तथा ( ३ ) स्वयज्योतिश्रुति – इन तीन हेतुओ से आत्मा मे ऐसा स्वयप्रकाशत्व सिद्ध किया जाता है, जिसे कोई हटा ही नही सकता—**

आत्मा संविद्रूप संवित्कर्मतामन्तरेणापरोक्षत्वात्संवेदनवदिति प्राभाकरं प्रत्यनुमानात्, घटतज्ज्ञानयो संबन्ध आत्मनिष्ठ ज्ञाननिष्ठत्वात्पदविषयत्ववदिति नैयायिकादीन्प्रत्यनुमानादात्मनश्चिद्रूपत्वसिद्धि । विपक्षे चात्मन सशयविपर्यासगोचरत्वापत्तिर्बाधिका— नह्यात्मन्यहमनहं वेति कश्चित्सदिग्धे, नैवाहमिति वा विपर्यस्यति । न चैतत्स्वप्रकाशज्ञानरूपतामन्तरेणावकल्प्यते । न चान्तरेणापि ज्ञानरूपतां दु खादिवदेतदुपपद्यत इति शङ्कनीयम्, तेषां स्वसत्तायां ज्ञानाव्यभिचारात्तदुपपत्ते । न चात्मन्येवमभ्युपगम्यते, सुषुप्त्यभावप्रसङ्गात् । न च ज्ञानात्मनो संबन्धोऽनात्मवृत्तिर्ज्ञानवृत्तित्वात् सत्तावदिति शङ्कनीयम्, ज्ञानमेवात्मेत्यभ्युपगच्छतां ज्ञानात्मनो संबन्धस्यैवाभावादाश्रयासिद्धे । 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते'

आत्मा संविद्रूप इति । अपरोक्षव्यवहारविषयत्व चापरोक्षत्व, नापरोक्षज्ञानविषयत्वमपरोक्षज्ञानत्व वा । तेन न साधनवैकल्यासिद्धी, घटादेरतीतादेश्च व्यवच्छेदाय विशेषणद्वयम् । घटतज्ज्ञानेति । यद्यपि ज्ञानज्ञेययोर्विषयविषयिभावो नाम न भावरूपः कश्चित्सबन्धस्तथाप्यभावरूपत्वादस्त्येवाश्रितत्व, सिद्धान्ते त्वाध्यासिकः सबन्धोऽत्र, सबन्धस्य सबन्धिमात्रनिष्ठत्वात्, सबन्धिभूतज्ञानघटयोरन्यतरस्यात्मत्वमादायात्मनिष्ठत्व पर्यवस्यति, तत्रापि घटस्यात्मत्वमुभयवाद्यनभिमतमिति विप्रतिपन्नज्ञानस्यात्मतामापादयति । पदस्य विषयत्व पदविषयत्वम् । ज्ञानरूपत्वाभावे बाधकमाह—विपक्षे चेति । सशयाद्यविषयत्व स्वप्रकाशत्वव्याप्त न भवति, दुःखादावदर्शनादित्याशङ्क्य निषेधति—न चान्तरेणेति । सुषुप्त्यभावप्रसङ्गादिति । एतन्निष्ठजन्यज्ञानेनैतस्य प्रकाशाव्यभिचारेऽस्य न सुषुप्तिः स्यात् । एतन्निष्ठकार्यज्ञानोपरमस्यैतत्सुषुप्तित्वादित्यर्थ । सत्प्रतिपक्षतामाशङ्क्य निषेधति—नचेति । अत्रापि सबन्धस्यानात्मवृत्तित्वमन्यतरस्यानात्मतामादाय पर्यवस्यति । तत्राप्यात्मनोऽनात्मता व्याहतेति ज्ञानस्यानात्मत्वसिद्धि । ननु मानमनोहरकारेण, स च ज्ञानाश्रय. 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति श्रुतौ द्रष्टृदृष्ट्यो. सबन्धप्रतीतेरिति ज्ञानात्मनोः सम्बन्धः समर्थितः,

( १ ) 'आत्मा सविद्रूप है, सवित् की कर्मता के बिना ही अपरोक्ष होने से, जैसे—सवेदन'—प्राभाकर के प्रतिप्रयुक्त इस अनुमान से/तथा 'घट और उसके ज्ञान का सम्बन्ध आत्मवृत्ति है, ज्ञानवृत्ति होने से, जैसे 'ज्ञानादि' पद की विषयता'—इस प्रकार के नैयायिकादि के प्रति प्रयुक्त अनुमान से आत्मा मे चिद्रूपत्व की सिद्धि होती है । विपक्ष ( ज्ञानरूपत्वाभाव ) में बाधक है—आत्मा मे संशयादि की विषयता का अभाव । अर्थात् यदि आत्मा को ज्ञान रुप न माने, तब तो आत्मा के विषय मे सशयादि होना चाहिए, किन्तु ) 'अह वाऽनह वा'—इस प्रकार का सन्देह और 'नैवाहम्'—इस प्रकार का विपर्यय अपने आत्मा मे किसी को होता नही । यह ( संशयादि का न होना ) आत्मा में स्वप्रकाश ज्ञान रूपता के बिना बन नही सकता ।

जैसे दु खादि ज्ञानस्वरूप नही, फिर भी उनके होने पर उनके विषय मे किसी को सदेहादि नही होते—मुझे दु ख है ? कि नही ? वैसे ही ज्ञान स्वरूपता के बिना भी आत्मा मे सशयादि का अभाव बन जायगा - ऐसी शङ्का नही करनी चाहिए, क्योकि ( दु खादि के होने पर उनका ज्ञान नियमपूर्वक होता ही है, अत ) दु खादि अपनी सत्ता मे जन्यज्ञान से अव्यभिचरित है, अत उनके विषय मे सशयादि नही होते । किन्तु आत्मा मे जन्यज्ञान का अव्यभिचार नही माना जा सकता, नही तो सुषुप्ति ही नही होगी [ भाव यह है कि जन्यज्ञान का उपरम ही न्यायमत मे सुषुप्ति माना जाता है । यदि आत्मा सदैव उससे युक्त ही होगा, फिर सुषुप्ति कब होगी ? ] । 'ज्ञान और आत्मा का सम्बन्ध आत्मवृत्ति नही ज्ञानवृत्ति होने से, जैसे सत्ता—इस प्रकार के सत्प्रतिपक्ष की शङ्का नही करनी चाहिए, क्योकि 'ज्ञान ही आत्मा है'—यह मानने वालो के मत मे ज्ञान और आत्मा का सम्बन्ध न होने से आश्रयासिद्धि दोष है । यदि शङ्का हो कि "नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते"

इति द्रष्टृदृष्ट्योः संबन्धः श्रुतित एवाधिगत इति मानमनोहरकारः प्रतिष्ठिपदितिचेत्, मैवम्; श्रुतेर्लोकप्रसिद्धसंबधानुवादेन दृष्टेर्विनाशित्वाभावमात्रप्रतिपादनपरत्वात्, "अप्राप्ते हि शास्त्रमर्थव" दिति न्यायात्, मुख्यार्थेऽद्वैतश्रुतिविरोधात्, राहोः शिर इतिवदुपचारेणापि संबन्धश्रुतेर्वृत्त्युपपत्तेश्च।

न चानयोस्तुल्यबलतया विपर्ययः, तत्परत्वातत्परत्वविशेषोपपत्तेरुपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गोपेताद्वैतश्रुतिः कथं लोकप्रवादोपजीविनीं संबन्धश्रुतिं न बाधेत। देवदत्तस्य गन्तुरितिवद्द्रष्टुर्दृष्टेरिति द्रष्टृरूपाया दृष्टेः, दृष्टिलक्षणो वा यो द्रष्टा तस्य, विपरिलोपो नास्तीति सामानाधिकरण्येन षष्ठ्योः संबन्धसंभवे वैयधिकरण्यस्य कल्पनायोगात्।

---

तत्कथमाश्रयासिद्धिरिति शङ्कते—**नहि द्रष्टुरिति**। नेयं श्रुतिः सम्बन्धप्रतिपादिका अन्यपरत्वादिति परिहरति—**मैवमिति**। तत्परत्वाभावे च कारणमाह—**अप्राप्त इति**। अप्राप्ते हि शास्त्रमर्थवत्। "अर्थेऽनुपलब्धे तत्प्रमाण" मिति तत्र तत्र जैमिनिनोक्तत्वादित्यर्थः। एवमनुवादकतया परिहारमुक्त्वा प्रकारान्तरेण परिहरति—**मुख्यार्थ इति**। एतेन देवताधिकरणन्यायोऽप्यनवकाशीकृतः।

नन्वद्वैतश्रुतिविरोधादन्यथाभावोऽस्याः किमिति कल्प्यते विपरीतमेव वा किं न स्यात् श्रुत्योस्तुल्यबलत्वात् 'तुल्यं हि साम्प्रदायिक'मिति न्यायादित्याशङ्क्य तत्परत्वातत्परत्वविशेषान्नेत्याह—**नचेति**। तत्परत्वमेव तस्याः कथमवगम्यतेऽतत्परत्वं चास्या इत्यत आह—**उपक्रमेति**। 'आत्मा वाऽरे' 'यत्र त्वस्ये'ति चाद्वैतेनोपक्रमोपसंहारौ। 'इदं सर्वं सलिल एकः' इति चाभ्यासः। जीवब्रह्मैक्यं च प्रमाणान्तरागोचरम्। 'एतावदरे' इति फलश्रवणम्। 'अस्य महत एतेभ्य' इति सृष्ट्यादिरर्थवादः। दुन्दुभ्यादिदृष्टान्तैरुपपादितं तदेतदादिशब्देन गृहीतम्। लोकप्रवाद इत्यनेनानुवादकतया सम्बन्धश्रुतेरतत्परत्वमुक्तं, कथं न बाधेत? बाधेतैवेत्यर्थः। एवञ्च यदत्र तेनैव गर्जितं "नचानाम्नायप्रतीतं आम्नातो भवितुमर्हतीत्यादि" "तत्राप्युपचारप्रवृत्ते सुलभत्वा" दित्यन्तं तत्सर्वं प्रमत्तप्रलपितायितम्। यत्तु नच प्रत्यक्षं, तस्य भेदग्राहकत्वादित्युक्तं तदपि भेदनिर्भर्त्सनसमये सम्यगुपरिष्टादस्माभिर्द्रावयिष्यामः। तदेवं वैयधिकरण्यं षष्ठ्योरङ्गीकृत्य पर्यहार्षीत्, सम्प्रति वैयधिकरण्यमेव नास्ति सामानाधिकरण्येनाप्युपपत्तेरिति सनिदर्शनमाह—**देवदत्तस्येति**। ननु

---

द्रष्टा की दृष्टि का कभी लोप नहीं होता—बृह० ४।३।२३ ) इस श्रुति से द्रष्टा ( आत्मा ) और दृष्टि ( ज्ञान ) का सम्बन्ध प्रतीत होता है—इस प्रकार मानमनोहरकार ने सम्बन्ध सिद्ध किया है, तो ऐसी शङ्का नहीं करनी चाहिये, क्योंकि उक्त श्रुति केवल लोक-प्रसिद्ध सम्बन्ध का अनुवाद कर रही है, उसका तात्पर्य "अप्राप्ते शास्त्रमर्थवत्" ( अज्ञात अर्थ में शास्त्र प्रमाण होता है ) इस न्याय के आधार पर दृष्टि के विनाशित्वाभाव के प्रतिपादन मात्र में है, न कि सम्बन्ध-विधान में। वास्तविक सम्बन्धरूप मुख्य अर्थ के साथ अद्वैत-श्रुति का विरोध आ जाने से "राहोः शिरः" के समान आध्यासिक सम्बन्ध मानकर गौण वृत्ति से भी सम्बन्ध-बोधक श्रुतिकी प्रवृत्ति हो सकती है।

सम्बन्ध-श्रुति और अद्वैत-श्रुति—इन दोनों की समानबलता होने से विपरीत बाध्य बाधक भाव क्यों न हो जाय—ऐसी शङ्का नहीं करनी, क्योंकि अद्वैतपरक होने से अद्वैत-श्रुति प्रबल है और सम्बन्धपरक न होने से सम्बन्ध-श्रुति दुर्बल है, अतः उपक्रमोपसंहारादि छह प्रकार के तात्पर्यग्राहक लिङ्गों से युक्त अद्वैत-श्रुति लोकप्रवाद मात्र पर टिकी सम्बन्ध-श्रुति को क्यों न बाधेगी? "देवदत्तस्य गन्तुः"—के समान "द्रष्टुः दृष्टेः"—यहाँ पर भी द्रष्टारूप जो दृष्टि अथवा दृष्टिरूप जो द्रष्टा, उसका विपरिलोप नहीं होता—इस प्रकार समानाधिकरणरूप से दोनों षष्ठियों का अन्वय हो जानेपर 'द्रष्टा की दृष्टि'—इस प्रकार व्यधिकरणत्व की कल्पना ही असंगत है। "न दृष्टेर्द्रष्टारं पश्ये."

---

१. उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये।

न, दृष्टेर्द्रष्टारं पश्ये'रित्यादाविव वैयधिकरण्येऽप्यन्तःकरणपरिणामरूपाया दृष्टेर्यो द्रष्टेति वा परिणामिनोऽन्तःकरणस्य द्रष्टुः साक्षिभूता या दृष्टिस्तस्या विपरिलोपो नास्तीति वाऽद्वैतश्रुत्यनुगुणे सम्भवति संबन्धे गुणगुणिभावेन संबन्धकल्पना अविदितमीमांसावृत्तान्तस्यैव परं शोभते ।

किंच जीवेश्वरयोर्भेदमभ्युपगच्छता नित्यदृष्टिसंबन्धः कस्योच्यत इति विवेचनीयम् । न तावज्जीवस्य, तस्यानित्यज्ञानाभ्युपगमात् । नापीश्वरस्य, मैत्रेयीब्राह्मणे 'नवा अरे पत्युः कामाय पतिः प्रियो भवती'त्यादिना पतिजायादिप्रियससूचितं जीवमुपक्रम्य तस्यैव 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ती'त्यवस्थान्तरप्रतिपादनावसरे विनाशमाशङ्क्य 'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा मात्राऽसंसर्गस्त्वस्य भवति ।

'न दृष्टेर्द्रष्टारं पश्ये'रित्यत्र यथा वैयधिकरण्यमेवमत्रापि किं न स्यादित्यत आह—**न दृष्टेरिति** । अन्तःकरणवृत्तिसाक्षिणौ वान्तःकरणसाक्षिणौ वा भिन्नौ सम्बन्धितया निर्दिश्येते न तु ज्ञानात्मानावित्यर्थः । अद्वैतश्रुत्यनुगुणे सम्बन्धे सम्भवतीत्यन्वयः । अद्वैतश्रुत्यविरुद्धानेकप्रकारे परिस्फुरत्यपि यत्तस्य विरुद्ध एव प्रकारः पर्यस्फुरत्तत्र तद्दौर्भाग्यमेव परं कारणमित्यभिप्रायः ।

इयं श्रुतिरेव तावत्त्वत्पक्षे नार्थवती दूरेतरा त्वभिमतसंबन्धे प्रामाण्यमित्याह—**किंचेति** । **नापीश्वरस्येति** । यद्यपीदं मैत्रेयीब्राह्मणं जीवानुवादेन तस्य ब्रह्मात्मताप्रतिपादनपरं नतु जीवपरं जीवब्रह्मभेदपरं वेति 'वाक्यान्वयाद्' इत्यत्र प्रतिपादितं, तथापि शोधितस्य ब्रह्मताप्रतिपादनमिति शोधनसमये जीवस्याप्येवंस्वभावता वक्तव्येत्यभिप्रेत्य प्रियादिससूचितस्याविनाशितोपपादनादित्युक्तं, तेनात्रेश्वरज्ञानस्य कारणरहिततायामिमां श्रुतिं प्रमाणयन् वादिवागीश्वरोऽप्युपहसितः । एतेभ्य इत्यादिश्रुतेरयमर्थः—यान्येतानि कार्यकरणविषयाकारपरिणतानि[1] नामरूपात्मकानि पञ्चभूतानि, एतेभ्यो भूतेभ्यः । हेतौ पञ्चमी । समुत्थाय सम्यगुत्थाय पृथग्भूत्वा[2] यथोदकेभ्यो हेतुभ्यश्चन्द्रप्रतिबिम्बचन्द्राणां पृथग्भावस्तद्वत्तान्येवानुविनश्यति तानि भूतानि ब्रह्मविद्यया समूलं विनश्यन्त्यनुविनश्यति, उपाधिप्रलयात्तत्प्रयुक्तावच्छेदोऽपि निवर्तत इत्यर्थः । **न प्रेत्येति** । शरीरद्वयं परित्यज्य संज्ञा विशेषविज्ञानं नास्ति तदापादकानामुपाधीनामभावादित्यर्थः । **अवस्थान्तरेति** । मोक्षावस्थाप्रतिपादनावसर इत्यर्थः । **विनाशमिति** । संज्ञा नास्तीति ज्ञाननाशाभिधानादित्यर्थः । प्रतिवचनामिदम् । अरे मैत्रेयि ! अयमात्मा अविनाशीति । विनाशशब्देन विक्रिया विवक्ष्यते सास्य नास्तीत्यर्थः । तथानुच्छित्तिधर्मा, उच्छित्तिः स्वरूपनाशः स धर्मोऽस्य नास्तीत्यनुच्छित्तिधर्मा ।

**दृष्टि के द्रष्टा को तुम नहीं देख सकते—बृह० ३।४।२—इस श्रुति से आये हुए व्यधिकरण अन्वय के समान प्रकृत में भी यदि व्यधिकारण अन्वय करना ही हो, तो भी अन्तःकरण-परिणामरूप दृष्टि का जो द्रष्टा, अथवा परिणामी अन्तःकरण रूप द्रष्टा की साक्षिरूप जो दृष्टि, उसका विपरिलोप नहीं होता—इस प्रकार अद्वैत-श्रुति के अनुकूल सम्बन्ध के सम्भव होते गुण-गुणिभाव सम्बन्ध की कल्पना करनी मीमांसामर्यादा की अनभिज्ञता का परिचय देना है ।**

**दूसरी बात यह है कि जीव और ईश्वर का भेद माननेवाला किसका नित्यदृष्टिरूप सम्बन्ध कहता है ? यह विवेचनीय है । जीव का तो सम्बन्ध हो नहीं सकता, क्योंकि उसका ज्ञान अनित्य माना जाता है । ईश्वर का भी नहीं बन सकता, क्योंकि ईश्वर का प्रकरण ही नहीं । अपि तु (बृह० उ० अ० ४ के) मैत्रेयी ब्राह्मण में "नवा अरे पत्युः कामाय पतिः प्रियो भवति"—(अरे मैत्रेयि ! पति के लिये पति प्रिय नहीं होता—बृह २।४।५) इत्यादि से पति, जायादि के प्रिय-प्रतिपादन से सूचित जीवका आरम्भ करके "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य सञ्ज्ञास्ति" ( यह इन भूतों से उत्थित हो कर उन्हीं के नष्ट होते नष्ट हो जाता है । मरने पर उसे विशेष ज्ञान नहीं रहता—बृह० ४।५।१३ ) इस प्रकार अवस्था विशेष के प्रतिपादन के अवसर पर उसी ( जीव ) के विनाश**

१. कार्यम् = स्थूलशरीरं, करणम् = सूक्ष्मशरीरं, विषयः = शब्दादयः । २. जीवभावमनुभूयेतियावत् ।

'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वा' दित्येवमविनाशितोपपादनात्, ज्योतिर्ब्राह्मणे च जागराद्यवस्थोपन्यासपुरःसरम् 'अथ यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यती'ति सम्प्रसादावस्थानमवतार्य 'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत' इति विशेषविज्ञानाभावेऽपि स्वरूपविज्ञानस्य नित्यत्वप्रतिपादनात्, ईश्वरपक्षे च विशेषविज्ञानाभावस्य वक्तुमयुक्तत्वात्तस्य सर्वदा सर्वज्ञत्वात् सुषुप्त्याद्यवस्थाभावाच्च । तस्माज्ज्ञानात्मनोः संबन्धोऽनात्मनिष्ठ इत्यनुमानमाश्रयासिद्धमिति सिद्धम् । यत्तु गुणत्वादनित्यत्वाज्ज्ञानमात्मा न भवति रूपादिवदित्यनुमानं तत्सर्वमन्यतरासिद्धतयापास्तम् । अथ घटतज्ज्ञानयोः सबन्धः गुणनिष्ठ'

कस्तर्हि सज्ञा नास्तीत्यस्यार्थ इत्यत आह—**मात्रेति** । मात्राभिर्विषयेन्द्रियाद्याकारपरिणतैर्भूतैरससर्ग परमस्य भवति न स्वरूपविनाशः । **यद्वै तन्न पश्यतीति** । वै इत्यवधारणे । यत्तन्न पश्यत्येवेति मन्यस इत्यर्थः । पश्यन्वै तन्न पश्यति । तत्र हेतुः—**नहीति** । हि यस्माद् द्रष्टुरात्मनो दृष्टेः स्वरूपभूताया इति वा पूर्वोक्तप्रकारेण वा विपरिलोपो विघातो न विद्यत इत्यन्वयः । तत्रापि हेतुः—**अविनाशित्वादिति** । स्वरूपविनाशाभावात्, अथवा अविनाशित्वमपक्षयरहितत्वमित्येव विशेषविज्ञानाभावेऽपि स्वरूपविज्ञानस्य नित्यत्वप्रतिपादनादित्यर्थः । **जागरादीति** । स वा एष इत्यादिना जागराद्यवस्थोपन्यासपूर्वकमित्यर्थः । **यत्रेति** । यत्र यस्मिन्ननन्ते सुप्तो जीवः न कचन काम जाग्रत्स्वप्नयोर्ये कामास्तेषु न कमपि काम कामयते तथा न कचन स्वप्नम् । स्वप्नशब्देन तद्विषयाणि ज्ञानान्यभिधीयन्ते । जाग्रद्दर्शनमपि मिथ्याविषयत्वात्स्वप्नशब्देन निर्दिश्यते । न कचनेत्यत्र चनशब्दोऽप्यर्थः । कमपि स्वप्नं न पश्यतीत्यर्थः । **सम्प्रसादावस्थानमिति** । सम्प्रसादः सुषुप्त्यवस्था, सम्यक्प्रसीदत्यस्या जीवस्वरूपमिति व्युत्पत्त्या, तस्यामवस्थान सम्प्रसादावस्थानं तदवतार्योत्तरत्रेति वाक्यशेषः । भवत्वेव ततः किमित्यत आह—**ईश्वरपक्ष इति** । अनुपपत्त्यन्तर चाह—**सुषुप्त्यादीति** । ननु ज्ञानमात्मा न भवति गुणत्वाद्रूपवत्तथा ज्ञानमात्मा न भवत्यनित्यत्वादित्यादिप्रयोगविरोधात्कथमात्मनो ज्ञानात्मकत्वमित्यत आह—**यत्त्विति** । यस्य हि नित्यात्मस्वरूपताभिमता विज्ञानस्य, तस्य कथ गुणत्वमनित्यत्वं वाभिमतमित्यर्थः । गुणत्वसाधकानुमान शङ्कते—**अथेति** । अत्रापि सबन्धिमात्रनिष्ठस्य सबन्धस्य गुणनिष्ठत्वमन्यतरसंबन्धिनि गुणत्वमन्तरेण न घटते घटस्य च गुणत्वमुभयानभिमतमिति ज्ञानस्य गुणत्वसिद्धिः, यदि च ज्ञानस्य गुणत्व न स्यात्तदा

की आशङ्का करके "अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा मात्राऽससर्गस्त्वस्य भवति । यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति । नहि द्रष्टुर्द्रष्टे विपरिलोपो विद्यते अविनाशित्वाद्"—इत्यादि से अविनाशिता का उपपादन किया गया । ज्योतिर्ब्राह्मण से जाग्रत आदि अवस्थाओ का उपन्यास करते हुए "अथ यत्र सुप्तो न कचन काम कामयते न कचन स्वप्नं पश्यति"—इस प्रकार सुषुप्ति अवस्था की भूमिका रचकर "यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति नहि द्रष्टुर्द्रष्टेर्विपरिलोपो विद्यते"—इस से विशेष विज्ञान का अभाव होने पर भी स्वरूपविज्ञान की नित्यता कही गई है । ईश्वरपक्ष मे विशेष विज्ञान का अभाव कहा नही जा सकता, क्योकि वह सदा सर्वज्ञ है और उसमे सुषुप्त्यादि अवस्थाओं का भी अभाव है । अत ज्ञान और आत्मा का सम्बन्ध अनात्मनिष्ठ है—यह अनुमान आश्रयासिद्धि-ग्रस्त है, यही निश्चित हुआ । यह जो अनुमान कि 'गुणत्व और अनित्यत्व-वाला होने से ज्ञान, आत्मा नही है ।' वह अन्यतरमत ( वेदान्तिमत ) मे असिद्धि होने के कारण निरस्त हो जाता है ।

यदि कोई शङ्का करे कि 'घट और उसके ज्ञान का सम्बन्ध गुणनिष्ठ है, ज्ञाननिष्ठ होने से,

१. ईशस्य मोक्षसुषुप्त्याद्यभावात्, तत्र ईश्वरज्ञानस्य नित्यत्वप्रतिपादनमसगतमित्याकारमित्यर्थः ।

ज्ञाननिष्ठत्वात्सत्तावद्विपक्षे च जानामीति प्रत्ययस्य निरालम्बनत्वप्रसंगो बाधक इति चेत्, मैवम्; रूपतज्ज्ञानयोः संबन्धो द्रव्यनिष्ठो ज्ञाननिष्ठत्वात्सत्तावदिति प्रतिप्रयोगसम्भवात्, जानामीति चानुभवस्यान्त करणवृत्त्याश्रयप्रमातृविषयतयाप्युपपत्तेः। 'विज्ञानमानन्दं ब्रह्म' 'प्रज्ञानं ब्रह्म' 'ज्ञानघन एवे'त्यादिश्रुतिभ्यश्चात्मनश्चिद्रूपत्वसिद्धिः। नचाधिकरणपरतया ज्ञान-शब्दो योज्य, अद्वैतश्रुतिविरोधात्। तस्मात्साधूक्त चिद्रूपत्वादिति।

अकर्मत्वाच्चात्मन. स्वप्रकाशत्वम्, वेद्यत्वे स्वाश्रयज्ञानविषयतया कर्मकर्तृभावविरोध-प्रसङ्गात्। न च सुखादिविशिष्टस्याहं सुखीत्यादिज्ञानकर्मत्व, केवलस्य च कर्तृत्वमित्याका-रभेदादविरोधो, गमनादिक्रियास्वपि केवलस्य कर्तृत्वं गमनविशिष्टाकारेण च कर्मत्वमित्या-कारभेदेनाविरोधात्कर्मकर्तृभावविरोधस्य सर्वत्रोच्छेदप्रसङ्गात्।

---

जानामीति ज्ञानाश्रय विषयीकुर्वतः प्रत्ययस्य निर्विषयताऽपतेत्, तत्स्वरूपत्वे- तत्प्रत्याधारतायोगादिति बाधकमाह—विपक्षे चेति। इदच प्रतिप्रयोगेण निरुन्धे—मैवम्। रूपेति। अत्रापि रूपस्य द्रव्यत्वमु-भयवादिविप्रतिषिद्धमिति ज्ञानस्य द्रव्यत्वसिद्धि। यत्तु बाधकमुक्त तदन्तःकरणवृत्तिमादाय शाम्यती-त्याह—जानामीति। तदेवमनुमानाच्चिद्रूपत्वमुक्त्वा तदनुग्राह्यमागममप्याह—विज्ञानमिति। यत्तु मानमनोहरकृतोक्त "ज्ञानशब्दश्च ज्ञायते अस्मिन्नित्यधिकरणवचन" इति तद्दूषयति—नचेति। 'करणा-धिकरणयोश्चे'त्यधिकरणेऽपि ल्युड्विधानादित्यर्थ.।

द्वितीय हेतु विवृणोति—अकर्मत्वाच्चेति। नन्वकर्मत्वमेव कथ यावता मानसप्रत्यक्षोऽयमिष्यत इत्यत आह—वेद्यत्व इति। स्वाश्रय यज्ज्ञान तद्विषयतयेत्यर्थः। स्यादेतदुपाधिवशात्किमित्यनेकाकारता न स्यात्। दृश्यत ह्येकस्यापि देवदत्तस्यानेकाकारता पिता भ्राता मातुलः श्याल इत्यादिः। सभवति चात्रापि सुखादिविशिष्टाकारेणाहं सुखीति ज्ञेयत्व, केवलस्य तु ज्ञातृत्वमित्युपाधिभेदस्तत्राह—नच सुखा-दीति। पित्रादीना स्वरूपेणैकत्वेऽपि प्रतियोगिनानात्वात्सभवति तदपेक्षयानेकत्वकल्पनाविषयत्वमिह तूपाधि-

---

जैसे–सत्ता, विपक्ष में 'मैं जानता हूँ'—इस ज्ञानाश्रयता-विषयिणी प्रतीति की निरालम्बनता का प्रसग ही बाधक है। तो यह शङ्का नही करनी चाहिए, क्योकि वहाँ 'रूप और उसके ज्ञान का सम्बन्ध द्रव्यनिष्ठ है, ज्ञाननिष्ठ होने से जैसे–सत्ता'–यह सत्प्रतिपक्ष दिया जा सकता है। और 'मैं जानता हूँ'—इस अनुभव की उपपत्ति, अन्त करण-वृत्ति रूप ज्ञान की प्रमातृनिष्ठ आश्रयता को विषय कर लेने से, हो जाती है। "विज्ञानमानन्द ब्रह्म", "प्रज्ञानं ब्रह्म", "ज्ञानघन"—इत्यादि श्रुतियो से भी आत्मा में चिद्रूपत्व की सिद्धि होती है। 'ज्ञान' शब्द ( ज्ञायतेऽस्मिन्निति ) अधिकरणार्थक मानकर "विज्ञानं ब्रह्म" का अर्थ ज्ञानाधिकरण ब्रह्म यह तात्पर्य नही बताया जा सकता, क्योकि अद्वैत श्रुतियो का विरोध होगा। अत आत्म-स्वप्रकाशत्व-साधन मे सर्वथा निर्दुष्ट हेतु है—चिद्रूपत्व।

( २ ) 'अकर्मत्व' हेतु से भी आत्मा मे स्वयंप्रकाशत्व सिद्ध होता है। आत्मा में अकर्मत्व न मानकर यदि वेद्यत्व ( ज्ञान की कर्मता ) माने, तब तो स्वाश्रित ज्ञान की विषयता रहने के कारण कर्मत्व और कर्तृत्व—इन दो विरोधी धर्मों की वहाँ प्राप्ति होगी [ अर्थात् ज्ञानरूप क्रिया का आश्रय होने से आत्मा कर्ता और उसी क्रिया से जन्य विषयता रूप फल का आश्रय होने से कर्म होगा ]। यदि शङ्का हो कि "मै सुखी हूँ"—इस प्रकार के ज्ञान की कर्मता रहती है—सुखविशिष्ट आत्मा में, और उस ज्ञान की कर्तृता रहती है—शुद्ध आत्मा मे, इस प्रकार आकार भिन्न हो जाने से कोई विरोध नहीं रह जाता। तो यह शङ्का उचित न होगी, क्योकि गमनादि क्रियाओं मे भी केवल ( आत्मा ) में कर्तृत्व तथा गमनविशिष्ट में कर्मत्व मानकर आकार में भेद डालकर विरोध हटाया जा सकता है। फिर तो कर्मत्व और कर्तृत्व का विरोध ही संसार से उठ जायगा।

तथापि नात्मन' स्वप्रकाशत्वं, तत्तदर्थसंवेदनाश्रयतयापि स्फुरणोपपत्ते । न चास्य क्रियाफलभाजोऽपि कर्मत्वं, परसमवेतक्रियाफलशालित्वाभावात् । न चैतन्मानसप्रत्यक्षेऽपि समान, जानाते सदा सकर्मकतया कर्मणा व्याप्तस्य तन्निवृत्तौ निवृत्तेरिति चेत्, मैवम, संविद्व्यतिरिक्तस्य संवित्कर्मत्वेनैवापरोक्षत्वनियमादात्मन कर्मत्वाभावे तदनुपपत्ते । संवेदिता संविदाश्रयतयाऽपरोक्षो न भवति अपरोक्षत्त्वात्संवेदनवदिति । न च विपक्षे बाधकतर्काभाव, स्वसत्तायां प्रकाशव्यभिचारवत प्रकाशान्तराधीनव्यवहारवत्त्वे कदाचित्संशयादिगोचरत्व-

विशिष्टस्यैव तं[1] प्रति कर्तृत्व कमत्व चेति विप्रतिषिद्ध नियमेनानुपलब्धेर्गमनादावप्येवंविधोपाधिभेदेनाविरोधप्रसङ्गादित्यर्थं ।

अत्र प्राभाकरः शङ्कते—तथापीति । यद्यप्यकर्मत्व तथापि तत्तदर्थविषयाणि यानि संवेदनानि तदाश्रयतया स्फुरणरूपतामन्तरेणापि स्फुरणोपपत्तेरिति योजना । पूर्वं चिद्रूपता त प्रति साधिता । अत्र त्वकर्मत्वस्यान्यथोपपत्ति परिह्रियत इति न जामिता । ननु कर्मतैवास्य किमिति नास्ति ज्ञानक्रियाफलभाक्त्वात्क्रियाफलभाजश्च कर्मत्वादिति नैयायिकमतमाशङ्क्य स एव निषेधति—नचास्येति । न क्रियाफलभाक्त्वमात्र कर्मत्वम्, नगर गच्छति चैत्र इत्यत्र चैत्रस्यापि कर्मत्वप्रसङ्गात् । तस्मात्परसमवेतक्रियाफलशालित्व कर्मत्वं, तच्चास्य नास्ति स्वसमवेतत्वाज्ज्ञानक्रियाया इति भाव' । ननु तर्हि संविदाश्रयतयेति किमित्ययमाग्रह, मानसप्रत्यक्षत्वेऽपि परसमवेतक्रियाफलविकलतया कर्मताऽभावेन कर्मकर्तृविरोधाभावादित्यत आह—नचैतदिति । तथा सति ज्ञानतामेव जह्यात् आत्मन कर्मत्वाभावादन्यस्य च कर्मणोऽनङ्गीकारादित्यर्थ. । तदेतन्निरस्यति—मैवमिति । यदि संविद्व्यतिरिक्तः स्यात्तर्हि कर्मतयैवापरोक्षव्यवहारविषयः स्याद्विषयेषु तथाव्याप्तेस्तेन कर्मत्वं व्यावर्तमान संविद्व्यतिरिक्तत्वे सत्यपरोक्षत्व व्यावर्तयतीत्याह—संविदिति । संविदाश्रयतयाऽपरोक्षत्वे चानुमानविरोधमाह—संवेदितेति । बाधनिवृत्त्यै प्रथमविशेषण, परप्रसिद्ध्यापि प्रतियोगिप्रसिद्धिः । एवं च सति संविदधीनप्रकाशत्वतदप्रकाशत्वविकल्पेन यदत्र कैश्चिद्दूषणमुक्तं तदप्यनवकाशीकृतम् । यत्तु तैरेवोक्त विपक्षबाधकतर्काभावादिति तत्र विपक्षबाधकतर्कमाह—स्वसत्तायामिति । प्रकाशान्तराधीनव्यवहारवत्त्वे नित्यज्ञानत्वानङ्गीकारात्स्वसत्ताया प्रकाशव्यभि-

शङ्का—प्रभाकर का मत है कि यद्यपि आत्मा मे अकर्मत्व है, तथापि स्वप्रकाशत्व नही, क्योकि तत्तदर्थविषयक ज्ञान का आश्रय होने से ( अस्वप्रकाश आत्मा का ) स्फुरण बन जाता है । ज्ञान-क्रिया-जन्य फल की आश्रयता रहने पर भी उसमे कर्मत्व नही आता, क्योकि उसमे अन्य-समवेत क्रिया-जन्य फल की आश्रयता नही ( किन्तु स्व-समवेत क्रिया-जन्य फल की ही आश्रयता है ) । 'इस प्रकार अकर्मत्व का समर्थन तो आत्मा की मानस-प्रत्यक्षता में भी समान है'—यह सन्देह नही करना, क्योकि मानस ज्ञान की विषयता मानने पर आत्मा मे कर्मत्व मानना ही पडेगा, कारण यह कि 'ज्ञान' क्रिया के सदा सकर्मक होने से ज्ञानत्व, कर्म से व्याप्त होता है । कर्म रूप व्यापक की निवृत्ति से ज्ञानत्व रुप व्याप्य की भी ( मानस ज्ञान मे से ) निवृत्ति हो जायगी ।

समाधान—प्रभाकर मत युक्त नही, क्योकि यह नियम है कि ज्ञान से भिन्न पदार्थ का अपरोक्ष तभी होगा, जब उसमे ज्ञान का कर्मत्व रहे । ( प्रभाकर-मतमे आत्मा भी ज्ञान से भिन्न है ) उसमे कर्मत्व न होने पर अपरोक्षता ही न बन सकेगी । 'ज्ञाता ज्ञानाश्रयता के द्वारा कभी अपरोक्ष नही हो सकता, अपरोक्ष होने से जैसे—ज्ञान' इस अनुमान से भी प्रभाकर-मत कट जाता है । 'इस अनुमान मे विपक्ष-बाधक तर्क नही,—यह सन्देह नही कर सकते, क्योकि यदि आत्मा का व्यवहार ( स्फुरणादि ) किसी दूसरे ज्ञान के अधीन होगा, तब उस ज्ञान से वियुक्त भी कभी आत्मा होगा । फिर तो कदाचित् आत्मा के विषय में संशय भी होना चाहिए—अहं वा ? अनहं वा ?—यह

१. त प्रति–प्रकाश प्रति । सम्प्रतीति पाठेतु एकस्मिन्नेव क्षणे इत्यर्थ. २. सहशचिन्तनप्रयुक्तमालस्यम्–जामिता

**प्रसङ्गस्यैव बाधकत्वात् , आत्मनो घटादिज्ञाने भासमानत्वाङ्गीकाराच्च घटादिवदेव चाक्षुषत्वमपि प्रसज्येत, तज्जनितज्ञाने भासमानताया एव तत्त्वात् , नीरूपस्य च द्रव्यस्य चाक्षुषत्वायोगात्, आत्मा चाक्षुषज्ञाने न प्रकाशते अरूपिद्रव्यत्वादाकाशवदिति प्रतिप्रयोगसंभवाच्च।**

**'अत्रायं पुरुष' स्वयञ्ज्योति'रिति श्रुतेश्चात्मा स्वप्रकाश । ननु स्वप्नावस्थामधिकृत्येदमाम्नायते, तत्र मनसोऽनुपरमान्न स्वयंज्योतिष्ट्वम् । न च मनसो गजाद्याकारपरिणतस्यावभासकर्मतयैवावस्थानात्करणान्तराभावाच्चात्मैव स्वयंज्योति' स्यादिति शङ्कनीयम् , मनसश्चक्षुरा-**

चारवत इति योजना । तेन च सुखादिव्यावृत्ति । यत्तु तैरेवाद्रष्टृत्वोपाविहतत्वाच्चेत्युक्त तदसत्पक्षेतरत्वा[1]त्पर्वतेतरत्वादिवद्व्यतिरेकानिर्णयेन[2] साध्याव्यापकत्वात्, तर्कान्तरविरोधमाह—**आत्मन इति** । आत्मनो घटादिवदेव चाक्षुपत्वमपि प्रसज्येत घटादिज्ञानेषु भासमानताङ्गीकारादिति योजना । ननु चक्षुरसयुक्तस्य कथ चाक्षुषत्वमित्यत आह—**तज्जनितज्ञान इति** । अन्यथा चक्षु सयुक्ततया परमाण्वादेरपि चाक्षुषत्वप्रसङ्गात्सोय देवदत्त इति प्रत्यभिज्ञाने तत्ताया अचाक्षुषत्वापत्तेश्च, सर्वगतात्मवादिना तस्यापि[3] भावादिति भावः । भवतु तर्हि चाक्षुषत्वमपि, **नच** नीरूपस्य चाक्षुषत्वाभाव., रूपादौ व्यभिचाराद् द्रव्यत्वविशेषणेऽपि वियदादौ भाट्टाना[4] व्यभिचारादित्यत आह—**नीरूपस्य चेति** । किमय समयबलादिति, न, प्रमाणबलादित्याह—**आत्मा चाक्षुषज्ञान इति** । रूपतत्सामान्यादिषु व्यभिचारनिवारणाय द्रव्यग्रहणम् । घटादिव्यभिचारविघटनायारूपिग्रहणम् । नच भाट्टाना साध्यविकलता दृष्टान्तस्य, तत्प्रत्यक्षत्वे प्रमाणाभावात्प्रत्युताकाशमचाक्षुषमरूपिद्रव्यत्वात्सर्वदाऽस्पर्शवद्द्रव्यत्वान्मनोवत्सर्वगतत्वादात्मवदित्यादिप्रयोगसभवाच्च । नचान्तरेत्वमुपाधिर्गुरुत्वादौ[5] साध्याव्याप्तेः ।

तृतीय हेतु विवृणोति—**अत्रायमिति** । शङ्कते—**नन्विति** । अयमर्थ —न तावत्स्वप्नावस्थाया स्वप्रकाशत्व श्रुत्या दर्शयितु शक्यम् , इन्द्रियस्य मनसो विद्यमानतया व्यतिरेकनिर्णयाभावादन्यथा[6] जागरेऽपि तद्व्युत्पादनसभवेन स्वप्नावस्थाश्रयणवैफल्यादिति सिद्धान्तिमतमाशङ्क्य दूषयति—**नच मनस इत्यादिना शङ्कनीयमित्यन्तेन** । तत्र हेतुमाह—**मनस इति** । यदि हि मनसो दृश्यतयावस्थान

**यह विपक्ष-बाधक तर्क है । दूसरा तर्क भी है कि प्रभाकर घटादि के ज्ञान में आत्मा का भान मानते है, फिर तो घटादि के ही समान आत्मा मे चाक्षुषत्व भी प्राप्त होगा, क्योकि चक्षु-जनित ज्ञान की भासमानता ही चाक्षुषत्व है । किन्तु नीरूप द्रव्य मे चाक्षुषत्व होता नही । "आत्मा चाक्षुष ज्ञान मे प्रकाशित नही हो सकता, अरूपी द्रव्य होने के कारण, जैसे—आकाश"—यह विरोधी प्रयोग भी हो सकता है ।**

**( ३ ) "अत्राय पुरुष स्वयंज्योति " ( इस अवस्था में यह आत्मा स्वयंप्रकाश होता है । बृह० २।३।९ । )—इस श्रुति से भी आत्मा स्वप्रकाश सिद्ध होता है ।**

**शङ्का—स्वप्न अवस्था के प्रकरण में उक्त श्रुति आई है वहाँ ( भी आत्मा का प्रकाशक ) मन बरावर विद्यमान है, फिर आत्मा मे स्वयप्रकाशता नही रहो । यदि कहा जाय कि स्वप्न मे मन गजादि आकार से परिणत होकर स्वाप्नज्ञान का कर्म ही बना होता है, करण नही और दूसरा भी कोई ( ज्ञान का ) करण वहाँ है नही, अत आत्मा स्वयंप्रकाश ही होता है । तो ऐसा नही कह**

१. वाधानुन्नीतपक्षेतरत्वादित्यर्थः । अस्योपाधित्वं कुतो नेत्यत आह—व्यतिरेकानिर्णयेनेति । साध्याभावोपाध्यभावयोरेकत्रानिश्चयेनेत्यर्थ. । २. साध्याव्यावर्त्तकत्वादित्यपि पाठः । ३. तस्यापि = आत्मनि चक्षुःसयोगस्यापि । ४ भाट्टैः परकीयप्रभादिरूपेण गगनादौ चाक्षुषत्वोपगमादित्यादि. । ५. शरीरान्तरत्वमित्यर्थ । ६. मनोरूपप्रकाशाभावनिश्चयाभावादित्यर्थ. ।

दिवदिन्द्रियत्वेन प्रत्यक्षत्वानुपपत्ते.। तस्मान्मन संयोगजन्यज्ञानाधारत्वेन स्वयंशब्दवान्य: आत्मा ज्योतिरित्यभिधीयते, ज्योति साधनत्वाद्वा 'वाचैवायं ज्योतिषा', 'अग्निनैवायं ज्योतिषे' त्येतत्प्रकरणपठितवागग्न्यादिवत्, नत्वात्मा स्वयज्योतिरिति, द्रव्यस्य गुणत्वानुपपत्तेरिति चेन्मैवम्, यत:—

'संबन्धस्याश्रयत्वेन विज्ञानासमवायिन:।
इन्द्रियत्वाविघाताच्च मन प्रत्यक्षमात्मवत् ॥४॥

मन' प्रत्यक्षं ज्ञानासमवायिकारणाधारत्वात् आत्मवदित्यनुमानान्मनसोऽपि प्रत्यक्षत्वोपपत्ते.। न च प्रत्यक्षत्वे सति इन्द्रियत्वव्याकोप', तस्य साक्षिवेद्यस्याप्यैन्द्रियकज्ञानाविषयत्वेनेन्द्रियत्वाव्याकोपात्। तस्मान्निरस्तसमस्तकलङ्कावकाशमात्मन' स्वप्रकाशत्वम्। तच्चात्मरूपमवि-

स्यान्न स्यात्तर्हि करणत्व नत्वेतदस्ति। मनस इन्द्रियत्वेनायोगिन प्रत्यतीन्द्रियत्वात्। शरीरसयुक्तमतीन्द्रियं साक्षात्प्रतीतिसाधनमितीन्द्रियलक्षणान्मनोऽतीन्द्रियमिन्द्रियत्वाच्चक्षुर्वदिति प्रयोगसभवाच्चेत्यर्थः। कस्तर्हि श्रुतेरर्थ ? इत्यत आह—**तस्मादिति**। ज्योतिर्लक्षणप्रकाशाधिकरणत्वाज्ज्योतिरित्यभिधीयते। ज्योतिःसाधनतया वा ज्योति'शब्द', वागादिवदित्यर्थः। उपपत्तिविरुद्धश्चायमर्थ इत्याह—**द्रव्यस्येति**। ज्ञानस्य गुणत्वादात्मनो द्रव्यत्वाच्चेत्यर्थः। तदेतदप्यपाकरोति—**मैवमिति**। हेतुमवतारयति—**यत इति**। श्लोकेनानुमानमाह—**संबन्धस्येति**। मन' प्रत्यक्ष विज्ञानासमवायिनो विज्ञान प्रत्यसमवायिकारणस्य संबन्धस्याश्रयत्वेन हेतुनात्मवदित्यनुमान सगृहीतम्। यत्तु प्रत्यक्षत्वे इन्द्रियत्वव्याघात इति तत्राह—**इन्द्रियत्वाविघाताच्चेति**। नचेन्द्रियाजन्यायोगिसाक्षात्काराविषयो मन इन्द्रियत्वाच्चक्षुर्वदिति प्रयोग'। नैयायिकादेरप्रसिद्धविशेषणत्वादुक्तहेतुव्यतिरेकस्योपाधित्वाच्च। सगृहीतमनुमान विवृणोति—**मन इत्यादिना**। ज्ञानासमवायिकारणमात्ममन सयोगः। ज्ञानाधारत्वादित्युक्ते असिद्धिस्तथाऽसमवायिकारणाधारत्वादित्युक्ते परमाण्वादिषु व्यभिचारस्ततो विशेषणद्वयमिद, इन्द्रियत्वाविघाताच्चेति विवृणोति—**नचेति**। ननु कथ ज्ञानस्वरूपस्यात्मनो ज्योति शब्दवाच्यता यावता भूतविशेष एवाय ज्योति.शब्दो व्युत्पन्न इत्यत आह—**तच्चेति**। तमोनिवर्तनेनावभासके हि ज्योति शब्दः प्रयुज्यते तदिहापि समानमित्यर्थः।

सकते, क्योकि मन भी चक्षु-आदि के समान ( अतीन्द्रिय ) इन्द्रिय है, अत ( गजादि रूप से ) चाक्षुष प्रत्यक्ष की विषयता उसमे नही रह सकती। इसलिए मन सयोग से जन्य ज्ञान का आधार होने से ही 'स्वयं' शब्द का वाच्य आत्मा 'ज्योति' कहा जाता है। अथवा ज्योति का साधन होने से। जैसे कि उसी प्रकरण में "वाचैवायं ज्योतिषा" ( वाग्रूप ज्योति के द्वारा—बृह० ४।३।५ ) "अग्निनैवायं ज्योतिषा" ( अग्निरूप ज्योति के द्वारा —बृह० ४।३।४ )—इन श्रुतियो मे ज्योति के साधनभूत वाग आदि को ज्योति कहा गया है। आत्मा को स्वयं ज्योति नही कहा गया, क्योकि द्रव्य ( आत्मा ) गुण ( ज्योति = ज्ञान ) रूप नही बन सकता।

सिद्धान्ती—ऐसा मत कहिए, क्योकि विज्ञान के असमवायिकारण सम्बन्ध का आश्रय होने से मन प्रत्यक्ष ही है और उसमे इन्द्रियत्व भी अक्षुण्ण है। यहाँ 'मन प्रत्यक्ष है, ज्ञान के असमवायिकरण का आधार होने से, जैसे–आत्मा'—इस अनुमान से मन मे प्रत्यक्षता उपपन्न है। मन के प्रत्यक्ष होने पर भी इंद्रियत्व का बाध नहीं होता, क्योकि मन साक्षिवेद्य होने पर भी इन्द्रिय-जन्य ज्ञान का विषय न होने से अतीन्द्रिय है। अत. उक्त स्वप्रकाशत्वानुमान समस्त कलङ्को से विमुक्त है। आत्मस्वरूप वह ज्ञान अविद्या-कल्पित प्रपञ्च का भासक और अविद्यारूप

१. गृहीतशक्तिक इत्यर्थः। २. आत्मन्यपीत्यर्थः।

द्यापरिकल्पितप्रपञ्चावभासकत्वादविद्यातमोनिवर्तकत्वाच्च ज्योतिःशब्दाभिधेयं, यथा भावरूप-शार्वरादितमोनिवर्तनेन जगदवभासकमादित्यादि ज्योतिरिति सिद्धम् ।

ननु तमो न भावरूपं, भावेष्वनन्तर्भावात् । तद्धि पृथिव्यादिद्रव्याणामन्यतमत्तद् ? अन्यद्वा स्यात् ? नाद्यः । क्षितिसलिलात्मसु चतुर्दशगुणेषु, तेजसि एकादशगुणे, मातरिश्वनि नवगुणे, मनसि चाष्टगुणे, नभसि षड्गुणे, दिक्कालयोः पञ्चगुणयोरविनाशिनोरनन्तर्भावात् । अन्तर्भावे तु तावद्गुणवत्त्वप्रसङ्गात्, आत्मादावन्तर्भावे नित्यत्वापत्तेश्च ।

नापि द्वितीयो, निर्गुणस्य द्रव्यत्वानुपपत्तौ द्रव्यान्तरत्वस्य सुतरामनुपपत्तेः । नीलोत्प-

'भावाभावातिगाऽविद्यातत्त्वे दृष्टान्तितं तमः ।
वृद्धैस्तदस्य भावत्वं वादेनानेन साध्यते ॥'

भावरूपतमोनिवर्तनेनेत्युक्तं तदिदममृष्यमाणा वैशेषिकादयः प्रत्यवतिष्ठन्ते—**ननु तमो न भावरूपमिति** । हेतुमाह—**भावेष्विति** । षट्पदार्थान्यतमत्वं हि भावत्वम् । तदिह तदन्यतमत्वं व्यावर्तमानं भावत्वमपि व्यावर्तयतीत्यर्थः । तत्र किं द्रव्यान्तर्भूतमुत्तरपञ्चकान्तर्भूतं वा द्रव्यान्तर्भावे पृथिव्यादिनवान्यतमदन्यद्वेति विकल्प्य नवान्तर्भावं निषेधति—**नाद्य.** । **क्षितीति** । तत्र रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वसंस्काराश्चतुर्दश क्षितिगुणाः, गन्धरहिताः स्नेहसहितास्ते एव चतुर्दश सलिलगुणाः, सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्यसंस्काराश्चतुर्दशात्मगुणाः, आत्मा चात्रापरः । रूपस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कारा इत्येकादशगुणास्तेजसः, रूपद्रवत्वहीनास्ते एव नव गुणा वायोः । स्पर्शरहितास्ते एवाष्ट मनसो गुणाः । एतेनेश्वरोऽपि गृहीतः । शब्दसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागाः षड् गगनगुणाः । शब्दवर्जितास्ते एव पञ्च दिक्कालयोः, एतेष्वनन्तर्भावादित्यर्थः । **ननु** किमित्यनन्तर्भाव इत्यत आह—**अन्तर्भावेत्विति** । यस्मिन्यस्यान्तर्भावोऽभिमतस्तस्य यावन्तो गुणास्तावद्गुणत्वप्रसङ्गादित्यर्थः । नित्यद्रव्यान्तर्भावेऽधिकं दूषणमाह—**आत्मादाविति** । तथाचालोकानिवर्त्यत्वमिति शेषः । नवत्वहिष्ट्वं दूषयति—**नापि द्वितीय इति** । तत्र वक्तव्यं किं गुणवद् ? उत निर्गुणमिति ? निर्गुणपक्षं दूषयति—**निर्गुणस्येति** । गुणवत्त्वस्य द्रव्यलक्षणत्वेन तद्रहितस्य द्रव्यत्वव्याघातादित्यर्थः । प्रथमं शङ्कते—**नीलेति** । रूपपरिमाणगुणवत्त्वोपलम्भादित्यर्थः । परिहरति—**नेति** । पृथिव्या हि नीलरूपगन्धादिभिर्व्याप्तमतस्तन्निवृत्तौ तमसि नील-

**अन्धकार का निवर्तक होने से 'ज्योति' शब्द से पुकारा जाता है । जैसे रात के भावरूप अन्धकार के निवर्तक एवम् जगद् के भासक सूर्यादि ज्योति कहे जाते हैं ।**

**पूर्वपक्ष—अन्धकार भावरूप नही हो सकता, क्योकि परिगणित भावपदार्थों के अन्तर्गत नही आता—उसका द्रव्य मे अन्तर्भाव यदि माने, तो पृथिवीआदि नव द्रव्यों मे अन्यतम है ? या कि उनसे भिन्न ? प्रथम पक्ष उचित नही, क्योकि चौदह गुणो वाले पृथिवी जल और आत्मा मे, ग्यारह गुणो वाले तेज मे, नव गुणवाली वायु में, आठ गुणोवाले मन में, छह गुणोवाले आकाश में, पाँच गुणों वाले अविनाशी दिशा और काल मे, अन्तर्भाव नही हो सकता, क्योकि उनमें अन्तर्भाव मानने पर उनके उतने ही गुणो की ( अन्धकार मे ) आपत्ति होगी, एवं आत्मादि नित्य द्रव्यों के अन्तर्गत मानने पर नित्यता की आपत्ति होगी । द्वितीय ( परिगणित भावो से भिन्न ) पक्ष भी युक्तियुक्त नही, क्योकि निर्गुण पदार्थ मे द्रव्यता ही नही होती, फिर तो भिन्न द्रव्य हो ही कैसे सकता है ? यदि कहे कि नीलकमलदल—जैसा श्याम और महान् ( महत्त्व गुणवाला ) प्रतीत होनेवाला**

१. सद्रूप वासद्रूपत्वधर्मविधुरे अविद्यास्वरूपे निवर्तनीयत्वे पद्मपादिकाकृदादिभिस्तमोऽस्य दृष्टान्तत्वेनोपात्तं तस्मात्तस्य भावत्वमनेन प्रकरणेन साध्यते इतिभावः ।

लदलश्यामं महच्चोपलक्ष्यमाणं तम' कथ निर्गुणमिति चेन्न । नीलरूपस्य गन्धाद्येकार्थसमवायिनस्तद्व्याप्तस्य तदभावे भावायोगात् । अपि च द्रव्यान्तरत्वे न तावन्निरवयवत्वं, नित्यत्वेनालोकानिवर्त्यत्वापत्त । सावयवत्वे च तदारम्भकाणा स्पर्शवत्त्वे तस्मिन्नपि स्पर्शोपलम्भप्रसङ्गादस्पर्शवत्त्वे च तेषा मनोवद्द्रव्यारम्भकत्वायोगात् । नापि गुणा , रूपान्तर्भावे पृथिव्यादित्रितयगुणत्वे च तत्सहचारिणा गुणान्तराणामप्युपलब्धिप्रसङ्गात् । नापि नभोनभस्वतोर्गुणः, तयोररूपत्वात् । नापि दिक्कालमनसाम्, एतेषा विशेषगुणरहितत्वात् । नाप्यात्मन , तस्य बाह्येन्द्रियप्रत्यक्षगुणानधिकरणत्वात् । नापि कर्म, संयोगविभागयोरकारणत्वात् । नापि सामान्य-

रूपमपि निवर्तेतेत्यर्थ । भावायोगादिति पदच्छेदः । भङ्ग्यन्तरेणापि द्रव्यान्तरत्व दूषयति—**अपि चेति** । तत्कि निरवयवमुतावयवारभ्यम् ? नाद्य इत्याह—**न तावदिति** । निरवयवद्रव्यस्यात्मवन्नित्यत्वादित्यर्थः । द्वितीयेऽपि कि स्पर्शवदारभ्य ? तद्रहितारभ्य वा ? प्रथमे प्राह—**तदारम्भकाणामिति** । समवायिकारणगतविशेषगुणस्य कार्ये सजातीयगुणारम्भकत्वनियमादिति भाव । द्वितीय दूषयति—**अस्पर्शवत्त्वे चेति** । यत्स्पर्शरहित न तद्द्रव्यारम्भकं यथा मन इत्यर्थः । उत्तरपञ्चकान्तर्भाव क्रमेण दूषयति—**नापीति** । गुणपक्षेऽपि किं रूपान्तर्भूतमितरान्तर्भूत वा ? आद्येऽपि कि पृथिव्यादित्रयवृत्तीतरवृत्ति वा ? आद्य निराचष्टे—**रूपान्तर्भाव इति** । इतरवृत्तितामपि क्रमेण दूषयति—**नापीति** । नभस्वान्वायुः । **विशेषगुणरहितत्वादिति** । दिक्कालमनसा विशेषगुणशून्यत्वमिति सिद्धान्तादित्यर्थः । चक्षुर्मात्रग्राह्यस्येतरगुणान्तर्भावस्त्वसभवन्निरस्त. । कर्मान्तर्भाव निराकरोति—**नापीति** । सयोगविभागयोरसवायिकारणत्वस्य कर्मलक्ष-

अन्धकार निर्गुण कैसे होगा ? तो यह नही कह सकते, क्योकि गन्धादि का सहवर्ति श्यामरूप गन्धादि का व्याप्य है फिर व्यापक गन्धादि के न होने से अन्धकार मे श्यामरूप कभी रह नही सकता । दूसरी बात यह भी है कि ( नव से ) भिन्न द्रव्य माने जाने पर ( अन्धकार को निरवयव मानेंगे ? कि सावयव ? ) निरवयव तो बन नही सकेगा, क्योकि तब तो नित्य हो जायगा, फिर प्रकाश से मिटाया नही जा सकेगा । सावयव माने जाने पर भी ( उसके आरम्भक ) अवयवो को ( सस्पर्श मानेगे ? कि नि स्पर्श ) सस्पर्श मानने पर उस ( अन्धकार ) में भी स्पर्शकी उपलब्धि प्रसक्त होगी और ( आरम्भक अवयवो को ) नि स्पर्श मानने पर उन (नि.स्पर्श अवयवो ) को वैसे ही द्रव्य का आरम्भक नही माना जा सकेगा, जैसे मन को ।

अन्धकार को गुण भी नही माना जा सकता—यदि उसे गुण माने तो रूप में उसका अन्तर्भाव होगा ? या कि दूसरे गुणों मे ? रूप मे अन्तर्भाव मानने पर वह किसका गुण होगा ? पृथिवी, जल, तेज— इन तीनो का हो नही सकता, क्योकि फिर तो उनके सहचारी गन्धादि गुणो की भी उपलब्धि होनी चाहिए । आकाश और वायु का गुण भी नही बन सकेगा, क्योकि वे दोनो ही नीरूप है । दिशा, काल तथा मन का भी गुण नही हो सकेगा, क्योकि उनमे कोई भी विशेष गुण नही रहता [ "रूपरसगन्धस्पर्शस्नेहसांसिद्धिकद्रवत्वबुद्धिसुखदु खेच्छाप्रयत्नधर्माधर्मभावनाशब्दा वैशेषिकगुणा "—इस प्रकार प्रशस्तपादने रूपादि विशेष गुण गिनाए है । इनमे से कोई भी दिशा और काल मे नही रहता ] । आत्मा का भी वह गुण न बन सकेगा, क्योकि आत्मा के गुणो का बाह्य इन्द्रिय से प्रत्यक्ष नही होता । [ किन्तु अन्धकारात्मक रूप का प्रत्यक्ष चक्षु से माना जाता है अत वह आत्मा का गुण कैसे होगा ? ]

अन्धकार को कर्म भी नही कह सकते, क्योकि संयोग और विभाग का कारण नही [ आशय यह है कि सयोग और विभाग के असमवायिकारण को ही वैशेषिको ने कर्म माना है । किन्तु अन्धकार से किसी प्रकार का सयोग या विभाग उत्पन्न नही होता, अत. वह कर्म कैसे होगा ? ]।

विशेषसमवाया ; तेषां व्यक्त्याश्रयसंबन्धिनामुपलब्धिमन्तरेणानुपलम्भनियमात् । न हि सामान्यस्येव व्यक्तिर्विशेषाणामिव चाश्रय' समवायस्येव संबन्धी तमस कश्चिदुपलभ्यते । न चास्य तमस उपलम्भसंभव , तदुपलम्भकाभावात् । न च लोचनमुपलम्भक, तद्व्यापारे तदनुपलम्भापातात् । अस्ति च निमीलितनयनस्यापि तम पश्यामीत्यभिमान । अपि च रूपत्वे रूपवत्त्वे वाऽऽलोकाजन्यचक्षुर्जन्यसाक्षात्कारविषयत्वं न स्यादालोकसहकृतस्यैव चक्षुषस्तत्र सामर्थ्यात् । नापि मनस्तदुपलम्भक, बाह्येन्द्रियनिरपेक्षस्य तस्य बहिरप्रवृत्ते. । तस्मात्षट्स्वपि भावेष्वनन्तर्भावात्तद्भावे वोपलम्भकाभावाच्च, प्रभाभावस्तम इति ।

अत्रोच्यते—'तमालश्यामलज्ञाने निर्बाधे जाग्रति स्फुटे ।
द्रव्यान्तरं तम कस्मादकस्मादपलप्यते ॥५॥

णत्वात्तमसश्च तदभावादित्यर्थ. । सामान्यादित्रयधर्माणामभाव तमसि दर्शयति—**नहीति** । सामान्यत्वे व्यक्तिव्यङ्ग्यत्व, विशेषत्वे चाश्रयप्रतीत्यपेक्षा, समवायत्वे च सबन्धिप्रतीत्यपेक्षा स्यादित्यर्थ । एव भावत्वे नि स्वभावापत्तिमुक्त्वा प्रतीत्यनुपपत्तिमाह—**नचेति** । प्रत्यक्ष तावदनुभूयते । तत् किं चाक्षुषम् ? उत मानस? स्पार्शनादिक त्वनुपलम्भपराहतम् । नाद्य इत्याह—**नचेति** । अस्मत्पक्षे निमीलितलोचनस्यापि सतमसालोचनं सभवति, आलोकाभावस्यान्तरस्य चक्षुषा ग्रहणसभवादालोकानपेक्षत्वाद्भावपक्षे त्वालोकापेक्षाया वक्ष्यमाणत्वात्, पदार्थान्तरस्याप्यान्तरस्य ग्रहणप्रसङ्गाच्चेति भाव' । रूपगुणत्वे रूपवद्द्रव्यत्वे चानुपपत्त्यन्तरमाह—**अपिचेति** । आलोकेनाजन्यश्चक्षुर्जन्यश्च यः साक्षात्कारस्तद्विषयत्व न स्यादस्ति च तदित्यथः । रूपघटादिष्वव्यभिचारायाद्यविशेषणम् , ईश्वरप्रत्यक्षवेद्यस्यास्मदादिस्पार्शनप्रत्यक्षवेद्यस्य च घटादेर्निवृत्त्यै चक्षुर्जन्यग्रहणम् । अस्मत्पक्षेत्वालोकाभावस्यालोकानपेक्षत्वात्प्रत्यक्षप्रतियोगिकतया च प्रत्यक्षत्वान्नानुपपत्तिरिति भावः । मानसत्वं निषेधति—**नापि मन इति** । तमसश्च बहिरुपलब्धेरिति शेष. । उपसहरति—**तस्मादिति** । **तद्भाव** इत्यन्तर्भूतत्वेऽपीत्यर्थः । अयमत्र प्रयोग.—तम.पदमालोकाभाववाचकमालोकानपेक्षचक्षुर्ग्राह्यवाचकत्वादालोकाभावपदवदिति ।

समाधातुमुपक्रमते—**अत्रोच्यत इति** । श्लोकेन प्रमाणमुपदर्शयति—**तमालेति** । तमालवच्छ्या-

सामान्य ( जाति ) विशेष और समवाय के अन्तर्गत भी अन्धकार नही हो सकता, क्योकि व्यक्ति की उपलब्धि के बिना जाति की, आश्रय की उपलब्धि के बिना विशेष की, और सम्बन्धी की उपलब्धि के बिना समवाय की प्रतीति नियमत नही होती ( किन्तु अन्धकार की प्रतीति व्यक्तिआदि की प्रतीति के बिना ही होती है, क्योंकि ) जैसे सामान्य का व्यक्ति, विशेष का आश्रय और समवाय के सम्बन्धी आधार प्रतीत होते है, वैसा अन्धकार का कोई आधार प्रतीत नहीं होता ।

भावरूप मानकर अन्धकार की प्रतीति भी सम्भव नहीं, क्योकि उसका उपलम्भक ( प्रत्यायक ) ही कोई नही । यदि कहें कि नेत्र उसका उपलम्भक है, तो ऐसा नही कह सकते, क्योंकि फिर तो नेत्र के अव्यापृत ( बन्द ) होने पर उसकी प्रतीति नहीं होनी चाहिए । किन्तु नेत्र बन्द करने वाले को भी यह भान होता है कि मै अन्दर अन्धकार देख रहा हूँ । दूसरी बात यह भी है कि अन्धकार को रूप या रूपवान् मानने पर वह आलोक-निरपेक्ष चक्षु-जन्य साक्षात्कार का विषय न हो सकेगा, क्योकि आलोक-सहकृत चक्षु का ही सामर्थ्य रूप या रूपवान् के प्रत्यक्ष मे होता है । मन भी उसका उपलम्भक नही हो सकता, क्योकि बाह्य इन्द्रियो की सहायता के बिना वह बाहर के पदार्थो का प्रत्यक्ष नही कर सकता । अत द्रव्य, गुण, कर्म, सामान्य, विशेष, समवाय—इन छह भाव पदार्थो मे अन्धकार अन्तर्भूत नहो हो सकता और अन्तर्भूत होने पर भी उसका कोई उपलम्भक नही मिलता । इसलिए प्रकाश का अभाव ही अन्धकार है ।

सिद्धान्त—'तमाल-पत्र-जैसा श्यामल वह है' इस प्रकार का स्फुट, अबाध प्रत्यक्ष रहते हुए

अस्ति हि तमस्तमालमालाश्यामलमिति प्रतीति । न चाप्रतीतावेवाय प्रतीतिभ्रम , तद्व्यवहारस्य तत्प्रतीतिमन्तरेणानुपपत्ते । न चायमौपचारिक आलोकाभावे, शौक्ल्याभावे पटादौ नीलव्यवहार इवेति युक्तम् , मुख्ये बाधकाभावात् । रूपत्वे रूपवत्त्वे वा आलोकानपेक्षचक्षुर्जन्यज्ञानविषयत्वासभवो बाधक इति चेत्, मैवम् , आलोकविरोधिनस्तमसश्चालोकाभावव्यञ्जनीयतया तन्निरपेक्षचक्षुर्विषयत्वोपपत्तेः, सामर्थ्यस्य कार्यगम्यत्वात् । न चेद्, आलोकाभाव-

मलमिति ज्ञान तमालश्यामलज्ञान तस्मिन्निर्बाधे स्फुटे जाग्रति स्फुरति सति अकस्मान्निष्कारण द्रव्यान्तर तम विशेषणैरुदयत् कस्मादपलप्यते । अयुक्तो ह्यकस्मादपलापोऽतिप्रसङ्गादिति योजना । अत्र जाग्रतीत्यनुत्पत्तिलक्षणमप्रामाण्य परिहृतम् । स्फुट इति सशयः परिहृतः । निर्बाध इति विपर्ययपर्युदासः । श्लोक विवृणोति—**अस्ति हीति** । अत्र प्राभाकरावलम्बिन प्राहु —प्रतीतिरेव तावन्नोदेति । यस्तु प्रतीतिव्यवहार स तु प्रतीत्यभाव एव प्रतीतिभ्रमः । यथाहुरदृष्टौ ध्वान्तदृष्टिवदिति, तन्निराचष्टे—**नचेति** । तत्र हेतुः—**तद्व्यवहारस्येति** । अस्ति तावदेवविध. ससर्गव्यवहार. । स च तादृशज्ञानमन्तरेणानुपपन्न । चेतनव्यवहारस्य ज्ञानपूर्वकत्वनियमादित्यर्थः । यथा चैतत्तथोदर्केऽख्यातिप्रत्याख्याने प्रख्याप्यते । नचालोकादर्शनविषयज्ञानमेव तम पश्यामीति व्यवहारहेतुस्तस्याचाक्षुषतया इदमिति व्यवहाराद्यनुपपादकत्वादिति भावः । एतेनैतदपि परास्तम् । यदाह मानमनोहरस्तमसि प्रमाणाभावमुपन्यस्य, नील तम इति प्रतीतिः प्रमाणमिति चेन्न, नीलबुद्ध्यसिद्धे., उक्त नाथेनापि—"अप्रतीतावपि प्रतीतिभ्रमो मन्दानामिति" । यत्तु तनैवोक्तं—"कथ तर्हि पदप्रयाग इति चेत्सिताभावे उपचारादसित नीलमिति हि लौकिकः प्रयोग" इति । तदेतदनुवादपूर्वक दूषयति—**नचायमित्यादियुक्तमित्यन्तेन** । पटादौ शौक्ल्याभावे नीलस्य व्यवहार इवालोकाभावेऽयमापचारिक इति न युक्तमित्यन्वय. । मुख्ये बाधकाभावादिति तत्र हेतुः । यत्त्वत्रापि तेनोक्त "मुख्ये कि बाधकमिति चेदालोकनिरपेक्षस्य चक्षुषो रूपप्रत्ययजनकत्वानुपपत्ते., कारणाभावे कार्य जायत इति दुर्घट" मिति । तदेतदर्थतः शङ्कते—**रूपत्व इत्यादिना** । परिहरति—**मैवमिति** । रूपवत्त्वेऽपीतररूपवद्वैलक्षण्यमस्तीत्यन्यथासिद्धमित्यर्थ. । नन्वितरत्रालोकसापेक्षस्य चक्षुषः कथ तमन्तरेण तमसि सामर्थ्यमित्यत आह—**सामर्थ्यस्येति** । एतदेव प्रतिबन्द्या समर्थयते—**नचेदित्यादिना** । यदि

अकस्मात् यह कैसे कहा जा सकता है कि अन्धकार द्रव्यान्तर (दशम द्रव्य) नही ?' तमाल के समान श्यामल यह है—ऐसी प्रतीति सभी को होती है । यदि कोई शङ्का करे कि वस्तुत वैसी प्रतीति के अभाव मे ही प्रतीति का व्यवहार (भ्रम) होता है तो ऐसी शङ्का नहीं करनी चाहिए, क्योकि उस प्रतीति के बिना उसका व्यवहार कदापि नही हो सकता । यदि शङ्का हो कि श्यामल है—यह शब्द व्यवहार वैसे ही औपचारिक (गौणीवृत्ति से प्रवृत्त) है, जैसे कि वस्त्र मे शुक्लता के अभाव को 'काला है'—ऐसा कह दिया करते है । तो यह शङ्का भी उचित नही, क्योकि मुख्य व्यवहार का कोई बाधक नही । [ अर्थात् किसी शब्द का गौण व्यवहार तभी माना जाता है, जब कि उस शब्द की मुख्य अर्थ में प्रवृत्ति का कोई बाधक हो । यहाँ मुख्यार्थता मे कोई बाधक नही, फिर 'श्यामल' औपचारिक क्यो होगा ? ] । रूप या रूपवान् में आलोक-निरपेक्ष चक्षु-जन्य ज्ञान की विषयता का सम्भव न होना ही बाधक है—ऐसा नहीं कह सकते, क्योकि आलोक के विरोधी अन्धकार की अभिव्यक्ति आलोकाभाव से ही होती है । अत आलोक निरपेक्ष चक्षु-जन्य ज्ञान की विषयता वहाँ सम्भव है । चक्षु मे ऐसा सामर्थ्य कैसे आया—यह फल से निश्चय होता है । यदि ऐसा न माना जाय, तब आलोकाभावरूप माना जाय, तब अलोकाभावरूप मानकर भी आलोक-निर-

१. विशेषेण तु सुहृदयेनेति पाठान्तरम् । २. अप्रामाण्य त्रिधा भिन्न मिथ्यात्वाज्ञानसशयैः । इति भाट्टोक्ताज्ञानपदोदित तात्त्विकज्ञानस्यानुत्पत्तिलक्षणमित्यर्थः । ३. शालिकनाथेनेत्यर्थः । ४. तम.प्रत्यक्षे इत्यर्थः ।

स्यापि रूपवदभावतया घटाभाववदालोकनिरपेक्षचक्षुर्विषयत्व न स्यात्, तद्विरोधितया तदनपेक्षत्वं तु प्रकृतेऽपि समानमन्यत्राभिनिवेशात्¹ न च निमीलितनयनस्य लोचनव्यापाराभावेऽपि तमस उपलम्भादचाक्षुषत्व, तत्रापि पक्ष्मपटलान्तर्वर्तितमसश्चक्षुर्व्यापारादेवोपलब्धे, पिहितकर्णपुटस्य श्रोत्रव्यापारादेवान्तरशब्दोपलब्धिवत्। यत्तु गन्धाभावे तद्व्याप्य नीलरूपमपि न स्यादिति, तदपि न, अनुष्णाशीतस्पर्शस्य पृथिव्यां गन्धादिव्याप्तस्य तदभावेऽपि मरुति प्रतीतेरेवाङ्गीकारवदिहापि प्रतीतेरेव नीलरूपस्य गन्धाभावेऽप्यभ्युपेयत्वात्। अथ पाकजस्यैवानुष्णाशीतस्पर्शस्य गन्धादिना व्याप्तिस्तर्हीहापि पाकजस्यैव कालिमगुणस्य गन्धादिना

हि रूपवत्त्वमात्रेणालोकसापेक्षताप्राप्तिस्तदा रूपवदभावत्वादालोकाभावेऽपि घटाद्यभाववदालोक किमिति नापेक्षते चक्षुरित्यर्थः। प्रसङ्गसाम्यमुक्त्वा परिहार समीकरोति—**तद्विरोधितयेति**। न चाभिव्यञ्जकतयाप्यवश्यापेक्षणीये मत्यालोकाभावे तावतैव तम शब्दसार्थक्यात् कृतमधिकान्धकारकल्पनयेति वाच्यम्, यतः कल्पयन्त प्रति अय पर्यनुयोग', न प्रत्यक्ष प्रमाणयन्त प्रति आभासतोद्भावनीयेति चेदुद्भाव्यता, सैव तु केनेति विवेचनीयम्? नहि न नील तम इति प्रत्यक्षमस्ति बाधकम्, अनुमानमितिचेत्तस्यैव तावदध्यक्षविध्वस्तविषयस्य बाधव्याधिं समाधत्स्व। तदेवमालोकानिरपेक्षचक्षु प्रवृत्त्यनुपपत्तिः परिहृता। यत्तु चक्षुर्व्यापाराभावेऽप्युपलम्भादचाक्षुषत्वमिति तदनूद्यासिद्धिमाह—**नच निमीलितेति**। नच रूपवदन्तरग्रहप्रसङ्गः, तत्रालोकसापेक्षत्वात्। नचेन्द्रियाणामन्तःप्रवृत्तिर्न दृष्टचरी येनायमलौकिकः क्रृतः स्यादित्याह—**पिहितेति**। तत्र शब्द इत्यादिप्रतीते. श्रोत्रमपि गत्वा ग्राहीति भावः। इत्थमुपलम्भकसिद्धिरुक्ता। अथ यदुक्त नीलरूपमस्य न सभवति, तद्व्यापकगन्धवैधुर्यादिति तदनूद्याभाससमानयोगक्षेमता दर्शयन्बाधकमाह—**अनुष्णाशीतस्पर्शस्येत्यादिना**। अत्र हि गन्धव्यावृत्त्या नीलरूपव्यावृत्तिरनुमित्सिता। साचायुक्ता, रूपोपलब्धिविरोधात्। यदिचवमपि नानुमन्यसे, तर्हि गन्धव्यावृत्त्यानुष्णाशीतस्पर्शमपि पवनाद्व्यावर्तयेत्यर्थः। अथ नानुष्णाशीतस्पर्शमात्रस्य गन्धेन व्याप्तिरपि तु तद्विशेषस्य पाकजन्मनस्तर्हीहापि न नीलरूपमात्रस्य गन्धेन व्याप्तिः, किंतु पाकजस्यैवेत्याह— **अथ पाकजस्यैवेति**। नन्वपाकजस्पर्शवदपाक-

पेक्ष चक्षु-जन्य ज्ञान का विषय अन्धकार न हो सकेगा, क्योंकि रूपवत्प्रतियोगिक यह अभाव है और रूपयुक्त घटादि प्रतियोगिक अभाव आलोक-निरपेक्ष चक्षु जन्य ज्ञान का विषय नहीं होता। आलोक का विरोधी होने से आलोकाभाव के ग्रहण में आलोक की अपेक्षा नहीं—यह समाधान भाव रूप अन्धकार के प्रत्यक्ष मे भी किया जा सकता है। हाँ, दुराग्रह की कोई औषध नहीं।

यदि कहा जाय कि जिसने नेत्र बन्द कर रक्खे है नेत्र का व्यापार न होने पर भी उसको अन्धकार का प्रत्यक्ष होता है, अत अन्धकार चाक्षुष-प्रत्यक्ष का विषय कैसे होगा? तो यह नहीं कह सकते, क्योंकि उस व्यक्ति को चक्षु के व्यापार से ही पलको के अन्दर होनेवाले अन्धकार का वैसे ही प्रत्यक्ष होता है जैसे कि अपने कान बन्द करनेवाला व्यक्ति श्रोत्र के व्यापार से ही आन्तरिक शब्द का प्रत्यक्ष होता है। यह जो आपत्ति दी थी कि गन्ध के न होने पर गन्ध-व्याप्य नीलरूप भी नहीं रहेगा, वह आपत्ति भी ठीक नहीं, क्योंकि जैसे अनुष्णाशीतस्पर्श पृथिवी में गन्ध का व्याप्य है, किन्तु वायु मे (व्यापक) गन्ध के होने पर भी अनुष्णाशीतस्पर्श प्रतीति के बल पर माना जाता है, वैसे ही गन्ध के न होने पर भी प्रतीति के बल पर अन्धकार में नीलरूप क्यो न माना जायगा? यदि कहा जाय कि पाकज अनुष्णाशीतस्पर्श ही गन्धादि का व्याप्य है, अनुष्णाशीत स्पर्श सामान्य नहीं। (अत वायु मे गन्ध के न रहने पर पाकजअनुष्णाशीतस्पर्श की ही निवृत्ति होगी, अपाकजअनुष्णाशीत स्पर्श वहाँ रहेगा ही), तो प्रकृत मे भी कहा जा सकता है कि गन्धादि का व्याप्य पाकज नीलरूप ही है। (अन्धकार मे गन्ध की निवृत्ति से पाकज नीलरूप

माण्यप्रसङ्ग'। नच तस्य लोकसिद्धभेदानुवादकत्वसंभव'; तादृक्कर्मापूर्वभेदस्य लोकतोऽसिद्धे, सिद्धत्वे च शब्दान्तराद्यधिकरणानारम्भप्रसङ्गात्। तदेव मिथ्यात्वे लक्षणप्रमाणयोरसंभवादनुमानागमाभ्यां प्रपञ्चस्य सत्यत्वापादनान्न मिथ्यात्वमिति।

अत्रोच्यते—न तावल्लक्षणासंभव, यत'—

सर्वेषामपि भावानामाश्रयत्वेन संमते।
प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता ॥७॥

तथाहि—पटादीनां भावानां स्वाश्रयत्वेनाभिमतास्तन्त्वादयो ये तन्निष्ठात्यन्ताभावप्रतियोगितैव तेषा मिथ्यात्वम्। न हि तेषामन्यत्र सत्ता संभविनी। तत्रापि चेत्सा न स्यात्तदा गलेपादुकान्यायेन मृषात्वमेव पर्यवस्येत। न च निराश्रयेषु नित्येषु भावेषु सा नास्तीति लक्षणस्या-

सानुपादेयसंबन्धोऽसनिधिः प्रक्रियान्तरम्।
इति शब्दान्तरादीनामुक्तं लक्ष्म विचक्षणैः।'

तदेतदखिलमम्भोनिधावेव निधीयेत भेदमिथ्यात्व इति। ननु शब्दान्तरादीना न भेदे प्रामाण्य तस्य लोकसिद्धतयाऽप्रतिपाद्यत्वादित्यत आह—**नच तस्येति**। भेदमात्रस्य लोकसिद्धत्वेऽप्यलौकिककर्मभेदोऽयलौकिक इत्यर्थः। सिद्धत्वे च बाधकमाह—**सिद्धत्वे चेति**। उपसहरति—**तदेवमिति**।

तत्र लक्षणं श्लोकेन सगृह्णाति—**सर्वेषामिति**। सर्वेषा भावाना मृषात्मता मिथ्यात्वमिदं यत्स्वाश्रयत्वेन समतेऽत्यन्ताभावप्रतियोगित्वं नित्यमविद्यमानत्वमिति योजना। श्लोक विवृणोति—**तथाहीति**। **अभिमता इति**। प्रमितत्व्यावृत्तिस्तेन च बाध. परिहृत'। नन्वेतावतापि किमिति मिथ्यात्वमिति चेत्तत्र वक्तव्य किमन्यत्र सन्त्विति? उत स्वतन्त्रा एव सन्त्विति? नाद्यः, प्रमाणाभावादित्याह—**नहीति**। द्वितीयं प्रतिषेधति—**तत्रापीति**। अयमर्थः—न तावदात्मवदेषामनाश्रितत्व कार्यत्वेन समवायिकारणाश्रितत्वात् सामान्यादीनामपि धर्मत्वात्समानमाश्रितत्वं तस्मादाश्रितानामन्यत्र प्राप्त्यभावात्प्राप्तदेशेऽपि चेदसत्त्वमापद्यत एव तदा बलान्मिथ्यात्वमिति। ननु भवत्वाश्रितानामेव मिथ्यात्वमनाश्रिताना परमाण्वाकाशादीनामाश्रयाभावेनोक्तलक्षणाभावात् मिथ्यात्वेष्टेश्चाव्याप्तिरित्यत आह—**नच निराश्रयेष्विति**। लक्षणपद तु मध्यस्थमणिवन्नेयम्। तेन सत्ताभावाल्लक्षणस्येत्यपि पर्यवस्यति। वियदधिकरणाद्युक्तन्यायेन तेषामप्यस्त्येव कार्यत्वमित्यर्थः। कार्यत्व चेद कल्पितत्व, तेन नाविद्यायामव्याप्ति। यथा चैतत्तथा द्वितीयपरिच्छेदे प्रसाधयिष्यते। अद्वितीया-

लोक-सिद्ध (व्यावहारिक) भेद के अनुवादक मात्र शब्दान्तरादि हैं, तो नही कह सकते, क्योंकि लोक मे वैसा अलौकिक कर्म-भेद सिद्ध नहीं। यदि वह भी सिद्ध मान लिया जाय, तब तो शब्दान्तरादि—अधिकरणो का आरम्भ ही नहीं हो सकेगा। इस प्रकार प्रपञ्च-मिथ्यात्व का न तो लक्षण बनता है और न उसमें कोई प्रमाण ही है। प्रत्युत अनुमान तथा आगम प्रमाणो से प्रपञ्च में सत्यत्व ही सिद्ध होता है, अत' प्रपञ्च मिथ्या कभी नही, अपितु सत्य है।

उत्तरपक्ष—मिथ्यात्व का लक्षण असम्भव नही, क्योकि 'सभी भावों में मिथ्यात्व है—स्वाश्रय में रहनेवाले अत्यन्ताभाव का प्रतियोगित्व।' अर्थात् पटादिभाव पदार्थों में जो अपने आश्रय तन्तु-आदि में वृत्ति अत्यन्ताभाव की प्रतियोगिता है, वही मिथ्यात्व उनका मिथ्यात्व है, क्योकि उन (पटादि) की तन्तुओ से अन्यत्र तो सत्ता सम्भव नही, अब यदि तन्तुओ मे भी उनकी सत्ता न हो, फिर तो उनमे 'गलेपादुका' न्याय से मिथ्यात्व पर्यवसित होगा। यदि कोई शङ्का करे कि यह आश्रय घटित लक्षण निराश्रय नित्य (परमाणु आकाशादि) में नही जाता, अत. अव्याप्त है। तो

१. कश्चित्कुतश्चित्स्वेच्छया न गच्छति, स राजपुरुषैर्गले सपादुक पद दत्वा वलान्निसार्यते, इति न्यायार्थः।
२. "देशः कालो निमित्तञ्च फल संस्कार्यमेव च। मीमासानिपुणाः प्राहुरनुपादेयपञ्चकम्॥"

व्याप्तिः, ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य कार्यतया कारणाश्रितत्वस्य व्यवहारदशायां रजतादेरिव शुक्त्याद्याश्रितताया. स्वीकारात् । नाप्यतिव्याप्तिः, सत्यस्य ब्रह्मणो निराश्रयत्वात्तस्य तन्निष्ठात्यन्ताभावप्रतियोगिताया शङ्कितुमप्यशक्यत्वात् । न च परैः प्रदेशवृत्तितयाभ्युपगतेषु सयोगशब्दादिषु सत्येष्वपि लक्षणस्य सद्भावादर्थान्तरता, भावाभावयोरेकाधिकरणत्वाभ्युपगमे सर्वत्रैव तथाभावापत्तेर्विरोधस्य जगति दत्तजलाञ्जलिताप्रसङ्गात् । भावाभावयोर्हि साक्षाद्विरोधस्तन्मुखेनैवान्यत्रेति परीक्षकपरिषदां संमतत्वात्, प्रदेशोपाधिभेदेन वा तत्र विरोधसमाधाने भावात्यन्ताभावयोर्भिन्नाधिकरणत्वेन लक्षणस्य तत्र सत्ये कुत. सम्भव. ? कुतस्तरा चातिव्याप्तिः ? कुतस्तमां चार्थान्तरता ? तदेव न मिथ्यात्वानिरुक्तिः ।

सङ्गस्य ब्रह्मण कथं मिथ्याभूतवियदाद्याश्रयत्वमिति मतिमपाकर्तुं व्यवहारदशायामित्युक्तम् । ननु सन्मात्र ब्रह्म सत्ता च घटपटाद्याश्रिताऽतस्तत्राप्युक्तलक्षणस्य गमनसमर्थत्वाल्लक्षणस्यातिव्याप्तिः स्यादित्याशङ्क्याह—नाप्यतिव्याप्तिरिति । सत्य सन्मात्र ब्रह्म, तस्य तु घटादिसमवायोऽसिद्ध, घटादीनामेव तत्र कल्पितत्वादिति भावः । यत्तु पूर्वपक्षिणोक्त सयोगादिभिः स्वात्यन्ताभावसमानाधिकरणैरर्थान्तरतेति तदनूद्य दूषयति—नच परैरिति । नच वस्तुसता सयोगादीनामत्यन्ताभावसामानाधिकरण्ये प्रमाणमस्ति व्यवहारस्तु विभ्रममात्रशरीरैरनिर्वचनीयैरपि सेत्स्यतीति न सोऽस्य साधक इति भाव' । ननु किमिति जलाञ्जलिर्दीयते, यावता भावाभावावपहाय भावभेदेष्वेव गोत्वाश्वत्वघटत्वप्रभृतिष्वय प्राणान्धारयतीत्यत आह—भावाभावयोरिति । परीक्षकाणा परिषत्सभा । नहि गोत्वाश्वत्वयोस्तत्त्व विरोध', अपितु परस्परात्यन्ताभावाविनाभूतत्वम् । तद्यदि भावाभावयोर्न विरोध' का नु नाम तदा तदाघ्रातयोर्विरोधवार्तेति भाव' । नन्वेकस्मिन्नपि प्रदेशभेदमादाय सयोगादेर्वर्तनम्, अतो न विरोधोच्छेद इति निरुद्धगते. पूर्वपक्षिणो मतमाशङ्क्यातिव्याप्ति परिहरति—प्रदेशेति । कुत' संभव इति तदङ्गीकाराभिप्रायम् । अङ्गीकारप्रयुक्तत्वादर्थान्तरतायाः । स्यादेतत्, यद्यपि लक्षणमिदमक्षीण तथापि तल्लक्षणलक्षितस्य मिथ्यात्वस्यात्र सद्भावे किं प्रमाणम् ? नहि लक्षणमस्तीति सर्वत्र तत्सत्ता सिध्यत्यतिप्रसङ्गादित्यत आह—नापीति । अशिनोऽवयविन. स्वावय-

ऐसी शङ्का नही करनी चाहिए, क्योकि ब्रह्म से भिन्न ( निखिल परमाणु-आदि ) प्रपञ्च कार्य होने से अपने करण के आश्रित व्यवहार दशामे वैसे ही माना जाता है, जैसे कि रजतादि शुक्ति के आश्रित । अतिव्याप्ति भी नही, क्योकि सत्य ब्रह्म है अत उसमे स्वाश्रय-वृत्ति अत्यन्ताभाव की प्रतियोगिता की शङ्का तक नही हो सकती । यहाँ नैयायिकादि के द्वारा स्वीकृत अव्याप्यवृत्ति सयोग, शब्दादि सत्य पदार्थों मे भी उक्त लक्षण घटता है, अतः अर्थान्तरता दोष है–यह शङ्का नही करनी चाहिए, क्योकि सयोगादि भावपदार्थ और उनके अभाव का एक अधिकरण कदापि नही बन सकता । यदि मान लिया जाय, तब तो सब कही भाव और अभाव एकत्र रह जायगे, यदि भाव और अभाव का विरोध न रहा फिर तो ससार से विरोध नामकी वस्तु ही समाप्त हो जायगी, क्योकि भाव और अभाव का साक्षात् विरोध हुआ करता है तथा उसके द्वारा अन्य पदार्थों मे विरोध होता है–यही विद्वत्समाज मानता है । यदि कहा जाय कि एकदेशावच्छेदेन भाव और अभाव का विरोध है, किन्तु भिन्नदेशावच्छेदेन भाव तथा अभाव दोनो एकत्र रह जाते है । ( जैसे–एक ही वृक्ष मे कपि-सयोग रहता है–शाखावच्छेदेन और उसका अभाव रहता है–मूलावच्छेदेन । हाँ ! एकदेशावच्छेदेन उनका विरोध ही है ) । तो यह भी नही कह सकते, क्योकि तब तो यही कहना होगा कि सयोगादिभाव का अधिकरण है–शाखा और उसके अत्यन्ताभाव का अधिकरण है–मूल । इस प्रकार जो भाव अपने अत्यन्ताभाव के अधिकरण में रहता ही नही, उस सत्य पदार्थ में कैसे लक्षण जाता है ? क्यो वहाँ अतिव्याप्ति होगी ? और कहाँ अर्थान्तरता ? इस प्रकार मिथ्यात्व के लक्षण का अभाव नही ।

नापि मानासत्त्वम्, अनुमानसद्भावात्। तथाहि—

अंशिन स्वांशगात्यन्ताभावस्य प्रतियोगिन।
अंशित्वादितरांशीव दिगेषैव गुणादिषु ॥८॥

विमत पट. एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अवयवित्वात्पटान्तरवत्। एवमेतद्गुणकर्म-जात्यादयोऽपि तत्तत्तन्तुनिष्ठात्यन्ताभावप्रतियोगिन तत्तद्रूपत्वादितरतत्तद्रूपवदित्येवमादि-प्रयोग. सर्वत्रैवोहनीय।

ननु किं प्रामाणिकैतन्निष्ठात्यन्ताभावप्रतियोगित्वं साध्यं ? किं वा प्रातिभासिकात्यन्ता-भावप्रतियोगित्वम् ? नाद्य, अभावानां प्रामाणिकत्वे तैरेव द्वैतापत्ते, प्रामाणिकाभावप्रति-योगित्वे च भावानामपि प्रामाणिकतया न मिथ्यात्वसिद्धिः। न द्वितीय ; रजते सीसविभ्रमे

वनिष्ठात्यन्ताभावप्रतियोगिन इति प्रतिज्ञाया हेतुमाह—अंशित्वादिति। इतरावयवीवेति दृष्टान्तः। अनवयविरूपगुणादिष्वतिदिशति—दिगेषैवेति। दिङ्मार्ग.। श्लोकोक्तमनुमान विवृणोति—विमत इत्या-दिना। पटमात्र पक्षीकृत्यैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वे साधितेऽर्थान्तरता, पटान्तरस्यैतत्तन्तुनिष्ठत्वा-भावात्तन्निवृत्त्यर्थं विमत इत्युक्तम्। पटविशेष इत्यर्थः। सर्वत्र चैव विशेष एव पक्षीकर्तव्यः। अत्रैतत्पटा-रम्भकास्तन्तव एतत्तन्तवः। अन्योन्याभावादिव्यवच्छेदार्थमत्यन्ताभावग्रहणम्। तन्तुनिष्ठात्यन्ताभाव-प्रतियोगीत्युक्ते तन्त्वन्तरमादायार्थान्तरता तदर्थमेतत्तन्तुनिष्ठेत्युक्तम्। पटान्तरे त्वेतत्तन्तुभिरनारब्धे सुप्र-सिद्ध साध्यम्। अवयवित्वात् अवयवित्वेन समतत्वात्। तेन न प्रतिज्ञाहेत्वोर्विरोधः। दिगेषैवेत्येत-द्विवृणोति—एवमिति। एतद्रूपमेतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगि रूपत्वादितररूपवत्। एव स्पर्शादिष्वपि। एतच्चलनमेतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगि चलनत्वादन्यचलनवत्। तथा तन्तुत्व तन्तुनिष्ठात्यन्ताभाव-प्रतियोगि जातित्वाद्घटत्ववत्। एव सत्तादयोऽप्यनुमेया। एव समवायेऽपि द्रष्टव्यम्। अयमन्त्यविशेष एतदात्मनिष्ठात्यन्ताभावप्रतियोगी विशेषत्वादात्मान्तरगतविशेषवदिति विशेषेषु।

स्यादेतत्, पटादीना तन्त्वादिषु यदत्यन्ताभावप्रतियोगित्व साध्यते स किं प्रामाणिकोऽप्रामाणिको वा स्यात्? इति विकल्प्य दूषयति पूर्ववादी—किं प्रामाणिकेत्यादिना। प्रामाणिको यस्तन्निष्ठात्यन्ताभाव इति विग्रहः। तैरेवेति। यानत्यन्ताभावान्प्रति प्रतियोगित्व तन्तुब्रह्मादौ पटप्रपञ्चादे साध्यते तैरेव प्रामाणि-कैरित्यर्थः। किञ्च एष ह्यभावाना स्वभावो यत्प्रतियोगिनिरूपणीयत्वम्। तथा च यद्यभावा प्रामाणिकाः, सुतरा तन्निरूपका भावा., तथा चाद्वैताशैव नोदेतीत्याह—प्रामाणिकाभावेति। एतेन सदद्वैतमेवाद्रियते इति वेदान्तिना किंवदन्त्यपोदिता। अप्रामाणिकपक्ष दूषयति—नेति। अप्रमाणिकात्यन्ताभावप्रति-

और न उसमें प्रमाण का अभाव है, क्योकि अनुमान प्रमाण है—'अवयवी अपने अवयवो में रहनेवाले अत्यन्ताभाव के प्रतियोगी है, अवयवी होने के कारण, जैसे कि इतर अवयवी'—इसी प्रकार गुणादि में मिथ्यात्व सिद्ध किया जाता है। अर्थात् 'विवादास्पद पट अपने तन्तुओ मे रहने वाले अत्यन्ताभाव का प्रतियोगी है, अवयवी होने से जैसे दूसरा पट।' इसी प्रकार 'इन तत्तत्तन्तु के गुण, कर्म, जाति-आदि भी तत्तत्तन्तुनिष्ठ अत्यन्ताभाव के प्रतियोगी है, तत्तद्रूप होने से, जैसे तत्तद्रूप'—इस प्रकार के प्रयोगो की ऊहा सर्वत्र कर लेनी चाहिए।

शङ्का—प्रामाणिक अत्यन्ताभाव की प्रतियोगिता साध्य है ? अथवा प्रातिभासिक अत्यन्ताभाव की प्रतियोगिता ? प्रथम पक्ष युक्त नही, क्योकि अभाव यदि प्रामाणिक हुए तब उन्ही को लेकर द्वैतापत्ति होगी। एवं प्रामाणिक अभाव के प्रतियोगी घटादि भावो मे प्रामाणिकता आ जाने से मिथ्यात्व की सिद्धि न हो सकेगी। द्वितीय पक्ष भी सगत नही, क्योकि रजत मे सीसे का भ्रम हो

१. यस्यात्यन्ताभावस्य प्रतियोगित्व साध्यते, स (अत्यन्ताभाव.) इत्यन्वयः। २. प्रामाणिकाभाव-

सीसमेवैतन्न रजतमिति रजते रजतत्वप्रतिषेधे प्रातिभासिकात्यन्ताभावप्रतियोगिनोऽपि रजतत्वस्यामिथ्यात्वेनार्थान्तरत्वापातादिति चेत्, मैवम्, अभावानां प्रामाणिकत्वेऽपि सदद्वैताव्याकोपात्। कथं च व्यावहारिकप्रमाणोपस्थापितस्वभावैर्भावैरभावैर्वा तत्त्वावेदकप्रमाणोपनीतस्याद्वैतस्य व्याकोपाशङ्कावकाशः? नापि प्रामाणिकाभावप्रतियोगिनोऽपि शुक्तीदमशरजताकारद्वयालिङ्गितस्य, संसर्गस्य, 'इदं रजतम्'—इत्येकज्ञानोपनीतस्य, केवलतद्व्यवहारोपनीतस्य, वा धीरूपरजताकारोपारोहिणो बहिष्ट्वस्य वा कुत्रचिद्देशे काले वा केनचिदपि वादिना सत्ता स्वीक्रियते; येन प्रामाणिकाभावप्रतियोगिनः सत्तां भावा प्रतिपद्येरन्। द्वितीयस्तु विकल्पोऽनङ्गीकारपरास्तः। न च धर्मिग्राहकप्रमाणबाधः, धर्मिणस्तत्त्वावेदकप्रमाणसिद्धत्वानभ्यु-

योगित्वं न मिथ्यात्वं, सत्यस्यैव रजतत्वस्य सीसविभ्रमविषये रजते भ्रान्तिप्रातात्यन्ताभावप्रतियोगित्वस्य परैर्मिथ्यात्वास्वीकारादित्याह—**रजत इति**। तमाक्षेपं परिहरति—**मैवमिति**। तत्र प्रमाणगम्यत्वं सत्त्वमित्यभ्युपेत्य परिहरति—**अभावानामिति**। इममभ्युपगमं त्यजन् राद्धान्तरहस्यमादाय परिहरति—**कथं च व्यावहारिकेति**। न प्रमाणमात्रगम्यत्वात् सत्त्वमायाति। देहात्मत्वादौ तथाभावाभावात्, अपि तु तात्त्विकप्रमाणगम्यत्वात्। नचैतत् ब्रह्मव्यतिरिक्तस्याभावस्य भावस्य वास्ति, येनाद्वैतसंकोचावकाशः स्यादिति भावः। यत्तु प्रामाणिकाभावपक्षे प्रतियोगिभूतैर्भावैरद्वैतविरोध इति तत्परिहरति—**नापि प्रामाणिकेति**। अयमर्थः—नैव व्याप्तिरस्ति यत्प्रामाणिकाभावप्रतियोगि तत्प्रामाणिकमिति। यतः शुक्तीदमशरजताकारयोरेकज्ञानोपनीतस्य संसर्गस्य प्रामाणिकात्यन्ताभावप्रतियोगिनोऽपि क्वचिदपि देशे कदाचिदपि काले सत्त्वमन्यथाख्यातिवादिभिर्नेष्यते। तथाऽख्यातिवादिभिः संसर्गज्ञानाभावेऽपि संसृष्टव्यवहारोपनीतस्य संसर्गस्य। तथा विज्ञानवादिभिरपि धीरूपं यद्रजतं तत्रारोपितस्य बहिष्ट्वस्येत्येव यथादर्शनं व्यभिचारादिति। यत्त्वप्रामाणिकाभावप्रयुक्तदूषणमुक्तं तदभावस्य प्रामाणिकतास्वीकारात् निरनुयोज्यानुयोगमित्याह—**द्वितीयस्त्विति**। यत्त्वाश्रयस्य प्रामाणिकत्वाप्रामाणिकत्वविकल्पेन दूषणमुक्तं तत्परिहरति—**न चेति**। प्रमाणमात्रगम्यस्यात्यन्तिकसत्त्वाभावादिति भावः। सत्त्वं चेन्नास्ति तर्हि अस-

जाने पर प्रतीति होती है कि 'यह सीसा है, रजत नहीं।' यहाँ रजत में रजतत्व का निषेध प्रातिभासिक है। प्रातिभासिक निषेध का प्रतियोगी भी रजतत्व मिथ्या नहीं, अतः अर्थान्तरता दोष है।

समाधान—उक्त शङ्का युक्त नहीं, क्योंकि अभाव पदार्थों के प्रामाणिक होने पर भी द्वैतापत्ति नहीं होती, कारण कि भावरूप द्वितीय न होने से ब्रह्म की अद्वितीयता अक्षुण्ण रह जाती है। वस्तुतः जो भाव या अभाव केवल व्यावहारिक प्रमाण से सिद्ध हैं, उन व्यावहारिक भावों या अभावों से तात्त्विक प्रमाण सिद्ध पारमार्थिक ब्रह्म की अद्वितीयता पर आँच कैसे आ सकती है? (यह जो कहा था कि प्रामाणिक अभाव के प्रतियोगी भी प्रामाणिक हो जाने से मिथ्या सिद्ध न होंगे, वह कहना भी उचित नहीं, क्योंकि प्रामाणिक अभाव के प्रतियोगी सत्य ही होते हैं—ऐसा कोई नियम नहीं)। प्रामाणिक अभाव के प्रतियोगी सत्य माने जा सकते थे यदि प्रामाणिक निषेध के प्रतियोगी शुक्ति-रजत-संसर्ग ( जो कि अन्यथाख्याति-मत में 'यह रजत है'—इस प्रकार के एक ज्ञान से एवं अख्याति-मत में केवल संसृष्ट-व्यवहार से सिद्ध है ) की सत्ता नैयायिक तथा प्राभाकर एवं बौद्ध बुद्धिरूप रजताकार में प्रतीत बहिष्ट्व की सत्ता कहीं भी, कभी भी मानते, किन्तु मानते नहीं, अतः प्रामाणिक अभाव के प्रतियोगी सत्य नहीं हो सकते। द्वितीय विकल्प ( प्रातिभासिक अत्यन्ताभाव की प्रतियोगिता ) अङ्गीकार न होने से ही खण्डित है।

धर्मिग्राहक प्रमाण से ( मिथ्यात्वानुमान का ) बाध भी नहीं, क्योंकि धर्मी ( प्रपञ्च ) को

प्रतियोगित्वेन भावाना प्रामाणिकसत्वापादनेनेत्यर्थः।

पगमात्। तर्ह्याश्रयासिद्धिरितिचेत्, न, सांव्यावहारिकप्रमाणोपनीतस्याप्याश्रयत्वोपपत्तेः। प्रपञ्चस्तत्त्वावेदकप्रमाणविषयः धर्मित्वादात्मवदिति चेत्, न, आत्मत्वस्यैव तत्रोपाधित्वात्। नच व्यतिरेकासिद्धि, अनात्मन शुक्तिरजतसंसर्गादेस्तत्त्वावेदकप्रमाणाविषयस्योभयवादिसिद्धस्य व्यतिरेकोपसंहारस्थलस्य सद्भावात्, धर्मित्वहेतो शुक्तिरजतादिससर्गधर्मिणि व्यभिचाराच्च। नासौ धर्मी मिथ्यात्वादिति चेत्, न, एतमेव हेतु प्रति धर्मित्वाधर्मित्वयोस्तदयोगात्। एतेन प्रतीतिमात्रसिद्धस्याश्रयत्वे दूषणभूषणादेरपि तथाभूतस्य सुलभत्वात् सर्ववादविधिनिषेधप्रसङ्ग इत्यपास्तम्, वादिप्रतिवादिमध्यस्थानां प्रमाणसिद्धमेतदिति संमत्यालम्बन-

---

देव। तथा च शशविषाणवदेवानर्थक्रियाक्षममिति शङ्कते—तर्हीति। देहात्मभावादिवद्व्यावहारिकसत्त्वमादाय परिहरति—न। सांव्यावहारिकेति। यथाच सदसद्विलक्षणान्यपरा कोटिस्तथाऽनिर्वचनीयवादे निर्वक्ष्यते। तत्त्वावेदकप्रमाणगम्यत्वाभावेन धर्मिग्राहकबाध परिहृतस्तत्र बाधसिद्धयर्थं तत्त्वावेदकप्रमाणगम्यत्वमप्यनुमिनोति पूर्ववादी—प्रपञ्च इति। ननु कथमात्मत्वमुपाधिः? साध्यव्यापकत्वानिर्णयात्। तथा हि यत्रात्मत्वं नास्ति तत्र तत्त्वावेदकप्रमाणगम्यत्वमपि नास्तीति साध्याभावेनोपाध्यभावव्याप्तिर्ग्रहीतव्या। न चैषा शक्यनिर्णया। आत्मत्वरहिते प्रपञ्चे साध्याभावानिर्णयात्। तस्मात्पर्वतेतरत्वादिवत्पक्षेतरोयमित्यत आह—न च व्यतिरेकेति। शुक्तिरूप्यससर्गादौ सर्वथा प्रमाणायोग्ये शक्य उभयाभावो निर्णेतुमित्यर्थः। अनैकान्तिकता चाह—धर्मित्वेति। संसर्गधर्मिणीति। ससर्ग एव धर्मी। हेतोस्तत्रावृत्तिमाशङ्कते—नासाविति। परिहरति—नेति। अयमर्थ —मिथ्यात्वादितीममेव हेतु प्रति ससर्गो धर्मी? नवा? आद्ये धर्मित्वमशक्यनिषेधम्। द्वितीयेऽप्यशक्यनिषेधमेव, निषेधकहेतोराश्रयासिद्धत्वादिति। यत्तु प्रतीतिमात्रसिद्धस्य साधनादित्वेऽतिप्रसक्तिरित्युक्त तदप्येवं सति परिहृतमित्याह—एतेनेति। व्यावहारिकप्रमाणसिद्धस्य साधनदूषणत्वाभ्युपगमेनेत्यर्थः। एतेनेत्येतदेव विवृण्वन्सांव्यावहारिकप्रमाणशरीरमेव दर्शयति—वादिप्रतिवादीत्यादिना। त्रिचतुरकक्षाविश्रान्तस्येति। त्रिचतुरपर्वस्वबाधित-

---

तात्त्विक प्रमाण से सिद्ध नहीं माना जाता। आश्रयासिद्धि भी नहीं, क्योंकि व्यावहारिक प्रमाण से सिद्ध आश्रय बन जाता है। 'प्रपञ्च तात्त्विक प्रमाण से सिद्ध है, धर्मी होने से, जैसे—आत्मा'—इस अनुमान से धर्मी में तात्त्विक प्रमाण-सिद्धता की सिद्धि नहीं की जा सकती, क्योंकि वहाँ 'आत्मत्व' उपाधि है—( तात्त्विक प्रमाण-सिद्धता का निश्चय है—आत्मा में, वहाँ आत्मत्व है ही, अत आत्मत्व साध्यका का व्यापक है और धर्मित्व हेतु तो प्रपञ्च में भी है, किन्तु वहाँ आत्मत्व नहीं अत साधन का अव्यापक है)। यदि शङ्का हो कि आत्मत्व की व्यतिरेक व्याप्ति साध्य में सिद्ध नहीं, अत 'आत्मत्व' उपाधि में साध्यव्यापकता कैसे? तो यह शङ्का युक्त नहीं, क्योंकि शुक्ति-रजत-ससर्ग में आत्मत्वाभाव भी है और तात्त्विक प्रमाण-विषयत्वाभाव भी, अत वह एक ऐसा उभयवादि-सम्मत स्थल है, जहाँ व्यतिरेक व्याप्ति का निश्चय हो जाता है। उक्त ससर्ग में 'धर्मित्व' हेतु तो है, किन्तु उपाधि नहीं अत साधन का व्यभिचार ( अव्यापकत्व ) भी उपाधि में है। यदि कहा जाय कि उक्त संसर्ग में मिथ्यात्व होने से धर्मित्व हेतु नहीं रहता, तो यह कहना उचित न होगा, क्योंकि इसी 'मिथ्यात्व' हेतु का उक्त ससर्ग धर्मी है? कि नहीं? यदि है, तब धर्मित्व का निषेध अयुक्त है और यदि वह मिथ्यात्व का धर्मी नहीं, तब भी धर्मित्व का निषेध न हो सकेगा, कारण कि वहाँ मिथ्यात्व रहने के कारण ही धर्मित्व का निषेध करते थे। किन्तु मिथ्यात्व वहा रहता नहीं।

इसी ( व्यावहारिक प्रमाण-सिद्ध साधनादि मान लेने ) से ही 'प्रतीति मात्र-सिद्ध ( प्रपञ्च ) को आश्रय मानने से उसी प्रकार दूषण-भूषण सब कहीं सुलभ होने के कारण सभी वादों का विधान तथा सभी का निषेध होने लगेगा'—यह आक्षेप निरस्त हो जाता है, क्योंकि ऐसे आक्षेप तथा दूषण भूषण ही कथा के अंग माने जाते हैं, जिनके विषय में वादी, प्रतिवादी एवं मध्यस्थ एकमत होकर

तया त्रिचतुरकक्षाविश्रान्तस्य तत्तदाभासलक्षणानालिङ्गितस्याश्रयस्य दूषणभूषणादेश्च तत्र तत्र कथाङ्गताङ्गीकारात्, तादृशव्यावहारिकप्रमाणसिद्धस्यैव च व्यावहारिकसत्यत्वेन स्वीकारात्, सर्वथा बाधवैधुर्यस्यागमेतरप्रमाणैरसर्वज्ञेन ज्ञातुमशक्यत्वात्। एतेनेदमपास्तम्, यदाहुर्भट्टाचार्याः—

"संवृतेर्न तु सत्यत्वं सत्यभेदः कुतोऽन्वयम्।
सत्या चेत्संवृतिः केयं मृषा चेत्सत्यता कथम्॥
सत्यत्वं नच सामान्यं मृषार्थपरमार्थयोः।
विरोधान्नहि वृक्षत्वं सामान्यं वृक्षसिंहयोः॥" इति। ( श्लो० वा० ५।६,७ )

वस्तुतोऽसत्यस्यैव यावद्बाधं देहात्मभाववल्लौकिकवैदिकव्यवहाराङ्गतया सत्यत्वेन व्यवहारात्।

स्येत्यर्थः। स्यादेतत्, कतिपयपुरुषस्य कतिपयकालं बाधविधुरमित्यबोधविषयस्य साधनादिभावश्चेदभ्युपेयते तर्हि सिद्धान्तविरोधः, यतो व्यावहारिकसत्त्वयुक्तस्य वेदान्तिभिः साधनादित्वमङ्गीक्रियत इत्यत आह—**तादृशेति**। ननु किमत्ययं सङ्कोचः? आत्यन्तिकमेव सत्त्वं किं न स्वीक्रियते? इत्यत आह—**सर्वथेति**। सर्वपुरुषसर्वदेशकालापेक्षयेत्यर्थः। तत्किं ब्रह्मणोऽपि तादृशं सत्त्वमशक्यज्ञानमित्यत उक्तम्—**आगमेतरेति**। नन्वागमेतरैरपि प्रमाणैः सर्वज्ञेन केनचित्तादृशं सत्त्वं ज्ञायतामित्यत उक्तम्—**असर्वज्ञेनेति**। सर्वज्ञस्य तु कस्यचित्तादृशं प्रमाणमस्ति प्रपञ्चविषयमित्यत्र नार्वाग्दृशां प्रमाणमस्ति, प्रत्युतागमविरोधादभावनिर्णय इति भावः। व्यावहारिकसत्त्वं नाम न सत्त्वविशेषः, अपित्वेवंविधज्ञानविषयत्वमित्यनेनैव भट्टपादोक्तदूषणमप्यपास्तमित्याह—**एतेनेदमिति**। संवृतिसत्यमिति यद्बौद्धैरुच्यते तद्दूष्यते—**संवृतेर्न तु सत्यत्वमिति**। अत्र च संवृणोति तत्त्वमिति संवृतिरविद्या तस्याः सत्यत्वमयुक्तं तत्र हेतुमाह—**सत्यभेद इति**। 'इदं संवृतिसद्, इदं परमार्थसदिति' वदता किं सत्यविशेषः कश्चित्संवृतिसत्यं नाम स्वीक्रियते? उतासदेव? द्वितीये सत्यशब्दो नार्थवान्। प्रथमे प्राह—**सत्यभेद इति**? कुतोयं सत्यभेदः? न कुतोपि प्रमाणादित्यर्थः। किमिति प्रमाणाभाव इति? विरुद्धत्वादित्याह—**सत्या चेदिति**। विरुद्धत्वाज्जातिव्यक्तिभावो नास्तीत्युक्तम्, इदानीं सदसतोः परस्परविरुद्धयोः सत्यत्वजातिसम्बन्धोपि न घटत इत्याह—**सत्यत्वमिति**। तत्र दृष्टान्तः—**नहि वृक्षत्वमिति**। एतेनेत्यस्यैव विवरणं—**वस्तुत इति**। नचात्रानेतन्निष्ठत्वमुपाधिः, आकाशादौ साध्याव्यापकत्वात्। नाप्येतदनिष्ठत्वम्; तस्यैव साध्यत्वात्। नाप्येतन्निष्ठत्वरहिततया प्रतीयमानत्वम्, संयोगादौ तव साध्याव्याप्तेः। एतेनैतदवयवानारब्धत्वमपि निरस्तम्। न च द्रव्यत्वविशेषितम्, गुणादौ साध्याव्याप्तेः। नच द्रव्यत्वविशेषिते साध्ये द्रव्यत्वविशेषितोयमुपाधिः, व्यतिरेकव्याप्त्यसिद्ध्या

कह दे कि 'ये प्रमाण-सिद्ध हैं', जिनका तीन-चार कक्षा तक बाध न हो और जो तत्तत् आभासलक्षण के लक्ष्य न हों। इसी प्रकार के ही व्यावहारिक प्रमाण से सिद्ध पदार्थों में व्यावहारिक सत्यत्व माना जाता है। पारमार्थिक सत्यत्व वहाँ कदापि नहीं मान सकते, क्योंकि सर्वथा बाध-रहित तत्त्व को असर्वज्ञ व्यक्ति आगम-भिन्न प्रमाणों से नहीं जान सकता। ( व्यावहारिक सत्यत्व को हम सत्य का भेद नहीं मानते, अपितु व्यावहारिक प्रमाण की विषयता ही व्यावहारिकसत्यत्व है )—इसी से यह भी निरस्त हो जाता है, जो कि कुमारिल भट्ट ने कहा है—'संवृत्ति ( अविद्या ) में सत्यत्व नहीं रह सकता, क्योंकि संवृत्ति-सत्य, सत्य-विशेष है—यह किस प्रमाण से सिद्ध होगा? यदि संवृति सत्य है, तब उसमें संवृतित्व (मिथ्यात्व) कैसे रहेगा? और यदि वह मिथ्या है, तब उसमें सत्यत्व कैसे रहेगा? मिथ्या अर्थ तथा परमार्थ में 'सत्यत्व' जाति नहीं रह सकती, क्योंकि विरोध है, जैसे कि वृक्ष तथा सिंह में 'वृक्षत्व' जाति नहीं रहती।' वेदान्त सिद्धान्त यह है कि वस्तुतः असत्य प्रपञ्च में ही लौकिक, वैदिक-व्यवहार की अंगता होने से देह में आत्मत्व के समान सत्यत्व का तभी तक व्यवहार मात्र होता है, जब तक बाध न हो।

नायमसिद्धो हेतुः, पटस्यांशित्वे वादिनोरविवादात् । नापि विरुद्धः, एतत्तन्तुनिष्ठात्यन्ताभावाप्रतियोगिनि विपक्षे आत्मनि अंशित्वस्यावृत्तेः । नानैकान्तिकोऽपि, विपक्षाद्व्यावृत्तेरेव । इह तन्तुषु पट इत्यादिनैव प्रत्यक्षेण तन्तुनिष्ठतया पटस्यावगमात्तदपहृतविषयतया कालात्ययापदिष्टतेति चेत्, मैवम्, पटस्यैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वमङ्गीकुर्वता तस्य प्रामाण्यानङ्गीकारादिह नभसि नीलिमेति प्रत्यक्षाभिमतप्रत्ययबाधेनारूपित्वानुमानप्रवृत्तिवदत्राप्यनुमानप्रवृत्त्युपपत्तेः । नचैव सति दहनशैत्यानुमानादेरप्यप्रतिबद्धप्रसरतया कालात्ययापदिष्टकथा सर्वत्रास्तमियादिति वाच्यम्, तत्र तत्रोभयवादिसमतप्रबलप्रमाणे परिपन्थिनि जाग्रति तस्या निरंकुशप्रसरत्वात्, प्रकृते च तथाभावाभावात् । एतेन प्रमाणसिद्धत्वादिति प्रत्यनुमानविरोधोऽपास्तः, प्रमाणसिद्धत्वस्यैवासिद्धेः । यत्र प्रत्यक्षमपि न तत्त्वावेदकं प्रमाणं,

---

पक्षेतरत्वादिति । स्वरूपासिद्धिं परिहृत्य विरुद्धत्वं परिहरति—**नापि विरुद्ध इति** । अत्र ह्यात्मा विपक्षस्तस्य सर्ववस्तुस्वरूपतया तन्तुनिष्ठात्यन्ताभावाभावात् । नच तस्मिन्निरवयवेऽशित्वं वर्तते इत्यर्थः । एतेनैतन्निष्ठगुणादि व्याख्यातम् । एवमेतदत्यन्ताभावस्यैतत्तन्तुनिष्ठतास्वीकारे तस्याप्येतदनिष्ठत्वाङ्गीकारे तु तदभावादेव बाधं शङ्कते—**इह तन्तुष्विति** । परिहरति—**मैवमिति** । यत्तदवोचामाभिमतग्रहणेन बाधपरिहार इति तस्यैतदुत्थानम् । यथा ह्याकाशनीलिमग्राहिप्रत्यक्षविरोधेऽप्याकाशमरूपि विभुत्वादात्मवदित्याद्यनुमानमुदेति, तत्कस्य हेतोः ? दृढतरन्यायादर्थाभावेऽवगते क्लृप्तकारणाभावेऽप्युत्पद्यमानत्वात्, तथेहाप्यद्वैतपरसकलश्रुतिस्मृतिबलादर्थाभावेऽवगते जायमानं प्रत्यक्षं प्रत्यक्षाभास इति नानुमानानुदय इत्यर्थः । नन्वनुमानबाधाभिप्रायेण प्रत्यक्षाभासीकरणं सर्वत्र सुलभमिति दहनानुष्णतानुमानेऽपि न प्रत्यक्षबाधः स्यादिति गतं कालात्ययापदिष्टकथयेत्यत आह—**न चैव सतीति** । हेतुमाह—**तत्र तत्रेति** । अयमभिसंधिः—अग्निरनुष्ण इत्यत्र निषेध्यमुष्णत्वं क्वचित्प्रमितं ? न वा ? न यदि, तदा प्रतियोग्यप्रमित्याऽभावप्रमित्यभावाद् अप्रसिद्धविशेषणता । नच भ्रान्तिसिद्धस्य निषेधः, अर्थक्रियाया बाधाभावात् । तस्मात्प्रमितमिति वक्तव्यम् । नच तदग्निव्यतिरिक्तस्थलेऽस्तीत्युभयवादिसंप्रतिपन्नमस्ति तत्र प्रमाणम् । अतस्तद्विरोधादनुमितिर्नोदेतीत्यनिरुद्धैव बाधप्रवृत्तिरिति । प्रकृते तु न तथोपजीव्यमस्ति किंचित्प्रमाणं येन बाधः स्यादित्याह—**प्रकृते चेति** । प्रत्यक्षविरोधं परिहृत्य यदुक्तं पूर्ववादिना प्रपञ्चः सत्यः प्रामाणिकत्वादिति तद्विरोधं परिहरति—**एतेनेति** । तस्यैव विवरणं—**प्रमाणेति** ।

---

'अवयवित्व' हेतु असिद्ध भी नहीं, क्योंकि पट-गत अवयवित्व में किसी का विवाद नहीं। और न विरुद्ध ही है, क्योंकि एतत्तन्तुनिष्ठ अत्यन्ताभाव के अप्रतियोगी आत्मा ( विपक्ष ) में अवयवित्व अवृत्ति है। विपक्षावृत्ति होने से ही अनैकान्तिक भी नहीं। यदि कहा जाय कि 'उक्त अनुमान मे बाध अवश्य है, क्योंकि 'इन तन्तुओं मे पट है'—इस प्रत्यक्ष प्रमाण से तन्तु मे पट की सिद्धि होती है और पट की सिद्धि से पटाभावरूप साध्य का बाध निश्चित है।' तो ऐसा नहीं कह सकते क्योंकि पट मे एतत्तन्तुनिष्ठ अत्यन्ताभाव की प्रतियोगिता माननेवाला उस ( इन तन्तुओं मे पट है ) प्रत्यक्ष को प्रमाण नहीं मानता अत 'इस आकाश मे नीलिमा है'—इस प्रकार के प्रत्यक्ष का विरोध होने पर भी अरूपित्वानुमान ( आकाश रूप-रहित है, विभु होने से, आत्मा के समान ) जैसे उदित हो जाता है, वैसे ही प्रकृत में मिथ्यात्वानुमान की प्रवृत्ति बन जायगी। 'इस प्रकार तो अग्नि में शीतलता-विषयक अनुमानादि भी अप्रतिहतगति से प्रवृत्त हो जायँगे, फिर तो 'बाध' नाम का हेत्वाभास ही विलुप्त हो जायगा'—यह सन्देह नहीं करना क्योंकि तत्र-तत्र उभयवादि सम्मत प्रबल विरोधी प्रमाण की छत्रच्छाया मे बाध निःसन्तप्त प्रवृत्त हो सकेगा। प्रकृत मे तो वैसा कोई प्रबल विरोध नहीं, अतः बाध प्रवृत्त नहीं हो सकता।' इसी प्रकार 'प्रपञ्च सत्य प्रमाणसिद्धत्वाद्'—यह सत्प्रतिपक्ष भी निरस्त हो जाता है, क्योंकि 'प्रमाणसिद्धत्व' हेतु ही असिद्ध है। दूसरी बात यह

तत्र का कथा तत्पादोपजीविनो वराकस्यानुमानादेः प्रमाणतायाम् ?

यत्पुनरेतस्य घटस्य द्रव्यत्वादेतन्निष्ठबाध्यभेदातिरिक्तभेदवत्त्वानुमानं, तदप्यद्वैतागमविरोधात्कालात्ययापदिष्टमित्युपेक्षणीयम्। 'मृत्तिकेत्येव सत्य'मित्याद्यागमेन प्रपञ्चस्य सत्यतावगमादद्वैतागम एवोपचरितार्थः किं न स्यादिति चेत्, न, तस्यान्यपरत्वात्। तथाहि— एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय ब्रह्मणः सर्वकारणतया सर्वकार्यैरनन्यत्वप्रदर्शनेन तां प्रतिज्ञामुपपादयितुं लोकेऽपि घटरुचकादिकार्याणां मृल्लोहादिकारणादनन्यत्वं दर्शयति—'मृत्तिकेत्येव सत्यं, त्रीणि रूपाणीत्येव सत्य' मित्यादिना। न तु तेषां वास्तवसत्त्वमभिप्रैति, 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मे'त्यन्तेन ब्रह्मण एव सत्यत्वप्रतिपादनविरोधात्। एतेन मिथ्या-

नन्वेतदेव किं न स्यात्प्रमाणमिति तत्राह—यत्रेति। अथवा प्रत्यक्षविध्वंसनन्याय कैमुतिकन्यायेन सभाव्यमानसर्वानुमानेष्वतिदिशति—यत्रति। असिद्धेरेव वा विवरणमिदम्। अनुभवविरोधपरिहाराय तत्त्वावेदकमित्युक्तम्।

यत्तु भेदसत्यत्वेऽनुमानमुक्तं तदनूद्य निराकरोति—यत्पुनरिति। अयं घटः एतद्घटत्वे सति एतन्निष्ठबाध्यभेदत्वानधिकरणभेदाधिकरणं न भवति द्रव्यत्वात्पटवदित्यादिना सत्प्रतिपक्षतापि द्रष्टव्या। न चैतन्मृदनारब्धत्वमुपाधिः, व्यतिरेकव्याप्त्यसिद्धेः। परसिद्ध्या च साध्यप्रसिद्धिः। ननु कथमद्वैतागमविरोधस्तस्यागमान्तरविरोधेनातत्परत्वादिति शङ्कते—मृत्तिकेत्येव सत्यमित्यादिना। पौर्वापर्यपर्यालोचनया अद्वैतश्रुतिशेषत्वमितरश्रुतेरवसीयते, तद्यदि मृदादिसत्यत्वमपीयं श्रुतिः प्रतिपादयेत् शेषिविरोधः स्यात्। अतः कारणव्यतिरेकेण कार्यमनिर्वचनीयमित्येतावन्मात्रपरा सा श्रुतिः, अद्वैतश्रुतिस्तु स्वप्रधानत्वादनन्यपरेत्यभिप्रेत्याह—न। तस्यान्यपरत्वादिति। एकविज्ञानेनेति। 'येनाश्रुतं श्रुतं भवती' त्यनेनेति शेषः। तथा—सर्वकारणतया सर्वकार्यैरनन्यत्वप्रदर्शनेनेति। 'सदेव सोम्येद'मित्यादिनेति शेषः। अथ कुतो वास्तवसत्त्वमेव न प्रतिपाद्यत इति चेन्नोपसंहारविरोधादित्याह—ऐतदात्म्यमिति। एते-

है कि जहाँ प्रत्यक्षप्रमाण भी तत्त्वावेदक न हो सका, वहाँ प्रत्यक्ष-पादोपजीवी बेचारे अनुमानादि कैसे प्रमाण होंगे ?

यह जो घट में 'द्रव्यत्व' हेतु से घटनिष्ठ बाध्यभेद से अतिरिक्त भेदवत्ता का अनुमान किया था, वह अद्वैत-श्रुति से बाधित होने से उपेक्षणीय है। यदि कहा जाय कि "मृत्तिकेत्येव सत्यम्"—आदि श्रुतियों से प्रपञ्च में सत्यता प्रमाणित होती है, अतः अद्वैत-श्रुति अन्यार्थपरक क्यों न मानी जाय ? तो नहीं कह सकते, क्योंकि "मृत्तिकेत्येव सत्यम्"—यह श्रुति ही प्रपञ्च सत्यत्व-प्रतिपादक नहीं, अपि तु अन्यार्थपरक है—एक के विज्ञान से सर्व के विज्ञान की प्रतिज्ञा करके ब्रह्म सबका कारण होने से कार्यमात्र से अभिन्न है—यह दिखाते हुए उक्त प्रतिज्ञा का उपपादन करने के लिए लोक-प्रसिद्ध घटादि कार्यों का मृत्तिकादि से अभेद बताया—"मृत्तिकेत्येव सत्यम्"—इत्यादि से। मृत्तिकादि की सत्यता-प्रतिपादन में उक्त श्रुति का तात्पर्य नहीं। नहीं तो "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" ( एतद्रूप ही यह सब है। वह सत्य है। वह आत्मा है—छा० ६।८।७ )—

१. एतद्घटनिष्ठबाध्यभेदः एतद्घटप्रतियोगिताको भेदस्तन्निष्ठं यद्भेदत्वं तदनधिकरणं पटादिनिष्ठः एतद्घटप्रतियोगिको भेदः, तदधिकरणत्वादेव पटादीनामित्यप्रसिद्धविशेषणतेत्यत आह—घटत्वे सतीति। तथा च घटत्वसमानाधिकरणो य एतद्घटनिष्ठबाध्यभेदत्वानधिकरणभेदः पटादिप्रतियोगिकः एतद्घटनिष्ठभेदस्तदनधिकरणत्वं पटस्येति नाप्रसिद्धविशेषणता। घटान्तरे एतद्घटप्रतियोगिकभेदमादाय सिद्धसाधनतेत्यत आह—एतदिति। तथा चैतद्घटत्वसमानाधिकरणस्यैतन्निष्ठबाध्यभेदत्वानधिकरणभेदस्य विवक्षितत्वे न घटान्तरे एतद्घटप्रतियोगिको भेदो ग्रहीतुं शक्य इति भावः।

त्वानुमानस्यागमविरोधोऽप्यपास्त.।

दृग्दृश्ययो संबन्धानुपपत्तिश्च सत्यत्वानुमानस्य बाधिका। न च करणसंबन्धादेव सबन्धोपपत्ति., ईश्वरज्ञानेऽकरणजन्येऽपि विषयाणां स्फुरणात्, करणजन्येष्वपि योगिज्ञानेषु युक्तावस्थायामन्त करणासबद्धानामतीतानागतानां बाह्यार्थानां च स्फुरणात्। न च मनसो बहिरर्थे संबन्धः, परतन्त्र बहिर्मन इति न्यायात्, अस्मदादीनां चेन्द्रियिकविभ्रमेष्विन्द्रियासंबद्धानामेव स्फुरणाङ्गीकारात, अस्मदादिप्रमाणजन्येऽपि ज्ञाने सोयं देवदत्त इत्यादौ तत्तांशस्य करणासबद्धस्यापि प्रत्यक्षताभ्युपगमात्। नच तत्तायामपीन्द्रियेण सह संयुक्तविशेषणतालक्षणः सनिकर्ष समवायेतरभावस्येन्द्रियसंप्रयोगमन्तरेणापि प्रत्यक्षतायामय पर्वतोऽग्निमानि-

नेति। अन्यपरत्वादित्यर्थ'।

बाधकतर्कसभवाच्च शङ्किताऽप्रयोजकत्वं सत्यत्वानुमानमित्याह—**दृग्दृश्ययोरिति**। पूर्ववाद्युक्तामन्यथोपपत्तिमनूद्य दूषयति—**नचेति**। नाय सार्वत्रिक, ईश्वरज्ञानस्य नित्यस्य तद्विषयाणा च नियमाभावप्रसङ्गादित्यर्थ.। अथ जन्येष्वय नियम इति तर्हि तेष्वप्यव्याप्तिरित्याह—**करणजन्येष्वपीति**। युक्तावस्थाया ह्यात्ममनोयोगमात्रादेवाशेषार्थज्ञानमिति तार्किकाणा मतम्। अतीतादीना चाविद्यमानत्वादेव संबन्धानर्हत्वम्। अथ च विषयास्तत्र परिस्फुरन्तीत्यव्याप्तिरित्यर्थ। ननु युक्तावस्थाया कथमव्याप्तिर्यावता मनोलक्षणेन्द्रियसबन्धादेव तत्रापि नियमोपपत्तिरिति तत्राह—**न च मनस इति**। अथ विशिष्टादृष्टसामर्थ्यसचिवमनोयोगियोगिज्ञान विहायाय नियम इति तर्हि तेष्वप्यव्याप्तिरित्याह—**अस्मदादीनां चेति**। अधिष्ठानस्येन्द्रियसबद्धत्वेऽप्यारोप्यतत्ससर्गयोस्तदभावात्सस्कारद्वारा प्रत्यासत्तेश्चातिप्रसङ्गित्वादिति भावः। अथ विभ्रमत्वात्तत्र यथा तथा भवतु, प्रमाणेष्वय नियम इति ब्रूयात्त प्रत्याह—**अस्मदादिप्रमाणजन्येपीति**। **तत्तांशस्येति**। तद्देशकालविशिष्टाशस्येत्यर्थ। एतच्च प्रत्यभिज्ञानस्यानुभवैकत्ववादे। ननु चक्षुषा सप्रयुक्तस्तावद्देवदत्तः तस्य च विशेषण तत्ताऽतः सप्रयुक्तविशेषणताप्रत्यासत्त्या भूतलविशेषणघटाभाव इवेन्द्रियेण किमिति न गृह्यते इति तत्राह—**नच तत्तायामिति**। आत्मद्वारा चाय सबन्ध' शङ्कनीयः। हेतुमाह—**समवायेतरभावस्येति**। भावस्येत्यभावव्यावृत्तिः। समवायस्येन्द्रियासप्रयुक्तस्यापि ग्रहण परैरङ्गीक्रियत इत्यत उक्त—**समवायेतरेति**। गुणादीना तु संयुक्तसमवायादि नास्मत्समत तेषा द्रव्यतादात्म्येन समवायासिद्धे., सबन्धान्तरताभावाच्चेत्यपि द्रष्टव्यम्। विद्यमानेतविशेषणाच्च

इस अग्रिम श्रुति से ब्रह्म मात्र की सत्यता का प्रतिपादन विरुद्ध पड जायगा। इसीसे ही मिथ्यात्वानुमान मे आगम-विरोध भी निरस्त हो गया।

दृग्-दृश्य के सम्बन्ध की अनुपपत्ति भी प्रपञ्च सत्यत्वानुमान की बाधक है। यह जो कहा था कि इन्द्रियो के सम्बन्ध से ही दृग्-दृश्य सम्बन्ध बन जायगा। वह ठीक नही क्योकि ईश्वर के ज्ञान का भी विषय के साथ सम्बन्ध प्रतीत होता है। वहाँ इन्द्रिय-सम्बन्ध सम्भव नही, क्योकि ईश्वर-ज्ञान इन्द्रिय जन्य नही होता। इन्द्रिय जन्य योगि-ज्ञान का युक्तावस्था मे अन्तः करणासम्बद्ध अतीतादि बाह्य पदार्थो के साथ सम्बन्ध प्रतीत होता है। बाहर के पदार्थो से मन का साक्षात् सम्बन्ध हो नही सकता, क्योकि बाह्य विषय का ग्रहण करने के लिए मन परतन्त्र ( बाह्य इन्द्रियो के अधीन ) होता है। हम लोगो के इन्द्रिय-जन्य भ्रमो में भी इन्द्रियासम्बद्ध पदार्थ का ही स्फुरण माना जाता है। हम लोगो के प्रमाण-जन्य 'यह वही देवदत्त है'—इत्यादि ज्ञानो मे भी इन्द्रियासम्बद्ध 'तत्ता' अश का भान माना जाता है। यदि कहा जाय कि 'तत्ता' के के साथ भी इन्द्रिय का स्वसयुक्तविशेषणता संन्निकर्ष है, तो यह कहना उचित नही, क्योकि यदि समवाय से भिन्न भाव पदार्थो का साक्षात् इन्द्रिय-सम्बन्ध के बिना भी प्रत्यक्ष माना जाय, तब तो

त्यत्राग्निमत्त्वस्यापि संयुक्तविशेषणतया प्रत्यक्षत्वापत्तेः प्रत्यक्षधर्मिकानुमानमात्रोच्छेदप्रसङ्गः।

अस्तु तर्हि ज्ञानज्ञेययोर्विषयविषयिभावः सम्बन्ध इति चेत्, न, तदनिरूपणात्। तथा हि-न तावज्ज्ञानजन्यफलाधारत्वं विषयत्वं, विषयनिष्ठफलजनकत्वं च विषयित्वमिति युक्तम्, विकल्पासहत्वात्। तत्फलं ज्ञातता? व्यवहारो वा? नाद्यः, अतीतादौ तदभावेनाविषयत्वप्रसङ्गात्। तत्रैव फलजननेऽप्यनुगतनियामकायोगात्, तद्योगे वा तस्यैव विषयत्वनियामकतोपपत्तेः। न द्वितीयः, कराकर्षणादेर्व्यवहारस्यात्मादावभावात्, कलधौतमलादेरपि नान्तरीयकतया

प्रत्यभिज्ञाया तत्ताव्यवच्छेदः। **संयुक्तविशेषणतयेति**। चक्षुषा संयुक्तः पर्वतस्तस्य विशेषणमग्निरित्यर्थः। एतदुक्तं भवति—समवायाभावातिरिक्तस्यापि चेत्संयुक्तविशेषणतया प्रत्यक्षत्वं तर्हि प्रत्यक्षे धर्मिणि न क्वाप्यनुमानं प्रवर्तेत सर्वत्र प्रत्यक्षत्वसंभवादिति। सम्बन्धान्तरमाशङ्कते—**अस्तु तर्हीति**।

**ज्ञानजन्येति**। ज्ञानेन जन्यं यत्फलं तत्प्रत्याधारत्वं विषयत्वं तादृशफलजनकत्वं च विषयित्वमिति न च युक्तमित्यर्थः। **विकल्पासहत्वादिति**। विकल्पे सति दूषणासहत्वादित्यर्थः। ज्ञातता प्राकट्यम्, एतच्च भाट्टाभिप्रायेण। **अतीतादाविति**। फलजननसमयेऽतीतादेरविद्यमानत्वादेव फलाधारत्वानुपपत्तेः, अत एव तज्जनकत्वं ज्ञानस्य न संभवति, अतस्तत्राव्याप्तिर्लक्षणस्येत्यर्थः। दूषणान्तरमाह—**तत्रैव फलजनन इति**। अयमर्थः—यत्फलं प्रत्याधारत्वं विषयस्योच्यते, तत्फलं तत्रैव नान्यत्र जनयति विज्ञानमित्यत्रापि किञ्चिन्नियामकमस्ति? न वा? यदि नास्ति, तर्हि नियतकार्यायोगः। यदाह—

'भवेन्न क्वचित्सत्ता क्वचानियमेऽन्यानपेक्षया।
नियामकाद्धि भावाना क्वाचित्कत्वस्य संभवः ॥' इति।

असति ज्ञानज्ञेययोः सम्बन्धे नियमायोगाच्च। द्वितीये दूषणमाह—**तद्योगे वेति**। यदि यत्किञ्चिन्नियामकं स्वभावोऽन्यद्वा समाश्रीयते तर्हि तदेव विषयत्वनियामकमस्तु कृतं तदुपजीविना प्राक्तनेनेत्यर्थः। तदुक्तं कुसुमाञ्जलौ—

'स्वभावनियमाभावादुपकारोऽपि दुर्घटः।
सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा ॥' इति।

**न द्वितीय इति**। कोऽयं व्यवहारोऽभिमतः? किं कराकर्षणादिः? उतेच्छादिः? आद्यं प्रत्याह—**कराकर्षणा-**

'यह पर्वत अग्निमान् है'–यहाँ भी अग्निमत्त्व का संयुक्तविशेषणता सन्निकर्ष से प्रत्यक्ष ही हो जायगा। फिर तो प्रत्यक्षपक्षक अनुमान मात्र का उच्छेद हो जायगा।

ज्ञान और ज्ञेय का विषयविषयिभाव सम्बन्ध भी नहीं माना जा सकता, क्योंकि उसका निरूपण ही सम्भव नहीं —'ज्ञान-जन्य फलाधारत्व' विषयत्व एवं विषय-निष्ठ ज्ञान-जनकत्व ही विषयित्व है—यह युक्त नहीं, क्योंकि यहाँ पर जिज्ञासा होती है कि ज्ञान-जन्य फल क्या है? ज्ञातता? या व्यवहार? ज्ञातता को फल मानने पर अतीतादि पदार्थों में विषयत्व का अभाव हो जायगा। [अर्थात् जहाँ अतीतविषयक ज्ञान वर्तमान में हो रहा है, वहाँ इस ज्ञान की विषयता अतीतादि पदार्थों में तभी होगी, जब इस ज्ञान से जन्य ज्ञातता रूप फल की आधारता उनमें हो। किन्तु जो पदार्थ विद्यमान ही नहीं, वह किसी फल का आधार कैसे होगा? अतः अतीतादि में ज्ञान-जन्य ज्ञाततारूप फल की आधारता न होने से विषयत्व नहीं बन सकेगा]। दूसरी बात यह भी है कि कोई ज्ञान अपना ज्ञाततारूप फल उसी विषय पर पैदा करेगा—इसमें कोई नियामक भी नहीं। यदि नियामक माने, तो विषयता का भी नियामक हो जायगा, (ज्ञान-जन्य फल की कल्पना व्यर्थ है)। द्वितीय

१. द्र० खण्डन० चतुर्थपरिच्छेदे पृ० ११२४।

तद्व्यवहारविषयस्य तज्ज्ञानविषयतापत्ते । नापीच्छादि, आत्मन एव तदाधारतया तदन्यस्याविषयत्वप्रसङ्गात्। अथ ज्ञानप्रतिबद्धहानादिलक्षणज्ञानगोचरत्वं तद्योग्यत्व वा विषयत्वम्, न, ज्ञानगोचरत्वस्यैव निरूप्यमाणत्वात्। हानादिज्ञानानां च हानादिज्ञानान्तराजनकतया निर्विषयत्वप्रसङ्गात्, जनकत्वे वा हानादिज्ञानानुपरमाद्विषयान्तरसंचाराभाव सुषुप्त्यभावश्च प्रसज्येयाताम्। व्यवहारयोग्यत्व विषयत्वमित्यङ्गीकारे च योग्यतायां योग्यतान्तराभ्युपगमेऽनवस्था, तदनभ्युपगमे योग्यताया विषयत्वाभाव ।

---

**देरिति**। आदिशब्देन भक्षणादि विवक्षित, तस्य च विभौ स्पर्शरहिते चात्मादावसम्भवादव्याप्तिरित्यर्थ । अतिव्याप्ति चाह—**कलधौतेति**। कलधौत रजत, रजतमलस्यापि नान्तरीयकतया रजतज्ञानप्रयुक्तादानादिभाक्त्वमस्तीति तदपि रजतज्ञानविषयः स्यादित्यर्थ.। द्वितीय दूषयति—**नापीति**। इच्छाधार आत्मैवेति अनात्मवर्गे लक्षणमव्यापकमित्यर्थ । नचेच्छादिविषयत्वं, तस्यैव निरूप्यमाणत्वात्। विषयत्वस्य लक्षणान्तर शङ्कते—**अथ ज्ञानेति**। घट इति ज्ञानाद्यद्धानादिज्ञान जायते तत्प्रति विषयत्व हानादियोग्यत्वमेव वा यत्तत्पूर्वज्ञान प्रति विषयत्वमित्यर्थः। एतेनातीतादि सगृहीत, तदेतदात्माश्रयेण दूषयति—**न। ज्ञानगोचरत्वस्यैवेति**। किंच हानादिज्ञानाना हानादिज्ञानान्तरजनकत्वमस्ति? न वा? यदि नास्ति, तदा हानादिज्ञानाना निर्विषयत्वप्रसङ्ग । अस्ति च तदतोऽव्याप्तिरित्याह—**हानादिज्ञानानामिति**। प्रथम दूषयति—**जनकत्वे वेति**। ज्ञानान्तरजनकत्वेन तज्ज्ञानानामपि सविषयत्वासद्व्यर्थ ज्ञानान्तरजनकत्वे घटादिज्ञानानुत्पाद सुषुप्त्यभावश्च प्रसज्येयातामित्यर्थ.। द्वितीये दूषणमाह—**व्यवहारयोग्यत्वमिति**। उपलक्षणं चैतत्प्रथमपक्षस्यापि। तेन हानादिज्ञानगोचरत्वेपि गोचरत्वान्तरमास्ति? न वा? यद्यस्ति, तदानवस्था। अथ नास्ति, तर्हि तस्यानिर्विषयत्वमित्यपि द्रष्टव्यम्।

---

( व्यवहार ) पक्ष भी युक्त नही, क्योकि ( यहाँ कैसा व्यवहार विवक्षित है? आकर्षणादि? अथवा इच्छादि? ) आकर्षणादि व्यवहार आत्मादि विभु पदार्थो मे है नही ( अत वहाँ विषयता कैसे बनेगी? ) 'रजत' हिलाने-चलाने से रजत-गत मल मे भी हल-चल अनिवार्य रूप से होती है, इस प्रकार रजत-ज्ञान-जन्य आकर्षणादि व्यवहार का आश्रय रजत-गत मल भी है, अत उसमे भी रजत-ज्ञान की विषयता प्राप्त होगी। इच्छादि व्यवहार भी नही ले सकते, क्योकि इच्छारूप व्यवहार का आधार तो केवल आत्मा है, उससे भिन्न पदार्थो मे विषयता की उपपत्ति न हो सकेगी।

यदि कहा जाय कि विषय-ज्ञान से जन्य त्यागादि-ज्ञान की विषयता अथवा त्यागादि-ज्ञान की योग्यता ही प्रथम ज्ञान का विषयत्व है। [ स्पष्टार्थ यह है कि जिस ज्ञान से जन्य हानादि-ज्ञान का जो विषय होता है, वही उस प्रथम ज्ञान का भी विषय होता ह ]। तो यह कहना भी युक्त न होगा, क्योकि ज्ञान-विषयता ही निरूपणीय है [ अर्थात् हानादि-ज्ञान की विषयता का निर्णय होने पर प्रथम ज्ञान की विषयता का निश्चय होगा। इस प्रकार ज्ञान विषयता के निरूपण मे ज्ञान-विषयता की अपेक्षा हो जाने से आत्माश्रय दोष होता है ]। एक और जिज्ञासा वहाँ होती है कि हानादि-ज्ञान अपनी विषयता बनाने के लिए दूसरे हानादि-ज्ञानो के जनक ( है? कि नही? ) यदि नही, तब तो हानादि-ज्ञानो की विषयता कही नही, अत वे निर्विषयक हो जायँगे। यदि हानादि-ज्ञानो को उत्पन्न करते है, तब ( द्वितीय हानादि-ज्ञान अपनी विषयता के लिए तृतीय हानादि-ज्ञान को, तृतीय चतुर्थ को, इस प्रकार ) किसी एक विषय के हानादि-ज्ञानो की ही धारा चलती रहेगी, न तो विषयान्तर के ज्ञान को अवसर मिलेगा और न कभी सुषुप्ति ही बन सकेगी। हानादि व्यवहार योग्यत्व ही विषयत्व है—यह मानने पर उक्त व्यवहार-योग्यता मे ( दूसरी योग्यता है? या नही? ) यदि दूसरी योग्यता है, तब अनवस्था और यदि नही है, तब योग्यता मे विषयत्वाभाव प्राप्त होगा।

अलमिह लक्षणान्तरगवेषणापरिश्रमेण यस्यां संविदि योऽर्थोऽभासते स तद्विषय इति लक्षणनिरुक्त्युपपत्तेरिति चेत्, मैवं, विकल्पासहत्वात्। सविदीति सप्तम्या किमधिकरण विवक्ष्यते ? अथ विषय ? कि वा सबन्धिमात्र ? सति सप्तमी वा ? नाद्य , घटादिद्रव्याणा बाह्यानामान्तरसविलक्षणगुणाधिकरणतानुपपत्तेः। न द्वितीय , तस्यैव निरूप्यमाणत्वात्, सविदो विषयत्वं घटादीना च विषयित्वमिति वैपरीत्यापत्तेश्च। न तृतीय , सविज्जनकतया तत्सबन्धिनो नयनादृष्टादेरपि तद्विषयत्वप्रसङ्गात्। सविदि भासत इति भासमानताया विशेषणत्वान्न नयनादावतिप्रसङ्ग इति चेत्, न , भासमानताया एवाद्याप्यनिरूपितत्वात्। न चतुर्थ , भास-

शालिकनाथोक्तलक्षणमवतारयति—**अलमिह लक्षणान्तरेति**। यस्या सविदि योऽर्थोऽवभासते सोऽर्थस्तस्या. सविदो विषय इत्यर्थ.। उक्तं च पञ्चिकाप्रकरणे—

'अत्र ब्रूमो य एवार्थो यस्या सविदि भासते।

वेद्यः स एव नान्यद्धि वेद्यावेद्यस्य लक्षणम् ॥' इति (प्र० प० नय० २३)

तदेतद्दूषयति—**मैवमिति**। **घटादिद्रव्याणां संविल्लक्षणगुणाधिकरणतानुपपत्तेरिति**। उपलक्षण चैतद्गुणकर्मसामान्यविशेषाणामिदमनिष्ट न भवतीत्यत उक्त—**बाह्यानामान्तरत्वेति**। ततश्च तेषु लक्षणस्याव्याप्तिरिति भावः। विषयसप्तमीपक्ष निराचष्टे—**न द्वितीय इति**। विषयत्वस्यैव निरूप्यमाणत्वा-दात्माश्रयप्रसङ्ग इत्यर्थ। किंच सविदीति सप्तम्या सविदो विषयत्वाभिधाने वैपरीत्यमपि स्यादित्याह—**सविद इति**। सबन्धिमात्रमिति तृतीयपक्ष निराचष्टे—**न तृतीय इति**। सविदीति कोऽर्थः, सवित्स-बन्धीति, तथाच नयनाद्यपि तथेति घटज्ञानस्य नयनाद्यपि विषय. स्यादित्यतिव्याप्तिरित्यर्थ। नच तस्यापि विषयत्वादनतिव्याप्तिर्विशेषपरत्वात्। इतरथा वस्तुमात्राभिधानापातात्। ननु यद्यपि सबन्धिमात्रं सप्तम्या प्रतीयते तथापि भासत इति विशेषणात् भासमानतया सबन्धि विवक्षितम्। तथाचाप्रकाशमाननयनादि-व्यावृत्तिरिति शङ्कते—**सविदीति**। भानविषयत्व हि भासमानत्व तथाचात्माश्रयत्वमिति परिहरति—**न**। **भासमानताया इति**। सतिसप्तमीपक्ष निराचष्टे—**न चतुर्थ इति**। अत्रापि सविदि सत्या यद्भासते स

शालिकनाथ का कहना है कि लक्षणान्तर की खोज मे श्रम करने की आवश्यकता क्या ? विषयताका लक्षण यह है—'जिस ( सविदि = ) ज्ञान मे जो अर्थ अवभासित होता है, वही उस ज्ञान का विषय है।' किन्तु यह कहना सम्भव नही, क्योकि 'सविदि'—यहाँ सप्तमी विभक्ति से क्या अधिकरण विवक्षित है ? अथवा विषय ? या सम्बन्धिमात्र ? या सतिसप्तमी हे ? प्रथम पक्ष उचित नही, क्योकि ( उस पक्षसे 'सविदि' का अर्थ होगा—सविद्रूप अधिकरण मे। किन्तु यह सभव नही, कारण कि) घटादि-पदार्थ तो द्रव्य तथा बाह्य है, किन्तु सवित् आन्तरिक है, तथा गुण है। अत· घटादि की अधिकरणता सवित् मे नही बन सकती। द्वितीय (विषयता) पक्ष मे आत्माश्रयता दोष है, क्योकि विषयता ही निरूप्यमाण है। इस पक्ष मे एक दूसरा दोष 'विपरीतरूपापत्ति' और होगा अर्थात् सवित् मे विषयता और घटादि मे विषयिता की प्राप्ति होगी [आशय यह है कि जैसे विषय-सप्तमी पक्ष मे होता है 'मुक्तौ कामना' का अर्थ—'मुक्तिविषयिणी कामना', वैसे 'सविदि घट' का अर्थ होगा—'सविद्विषयक घट'। तब तो उलटा सम्बन्ध हो ही जायगा]। तृतीय ( सम्बन्धिमात्र ) पक्ष भी ठीक नही, क्योकि ज्ञान के जनक होने से नयनादि भी सम्बन्धी है, अत. घट-ज्ञान के नयनादि भी विषय होने लग जाॅयगे। यदि कहा जाय कि 'सविदि भासते'—इस प्रकार भासमानता भी विषय का विशेषण है। [ अर्थात् सप्तमी का अर्थ तो सम्बन्धिमात्र ही है किन्तु केवल सम्बन्धी विषय नही, अपितु भासमान सम्बन्धी को विषय मानेगे। घट के सम्बन्धी होने पर भी नयनादि घट-ज्ञान मे भासमान नही, अत· उनमें विषयतापत्ति न होगी]। तो ऐसा कहना सगत नहीं, क्योकि भासमनता का ही तो अभी तक निरूपण नही हो सका है। ( चतुर्थ सतिसप्तमी ) पक्ष भी

मानत्वानिरुक्तेरेव ।

**ज्ञानाकारार्पको हेतुर्विषय इति चेत्, न, ज्ञानतदाकारयोर्भेदाभावेन सर्वेषामपि ज्ञान-हेतूनां तदाकारसमर्पकतया विषयत्वप्रसङ्गात् । दृश्यमानतया तदाकारसमर्पको विषय इति-चेत्, न, दृश्यमानताया एवाद्याप्यनिरूपणात् । न च ज्ञानकर्मत्वं विषयत्वम्, अतीतादि-ज्ञानस्येश्वरज्ञानस्य च कर्मकारकाजन्यत्वेनाविषयत्वप्रसङ्गात् । संबन्धान्तरमन्तरेण ज्ञानस्य यद्विशेषणं स तद्विषयो, विशेष्यं च तेन विषयीति चेत्, न, मत्समवेतं रूपज्ञानमित्यत्र**

---

विषय इति वक्तव्यम् । तथाचान्माश्रयत्वमित्यर्थं । नच ज्ञाने सति व्यवहारयोग्यत्वमेवार्थस्य भासमानत्व-मिति वाच्यम्, योग्यताया पूर्वोक्तदूषणापातात् ।

सौगताभिमत लक्षण शङ्कते— **ज्ञानेति** । घटज्ञान पटज्ञानमिति योय ज्ञानाकारस्तदर्पको यो हेतु' स विषय इत्यर्थः । तेन च नयनादिव्यावृत्तिः । उक्त हि—

'भिन्नकाल कथ ग्राह्यमिति चेद् ग्राह्यता विदु ।
हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ॥' इति

दूषयति—**नेति** । ननु यद्यपि नयनादीना ज्ञानस्वभावभूताकारहेतुत्वमस्ति तथापि दृश्यमानतयाऽऽकार-हेतुत्व नास्ति तादृश च लक्षण विवक्षितमिति शङ्कते—**दृश्यमानतया इति** । लक्षणान्तर दूषयति—**नचेति** । तत्र हेतु.—**अतीतादीति** । कर्म नाम कारकविशेषः । कारकं च कारणविशेष । कारण च कार्ये सभवति, तेन नित्यस्येश्वरज्ञानस्य तद्विषयस्य च विषयविषयिभाव न व्याप्नोतीद लक्षणम् । अतीता-देस्त्वविद्यमानत्वादेव नियतप्राक्क्षणसत्त्वलक्षणकारणत्वाभावादव्याप्तिरित्यर्थं । उपलक्षणं चैतदनुमानादे', कर्मत्व च तत्फलभाक्त्व तच्च दूषत पुरस्तात् । लक्षणान्तर शङ्कते—**सबन्धान्तरमिति** । ज्ञानस्य विशे-षण विषय इत्युक्ते ज्ञानगतसत्तादिजातिष्वात्मनि चक्षुरादिपु च समवायकार्यकारणभावसम्बन्धाभ्या यथायथ ज्ञान प्रति विशेषणेष्वतिव्याप्ति स्यात्तदर्थं सबन्धान्तरमन्तरेणेत्युक्तम् । यद्यपि घटतज्ज्ञानयो कार्यकारण-भावोस्ति तथापि स नेश्वरज्ञानेऽतीतादौ च सभवत्यनतिरिक्तश्चेत्यभिप्रायः । **विशेष्य चेति** । तेन विशेष-णेनेत्यर्थं । तदेतदतिव्याप्त्या दूषयति—**न । मत्समवेतमिति** । मत्समवेतमित्यत्र हि समवायो ज्ञान प्रति

---

समीचीन नही, क्योकि वहाँ भी भासमानत्व का निर्वचन कैसे होगा ?

बौद्धो का कहना है कि 'ज्ञान गत आकार के समर्पक हेतु' को विषय कहा जाता है । किन्तु यह भी युक्तियुक्त नही, क्योकि ज्ञान तथा ज्ञान-गत आकार—दोनो का भेद न होने के कारण ज्ञान के सभी नयनादि हेतुओ मे ज्ञान-गत आकार की समर्पकता रहने से विषयता प्राप्त होगी । यदि कहा जाय कि दृश्यमान होकर जो आकार समर्पक हो, उसे विषय कहते है, तो यह भी नही कह सकते, क्योकि दृश्यमानता का ही तो अभी तक निरूपण नही हो सका है । 'ज्ञान-कर्मत्व ही विषयत्व है'—यह भी नही कह सकते, क्योकि अतीतादि-विषयक ज्ञान तथा ईश्वर-ज्ञान, कर्म कारक से जन्य नही, अत निर्विषयक हो जायँगे । [ आशय यह है कि कर्म नाम है—एक कारक विशेष का और कारक होता है कारण विशेष । यह लक्षण उसी विषय पर जायगा, जो कि अपने ज्ञान का कारण हो । किन्तु अतीतादि विषय अपने ज्ञान के अव्यवहित पूर्ववृत्ति न होने से कारण नही, अत. उनमे लक्षण की अव्याप्ति है, एवं ईश्वर-ज्ञान नित्य होने से कोई विषय उसका जनक नही, अत ईश्वर-ज्ञान के विषय मे भी लक्षण अव्याप्त है । ] ।

'सम्बन्धान्तर के बिना ही जो पदार्थ, जिस ज्ञान का विशेषण है, वह पदार्थ उस ज्ञान का विषय और विशेष्य ( ज्ञान ) उसका विषयी है'—यह लक्षण भी युक्त नही, क्योकि उसका "मत्समवेत रूपज्ञानम्" ( मुझमे समवेत रूपज्ञान )—यहाँ समवाय मे व्यभिचार ( अतिव्याप्ति ) है । कारण कि—किसी अन्य सम्बन्ध के बिना ही मत्समवाय और रूपज्ञान का विशेषण—विशेष्य-

व्यभिचारात्। संबन्धान्तरमन्तरेणैव मत्समवायस्य रूपज्ञानस्य च विशेषणविशेष्यभावेऽपि मत्समवायरूपज्ञानयोर्विषयविषयित्वाभावात्, तत्र समवायस्यानुव्यवसायज्ञानविषयत्वेऽपि रूपज्ञानाविषयत्वात्। तदेव विषयविषयिभावानिरूपणात्, आत्मन्यध्यस्ततया चासिद्धौ, प्रपञ्चस्य सत्यत्वे दृश्यत्वानुपपत्तिर्बाधिकेति स्थितम्। न च भेदस्य मिथ्यात्वे शब्दान्तरादे कर्मभेदप्रतिपादकस्याप्रामाण्यप्रसङ्ग, घटपटादेरिव व्यावहारिकस्यैव भेदमात्रस्य कर्मगोचरस्य तत्र तत्र शब्दान्तरादिभि प्रतिपाद्यमानत्वात्त्द्गतबाधायोग्यतालक्षणस्य सत्यत्वस्य प्रतिपादने तेपामौदासीन्यात्। तदेव निरस्तसमस्तप्रत्यनीकमनुमानं प्रपञ्चमिथ्यात्वे मानमिति सिद्धम्।

नन्वस्यानुमानस्य मिथ्यात्व किमनुमानान्तरेण सिद्ध्यति ? किं वा स्वेनैव ? आद्येऽन-

---

विशेषण, नचानयोः सयोगसमवायादिसबन्धान्तरमस्तीत्यतिव्याप्तिरित्यर्थ। अस्यैव प्रपञ्च सवन्धान्तरमित्यादिः। ननु मत्समवेत ज्ञानमित्यस्यानुव्यवसायस्य समवायस्य च विषयविषयिभावाल्लक्ष्यमेव समवाय, तत्र च तल्लक्षणगमनमनुगुणमेवेत्यत आह—**तत्र समवायस्येति**। अनुव्यवसाय प्रति विषयत्वेऽपि यत्प्रति विशेपण, तत्प्रति विषयत्वमित्यर्थ.। एवं नास्ति घटज्ञानमित्यादावभावस्यापि घटज्ञानादिविषयत्वप्रसङ्ग। प्रतिपादितं बाधकतर्कमुपसहरति—**तदेवमिति**। यत्तु शब्दान्तराद्यप्रामाण्यप्रसङ्ग इत्यादिना मिथ्यात्वे बाधकमुक्त तदपि मेयकर्मसमानस्वभावव्यावहारिकमेव सन्त भेद प्रतिपादयति, नतु ब्रह्मवत्पारमार्थिकमित्यन्यथाप्युपपन्नमित्याह—**नच भेदस्येति**। निरूपितमनुमानमुपसहरति—**तदेवमिति**। तथा विमतः ससर्ग. एतद्वैतत्ससर्गान्यतरान्याबाध्यान्यः प्रमेयत्वादित्यादयोऽप्यत्र महाविद्या द्रष्टव्याः।

यद्यपीदमनुमान घटादिमिथ्यात्व साधयति तथापि न स्वस्य तत्साधयितुमलम्, आत्माश्रयात्। नाप्यन्येन, अनवस्थापातात्। तथाच नाद्वैतसिद्धि। धर्मित्वादीना च कियता हेतूनामस्मिन्ननुमानेऽनैकान्तिकत्वमित्यभिप्रेत्य प्रत्यवतिष्ठते—**नन्वस्यानुमानस्येत्यादिना**। शङ्कते—**जिज्ञासायामिति**। यदि

---

भाव है, किन्तु मत्समवाय और रूपज्ञान में विषय-विषयिभाव है नहीं, ( अत अलक्ष्य में लक्षण जाता है )। वहाँ समवाय यद्यपि अनुव्यवसाय ज्ञान का विषय है, परन्तु रूपज्ञान का विषय नहीं। इस प्रकार विषय विषयिभाव का निरूपण हो नहीं सकता। आत्मा में अध्यस्त रूप से प्रपञ्च की सिद्धि प्रपञ्च-सत्यत्ववादियों के मत में है नहीं। फिर तो प्रपञ्च की सत्यता में, प्रपञ्चमें दृश्यत्व की अनुपपत्ति प्रबल बाधक तर्क है—यही स्थिर रहा। यह जो शका की थी कि भेद के मिथ्या होने पर कर्म-भेद-प्रतिपादक शब्दान्तरादि प्रमाणों में अप्रामाण्य आ जायगा, वह शंका ठीक नहीं, क्योंकि घट-पटादि के समान कार्यों के व्यावहारिक भेद का ही तत्र-तत्र शब्दान्तरादि के द्वारा प्रतिपादन किया गया है। कर्मों में सर्वथा अबाध्य ( पारमार्थिक ) भेद का निरूपण शब्दान्तरादि नहीं करते, अपितु उस अंश में उदासीन हैं। अत समस्त विरोधों से रहित उक्त अनुमान प्रपञ्च मिथ्यात्व में प्रमाण है—यह सिद्ध हो गया।

शंका—उक्त अनुमान में मिथ्यात्व क्या दूसरे अनुमान से सिद्ध होता है ? या उसी से ? प्रथम पक्ष में तो अनवस्था होती है, क्योंकि पूर्व-पूर्व अनुमानों में मिथ्यात्व सिद्ध करने के लिए उत्तर-उत्तर अनुमानों की अपेक्षा होगी। यदि सन्देह हो कि 'जिज्ञासा होने पर उत्तर-उत्तर अनुमान

---

१ विमतः ससर्ग. एतद्वैतत्ससर्गान्यतरत्वविशिष्टस्यान्याबाध्यत्वस्याभाववान् प्रमेयत्वात्पटससर्गवदिति स्पष्टमनुमानम्। अन्याबाध्यत्वाभावाप्रसिद्धावपि तद्विशेपणमेतद्वैतत्ससर्गान्यतरत्व नास्तीति विशेपणाभावप्रयुक्तो विशिष्टाभावस्तत्रप्रसिद्ध्यति। पक्षे च विशेषणस्यैतद्वैतत्ससर्गान्यतरत्वस्य विद्यमानत्वात्स विशिष्टाभावः पक्षधर्मतावलात् सिद्ध्यन् न विशेषणाभावप्रयुक्तोऽपितु विशेष्याभावप्रयुक्त एव मन्तव्यः। एव च पक्षेऽन्याबाध्यत्वाभावात्मकस्यान्यबाध्यत्वस्य सिद्धिरितिसिद्धमभिलषित मिथ्यात्वमिति सक्षेपः।

वस्था—तस्य तस्यानुमानस्य मिथ्यात्वसाधनेऽनुमानान्तरापेक्षणात् । जिज्ञासाया सत्यां तत्तदनुमानप्रवृत्तेर्नानवस्था मूलक्षयकरीति चेत्, न, यद्यदुक्तसाधनं तत्तदुक्तसाध्यमिति व्याप्तिग्रहणसमये तस्य तस्यानुमानस्य मिथ्यात्वानधिगमे सर्वोपसंहारवती व्याप्तिर्न सिद्ध्येत्। अधिगमे च तदधिगमाय तत्तदनुमानान्तरं तदैवापेक्षणीयमिति कथय कथं न मूलक्षति ? द्वितीये तु स्वात्मनि वृत्तिविरोध , स्वगतमिथ्यात्वस्य स्वेनैव ग्रहणादिति चेत्, मैवम्, शब्द-शब्दवत्प्रपञ्चसत्यत्वानुमानवदध्ययनविधिवच्चाविरोधात् ।

ननु नाध्ययनविधिप्रयुक्तमध्ययनम्, तस्याध्यापनविधिप्रयुक्तत्वात् । तथाहि—अध्ययन-विधिर्न स्वविषयाध्ययनस्यानुष्ठापनक्षम., निर्नियोज्यत्वात् । नह्यत्र कामी जीवनादिनिमित्त-

---

हि प्रथमानुमानसमसमय एवानन्तानुमानस्फुरणापत्ति. स्यात्तदानुपलब्धिपराहततया मूलक्षयकरी, नात्र तदस्तीत्यर्थ । दूषयति—यद्यदुक्तसाधनमित्यादिना । तत्तदनुमानजातस्य मिथ्यात्वेन साध्यवद्व्यक्तित्वात् व्याप्तिग्रहणकाले सर्वेषामेव स्फुरणापत्त्या मूलक्षतेरित्यर्थ । स्वेनैव स्वमिथ्यात्वसाधने दूषणमाह—द्वितीये त्विति । तमिममाक्षेप परिहरति—मैवम् । शब्दशब्दवदित्यादिना । यथाहि—शब्दशब्द. शब्दत्वाक्रान्त शब्दजात विषयीकुर्वन्स्वमपि विषयीकरोति, यथा वा सर्वप्रपञ्चसत्यत्वानुमान स्वात्मन्यपि सत्यता साधयतीति भवद्भिरभिमन्यते, यथा वा 'स्वाध्यायोऽध्येऽतव्य' इत्यध्ययनविधि स्वाध्यायशब्द-वाच्यसमस्तवेदराशेरध्ययन विदधानस्तदन्तर्वर्तिन स्वात्मनोऽपि विधत्ते तेषु य. परिहारोद्धारभेदादि. सोऽत्रापि समान इत्यर्थः ।

अध्ययनविधेर्विधायकत्वमुक्तममृष्यमाणः प्राभाकर प्राह—ननु नाध्ययनेति । नन्वविहितस्य कथमनुष्ठानमित्यत आह—तस्येति । ननु श्रूयमाणे विधौ कथमेतत्प्रयुक्तत्व तत्राह—तथाहीति । स्ववि-षयरूपमध्ययन स्वविषयाध्ययनम् । ननु यद्यप्यत्र स्वर्गादिवत्काम्य, नित्य वा जीवनादिवत्किञ्चिन्निमित्तं न

---

की प्रवृत्ति होगी, बिना जिज्ञासा के प्रथम अनुमान के समय उत्तर-उत्तर अनन्त अनुमानों की अपेक्षा नही, कि अनवस्था मूल-क्षयकरी हो । तो वह सन्देह उचित नही, क्योकि—'जो जो उक्त साधनवाला है, वह-वह उक्त साध्यवाला है'—इस प्रकार की व्याप्ति के ग्रहण समय तत्तत् अनु-मान मे मिथ्यात्व का निश्चय न होने पर सर्वव्यक्तियो मे घटने वाली व्याप्ति सिद्ध न होगी । यदि उक्त व्याप्ति-ग्रहण समय सभी अनुमानो मे मिथ्यात्व निश्चित है, तब तो मिथ्यात्व के लिए अनु-मानान्तर वही समाप्त हो गये–अत कहिए मूल-क्षति क्यो नही ? द्वितीय ( अनुमान मे मिथ्यात्व उसी अनुमान से ही सिद्ध होता है ) पक्ष मानने पर स्व मे स्व-वृत्तिता रूप विरोध उपस्थित होता है, क्योकि स्व-गत मिथ्यात्व का ग्रहण स्व से होता है ।

समाधान— उक्त शङ्का उचित नही क्योकि जैसे 'शब्द'–यह पद सभी घट, पटादि शब्दो को विषय करता हुआ अपने को भी विषय करता है, समस्त प्रपञ्च-गत सत्यत्व का अनुमान अपने मे भी सत्यत्व सिद्ध करता है, "स्वाध्यायोऽध्येतव्य" (अपनी शाखा का अध्ययन करना चाहिए—तै० आ० २।१५ )—यह अध्ययन-विधि समस्त वेदराशि के अध्ययन का विधान करती हुई अपने अध्ययन का भी विधान करती है । ठीक वैसे ही सर्वप्रपञ्च गत मिथ्यात्व का अनुमान अपने मे भी मिथ्यात्व सिद्ध कर लेगा, किसी प्रकार का विरोध नही ।

शङ्का—प्रभाकर का कहना है कि "स्वाध्यायोऽध्येतव्य."—इस अध्ययन-विधि के द्वारा अध्ययन का विधान नही होता, अपितु अध्यापन-विधि के द्वारा । उक्त अध्ययन-विधि में यह सामर्थ्य ही नही कि वह स्वविषय रूप अध्ययन मे प्रवृत्त कर सके, क्योकि उसमें किसी नियोज्य (अधिकारी) का उल्लेख नही । न तो वहाँ (स्वर्गकामो यजेत के समान) कोई कामनावाला या

वान्य' कश्चिन्नियोज्यः प्रतीयते। नापि विश्वजिदादिवत्कल्पयितु शक्य., अध्यापनविधिप्रयुक्तित एव तद्विषयस्याध्ययनस्य सिद्धौ नियोगासिद्धे कल्पकाभावात्। नचाध्यापनविधेर्पि निनियोज्यतयाननुष्ठापकत्वम्, आचार्यकरणकामस्य नियोज्यस्य प्रतीते'। तथा हि— 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीते'ति श्रूयते। तत्र 'संमाननोत्सञ्जनाचार्यकरणे'ति सूत्रेणा-

श्रूयते, तथापि यथा 'विश्वजिता यजेत,' 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ती'त्यत्र वाऽश्रूयमाणोऽपिस्वर्गकाम्यधिकारी कल्पितः। तथा हि 'विश्वजिता यजेते' त्यत्राश्रूयमाणोऽधिकारी कल्प्य ? उत न ? इति सदेहे द्वारमित्यत्र क्रियान्वयं विना कारकाणामिव विषयेण पर्यवसितान्विताभिधानस्य कार्यस्याधिकारिणा विनानुपपत्त्यभावात् अनध्याहार इति प्राप्य्य राद्धान्तितम्। कर्तृव्यापारकृते' कर्त्रा विनानुपपत्तेस्तन्निरूप्यकार्यस्याप्यनुपपत्तिरिति सोऽध्याहर्तव्यः। स चासबद्धकार्यसबन्धो न सबद्ध्यत इति स्वसबन्धित्वेन कार्यबोद्धा नियोज्यो भवति। तत्रापि सर्वकल्पनाया नैरर्थक्यात् यस्य कस्यचित्कल्पनाया विनिगमनाभावात्सर्वाभिलषितस्वर्गकामोऽधिकारी कल्पित. 'चोदनाया फलाश्रुते'रित्युपक्रम्याधिकरणत्रयेण, 'सः स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वा'दित्यन्तेन। एव पिण्डपितृयज्ञेऽमावास्यायामिति कालपर ? उत कर्मपर ? इति सशय्य कर्मपरत्वात्तदङ्गत्वमिति पूर्वपक्षस्य कर्मपरत्वे लक्षणाप्रसङ्गात् कालपरत्वमादाय स्वतन्त्राधिकारत्वेन स्वर्गकामाधिकार्यध्याहृतः—'पिण्डपितृयज्ञः स्वकालत्वादनङ्ग स्या'दित्यत्र, तद्वदत्र किं न स्यादित्यत आह— **नापि विश्वजिदादिवदिति**। ननु 'तमध्यापयीते' त्यत्रापि न कश्चिन्नियोज्यः प्रतीयतेऽतो निर्नियोज्यत्वमुभयो समानमिति कथमेतत्प्रयुक्तविषयत्वमितरस्य, तत्राह—**न चाध्यापनेति**। हेतुमाह—**आचार्यकरणकामस्येति**। आत्मनो यदाचार्यकरणमाचार्यत्वसपादन तत्कामस्येत्यर्थः। नन्वाचार्यकरणकाम इत्यपि न श्रूयते इति तत्राह—**तथा ह्यष्टवर्षमिति**। श्रूयता नाम, तावतापि किमायातमाचार्यकरण इति तत्राह—**तत्र संमाननेति**। 'सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु निय.'। अयमर्थः— यद्यपि 'स्वरितञितः कर्त्रभिप्राये क्रियाफल' इति कर्तृगामिफलाभिधायिनो नयतरात्मनेपद सिद्ध तथाप्यकर्त्रभिप्रायार्थोयमारम्भः, सम्माननादिष्वर्थेषु गम्यमानेषु नयतर्धातोरात्मनेपद स्यात्। तत्र सम्मानन पूजन, यथा नयत चार्वी लोकायते, चार्वी बुद्धिमानाचार्यो लोकायते मते शिष्यान्नयते। ते हि सद्युक्तिभिराचार्येण प्रतिष्ठापितबुद्धय. सन्तः पूजिता भविष्यन्ति इत्यात्मनेपदार्थ.। उत्सञ्जनमुत्क्षेपण, यथा माणवक-

("यावज्जीवमग्निहोत्रं जुहोति" के समान) जीवनादि निमित्तवाला व्यक्ति अधिकारी श्रुत है और न (विश्वजिता यजेत् के समान) कल्प्य ही है, क्योकि अध्यापन-विधि के बलसे ही अध्ययन-विधि के विषयभूत अध्ययन की सिद्धि हो जाती है। फिर तो वहाँ नियोग का कोई कल्पक नही। 'अध्यापन-विधि में भी कोई नियोज्य न होने से अध्यापन-विधि भी अनुष्ठापक नही होगी'—यह सन्देह नही हो सकता क्योकि 'आचार्यत्व-कामनावान्' वहाँ नियोज्य श्रुत है—श्रुति कहती है कि 'अष्टवर्ष के ब्राह्मण-बालक का यज्ञोपवीत सस्कार करके उसे वेदाध्ययन करावे'।

उस श्रुति मे "सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु निय" (सम्पूजन, उत्क्षेपण, आचार्यत्व-सम्पादन, ज्ञान, भृति, विगणन और व्यय—इन अर्थो मे 'णीञ्' धातु से आत्मनेपद होता है—पा० सू० १।३।३६)—इस सूत्र से 'आचार्य-करण' अर्थ मे 'णीञ्' धातु से आत्मने पद

१. "चार्वी = बुद्धिस्तत्सम्बन्धादाचार्योऽपिचार्वीति" काशिकावृत्ति.। २—"ते युक्तिभिः स्थाप्यमाना सम्मानिताः पूजिता भवन्ति"—इति काशिकाविष्कृतार्यस्यच्छायायामस्यामपि 'भवन्ति' इत्येव भाव्यम्, यतोऽत्र शास्त्रस्थसिद्धान्तप्रापणमेव पूजनमभिमतम्। उक्त हि न्यासे—"अभिलषितार्थसम्पादनमेव तेषा पूजा। अभिलषितार्थस्तु लोकायते शास्त्रे पदार्थाना सम्यगवबोध" इति। तादृश पूजन तु वर्तत एवाध्यापनसमये। अतएवात्र शाब्दिका.—लोकायतमताधिकरणकशिष्यकर्मकपूजनानुकूलप्राप्त्यनुकूल-

**चार्यकरणे नयतेरात्मनेपदविधानात्, 'उपनयीत, तमध्यापयीते'ति चोपनयनाध्यापनयोरेकप्रयोगतावगमात्, उपनयनपूर्वकाध्यापनसाध्याचार्यत्वप्रतीतौ तत्कामिनो नियोज्यत्वावगमात् न निर्नियोज्यताध्यापनविधे'। तथा च स्वविषयस्याध्यापनस्यानुष्ठानं प्रयुञ्जानोऽध्यापनविधिस्तन्निष्पादकमध्ययनमपि प्रयुङ्क्ते, तेन विध्याक्षेपलक्षणोपादानप्रमाणेनान्यत एवाध्ययनसिद्धेर्नाध्ययनविधिप्रयुक्तमध्ययनमिति।**

---

मुन्नयते उत्क्षिपतीत्यर्थः। आचार्यकरणमाचार्यत्वसम्पादनं, यथा माणवकमुपनयते आत्मानमाचार्यीकर्तुं माणवकमात्मसमीपं प्रापयतीत्यर्थः। ज्ञानं प्रमेयनिश्चयः, यथा नयते चार्वी लोकायते तन्मते प्रमेयत्वं[1] निश्चिनोतीत्यर्थः। भृतिर्वेतनं[2], यथा कर्मकरानुपनयते, भृतिदानेन समीपीकरोतीत्यर्थः। विगणनमृणादेर्निर्यातनं, यथा मद्राः करं विनयन्ते, करदानेन निवर्तयन्तीत्यर्थः। व्ययो धर्मादिषु विनियोगः, यथा शतं विनयते सहस्रं विनयते, धर्मार्थं विनियङ्क्ते इत्यर्थः। अथ कथमेतेष्वित्युक्तम्, अजां ग्रामं नयतीत्यादिषु विनिवृत्तये इति। तस्मादुपनयीतेति श्रौतमेवाचार्यकरणमित्यर्थः। ननु भवतूपनयनस्याचार्यकरणं फलं तत्र श्रूयत इति, किमायातमध्यापनस्य सनियोज्यत्वे इति तत्राह—**उपनयीत तमध्यापयीतेति चेति। एकप्रयोगतेति।** 'अष्टवर्षं ब्राह्मणमुपनयीत उपनीय च तमध्यापयीते'ति क्त्वाश्रुतेरेकप्रयोगतावगम्यते[3] वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेतिवदित्यर्थः। तथा चैकदेशस्यैवानुष्ठानात्फलासिद्धिरिति सोपनयनाध्यापनादाचार्यत्वसिद्धिरिति भावः। तथा च स्मृतिः—

> 'उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः।
> सकल्पं[4] सरहस्यं[5] च तमाचार्यं प्रचक्षते'॥ इति। (मनु० २।१४०)

ननु भवतूपनयनाध्यापनयोरेकप्रयोगतयाङ्गाङ्गिभावावगमादङ्गे श्रुतस्याङ्गिनि उपसंहारस्तस्य त्वनित्यस्याचार्यकरणस्य कथं नियोज्यविशेषणत्वं, नह्यत्र स्वर्गादिवत्कामिशिरस्कत्वं प्रतीयते इत्यत आह—**तत्कामिन इति।** रात्रिसत्त्रन्यायेन[6] फलत्वं विपरिणम्यते इति भावः। नन्वध्यापनविधिः स्वविषयमध्यापनं विहाय कथमध्ययनं प्रयुङ्क्ते इत्याशङ्क्याह—**तथा च स्वविषयस्येति।** ननु विधिर्हि सर्वत्र स्वविषये तदङ्गे वा पुरुषमनुष्ठापयति, नचाध्यनस्याध्यापनाङ्गत्वे किंचन श्रुत्यादीनामन्यतमं प्रमाणमस्ति, नचोपकारमात्रादङ्गत्वं, गोदोहनधनार्जनादेरप्यङ्गत्वप्रसङ्गात्। नचैतदुक्तम्, उक्तं हि 'यस्मिन्प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वादि'ति तत्राह—**तेन विध्याक्षेपेति।** तार्तीयप्रमाणाभावेऽपि चातुर्थिकमस्ति प्रमाणमित्यर्थः।

---

**का विधान किया गया है, एवं 'उपनयीत', 'तमध्यापयीत'—इस प्रकार उपनयन और अध्यापन की एकप्रयोगता प्रतीत होती है, अतः उक्त श्रुति से उपनयनपूर्वक अध्यापन से साध्य आचार्यत्व की प्रतीति होने से उस (आचार्यत्व) का इच्छुक अधिकारी निश्चित हो रहा है। अतः अध्यापनविधि में अधिकारी का अभाव नहीं। इस प्रकार अध्यापन-विधि ही स्वविषय (अध्यापन) का अनुष्ठापक होती हुई अध्यापन के निष्पादक अध्ययन में भी प्रवर्तक है। फलतः अध्यापनान्यथानुपपत्ति रूप अर्थापत्ति प्रमाण से ही अध्ययन में माणवक-प्रवृत्ति सिद्ध हो जाती है, "स्वाध्यायोऽध्येतव्य" यह वाक्य न अध्ययन-विधि है और न इससे प्रयुक्त अध्ययन है।**

---

वर्तमानकालीनकृत्याश्रय एकत्वावलीढश्चार्वीति प्राहुः। १. तत्र प्रमेयं निश्चिनोतीति काशिकानुरूपं 'प्रमेयम्'—इत्येव युज्यते। २ वेतनमिति पाठं मन्ये। ३. एकपुरुषकर्तृकानुष्ठानविषयता। ४ यज्ञविद्या। ५. उपनिषद्। वेदत्वेऽप्युपनिषदां प्रधानविवक्षया पृथङ्निर्देशः। ६. रात्रिसत्रे यथार्थवादिकस्य फलस्य विध्यन्यथानुपपत्याऽधिकारिविशेषणत्वेन प्रतिष्ठाकाम इत्येवं विपरिणम्य बोध्यते तथाऽध्यापनाङ्गे उपनयने श्रुतस्याचार्यत्वकरणलक्षणफलस्याचार्यत्वकाम इत्येवमधिकारिविशेषणत्वेन विपरिणामो बोध्यः।

अत्रोच्यते—भवतु नाम सनियोज्यताऽध्यापनविधेः, तथापि नाध्यापनविधिप्रयुक्तताऽध्ययनस्य सिद्ध्येत्, कामाधिकारे करणांशे रागस्यैव प्रवर्तकत्वात्, अध्यापनस्यापि काम्यत्वात्, तद्विषयरागेणैव तन्निष्पादकेऽप्यध्ययनेऽनुष्ठानलाभात् अध्यापनविधेरनुष्ठापकत्वकल्पनानुपपत्तेः। नचाध्यापनाङ्गत्वादध्ययने विधितः प्रवृत्तिराशङ्कनीया, तत्र श्रुत्यादीनामन्यतमप्रमाणस्यादर्शनात्। नचाध्यापनविधिप्रयुक्तत्वादध्ययनस्य तदङ्गत्वं, प्रयुक्तेर्व्यभिचारात्। न हि 'भिन्ने जुहोति स्कन्ने जुहोति' इत्यादौ भेदनादिना प्रयुज्यमानो होमस्तदङ्गमङ्गीक्रियते। तत्प्रयुक्तेरध्ययनस्याद्याप्यसिद्धेः, अङ्गत्वेन प्रयुक्तिः प्रयुक्तौ च तदङ्गत्वमिति

समाधातुमुपक्रमते—अत्रोच्यते इति। अत्र तावदध्यापनविधेरपि समानमेव निर्नियोज्यत्वमुपनयनस्याङ्गत्वेन तत्र श्रूयमाणस्यापापश्लोकश्रवणवदर्थवादत्वादुपसंहारायोगादङ्गीकृत्यापि तावदुपादानमन्यथैवोपपत्त्या दूषयति—भवतु नामेति। हेतुमाह—कामाधिकार इति। अधिकारो नियोग एव हि प्राभाकरराद्धान्ते। अन्यतोऽप्रवृत्तः खलु पुरुषः शास्त्रेण प्रवर्तनीयस्तथा च काम्यनियोगेषु फलवदेव करणांशेऽपि रागत एव प्रवृत्तः, इतिकर्तव्यतासु तु शास्त्रेण प्रवृत्त इति। अस्तु प्रस्तुते किमायातमित्यत आह—अध्यापनस्यापीति। ननु भवतु करणांशेऽध्यापने कामतः प्रवृत्तिस्तदङ्गेऽध्ययने किमिति विधिर्न प्रवर्तयति ज्योतिष्टोमाङ्गेष्विव दीक्षणीयादिषु, न च दृष्टार्थत्वादविधेयत्वं, तत्तन्नियमोपेताध्ययनजन्यादृष्टस्यावघातादिष्विवान्यतोऽप्राप्तस्य विद्यमानत्वादित्यत आह—न चाध्यापनेति। ननु श्रुत्यादिप्रमाणाभावेऽपि तत्प्रयुक्तत्वलक्षणोपादानप्रमाणात्तदङ्गत्वमुक्तमिति तत्राह—न चाध्यापनविधीति। भिन्ने जुहोतीत्यादौ भेदनादीनां निमित्तत्वेन नैमित्तिकहोमं प्रति प्रयोजकत्वमस्ति, अथ च नाङ्गित्वं, भेदनादीनां निमित्तत्वेनाननुष्ठेयतयाङ्गित्वानुपपत्तेः। अतः प्रयुक्तिर्व्यभिचारणीत्यर्थः। अङ्गीकृत्य प्रयुक्तिमेतदुक्तं सैव तु नास्तीत्याह—तत्प्रयुक्तेरिति। रागस्यैवोभयत्र प्रयोजकत्वादिति भावः। नन्वङ्गत्वात्प्रयुक्तिरित्यत आह—अङ्गत्वेन प्रयुक्तिरिति। किञ्च नोपादानात्मकं किञ्चिन्मानं, मेयानिरूपणात्। तस्माच्छ्रुत्यादिषट्केण विनियोगो, नचाङ्गं ते, यत्तु प्रोक्षणादेः क्रत्वर्थत्वमुपादानलभ्यमिति तन्न, श्रुत्यैवापूर्वसाधनत्वे व्रीह्यादिगते विनियोगात्। तथापि कथमपूर्वार्थत्वम्? उच्यते—व्रीहीणां तण्डुलपिष्टपुरोडाशयागप्रणालिकयाऽपूर्वसाधनत्वमस्ति तथाविधांश्चोद्दिश्य विधीयमानं सर्वस्य द्वारद्वारिभावव्यवस्थितस्याङ्गं भवतीति,

समाधान—यदि मान भी ले अध्यापन-विधि मे सनियोज्यता, फिर भी अध्यापन-विधि से अध्ययन सिद्ध नही हो सकता, क्योकि प्रभाकर का मत है कि काम्यकर्मो मे तो राग ही प्रवर्तक माना जाता है, विधि वाक्य नही। अध्यापन भी काम्य है, अत अध्यापन-विषयक राग से ही उसके निष्पादक अध्ययन के अनुष्ठान का लाभ हो जाता है, इसलिए अध्यापन-विधि मे अनुष्ठापकत्व की कल्पना ही अनुपपन्न है। 'अध्यापन की अङ्गता होने के कारण अध्ययन मे विधि से ही प्रवृत्ति होगी'—यह आशङ्का नही करनी चाहिए, क्योकि अध्ययन अध्यापन का अङ्ग है—इसमे कोई भी प्रमाण नही। [ भाव यह है अङ्गत्व-बोधक छह प्रमाण होते है—(१) श्रुति, (२) लिग, (३) वाक्य, (४) प्रकरण, (५) स्थान और (६) समाख्या। इनमे से उक्त स्थल पर कोई भी नही, अत. अध्ययन मे अङ्गता का निर्णय कैसे होगा ? ] अध्यापन-विधि से प्रयुक्त होने के कारण अध्ययन मे अङ्गत्व है—यह भी नही कह सकते, क्योकि ( जहाँ-जहाँ जिसका प्रयुक्तत्व है, वहाँ-वहाँ उसका अङ्गत्व है—यह व्याप्ति यदि होती, तो अध्यापन-विधि-प्रयुक्त होने से अध्ययन मे अध्यापन का अङ्गत्व मान लेते किन्तु ) प्रयुक्तत्व व्यभिचरित है, क्योकि "भिन्ने जुहोति", स्कन्ने जुहोति" ( कपालो के टूट-फूट जाने पर होम करना चाहिए )—यहाँ कपाल-भेदन से प्रयुक्त होम तो है, परन्तु उसका अङ्ग नही माना जाता। दूसरी बात यह भी है कि अध्ययन मे अध्यापन-विधि-प्रयुक्तत्व

परस्पराश्रयता च। किं चाध्ययनविधावधिकारिणमङ्गीकुर्वता नियोज्य कस्मान्न स्वीक्रियते इति वाच्यम्? अनुष्ठानसिद्धये नियोज्योऽपेक्षितव्य. तच्चान्यत एव सिद्धमिति नासावङ्गीक्रियत इति चेत्, तर्हि अधिकार्यपि नापेक्षणीय, अनुष्ठानस्यान्यत एव सिद्धे। अधिकारी विधिपर्यवसानायापेक्ष्यत इति चेत्, नियोज्येपि तुल्यं, तेनापि विना नियोगापर्यवसानात्। अन्यतोपि विषयानुष्ठानसिद्ध्या च नियोगसिद्धौ का नाम विधेरपर्यवसानवाचोयुक्ति? किं च तमध्यापयीतेति च नायमध्यापने विधि, वृत्त्यर्थत्वेनाध्यापनस्य याजनवत्प्राप्तत्वात्। उक्त हि—

'षण्णा तु कर्मणामस्य त्रीणि कर्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रह'॥ इति। ( मनु. १०।७६ )

---

पश्वेकत्वादीनामपि श्रुत्यैव विनियोगसिद्धिः, ज्योतिष्टोमादेश्च फलार्थत्व वाक्यादिभिरिति। यच्च निर्नियोज्यत्वमध्ययनविधेरुक्त तदपि दूषयति—**किं चाध्ययनविधाविति**। पूर्ववादी नियोज्यानङ्गीकारे कारणमाह—**अनुष्ठानसिद्धय इति**। दूषयति—**अधिकार्यपीति**। अनुष्ठानार्थमधिकार्यपेक्षा तच्चेदन्यतः सिद्ध किमर्थमधिकार्यपेक्ष्यत इत्यर्थः। शङ्कते—**अधिकारीति**। अयमभिसधि.—यद्यपि कार्यमेव नियोगापरपर्याय वाक्यार्थस्तथापि तदेवेष्टसाधनतानिबन्धन यथाहुः—'फलसाधनता तत्र कारण तेन कार्यते'ति। तच्चेष्टसाधनत्व कस्येति भोक्तारमधिकारिणमाकाङ्क्षमाण न तावत्पर्यवस्यति यावन्नाधिकारिविशेषप्रतीतिरिति, तदेतन्नियोज्येपि तुल्य नियोगस्यापि नियोज्यव्यतिरेकेणापर्यवसानादिति परिहरति—**नियोज्येपीति**। आपाद्यदूषणमिदम्, आधानादिनियोगेषु तैरनङ्गीकारात्। किं च विषयसिद्धिद्वारा स्वसिद्धिर्हि विधे पर्यवसान सा चेदन्यतोपि सिद्धा पर्यवसित एव विधिरित्यधिकार्यपेक्षापि निर्निबन्धनेत्याह—**अन्यतोपीति**। अध्यापनस्य विधेयत्वमङ्गीकृत्यैतदुक्त तदेव नास्तीत्याह—**किं चेति**। तत्र किं वृत्त्यर्थं यदध्यापन तदेव विधेयम्? उतालौकिकनियोगार्थं कश्चित्? नाद्य इत्याह—**वृत्त्यर्थत्वेनेति**। अध्ययनाध्यापनयजनयाजनदानप्रतिग्रहात्मकाना षण्णा कर्मणा मध्य त्रीणि जीविका जीवनसाधनम्। तान्येवाह—**याजनेत्यादिना**। ननु यदि न विधान कथ तर्हि उपनयीताध्यापयीतेति विधीयत इत्यत आह—

---

अभी तक सिद्ध ही नही हुआ। अङ्गत्व होने से प्रयुक्तत्व एवं प्रयुक्तत्व होने से अङ्गत्व—इस प्रकार अन्योऽन्याश्रयता भी है। यह भी प्रश्न उठता है कि अध्ययन-विधि मे जब आप अधिकारी मान लेते है, तब नियोज्य क्यो नही मानते? ( कारण कि अधिकारी ही तो नियोज्य होता है। नियोज्य का अर्थ यही तो है—कर्म-जन्य नियोग या अपूर्व पर जो अपना अधिकार समझता हो )। यदि कहा जाय कि अनुष्ठान-सिद्धि के लिए ही नियोज्य की अपेक्षा होती है, वह ( अनुष्ठान ) तो अन्यत. ( अध्यापन-विधि से ) ही सिद्ध हो जाता है, अत नियोज्य मानने की आवश्यकता ही नही। तो यह कहना युक्त न होगा, क्योकि तब तो अधिकारी भी अपेक्षणीय नही होगा, कारण कि अनुष्ठान की सिद्धि अन्यत ही हो जाती है। यदि शङ्का हो कि अधिकारी नाम है भोक्ता का, बिना उसके विधि का स्वरूप ही नही बनता अत. अधिकारी की अपेक्षा है। तो यह शङ्का भी उचित नही, क्योकि नियोज्य के विषय मे भी वही कहा जा सकेगा कि उसके बिना भी नियोग की आकाक्षा पूर्ण नही होती। जबकि अध्ययन का अनुमान अन्य-विधिसे सिद्ध होने के कारण नियोग सिद्ध हो गया, तब बिना अधिकारी के विधि पर्यवसित नही—इसका क्या अर्थ?

और भी जिज्ञासा होती है कि "तमध्यापयीत"—इस वाक्य से जीविकार्थ लोक प्रसिद्ध अध्यापन का विधान मानते है? या किसी अलौकिक नियोगार्थ का? जीविकार्थ अध्यापन तो याजन के समान प्राप्त ही है—"अध्ययन, अध्यापन, यजन, याजन, दान, प्रतिग्रह—इन छह कर्मो से अध्यापन, याजन, प्रतिग्रह—ये तीन कर्म ब्राह्मण की जीविका है।" इस लिए जैसे "एतयाऽन्नाद्यकामं

'तस्माद्यथैतयाऽन्नाद्यकामं याजये'दित्यादिषु याजनं न विधीयते, किंतु एतयान्नाद्यकामो यजेतेति वाक्यार्थः। तथेहाप्य'ष्टवर्षो ब्राह्मण उपगच्छेत्सोऽधीयीते'ति वाक्यार्थः स्वीकार्यः। नचालौकिकनियोगार्थत्वेनाध्यापने विधिः, याजनेति तथाप्रसङ्गात्। अपि चाध्ययनं नित्यं—

'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥'

इत्यादिनाऽकरणे प्रत्यवायस्मरणात्। अध्यापनं चानित्यं, काम्यत्वात्। तथाच कथं नित्यमनित्येन प्रयुज्येत, विरोधात्। तस्मादध्ययनविधिप्रयुक्तमेवाध्ययनमिति न दृष्टान्तासिद्धिः। अस्तु वाध्यापनविधिप्रयुक्तमध्ययनं तथाप्यध्यापनविधिरखिलवेदवाक्याध्यापनं विदधानः स्ववाक्याध्यापनमपि विधत्त इति स एव दृष्टान्तो भविष्यतीत्यलमतिविस्तरेण।

तथैकमेवाद्वितीयमित्याद्यागमोऽपि तत्र प्रमाणम्। नचाद्वितीयशब्दस्तत्सजातीयवस्त्वन्तरनिषेधपरः, सङ्कोचे कारणाभावात्, एकत्वविशेषणेनैव सजातीयस्य निषिद्धत्वात्, सजा-

---

तस्माद्यथैतयेति एतयाऽवेष्ट्या, यथाहि न तावद्यथाश्रुति याजनं विधातुं शक्यं वृत्त्यर्थत्वेन तत्र स्वत एव प्रवृत्तत्वादतोऽप्राप्तप्रयोज्यरूपसाक्षात्कर्तृव्यापारयागपरो विधिस्तथेहाप्यन्यतोऽप्राप्तप्रयोज्यमाणवकव्यापारावुपगमनाध्ययने विधीयेते इत्यर्थः। न द्वितीय इत्याह—**नचालौकिकेति**। सिंहावलोकितेन अध्यापनविधेयत्वपक्ष एव दूषणान्तरमाह—**अपिचाध्ययनमिति**। सान्वयः सवंशः। **विरोधादिति**। काम्यं हि कामनाधीनं कामना हि कादाचित्की उपायान्तरादपि तत्फलप्राप्तौ यदा स्वविषयं नानुष्ठापयति तदा नित्यमध्ययनं कथं प्रयुञ्जीत, अविद्यमानस्याप्रयोजकत्वात्। अथ स्वयमपि यावत्प्रयोज्यं विद्यमानं तदा काम्यत्वविरोध इति। अलं वा गुरुभिर्विवादेन। भवत्वध्ययनमध्यापनविधिप्रयुक्तं तथापि स एवाध्यापनविधिर्दृष्टान्त इत्याह—**अस्तु वेति**।

तदेवमनुमानं प्रपञ्चमिथ्यात्वे प्रमाणमभिहितम्। अथागममपि प्रमाणयति—**तथैकमेवेति**। पूर्वपक्षोक्तदूषणमनूद्य दूषयति—**नचेति**। **संकोच इति**। अद्वितीयमित्यत्र द्वितीयमात्रवाचिनो द्वितीय-

---

याजयेत्'' (इस इष्टिका यजन अन्न-भक्षण की कामना-वाले से कराये)—यहाँ याजन का विधान नहीं किन्तु 'इस इष्टि से अन्नाद्य-कामनावान् यजन करे'—यही वाक्यार्थ माना जाता है। वैसे ही यहाँ भी 'अष्टवर्ष का ब्राह्मण आचार्य के समीप पहुँचे और अध्ययन करे'—यही वाक्यार्थ मानना होगा। अलौकिक नियोगार्थत्व रूपसे भी अध्यापन में विधि नहीं मान सकते, नहीं तो याजन में भी विधि माननी पड जायगी। एक और भी बात याद आती है कि अध्ययन नित्य कर्म है, क्योंकि जो द्विज वेदों का अध्ययन न करके अन्यत्र श्रम करता है, वह जीवन काल में ही तुरन्त शूद्र हो जाता है (मनु० २।१६८)'—इस प्रकार स्मृति ने प्रत्यवाय बताया है और अध्यापन है अनित्य कर्म, क्योंकि वहाँ कामना श्रुत है। फिर तो नित्य कर्म अनित्य कर्म से कैसे प्रयुक्त होगा? क्योंकि दोनों का विरोध है। अतः यही सिद्ध हुआ कि अध्ययन-विधि से ही अध्ययन विहित है, उक्त दृष्टान्त (जैसे अध्ययन-विधि स्वयं अपने को विषय करती है, वैसे मिथ्यात्व अनुमान भी अपने में मिथ्यात्व सिद्ध कर देगा) असिद्ध नहीं, अस्तु, मान भी लें कि अध्यापन-विधि से ही अध्ययन प्रयुक्त है। तथापि अध्यापन-विधि जैसे निखिल वेद-वाक्यों के अध्यापन का विधान करती हुई अपने अध्यापन का भी विधान करती है, वैसे ही हमारा मिथ्यात्वानुमान अपने में मिथ्यात्व सिद्ध करता है—इस प्रकार दृष्टान्त बन जायगा।

उसी प्रकार ''एकमेवाद्वितीयम्''—इत्यादि श्रुतियाँ भी प्रपञ्च-मिथ्यात्व में प्रमाण है। 'अद्वितीय शब्द केवल सजातीय द्वितीय का ही निषेध करता है'—ऐसा नहीं कह सकते, क्योंकि 'द्वितीय' शब्द केवल सजातीय द्वितीय अर्थ में संकुचित क्यों होगा? दूसरी बात यह भी है कि सजातीय

तीयमात्रनिषेधपरत्वे चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानस्य वाचारम्भणशब्दस्य चैतदात्म्यमिदं सर्वमित्याद्युपसंहारस्य च बाधप्रसङ्गात् । नचैकमित्येकत्वसख्याविधानपरं तत्रैव तस्य व्युत्पत्तेरिति वाच्यम् ; एकं रूपमेका संख्या एकोऽभाव इत्यादावपि प्रयोगात् । आनन्त्यमप्युभयान्ताभाव एव, तत्रैव तस्य व्युत्पत्तेरित्यपि न, पूर्वापरकालानवच्छेदस्यैवेहानन्तपदेन विवक्षाया नित्यमाकाशमनन्तं चेति प्रयोगानुपपत्तिप्रसङ्गात् । न चान्योन्याभावाधिकरणत्वानधिकरणे व्युत्पत्त्यभावो दोषः, अन्तशब्दस्य देशतः कालतो वस्तुतश्च परिच्छिन्ने व्युत्पन्नत्वात्तस्य नञ्समासे त्रिविधस्याप्यन्तस्य निषेधकतोपपत्तौ पृथग्व्युत्पत्त्यनपेक्षत्वात् । "नेह नानास्ति

---

शब्दस्य द्वितीयविशेषे तन्निष्ठनिषेधकनञस्तद्विशेषनिषेधे वा सङ्कोचे प्रमाणाभावादित्यर्थः । अन्यतः सिद्धत्वाच्च नानेन तन्निषेध्यमित्याह— **एकत्वविशेषणेति** । किञ्च सजातीयमात्रनिषेधपरत्वे समस्तद्वैतनिषेधपरताप्रतिपादकोपक्रमपरामर्शोपसंहाराश्च विरुद्ध्येरन्नित्याह—**सजातीयेति** । नन्वेकशब्दो न सजातीयनिषेधपरोऽपितु एकत्वसख्याभिधानपरः । यथाह मानमनोहरकारः—'एकत्वसख्यामाचष्टे तत्रैव लोके व्युत्पत्तेः लोकशक्तेश्च वेदे बोधकत्वा'दिति । तत्राह—**नचैकमिति** । सख्यारहितेष्वपि रूपसख्याभावेषु प्रयोगाद्बाधकाभावाच्च नोपचारिकत्वशङ्कापीति भावः । यत्तु तेनैवोक्तम् 'आनन्त्यं पुनरुभयान्ताभाव एव तत्रैव लोके व्युत्पत्तेरि'ति तदप्यनूद्य दूषयति—**आनन्त्यमपीति** । तत्र हेतुः—**पूर्वापरेति** । अस्ति तावन्नित्यमाकाशमनन्तं चेति प्रयोगः, तत्र यद्यनन्तपदेनैव पूर्वापरकालावच्छेदरूपोभयान्तोऽभिधीयते तन्निषेधश्चानन्तपदेनोच्यते तदा नित्यशब्दः पुनरुक्तः स्यादित्यर्थः । अथ देशकालकृतोऽन्त उभयान्तस्तथापि पुनरुक्तिरिति भावः । यत्तु पूर्वपक्षिणा व्युत्पत्त्यभावोऽभिहितस्तं दूषयति—**न चान्योन्याभावेति** । सर्वत्र ह्यभाववाचकशब्दानां प्रतियोगिवाचकशब्दव्युत्पत्तित एव व्युत्पत्तिस्तत्कुतो हेतोः ? यौगिकत्वाद्यौगिकानाञ्चावयवव्युत्पत्तित एव व्युत्पत्तेः समुदायव्युत्पत्त्यनपेक्षणात् । तदिहान्तपदस्यावच्छेदत्रये व्युत्पत्तेर्नञस्तन्निषेधव्युत्पन्नत्वान्न पृथक् समुदायस्य व्युत्पत्त्यपेक्षेत्याह—**अन्तशब्दस्येति** । यत्तु नेह नानेत्यत्र ब्रह्मणि नानात्वनिषेधादेकं ब्रह्मेति सिद्ध्यति न तु द्वैतनिषेध इत्युक्तं तन्निषेधति—**नेह नानेति** । अयमभिसन्धिः—

---

द्वितीय का निषेध तो 'एकत्व' विशेषण से ही हो जाता है । फिर भी यदि केवल सजातीय द्वितीय निषेध-परक ही 'अद्वितीय' शब्द मानेंगे, तो सर्वनिषेधपरक 'एक विज्ञान से सर्व-विज्ञान' की प्रतिज्ञा ( उपक्रम ), वाचारम्भण शब्द ( उपपत्ति ), तथा "ऐतदात्म्यमिदं सर्वम्' —यह उपसहार विरुद्ध पड जायँगे । "एकम्' —यह शब्द एकत्व सख्या का विधान करता है, उसी में उसकी शक्ति है ऐसी शङ्का नहीं कर सकते, क्योंकि 'एकं रूपम्,' 'एका संख्या', 'एकोऽभाव '—इत्यादि स्थलों पर भी 'एक' शब्द का प्रयोग होता है । (किन्तु वहाँ सख्या-प्रतिपादन सम्भव नहीं, क्योंकि रूप, संख्या, अभाव-आदि पदार्थों मे सख्या का अन्वय न होगा, सख्या केवल द्रव्य मे रहती है ) । 'आनन्त्य—शब्द भी उभय अन्त (प्रागभाव तथा ध्वस) को कहता है, क्योंकि उसीमें उसकी शक्ति है'—यह भी कहना उचित नही है क्योंकि पूर्वकालानवच्छेद और उत्तर कालानवच्छेद मे ही यहाँ अनन्त पद का तात्पर्य मानने पर "नित्यमाकाशमनन्तंच"—यह प्रयोग अनुपपन्न हो जायगा । [अभिप्राय यह है कि यदि 'अनन्त' पद से पूर्व तथा उत्तर कालावच्छेद का निषेध होता है—तो यही नित्यत्व है । फिर नित्यत्व-बोधक 'नित्य' यह पुनरुक्त हो जायगा ] । यह जो पूर्वपक्षी ने कहा था कि अन्योऽन्याभावाधिकारणत्व के अनधिकरण मे अनन्त शब्द की व्युत्पत्ति नही, वह कहना भी समुचित नही , क्योंकि 'अन्त' शब्द देश, काल और वस्तु से परिच्छिन्न अर्थ मे व्युत्पन्न ( गृहीतशक्तिक ) है । नञ् समास से उक्त त्रिविध अन्त का निषेध हो जायगा, 'अनन्त' शब्द की पृथक् शक्ति की आवश्यकता ही नही । "नेह नानास्ति किञ्चन"—यह श्रुति ब्रह्म मे नानात्व का निषेध करती है—यह

किचने''ति च न ब्रह्मणि नानात्वं निषिध्यते, अप्रसक्तत्वात्। नहि लोकत श्रुतितो वा वादिप्रसिद्धितो वा ब्रह्मणि नानात्वं प्रसक्त येन प्रतिषिद्ध्येत । नानाशब्दस्य भावप्रत्ययान्तताभावाच्च न नानात्वनिषेध । तन्निषेधे वा सकोचे कारणाभावात् सजातीयविजातीयस्वगतनानात्वनिषेधाद्ब्रह्माद्वैतमेव पर्यवस्येदिति स एव घट्टकुटीप्रभातवृत्तान्त प्रसज्येत ।

न चेन्द्रो मायाभिरितीन्द्रियद्वारकबुद्धिवृत्त्युपाधावीश्वरस्य भेदोऽवभासत इत्येतावत्परमिदं वाक्यं नतु द्वैतनिषेधपरमिति युक्तम्, ईश्वरस्य नित्यानुमेयस्येन्द्रियकबुद्धिवृत्तिविषयत्वानङ्गीकारात्। मायाशक्तिविशेषाभिधाने च 'युक्ता ह्यस्य हरय शता दशे'ति वाक्यशेषो न सगच्छेत। इन्द्रियबाहुल्याभिधानस्य मायाशक्तिविशेषाभिधानं प्रत्यनुपयुक्तत्वात्। 'अय वै

---

प्रसक्त हि सर्वत्र निषेध्य, नाप्रसक्तम्। यत्र तु क्वचिदप्रसक्तस्यापि निषेधो यथा ''नान्तरिक्षे न दिवि'' इत्यत्र, तत्र गत्यन्तर नास्ति। नच तत्रापि निषेधपरत्व, अर्थवादो ह्यय रुक्मोपधानस्य, रुक्ममुपदधातीत्यनेनैकवाक्यत्वात्, तस्माद्यथाकथचन तत्स्तुतावेव तात्पर्यम्। अत्र तु द्वैतनिषेधपरत्वमिति वैषम्य, तदिहापि प्रसक्तद्वैतप्रपञ्चनिषेधपरत्व युक्त नाप्रसक्तेश्वरनानात्वनिषेधपरत्वमिति। किञ्च नानात्वनिषेधपरत्वे नानाशब्देन द्वयेकयोरित्यत्र द्वित्वैकत्ववत् नानात्व लक्षणीय, न च विना कारण सा युक्ता, अतिप्रसङ्गात्। प्रत्यक्षादिविरोधस्तु कारण हृदि विपरिवर्तमान पुरस्तादेव निरस्त तदनेनाभिसन्धिनाह—**नानाशब्दस्येति**। भवतु नानाशब्देन नानात्वाभिधान गोशब्देन गोत्वस्येव तथापि सङ्कोचे कारणाभावात् समस्तप्रतियोगिकनानात्वनिषेधादद्वैतसिद्धिरित्याह—**तन्निषेधे वेति**। नानाशब्दस्य च नानात्ववाचकत्वेपि तदोक्तिवैयर्थ्ये तदुपलक्षितव्यक्तिवचनत्वे चेह नानास्तीतिवत्सजातीयनिषेधसिद्धिरित्यपि द्रष्टव्यम्।

या तु श्रुत्यन्तरस्यान्यथासिद्धिरुक्ता पूर्वपक्षिणा तामनुवादपूर्वक दूषयति—**न चेन्द्र इत्यादिना**। प्रत्यक्षयोग्य खल्वैन्द्रियकबुद्धिवृत्तौ प्रतीयते, ईश्वरस्त्वतीन्द्रियो न तथेति न बुद्धिवृत्त्यभिप्रायेणाय मायाशब्द इत्यर्थः। नीरूपत्वादग्राह्यत्वादनवतारप्रकरणत्वाच्च न योगीन्द्रियापेक्षयेति भाव। यत्वीश्वरशक्तयो वेत्युक्त तत्राह—**मायाशक्तिति**। असङ्गतिमेवाह—**इन्द्रियेति**। तत्र हि दशशतहरयोऽस्य युक्ता इतीन्द्रियाणि हरिशब्देनोच्यन्ते। तद्बाहुल्याभिधान नेश्वरशक्तिप्रतिपादनोपयोगीत्यर्थ। उत्तरत्र तेषा हरीणामीश्वरमात्रतया बोधनमपि त्वत्पक्षे विरुद्ध्यते तेषा भिन्नत्वाभ्युपगमादित्याह—**अयं वै हरय इति**। नच निमित्तत्वाभिप्रायेण, सामानाधिकरण्यानुपपत्तेरिति भावः। यत्तु मृत्यो स मृत्युरित्यभेददर्शनस्य विविन्सितस्य स्तुति-

---

**कहना भी नितान्त असगत है, क्योकि ब्रह्म मे नानात्व न तो लोक से, न श्रुति से और न वादिप्रसिद्धि से ही प्राप्त है कि जिसका निषेध किया जाता। दूसरी बात यह भी है कि 'नाना' शब्द के अन्त में कोई भाव (त्व-आदि) प्रत्यय भी नही, अत यहाँ नानात्व का निषेध नही हो सकता। यदि नानात्व का निषेध मान भी लिया जाय, फिर भी सकुचित वृत्ति मे कोई प्रमाण नही, अत सजातीय, विजातीय तथा स्वगत नानात्व का निषेध मानना होगा। फिर तो ब्रह्माद्वैत से ही पर्यवसान होता है। इस प्रकार घट्टकुटीप्रभात की कहावत लागू होती है।**

**यह जो कहा था कि ''इन्द्रो मायाभि''—इस श्रुति का 'इन्द्रिय-द्वारक बुद्धि वृत्ति रूप उपाधियो से ईश्वर मे भेद प्रतीत होता है'—इस अर्थ मे ही तात्पर्य है, न कि द्वैत-निषेध मे। वह कहना भी युक्त नही, क्योकि ईश्वर तो नित्य अनुमेय है, उसमे इन्द्रिय-द्वारक बुद्धि-वृत्ति की विषयता मानी ही नही जा सकती। उक्त श्रुति मे 'माया' शब्द से माया-शक्ति-विशेष का अभिधान मानने पर ही ''युक्ता ह्यस्य हरय शता दश'' ( इस ईश्वर की शक्तियाँ अनन्त है )—इस वाक्यशेष की सगति होती है। किन्तु इन्द्रिय-बहुलता का अभिधान (वाक्य शेष-गत ) माया-शक्ति-विशेष के लिए सर्वथा अनुपयुक्त है। अनन्तर वाक्य मे 'यही ईश्वर माया शक्ति रूप है। यही अनन्त है—**

हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि चे'ति वाक्यशेषे सर्वस्येश्वरात्मकत्वप्रतिपादनविरोधाच्च । मृत्यो' स मृत्युमिति च नाभेदप्रतिपत्तिविधि', नेह नानास्ति किंच नेति द्वैतनिषेधवैयर्थ्यात्, अनुपासनप्रकरणत्वाच्च । पूर्वापरालोचनायां चास्य प्रकरणस्य निष्प्रपञ्च-ब्रह्मात्मत्वप्रतिपत्तौ तात्पर्याधिगमात् । ननु पूर्वापरवाक्यानामुपासनपरतापि दृश्यते 'आयुर्होपासतेऽमृतं, विज्ञाय प्रज्ञां कुर्वीत, सर्वस्य वशी सर्वस्येशान, अन्नादो वसुदानो विन्दते वसु य एवं वेदे'त्यादिश्रवणादिति चेत्, मैवं, प्रसङ्गागतत्वादुपासनानुवादस्य । तमेव धीरो विज्ञायेति च "यस्मिन्पञ्च पञ्चजना" इति पूर्वोक्ताकाशादितत्त्वाधारतया सप्रपञ्चताप्रसक्तावधारणस्य तन्निवारणपरत्वात् । प्रज्ञा कुर्वीतेति च प्रज्ञाशब्देन विज्ञानशब्दाभिधेयपरोक्ष-ज्ञानातिरिक्तसाक्षात्काराभिधानाङ्गीकारे तस्यानवधिसुखरूपात्मसाक्षात्कारतया फलत्वेन

---

ननु द्वैतनिषेधपरमिति तत्राह—मृत्योरिति । यदि ह्यभेदप्रतिपत्तिमात्र विधित्सित तदा द्वैतनिषेधो व्यर्थः । प्रत्युतानर्थकरश्चाद्वैततत्त्वभ्रान्तिप्रसक्तेरिति भावः । किंच निष्प्रपञ्चब्रह्मात्मज्ञानप्रकरणोत्कर्षश्चोपासनापरत्वे इत्याह—अनुपासनेति । अस्यैव प्रपञ्च —पूर्वापरेति । ननु 'त देवा ज्योतिषा ज्योतिरायुर्होपासतेऽमृत'मिति विज्ञाय शास्त्रत. प्रज्ञा साक्षात्कारलक्षणा सपादयेदिति च, तथा सर्वस्य वशी सर्वस्येशानः, अन्नादोऽन्नमा समन्ताद्ददद् वसुदानो धनप्रद इति यो वेद स वसु धन विन्दते लभते इति, तत्रैव पूर्वोत्तरभागयोरुपासनाश्रवणादुपासनाप्रकरणमेतदिति चोदयति—ननु पूर्वापरेति । प्रसङ्गागतत्वादिति । निष्प्रपञ्चब्रह्मप्रकरण एव स्तुत्यर्थमुपासनानुवादः स न तु विधिर्वाक्यभेदप्रसङ्गादित्यर्थः । किंच तमेव धीर इति, तमेव मन्य इति चैवकाराभ्या यस्मिन्पञ्च पञ्चजनाः पञ्चप्राणादयः आकाशश्च प्रतिष्ठित इति पूर्ववाक्यारोपिताकाशादिप्रपञ्चव्यावर्तनान्निष्प्रपञ्चब्रह्मपरत्वमेवेत्याह—तमेव धीर इति । निष्प्रपञ्चब्रह्मपरत्वेऽपि तत्साक्षात्कारविधिपरत्व भवत्विति नेत्याह—प्रज्ञामिति । यत्तु सर्वस्य वशीत्यादि-

---

इस प्रकार सर्व-ईश्वर रूपता का प्रतिपादन भी विरुद्ध हो जायगा । "मृत्यो स मृत्युमाप्नोति"—यह श्रुति भी अभेदोपासनापरक नही, क्योकि तब तो "नेह नानास्ति किंचन"—इस से द्वैत का निषेध करना व्यर्थ ही हो जायगा और वहाँ उपासना का प्रकरण भी नही है, क्योंकि पूर्व-पर की आलोचना से उस प्रकरण का तात्पर्य निष्प्रपञ्च ब्रह्म की आत्मरूपता के प्रतिपादन में ही निश्चित होता है ।

शङ्का—पूर्व-पर के वाक्यों मे उपासना विधान भी तो देखा जाता है—"आयुर्होपासते" (अमृत की आयुरूप से उपासना करते है—बृह० ४।४।१६ ), "विज्ञाय प्रज्ञां कुर्वीत" (उस को शास्त्र से जानकर उसका साक्षात्कार सम्पादन करे—बृह०–४।४।२१), "सर्वस्य वशी सर्वस्य ईशान." (वह सबको वश मे रखने वाला, सबका शासक है—बृह० ४।४।२२), 'अन्नादो वसुदानो विन्दते वसु य एव वेद" (वह अन्न-भक्षक और कर्म-फल-दाता है, वह पूर्व कर्म-फल पाता है, जो ऐसी उपासना करता है—बृह० ४।४।२४) ।

समाधान—उक्त श्रुतियो मे प्रसङ्गत उपासना का अनुवादमात्र कर दिया गया है । वस्तुत वहाँ "तमेव धीरो विज्ञाय" ( धीर पुरुष उसको ही जानकर—बृह० ४।४।२१ )—आदि श्रुतियो मे एवकार से उस सप्रपञ्चता का निवारण किया जा रहा है, जो कि "यस्मिन् पञ्च पञ्चजना आकाशश्च" (जिसमे पाच पञ्चजन तथा आकाश प्रतिष्ठित है—बृह० ४।४।१७)—इस श्रुति में प्रतिपादित आकाशादि की ब्रह्म मे आधारता से प्रसक्त था । "प्रज्ञां कुर्वीत"—यहाँ प्रज्ञा शब्द से विज्ञान शब्द-वाच्य परोक्ष ज्ञान से अतिरिक्त साक्षात्कार का अभिधान मानने पर उसका वहाँ विधान नही हो सकेगा, क्योकि वह साक्षात्कार तो निरतिशय सुख स्वरूप होने से फल है, [फल का विधान नही होता, स्वर्गादि फल के उद्देश्य से यागादि रूप करण का ही विधान होता है । अत. विधि

विधेयत्वानुपपत्तेः सर्वस्य वशीत्यादे' स्तुतिपरतया गुणविधानार्थत्वाभावात् ।

आगमस्य च स्वरूपप्रतीतौ पदपदार्थसंबन्धावगमे च प्रत्यक्षादिसापेक्षत्वेऽपि तस्य तद्विषयस्य च पारमार्थिकत्वांशस्यानुपजीव्यत्वात्तद्बाधनेऽपि विरोधाभावात्, सांव्यवहारिक-भेदाभावस्य ज्ञानोदयनान्तरीयकतया श्रुतिबाध्यत्वाभावात् न व्यावहारिकभेदसापेक्षतया श्रुतेरप्रामाण्यप्रसङ्ग' । नच न हिंस्यादित्यादिवाक्येषु परस्परपराहति, सामान्यविशेषभावे-नेच्छाविकल्पेन वा व्यवस्थितविकल्पेन वाऽविरोधोपपत्ते । नच कर्मज्ञानकाण्डयोर्भेदाभेद-

---

गुणक य एवं वेदेत्युपासनं विधत्ते इति तत्राह—सर्वस्य वशीत्यादेरिति । प्रतिपादितं खल्विद 'कामादीतरत्र तत्र चायतनादिभ्य' इत्यत्र ।

उपजीव्यविरोध परिहरति—आगमस्येति । तस्येति । प्रत्यक्षस्य । एतदुक्त भवति, निषिध्यमान तदीयपारमार्थिकत्व नापेक्ष्यते यच्चापेक्ष्यते सांव्यवहारिक रूप न तद्बाध्यत इति । ननु सांव्यवहारिकमपि रूपमागमेन बाध्यमेवेतरथाऽद्वैतानुपपत्तेरतस्तत्रैवोपजीव्यविरोधो दुर्निवारण इति तत्राह—सांव्यवहारिकेति । यथा तेषा वास्तवत्वज्ञान तत्त्वप्रतिपत्तिविरोधि न तथा सांव्यवहारिकाकारज्ञानमिति भावः । तदेतदखिलमद्वैतश्रुतीनामन्यथासिद्धिपथपरिधावनव्यथितचेतसे शालिकनाथायाकथयत । यत्तु कृत्स्नस्यैव च वेदस्य परस्परपराहत्योपहतत्वमुक्त तत्परिहरति—नचेति । सामान्यविशेषभावेनेति । भिन्नविषयत्वस्योपलक्षणमिद, मुख्यसामान्यविशेषभावाभावात् । यथाहवनीये जुहोतीति होममात्राधिकरणतया प्राप्तस्याहवनीयस्य पदे जुहोतीति विशेषविधानात् तदितरहोमविषयतया सङ्कोचः । नहि तथेह हिंसामात्रविषयतया निषेध प्रवर्तते येन विशेषे सङ्कोचमर्हेदपितु रागप्राप्तहिंसाया, तावतापि निषेधोपपत्तौ न क्रतुप्रकरणेऽपि निषेधपदप्रक्षेपकल्पना तस्या प्रमाणाभावात् । प्रत्युत यदर्था प्रवृत्तिस्तदर्थ. प्रतिषेध इति न्यायेनानृतवदनाज्यभागादिप्रतिषेधस्येवास्यापि क्रत्वर्थत्व स्यात् । तथाच विधिप्रतिषेधयोरनयोर्ग्रहणाग्रहणवद्विकल्पः स्यादित्यनर्थपरपरैव स्यात्तस्माद्वर्णितविभिन्नविषयत्वस्य केवलमुपलक्षणमिद, ग्रहणाग्रहणयोरिच्छया विकल्प, उदितानुदितहोमयो. शाखाभेदेन व्यवस्थितविकल्पः । कर्मकाण्डज्ञान-

---

वाक्य में पठित होने पर भी फल अनुपादेय माना जाता है] । "सर्वस्य वशी"—इत्यादि वाक्य स्तुतिमात्र परक है, सर्ववशित्वादि गुणो का विधान नही करते ।

आगम अपनी स्वरूप-प्रतीत तथा पद–पदार्थो के सम्बन्ध-ज्ञान के लिए प्रत्यक्षादि की अपेक्षा अवश्य करता है, किन्तु प्रत्यक्ष एवं उसके विषय (घटादि) मे पारमार्थिकत्व की अपेक्षा कभी नहीं करता । अत. प्रत्यक्षादि में पारमार्थिकत्व का बाध होने पर भी किसी प्रकार का उपजीव्य-विरोध उपस्थित नही होता । [भाव यह है कि आगम अपने अपेक्षित आधार का खण्डन यदि करता, तब उपजीव्य-विरोध दोष लगता । किन्तु आगम प्रत्यक्षादि की व्यावहारिकत्व शाखा पर खडा होकर प्रत्यक्षादि की दूसरी पारमार्थिकत्व–शाखा काट रहा है अत कोई विरोध नही । व्यावहारिक भेद का बाध तो ज्ञान के उदय होते ही अनिवार्य होता है, अत अद्वैत–श्रुति से उसका बाध करने की कोई आवश्यकता नही । अत व्यावहारिक भेद मात्र की अपेक्षा होने से अद्वैत-श्रुति मे अप्रामाण्य-प्रसङ्ग भी नही । हिंसादि–श्रुतियो मे परस्पर विरोध भी किसी प्रकार का नही, क्योकि सामान्य-विशेष भाव, इच्छा-विकल्प एव व्यवस्थित विकल्पो के द्वारा सभी प्रकार के विरोधो का परिहार हो जाता है । [ स्पष्टार्थ यह है कि "न हिंस्यात् सर्वा भूतानि"—यह निषेध प्रथमत वैध अग्निषोमीयादि हिंसा मे प्रवृत्त ही नही होता । यदि प्रवृत्त भी हो, तब भी "न हिंस्यात्"—यह सामान्य शास्त्र है और "अग्निषोमीयं पशुमालभेत"—यह विशेष । अत विशेष शास्त्र अपने विषय में सामान्य शास्त्र को प्रवृत्त नही होने देगा कि विरोध हो । "अतिरात्रे षोडशिनं गृह्णाति", "नातिरात्रे षोडशिनं गृह्णाति"—इन दोनो शास्त्रो का ऐच्छिक विकल्प होने से विरोध नही । अर्थात् जिसकी

विषयतया कर्मानुष्ठानतत्त्यागप्रतिपादकतया च विरोधः; विद्याविद्यावस्थाभेदेन विद्वदविद्वत्पुरुषविषतया चाविरोधात्। तदेवं मिथ्यात्वे लक्षणप्रमाणयोरुपपन्नत्वादनिर्वचनीयानाद्यविद्याविलसित एवायमात्मनि द्वैतप्रपञ्च इत्यलमतिप्रपञ्चेन।

ननु भो! केयमनिर्वचनीयाविद्या नाम? नहि ज्ञानाभावव्यतिरेकेण काचिदविद्या प्रसिद्धा उपपन्ना वा। ज्ञानप्रागभावप्रध्वंसयोरेव न जानामीत्यविद्यात्वेन लोके व्यावहारिकव्यवहारोपलम्भात्। अविद्येति च विद्यापदेन समस्यमानस्य च नञस्तदभावस्तद्विरोधी तदन्यो वार्थोऽभ्युपेयः। आद्ये विद्याभावस्यापि वेद्याभाववन्नानिर्वचनीयता। द्वितीये तु संशयविपर्यासादेर्विद्याविरोधिनो गुणान्तरस्य वा नानिर्वचनीयतोपपत्तिः, प्रसिद्धभावस्वभाव-

काण्डयोर्विरोधं परिहरति—**नचेत्यादिना**। विद्याऽविद्यावस्थाभेदेनाभिन्नभिन्नवस्तुप्रतिपादनयोरविरोधः, कर्मतत्त्यागविधानयोस्तु विद्वदविद्वत्पुरुषविषयत्वाच्छुद्धान्तःकरणः परोक्षज्ञानवान्वा विद्वान्। यथाहि न हिंस्यात्सर्वाभूतानीति फलांशे निषिद्धस्य श्येनेनाभिचरन्यजेतेत्यस्यानवबुद्धप्रतिषेधवाक्यार्थं पुरुषं प्रति प्रवृत्तिरितरस्य त्वितरं प्रतीति विभागस्तद्वदिति भावः। वादार्थमुपसंहरति—**तदेवमिति**।

अनिर्वचनीयाद्यविद्येत्युक्तमुपश्रुत्य प्रत्यवतिष्ठते—**नन्विति**। ननु सर्वेषामेव मोक्षवादिनामनित्याशुचिदुःखरूपे संसारे नित्यशुचिसुखख्यात्यभिरतिनिदानमविद्या प्रसिद्धैव किमत्र वक्तव्यमित्यत आह—**नहि ज्ञानाभावेति**। ननु सामान्येन प्रसिद्धविद्याया उपपत्तिबलादनाद्यनिर्वचनीयत्वमायातीत्यत आह—**उपपन्ना वेति**। अभाव एव प्रसिद्धिं निदर्शयति—**ज्ञानेति**। प्रागभावप्रध्वंसयोरिति सप्तमी। व्यावहारिका व्यवहारकर्तारः तेषां व्यवहारोपलम्भादित्यर्थः। एवं प्रसिद्ध्यभावमेवाभिधायोपपत्त्यभावमाह—**अविद्येति**। अविद्येत्यत्र नञस्तावदर्थत्रयं सम्भवति तच्च निर्वचनीयभावाभावयोरेवान्तर्भवति नानिर्वचनीयः कश्चिदविद्याशब्दार्थ इत्यर्थः। **विद्याभावस्यापीति**। यथा वेद्यस्य घटादेरभावो नानिर्वचनीयः, भावाभावविलक्षणत्वाङ्गीकारादनिर्वचनीयस्य, तथा ज्ञानाभावस्यापि नानिर्वचनीयत्वमित्यर्थः। विद्याविरोध्यविद्येति द्वितीयपक्षं निषेधति—**द्वितीये त्विति**। एवमविद्याशब्दात्तावदनिर्वचनीयानाद्यविद्याप्रतीत्यभावमुक्त्वा लक्षण-

इच्छा हो षोडशिपात्र का ग्रहण करे, जिसकी इच्छा न हो, वह ग्रहण न करे। "उदिते जुहोति", "अनुदितेजुहोति"—इन दोनो मे व्यवस्थित विकल्प है। अर्थात् जिसकी शाखा मे उदित होमविहित है, वह उदित होम और जिसकी शाखा मे अनुदित होम है, वह अनुदित होम ही करेगा]। कर्म काण्ड भेदविषयक है एवं कर्मानुष्ठान का प्रतिपादक है तथा ज्ञान काण्ड अभेद विषयक है एवं कर्म त्याग का प्रतिपादक है, अत उन दोनो का विरोध है—ऐसा भी सन्देह नही करना चाहिए, क्योकि कर्मकाण्ड अज्ञानी के लिए कर्म का विधान करता है, ज्ञानी के लिए नही और ज्ञानकाण्ड ज्ञानी के लिए कर्म-त्याग का प्रतिपादन करता है, अज्ञानी के लिए नही। अत दोनो का कोई विरोध नही। इस प्रकार मिथ्यात्व मे लक्षण और प्रमाण की उपपत्ति हो जाने से यह सिद्ध हो गया कि आत्मा मे यह सब द्वैत प्रपञ्च अनिर्वचनीय अविद्या का विलासमात्र है।

पूर्वपक्ष—यह अनिर्वचनीय अविद्या क्या वस्तु है? ज्ञानाभाव से भिन्न अविद्या न तो प्रसिद्ध है और न उपपन्न ही है। ज्ञान के प्रागभाव या ध्वस मे ही अविद्या-व्यवहार लोक-प्रसिद्ध है। 'अविद्या'—यहाँ 'विद्या' पद से समस्यमान नञ् का (१) विद्याभाव, या (२) विद्याविरोधी, या (३) विद्यान्य अर्थ मानना होगा। प्रथम (विद्याभाव) पक्ष मे विद्याभाव में वैसे ही अनिर्वचनीयता की उपपत्ति न होगी, जैसे—वेद्याभाव मे। [क्योकि भाव और अभाव—दोनो से विलक्षण अनिर्वचनीय होता है। विद्याभाव तो घटाभाव के समान अभाव है, अत वह अनिर्वचनीय न होगा]। द्वितीय (विद्याविरोधी) पक्ष मे विद्या के विरोधी होते हैं—सशय, विपर्यय अथवा दूसरे आत्मविशेष गुण। उनमें भी अनिर्वचनीयता नही बन सकती, क्योकि उनमें अनिर्वचनीयता मानने पर

त्वस्य व्याकोपात्। न तृतीयोपि, विद्यातिरिक्तस्य समस्तस्याविद्यात्वप्रसङ्गात्। नचास्या लक्षणं प्रमाणं वा पश्यामः। न तावज्ज्ञाननिवर्त्यमज्ञानं, पूर्वज्ञानस्यापि तन्निवर्त्यस्याज्ञानत्वप्राप्तेः। अनादित्वविशेषणाददोष इति चेत्, न, ज्ञानप्रागभावे व्यभिचारात्। अनादिभावत्वे सति ज्ञाननिवर्त्यमज्ञानमिति चेत्, न, अनादेर्भावस्यात्मवन्नित्यत्वेन निवर्त्यत्वानुपपत्तेः। अथ चिरन्तनमतानुसारेणानादेरेव भावस्य परमाणुगतश्यामत्वादेरिव निवर्त्यत्वमुच्येत, तर्हि तस्मिन्नेवेश्वरज्ञाननिवर्त्येऽतिव्याप्तिः, त्वदुक्तलक्षणस्यापि तस्याज्ञानत्वाभावात्। अथानाद्यनिर्वचनीयमज्ञानं, तदपि न, निर्वचनागोचरताया भावाभावविलक्षणतायाश्चासंभवित्वात्। भ्रमोपादानमज्ञानमित्यपि न, आत्मन्यतिव्याप्तेः। सत्योपादानत्वे भ्रमस्य सत्यत्वप्रसङ्गात् नात्मोपादानमिति चेत्, न, भ्रमस्यापि स्वरूपसत्यत्वात्। विषयापहाराद्धि तत्र

प्रमाणानिरूपणादपि तदभावमाह—**नचास्या** इति। तत्र ज्ञाननिवर्त्यत्वं तल्लक्षणं? अनादित्वे सति ज्ञाननिवर्त्यत्वं वा? अनादिभावत्वे सति ज्ञाननिवर्त्यत्वं वा? अनादित्वे सत्यनिर्वचनीयत्वं वा? भ्रमोपादानत्वं वा? नाद्य इत्याह—**न तावदिति**। निर्वचनीयतयाङ्गीकृतपूर्वज्ञानादिष्वतिव्याप्तिरित्यर्थः। द्वितीये तु प्रागभावेऽतिव्याप्तिमाह—**अनादित्वेति**। तृतीयेऽसंभवमाह—**अनादीति**। आधुनिकैः पार्थिवपरमाणुविशेषगुणानां पाकजत्वाङ्गीकाराच्चिरंतनग्रहणम्। **तर्हि तस्मिन्निति**। तैरेव चिरंतनैस्तेषामीश्वरज्ञाननिमित्तकविनाशाङ्गीकारादतिव्याप्तिर्लक्षणस्येत्यर्थः। **त्वदुक्तलक्षणस्यापीति**। त्वदुक्तं लक्षणं यस्य श्यामत्वादेः स तथोक्तः। चतुर्थं शङ्कते—**अथेति**। किमिदमनिर्वचनीयत्वं नाम? न तावन्निर्वचनाविषयत्वम्, अनेनैव प्रकारेण निरुच्यमानत्वान्नापि सदसद्विलक्षणत्वं, परस्परविरुद्धयोर्भावाभाववदुभयवैलक्षण्यस्याप्यसंभवात्। असंभवीदं लक्षणमित्याह—**निर्वचनेति**। **भ्रमोपादानमज्ञानमिति**। आत्मनोपि हि जगद्विभ्रमाधिष्ठानत्वमङ्गीक्रियते भवद्भिरन्यथा जन्माद्यधिकरणाद्यनारम्भप्रसङ्गात्। अङ्गीकृतमस्माभिश्चात्मनो विभ्रमसमवायिकारणत्वमिति भावः। आत्मनि लक्षणावृत्तिं शङ्कते—**सत्योपादानत्व इति**। नायमनिष्टप्रसङ्ग इति परिहरति—**न**। **भ्रमस्यापीति**। ननु स्वरूपमात्रसत्यत्वे कथं मिथ्याज्ञानत्वप्रसिद्धिरित्यत आह—**विषयेति**। स्वरूपस्याप्यपहारे प्रत्यभिज्ञाविरोध-

भावरूपता का विरोध होगा। तृतीय ( विद्यान्य ) पक्ष में तो विद्या से अन्य समस्त ब्रह्मादि पदार्थों में अविद्यात्व की आपत्ति होगी।

इस प्रकार की अविद्या में कोई लक्षण और प्रमाण भी दिखाई नहीं देते। 'ज्ञान-निवर्त्यत्व'—यह लक्षण युक्त नहीं, क्योंकि उत्तर ज्ञान से निवर्त्य तो पूर्व ज्ञान भी है, उसमें अज्ञानत्व की आपत्ति होगी। यदि 'अनादित्व' विशेषण लगाकर वह दोष हटाना चाहें, तब भी ज्ञान के प्रागभाव में व्यभिचार ( अतिव्याप्ति ) होगी, क्योंकि वह अनादि भी है और ज्ञानरूप कार्य से निवर्त्य भी। यदि 'भावत्व' भी विशेषण लगायें, तब तो अनादि भाव वस्तु तो आत्मा के समान नित्य होगी, उसमें ज्ञान-निवर्त्यत्व ही न रहेगा। यदि कहें कि प्राचीन आचार्यों के मत से अनादि भावात्मक परमाणु-गत श्याम रूप में निवर्त्यता रह जाती है, तब तो ईश्वर-ज्ञान-निवर्त्य उसी परमाणु-गत श्यामता में लक्षण की अतिव्याप्ति होगी, क्योंकि आपका कहा लक्षण तो उसमें जाता है, किन्तु वह अज्ञान नहीं। यदि 'अनाद्यनिर्वचनीयत्व' लक्षण करें, तो वह भी नहीं कर सकते, क्योंकि अनिर्वचनीयता का क्या अर्थ करेंगे? निर्वचन-विषयताभाव? या भावाभावविलक्षणत्व? दोनों ही असम्भवी हैं। 'भ्रमोपादानत्व'—यह लक्षण भी युक्त नहीं, क्योंकि भ्रम का उपादान तो आत्मा भी है, उसमें अतिव्याप्ति होगी। यदि कहा जाय कि आत्मा को भ्रम का उपादान नहीं मानेंगे, नहीं तो सत्योपादानक हो जाने से भ्रम भी सत्य हो जायगा। तो यह नहीं कह सकते, क्योंकि भ्रम में स्वरूप-सत्यत्व तो रहता ही है। उसमें मिथ्यात्व का व्यवहार तो इस लिए हो जाता है कि उसके विषय

मिथ्येति व्यवहारो न स्वरूपापहारात्। तथात्वे चैतावन्त कालमिदं रजतमित्यभादित्यनुभवविरोध। अस्तु वा यत्किंचिदविचारितरमणीय लक्षण तथापि तत्र किं प्रमाणम्? अज्ञोऽहमित्यनुभव इति चेत्, न, तस्य ज्ञानाभावविषयत्वेनाप्युपपत्ते, अनादित्वभावत्वयोस्त्वदभिमतयोरस्यानुभवस्यौदासीन्याच्च। नापि सुप्तोत्थितस्य 'न किंचिद्वेदिषं', 'गाढ मूढोऽहमासमि'तिपरामर्शानुपपत्तिसिद्धः सुषुप्तिकालीनोऽनुभव प्रमाणं, त्वन्मते ज्ञानाभावस्यापि साक्षिसिद्धस्य परामर्शोपपत्ते। अस्मन्मते चेदानीमेव ज्ञानाभावस्यानुमीयमानतया परामर्शासप्रतिपत्ते। ननु कथ ज्ञानाभावस्य निर्विकल्पकचैतन्यगोचरतया सिद्धिः? तत्सिद्धेर्धर्मिप्रतियोगिज्ञानपराधीनत्वात्, सुषुप्तौ च तदसंभवादिति चेत्, न, ज्ञानाभावस्यापि स्वरूपेण भेदादिवन्निर्विकल्पकसिद्धस्य सविकल्पकदशायां धर्मिप्रतियोगिज्ञानपराधीनतया स्फुटतरव्यवहारविषयत्वोपपत्ते। नचासिद्धे तत्कालीने धर्मिण्यात्मनि, ज्ञानाभावस्येदानीमेवानुमीय-

माह—तथात्वे चेति। अनादित्वेति। अज्ञोऽहमिति ज्ञानराहित्यमेव प्रतीयते ननु तस्याज्ञानस्यानादित्वभावत्वे। अतो नेदमभिमतसाधकमित्यर्थः। स्यादेतत्—अस्ति तावत्सुप्तोत्थितस्य एतावन्त काल न किञ्चिदवेदिषमिति परामर्श, सच सुषुप्तिकालीनमज्ञानानुभव गमयति, अननुभूत परामर्शायोगात्। स चानुभवस्तत्र प्रमाणमिति तदेतद्दूषयति—नापीति। सुषुप्तिकालीनज्ञानाभावगमकतया त्वन्मते तावदन्यथासिद्धमस्मन्मते तूत्थानानन्तरकालीनमनुमान पूर्वकालीनज्ञानाभावविषयमित्युभयथापि विवक्षितासिद्धिरित्याह—त्वन्मत इति। या तु वेदान्तपक्षेऽन्यथासिद्धिरुक्ता, सा न युक्ता, धर्मिप्रतियोगिज्ञानाधीनज्ञानस्य ज्ञानाभावस्य सुषुप्तौ निर्विशेषचिन्मात्रादप्रतीतेरिति शङ्कते—ननु कथमिति। प्रथम निर्विकल्पकानुभूतस्यापि पश्चात् सविकल्पकविषयतया विशिष्टव्यवहारहेतुत्व भवति। नच नित्यमपेक्षतया निर्विकल्पकाविषयत्व, भेदसादृश्यादिभिर्व्यभिचारादिति परिहरति—न। ज्ञानाभावस्यापीति। ननु भवत्वस्मत्पक्षेऽन्यथासिद्धिस्त्वत्पक्षे तु कथमनुमानत्वमस्य सौषुप्तिकात्मनस्तदानीमननुभवात् तस्मिन्धर्मिणि ज्ञानाभावानुमानायोगात्। यथाहि प्रातश्चत्वरे गजो नासीदित्यत्र प्रातःकालीनचत्वरानधिगमे गजाभावानुमानाभाव इति

बाधित है। उसका स्वरूप तो अबाधित ही है। यदि भ्रम के स्वरूप का भी बाध मान लिया जाय, तब 'इतने समय तक यह रजत ही दीखता रहा'—इस प्रत्यभिज्ञा का विरोध होगा। अच्छा, कोई जैसा-तैसा लक्षण मान लेते है।

तथापि उसमे प्रमाण क्या है? "मै अज्ञानी हूँ"—यह अनुभव तो ज्ञानाभाव को विषय करता है, आपके माने हुए किसी अनादि भावरूप अज्ञान को नही, कि उसमे प्रमाण हो जाय। यदि कहा जाय कि सुषुप्ति से उठकर यह स्मरण होता है कि 'मुझे कुछ भान नही रहा, खूब गाढ़ मूढ होकर पड़ा रहा।' उस स्मृति की अन्यथानुपपत्ति से कल्पना करेंगे कि सुषुप्ति–काल मे अज्ञान का अनुभव अवश्य हुआ होगा। वही अनुभव प्रमाण है। तो यह भी नही कह सकते, क्योकि वहाँ ज्ञानाभाव था। आपके मत मे वह साक्षि-भाष्य वहाँ है उसी का स्मरण आपको होता है और हम तार्किको के मतमे जागरण-समय उस ज्ञानाभाव का अनुमान होता है, स्मरण नही माना जाता। यदि शङ्का हो कि ज्ञानाभाव के ग्रहण मे तो अनुयोगी और प्रतियोगी के ज्ञान की अपेक्षा है, सुषुप्ति मे वह सम्भव नही, अत वहाँ वह अभाव निर्विकल्प चेतन ( साक्षी ) का विषय कैसे होगा? तो यह शङ्का युक्त नही, क्योकि भेदादि के समान ज्ञानाभाव भी स्वरूपेण निर्विकल्पक से ही सिद्ध होता है। हाँ, सविकल्पक अवस्था मे अनुयोगी, प्रतियोगी के ज्ञान से स्फुटतर व्यवहार की विषयता उस ज्ञानाभाव मे आ जाती है।

शङ्का—यह नियम है कि प्रत्यक्ष धर्मी ( पक्ष ) मे ही किसी साध्य का अनुमान होता है, जैसे कि प्रात समय हम किसी प्राङ्गण में खड़े है, उस प्रत्यक्ष प्राङ्गण मे हम यह अनुमान

मानत्वासिद्धिः, प्रतिपन्ने हि प्रातश्चत्वरादौ धर्मिणि सायंसमये तत्र गजाभावानुमानमुपलभ्यत इति वाच्यम्, संप्रतिपन्नोदयास्तमयवद्विवादपदयोरप्युदयास्तमययोरन्तरालकालमनुमाय कालाख्येन लिङ्गेनानुमिते धर्मिण्यात्मनि ज्ञानाभावानुमानोपपत्तेः। भवत्वेव धर्मिसिद्धिस्तथापि न ज्ञानाभावानुमाने लिङ्गमस्ति, अस्मर्यमाणत्वस्य नियमेनास्मर्यमाणत्वस्य वा पथि गच्छतस्तृणस्पर्शादौ निर्विकल्पकानुभूते चानैकान्तिकत्वादिति चेत्, न, ज्ञानसामग्रीवैकल्यलक्षणलिङ्गाज्ज्ञानाभावानुमानोपपत्तेः। तदेव कुतः सिद्धमिति न वाच्यम्, तत्सिद्धेरुभयवादिसिद्धत्वात्। अन्यथा वेदान्तिनामपि सुषुप्तिकाले घटपटादिविशेषज्ञानाभावानुमानं

शङ्कां निराकरोति—नचासिद्ध इति। नच वाच्यमित्युक्त तत्र हेतुमाह—संप्रतिपन्नेति। यद्यपि सुषुप्तिसमये तत्कालीनात्मनो न ज्ञानमस्ति तथाप्युत्तरकाले सम्भवत्येवानुमानेन तस्य ज्ञानं, तथाह्यनिद्राणस्य सम्प्रतिपन्नोदयास्तमययोरन्तरालकालानुभवान्निद्राकालात्पूर्वोत्तरास्तमयोदयकालयोस्तत्कालत्वेन हेतुनान्तरालकालवत्त्वमनुमाय तस्याप्यात्मवत्त्वं कालत्वेनेतरकालवदनुमाय तस्मिन्धर्मिणि ज्ञानाभावानुमानमप्रत्यूहमित्यर्थः। उक्तञ्च तात्पर्यपरिशुद्धावुदयनाचार्यैरपवर्गप्रकरणे—'पूर्वापरावस्थयोरेकत्वप्रत्यभिज्ञानेन मध्यावस्थायामपि तत्सामान्येनोपनया'दिति। अभ्युपगम्य धर्मिसिद्धिं, हेत्वसिद्धिं शङ्कते—भवत्वित्यादिना। अन्तरालकालीनात्मा दुःखादिज्ञानाभाववानस्मर्यमाणतदानीतनदुःखादित्वादिति हेतुः। पथि गच्छतस्तृणादिस्पर्शेष्वनन्तरमस्मर्यमाणेष्वनैकान्त्यं। नियमेनेति विशेषणेपि निर्विकल्पकानुभूतेऽनुदितसविकल्पकेऽनैकान्त इत्यर्थः। उभयवादिसिद्धत्वादिति। विशेषविज्ञानोपरमस्य त्वयाप्यङ्गीकारादित्यर्थः। अतश्चैवमङ्गीकर्तव्यमित्याह—अन्यथेति। ननु नास्माकं सामग्र्यभावात्तदनुमेयमपितु साक्षिसिद्धमिति

कर सकते है कि कल सायंकाल यहाँ हस्ती नही आये थे। किन्तु सुषुप्ति कालीन आत्मा इस समय हमारे प्रत्यक्ष मे नही, अतः उसमे सुषुप्ति कालीन ज्ञानाभाव का अनुमान इस समय कैसे होगा ?

समाधान—यह नियम नहीं कि प्रत्यक्ष धर्मी मे ही अनुमान होता है, अनुमित पक्ष मे भी अनुमान होता है। सुषुप्ति कालीन आत्मा यद्यपि इस समय प्रत्यक्ष नही, फिर भी अनुमित हो सकता है। अनुमान का प्रकार यह है कि वर्तमान उदय और अस्तमय के दृष्टान्त से विवादास्पद ( सुषुप्तिकालघटित ) उदयास्तमय के मध्यकाल का पहले अनुमान करेंगे ( सुषुप्तिपूर्वोत्तरकालिके उदयास्तमयौ, अन्तरालकालविशिष्टौ, उदयास्तमयत्वात्, अनुभूतान्तरालकालोदयास्तमयवत् )। उस काल मे काल हेतु से आत्मा का अनुमान करेंगे। ( स कालः, आत्मविशिष्टः, कालत्वात्, उत्तरकालवत् )। उस अनुमित आत्मा मे ज्ञानाभाव का अनुमान बन जायगा।

शङ्का—अस्तु, किसी प्रकार आत्मरूपी पक्ष की सिद्धि मान भी ली जाय, फिर भी ज्ञानाभाव के अनुमान मे कोई लिङ्ग नही। 'अस्मर्यमाणत्व' या 'नियमेन अस्मर्यमाणत्व'—दोनो ही हेतु, चलते-चलते तृण-स्पर्श तथा निर्विकल्पक-गृहीत पदार्थ मे व्यभिचरित है, क्योकि अस्मर्यमाणत्व उनमे भी है, किन्तु वहाँ ज्ञानाभाव नही। [ आशय यह है कि अस्मर्यमाणत्व हेतु से इस प्रकार अनुमान कर सकते थे—सुषुप्तिकालीन आत्मा ज्ञानाभाववान् अस्मर्यमाणतदानीन्तनज्ञानकत्वात् सम्प्रतिपन्नवत्। किन्तु आत्मा मे बहुत से पदार्थों का ऐसा भी ज्ञान होता है, जिनका स्मरण उत्तर काल मे नही होता जैसे उपेक्षा दृष्टि से देखे-सुने पदार्थ। वहाँ अस्मर्यमाणत्व ज्ञानाभाव से व्यभिचरित है, अतः उसका अनुमापक नही हो सकता ]।

समाधान—ज्ञान-सामग्री-विरहरूप हेतु से ज्ञानाभाव का अनुमान बन जायगा। ज्ञान-सामग्री का विरह ही क्योकर सिद्ध होगा ? यह सन्देह नही करना; क्योकि वह तो सबको मानना पड़ेगा। अन्यथा वेदान्ती भी सुषुप्ति-काल मे घटपटादि विशेष ज्ञानाभाव का अनुमान कैसे करेंगे ?

न स्यात्। ज्ञानाभावस्य निर्विकल्पकसाक्षिवेद्यतानङ्गीकरात्। नचावस्थाभेदसंभिन्नभावरूपाज्ञानपरामर्शसामर्थ्यसिद्धतदनुभवादेव तद्विरोधिनो ज्ञानस्याभावानुमानम्, भावरूपाज्ञानस्य तत्परामर्शस्य च पर प्रत्यप्राप्यसिद्धत्वात्।

यत्तु कैश्चिदनुमान रचितम्—न तावदज्ञान ज्ञानाभाव अभावमानागम्यत्वात्, संप्रतिपन्नवत्। अभावो ह्यभावस्य प्रत्यक्षस्य वा विषय परेणेष्यते, अज्ञानं च न मानगम्यं माननिवर्त्यत्वात्संप्रतिपन्नवदिति। तदन्ये नानुमन्यन्ते, अज्ञानस्य मानागम्यत्वे तत्साधनायानुमानप्रयोगायोगात्। एतन्मानगम्यत्वे वा मानगम्य न भवतीति स्ववचनव्याघातात्। नचात्मनोऽनुमानेनावेद्यत्वसाधन इव न स्ववचनव्याघातादिदोषापत्ति, तत्र वृत्तिव्याप्यत्वेपि फलाव्याप्यत्वेनाविरोधात्, इह च वृत्तिव्याप्यत्वानङ्गीकरात्। नच प्रमाणनिवर्त्यस्य प्रमाणागम्यत्वनियम, प्रत्यभिज्ञानप्रमाणनिवर्त्यस्य तद्धेतोरसंस्कारस्य नित्यपरोक्षतया साक्षि-

तत्राह—**ज्ञानाभावस्येति**। तत्काले निर्विकल्पकवेद्यत्वेऽपि न तावतोत्तरकाल विशिष्टव्यवहार इत्यनुमानमेव शरणमित्यर्थः। तेन च न पूर्वोत्तरयोर्व्याघातः। ननु परामर्शबलाद्भावरूपाज्ञानसिद्धौ तद्बलात्तद्विरोधिघटादिज्ञानाभावानुमानमस्मन्मते न सामग्र्यभावादिति वैषम्यमिति तत्राह—**नचावस्थेति**। अवस्थाभेदः सुषुप्तिरूपावस्थाविशेषस्तेन यद्विशेषितं भावरूपमज्ञान तत्परामर्शसामर्थ्येन सिद्धो यस्तदवस्थाऽज्ञानानुभवो न किंचिदेतावन्त कालमवेदिषमित्येवंविधस्तस्मादिति योजना।

न्यासकारकृतमनुमानमुद्भावयति—**यत्तु कैश्चिदिति**। हेतुमेव समर्थयते—**अभावोहीत्यादिना**। अभावस्येति भाट्टाभिप्रायेण, प्रत्यक्षस्येति तार्किकाभिप्रायेण। **सम्प्रतिपन्नवदिति**। शुक्तिरूप्यससर्गवदित्यर्थः। मानागम्यत्वे तत्साधनायानुमानप्रयोगो व्याहतोऽनुमानप्रयोगे च मानागम्यत्व व्याहतमिति दूषयति—**तदन्य इत्यादिना**। ननु यथात्मनोऽनुमानेनावेद्यत्वसाधनेपि न वेद्यत्वप्रसक्तिस्तद्वत्प्रमाणेनैवाप्रामाणिकत्वसाधनेपि न प्रामाणिकत्वप्रसक्तिरिति तत्राह—**नचात्मन इति**। प्रमाणनिवर्त्यत्वादिति हेतोरनैकान्तिकता चाह—**नच प्रमाणेति**। संस्कारस्य हि कार्यापवर्गित्वात् तत्कार्यप्रत्यभिज्ञानप्रमाणनिवर्त्यत्व, अथच

क्योकि ज्ञानाभाव को निर्विकल्पक साक्षि-वेद्य तो मानते नही। यदि कहा जाय कि सुषुप्तिकालावच्छिन्न भावरूप अज्ञान के स्मरण के बल पर वहाँ उसका अनुभव सिद्ध होता है और उस अनुभव से उसके विरोधी ज्ञान के अभाव का अनुमान होता है तो ऐसा नही कह सकते, क्योकि भावरूप अज्ञान और उसका स्मरण दूसरो के मत मे सिद्ध ही नही।

यह जो अनुमान कुछ विद्वान् रचते है—'अज्ञान ज्ञानाभावरूप नही, अभावग्राहक प्रमाणगम्य न होने से, जैसे घटादि।' अभाव का ग्रहण तार्किकादि मत मे प्रत्यक्ष प्रमाण से और भाट्ट मत मे अनुपलब्धि प्रमाण से ही हुआ करता है, किन्तु अज्ञान उनसे गृहीत नही होता। अज्ञान मे प्रमाणागम्यत्व इस अनुमान से भी निश्चित होता है—'अज्ञान किसी मान का विषय नही, मान से निवर्त्य होने के कारण, जैसे शुक्ति-रजत-ससर्गादि। किन्तु उस अनुमान से दूसरे विद्वान् सहमत नही, क्योकि अज्ञान यदि किसी मान का विषय नही, फिर उसकी सिद्धि के लिए अनुमान-प्रयोग असगत होगा। और "अज्ञान मानगम्य न भवति"—इस मान का विषय होने पर स्ववचन-विरोध होगा। यदि कहा जाय कि आत्मा में अनुमान के द्वारा अवेद्यत्व-साधन मे जैसे स्ववचन-विरोधादि दोष नही होते, वैसे ही यहाँ भी वे दोष नही होगे। तो ऐसा नही कह सकते, क्योकि वहाँ वृत्तिव्याप्यत्व रहने पर भी फलव्याप्यत्वाभावरूप अवेद्यत्व के साधन मे कोई विरोध नही होता। किन्तु यहाँ (अज्ञान मे) तो वृत्तिव्याप्यत्व मानते नही। और प्रमाणनिवर्त्य मे प्रमाणागम्यत्व का नियम भी नही, क्योकि प्रत्यभिज्ञा प्रमाण-निवर्त्य उसके हेतु सस्कारो मे नित्य परोक्षता के कारण साक्षिसिद्धत्व न रहने से अनुमान-गम्यत्व माना जाता है।

सिद्धत्वाभावेनानुमानगम्यत्वाङ्गीकारात् । नच त्वदुक्तमर्थं न जानामीत्यादिव्यवहारोऽत्यन्त-सुषुप्ते ज्ञायमाने वाऽसंभाव्यमानोऽतिरिक्तमेव ज्ञानाभावादज्ञानं गमयति । अवगतेंऽशेऽव-गतत्वादेव न जानामीतिव्यवहारायोगादनवगतेंशे चानवगतत्वादेव प्रश्नानुपपत्तेरिति युक्तम् ; त्वदुक्तमर्थं प्रमाणतो न जानामीत्येवपरतयापि व्यवहारोपपत्ते , प्रतिवादिवाक्यादवगतार्थ-स्यानुवादपुरःसरं प्रमाणासम्भवेन सर्वैर्वादिभिर्निराकरणाङ्गीकारात् । नापि 'नासदासीन्नो सदासी'दित्युपक्रम्य 'तम आसीत्', 'मायां तु प्रकृतिं विद्यात्', 'इन्द्रो मायाभि'रित्याद्या-

माध्य नास्तीत्यर्थः। अनुव्यवसायनिवर्त्यैन च तद्गम्येन परसमतेन व्यवसायेनानैकान्त द्रष्टव्यम् , विवरणकारोक्ता-र्थापत्तिमाशङ्क्य निषेधति—**नचेत्यादिना युक्तमित्यन्तेन** । ननु सामान्यांशे ज्ञातमनूद्य विशेषांशेऽज्ञाते प्रश्न इति तत्राह—**अवगतेऽश इति** । ततश्च स एवार्थो ज्ञातश्चाज्ञातश्च वक्तव्यः, नचैतज्ज्ञानाभावपक्षे घटते, ज्ञानेन विरोधात् । अस्मत्पक्षे तु नित्यचैतन्यस्याज्ञानसाधकत्वादविरोध इति भावः । न युक्तमित्युक्त तत्र हेतुमाह—**त्वदुक्तमर्थमिति** । नाशतो ज्ञानाज्ञानविषयत्वमर्थस्यापि तु तत्रैव प्रमाणज्ञानाभावतदित-रज्ञानयो सह वर्तन भ्रम । नचैव सति विरोध नापि प्रश्नानुपपत्तिरिति भावः । न केवलमत्रैवेय गतिरपि तु सर्वत्रैव दूष्यस्थल इत्याह—**प्रतिवादीति** । प्रमाणानवगतस्य कथमनुवाद इत्याशङ्काया वाय ग्रन्थः ।आगमं निषेधति—**नापीति** । तदानी प्रलयकालेऽऽसन्नासीत्सदपि नासीदिति प्रतिषेधे कि तर्हि तम आसीदि-

शङ्का—'आपके कहे अर्थ को मै नही जानता'—इस प्रकार का व्यवहार ही ज्ञानाभाव से अतिरिक्त अज्ञान का साधक है.—उक्त व्यवहार अत्यन्त अज्ञात या अत्यन्त ज्ञात वस्तु में सभव नही, क्योकि ज्ञात घटादि के विषय मे 'मै नही जानता'—यह व्यवहार नही हो सकता और अत्यन्त अज्ञात विषय मे प्रश्न नही बनता । [ अभिप्राय यह है कि कोई शिष्य अपने आचार्य से प्रार्थना करता है—'गुरो ! इस मन्त्र का अर्थ, जो आपने बताया था मै भूल गया, फिर बता दीजिए'—यहाँ विचारणीय यह है कि शिष्य जिस अर्थ को गुरु से पूछ रहा है, वह शिष्य को ज्ञात है ? कि नही ? यदि ज्ञात है, तब वह 'भूल गया' कैसे कहता है और यदि ज्ञात नहीं, तब उसके विषय मे 'वह अर्थ बताइए'—यह शब्द-प्रयोग ही नहीं कर सकता, क्योकि किसी अर्थ को जानकर ही उसके विषय मे शब्द-रचना होती है । अत कहना होगा कि उस अर्थ का शिष्य को ज्ञान भी है और अज्ञान भी । अब यहाँ अज्ञान यदि ज्ञानाभाव है, तब उसी अर्थ के विषय मे ज्ञान और ज्ञानाभाव—दोनो परस्पर विरुद्ध है, एकत्र हो नही सकते । जब अज्ञान को भावरूप मान लें तब दोनो एकत्र सम्भव हो जाते है, क्योकि ज्ञान है ब्रह्म चैतन्य, जो उक्त अर्थ के सामान्य अंश को विषय करता है, जिससे उक्त शब्द-रचना सम्भव हुई और अज्ञान है विशेषविषयक, जिसके होने से 'मै भूल गया' कहा गया । सामान्यविषयक ब्रह्मचैतन्य इस अज्ञान का विरोधी नही, अपितु साधक है । अत उक्त व्यवहार के बलपर भावरूपता ही अज्ञान सिद्ध होती है ]।

समाधान—उक्त व्यवहार प्रमाण-जन्य ज्ञान के अभाव को लेकर ही निभ जाता है । अर्थात् उक्त व्यवहार का पूरा अर्थ है—आपके कहे हुए अर्थ का प्रमाण से मुझे ज्ञान नही हुआ । उससे भावरूप अज्ञान सिद्ध नही हो सकता । सभी कही इसी प्रकार व्यवहार होता है-प्रतिवादी के वाक्य से अर्थ का अनुवाद करके प्रमाणासम्भव दिखाकर ही वादिगण उसका निराकरण किया करते है ।

नासदीय सूक्त मे "नासदासीन्नोसदासीत्" ( वहाँ असत् भी नही था, सत् भी नही था—ऋ० ८।७।१७ )—इस प्रकार आरम्भ करके जो कहा गया—"तम आसीत्" ( माया थी )—यह आगम भी उसमे प्रमाण नही और न "माया तु प्रकृति विद्यात्" ( प्रकृति को माया समझिए—श्वेता० ४।१० ), "इन्द्रो मायाभि "—इत्यादि आगम ही, क्योकि ऊपर की श्रुतियो मे 'तम' शब्द

गमस्तत्र प्रमाणम्, तम'शब्देन सांसारिकपुरुषाणां प्रलयकालीनज्ञानाभावस्यैवोच्यमानत्वात्, मायाशब्देन च परमेश्वरज्ञानशक्तेरेव तत्स्वरूपभूताया' संकीर्तनात्। तदेवमनिर्वचनीयाज्ञाने लक्षणप्रमाणयोरसंभवात्तादृगज्ञानमस्तीत्येतदेवाज्ञानमिति सिद्धम्।

अत्रोच्यते। न तावल्लक्षणासंभवस्तथाहि—

अनादिभावरूप यद्विज्ञानेन विलीयते।
तदज्ञानमिति प्राज्ञा लक्षण संप्रचक्षते ॥ ९ ॥

अनादित्वे सति भावरूप विज्ञाननिरस्यमज्ञानमिति लक्षणमिह विवक्षितम्। न तावदिहाव्याप्ति', सर्वेषामप्यज्ञानानामुक्तरूपत्रयानुगमात्। नाप्यतिव्याप्ति., अनादेर्भावस्यात्मनो निवर्त्यत्वाभावेन ज्ञाननिवर्त्यत्वस्याप्यभावात्, तदन्यस्य च परमाणोस्तद्गतश्यामत्वादेश्च स्वरूपतोऽनङ्गीकृतस्य दूरत एवानादित्वानङ्गीकारात्। नचासंभवित्वं ; भावाभावविलक्षणस्याज्ञानस्याभावविलक्षणत्वमात्रेण भावत्वोपचारादात्मवदनादिभावत्वेनानिवर्त्यत्वानुमानानुपपत्तेः।

नचैवविधे मानासंभव., यतः—

---

त्येका श्रुतिः, माया त्वित्यपरा, इन्द्रो मायाभिरित्यप्यन्या। प्रलयकाले ये ससारिणा ज्ञानाभावास्तेऽत्र तमःशब्दाभिधेया. न त्वदभिमतमज्ञानमित्यर्थ.। इतरश्रुत्योरन्यथासिद्धिमाह—**मायाशब्देन चेति**। **तत्स्वरूपभूतेति**। प्रकृति. स्वभावभूतेत्यर्थः। उपसंहरति—**तदेवमिति**। एतदेवाज्ञान मौढ्यमित्यर्थ।

लक्षण श्लोकेन सगृह्णाति—**अनादीति**। पूर्वज्ञानादः प्रागभावस्यात्मनश्च यथायथ विशेषणैर्व्यावृत्ति.। सगृहीत लक्षण विवृणोति—**अनादित्वे सतीत्यादिना**। ननु चिरतनमतानुसारेण पार्थिवपरमाणुविशेषगुणेष्वतिव्याप्तिरुक्तेति तत्राह—**तदन्यस्य चेति**। एतच्च द्वितीयपरिच्छेदे विवरिष्यते। यच्चानादित्वे सति भावरूप तदनिवर्त्त्य यथात्मेत्यनुमानविरोधादसभवीद लक्षणमिति तद्दूषयति—**नचासभवित्वमिति**। अय भावः—किमिद भावत्व हेतूकृत ? कि वस्तुत्व ? उताभावविलक्षणत्वम् ? नाद्यः, असिद्धेः। न द्वितीयः, वस्तुत्वस्यैवोपाधित्वादिति।

प्रमाणाक्षेपं परिहरति—**न चैवंविध इति**। श्लोकेनानुमान सगृह्णाति—**देवदत्तेत्यादिना**।

---

से सासारिक पुरषो का प्रलयकालीन 'ज्ञानाभाव' ही कहा गया है और 'माया' शब्द से परमेश्वर की ज्ञान शक्ति, जो प्रकृतिस्वरूप है, कही गई है। इस प्रकार अनिर्वचनीय अज्ञान में लक्षण, प्रमाण की सम्भावना न होने के कारण वैसा अज्ञान मानना एक मूढता है।

उत्तर पक्ष—अनिर्वचनीय अविद्या मे लक्षणासभव नही—'जो अनादि भावरूप, विज्ञान से विलीन हो जाता है, वही अज्ञान है—यह लक्षण विज्ञ किया करते है।' अर्थात् 'अनादित्वविशिष्ट विज्ञाननिरस्यभावरूपत्व'—यह लक्षण यहाँ विवक्षित है। इसकी अव्याप्ति किसी अज्ञान मे नही, क्योकि सभी अज्ञानो मे उक्त ( अनादित्व, भावत्व, विज्ञाननिरस्यत्व ) तीन रूपो का समन्वय है। अतिव्याप्ति भी नही, क्योकि अनादि भावरूप आत्मा मे निवर्त्यत्व ( नाश्यत्व ) ही नही, ज्ञाननिवर्त्यत्व कैसे रहेगा ? अनादि भावरूप आत्मा से भिन्न परमाणु तथा परमाणुगत श्यामत्वादि तो ( वेदान्त सिद्धान्त में ) स्वरूपत ही असिद्ध है, उनमे अनादित्व का न मानना तो दूर रहा। उक्त लक्षण असम्भवी भी नही, क्योकि भावाभाव-विलक्षण अज्ञान मे केवल अभाव-विलक्षणता के कारण भावत्व का उपचार मात्र होता है, वस्तुत. उसमे भावत्व नही रहता, अत आत्मा के दृष्टान्त से 'भावत्व' हेतु के द्वारा उसमें अनिवर्त्यत्व का अनुमान भी नही किया जा सकता।

अनिर्वचनीय अविद्या मे प्रमाणासम्भव भी नही—'देवदत्त-प्रमा, तद्गत प्रमाभाव से अतिरिक्त

---

१. अनादित्वविशेषणेन पूर्वज्ञानादेः,भावत्वविशेषणेन प्रागभावस्य,विलीयते-इत्यनेनात्मनश्च व्यावृत्तिरितिविभाग.

देवदत्तप्रमा तत्स्थप्रमाभावातिरेकिण. ।
अनादेर्ध्वंसिनी मात्वादविगीतप्रमा यथा ॥१०॥

विगीतं देवदत्तनिष्ठप्रमाणज्ञानं देवदत्तनिष्ठप्रमाऽभावातिरिक्तानादेर्निवर्तकं प्रमाणत्वाद्यज्ञदत्तादिगतप्रमाणज्ञानवदित्यनुमानम् । ये तु प्रमा प्रमाप्रागभावनिवृत्तिरेव न तु निवर्तिकेति मन्यन्ते, तान्प्रति—देवदत्तप्रमा तन्निष्ठप्रमाभावातिरिक्तानादिनिवृत्तिरिति प्रयोक्तव्यम् । नचैतदसमवेतत्वमेतदन्यसमवेतत्वं वा तत्रोपाधि , साध्याव्याप्तेः—एतत्समवेतसुखदु खेच्छाद्वेषप्रयत्नानामेतन्निष्ठप्रमाभावातिरिक्तानादेः स्वप्रागभावस्य निवर्तकत्वेन साध्ये विद्यमानेऽपि त्वदुक्तोपाधेरभावात् । नच विवादपदमनादेर्भावस्य निवर्तकं न भवति पदार्थत्वात्संप्रतिपन्नवदिति प्रत्यनुमानविरोधः, सत्ताद्रव्यत्वाद्यनिवर्तकत्वेन सिद्धसाधनत्वात् । ननु सम्प्रतिपन्नात्मादिपदार्थो-

देवदत्तप्रमेति धर्मिनिर्देश , तत्स्थेत्यादिः साध्यनिर्देश , मात्वादिति हेतुनिर्देश । अविगीता अविप्रतिपन्ना । यज्ञदत्तप्रमेति दृष्टान्तः । संग्रह विवृणोति—विगीतमित्यादिना । इत्थमत्र प्रयोगः—देवदत्तप्रमाणज्ञानमेतन्निष्ठप्रमाणाभावत्वानधिकरणानादिनिवर्तकं प्रमाणत्वात् यज्ञदत्तप्रमाणवदिति । अत्र चाभावत्वानधिकरणेत्येवालम् । अनादिनिवर्तकमित्युक्ते प्रागभावमादायार्थान्तरता तदर्थं प्रमाणाभावत्वानधिकरणेत्युक्तम् । तावति चाप्रसिद्धविशेषणता प्रमाणाभावत्वानधिकरणस्यानादेर्ज्ञाननिवर्त्यस्य तेनानङ्गीकारादात्मनश्च तन्निवर्त्यत्वानङ्गीकारात् तदर्थं देवदत्तनिष्ठेत्युक्तम् । यज्ञदत्तनिष्ठप्रमाणे हि देवदत्तनिष्ठत्वे सति प्रमाणाभावत्वानधिकरणानादेस्तत्प्रागभावस्य निवर्तके सुप्रसिद्धमेव साध्यमिति नाप्रसिद्धविशेषणतासाध्यवैकल्ये । पूर्वज्ञानसुखादिव्यवच्छेदायानादिग्रहणम् । पक्षे चैतन्निष्ठप्रमाणज्ञानाभावत्वानधिकरणत्वमेतन्निवर्त्यस्यानादेरेतन्निष्ठत्वानधिकरणत्वेन न सम्भवति । अन्यनिष्ठप्रागभाव प्रत्यन्यनिष्ठस्यानिवर्तकत्वात् । तस्मादेतन्निष्ठत्वे सति यत्प्रमाणज्ञानाभावत्वानधिकरणमनादि ज्ञाननिवर्त्यं च, तदभिमताज्ञानमेवेति तत्सिद्धि । नन्वभावनिवृत्तिरेव भावः, नहि भावव्यतिरेकेणाभावनिवृत्तिर्नाम सम्भवतीति केषाञ्चिन्मतम् । तथा च यज्ञदत्तप्रमाणस्य स्वप्रागभावनिवृत्तित्वात्, निवर्तकत्वलक्षणसाध्याभावात्साध्यविकलो दृष्टान्त इति तत्राह—ये त्विति । व्याप्यत्वासिद्धि परिहरति—नचैतदिति । सत्प्रतिपक्षमाशङ्क्य परिहरति—नच विवादपदमिति । संप्रतिपन्नवदिति । घटवदित्यर्थ । अत्र किमनादिभावस्य यस्य कस्यचिदनिवर्तकत्वं साध्यते ? किं वोभयसंप्रतिपन्नानादिभावव्यतिरिक्तस्यानादेर्भावस्याभावविलक्षणस्य ? आद्य प्रत्याह—सत्तेति । द्वितीय

किसी अनादि पदार्थ की नाशिका है, प्रमा होने से, जैसे अविगीत प्रमा ।' अर्थात् 'विवादास्पद देवदत्तनिष्ठ प्रमाणज्ञान, देवदत्तनिष्ठ प्रमाभाव से भिन्न किसी अनादि पदार्थ का निवर्तक है, प्रमाण होने से यज्ञदत्तादिनिष्ठ प्रमाणज्ञानवत्'—यह अनुमान प्रमाण है । जो लोग प्रमा को प्रमा-प्रागभाव की निवृत्तिरूप ही मानते है, निवर्तक नही । उनके प्रति 'देवदत्त-प्रमा देवदत्तगत प्रमाभाव से भिन्न अनादि पदार्थ की निवृत्ति रूप है'—ऐसा प्रयोग करना चाहिए । यहाँ 'देवदत्तासमवेतत्व' या 'देवदत्तान्यसमवेतत्व' उपाधि है—ऐसा सन्देह नही करना, क्योकि देवदत्तसमवेत सुखादि में ( देवदत्त-निष्ठ प्रमाभाव से भिन्न सुखादि-प्रागभाव रूप अनादि-पदार्थ का निवर्तकत्वरूप ) साध्य तो है, किन्तु देवदत्तासमवेतत्व नही, अत वह साध्य-व्यापकता न होने से उपाधि नही । यदि कहे कि 'विवादास्पद ( देवदत्तप्रमा ) अनादि भाव का निवर्तक नही, पदार्थ होने से, घटादि के समान'—यह प्रत्यनुमान ( सत्प्रतिपक्ष ) है । तो वह भी नही कह सकते, क्योकि अनादि भाव, सत्ता द्रव्यत्वादि भी है, उनकी निवर्तकता देवदत्तनिष्ठ प्रमाण ज्ञान मे न होने से सिद्धसाधनता दोष आपके इस अनुमान मे है । यदि कहें कि उक्त अनुमान में 'उभय-सम्मत आत्मादि अनादि पदार्थों

तिरिक्तस्य भावस्याभावातिरिक्तस्य चानादेर्न निवर्तकमिति विशेषणादिदमदूषणमिति चेत्, न, तस्य तवाप्रसिद्धतयाऽप्रसिद्धविशेषणत्वापत्तेः। किंच 'न किंचिदवेदिषमि' ति परामर्शसिद्धसौषुप्तिकानुभवोऽप्यत्र प्रमाणम्। नच ज्ञानाभावविषयोऽयमनुभव., अभावप्रतीतेर्धर्मिप्रतियोगिबोधपराधीनतया तदभावे तस्यानुभवितुमयोग्यत्वात्। नच भेदसादृश्यादिवत्स्वरूपेणाभावस्यापि निर्विकल्पकबुद्धिबोध्यता, तथात्वे सादृश्यादिवदेव भावत्वापत्ते, निर्विकल्पकबुद्धिबोध्यो भाव इति परैर्लक्षणाङ्गीकारात्। नाय सुषुप्तिकालीनानुभवजपरामर्श., कितूत्थितस्येदानीमेव सौषुप्तिकज्ञानाभावानुमानमिति च न वाच्यम्, तदनुमापकलिङ्गासिद्धे.।

शङ्कते—**नन्विति**। नच विगीता प्रमा प्रमाऽभावातिरिक्तैतन्निष्ठानादिनिवर्तकत्वानधिकरण प्रमात्वात् यज्ञदत्तप्रमावत् इति प्रसाधनादप्रसिद्धविशेषणत्वाभावाद्भवति प्रतिप्रयोग इति वाच्यम्। देवदत्तनिष्ठं प्रमाणज्ञान देवदत्तनिष्ठानाद्यभावानिवर्तकत्वात्यन्ताभावानधिकरण प्रमाणज्ञानत्वात् यज्ञदत्तप्रमाणज्ञानवदित्याभाससमानयोगक्षेमत्वात्। नच देवदत्तप्रमा देवदत्तनिष्ठत्वे सति देवदत्तप्रमाभावातिरिक्तानादिनिवर्तकत्वानधिकरण प्रमात्वात् यज्ञदत्तप्रमावदिति सत्प्रतिपक्षता। एतन्निष्ठनिवर्तकत्वानधिकरणत्वस्योपाधे, एतत्सुखादौ च व्यतिरेकसिद्धि। अभावविलक्षणाज्ञाने प्रत्यक्षमपि प्रमाणमाह—**किं चेति**। उत्थितस्य न किंचिदवेदिषमिति परामर्शदुन्नीतो यः सौषुप्तिकानुभव सोपि प्रमाणमित्यर्थः। ननु किमिति निर्विकल्पकानुभवायोग्यत्व यावता भेदसादृश्यादिवत्संभव उक्तस्तत्राह—**न च भेदसादृश्येति**। ननु किमिति भावत्वापत्तिः? नहि निर्विकल्पकबुद्धिबोध्यत्वसाम्यात्सादृश्यभेदयोरैक्यमिति तत्राह—**निर्विकल्पकेति**। यत्तु तेनोक्तमस्मत्पक्षे तु नाय परामर्श इत्यादि तदनूद्य दूषयति—**नायमित्यादिना**। ननु किमिति

**से भिन्न अनादि भाव का निवर्तक नहीं'—इतना साध्य मानेंगे अत सिद्धसाधन दोष नहीं। तो वह भी नहीं कह सकते, क्योंकि वैसा अनादि भाव आपके मतमें अप्रसिद्ध होने से अप्रसिद्धविशेषणता होगी।**

**दूसरा प्रमाण 'कुछ भान नहीं रहा'—इस प्रकार के जाग्रतकालीन स्मरण से अनुमित सुषुप्तिकालीन अनुभव भी है। वह अनुभव ज्ञानाभाव को ही विषय करता है—ऐसा नहीं कह सकते, क्योंकि अभाव की प्रतीति अनुयोगी एव प्रतियोगी के ज्ञान के अधीन होती है। वह ज्ञान वहाँ होता नहीं अत अभाव का प्रत्यक्ष सुषुप्ति में नहीं हो सकता। [ यहाँ रहस्य यह है कि सुषुप्ति में वेदान्ती अज्ञानविषयक निर्विकल्पक अनुभव मानते हैं। अभाव के विषय में नैयायिकों का कहना है— "प्रतियोगिविशेषिततज्ज्ञानं तु विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेते"—( सामा० ल० दीधिति ) अर्थात् प्रतियोगिविशिष्ट अभाव का ज्ञान सविकल्पकरूपता का उल्लघन नहीं कर सकता। अत. अभाव में सुषुप्तिकालीन निर्विकल्पक ज्ञान की विषयता नहीं रह सकती ]। यदि शङ्का हो कि भेद, सादृश्यादि पदार्थों के समान अभाव भी स्वरूपेण निर्विकल्पकज्ञान का विषय क्यों नहीं होगा? तो वह शङ्का युक्त नहीं, क्योंकि तब तो सादृश्यादि के ही समान उसको भाव भी मानना पड़ेगा, कारण यह कि 'निर्विकल्पक बुद्धि-बोध्य भाव होता है'—ऐसा भाव का लक्षण दूसरे मानते हैं। यह जो कहा कि "न किञ्चिदवेदिषम्"—यह सुषुप्तिकालीन अनुभव-जन्य परामर्श ( स्मरण ) नहीं, अपितु सुषुप्ति से**

१. प्रमाभावातिरिक्तस्यैतन्निष्ठस्यानादेर्निवर्तकत्वानधिकरणमित्यन्वयः। बाध वारयितु प्रमाभावातिरिक्तेति, न च लघुतरेणैव भावत्वाङ्कुशेन बाधवारणवारणे शक्ष्याम इति वाच्यम्, भावतोऽपि विलक्षणत्वेन विभ्रमस्य, सिद्धसाधनतापातात्। तर्ह्यभावातिरिक्तत्वमेवास्तु लघु विशेषणमित्यपि न वक्तव्यम्, अप्रसिद्धविशेषणताप्रसक्ते.। तथा हि—प्रमाभावातिरिक्तस्यानादेरेतन्निष्ठस्य सुखादिप्रागभावस्य निवर्तकत्वानधिकरणत्वं यज्ञदत्तप्रमाया इति सुखादिप्रागभावमुपादायैव साध्य प्रसिद्ध्यति। अभावातिरिक्तत्वविशेषणेन स नोपादातु शक्येत। न चैवमपि जीवेशादिसम्बन्धमादाय साध्यप्रसिद्धि.स्यादितिवाच्यम्, अखण्डाभावघटकतया प्रमाघटितस्यापि सार्थक्यात्।

नच सामग्र्यभावो लिङ्गम् , तस्याप्यसिद्धेः । नच ज्ञानाभावेन तस्यानुमानम् , अन्योन्याश्रयतापत्ते , सामग्र्यभावाज्ज्ञानाभावानुमान तदभावाच्च सामग्र्यभावानुमानमिति । नचैवं सति वेदान्तिनामपि ज्ञानाभावानुमानासम्भव., अवस्थाभेदसंभिन्नभावरूपाज्ञानसंवेदनादेव सुषुप्त्यवस्थायां तद्विरुद्धस्य ज्ञानस्य तत्सामग्र्याश्चाभावानुमानात्, त्वयापि गत्यन्तराभावादेवमेव ज्ञानाभावानुमानस्यावश्याभ्युपेयत्वात् । नचैवंविधमज्ञानमद्याप्यसिद्धमिति वाच्यम् , तत्प्रमाणस्य दर्शितत्वात् ।

त्वदुक्तमर्थं न जानामीति व्यवहारान्यथानुपपत्तिरपि भावरूपाज्ञानसद्भावे मानम् । नच प्रमाणतो न जानामीत्येवंपरतयापि व्यवहारोपपत्ति , त्वदुक्तेऽर्थे प्रमाणज्ञानं मम नास्तीत्यस्य विशिष्टविषयज्ञानस्य प्रमात्वात् , तद्विशेषणतयार्थस्यापि प्रमाणेनाधिगतत्वात् , स्ववचनव्याघातापत्ते. । एतदतिरिक्तप्रमाणज्ञानं त्वदुक्तेऽर्थे मम नास्तीति वदतो वचनव्याघात-

सामग्रीवैकल्यलक्षणलिङ्गासिद्धि १ यावता ज्ञानाभावेनैव शक्यानुमान तद्वैकल्यमिति तत्राह—नच ज्ञानाभावेनेति । यच्च तेनोक्तमन्यथा भवतामपि घटपटादिज्ञानाभावानुमान न स्यादिति तदनूद्य परिहरति—नचैवं सतीति । मम तु भावरूपाज्ञानबलादुभयाभाव. शक्यानुमान इत्यर्थः । तवापीयमेव गतिर्नान्येत्याह—त्वयापीति । यत्त्वेवविधाज्ञानस्य तत्परामर्शस्य च मा प्रत्यसिद्धिरिति तत्राह—नचैवंविधमिति । परामर्शस्याप्युपलक्षणमिद तस्यापि समर्थनात् ।

अर्थापत्तिमपि प्रमाणयति—त्वदुक्तमर्थमित्यादिना । पूर्वपक्ष्याशयमनूद्य निषेधति—नचेत्यादिना । त्वदुक्तमर्थं प्रमाणतो न जानामीति यदिद ज्ञानं तत्तावत्प्रमाणमेव, यथार्थानुभवत्वात् । तथा चैतज्ज्ञानविषयान्तर्गततयैतद्विषयभूतस्यार्थस्यापि प्रमाणतो ज्ञातत्वात्तन्निषेधवचनविरोध इत्याह—त्वदुक्तेऽर्थ इति । ननु प्रमाणतो न जानामीत्यस्यायमर्थ.—एतदज्ञातत्वग्राहप्रमाणव्यतिरिक्त प्रमाणज्ञान नास्तीति । तत्राह—एतदतिरिक्तेति । अत्राप्येवविधज्ञानस्य पूर्वनिर्दिष्टादतिरिक्तप्रमाणत्वादेव तदविषयत्ववचन

उठने पर जाग्रतकालीन ( ज्ञानाभावविषयक ) अनुमान है । वह कहना उचित नही, क्योकि उस अभाव के अनुमापक लिङ्ग की असिद्धि है । सामग्र्यभावरूप लिङ्ग की भी सिद्धि नही । ज्ञानाभाव से सुषुप्ति मे सामग्र्यभाव का अनुमान यदि करना चाहे, तो अन्योऽन्याश्रय दोष होगा—'सामग्र्यभाव से ज्ञानाभाव का और ज्ञानाभाव से सामग्र्यभाव का अनुमान सामग्र्यभाव को हेतु न मानकर वेदान्ती भी वहाँ ज्ञानाभाव का अनुमान कैसे करेगे'—यह सन्देह उचित नही, क्योकि अवस्था विशेष-विशिष्ट भावरूप अज्ञान के अनुभव से ही सुषुप्ति दशा में ज्ञान तथा उसकी सामग्री के अभाव का अनुमान हो जाता है । आपको भी अगत्या यही मार्ग ज्ञानाभाव के अनुमान मे अपनाना होगा । यह तो कह सकते नही कि 'वैसा अज्ञान अभी तक सिद्ध नही हुआ', क्योकि उसमें प्रमाण दिखाए जा चुके है ।

'आप के कहे अर्थ को नही जानता'—इस व्यवहार की अन्यथानुपपत्ति भी उक्त अर्थ मे प्रमाण है । 'प्रमाण से आपके कहे अर्थ को नही जानता हूँ'—इस अर्थ मे उक्त व्यवहार का तात्पर्य कदापि नही हो सकता, क्योकि 'त्वदर्थविषयक प्रमाणज्ञान मुझे नही'—यह अनुभव ही विशिष्टविषयक होने से प्रमाण है ही । इसी प्रमाण ज्ञान का परम्परया उक्तार्थ भी विषय हो गया । अब यह कहना कि उक्तार्थ प्रमाणज्ञान का विषय नही—वदतो व्याघात है । यदि कहे 'त्वदुक्तार्थविषयक प्रमाणज्ञान मुझे नही'—इस प्रमाण से अतिरिक्त प्रमाणज्ञान मुझे त्वदुक्तार्थ मे नही—यह हमारा तात्पर्य है । तो यह भी कहना उचित नही, क्योकि यह द्वितीय प्रमाण, जो कि उक्त प्रथम प्रमाण से अतिरिक्त है, उक्त अर्थ को परम्परया विषय करता है, अतः यहाँ भी वही स्ववचन-व्याघात दोष

१ सुषुप्तिकालीन आत्मा, ज्ञानतत्सामग्र्यभाववान्, तद्विरुद्धाज्ञानानुभवितृत्वात्, प्रलयकाली-

दोषानुषङ्ग एवास्यापि ज्ञानस्य पूर्ववदेव प्रमाणजन्यत्वात्। नच सामान्यतः प्रमाणेनार्थस्याधिगमेपि विशेषानधिगमाददोष, विशेषस्याप्यधिगमानधिगमयोः पूर्वोक्तदोषानतिवृत्तेः। ननु भावरूपमप्यज्ञानं ज्ञाननिरस्यमभ्युपगम्यते भवद्भिस्तत्कथं ज्ञायमानेर्थे न जानामीति व्यवहार, मैवम्, अस्मन्मतेऽज्ञानस्य साक्षिसिद्धतया प्रमाणाबोध्यत्वात्, प्रमाणज्ञानोदयात्प्राक्कालेऽज्ञानं तद्विशेषितोऽर्थं साक्षिसिद्धोऽज्ञात इत्यनुवादगोचरो भवति, भवति च प्रश्नार्ह इत्यविरोधात्। उक्त च सम्प्रदायविद्भि —"सर्वं वस्तु ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषय एवे"ति।

किंच 'तम आसीत्', 'मायां तु प्रकृतिं विद्या'दित्याद्यागमोपि तत्र प्रमाणम्। नच तम शब्देन ज्ञानाभाव कथ्यते, नासदासीदित्यभाव व्यावर्त्य तम आसीदिति प्रतिपादनात्। नच परमेश्वरज्ञानशक्तिर्माया, 'भूयश्चान्ते विश्वमायानिवृत्तिः', 'मायामेतां तरन्ति ते', 'तरत्य-

---

व्याहतमित्यर्थः। ननु सामान्यतः प्रमितस्य विशेषतोऽनधिगमोद्भावनान्न व्याहतिरिति तत्राह—**नच समान्यत इति**। **पूर्वोक्तेति**। पूर्वपक्षसमयोक्तेत्यर्थ। ननु त्वन्मतेपि कथ ज्ञायमानेऽर्थे न जानामीति व्यवहारः यावता ज्ञानाभाववदज्ञानमपि ज्ञाननिवर्त्यमेवेति चोदयति—**नन्विति**। न तत्राज्ञाननिवर्तक प्रमाणज्ञान तद्बोधकमपि तु साक्षिचैतन्यम्। नच तदज्ञाननिवर्तक तत्साधकत्वादिति परिहरति—**मैवमिति**। **प्रमाणाबोध्यत्वादिति**। अभावव्यावृत्तेरेवानुमानादिप्रमाणैर्बोध्यमानत्वादिति भाव। यत एव पूर्वं प्रमाणज्ञान नोत्पन्न साक्षिणैवाज्ञानविशिष्टतयैवार्थो निर्ज्ञात इत्यत एवानुवादप्रश्नौ घटेते इत्याह—**प्रमाणज्ञानोदयादिति**।

आगममपि प्रमाणयति—**किंच तम आसीदित्यादिना**। यत्तु जीवाना तात्कालिकज्ञानाभावस्तमश्शब्दाभिधेय इति तन्न। नासदासीदित्यभावस्यापि प्रतिषेधादित्याह—**नच तम इति**। नच प्रागभावप्रध्वसवर्गस्यानाद्यनन्तस्य सद्भावादशक्यनिषेधतेति वाच्यम्। तयोरप्युत्पत्तिविनाशवत्ताया. साधयिष्यमाणत्वात्। मायाशब्दस्यान्यथासिद्धिमुक्त्वा निराचष्टे—**नच परमेश्वरेति**। ईश्वरज्ञानस्य नित्यस्य ज्ञान-

---

है। यदि कहा जाय कि सामान्यत उक्तार्थ प्रमाण से अधिगत है, किन्तु विशेषत नही—यह मानने पर, उक्त दोष नही। तो यह भी नही कह सकते, क्योकि यहाँ भी उक्तदोष है। (अर्थात् विशेष के विषय मे वही प्रश्न उठेगा कि ज्ञात है? या अज्ञात? ज्ञात होने पर 'न जानामि' नही कह सकते और अज्ञात होने पर प्रश्न ही अनुपपन्न हो जाता है)। पूर्वपक्षी शङ्का कर सकता है कि भावरूप अज्ञान को भी तो आप ज्ञान-निरसनीय ही मानते है, फिर आप भी ज्ञायमान अर्थ के विषय में कैसे कह सकते है—'मै नही जानता'। किन्तु उसकी शङ्का युक्तियुक्त नही, क्योंकि हमारे मत मे अज्ञान-निवर्तक है—प्रमाणज्ञान और अज्ञान-साधक है—साक्षिचैतन्य। (निवर्तक साधक नही और साधक निवर्तक नही)। वस्तुस्थिति यह है कि प्रमाणज्ञान के उदय होने से पूर्व ही अज्ञान और उसका विषय अर्थ साक्षिसिद्ध है, और प्रमाण से अज्ञात है, अत वह अनुवाद का विषय भी होता है और प्रष्टव्य भी। सम्प्रदाय विज्ञो ने कहा भी है—'सभी पदार्थ ज्ञात या अज्ञात रूप से साक्षिचैतन्य के विषय है।'

"तम आसीत्," "मायां तु प्रकृति विद्याद्"—इत्यादि आगम भी उसमे प्रमाण है। पूर्वपक्षी ने 'तम' शब्द का जो ज्ञानाभाव अर्थ किया था, वह ठीक नही, क्योकि उक्त श्रुति मे 'नासदासीद्'—इस प्रकार अभाव का खण्डन करके तम का विधान किया गया है, (अत तम का अभाव अर्थ कैसे कर सकते है?) दूसरी श्रुति मे 'माया' शब्द का अर्थ किया था—ईश्वर की शक्ति। वह भी संगत

---

नात्मवादत्यनुमानमत्र बोध्यम्। २. ननु प्रमाणाबोध्य चेदज्ञान, तर्हि तद्बोधार्थं देवदत्तप्रमेत्याद्यनुमान किमित्यु-

विद्यां विततां योगी माया'मित्यादिना ज्ञाननिवर्त्ये मायाशब्दप्रयोगदर्शनात्। तदेवं लक्षण-प्रमाणयोरुपपन्नत्वादनादिभावरूपाज्ञानमस्तीति सिद्धम्।

किंच भ्रमोपादानमज्ञानमिति लक्षणेऽपि न दोषः। नचात्मन्यतिव्याप्तिः; तस्य केवलस्य कूटस्थस्य कस्याप्यनुपादानत्वात्। सत्योपादानत्वे च विभ्रमस्यापि सत्यत्वप्रसङ्गात्। नच विभ्रमोऽपि स्वरूपतः सत्यः, तथात्वे प्रमाणज्ञानवदेव विषयापहारलक्षणबाधस्याप्यसंभव-प्रसङ्गात्। नचैतावन्तं कालमिदं रजतमित्यभादित्यनुभवविरोधः, अनिर्वचनीयस्यापि विभ्रम-स्याभावविलक्षणतया तथात्वेनानुसन्धानोपपत्तेः। नच स्वरूपसत एवासीदिति प्रतिसन्धा-नम्, एतावन्तं कालमिहादर्शे मुखमासीत्स्फटिकश्च लोहित आसीदित्याद्यनुसन्धानदर्शनात्।

---

निवर्त्यत्वानङ्गीकारादिति भावः। उपसंहरति—तदेवमिति।

पञ्चममपि मतं शक्यसमर्थनमित्याह—भ्रमोपादानमिति। नचात्मनीति। कूटस्थस्य तस्य वियदादिविकाराभावादविद्यावेशवशाद्विकारे प्राप्ताप्राप्तविवेकेन तस्या एव विकार.। नचैवं साङ्ख्यसिद्धान्त-सङ्गतेरिह गन्धिता, परमेश्वराध्यस्तानिर्वचनीयाविद्यापरिणामस्य विवर्तापरनाम्न स्वीकारादीदृशमेव हेतुत्व-मभिप्रेत्य 'तस्माद्वा एतस्मादात्मन आकाशः सभूतः' इत्यादिसृष्टिश्रुतयस्तथा 'जन्माद्यस्य यत', प्रकृतिश्चे'-त्याद्यधिकरणान्यपि। अत एव धातुसमीक्षायां ब्रह्मवित्प्रकाण्डैर्भर्तृहरिभिरभिहितम्—

'शुद्धतत्त्व प्रपञ्चस्य न हेतुरनिवृत्तितः।
ज्ञानज्ञेयादिरूपस्य मायैव जननी तत ॥' इति

परिणामित्वमात्रं चात्रोपादानत्वमभिप्रेत, यत्तु विभ्रमस्यापि स्वरूपेण सत्यत्वान्नेदमनिष्टमिति तत्राह—नच विभ्रमोऽपीति। यदि हि घटादिज्ञानवत्स्वरूपेण सत्यो विभ्रम स्यात्ततस्तद्वदेव यथार्थोपि स्यादि-त्यर्थः। अत एवाहुराचार्याः—'सदसद्भ्यामनिर्वाच्याविद्या वेद्यैः सह भ्रम' इति। प्रत्यभिज्ञाविरोधमुक्त परिहरति—नचैतावन्तमिति। ननु सद्विलक्षणस्यासतः कथमासीदिति प्रतिसधानविषयत्वमिति तत्राह—नच स्वरूपसत एवेति। भ्रमोपादानाज्ञाने प्रमाणमाह—विगीत इति। अत्राप्यतिरिक्त-

---

नहीं, क्योंकि—"भूयश्चान्ते विश्वमायानिवृत्ति" (फिर अन्त में विश्वमाया की निवृत्ति हो जाती है—श्वे० १।१०), "मायामेतां तरन्तिते" (वे इस माया को तर जाते है—भ. गी. ७।१४), "तरत्यविद्यां वितता योगी मायाम्" (योगी विस्तृत अविद्या और माया को तर जाता है—वि. पु ५।१७।१४)—इत्यादि वाक्यो मे 'माया' शब्द का प्रयोग किया गया है—ज्ञान-निवर्त्य वस्तु में। (ईश्वर की शक्ति तो नित्य होने से ज्ञान-निवर्त्य नही, अत माया शब्द का अर्थ अनिर्वचनीय अविद्या ही है)। इस प्रकार लक्षण और प्रमाणो से यह सिद्ध हो गया कि अनादि भावरूप अज्ञान है।

अज्ञान के 'भ्रमोपादनत्व'- इस लक्षण मे भी कोई दोष नही। आत्मा मे अतिव्याप्ति नही दे सकते, क्योकि वह असङ्ग कूटस्थ है, किसी का भी उपादान नही। यदि सत्य को विभ्रम का उपादान मानेगे, तो विभ्रम भी सत्य हो जायगा। विभ्रम भी स्वरूपत सत्य है—यह कहना उचित नही, अन्यथा उसी प्रकार उसके विषय का भी बाध नही हो सकेगा, जैसे प्रमाण ज्ञानके विषय का। 'यदि विभ्रम को स्वरूपत. सत्य न माने, तब 'इतने समय तक यह रजत प्रतीत होता रहा'—इस अनुभव का विरोध भी नही, क्योकि 'विभ्रम यद्यपि अनिर्वचनीय (भावाभाव-विलक्षण) है, तथापि भाव-विलक्षणता के कारण उसकी भावरूप से प्रत्यभिज्ञा हो सकती है। स्वरूपत सत् का ही 'आसीत्'—इस रूप से प्रतिसन्धान नही होता, अपितु 'इतने समय तक इस दर्पण मे मुख था,' 'स्फटिक लोहित था'—इस प्रकार स्वरूपत: असत् प्रतिबिम्बादि के विषय मे भी 'आसीत्'—

---

पन्यस्तम्? इत्यत आह—अभावव्यावृत्तेरिति। प्रमाप्रागभावादिभेदस्यैवानाद्यज्ञानधर्मस्य बोध्यमानत्वादित्यर्थः।

प्रयोगश्च, विगीतो विभ्रमः एतज्ज्ञानकारणाबाध्यातिरिक्तोपादानः विभ्रमत्वात् देवदत्तादिविभ्रमवत्। दर्शित एव च सत्योपादानत्वे सत्यत्वप्रसङ्गो विपक्षे बाधकस्तर्कः। तस्माद्यदुपादानो विभ्रमस्तदज्ञानमिति सिद्धम्।

ननु तथाप्यसंभवि लक्षणं, सर्वप्रत्ययानां यथार्थत्वेन विभ्रमाणामेवाभावात्, विगीताः प्रत्यया यथार्था प्रत्ययत्वात्संप्रतिपन्नवदित्यनुमानात्, अन्यथान्याकारस्य प्रत्ययस्यान्या-

कारणस्य द्रव्यस्य परैरबाध्यत्वाङ्गीकारात् तदर्थमेतज्ज्ञानकारणेत्युक्तम्। एतज्ज्ञानकारणत्वानधिकरणोपादान इत्युक्ते व्याहतिस्तदर्थमबाध्यत्वानधिकरणेत्युक्तम्। ततश्चाबाध्यत्वानधिकरणबाध्याज्ञानोपादानकत्वसिद्धिर्विभ्रमस्य। दृष्टान्ते त्वेतज्ज्ञानकारणातिरेकमादाय साध्यप्रसिद्धिः। अन्तिमसमर्थनमुपसहरति—तस्मादिति।

'इत्यध्यक्षानुमानार्थापत्तिशब्दैः प्रसाधिता।
अविभक्ते परेऽविद्या भावाभावविभागदा॥
एषा साक्षात्साक्षिचैतन्यवेद्याऽविद्यानादि स्वीकृता स्वे कृतान्ते।
वादिभ्रान्त्यापादिताभावभावादेभिर्मानैः केवलं भेदितात्र॥
शास्त्रैकगम्येऽपि यथा ह्यपूर्वेपरप्रमाणान्निरणायि भेदः।
यथाच रज्जूरगयोर्विभाग परे प्रमिण्वन्ति परानुबन्धात्॥'

विभ्रमोपादानमज्ञानमित्युक्तं तत्र विभ्रमाणामेवाभावादुपादानत्वमसंभवीत्यख्यातिवादिनः प्रत्यवतिष्ठन्ते—ननु तथाप्यसंभवीति। किमिदं विभ्रमत्वेन विवक्षितं? किं यथार्थज्ञानविशेष यथास्माकं? उतायथार्थज्ञानम्? नाद्य। तदुपादानस्यात्मनोन्तःकरणस्य वा अविद्यात्वाभावात्। न द्वितीय इत्याह—सर्वप्रत्ययानामिति। विभ्रमाणामेवाभावादिति। ज्ञानानामयथार्थत्वाभावादित्यर्थः। ननु कुतः सर्वप्रत्ययानां यथार्थत्वसिद्धिरित्यनुमानादित्याह—विगीता इति। अज्ञातः सिद्धसाधनतानिवृत्त्यै विगीतग्रहणम्। अयथार्थव्यवहारहेतुभूतज्ञानानां पक्षीकरणाच्च नाश्रयासिद्धिः। विपक्षे बाधकमाह—अन्यथेति। भासमानतया हि विषयत्वं न तु सत्तया, नापि कारणतयाऽतिप्रसङ्गात्। नच रजतज्ञाने शुक्तिका चकास्ति। तथाचाचेत्यमानशुक्तिकालम्बनत्वकल्पनाया विरुध्यत्येव रजतानुभव इति भावः। तथाच नयवीथ्या—'अत्र भ्रमो य एवार्थे' इत्यादिना विषयलक्षणमुक्त्वोक्तं तेन—

'अन्यस्य चान्यथाभानं प्रतीत्यैव पराहतम्।
परस्मिन्भासमानेपि न परं भासते यतः'॥ इति।

स्थाने तत्त्वानधिकरणपदं प्रक्षेप्तव्यम्। अबाध्यत्वानधिकरणोपादान इत्युक्तेऽप्रसिद्धविशेषणता सर्वत्रोपादान-

ऐसा प्रयोग होता है। अनुमान-प्रयोग भी कर सकते हैं—'विवादास्पद विभ्रम, एतज्ज्ञानकारणीभूत अबाध्य से अतिरिक्तोपादानक है, विभ्रम होने से, जैसे देवदत्तादि के विभ्रम।' विपक्षबाधक तर्क तो दिखाया ही जा चुका है—सत्योपादान मानने पर विभ्रम में सत्यत्वापत्ति। इसलिए विभ्रम का जो उपादान है, वही अज्ञान है—यह सिद्ध हो गया।

अख्याति-वादोत्थापन—अख्यातिवादी प्रभाकर का कहना है कि उक्त लक्षण असम्भवी है, क्योंकि सभी ज्ञान यथार्थ ही होते हैं, विभ्रम कोई होता ही नहीं, कि उसका उपादान अज्ञान सिद्ध हो। 'विवादास्पद ज्ञान, यथार्थ है, ज्ञान होने से, उभय-सम्मत यथार्थज्ञान के समान'—इस अनुमान प्रमाण से सब ज्ञानों में यथार्थत्व सिद्ध होता है। अन्यथा रजताकार ज्ञान का आलम्बन शुक्तिकादि

१. एतज्ज्ञानकारणीभूतादबाध्यादतिरिक्तमुपादानं यस्येति विग्रहः। एतज्ज्ञानकारणीभूतोऽबाध्य एष आत्मा, तदतिरिक्तो देवदत्तात्मा तदुपादानकत्वं देवदत्तविभ्रमस्येति साध्यप्रसिद्धिः। २ द्र० न्या० म० पृ० ६५। ३. प्र. प. नय. २३। ४. प्र. प. नय. २५।

लम्बनतायामनुभवविरोधात्, संविदा स्वविषयव्यभिचारे चानाश्वासप्रसङ्गात्, असतोऽपि संसर्गादेरवभासमानतायामसत्ख्यातेरपि दत्तावसरतया सौगतमतानुप्रवेशप्रसङ्गात्, असतश्च संसर्गादेः स्फुरणकारणानिरूपणात्, चक्षुरादेश्च संप्रयुक्तमात्रग्राहित्वात्, देशान्तरनिवेशिन स्वरूपासतश्च सम्प्रयोगायोग्यत्वात्, दोषाणां च स्वारसिककार्यप्रसवशक्तिप्रतिरोधमात्र-हेतुत्वात् मूषिकाघ्रातशालिबीजादौ तथादृष्टत्वात्, दावदहनदग्धवेत्रबीजात्कदलीकाण्डजन्मनो दग्धस्यावेत्रबीजत्वेन दोषाणां विपरीतकार्यकारणतां प्रत्यनुदाहरणत्वात्। सर्वत्र च प्रतीयमानयोः

---

बाधकान्तरमाह—**संविदामिति**। तदप्युक्तं—

'[1]यदि स्वार्थं परित्यज्य काचिद्बुद्धिः प्रवर्तते।
व्यभिचारवती स्वार्थे कथं विश्वासकारणम्' ॥ इति।

अपसिद्धान्तापत्तिरपि बाधिकेत्याह—**असतोपीति**। यदि च बहिरसदिदं प्रतीयेत साकारतापि विज्ञानस्य स्यात्। तदप्युक्तं '[2]अयथार्थत्वपक्षे च ज्ञानं साकारमापते'दिति। तदेवं संविद्विरोधानाश्वासासत्ख्यातिप्रसङ्गान्बाधकानुक्त्वा कारणानिरूपणं दर्शयन्नकारणककार्यप्रसङ्गमपि बाधकं बध्नाति—**असतश्चेति**। तदप्युक्तं '[3]अयथार्थस्य बोधस्य नोत्पत्तावस्ति कारण' मिति। नन्वन्वयव्यतिरेकाभ्या चक्षुरवसीयते कारणमिति तत्राह—**चक्षुरादेरिति**। अस्तु तर्ह्यारोप्येणापि सम्प्रयोग इति तत्राह—**देशान्तरेति**। देशान्तरनिवेशिनो रजतादेः स्वरूपेणासतश्च नष्टपुत्रादेरिति योजना। ननु दोषदूषिताक्षादेरस्ति मिथ्याप्रत्ययजननसामर्थ्यमिति तत्राह—**दोषाणां चेति**। स्वाभाविकशक्तिप्रतिबन्धमात्रं दोषकृत्यं नत्वतिशयाधानमित्यर्थः। ननु दावदाहोपहतवेत्रबीजानां हरिद्राजलावसिक्तहरिद्राङ्गारपरिप्लुष्टहारीतमांसस्य च दशरात्रं कांस्यपात्रोषितस्य सर्पिषश्च दृष्टं विपरीतं रम्भाकाण्डारम्भकत्वं मरणकारणत्वं चेति तत्राह—**दावदहनेति**। दोषाणां विपरीतकार्यकारणतां प्रति दावदहनदग्धवेत्रबीजात्कदलीकाण्डजन्मनोऽनुदाहरणत्वात्, कुतः? दग्धस्यावेत्रबीजत्वेनेति योजना। उक्तं हि '[4]भस्मकादिषु कार्यस्य विघातादेव दोषते' ति। ननु ससृष्टव्यवहारदर्शनात्ससर्गज्ञानपूर्वकत्वमितरत्रेवानुमीयत इत्यत आह—**सर्वत्रेति**। सुषुप्त्यादौ सर्वत्र ससृष्टव्यवहारप्रसक्तिवारणाय प्रतीयमानयोरित्युक्तम्। नन्विदं विपर्ययस्थलमात्रलोभेन सकलसमीचीनव्यवहारवर्तिसंसर्गज्ञानजातहेतुपरिहरणम् '[5]अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्व'मिति

---

**मानना होगा, जो कि अनुभव-विरुद्ध है। दूसरी बात यह भी है कि यदि किसी एक ज्ञान का अपने विषय से व्यभिचार माना जायगा, तब सभी ज्ञानो पर से विश्वास ही उठ जायगा। ससर्गादि असत् पदार्थों का भान मानने पर असत्ख्याति के लिए द्वार खुल जायगा, फिर तो बौद्धो का प्रवेश हो जायगा। असत् ससर्गादि के भान का कारण भी कोई नही। चक्षु-आदि तो केवल सन्निकृष्ट के ग्राहक होते है। किन्तु जो पदार्थ देशान्तर मे है या जिसका स्वरूप ही नही, उसके साथ चक्षु-आदि का सम्बन्ध ही नही बन सकता। दोष भी असत् पदार्थ-विषयक ज्ञान के जनक नही हो सकते, क्योकि दोषो से स्वाभाविक, कार्य-जनक शक्ति का प्रतिबन्ध मात्र हुआ करता है, जैसा कि चूहे के खाए धानो मे देखा गया है। दावानल से जले हुए नरकट के बीज, जिनसे केला पैदा होता है, नरकट के बीज ही नही रहते अत वे विपरीत कार्य की कारणता मे उदाहरण नही बन सकते। [ अर्थात् 'दोष विपरीत कार्य के जनक होते है'—इसमे दृष्टान्त नरकट के जले बीज तब होते यदि जलने पर भी उनमे नरकट-बीजत्व का व्यवहार होता और वे नरकट से भिन्न केला पैदा करते किन्तु जले बीजो को नरकट का बीज ही नही कहा जाता ]। सभी कही प्रतीयमान सम्बन्धियो**

---

१. प्र.प.नय. ६६। २. प्र.प. नय. ७२। ३. प्र.प. नय ७३। ४ प्र. पं नय.७४। ५. रघु० २।४७।

**संसर्गिणो' संसर्गव्यवहारस्यासंसर्गाग्रहनिबन्धनत्वात्, ससर्गज्ञानस्यापि हेतुत्वकल्पनायां गौरवात्। असंसर्गाग्रहप्रसञ्जितसंसर्गव्यवहारमात्रबाधनादेव बाधकस्य बाधकतोपपत्तेः। इदमितिप्रत्ययस्य च दोषदूषितचक्षुर्जन्यतयानाकलितविशेषस्य सामान्यमात्रग्रहणरूपत्वात्, रजतमिति चासंनिहितविशेषविषयस्य संप्रयोगलिङ्गाद्यजन्यतया संस्कारमात्रकारणत्वेन स्मरणत्वात्, तस्य च दोषहेतुकत्वेन तत्तांशागोचरतया स्वविषयाविवेचकत्वात्। तयोश्चान्योन्यसंसर्गसाकांक्षसामान्यविशेषालम्बनयो स्वरूपतो विषयतश्चागृहीतासंसर्गयोर्निरन्तरोत्पन्नयो.**

---

न्यायमनुसरतीत्यत आह—**संसर्गज्ञानस्यापीति**। नन्वयथार्थज्ञानानङ्गीकारे नेद रजतमिति बाधकबोधेन कि बाधितव्यमिति तत्राह—**असंसर्गाग्रहेति**। ननु सर्वमेतदिदं रजतमि त ससर्गग्राहिप्रत्ययविरुद्धमित्याशङ्क्य नेदमेक ज्ञानमपितु ग्रहणस्मरणात्मकमगृहीतविवेक ज्ञानद्वयमित्याह—**इदमितिप्रत्ययस्य चेत्यादिना**। इदमितिप्रत्ययस्य ग्रहणरूपत्वादित्युत्तरत्रान्वयः। अस्य च ज्ञानस्य स्वप्रकाशस्यापि स्वस्य स्वविषयस्य चेतरस्मादविवेचकत्वस्य वक्ष्यमाणस्यानाकलितविशेषत्वस्य च सिद्ध्यर्थं दोषदूषितेत्युक्तम्। भवत्वेवमेतद्रजतमित्यत्र का वार्तेति? परिशेषात्स्मृतिरित्याह—**रजतमिति**। असंनिहितत्वेनासंप्रयोगादप्रत्यक्षत्वम्, अगृहीतव्याप्तिकत्वादनुमेयत्वमस्यासंभवि। अननुभूतरजतस्य च प्रत्ययो नोत्पद्यते, तस्मात्सदृशदर्शनसमुद्बुद्धसंस्कारस्य सजायमानैषा स्मृतिरेवेति भावः। तदुक्तं 'परिशेषात्स्मृतिरेषेति निश्चयो जायतेऽन्ततः' इति। ननु स्मृतेर्गृहीतग्रहणस्वभावायास्तद्विपरीतात् ग्रहणाद्गृह्यमाणाच्च गवयादिस्मृतिवत्स्वार्थस्य स्वस्य च किमिति न विवेचकत्वमिति तत्राह—**तस्य चेति**। दुष्टमनोयोगित्वात् तद्देशकालवैशिष्ट्य न गृह्णातीत्यविवेचकत्वमित्यर्थः। तथापि कथ स्वरूपतो विषयतश्च विभिन्नाभ्यामाभ्या संसृष्टप्रवृत्तिरित्यत आह—**तयोश्चेति**। **सामान्यविशेषेति**। इदमिति सामान्यमात्रं, रजताकारो विशेषः। नन्विदज्ञानमिदमि प्रवर्तयतु रजतज्ञान च रजते, किमिति रजतार्थिन पुरोवर्तिनि प्रवृत्तिस्तत्राह—**स्वरूपतो विषयतश्चेति**। स्यादेतत्-किमिदमेकैक व्यवहारहेतु'? उत मिलितम्? नाद्यः, पृथक्प्रदेशे प्रवृत्तिप्रसङ्गात्। न द्वितीय, क्षणिकज्ञानयोर्मेलनायोगादित्यत आह—**निरन्तरोत्पन्नयोरिति**। यद्यपि मेलन न सम्भवति तथापि नैरन्तर्येणोत्पत्तिरेव तथाविधप्रवृत्तिहेतुरित्यर्थः। विनश्यदविनश्यतोः सहावस्थान वा नैरन्तर्येण विवक्षितम्। ननु यथार्थज्ञानानामपि विभ्रमत्वे सर्वेषामेव किमिति न विभ्रमत्वसिद्धिरिति तदनुपपत्तिरेव विपर्यये प्रमाणमित्यत

---

**के सम्बन्ध-व्यवहार के असंसर्ग का अज्ञान ही हेतु होता है, संसर्ग-ज्ञान को भी उसका हेतु मानने में महान् गौरव होगा। असंसर्ग के अज्ञान से जन्य संसर्ग-व्यवहार मात्र का बाध कर देने से ही बाधक ज्ञान में बाधकता बन जाती है। ("इदं रजतम्"—इस व्यवहार में) 'इदम्'—यह ज्ञान दोष-दूषित नेत्र से जन्य होने के कारण शुक्ति के विशेष अंश को विषय न कर, केवल सामान्य अंश को ही विषय करने वाला प्रत्यक्ष है एवं 'रजतम्'—यह ज्ञान असन्निकृष्ट विशेष विषय (रजत) को विषय करने वाला स्मरण रूप है, क्योंकि वह इन्द्रिय-संयोग या लिङ्गादि से जन्य नहीं, अपितु सस्कार मात्र से जन्य है। यह स्मरण दोषहेतु के होने से तत्तांश को विषय नहीं कर पाता, इसीलिए वह न तो अपना विवेचक होता है और न अपने विषय का। [ आशय यह है कि 'सा गौ'—की भाँति यदि यहाँ भी 'तद् रजतम्'—ऐसा स्मरण होता, तब वह न तो स्वयं पूर्व प्रत्यक्ष से मिलता और न अपने विषय को मिलने देता। किन्तु दोष से जन्य होने के कारण 'तत्ता' अंश को विषय नही करता ]। उन दोनों (प्रत्यक्ष और स्मरण) ज्ञानों का (जिनके विषय इदंरूप सामान्य और रजतरूप विशेष—दोनों में संसर्ग की आकांक्षा है) न तो स्वरूप से ही असंसर्ग (भेद) गृहीत होता है और न विषय के द्वारा। और वे दोनों निरन्तर (अव्यवहित) उत्पन्न होते हैं। इन्हीं**

---

१. स्वस्य विषयस्य चाविवेचकत्वादित्यर्थ.। २. क्वचिद्बोद्धव्य क्वचिच्चबाद्धव्यमित्यपि पाठ.। ३. प्र०प०नय० ३२

थार्थत्वाङ्गीकारात्। ज्ञानत्वं यथार्थमात्रवृत्ति ज्ञानमात्रवृत्तित्वात्प्रमात्ववदिति विवक्षितमिति चेत्, मैवम्, मात्रशब्देनायथार्थवृत्तिव्यावृत्तिविवक्षायामयथार्थव्यवहारे ज्ञानत्वस्य वृत्त्यभावेन सिद्धसाधनत्वात्। अयथार्थवृत्तित्वात्यन्ताभावाधिकरणत्वं विवक्षितमिति चेत्, न; दुष्टसामग्र्यप्रसूतमात्रवृत्तित्वस्य तत्रोपाधेः।

यथार्थशब्देन च सदर्थविवक्षायां नायं सर्प इत्यादिबाधविरोधात्, तुच्छव्यावृत्तार्थविवक्षायां चास्मान्प्रति सिद्धसाधनत्वात्। किं चायथार्थप्रत्ययोस्तीत्यस्य प्रत्ययस्य यथार्थत्वे तस्य सालम्बनत्वाय कश्चिदप्ययथार्थप्रत्ययोऽभ्युपेयः, तथा सति तत्रैव हेतोरनैकान्तिकता।

---

तिवादिनामपीदमशज्ञाने समानमेतत्। 'सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्ययः' इति न्यायात्। धर्मिप्रयुक्तदूषणपरिहाराय रीत्यन्तरमाह—**ज्ञानत्वमिति**। यथार्थवृत्तित्वमात्रसाधने सिद्धसाधनता तदर्थं मात्रग्रहणम्। तथा ज्ञानवृत्तित्वादित्युक्ते सत्तायामनैकान्तिकत्वं, अयथार्थव्यवहारेऽपि तस्याः वृत्तेस्तन्निवृत्त्यर्थं मात्रग्रहणम्। अत्र मात्रशब्देन किमयथार्थवृत्तित्वाभावमात्रं विवक्षितं? किं वाऽयथार्थवृत्तित्वानधिकरणत्वम्? प्रथमं प्रत्याह—**मैवम्। मात्रशब्देनेति**। अयथार्थो हि व्यवहारस्तत्वापि समतस्तत्र च ज्ञानत्वस्यावृत्तिरस्तीत्यर्थान्तरमित्यर्थः। ज्ञानत्वमनुभवमात्रवृत्ति ज्ञानमात्रवृत्तित्वादित्याभाससमानयोगक्षेमता च द्रष्टव्या। द्वितीयं शङ्कते—**अयथार्थेति**। अत्र दुष्टसामग्र्यप्रसूतमात्रवृत्तित्वमुपाधिः। न च साधनव्यापकता, दुष्टसामग्रीप्रसूतग्रहणस्मरणयोरपि ज्ञानत्वस्य वृत्तेः। व्यवहारत्वसत्त्वादिना व्यतिरेकसिद्धिः। मात्रग्रहणं तु व्यर्थमेव [1]विषमव्याप्तेरप्युपाधित्वात्।

किंचोभयोरप्यनुमानयोः साध्यगतयथार्थशब्दस्य कोऽर्थः? किं सत्त्वम्? उतासद्व्यावृत्तत्वम्? इति विकल्प्य क्रमेण दूषयति—**यथार्थशब्देनेत्यादिना**। ननु भवतूत्तरपक्षे त्वां प्रति सिद्धसाधनत्वमन्यथाख्यातिवादिनं प्रति किं दूषणमिति तदर्थं सर्वसाधारणं दूषणं वक्तुमुपक्रमते—**किंचेत्यादिना**। अयथार्थः प्रत्य-

---

**यथार्थमात्र मे वृत्ति है, ज्ञानमात्र मे वृत्ति होने से, जैसे प्रमात्व'—यह अनुमान विवक्षित है। तो वह भी नही कह सकते, क्योकि यहाँ 'मात्र' शब्द से ( 'अयथार्थ-वृत्तित्वाभाव विवक्षित है? या अयथार्थ-वृत्तित्वानधिकरणत्व? ) अयथार्थ-वृत्तित्वाभाव लेने पर सिद्ध-साधन है, कारण कि अयथार्थ व्यवहार-निरूपित वृत्तित्वाभाव ज्ञानत्व मे सिद्ध ही है। अयथार्थ-वृत्तित्वानधिकरणत्व लेने पर 'दुष्टसामग्र्यजन्यमात्र-वृत्तित्व' उपाधि है ( द्रष्टव्य न्या० ली० पृ ४३९ )।**

**( उक्त दोनो अनुमानो मे साध्यगत ) 'यथार्थ' शब्द से ( सदर्थत्व विवक्षित है? या असद्भिन्नार्थत्व? ) सदर्थत्व की विवक्षा में "सर्वे प्रत्यया यथार्थाः" का अर्थ होगा—"सर्वे प्रत्यया सदर्थाः।" रज्जु मे सर्प का ज्ञान भी यदि सदर्थक है, तब "नायं सर्पः"—इस बाधकज्ञान से उसका बाध नही होगा। असद्भिन्नार्थत्व की विवक्षा मे हमारे मत मे सिद्ध साधन होगा, क्योकि हम मिथ्यार्थ को भी असत् से भिन्न ही मानते है। दूसरी बात यह है कि—"अयथार्थप्रत्ययोऽस्ति" ( अयथार्थ ज्ञान है )—यह ज्ञान ( यथार्थ है? या नही? ) यदि यथार्थ है, तो इस ज्ञान को सविषयक बनाने के लिए यह मानना होगा कि इसका विषय 'अयथार्थ ज्ञान' है, तब तो**

---

१. विषमा व्याप्तिर्यस्य स तथा, तादृशस्य धर्मस्याप्युपाधित्वादित्यर्थः। उक्तं हि शङ्करमिश्रेण ( वै० सू० उप० ३।१।१४ )—"सत्यम्, समव्याप्त एव उपाधिपदप्रयोगः, अन्यत्र तु गौणस्तदुक्तम्—

वाद्युक्तसाध्यनियमच्युतोऽपि कथकैरुपाधिरुद्भाव्यः।
पर्यवसितं नियमयन् दूषकताबीजसाम्यात्॥" इति।

यस्मिन्नुपाधौ साध्यस्यव्यापकत्वं व्याप्यत्वं चोभे वर्तेते स समव्याप्तिकः, यस्मिंश्च साध्यस्य

अयथार्थत्वे तस्य प्रत्ययस्य कण्ठोक्त एव व्यभिचार । अयथार्थप्रत्ययोऽस्तीत्येतादृश[१] प्रत्ययो नास्ति किंतु व्यवहारमात्रं पदार्थानामसंसर्गाग्रहनिबन्धनमिति चेत्, मैवम्, सर्वत्र संसर्गव्यवहारस्य व्यवह्रियमाणपदार्थसंसर्गज्ञानपूर्वकत्वनियमात् । अन्यथा मध्यमवृद्धव्यवहारेऽप्यसंसर्गाग्रहादेव तदुपपत्तेर्व्युत्पित्सो संसर्गज्ञानानुमानाभावाच्छब्दप्रामाण्यभङ्गप्रसङ्ग । एवमनुमानाभास इव सदनुमानेऽप्यसंसर्गाग्रहादेव संसर्गव्यवहारोपपत्तेरनुमानोच्छेद,

योऽस्तीति वाक्यजन्या तत्प्रयोगमूलभूता वा प्रतीतिरुत्पद्यते न वा ? आद्ये यथार्थाऽयथार्था वा ? उभयथाप्येतत्प्रत्ययविषयेणैतत्प्रत्ययेन वानैकान्तिकत्वमुक्त्वाऽनुत्पत्तिपक्ष शङ्कते—**अयथार्थेति**। असंसर्गाग्रहमात्रात् संसृष्टव्यवहारो न युक्तः संसर्गज्ञानमन्तरेण संसृष्टव्यवहारानुपपत्तिनियमादिति परिहरति—**मैवमिति**। एव नियमानङ्गीकारे बाधकमाह—**अन्यथेति** । गामानयेति हि उत्तमवृद्धेनोक्ते मध्यमवृद्धस्य प्रवृत्ति दृष्ट्वा बाल इत्थमाकलयति—नूनमनेन पदकदम्बेनैतावदर्थविषय ज्ञान संसृष्टप्रवृत्तिहेतुभूतमुत्पादितमिति, पश्चादावापोद्धाराभ्या पदार्थविशेषेषु पदविशेषसामर्थ्यं गृह्णातीति व्युत्पत्तिपरिपाटी । तदत्रापि संसृष्टव्यवहारस्यसंसर्गाग्रहादेवोपपत्तौ संसृष्टपदार्थविषयप्राथमिकज्ञानानुदयात्तन्मार्गसङ्गतिग्रहायोगाद्धत शब्दप्रामाण्येनेत्यर्थः । न केवलं शब्दप्रामाण्यस्यैवाय वियोगोऽपि त्वनुमानस्यापीत्याह—**एवमिति** । यथा हि शब्दो नित्यश्चाक्षुषत्वाद् घटवदित्यनुमानाभासे संसृष्टव्यवहारोऽसंसर्गाग्रहमात्रात्, तद्वन्नित्यः शब्दोध्वनितद्धर्मव्यति-

आपका प्रत्ययत्व हेतु इस विषयभूत ज्ञान में व्यभिचरित हो गया, क्योकि उसमें यथार्थत्व रूप साध्य के न रहने पर भी 'प्रत्ययत्व' हेतु रह गया । यदि वह ( 'अयथार्थप्रत्ययोऽस्ति' ) ज्ञान यथार्थ नहीं, तब तो उसमें नितान्त स्पष्ट व्यभिचार है, क्योकि उसमें यथार्थत्व न रहने पर भी 'प्रत्ययत्व' हेतु रहता है । यदि आप कहें कि "अयथार्थ ज्ञान है"—ऐसा ज्ञान तो कोई नही होता, केवल वैसा व्यवहार मात्र पदार्थों का भेद-ज्ञान न होने के कारण हो जाता है । तो वह भी नही कह सकते, क्योकि यह नियम है कि सर्वत्र संसर्ग-व्यवहार, व्यवहर्तव्य संसर्ग के ज्ञान से जन्य होता है ( न्यायलीलावतीकारने भी यही उत्तर दिया है—"व्यवहारो हि व्यवहर्तव्योपलम्भनिबन्धनः" पृ. ४२१ ) अन्यथा गवानयनादि में मध्यम वृद्ध की प्रवृत्ति ( व्यवहार ) भी असंसर्ग के अग्रह ( ज्ञानाभाव ) से ही हो जायगी । वहाँ व्युत्पत्ति का इच्छुक बालक संसर्ग-ज्ञान का अनुमान न कर सकेगा, तब तो शब्द की प्रमाणता ही भङ्ग हो जायगी । [ तात्पर्य यह है कि प्राभाकर शब्द की शक्ति का निश्चय व्यवहार से किया करते हैं । जैसे कि किसी आचार्य ने अपने व्युत्पन्न शिष्य को कहा—'गौ ले आओ' । वह गौ लाने के लिए चल दिया और गौ ले आया । पास में बैठा अव्युत्पन्न बालक आचार्य के शब्दो का अर्थ न समझने पर भी यह अनुमान अवश्य करता है कि आचार्य के शब्दों ने उस शिष्य को ऐसा ज्ञान दिया है, जिससे वह गौ लाने मे प्रवृत्त हो गया । वह ज्ञान 'गो और लाना रूप' पदार्थों के सम्बन्ध को विषय करने वाला होगा, नही तो 'गो और लाना'—का मेल क्यो हुआ, अर्थात् गो को ही क्यो लाया । अतः प्रथम बार वह बालक पूरे वाक्य का पूरे अर्थ से सम्बन्ध स्थापित करता है । अनन्तर 'गो ले जा'—आदि दूसरे मिलते-जुलते वाक्यो से वैसी प्रवृत्ति देख-देख अपनी ऊहापोह से प्रत्येक पद का प्रत्येक अर्थ से ठीक जोड़ बिठाकर व्यवहार करने लग जाता है—इस प्रकार शब्दप्रमाण में प्रमाणता आती है । अब यदि बिना सम्बन्ध-ज्ञान के ही प्रवृत्ति होगी, तो बालक सम्बन्ध का अनुमान न कर सकेगा और शब्दो का सामर्थ्य न पकड़ सकेगा । अतः शब्द प्रमाण ही बिगड़ जायगा ] । इसी प्रकार अनुमानाभास के समान सदनुमानो मे भी असम्बन्ध के अज्ञान मात्र से सम्बन्ध-व्यवहार बन जायेगा, अत अनुमान मात्र का उच्छेद एव प्रत्यभिज्ञा-

व्यापकत्वमात्रं, स विषमव्याप्तिक इति भाव. । १. तारत्वमन्दत्वादीत्यर्थः ।

प्रत्यभिज्ञाप्रामाण्योच्छेदश्च , ज्वालैकत्वव्यवहारवत्सर्वत्र प्रत्यभिज्ञायामसंसर्गाग्रहादेव संसर्गव्यवहारोपपत्तेः ।

यत्र दोषशङ्का नास्ति तत्र संसर्गज्ञानानुमानादुपपद्यत एव शब्दप्रामाण्यं, अन्यथान्यथाख्यातिवादिनोऽपि विपर्ययाशङ्कया व्युत्पत्तिविरहाच्छब्दप्रामाण्यभङ्गप्रसङ्गो दुर्वार इति चेत्, मैवम् , तव संसर्गज्ञानानुमानलिङ्गानिरूपणात् । तथाहि—किं दोषाभावः संसर्गज्ञानानुमापकः ? किं वा व्यवहारमात्रं ? उताविसंवादिव्यवहारः ? नाद्यः , दोषाभावस्य संसर्गज्ञानस्य च व्यभिचारित्वात् , सत्यपि दोषाभावे सामग्रीवैकल्ये संसर्गज्ञानानुदयात् । नच दोषाभावविशिष्टसामग्रीसद्भावेन संसर्गज्ञानानुमानम् , सामग्र्याः कार्यैकसमधिगम्यत्वात् । सति संसर्गज्ञाने सामग्र्यनुमानं तदनुमाने च संसर्गज्ञानमिति परस्पराश्रयप्रसङ्गात् । नापि

---

रिक्तत्वे सति श्रावणत्वात् शब्दत्ववदित्यत्रापीत्यर्थः । प्रत्यक्षेऽप्याह—**प्रत्यभिज्ञेति** । तत्र हेतुः—**ज्वालैकत्वेति** ।

दोषशङ्कासदसत्त्वाभ्यां नियममन्यथाख्यातिवादिप्रतिबन्द्या शङ्कते—**यत्र दोषेत्यादिना** । अन्यथाख्यातिवादिनामपि उत्तमवृद्धप्रयुक्तशब्दात्संसृष्टज्ञानमनुमाय तत्र बालस्य व्युत्पत्तिरित्यभिमतं, तथा सति यथा क्वचिदविपर्ययेऽपि विपर्ययशङ्का तथा तत्रापि विपर्ययशङ्का सावकाशेति तन्मार्गव्युत्पत्तेरभावात् शब्दप्रामाण्यभङ्ग एव । विपर्ययशङ्कोपशमश्च तत्र दोषशङ्कोपशमात्तदस्मन्मतेऽपि समानमित्यर्थः । दूषयति—**मैवमिति** । अस्याय व्यवहारः संसर्गज्ञानपूर्वकः न पुनरसंसर्गाग्रहादित्यत्र न किंचिल्लिङ्गमस्तीत्यर्थः । संभवन्ति लिङ्गानि विकल्प्य दूषयल्लिङ्गाभावमेवोपपादयति—**तथाहीत्यादिना** । यत्र दोषाभावस्तत्र संसर्गज्ञानमिति व्याप्तिर्नास्तीत्युक्तं तदेव विवृणोति—**सत्यपि दोषाभाव इति** । ननु न दोषाभावमात्रात्संसर्गज्ञानमनुमिनुमः किंतु तद्युक्तसामग्रीसद्भावात्तथाच न व्यभिचारः, यस्मिन् सति भवत्येव कार्यमिति सामग्रीलक्षणादिति तत्राह—**नच दोषाभावेति** । भवेदेव यदि सामग्र्येव ज्ञायेत, नत्वेतत् , तस्याः कार्यैकगम्यतया संसर्गज्ञानलक्षणकार्यज्ञानतत्सामग्रीज्ञानयोः परस्पराश्रयप्रसङ्गादित्याह—**सामग्र्या इति** ।

---

**प्रामाण्य का भी उच्छेद हो जायगा, क्योंकि दीपक की अनन्त ज्वालाओं में एकत्व न रहने पर भी एकत्व-व्यवहार जैसे हो जाता है, वैसे ही संसर्ग के अग्रह मात्र से संसर्ग-व्यवहार बन जायगा ।**

**शङ्का—जहाँ दोषों की सम्भावना कदापि नहीं, वहाँ तो सम्बन्ध-ज्ञान का अनुमान हो जायगा और शब्द में प्रामाण्य उसी प्रकार बन जायगा । अन्यथा अन्यथाख्याति-मत में सर्वत्र बाध की आशङ्का से शब्द-शक्ति का निर्णय न हो सकेगा, अतः शब्द-प्रामाण्य भंग हो जायगा । [ आशय यह है कि अन्यथाख्यातिवादी नैयायिकादि भी संसर्ग-ज्ञानानुमान-परिपाटी से ही शब्द को प्रमाण मानते हैं । उनके यहाँ भी जहाँ विपर्यय है, वहाँ संसर्ग-ज्ञान का अनुमान न हो सकेगा । विपर्यय-आशङ्का तो सब कहीं होगी, तब संसर्गानुमान कैसे होगा ? यदि वे कहें कि जहाँ विपर्यय की सम्भावना नहीं वहाँ संसर्ग-ज्ञानानुमान हो जायगा, तब हमारे ( प्राभाकर ) मत में भी जहाँ दोष-आशङ्का नहीं, वहाँ संसर्ग ज्ञानानुमान हो जायगा और शब्द प्रमाण में प्रामाण्य सुरक्षित रह जायगा ] ।**

**समाधान—आप ( प्राभाकर ) के मत में संसर्ग-ज्ञान का अनुमापक लिङ्ग क्या है ? क्या (१) दोषाभाव ? या (२) व्यवहारमात्र ? या (३) अविसंवादी व्यवहार ? प्रथम दोषाभाव लिंग संसर्ग का अनुमापक नहीं हो सकता, क्योंकि व्यभिचारी है—दोषाभाव के रहने पर भी संसर्ग-ज्ञान नहीं होता, यदि उसकी सामग्री न हो । दोषाभावविशिष्ट सामग्री की सत्ता से संसर्गज्ञान का अनुमान करने में अन्योऽन्याश्रय दोष होगा, क्योंकि सामग्री का ज्ञान तो कार्य से ही हो सकता है, फिर तो संसर्ग-ज्ञान होने पर सामग्री का अनुमान और सामग्री का अनुमान हो जाने पर संसर्ग-ज्ञान**

द्वितीयः ; इदं रजतमित्याद्ययथार्थव्यवहारे व्यभिचारात् । नापि तृतीयः, विनापि संसर्गग्रहं संसृष्टयोरसंसर्गाग्रहादेव तदुपपत्तेः, त्वन्मते घटत्वतद्व्यक्त्योः समवायस्याप्रत्यक्षतया संसर्गाग्रहेऽपि संवादिव्यवहारदर्शनेनानैकान्त्याच्च । व्यवहाराविसंवादस्य च देशान्तरकालान्तराधीनाधिगमतया व्यवहाराधिगमसमयेऽनधिगतत्वेनातल्लिङ्गत्वात् बालस्य मध्यमवृद्धसमवायिसंसर्गज्ञानानुमानानुदये व्युत्पत्तिविरहप्रसङ्गात् । नच प्रतीतिविरोधः, रजताकाराया प्रतीतेः शुक्तिकालम्बनतानभ्युपगमात् । नहि रजतं शुक्तिरिति परैरपि प्रतीतिरुपेयते । इदमाकारस्य तु रजतज्ञानालम्बनतामनभ्युपगच्छतस्त्वैव प्रतीतिविरोधः । इदं रजतमिति सामानाधिकरण्येन पुरोवर्तिन्यङ्गुलिनिर्देशपुरःसरमादानादिव्यवहारदर्शनात् ।

---

इदं रजतमिति । नहि तत्र संसर्गज्ञानं तवाभिमतमिति भावः । विनापीति । अविसंवादिव्यवहारस्यापि संसृष्टयोरर्थयोरसंसर्गाग्रहादेवोत्पत्तिसंभवात् न संसर्गज्ञानं विना काचिदनुपपत्तिर्येन तदनुमापयेदित्यर्थः । अत्र च विसंवादिव्यवहाराद्वैषम्यार्थं संसृष्टयोरित्युक्तम् । तेनैतदुक्तं भवति—असति संसर्गेऽसंसर्गाग्रहादुत्पद्यमानो व्यवहारो विसंवादीतरस्त्वविसंवादीति । न केवलमस्योक्तवर्त्मना शङ्कितानैकान्त्यमपितु स्पष्टमेव त्वन्मत इत्याह—त्वन्मत इति । घटत्वेति । घटत्वतद्व्यक्तिसंसृष्टव्यवहारस्तावदविसंवादी । नचात्र व्यवहारसमये संसर्गज्ञानमस्ति, तत्संसर्गस्य समवायस्य त्वन्मते प्रत्यक्षत्वानङ्गीकारात्, अनुमानस्य चाविसंवादिव्यवहारलिङ्गतया प्रागसिद्धेः । ततस्तत्राविसंवादिव्यवहारस्य संसर्गज्ञानपूर्वकत्वं व्यभिचरतीत्यर्थः । स्वरूपासिद्धिं चाह—व्यवहारेति । अविसंवादित्वस्य कालान्तराधिगम्यत्वात् मध्यमवृद्धवर्तिज्ञानानुमानसमये दुरधिगमतया लिङ्गत्वाभावेन सङ्गतिग्रहणायोगात् पुनरपि स एव दुरात्मा शब्दप्रामाण्यभङ्गप्रसङ्ग आगत इत्यर्थः । एवमनुमानं दूषितम् । यस्तु रजतज्ञानस्यान्यालम्बनत्वेऽनुभवविरोध इति बाधकतर्कोऽभिहितस्तं परिहरति—नचेति । तत्र किं रजताकारप्रतीतिं प्रति शुक्तेरालम्बनत्वेऽनुभवविरोधः ? इदमात्रस्य वा ? आद्योऽनङ्गीकारपराहत इत्याह—रजतेति । द्वितीयं दूषयति—इदमाकारस्यत्विति । प्रतीतिमेवाभिनयति—इदं रजतमिति ।

---

होगा । द्वितीय ( व्यवहारमात्र ) लिंग भी संसर्ग-ज्ञान का अनुमापक नहीं हो सकता, क्योंकि 'यह रजत है'—इत्यादि अयथार्थ-व्यवहार में व्यभिचारी है, कारण कि प्रभाकर के मतसे वहाँ संसर्ग-ज्ञान नहीं, किन्तु व्यवहारमात्र है । तृतीय ( अविसंवादी व्यवहार ) लिंग भी संसर्गज्ञान का अनुमापक नहीं हो सकता, क्योंकि संसर्ग-ज्ञान के बिना भी संसृष्ट ( सम्बद्ध ) पदार्थों में असंसर्ग के अग्रह से ही अविसंवादी व्यवहार बन जाता है । आपके मत में घटत्व और घट का समवाय प्रत्यक्ष नहीं माना जाता, अतः वहाँ संसर्ग का ज्ञान न होने पर भी संवादी व्यवहार देखा जाता है, अतः व्यभिचारी भी है । वस्तुतः व्यवहारगत अविसंवादित्व का ज्ञान देशान्तर और कालान्तर के अधीन है, अभी ( मध्यम वृद्ध के व्यवहार के ज्ञान-समय ) है नहीं, अतः अविसंवादी व्यवहार, संसर्गज्ञानानुमान में लिङ्ग नहीं बन सकता । अतः बालक को मध्यमवृद्ध-समवेत संसर्गज्ञान का अनुमान न होने से शक्तिग्रह न हो सकेगा । प्रतीति-विरोध भी नहीं, क्योंकि ( अन्याकार प्रतीति का यदि अन्य विषय मानते, तब अनुभव-विरोध होता, किन्तु ) रजताकार प्रतीतिका शुक्ति आलम्बन नहीं मानते—'यह रजत शुक्ति है'—यह प्रतीति दूसरे कहाँ मानते हैं ? बल्कि आपके यहाँ ही अनुभव-विरोध है कि आप रजत-ज्ञान का विषय इदमाकार को नहीं मानते । किन्तु इदमाकार में रजत-ज्ञान की विषयता नितान्त स्पष्ट है, क्योंकि "इदं रजतं" ( इदं वस्तु ही रजत है )—यह सामानाधिकरण्येन प्रतीति होती है और इदं वस्तु की ओर अङ्गुलि-निर्देश करते हुए उसी को उठाने के लिए प्रवृत्ति भी देखी जाती है ।

नच संविदां विषयव्यभिचारादनाश्वासप्रसङ्गः, विसंवादिव्यवहारजनकत्वपक्ष इवास्मन्मतेऽप्याश्वासोपपत्तेः। नचासत संसर्गादेरवभासाभ्युपगमादसत्ख्यातिप्रसङ्ग', भासमानस्य संसर्गादे सद्विलक्षणतावदसद्विलक्षणताया अप्यङ्गीकारात्। नचायथार्थज्ञानजन्मनि करणाभाव, दोषदूषितचक्षुरादेस्तत्करणत्वोपपत्ते' ज्ञानानामाजानतो यथार्थव्यवहारजनकत्वेऽपि दोषवशादयथार्थव्यवहारहेतुत्ववदेव दुष्टानां करणानां विपरीतज्ञानहेतुताया अपि संभवात्। यथाच दवदाहस्य वेत्रबीजविनाशकत्व रूपान्तरजनकत्वं च तथा दोषाणामपि यथार्थज्ञानप्रतिबन्धकत्वमयथार्थज्ञानजनकत्वं च कि न स्यात्? सर्वत्र चाससर्गाग्रहादेव रुसर्गव्यवहार-

अनाश्वासप्रसङ्ग पूर्वोक्त परिहरति—**नचेति**। येन हि नियामकेन क्वचिद्विसवादिव्यवहारजनकत्वेऽपि सविदा न सर्वत्र तच्छङ्कया प्रवृत्त्युच्छेद, स नास्मन्मतेऽपि दण्डवारित इत्याह—**विसंवादीति**। किंच बोधकतया स्वत प्रमाणत्वात् ज्ञानानामव्यभिचारस्य चानुमानमात्राङ्कतया प्रमाणमात्राननुप्रवेशित्वात् सितासितव्यभिचारेऽपि चक्षुषः प्रामाण्याङ्गीकाराच्च नाऽनाश्वासशङ्कापि। तृतीय बाधक परिहरति—**नचासत इति**। नानिर्वचनीयवादिनामय दोष इत्यर्थः। एतेन साकारताप्रसङ्गोऽपि परिहृत। अन्यथाख्यातिवादिना तु त्वदीयव्यवहारेण समानयोगक्षेमत्वमिति द्रष्टव्यम्। यस्तु कारणाभावाद्विपर्यासापलापस्त परिहरति—**नचायथार्थेति**। ननु समीचीनज्ञानहेतुभ्यो नयनादिभ्य कथमसमीचीनज्ञानजन्म? नहि जातु कुटजबीजाद्वटाङ्कुरप्ररोह इत्याशङ्क्य तत्र प्रतिबन्द्या परिहारमाह—**ज्ञानानामिति**। **आजानतः**, स्वभावतः। यत्तु दोषोपहतेभ्योऽपि न मिथ्याज्ञानजन्म प्राप्तकार्यप्रतिबन्धकमात्रत्वाद् दोषाणामित्युक्त तत्परिहरति—**यथाच दवदाहस्येति**। दवो वनवह्नि तेन यो दाहस्तस्येत्यर्थः। मा भूद्वनवह्निदग्धवेत्रबीजान्युदाहरणं, मा च भूत्तेषा वेत्रबीजता, दाहस्यैव तावदुभयकारकत्वमनुमतं तदेव भवतूदाहरणमित्यर्थः। यत्तु ससर्गज्ञानस्यापि ससृष्टव्यवहारहेतुत्वे कल्पनागौरवादससर्गाग्रह एव सर्वत्र ससृष्टव्यवहारहेतुरित्युक्त तत्राह—**सर्वत्रचेति**। प्रमाणबलात्प्राप्तगौरव न दोष'।

यह जो दोष दिया था कि कोई ज्ञान यदि अपने विषय से व्यभिचरित होगा, तो सभी ज्ञानों पर से विश्वास उठ जायगा। वह दोष भी निराधार है, क्योकि आपके यहाँ किसी-किसी ज्ञान मे विसवादी (निष्फल) प्रवृत्ति की जनकता रहने पर भी दूसरे ज्ञानो मे जैसे विश्वास बना रह जाता है, वैसे ही हमारा विश्वास भी और ज्ञानों पर अडिग रहेगा, जिससे निष्कम्प प्रवृत्ति होती रहेगी (इस विषय का विशद विवेचन ब्र० सि० पृ. १४४, न्या० म० पृ ७५, न्या० ली० पृ ४३३ पर किया गया है)। यह जो भय प्रकट किया था कि असत् ससर्ग का भान मानने पर असत्ख्याति के लिए द्वार खुल जायगा, जिससे बौद्ध घुस आयेंगे, वह भय भी निर्मूल है। क्योकि भासमान ससर्ग मे सद्विलक्षणता के समान असद्विलक्षणता भी हम मानते है। 'अयथार्थ ज्ञान पैदा करने मे कोई कारण नही'—यह भी आपका कहना असगत है, क्योकि दोष-युक्त नेत्रादि ही उसके कारण हैं। आपके यहाँ स्वाभाविक यथार्थ-व्यवहार के जनक ज्ञान, दोष-वश जैसे अयथार्थ व्यवहार के हेतु बन जाते है, वैसे ही हमारे यहाँ भी दोष-वशात् नेत्रादि करणो मे भी अयथार्थ ज्ञान की हेतुता सम्भव हो जायगी। जैसे वनाग्नि-जन्य दाह मे नरकट-बीजो की नाशकता और कदली-बीजो का जनकता होती है, वैसे ही दोषो मे भी यथार्थ ज्ञान की प्रतिबन्धकता और अयथार्थ ज्ञान की जनकता क्यो न होगी? (द्रष्टव्य न्या० वा० तात्पर्य टीका पृ ९० तथा न्यायलीलावती पृ ४३२) सब कही असंसर्ग के अग्रह के व्यवहार चलाने पर शब्द, लिङ्गादि प्रमाण भङ्ग हो जायँगे—यह

१. "व्यभिचारवतोऽपि च सितासितादिषु चक्षुष. सति तस्मिन् प्रामाण्यादि" त्यादे. मण्डनमिश्रैः (ब्र० सि० पृ० १४४) कृतस्य समाधानराशेर्दिग्दर्शनमात्रमेतत्।

मभ्युपगच्छत' शब्दलिङ्गादिप्रामाण्यभङ्गस्य दर्शितत्वादेव कल्पनागौरवस्यादूपणत्वात्। असंसर्गाग्रहमात्रस्य व्यवहाराप्रसञ्जकत्वादेव तत्प्रसञ्जितायथार्थव्यवहारबाधकत्वेन बाधकस्य बाधकत्वोपपादनासंभवात्। नच व्यवहारव्यवच्छेदो बाधः; अतदर्थिनां तत्र व्यवहारानुदये नेदं रजतमित्यादिज्ञानस्याबाधकत्वप्रसङ्गात्। तदर्थिनां च व्यवहारविच्छेदकस्य बाधकत्वे चोरादिज्ञानस्यापि तद्विच्छेदकस्य बाधकतापत्तेः।

नच तद्योग्यताविच्छेदो बाधः, तद्विच्छेदे, समयान्तरे पुनस्तत्र व्यवहाराभावप्रसङ्गात्। योग्यताप्रतिबन्धो बाध इत्यपि न, विवेकज्ञानवेलायां हेत्वभावादेव फलासिद्धौ प्रतिबन्धकल्पनानवकाशात्। नचाग्रहणनिवृत्तिर्बाध', सर्वग्रहणानां तथात्वेन बाधरूपत्वप्रसङ्गात्।

---

'प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि।
बालाग्रशतभागोपि न कल्प्यो निष्प्रमाणकः॥'

इति न्यायादिति भाव। तदेव ससर्गज्ञाने ससृष्टव्यवहारान्यथानुपपत्तिं प्रमाणमभिधाय बाधान्यथानुपपत्तिमपि प्रमाणयति—असंसर्गेति। उपपादनासंभवादिति। तदनुपपत्तिरपि ससर्गज्ञानसाधिकेतिशेषः। अङ्गीकृत्य तदीय बाध तद्धेतुत्व ज्ञानस्य निरस्तम्, इदानी स एव तु न घटतेऽव्याप्तेरित्याह—नच व्यवहारेति। अस्ति हि विरक्तस्यापि कस्यचित्पुरोवर्तिनीदं रजतमिति भ्रान्तिर्नेदं रजतमिति बाधश्च। नच तत्र व्यवहारोऽतदर्थित्वाद् अतोऽव्याप्तिरित्यर्थ.। लक्षणान्तर शङ्कते—तदर्थिनामिति। चोरादीति। यदा हि कश्चित्कचिद्देशे यागे चोरादिज्ञानाद्विच्छिन्नोद्योगो भवति तत्र चोरादिज्ञानस्य यागादिबाधकत्व स्यादित्यर्थः।

ननु येय व्यवहारयोग्यता पुरोवर्तिनो रजताद्यात्मना, तद्विच्छेदो बाधस्तथाच नाव्याप्तिरपि, विरक्तस्यापि योग्यतानपायादिति तत्राह—नच तद्योग्यतेति। तर्हि योग्यताप्रतिबन्धमात्र बाधस्तथाच प्रतिबन्धापाये पुनरपि तत्रैव भ्रमिष्यतीति तत्राह—योग्यतेति। सति पुष्कलकारणे कार्यानुत्पत्तिर्हि शक्तिप्रतिबन्धकल्पिका सा चात्र नास्ति विवेकग्रहणेन विवेकाग्रहस्य निरासादित्यर्थः। लक्षणान्तर दूषयति—नचाग्रहणेति। सर्वाणि हि ज्ञानानि स्वप्रागभावनिवर्तकानि निवृत्तिर्वेति बाधकत्व बाधत्व वा स्यात्,

---

दिखाया जा चुका है। यह जो कहा था कि संसर्ग-ज्ञान को भी व्यवहार के प्रति हेतु मानने में गौरव होगा। वह भी उचित नहीं, क्योकि प्रामाणिक गौरव दोष नही माना जाता। जब असंसर्ग का अग्रह मात्र व्यवहार का निर्वाहक नही, तब उससे निर्वाह्य व्यवहार का बाध कर देने से बाधक में बाधकता भी असम्भव है। 'व्यवहार-व्यवच्छेद बाध है'—यह कह भी नही सकते, क्योकि जो रजतार्थी नही, ऐसे विरक्त पुरुष को "इदं रजतम्"—यह भ्रम भी होता है और "नेद रजतम्"—यह बाधक ज्ञान भी। किन्तु उसकी प्रवृत्ति वहाँ किसी प्रकार की होती नही, फिर उसके बाधक ज्ञान मे बाधकता कैसे बनेगी? रजतार्थी के व्यवहार-विच्छेदक को भी बाधक नही कह सकते, क्योकि कोई रजतार्थी सामने देखता है कि रजत है, साथ-साथ यह भी देखता है सामने चोर खड़ा है, अत' वह रजत लेने के लिए प्रवृत्त न हो सका। वहाँ चोर-ज्ञान को भी रजत-ज्ञान का बाधक कहना होगा, क्योकि वह व्यवहार का विच्छेदक है।

व्यवहार-योग्यता का विच्छेद, बाध है—यह भी नही कह सकते, क्योकि योग्यता के नष्ट हो जाने से कालान्तर मे वहाँ पुन व्यवहार न हो सकेगा। योग्यता का प्रतिबन्ध बाध है—यह भी उचित नहीं, क्योकि विवेक-ज्ञान ( शुक्ति-रजत के भेद-ज्ञान ) के समय विवेकाग्रह रूप हेतु के अभाव से ही व्यवहाररूप फल की असिद्धि बन जाती है, वहाँ प्रतिबन्ध की कल्पना नही हो सकती। अग्रहण ( अज्ञान ) की निवृत्ति बाध है—यह कहना भी सम्भव नही, क्योकि ससार के

---

१. त० वा० २।१।२। २. बाधकत्वानुपपत्तिरित्यर्थः। ३. अयथार्थव्यवहारविच्छेदरूपमित्यर्थः।

अतो न व्यवहारनिवारणेन बाधकस्य बाधकतोपपत्तिः। रजतगोचरविज्ञानस्य च दोषदूषित-लोचनजन्यतया परिशेषासिद्धौ संस्कारमात्रजन्यतया स्मृतित्वकल्पनायोगात्। नन्वसंयुक्तत्वेन रजतज्ञानं प्रत्यकारणस्य रजतस्य न तद्गोचरत्वं, सर्वत्र साक्षात्कारिज्ञाने तज्जनकस्यैव विषयत्वादिति चेत्, न, प्रत्यभिज्ञायां तत्ताया अपि गोचरत्वात्। तत्र संस्कारसचिवमिन्द्रियं तत्ता गोचरयति संस्कारोपस्थापितत्वात्तत्ताया इति चेत्, प्रकृतेऽपि तर्हि संस्कारोपनीतं रजतं दोष-कलुषितेन्द्रियेण विषयीक्रियत इति न दोषः।

तथापि समारोपे किं प्रमाणमिति चेद्, उच्यते—

नयनं नयनोद्भूतसम्यग्ज्ञानातिरेकिणः।
ज्ञानस्य कारणं तत्त्वाद्यथैव नयनान्तरम्॥ १२॥

एतच्चक्षुरेतच्चक्षुर्जन्ययथार्थज्ञानातिरिक्तज्ञानजनकं चक्षुष्ट्वादिन्द्रियत्वाद्वा चक्षुरन्तरवदि-

---

तथाच सर्वेऽप्यभ्रान्ताः स्युरित्यर्थः। नच विवेकाग्रहनिवृत्तिर्बाधः, सर्वभेदज्ञानानां बाधकत्वप्रसिद्ध्यभावादित्यपि द्रष्टव्यम्। अन्ययोपपत्तिनिराकरणमुपसंहरति—**अत इति**। परिणताज्ञाननिवृत्तिर्बाधस्तथाच तत्परिणामरूपमिथ्याज्ञानतदर्थौ विना न बाधसिद्धिरितिखण्डलकार्थः[2]। यत्तु परिशेषात्स्मृतिरित्युक्तं तद्दूषयति—**रजतगोचरेत्यादिना**। असंप्रयुक्तविषयत्वं साक्षात्कारित्वेऽनुपपन्नमिति शङ्कते—**नन्विति**। दूषयति—**न प्रत्यभिज्ञायामिति**। येषां हि प्रत्यभिज्ञानमेकं ज्ञानं तेषां तत्तापि चाक्षुष्येवेत्यर्थः। तत्र चक्षुषा संस्कारद्वारा प्रत्यासत्त्या चाक्षुषत्वेऽत्रापि सा समेत्याह—**तत्र संस्कारेत्यादिना**। प्रत्यभिज्ञावदेव तत्तोल्लेखयथार्थत्वप्रसङ्गवारणाय[3] दोषकलुषितेत्युक्तम्।

यद्यपि सर्वप्रत्ययायाथार्थ्यमप्रामाणिकं नापि विपक्षे कश्चिद्बाधकस्तर्कस्तथापि समारोपसद्भावे किं प्रमाणं? नहि परपक्षप्रतिषेधमात्रात्स्वपक्षसिद्धिरित्यविवेकिविवक्षयाशङ्कयति—**तथापीति**। श्लोकेनानुमानं सङ्गृह्णाति—**नयनमिति**। अत्र नयनविशेषः पक्षसाध्ययोर्निधातव्यः। कारणमित्यन्ता प्रतिज्ञा। **तत्त्वादिति**। नयनत्वादिन्द्रियत्वाद्वेति हेतुः। यथैव नयनान्तरमिन्द्रियान्तरं वेति दृष्टान्तः। एतदेव विवृणोति—**एतच्चक्षुरित्यादिना**। एतच्चक्षुर्जन्ययथार्थज्ञानत्वानधिकरणज्ञानजनकमिति च साधनीयम्। अन्यथा पूर्वकालेतज्जन्ययथार्थज्ञानातिरिक्तज्ञानजनकत्वस्योत्तरकाले संभवेन सिद्धसाधनत्वात्।

---

सभी ज्ञान अज्ञान-निवृत्तिरूप ही होते हैं, फिर तो सभी ज्ञानों में बाधरूपता होनी चाहिए। अत. यही सिद्ध हुआ कि व्यवहार-निवृत्ति मात्र से बाधक में बाधकता नहीं बन सकती, अपितु पूर्व संसर्ग-ज्ञान की निवृत्ति करने से ही उसमें बाधकता होती है। यह जो कहा था कि रजत-ज्ञान का दूसरा कोई जनक न होने से पारिशेष्यात् संस्कार ही जनक है, अत. रजत-ज्ञान स्मृतिरूप ही है, वह कहना भी युक्त नहीं। क्योंकि दोष-युक्त नेत्रों को रजत-ज्ञान का जनक माना जाता है। यदि सन्देह हो कि प्रत्यक्षभूत रजत-ज्ञान की विषयता इन्द्रियासम्बद्ध रजत में कैसे हो सकती है? तो वह सन्देह युक्तियुक्त नहीं, क्योंकि प्रत्यभिज्ञा प्रत्यक्ष की विषयता तत्ता में भी रहती है, किन्तु तत्ता इन्द्रिय-सम्बद्ध नहीं। यदि कहा जाय कि 'तत्ता' अपने संस्कारों से उपस्थापित है, अत संस्कार सहित इन्द्रिय 'तत्ता' को विषय कर लेंगे, तब तो प्रकृत में भी ऐसा कहा जा सकता है कि रजत अपने संस्कारों से उपस्थापित है, अत दूषित नेत्र उसको विषय कर लेंगे। तथापि यदि कोई पूछे कि समारोप ( भ्रमज्ञान ) में क्या प्रमाण है? तो उसका उत्तर—'नयन, नयन-जन्य सम्यग्ज्ञान से अतिरिक्त ज्ञान का कारण है, नयन होने से, जैसे कि नयनान्तर।' अर्थात् यह नेत्र, स्वजन्य

---

१. घटो न घट इत्यादिरूपाणां विवेकापरपर्यायस्यं भेदस्याग्रहणनिवर्तकानामित्यर्थ। २. ककुद, खण्डल, तोमरेत्यर्धर्चादिपाठात् साधुः, कतिपयवाक्यसमूहार्थकः। ३ तत्तोल्लेखस्य यथार्थत्वस्य च प्रसङ्गवारणायेत्यर्थ.

न्द्रियान्तरवच्च । नच चक्षुश्चक्षुर्जन्ययथार्थज्ञानजनकत्वे सत्यतिरिक्तज्ञानजनकं न भवति इन्द्रियत्वात् घ्राणवदिति प्रकरणसमता, मनस्यनैकान्तिकत्वात्, तस्य साधारणकारणस्य चक्षुर्जन्ययथार्थज्ञानजनकत्वे सत्यतिरिक्तरसादिज्ञानजनकत्वात्। चक्षुषश्चक्षुर्जन्ययथार्थज्ञानजनकत्वे सत्यतिरिक्तरसादिज्ञानाजनकतया सिद्धसाधनत्वाच्च । नच बहिरिन्द्रियत्वादिति विशेषणान्नानैकान्तिकता; तत्रापि सिद्धसाधनतायास्तादवस्थ्यात् । नच यथोक्तयथार्थज्ञानजनकत्वे सत्यतिरिक्तज्ञानजनकत्वात्यन्ताभावाधिकरणतया साध्यस्य विवक्षितत्वाददोष', घ्राणादिषु

तत्र चक्षुर्मात्रपक्षीकरणे चक्षुरन्तरजन्ययथार्थज्ञानत्वानधिकरणेनैतच्चक्षुर्जन्ययथार्थज्ञानेनार्थान्तरता तन्निवृत्त्यर्थमेतच्चक्षुर्ग्रहणम् । एव साध्येपि द्रष्टव्यम् । यथार्थज्ञानत्वानधिकरणज्ञानजनकमित्युक्ते प्राभाकराणामप्रसिद्धविशेषणता विरुद्धता च, तन्निवृत्त्यर्थमेतच्चक्षुर्जन्येत्युक्तम् । चक्षुरन्तरजन्यज्ञानस्य यथार्थत्वेनाङ्गीकारेऽप्येतच्चक्षुर्जन्यत्वाभावादेवैतच्चक्षुर्जन्यत्वे सति यथार्थज्ञानत्वानधिकरणत्वमस्तीति नाप्रसिद्धविशेषणत्वसाध्यवैकल्ये । व्याहतिनिवृत्त्यै यथार्थपदम् । पक्षे ह्येतच्चक्षुर्जन्ययथार्थज्ञानत्वानधिकरणत्वमेतच्चक्षुर्जन्यत्वानधिकरणत्वान्न सम्भवति, व्याघातात् । तस्मादयथार्थज्ञानत्वानधिकरण किञ्चिच्चक्षुर्जन्यं ज्ञान सिद्ध्यतीति चाक्षुषायथार्थज्ञानसिद्धि' । एव लिङ्गाभासादिकमपि पक्षीकृत्य साधनीयम् । सत्प्रतिपक्षतामाशङ्क्य दूषयति—**नच चक्षुरित्यादिना** । यथार्थज्ञानजनकत्वे सत्यतिरिक्तज्ञानजनक न भवतीत्युक्ते व्याप्यसिद्ध्या बाधानैकान्तिकते स्याता तन्निवृत्त्यर्थ चक्षुर्जन्येत्युक्तम् । चक्षुर्जन्ययथार्थज्ञानजनकत्वेसत्यतिरिक्तज्ञानाजनकत्व, चक्षुर्जन्ययथार्थज्ञानजनकत्वाभावाद्वा व्यतिरिक्तज्ञानाजनकत्वाद्वा । आद्य. पक्षो व्याहतः । द्वितीयस्तु सिद्ध्यन्नयथार्थज्ञानजनननिवारणेन सिद्ध्यतीत्यर्थ । अनैकान्तिकतामेव दर्शयति—**तस्येति** । सिद्धसाधनता चाह—**चक्षुष इति** । मनस्यनैकान्तिकतापरिहाराय विशेषणमाशङ्क्य दूषयति—**नचेति** । प्रकारान्तरेण सिद्धसाधनतापरिहारमाशङ्क्य निषेधति—**नच यथोक्तेति** । अतिरिक्तज्ञानजनकत्वाभावमात्र न साध्य किंतु तदत्यन्ताभावस्तथाच न सिद्धसाधनम्, अयथार्थज्ञानजनकत्ववादिनामतिरिक्तज्ञानजनकत्वात्यन्ताभावासिद्धे. । अत्र च बहिरिन्द्रियत्वादित्येव हेतु., अन्यथा मनस्यनैकान्त । तत्र हेतु—**घ्राणादिष्विति** । ननु यत्र चक्षुर्जन्ययथार्थज्ञानाजनकत्व नास्ति

यथार्थ ज्ञान से अतिरिक्त ज्ञान का जनक है, नेत्र होने से या इन्द्रिय होने से, जैसे नेत्रान्तर या इन्द्रियान्तर—यह अनुमान प्रमाण है। यहाँ 'नेत्र स्वजन्य यथार्थ ज्ञान का जनक होता हुआ अतिरिक्त ज्ञान का जनक नही हो सकता, इन्द्रिय होने से, घ्राण के समान'—इस प्रकार के सत्प्रतिपक्ष का सन्देह नही करना चाहिए, क्योकि इस अनुमान का 'इन्द्रियत्व' हेतु मन मे अनैकान्तिक है, कारण यह कि मन साधारण कारण होने से नेत्र जन्य यथार्थ ज्ञान का भी जनक है और अतिरिक्त रसादि-ज्ञान का भी, अत वहाँ साध्य न रहने पर भी 'इन्द्रियत्व' हेतु रहता है। सिद्धसाधन भी यहाँ दोष है, क्योकि नेत्र स्वजन्य यथार्थ ज्ञान का जनक तो है, किन्तु अतिरिक्त रसादि-ज्ञान का जनक नही। यद्यपि 'इन्द्रियत्व' हेतु मे बाह्यत्व विशेषण लगाकर 'बाह्येन्द्रियत्व'—इतना हेतु करने पर मन मे व्यभिचार नही, क्योकि वहाँ साध्य भी नही और 'बाह्येन्द्रियत्व' रूप हेतु भी नही। तथापि उक्त सिद्धसाधनता जैसी-की-तैसी है। यदि शङ्का हो कि उक्त साध्य से विवक्षित है—नेत्र-जन्य यथार्थ ज्ञान-जनकत्व विशिष्ट अतिरिक्तज्ञानाजनकत्व के अत्यन्ताभाव की अधिकरणता। अब सिद्धसाधनता दोष नही, क्योकि अयथार्थ ज्ञान की जनकता मानने वाले की दृष्टि से अतिरिक्त ज्ञान-जनकत्व का अत्यन्ताभाव सिद्ध नही। तो यह शङ्का उचित नही, क्योकि वहाँ 'नेत्र-जन्य यथार्थज्ञान का जनकत्व' उपाधि है—[ घ्राणादि दृष्टान्त मे साध्य ( नेत्र-जन्य यथार्थ ज्ञान जनकत्व विशिष्ट अतिरिक्त ज्ञान से अजनकत्व के अत्यन्ताभाव की अधिकरणता ) भी है और नेत्र-जन्य यथार्थ ज्ञान का अजनकत्व भी, अत यह उपाधि साध्य-व्यापक है और पक्ष ( नेत्र ) मे हेतु के रहने पर भी

चक्षुर्जन्ययथार्थज्ञानजनकत्वस्यैवोपाधेः सत्त्वात् । नच व्यतिरेकोपसंहारस्थलाभावः, मनसश्चक्षुर्जन्ययथार्थज्ञानजनकस्यातिरिक्तज्ञानजनकतया व्यतिरेकोपसंहारभूमित्वात् ।

विवादपदानि पदानि स्वस्मारितपदार्थान्वयप्रतिपादकानि आकाङ्क्षासन्निधिमत्पदकदम्बकत्वाद्गामानयेत्यादिपदकदम्बवत् । नच योग्यतावत्त्वमुपाधि', साध्येन समव्याप्त्यभावात् । आकाङ्क्षासन्निधिरहितपदेषु योग्यतावत्त्वेऽपि साध्याभावात् । नचाकाङ्क्षादिमत्त्वे सति

तत्र चक्षुर्जन्ययथार्थज्ञानजनकत्वे सत्यतिरिक्तज्ञानजनकत्वात्यन्ताभावाधिकरणत्वमपि नास्तीति व्यतिरेकः क्व निश्चितः ? इत्यत आह—**नच व्यतिरेकेति** । नच तत्राप्यान्तरेन्द्रियत्वमुपाधि, आन्तरपदस्य पक्षमात्रव्यावर्तकतया पक्षेतरत्वात् । तथा प्रमाणत्वमनुभवाद्व्यावृत्त अनुभवत्वातिरिक्तत्वे सति ज्ञानत्वावान्तरजातित्वात् स्मृतित्ववत् । प्रमानुभूत्योश्च लक्ष्यलक्षणभावाङ्गीकाराद्भेदसिद्धिः । पूर्वं चाक्षुषविभ्रमसद्भावे प्रमाणमुक्तम् ।

इदानीं शब्दविभ्रम साधयति—**विवादपदानीति** । पदमात्रपक्षीकरणे गामानयेत्यादिषु यथार्थज्ञानजनकेषु सिद्धसाधनता तदर्थं विवादपदग्रहणम् । आकाङ्क्षासन्निधिमात्रवन्ति पदानीत्यर्थः । पदाना देवदत्तोऽयमधीत इति वक्तृविशेषानुमापकतयाप्यन्वयप्रतिपत्तिजनकत्वेन सिद्धसाधनताऽत उक्त—**स्वस्मारितेति** । पदकदम्बकत्वात्पदसमूहत्वादित्युक्ते उरगस्तुरग खदिर इत्यादिपदसमूहेष्वनैकान्तिकता तदर्थमाकाङ्क्षाग्रहणम् । तावत्युक्ते 'गामानय प्रासाद पश्ये'त्यत्र साकाङ्क्षयोरप्यसन्निहिततया परस्परमन्वयप्रतीत्यजनकयोर्गा पश्येत्यनयोरनैकान्तिकता तन्निवृत्त्यर्थं सन्निधिमदिति । तावत्युक्ते च, 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामि'ति वाक्ये राज्ञ इति पुरुष इति च पदयो. सन्निधिमत्त्वेऽपि नैराकाङ्क्ष्येण परस्परमन्वयप्रतीत्यजनकयोरनैकान्तिकता तदर्थमाकाङ्क्षाग्रहणम् । किं समव्याप्तिवादिनायमुपाधिर्दीयते ? विषमव्याप्तिवादिना वा ? नाद्य इत्याह—**साध्येनेति** । तदेव विवृणोति—**आकाङ्क्षेति** । ननु न वयमन्वयप्रतीतिजनकत्वे योग्यतावत्त्वमात्रमुपाधि ब्रूम., किंतर्ह्याकाङ्क्षासन्निधिमत्त्वविशेषित तथाच समव्याप्तिरस्त्येवेत्यत आह—**नचाकांक्षेति** । हेतुमाह—**व्यर्थविशेष्येति** । आकाङ्क्षासन्निधिमत्त्वेऽपि यदि क्वचिद्योग्य-

नेत्र-जन्य यथार्थ ज्ञान का अजनकत्व नही, अपितु जनकत्व ही है, अतः यह उपाधि साधन का अव्यापक है ] । यदि सन्देह हो कि ( उपाधि और साध्य की अन्वय और व्याप्ति दोनो व्याप्तियो मे अन्वय व्याप्ति तो घ्राणादि मे घटाई गई, किन्तु व्यतिरेकव्याप्ति 'जहाँ उक्त उपाधि नही, वहाँ उक्त साध्य नही' भी घटानी आवश्यक है, परन्तु ) व्यतिरेक व्याप्ति घटने का कोई स्थल उपलब्ध नही अत. उपाधि मे साध्यव्यापकता का निश्चय कैसे होगा ? तो वह सन्देह युक्त नही, क्योकि मन रूप स्थल मे नेत्र-जन्य यथार्थ ज्ञान का अजनकत्व और अतिरिक्तज्ञानजनकत्व के न होने से व्यतिरेक व्याप्ति घट जाती है ।

भ्रमज्ञान का साधक दूसरा अनुमान भी है—'विवादग्रस्त ( इदं रजतमित्यादि ) पद, स्वस्मारित पदार्थान्वय बोधक है, आकाक्षा सन्निधि-युक्त पद समूह होने से, जैसे—'गाम् आनय'—आदि पद—समूह' । यहाँ 'योग्यतावत्व' उपाधि है ( क्योकि 'गाम् आनय'—आदि पद-समूह मे साध्य भी है और अर्थाबाधरूप योग्यता भी अत साध्य का व्यापक है किन्तु पक्ष मे हेतु रहने पर भी इदम्पदार्थ मे रजतपदार्थ भेद का बाध होने से योग्यता नही अत' हेतु का अव्यापक है । )—यह सन्देह नही करना, क्योकि साध्य मे उपाधि की ( 'व्यापकत्वे सति व्याप्यत्वरूप' समव्याप्ति है ? या केवल 'व्याप्यत्व रूप' विषमव्याप्ति ? ) समव्याप्ति नही, अर्थात् साध्य मे उपाधि की व्याप्यता रहने पर व्यापकता नही, कारण यह कि आकांक्षादि रहित ( ये आते है पुत्र राजा के

१. अनुभूतिनिष्ठाधिकरणतानिरूपिताधेयताशून्यमित्यर्थः । २ भेदसिद्धिरित्यनेनान्वय. । तत्र हेतुमाह—लक्ष्येति । प्राभाकरै. स्मृतिनिष्ठप्रमात्वव्यावृत्त्यर्थम् "अनुभूति. प्रमाणम्" ( प्र०प० अमृत० २ ) इत्येव

योग्यतावत्त्वमुपाधि', व्यर्थविशेष्यापातात्। नह्याकाङ्क्षासन्निधिमत्त्वेसति योग्यताभावेनान्वयज्ञानाजनकत्वमुभयवादिसंप्रतिपन्नस्थले दृष्टमस्ति। अयोग्यार्थविषयाणामाकाङ्क्षासंनिधिमत्पदानां सर्वेषा पक्षीकरणात्। नच योग्यतावत्त्वस्य विषमव्यापकत्वेनोपाधिता, यदयोग्यार्थ तदन्वितप्रतिपत्तिजनक न भवतीति व्यतिरेकोपसंहारस्थलस्य पूर्वोक्तन्यायेन दर्शयितुमशक्यत्वात्। नच विवादपदानि पदानि स्वस्मारितार्थान्वयप्रमितिजनकानि, आकाङ्क्षासंनिधिमत्पदत्वात्, गामानयेति पदवदित्याभाससमानयोगक्षेमता, तत्र बाधकप्रमाणविरोधेन कालात्ययापदिष्टत्वात्। प्रतीतिमात्रसाधने तु बाधाभावात्। उक्त चैतद्भट्टाचार्य्यैः—'अत्यन्ता-

ताभावापराधेनान्वयप्रतीतिर्न स्यात्तत. साध्यव्याप्तिसिद्ध्यर्थं योग्यतावत्त्वमुपादेयम्, नचैतदस्ति तादृशा सर्वेषा पक्षत्वादेव साध्याभावनिर्णयस्थलत्वाभावात्, अत. पक्षमात्रव्यावर्तकतया पक्षेतरत्वमित्यर्थः। तदेव विवृणोति—**नह्याकाङ्क्षासन्निधीत्यादिना**। द्वितीय दूषयति—**नचेति**। अत्रापि पक्षेतरत्वमेवोपाधिव्यतिरेकस्य साध्यव्यतिरेकेण व्याप्त्यनिर्णयात्। जरद्गवादिवाक्याना पक्षतुल्यत्वात्, 'खदिरस्तुरग' इत्यादिपदानामाकाङ्क्षाद्यभावादेवान्वयप्रतीत्यजनकत्वादित्यभिप्रेत्याह—**यदयोग्यार्थमिति**। आभाससमानयोगक्षेमतामाशङ्क्य निषेधति—**नचेति**। नेद रजतमिति समनन्तरबाधकप्रमाणविरोधात् प्रमितिजनकत्वानुमान कालातीतम्, नैवम् प्रतीतिमात्रजनकत्वानुमाने किञ्चिद्बाधकमस्ति, उक्ताना सविद्विरोधादीना प्रागेव परिहृतत्वादित्यभिप्रेत्याह—**तत्र बाधकेति**। शशविषाण खपुष्पमित्याद्यसत्यर्थेऽत्यन्तायोग्येऽप्याका-

पुरुषों को हटाओ आदि ) पदो मे योग्यता रूप उपाधि के रहने पर भी उक्त साध्य नही। यदि आकाक्षादि-विशिष्ट योग्यतावत्त्व को उपाधि मानेगे, तब व्यर्थ विशेष्यापत्ति होगी, क्योकि योग्यतावत्त्वरूप विशेष्य भाग की सार्थकता तब होती, जब कि उभय-सम्मत कोई ऐसा स्थल होता, जहाँ आकाक्षादि के रहने पर भी योग्यता के न रहने मात्र से अन्वय की प्रतीति न होती। किन्तु वैसे सभी अयोग्यार्थविषयक आकाक्षादिविशिष्ट पद-समूह पक्ष-कोटि मे ही पड गये है। विषमव्याप्तिक योग्यतावत्त्व को भी उपाधि नही बना सकते, क्योकि यहाँ भी उपाधि की व्यतिरेक व्याप्ति का निर्णय साध्य मे न हो सकेगा, अर्थात् जो पद अयोग्यार्थक है, वह अन्वितार्थ-ज्ञान-जनक नही है—इस प्रकार की व्यतिरेक व्याप्ति का उपसहारस्थल ( दृष्टान्त ) पूर्वोक्त रीति से ( वैसे सभी स्थल पक्ष-कोटि मे आ जाने से ) प्रसिद्ध नही। यदि कोई शङ्का करे कि उक्त अनुमान 'विवादग्रस्त ( इदं रजतमित्यादि ) पदसमूह स्व-स्मारित पदार्थों की अन्वय-प्रमा के जनक हैं, आकाक्षादि-विशिष्ट पद होने से, 'गाम आनय'—आदि पदो के समान'—इस प्रकार के अनुमानाभास के समान है ( अर्थात् इस आभास मे जो दोष है, वही दोष आपके अनुमान मे है )। तो वह शङ्का उचित नहीं, क्योकि दोनो मे यह महान् अन्तर है कि यह अनुमानाभास 'नेद रजतम्'—इस बाधक प्रमाण के विरोधी होने से बाधित है ( अर्थात् 'नेद रजतम्'—से रजत का बाध होता है। बाधित रजत-विषयक होने के कारण 'इद रजतम्'—यह ज्ञान अप्रमा हो जाता है। इस अप्रमा ज्ञान की जनकता सिद्ध हुई 'इद रजतम्'—इन पदो मे, अत· इनमे प्रमाजनकत्व का बाध निश्चित है )। किन्तु हमारे 'प्रतीतिमात्र-जनकत्व' साधन का बाध नही, क्योकि प्रतीतिमात्र-जनकता 'इद रजतम्'—इन पदो मे क्या शश-विषाणादि पदो तक मे है? जैसा कि कुमारिल भट्ट ने कहा है—'अत्यन्त-असदर्थ-विषयक ज्ञान की भी उत्पत्ति शब्द कर देता है'—( श्लो० वा० २.६ )। योग्यता-रहित

प्रमाया लक्ष्यत्वेनानुभूतित्वस्य च लक्षणत्वेनाङ्गीकारादित्यर्थ.।

३. "जरद्गव कम्बलपादुकाभ्या द्वारि स्थितो गायति भद्रकाणि।
त ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमाया लशुनस्य कोऽर्घ.॥" (जै० सू० बृ० १।१।३२)

सत्यपि ज्ञानमर्थे शब्द करोति ही' ति। विपक्षे च प्रतिपक्षाप्रतिपत्तौ तन्निराकरणाय कथारम्भासभवो बाधक । तथाहि—शब्दोऽनित्य इति शब्दस्यानित्यत्वे वादिना प्रतिपादिते यदि न तत्प्रतिवादी प्रतिपद्येत तदा वादिना परिषदा च विज्ञातस्यापि स्वयमविज्ञातेऽविज्ञान नाम निग्रहस्थानमापद्येत। प्रतिपत्तौ वा विपर्ययाभ्युपगमप्रसङ्ग , नहि शब्दस्यानित्यत्वज्ञानं तन्नित्यत्ववादिनो यथार्थम्।

किंचैकाधिकरणविरुद्धधर्मद्वयप्रतिपत्तिलक्षणा विप्रतिपत्तिरेव भवन्मते न भवेत् तत्र कुतस्तरां कथाप्रवृत्ति ? कुतस्तमां च विप्रतिपत्तिनिरास ? अपि च सर्वस्य वाक्यस्य

---

क्षासन्निधिमाञ्छब्दो ज्ञान करोतीति भट्टवार्तिकार्थ.। योग्यतारहितस्याप्याकाक्षादिमत प्रतीतिजनकत्वानङ्गीकारे प्रतिवादिवाक्याच्छब्दोऽनित्य इत्यादेरयोग्ययो. शब्दानित्यत्वयो' ससृष्टप्रतीत्यनुपपत्तौ तदनुवादाभावेन तन्निराकरणाय ग्रन्थकरणादिरूपकथानारम्भप्रसङ्गो बाध इत्याह—**विपक्षे चेति**। एतदेव विकल्पपूर्वक विवृणोति—**तथा हीति**। यदि न बुद्ध्येत ? बुध्येत वा ? इत्यपि द्रष्टव्यम्। आद्ये तन्निराकरणमशक्यमित्यपि द्रष्टव्यम्। न केवलमप्रतिबुद्धस्य निराकरणमशक्य निग्रहस्थानापत्तिश्चेत्याह—**तदा वादिनेति**। इदं च विशेषणं "अविज्ञात चाज्ञानमिति" सूत्रस्थचकारानुकृष्टोऽर्थोऽविज्ञातार्थातिव्याप्तिपरिहारः प्रयोजनम्। 'परिषत्प्रतिवादिभ्या त्रिरभिहितमप्यविज्ञातमविज्ञातार्थमि'ति सूत्रम्। त्रिरभिहितमपीति। वादिनेतिशेषः। द्वितीये आह—**प्रतिपत्तौ वेति**। तस्यैव प्रपञ्चः **नहि शब्दस्येति**।

दूषणान्तरमाह—**किं चेति**। एक शब्दादिकमधिकृत्य विरुद्धधर्मविषयिण्यौ प्रतिपत्ती हि विप्रतिपत्तिर्न पुनर्भिन्नाधिकरणे नाप्यविरुद्धार्थविषयिण्यौ। नित्य आत्मा अनित्या बुद्धिरित्यनयोर्नित्य आत्मा विभुश्चेत्यनयोर्वा विप्रतिपत्तित्वाभावात्। सेय विपर्यासानङ्गीकारे न भवेत्, नापि व्यवहारद्वयमात्रम्[1]। अप्रतिपत्तौ विरुद्धधर्मप्रतिपत्तित्वाभावात्। प्रतिपत्तित्वेच विरुद्धधर्माध्यासेनार्थस्यैव भेदापत्तिरित्यर्थः। ननु तादृशधर्मद्वयस्य प्रस्तुतधर्मिव्यतिरिक्तानिष्ठतयाऽग्रहणात्तथा[2]व्यवहार इति चेन्न। एकनिष्ठत्वाप्रतिपत्तौ व्याप्तिग्रहाभावादनुमानानुदयादिति। बाधकान्तरमाह—**अपि चेति**। **सर्वस्येति**। वाक्यमात्रस्येति

---

**आकांक्षादि युक्त पदो को प्रतीतिमात्र जनकता न मानने पर नैयायिकादि प्रतिपक्षी के "शब्दोऽनित्य." जैसे अयोग्य पदो से मीमासक को कुछ वोध न होगा, तब उस प्रतिपक्ष का निराकरण करने के लिए ग्रन्थो का निर्माण सम्भव न होगा—यह विपक्ष-बाधक तर्क है ( अर्थात् 'शब्दोऽनित्य '—इस प्रकार वादी के शब्दानित्यत्व का प्रतिपादन करने पर यदि प्रतिवादी ( प्राभाकर ) को कुछ ज्ञान नही होता, तब वादी तथा मध्यस्थ के ज्ञान होने पर भी स्वयं ( प्रतिवादी ) को ज्ञान न होने से 'अविज्ञान' नाम का निग्रह स्थान होगा ( न्यायदर्शन ५।२।१७ में अज्ञान नाम का निग्रहथान कहा गया है—"अविज्ञातं चाज्ञानम्" वादी के तीन बार कहने पर भी प्रतिवादी जब नही समझता, तब वह अज्ञान से निगृहीत हो जाता है ) और यदि वादी के उक्त पदो से प्रतिवादी को भी बोध होता है, तब मिथ्याज्ञान मानना पड़ेगा। क्योकि वादी के वाक्य से जन्य है—शब्द मे अनित्य का ज्ञान। यह ज्ञान प्राभाकर के मत में ( शब्द नित्य होने के कारण ) कदापि यथार्थ नही हो सकता, अपितु मिथ्या है।**

**दूसरी बात यह है कि एक अधिकरण में दो विरुद्ध धर्मो को विषय करने वाली विप्रतिपत्ति आपके मत मे न हो सकेगी, तब शास्त्रार्थ-निर्णय मे आपकी प्रवृत्ति कैसे होगी ? और विप्रतिपत्ति का निराकरण कैसे करेगे ? संसार मे यदि कोई भी वाक्य संसर्ग-प्रतीति का जनक नही, तब**

---

१. शब्दात्मकव्यवहारद्वयमेव, किन्तूक्तलक्षणज्ञानमेवेतिशेष. । २. विप्रतिपत्तिव्यवहार इत्यर्थः।

ससगप्रतीत्यजनकत्वेऽनृतापार्थकनिरर्थकभेदो न स्यात्, समुदायार्थप्रतीतौ सत्यामपि यदर्थो बाधितो भवति तद्वाक्यमनृतमुच्यते, यथा नद्यास्तीरे पञ्चफलानि सन्तीति विप्रलम्भकवचनम्, यत्रावयवार्थप्रतीतौ सत्यामपि समुदायार्थाप्रतीतिस्तदपार्थकम्, यथा 'दश दाडिमानि षडपूपाः कुण्डमजाजिन' मित्यादि। अवयवार्थप्रतीतेरपि यत्राभावस्तन्निरर्थकं यथा 'नित्यः शब्दः कचटतपाना गजडदवत्वात् खछठथव'दिति। स चायमनृतापार्थकादिभेदः क्वचिदपि शब्दस्य संसर्गप्रतीत्यजनकत्वे न संभवतीत्यलमतिविस्तरेण। यदसत्तन्न प्रकाशते यथा गगनकुसुमम्, असच्च शुक्तिरजततादात्म्यमितिचेत्, मैव; गगनकुसुमस्यापि तच्छब्दात्प्रतीयमानत्वेन दृष्टान्तस्य साध्यविकलत्वात्, तादात्म्यस्य च प्रतीतावन्यथाख्यातिस्वीकारात्,

यावत्। अनृतादीना प्रसिद्धं विवेकं दर्शयति तदभावापादनाय **समुदायार्थेत्यादिना**। अत्र चानृतशब्देन प्रतिज्ञासन्न्यासो[१] निरनुयोज्यानुगोऽसिद्धिविशेषश्च विवक्ष्यते। अपार्थकमाह—**यत्रेति**। "पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकं" "वर्णक्रमनिर्देशवन्निरर्थकं" मित्यक्षपादसूत्रादित्यर्थः। **क्वचिदपीति**। एतेषु मध्ये क्वचिदपीत्यर्थः। ससर्गप्रतीतिमनुमानेनापलपन्सत्प्रतिपक्षयति—**यदसदिति**। दूषयति—**मैवमिति**। नच यदसत्तदपरोक्षतया न प्रकाशते इति साध्य, तव व्यर्थविशेषणत्वात्[२]। किंच तादात्म्यं प्रतीतं न वा यस्यायमप्रकाशः साध्यते, उभयथापि दूषणमाह—**तादात्म्यस्य चेत्यादिना**। ननु तादात्म्यं तावत्प्रतीयते अन्यत्र, शुक्तिरजते च प्रतीयेते, तेषां चाससर्गाग्रहादप्रतीतेऽपि विशिष्टतादात्म्ये तद्व्यवहार इति तत्राह—

अनृत अपार्थक और निरर्थक नामक निग्रहस्थानो का भेद कैसे होगा ? क्योकि समुदायार्थ की प्रतीति होने पर भी जिस वाक्य का अर्थ बाधित होता है, उसे अनृत ( प्रतिज्ञा-सन्यासादि ) कहते है, जैसे—किसी वञ्चक का वाक्य—नदी के किनारे पाँच फल है। जहाँ अवयवार्थ ( खण्ड वाक्यार्थ ) की प्रतीति होने पर भी समुदायार्थ ( महावाक्यार्थ ) प्रतीत नही होता, वह अपार्थक ( न्या० द० ५।२।१० ) कहा गया है, जैसे—दश अनार, छह मालपूआ, कूँडा, छाग-चर्म आदि। जहाँ अवयवार्थ भी प्रतीत नही होता उसे ( न्या० द० ५।२।८ ) निरर्थक कहा गया है, जैसे—नित्य शब्द, क च ट त प के ग ज ड द व होने से, ख छ ठ थ व के समान। इस प्रकार का अनृतादि का भेद नही बन सकता, यदि कोई भी शब्द ससर्ग-प्रतीति का जनक न हो [ भाव यह कि प्राभाकर मत में कोई भी शब्द पदार्थ-सम्बन्ध का प्रत्यायक तो है नही, अतः 'निग्रहस्थानों में कोई सम्बन्ध का प्रत्यायक है, कोई नही—यह भेद क्योकर हागा ? सभी एक जैसे हो जायँगे ]।

शङ्का—यह नियम है कि जो असत् है, वह ज्ञान का विषय नही होता, जैसे—गगन-कुसुम, शुक्ति-रजत—तादात्म्य भी असत् है, अतः यह भी प्रकाशित कैसे होगा ? ( देखिए न्या० ली० पृ ४३७ ) [ अर्थात् यह जो अनुमान किया था—"विवादपदानि पदानि स्वस्मारितपदार्थान्वयप्रतिपादकानि, आकांक्षासन्निधिमत्पदकम्बकत्वाद् गामानयेत्यादिपदकदम्बवत्।" वह इस सत्प्रतिपक्ष से दूषित है—"विवादपदानि पदानि न स्वस्मारितपदार्थान्वयप्रतिपादकानि, असदन्वयार्थकपदार्थप्रतिपादकत्वाद् गगनकुसुमवत्।" ]।

समाधान—इस अनुमान मे दृष्टान्त ( गगन कुसुम ) साध्य-रहित है, क्योकि 'गगन कुसुम'—इस शब्द से भी आकाश और कुसुम का सम्बन्ध प्रतीत होता है। यहाँ यह भी पूछा जा सकता है कि शुक्ति-रजत-तादात्म्य की प्रतीति ( अख्यातिवादी को ) होती है ? कि नही ? प्रतीति होने पर अन्यथाख्याति माननी पड़ेगी ( क्योकि तादात्म्याभाव के आधार शुक्ति, रजत में तादात्म्य प्रतीत हो

१. परेण पक्षप्रतिषेधे कृते सति प्रतिज्ञातार्थस्य परित्यागः। ( न्या. सू. ५।२।५ ) २. अपरोक्षतयेति विशेषणस्य भवन्मते व्यर्थत्वात्, ज्ञानव्यतिरिक्तस्य वस्तुनोऽभावेन तस्य परोक्षतया प्रकाशाभावादित्यर्थः।

अप्रतीतावाश्रयासिद्धे`, असंसर्गाग्रहबलेन च तद्व्यवहारे तत्रासत्त्वाप्रतीतौ हेतोरपक्षधर्मत्वात्। तस्माद्रजतादिविभ्रमे पुरोवर्तिशुक्तिशकलादि रजताद्यात्मनावभासत इति सिद्धम्।

भवत्वेवं विभ्रमसद्भाव`, विभ्रमालम्बनं तु किमसत्? सदेव वा? कि वोभयात्मकम्? उतोभयविलक्षणम्? इति विवेचनीयम्। न तावदसत्, असतोऽपरोक्षावभासानर्हत्वात्, तदादित्सया प्रवृत्त्यनुपपत्तेश्च। क्वचिदसद्विशेषेऽपि प्रतिभासप्रवृत्ती कि न स्यातामिति चेत्, न, विशेषाधिकरणत्वे तुच्छत्वानुपपत्तेस्तस्य नि स्वभावत्वात्। सद्वैलक्षण्यमात्रेणासत्त्वा-

---

असंसर्गाग्रहेति। आश्रयाप्रतीतौ तन्निष्ठतया हेतोरप्यप्रतीतावसिद्धिः स्यात्। तथोक्तम्[1] 'एकदेशदर्शन खल्वनुमापक'मिति। भाष्यकारैरप्येकदेशदर्शनादेकदेशान्तरे बुद्धिरिति। एतेन शुक्ती रजताकारेण न प्रकाशते तद्रूपेणासत्त्वात् यथा घटः पटरूपेणेति मुरारिरप्यपास्तः, प्रमाणस्मृतिविवक्षाया[2] सिद्धसाधनत्वात्, भ्रान्तिविवक्षाया तवाप्रसिद्धविशेषणता साध्यविकलश्च[3] दृष्टान्त इत्यादेश्च। वादार्थमुपसहरति–**तस्मादिति**।

आरोप निरूप्यारोप्यं निरूपयति—**भवत्वेवमित्यादिना**। सदेवेत्यन्यथाख्यात्यात्मख्यात्योर्निर्देशः। उभयात्मकमिति तु भेदाभेदवादिनोऽन्यथाख्यातिविशेषस्य, उभयविलक्षणमिति तु सिद्धान्तस्य। प्रथममसत्ख्याति निराचष्टे—**न तावदिति**। **अपरोक्षेति**। शाब्दप्रतीतिव्यावृत्त्यै। ननु यद्यपि शशविषाणादौ प्रवृत्तिप्रतीती न दृष्टे तथाप्यसद्विशेषे रूप्यादौ किं न स्यातामिति शङ्कते—**क्वचिदिति**। सत खल्वय सामान्यविशेषभावो न त्वसत इति परिहरति—**नेति**। अथासत्त्व नाम न निःस्वभावत्व येनेद दूषण स्यात् अपितु सद्वैलक्षण्य तत्राह—**सद्वैलक्षण्येति**। असतोऽप्यापरोक्ष्य सपादयत्यसद्वादी।

---

गया)। यदि तादात्म्य की प्रतीति नही होती तो आश्रयासिद्धि दोष है, क्योकि 'शुक्ति-रजत तादात्म्य, प्रकाशित नही हो सकता, असत् होने से, जैसे—गगनकुसुम'—इस अनुमान से ही तो तादात्म्य में प्रतीति-विषयताभाव का अनुमान किया जाता है। प्रतीति न होने पर तादात्म्यरूप आश्रय ही सिद्ध नही होता, किसमे अप्रकाशितत्व सिद्ध किया जायगा?)। यदि कहा जाय कि तादात्म्य प्रतीत तो नहीं होता, असंसर्ग-अग्रह के कारण केवल तादात्म्य-व्यवहार मात्र होता है, (व्यवहार-सिद्ध आश्रय है, अत आश्रयासिद्धि नही)। तो वह भी नही कह सकते, क्योकि आश्रय ही जब प्रतीत नही होता, तब उसमे असत्वरूप हेतु भी कारक प्रतीत न हो सकेगा, अत स्वरूपासिद्धि दोष होता है। अत यह सिद्ध हो गया कि रजतादि विभ्रमो में पुरोवर्ति शुक्ति-खण्डादि, रजतादि रूप से प्रतीत होते है।

मान लेते है—विभ्रमज्ञान का सद्भाव, किन्तु उस का विषय (रजत) क्या असत् है? या सत् है? या सत् असत्—उभयरूप? या उभय विलक्षण?—यह विचारणीय है। असत् नही हो सकता, क्योकि असत् होने पर रजत का प्रत्यक्ष न हो सकेगा और उसको लेने के लिए प्रवृत्ति भी न हो सकेगी। 'यद्यपि गगन-कुसुमादि असत् पदार्थों का न तो प्रत्यक्ष होता है और न उनमे प्रवृत्ति, किन्तु सब असत् एक से नही होते रजतरूप असत् विशेष मे प्रत्यक्ष और प्रवृत्ति–दोनो मान लेने मे क्या हानि?'—यह सन्देह उचित नही, क्योकि सत् पदार्थों के ही सामान्य और विशेष स्वभाव हुआ करते है, यदि रजत मे विशेष स्वभाव मान लिया जायगा, तब वह तुच्छ (असत्) न रह सकेगा, क्योकि असत् होता है नि स्वभाव। यदि कहा जाय कि रजत मे नि स्वभावत्वरूप असत्व

---

१ भामतीकृद्भिरितिशेषः। भाष्यकारैरिति, शबरस्वामिभिरित्यर्थः। आश्रयनिष्ठहेतुरूपस्यैकदेशस्य दर्शनाद्, आश्रयनिष्ठसाध्यरूपे एकदेशान्तरे बुद्धिरिति तदर्थः। २ प्रमाणस्मृतिविवक्षायामिति, प्रकाशते इत्यनेन प्रमाणज्ञानस्य स्मरणज्ञानस्य च विवक्षाया सिद्धसाधनाद्, अस्माभिरुभयज्ञानविषयत्वानङ्गीकारादित्यर्थः। ३ भ्रान्त्या घटादेरपि कदाचित् पटादिरूपेण प्रकाशमानत्वादितिशेषः।

भिधाने मायावादिमतप्रवेशात् । अन्तरेणापि ज्ञेयसामर्थ्यं निःस्वभावेऽप्यसति स्वकारणविशेषसमासादितस्वभावविशेषज्ञानमेवाविद्ययाऽसत्प्रकाशनशक्तिमदिति चेत्, तर्हि वक्तव्यं किमस्या शक्ते शक्यमिति ? यद्यसदेव, किमेतस्याः कार्यम् ? उतैतज्ज्ञाप्यम् ? नाद्य, असतोऽकार्यत्वात् प्रकाशनशक्तित्वव्याघाताच्च । न द्वितीय ; प्रकाशान्तराभावात्, अनवस्थानाच्च । तदेव विज्ञानमसत प्रकाश इति चेत्, न, विज्ञानाश्रयां शक्तिं प्रति विज्ञानस्यैव

---

अन्तरेणापीति । यत्रापि निःस्वभावमसज्ज्ञेय तथापि तस्य ज्ञेयस्य सामर्थ्यमन्तरेण स्वकारणविशेषात्समनन्तरप्रत्ययादासादितः प्राप्त स्वभावविशेषो येन विज्ञानेन तत्तथा । तादृशविज्ञानमेवाविद्ययाऽसत्प्रकाशनशक्तिलक्षणया असत्प्रकाशनशक्तिमदिति योजना । एतदुक्त भवति—यद्यप्यधिपतिसहकार्यालम्बनसमनन्तरात्मकेभ्य प्रत्ययेभ्यश्चतुर्भ्यश्चित्तचैत्ता[2] उत्पद्यन्ते इति स्थितिस्तथापि भ्रान्तिस्थलेष्वालम्बनप्रत्ययस्यासत्त्वात् अनर्थक्रियाक्षमत्वादत एव तत्सयुक्तस्याधिपतेश्चक्षुरादेस्तत्सहकारिणश्चालोकस्य सहकारिप्रत्ययस्याभावेऽपि समनन्तरप्रत्ययलक्षणपूर्वज्ञानमात्रात्स्वभाववैचित्र्यवशाद्विज्ञानमुत्पद्यते, स्मृतिज्ञानमिव विषयमन्तरेण सामग्रीमात्रप्रयोज्यमिति, तदेतद्दूषयति–तर्हि वक्तव्यमित्यादिना । प्रकाशनशक्तित्वेति । व्यञ्जकत्वात्प्रमाणस्य प्रमेयोत्पादकत्वमयुक्तमित्यर्थः । प्रकाशान्तरेति । एतज्ज्ञाप्यमिति कोऽर्थः ? एतज्जनितज्ञानस्य विषय इति । तथाच यदनया शक्त्या जन्य ज्ञान तत्किं ज्ञानान्तरम् ? आश्रयभूतमेव वा ? नाद्य । असज्ज्ञानमन्तरेण द्वितीयज्ञानानुपलब्धेरुपलब्धो वाऽनवस्थानाच्चेत्यर्थः । द्वितीय शङ्कते—तदेवेति । दूषयति—न, विज्ञा-

---

नहीं मानते, अपितु भाव-विलक्षणता के कारण असत्त्व का व्यवहार होता है, तब तो वादी (वेदान्ती) के मत में आ जाने से अपसिद्धान्त होगा । असद्वादी यदि शङ्का करे कि यद्यपि ज्ञेय ( भ्रम के विषय ) में किसी प्रकार का सामर्थ्य नहीं, वह निःस्वभाव है, असत् है, तथापि विज्ञान का ही यह स्वभाव विशेष है कि अविद्यारूप असत्प्रकाशन-शक्ति से समन्वित है । विज्ञान का यह स्वभाव विशेष अपने कारणभूत पूर्व के विशेष विज्ञान क्षण से प्राप्त किया है । तो असद्वादी की यह शङ्का युक्त न होगी, क्योकि यहाँ प्रश्न उठता है कि उस शक्ति का शक्य क्या है ? यदि असत् है, तो असत् क्या उस शक्ति का कार्य है ? या ज्ञाप्य ? कार्य नही बन सकता, क्योकि एक तो असत्, कार्य नही हुआ करता, दूसरे इस प्रकाशन-शक्ति में उत्पादन-शक्तित्व आ जाने से प्रकाशन-शक्तित्व का ही बाध हो जायगा, ( अर्थात् प्रमाण गत शक्ति से सदा प्रमेय का प्रकाश ही हुआ करता है, उत्पादन नहीं ) । द्वितीय ( ज्ञाप्य ) पक्ष भी उचित नहीं, क्योकि ( विज्ञानाश्रित शक्ति का ज्ञाप्य असत् है, यहाँ ज्ञाप्य का अर्थ होता है—जन्य ज्ञान का विषय । इस प्रकार पूरा अर्थ हुआ—विज्ञानाश्रित शक्ति से जन्य ज्ञान का विषय है असत् प्रमेय । यहाँ 'जन्य ज्ञान' पद से क्या ज्ञानान्तर विवक्षित है ? अथवा आश्रयभूत ज्ञान ? ) ज्ञानान्तर वहाँ प्रतीत नही होता । फिर भी मानने पर अनवस्था होगी—( प्रथम ज्ञानगत शक्ति में ज्ञाप्यत्व बनाने के लिए दूसरे ज्ञान की अपेक्षा, दूसरे ज्ञान की शक्ति मे ज्ञाप्यत्व बनाने के लिए तीसरे ज्ञान की अपेक्षा—इसी प्रकार उत्तरोत्तर ज्ञानापेक्षा होगी ) । यदि कहा जाय कि—'जन्य ज्ञान' पद से शक्ति का आश्रयभूत प्रथम ज्ञान ही विविक्षित है, अत अनवस्था नही ।' तो यह कहना भी उचित नहीं, क्योंकि वही विज्ञान

---

१ द्र० न्या० म० पृ० १०४, तथा भा० पृ० २२ । २. कार्यं प्रति अयते = जनकत्वेन गच्छतीति प्रत्ययः = कारणम् । अधिपतिप्रत्ययः = इन्द्रियाणि, सहकारिप्रत्ययः = आलोकादि, आलम्बनप्रत्ययः = शब्दादिविषयः, समनन्तरप्रत्ययः = पूर्वविज्ञानक्षणः, चित्तम् = विज्ञानम् । चैत्ता = चित्तसहगतावस्थाविशेषाः स्पर्शवेदनादयस्तथाचोक्तम्—

एकोत्पादनिरोधाश्च, ह्येकालम्बनवस्तुकाः ।
चित्तयुक्ता द्विपञ्चाशद्, धर्माश्चैतसिका मताः ॥ ( अभि० स० २।१ )

शक्तशक्यतया विषयत्वानुपपत्तेः । नह्येकस्यैकदैव सिद्धतया शक्त्याश्रयत्वमसिद्धतया च तद्विषयत्वं सम्भवति, युगपदेव सिद्धसाध्यत्वविरोधात् । शक्यमेव तर्हि शक्तेर्माभूदिति चेत्, न, शक्ते कस्य कुत्रेति शक्तशक्यनिरूपणाधीननिरूपणत्वात् । अस्तु तर्हि स्वकारणविशेषासादितस्वभावभेद विज्ञानमेवासत प्रकाश इति चेत्, न, सदसतो संबन्धानिरूपणात् । असदधीननिरूपणत्वं ज्ञानस्य तत्सम्बन्ध इतिचेत्, न, तदधीननिरूपणत्वस्यापि संबन्धान्तराधीनत्वादसतश्च निरुपाख्यत्वात्संबन्धाधारतानुपपत्ते । ज्ञानजन्यातिशयानाधारत्वाच्च घटादि-

नाश्रयामिति । स्यादेतत्–सत्यमाश्रयविषयसापेक्षा शक्तिर्विपयाभावे न भवेत्, शक्तिरेव तु न स्वीक्रियते किं तर्हि विज्ञानमात्रमेव, तस्य च तथाविधमेव रूप कारणविशेषादाहित येन परिल्पितशक्तिकमपि तदसत्प्रकाशो भवतीति शङ्कते—अस्तु तर्हीति । दूषयति—नसदसतोरिति । ननु शून्यवादिना कथ विज्ञानसत्त्वमभिमत येन सदसतोरिति शक्यवचनं स्यात्, सत्य, शून्यवादिविशेषोयम्, का तर्हि शून्यवादिता? विज्ञेयस्य सर्वथा शून्यत्वाङ्गीकारात् । योगाचारेण हि नाहि.शून्यता वेद्यस्याङ्गीकृता । अनेन[1] त्वन्तरेऽपीति ततो विशेषः । यथाचैतत्तथा भट्टश्[2]मुना तत्तदभियुक्तवचनान्युदाहरतो "अस्याप्यनावमिच्छन्ति ये माध्यमिकवादिन" इत्यत्रोपपादितम् । सम्बन्धानिरूपणादिति । यदि हि अविद्यात्मिका शक्ति. स्वीकृता स्यात्तदा सावृतः कोऽपि सबन्ध., तामपि परिहरत को नु नामानयो सबन्ध स्यादित्यभिप्रायः । असत्प्रकाशोऽयमिति यदिदमसदधीननिरूपणत्वं ज्ञानस्य तत्तेनासता तस्य सबन्ध इति शङ्कते—असदधीनेति । दूषयति–न तदधीनेति । सबद्धयोर्हि निरूप्यनिरूपकभावो दृष्ट, न हि जातु धौतकलधौतकलशधवलिम्ना तालफलकालिमा निरूप्यमाणो दृष्टचर इत्यर्थः । भवतु सबन्धान्तरमपि स्योगादिलक्षणमिति नेत्याह—असतश्चेति । अथ घटस्य प्रकाश इतिवत् किं न स्यादिति तत्राह– ज्ञानजन्येति । असत्त्वाद्धेतोर्ज्ञानजन्या-

शक्ति का आश्रय होने से शक्त फिर शक्य बनकर शक्ति का विषय कैसे बनेगा ? क्योकि एक ही पदार्थ एक समय मे ही सिद्ध होकर शक्ति का आश्रय और असिद्ध होकर शक्ति का विषय बने—यह सम्भव नही हो सकता। सिद्धत्व और साध्यत्व—जैसे विरोधी धर्म एक समय मे ही एक वस्तु मे नही रहा करते। 'यदि शक्य का निरूपण नहीं हो सकता, तब शक्य ही नही मानेगे इस शक्ति का'—यह कहना उचित नही, क्योकि शक्ति के विषय मे यही आकाक्षा हुआ करती है कि 'किसकी शक्ति ? किसमे ?' इस प्रकार शक्त और शक्य के द्वारा ही शक्ति का निरूपण हुआ करता है। शक्त, शक्य–दोनो मे से एक को न मान कर शक्ति का निरूपण ही न हो सकेगा। 'तब तो शक्ति भी न मानकर केवल विज्ञान को ही असत् का प्रकाश मानेगे, हाँ, विज्ञान को इस प्रकार का स्वभाव-विशेष अपने कारण पूर्व विज्ञान से प्राप्त है'—यह मनाना भी उचित नही, क्योकि ("असत. प्रकाश"—यहाँ 'असत्' शब्द के उत्तर सम्बन्धार्थक षष्ठी विभक्ति का प्रयोग करने वाले असद्वादी से पूछा जा सकता है कि असत् का प्रकाश से क्या सम्बन्ध है ?) प्रकाश सत् है, इसका असत् से कोई भी सम्बन्ध स्थापित नही किया जा सकता। यदि कहा जाय कि 'असदधीननिरूपणकत्व' ही ज्ञान से असत् का सम्बन्ध है, [ अर्थात् ज्ञान का निरूपण सदा विषय के अधीन रहता है। जैसे 'घट का ज्ञान' यहाँ घट निरूपक है और ज्ञान निरूपित। 'घटाधीननिरूपणकत्व' ज्ञान मे घट का सम्बन्ध है। वैसे ही 'असत् का ज्ञान'—यहाँ भी असन्निरूप्यत्व या असदधीन निरूपणकत्व सम्बन्ध क्यो न होगा ? ]। तो यह भी कहना युक्त नही, क्योकि सम्बद्ध पदार्थों मे ही निरूप्य निरूपक भाव होता है। अत असदधीननिरूपणत्व ज्ञान मे तभी बनेगा, जब कि किसी सम्बन्धान्तर से ज्ञान असत् से सम्बद्ध हो। किन्तु असत् पदार्थ किसी भी सम्बन्ध का आधार बन

१ शून्यवादिविशेषेणेत्यर्थ । २. भाट्टदीपिकाव्याख्यायामितिशेष ।

वदसतो ज्ञानविषयत्वानुपपत्ते । अयमसदनुभव इत्यसता विना नानुभवो निरूप्यत इति तेनाविनाभाव संबन्ध इति चेत्, नैवम्, अतदुत्पत्तेरतदात्मनश्चानुभवस्य तदविनाभावासंभवात्। तस्मात्स्वप्रत्ययासादितस्वभावभेदं विज्ञानमेवासत्प्रकाश इत्यसत्ख्यातिवादिनामसत्प्रलाप इत्यारोप्यमाण नासत्।

---

तिशयानाधारत्वात् अपरोक्षज्ञानविषयभावानुपपत्तेः, घटादिवदिति दृष्टान्तो व्यतिरेके। शङ्कते—**अयमसदनुभव इति**। अयमर्थ—अस्ति तावदय निरूप्यनिरूपकभावनियम, तेन हेतुना तेनासता तस्य ज्ञानस्याविनाभावः कश्चिदस्ति मूलभूत इति विकल्प्यते इति। परिहरति—**नैवमतदुत्पत्तेरिति**। अयमभिसन्धि—त्रिविधोह्यविनाभाव सौगतसमये, स्वभाव कार्यमनुपलब्धिश्च। यदाह कीर्तिर्न्यायबिन्दौ—'त्रिरूपाणि च त्रीण्येव च लिङ्गान्यनुपलब्धि स्वभाव कार्यं चेती'ति। तत्रानुपलब्धिरर्थाभाववेदिका, यथा यदुपलब्धिलक्षणप्राप्त सन्नोपलभ्यते सोऽसद्व्यवहारविषय, यथान्यत्र क्वचिद्दृष्ट क्वचिद्देशविशेष उपलब्धिलक्षण प्राप्तो घटपटादिर्नोपलभ्यते, नोपलभ्यते च शशविषाणादिरयं इति साधर्म्यवत्प्रयोगः। स्वभावकार्याख्यौ तु भावबोधकौ यथा वृक्षशिंशपात्वयो यथा वह्निधूमयोरिति। तदप्युक्त कीर्तिना—

'कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।
अविनाभावनियमोऽदर्शनान्न न दर्शनात्[1]॥ इति।

अन्वयव्यतिरेकाभ्या न भवतीत्यर्थ। तदिह ज्ञानस्यासल्लक्षणार्थबोधकस्वाभाव्यादनुपलब्धिता दूरापेता, सदसतो स्वभावस्वभावित्वाभावाच्च, न स्वभावाविनाभाव। उक्त हि न्यायबिन्दौ—'स्वसत्तामात्रभाविनि साध्यधर्मे हेतु स्वभाव' इति, विज्ञानस्यासदुत्पत्त्यभावाच्च न कार्यकारणभाव इति। असत्ख्यातिनिराकरणमुपसहरति—**तस्मादिति**[2]।

---

नहीं सकता, क्योकि वह नितान्त अबोध्य शून्य है। जैसे घट ज्ञान-जन्य-ज्ञातनादि का आधार होने से ज्ञान का विषय कहा जाता है, वैसे ज्ञान का विषय असत् न हो सकेगा, क्योकि ज्ञान-जन्य-फल का आधार होने के योग्य वह नही। यदि कहा जाय कि ज्ञान और असत् का 'अविनाभाव' सम्बन्ध है, क्योकि 'यह असत् का ज्ञान है'—इस प्रकार ज्ञान का निरूपण असत् के बिना नही हो सकता। तो यह कहना भी सगत नही, क्योकि ज्ञान न तो असत् से उत्पन्न हुआ है और न असत् स्वरूप ही है, अत अविनाभाव सम्बन्ध नही बन सकता। [ आशय यह है कि धर्मकीर्ति ने प्रमाणवार्तिक ( ३।३० ) मे कहा है—

"कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्।
अविनाभावनियमोऽदर्शनान्न न दर्शनात्॥"

अर्थात् सपक्ष मे दर्शनमात्र से अविनाभाव नियम सिद्ध नही होता और न विपक्ष मे अदर्शन मात्र से ही, किन्तु अविनाभाव के दो ही नियामक है—कार्यकारणभाव या स्वभाव ( तादात्म्य )। अत जो जिससे उत्पन्न है उसका उससे अविनाभाव सम्बन्ध होता है या जिसका जिसमे तादात्म्य है, जैसे धूम का अग्नि से या वृक्षत्व का शिंशिपात्व से। प्रकृत मे असत् और ज्ञान का कार्यकारण भाव भी नही और तादात्म्य भी नही, अत इनका अविनाभाव कैसे होगा ? ]। अत अपने कारण से 'स्वभाव विशेष प्राप्त कर विज्ञान ही असत् का प्रकाश बना हुआ है'—यह असत्ख्यातिवादियो का कहना निरा प्रलापमात्र है। इस लिए यह सिद्ध हुआ कि भ्रम का विषय असत् नही।

---

१. अदर्शनान्न = व्यतिरेकात्न, नदर्शनात् = अन्वयात्नेत्येव समासेनाह—अन्वयेत्यादि।

२ तस्मादिह = असत प्रकाशे न स्वभावाविनाभाव इत्यन्वयः।

नापि सत्; नेदं रजतमित्यादिबाधविरोधात्। यत्र बाध्यते ततोऽन्यत्रास्तीति चेत्, न, तत्र प्रमाणानिरूपणात्। तथाहि—भ्रान्त्यनुभवस्तत्र प्रमाणम्? उत बाधानुभवः? किंवा भ्रमानुपपत्तिः? बाधानुपपत्तिर्वा? असत्ख्यात्यनुपपत्तिर्वा? नाद्यः, तस्य पुरोवर्तिरजतसत्तामात्रगोचरतयाऽसंनिहिततत्सत्तायामौदासीन्यात्। न द्वितीयः, बाधानुभवस्यापि पुरोवर्तिन्यारोपिताभावविषयस्य देशान्तरगततत्सत्तानावेदकत्वात्। न तृतीयः, रजतावभासस्य यथाप्रतीतपुरोवर्तिरजतसत्तां विनानुपपत्तावपि देशान्तरे तदीयसत्तामन्तरेणानुपपत्त्यभावात्। न चतुर्थः, बाधस्य प्रसक्तप्रतिषेधात्मनस्तत्रैव तत्सत्ताक्षेपकतयाऽन्यत्र तत्सत्तानाक्षेपकत्वात्। नच वाच्यमन्यत्रापि तस्यासत्त्वे तत्रापि कुतो न तस्य बाधः स्यादिति, तत्र तस्याप्रसक्तेरेव बाधाभावोपपत्तौ तत्सत्ताध्यवसायायोगात्। नेदं रजतमिति पुरोवर्तिनि रजततादात्म्यनिषेधात्मबा-

सत्ख्यातिं निराकरोति—**नापीति**। न वयमत्रैव सत्त्वं ब्रूमः, येन बाधविरोधः स्यादपि त्वन्यत्रेति शङ्कते—**यत्रेति**। भवेदेव यद्यन्यत्र सत्त्वे प्रमाणं स्यान्नतु तदिति परिहरति—**न तत्रेति**। संभावितप्रमाणानि विकल्प्य दूषयति—**भ्रान्त्यनुभवेत्यादिना**। प्रत्यक्षमर्थापत्तिर्वा इत्यर्थः। भ्रमानुपपत्तिं दूषयति—**न तृतीय इति**। अत्यन्तासतः संसर्गस्याप्यपरोक्षप्रतीतिमङ्गीकुर्वतो रजतस्यापि तथाप्रतीतिसंभवान्न सत्तापेक्षेति सूचितम्—अनुपपत्तावपीत्यपिना। **तत्रैव तत्सत्तेति**। संनिधिरित्यर्थः। ननु यद्यन्यत्राप्यसदत्रेव तत्रापि बाधः स्यान्नत्वेतदस्ति ततो नूनमवगच्छामोऽन्यत्र सदिति तत्राह—**नच वाच्यमित्यादिना**। हेतुमाह—**तत्र तस्येति**। बाधाभावस्त्वन्यथासिद्ध इत्यर्थः। ननु न वयं रजतबाधान्यथानुपपत्त्या रजतसत्त्वं ब्रूमः, अपि तु तादात्म्यमात्रबाधो धर्मिभूतं रजतं क्वापि परिशिनष्टीत्याशङ्क्य निषेधति—**नेद-**

**सत् भी नहीं, क्योंकि यदि रजत सत् होता है, तब "नेदं रजतम्"—इस प्रकार उसका बाधित होना विरुद्ध पड़ जाता है। 'जहाँ रजत का बाध होता है, वहाँ नहीं, अपितु अन्यत्र वह सत् है'—यह भी कहना उचित नहीं, क्योंकि 'अन्यत्र रजत सत् है'—इसमें कोई प्रमाण नहीं। यदि है, तो कौन प्रमाण है—भ्रमानुभव? या बाधानुभव? या भ्रमानुपपत्ति? या बाधानुपपत्ति? या असत्ख्याति की अनुपपत्ति? प्रथम (भ्रमानुभव) अन्यत्र रजत के सत् होने में प्रमाण नहीं हो सकता, क्योंकि वह (इदं रजतम्—यह भ्रमानुभव) तो केवल पुरोवर्ति रजत की सत्ता मात्र को ही विषय करता है, अन्यत्र रजत की सत्ता बताने में उदासीन है। द्वितीय (बाधानुभव) भी उसमें प्रमाण नहीं हो सकता, क्योंकि वह (नेदं रजतम्—यह बाधानुभव) केवल पुरोवर्ति वस्तु में आरोपित रजत के अभाव को ही विषय करता है, असंनिहित देश में रजत-सत्ता का बोधक नहीं। तृतीय (भ्रमानुपपत्ति) भी उसमें प्रमाण नहीं, क्योंकि रजत-प्रतीति पुरोवर्ति रजत की प्रातीतिक सत्ता के बिना अनुपपन्न होने पर भी अन्यत्र रजत सत्ता के बिना अनुपपन्न नहीं। [अर्थात् यदि अन्यत्र रजत-सत्ता के बिना भ्रमानुभव न बन सकता, तब उसका आक्षेपक होता, किन्तु वह पुरोवर्ति देश में रजत की प्रातीतिक सत्ता से ही बन जाता है, देशान्तरस्थ रजतसत्ता में अर्थापत्ति प्रमाण नहीं बन सकता]। चतुर्थ (बाधानुपपत्ति) भी देशान्तरस्थ रजत-सत्ता में प्रमाण नहीं, क्योंकि बाध जहाँ पर जिसका निषेध करता है, वहाँ उस (निषेध्य) की प्राप्ति की अपेक्षा करता है, क्योंकि अप्रसक्त (अप्राप्त) का निषेध बनता नहीं। 'नेदं रजतम्' यह बाध भी पुरोवर्ति वस्तु में रजत का निषेध करता है, अतः इसके बल पर पुरोवर्ति देश में ही रजत-सत्ता सिद्ध होगी, न कि देशान्तर में। यदि कोई प्रश्न करे कि यदि देशान्तर में रजत की सत्ता नहीं, तब देशान्तर में उसका बाध क्यों नहीं होता? तो उसका उत्तर यह है कि देशान्तर में रजत प्राप्त ही नहीं तब उसका बाध कैसे होगा? अर्थात् देशान्तर में बाध नहीं होता, अतः वहाँ रजत है—यह नहीं कह सकते, क्योंकि देशान्तर में रजत-**

धानुभवो रजतमर्थात् क्वापि परिशिनष्टीति चेत्, न, तथासति वनस्पत्योरिव विविक्तयोर्द्वयो-रन्यत्रैवान्तर प्रतीतिप्रसक्तेः । नापि पञ्चमः, असतः संसर्गस्येव रजतस्याप्यसतः ख्यात्युपपत्तेः।

अथाधुनिकस्य कस्यचिन्मतानुसारेणेदं रजतमिति ज्ञानमिदमाकाररजताकारयोर्न संसर्गग्राहकमपितु तयोरेकज्ञानसंसर्गिणोर्भेदाग्रहादयथार्थव्यवहारो गृह्यमाणयोर्भेदाग्राहि सविकल्पकमेकं विज्ञानं विभ्रम इति भ्रमलक्षणाभ्युपगमात्। तथा च नासतः कस्यचित्ख्या-

मिति । अयमर्थः—कथमिदमवधार्यते तादात्म्यनिषेधोऽयम् ? न धर्मिनिषेध इति । यदि हि धर्मिणो रजतस्य मानान्तरात्सत्त्वमवसीयेत तदा प्रसक्तस्यापि तादात्म्यस्यैवाबाध इत्यवधार्येत, नत्वेतदस्ति, नहि दूरस्थस्थाव-रयोर्भेदाग्रहात्परस्परात्मत्वारोपे नेदिष्ठं तिष्ठतश्च विवेकग्रहात्तादात्म्यारोपनिषेधे तत्रैवानन्तरप्रतीतिवदनयोरस्ति प्रतीतिः। एतदुक्तं भवति—प्रसक्तयोस्तादात्म्यारोपनिषेधो धर्मिणोस्तत्रैव समनन्तरप्रतीत्या व्याप्तस्तन्निवृत्तौ निवर्तेत इति । नच तत्र सन्निहितयोस्तादात्म्यारोप इह तु सन्निहितासन्निहितयोरिति वैषम्यम्, एतादृ-शेषु तादात्म्यारोपासप्रतिपत्तेः, दूरेऽन्तिके इतिवदबाधनाच्च । असतः ख्यात्यनुपपत्तिरिति पञ्चमं पक्षं निषेधति—नापि पञ्चम इति । असत एव संसर्गस्यापरोक्षतया ख्यातिरिति यस्य मतं तस्य का नु नामानुपपत्तिरसतो रजतस्य प्रतीतावित्यर्थः ।

न्यायकल्पतरावुदीरितमाशङ्कते—अथाधुनिकस्येति । न संसर्गोऽत्र प्रतीयते येनासतः प्रकाश-मानता स्यात् । तद्दृष्टान्तेन च रजतस्य सत्त्वं निषेधेताऽपितु शुक्तिरजतयोः स्वरूपमात्रग्राहीदमेकं विज्ञान-मित्यर्थः । तर्हि किं तत्रासंसृष्टव्यवहारो निर्निबन्धनः ? न, भेदाग्रहनिबन्धन इत्याह—अपि त्विति । कथं तर्ह्यख्यातेर्भेदस्तत्राह—गृह्यमाणयोरिति । एकं विज्ञानमित्यख्यातेर्भेदः, सविकल्पकमिति च वस्तुमात्र-ग्राहिणो निर्विकल्पकाद्विवेचितः, नेदं रजतमित्यादिभ्यश्च भेदाग्राहीति व्यावृत्तिः, घट इत्याद्येकैकवस्तुग्राहि-विज्ञानमितरस्माद्भेदं न गृह्णाति, उक्तरूपं चास्ति[3] तन्निवृत्त्यर्थं गृह्यमाणयोरित्युक्तम् । एकैकेन ज्ञानेन तु भेद-वत्पटादेरग्रहणान्न व्यावृत्तिः । फलितमाह—तथा चेति । तदेतद्दूषयति—तं प्रति ब्रूयादिति । एकज्ञानो-

बाध न होने का कारण है उसकी वहाँ अप्राप्ति । यदि कोई सन्देह करे कि 'नेदं रजतम्'—यह बाध पुरोवर्ति वस्तु मे रजत के तादात्म्य मात्र का निषेध करता है, रजत का नही। अत यह बात अर्थात् सिद्ध हो जाती है कि रजत अन्यत्र कही है । तो यह सन्देह भी संगत नही, क्योकि रजत का निषेध न मानकर यदि तादात्म्य मात्र का निषेध माने, तब बाध के उत्तर काल मे रजत और शुक्ति—दोनो ही पृथक्-पृथक् वैसे ही उपलब्ध होने चाहिए, जैसे कि दो वृक्षो को दूर से एक समझा गया, पास पहुँच कर उनके तादात्म्य मात्र का निषेध होता है और दोनो वृक्ष पृथक्-पृथक् प्रतीत होते रहते है। पंचम ( असत्-ख्याति की अनुपपत्ति ) पक्ष भी युक्त नही, क्योकि यदि असत् की ख्याति ( प्रतीति ) न हो सकती, तब रजत को कहीं सत् माना जाता । किन्तु असत् संसर्ग ( शुक्ति-रजत-तादात्म्य ) की जैसे ख्याति होती है, वैसे ही असत् रजत की भी प्रतीति हो जायगी, उस प्रतीति के आधार पर उसे सत् मानने की कोई आवश्यकता नही ।

शङ्का—किसी आधुनिक व्यक्ति का कहना है कि 'इदं रजतम्'—यह ज्ञान इदमाकार और रजता-कार के सम्बन्ध का ग्राहक नही, अपितु अपने दोनो विषय शुक्ति और रजत के भेद का भासक न होने से उसे अयथार्थ ( भ्रम ) ज्ञान कहा जाता है, क्योकि 'जो ज्ञान अपने गृह्यमाण पदार्थों में भेद का अग्राहक हो, सविकल्पक हो और एक हो, उसे भ्रम कहा जाता है'—यही भ्रम का लक्षण माना है । तब तो किसी भी असत् की प्रतीति नहीं होती । [ तात्पर्य यह है कि प्राभाकर को यह

१. अख्यातेरिति पञ्चमी । २. उक्तरूप च = सविकल्पकं चास्तीतिशेषः । ३ तन्निवृत्त्यर्थम् = तत्रातिव्याप्तिनिवृत्त्यर्थमित्यर्थः ।

तिरिति कश्चिद्ब्रूयात्, तं प्रति ब्रूयात्—मध्यमवृद्धव्यवहारेऽप्येकज्ञानोपारोहिणोः संसर्गिणो-रसंसर्गाग्रहादेव व्यवहारोपपत्तौ बालस्य ससर्गज्ञानानुमानानुदयाच्छब्दप्रामाण्यभङ्गप्रसङ्गात्। एवमनुमानाभास इव सदनुमानेऽप्यसंसर्गाग्रहादेव ससर्गव्यवहारोपपत्तेरनुमानोच्छेद, प्रत्यभिज्ञाप्रामाण्योच्छेदश्च, ज्वालैकत्वव्यवहारवत्सर्वत्र प्रत्यभिज्ञायामसंसर्गाग्रहादेव संसर्ग-व्यवहारोपपत्तेरिति गुरुमतनिरसनेनैव गुरुमतपरिपोषणनिपुणमतेर्मतं निरस्तमिति। किं च कणभक्षाक्षचरणमतमवलम्ब्यैवमन्यथाख्यातिमन्यथावर्णयतो द्वितीयसूत्रे मिथ्याज्ञानविवेचन-वेलायाम्—'इहात्मनि मिथ्याज्ञानमनेकप्रकार वर्तते, तद्यथाऽनित्ये नित्यमिति सभये

पारोहस्वीकारेऽपि ससर्गज्ञानापलापसाम्याद् ऽ-ख्यातिवादिनि ससर्गज्ञानापलापिन्युक्त शब्दानुमानप्रत्यक्षाप्रा-माण्यप्रसङ्ग दोषमत्राप्याह—मध्यमवृद्धेत्यादिना। किं चैकस्मिन्नेव घटे स एवाय घटो न भवतीति विभ्रमे लक्षणमव्यापकम्। विद्यमानभेदयोरिति विशेषणेऽपि दूरगिरिशिखरतरुनिकरमात्रग्राहिप्रत्ययेऽतिव्याप्ति-रिति द्रष्टव्यम्। एतन्मतदूषणमुपसहरति—इति गुरुमतेति। किं च कणादाक्षपादमतावलम्बिना तावदिद वक्तु न युक्तम्, भाष्यवार्तिकविरोधेनापसिद्धान्तापातादित्याह— किञ्च कणभक्षेत्यादिना। द्वितीयसूत्रे—'दु.खजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग' इति। आत्मनीत्यधिकरणे सप्तमी।

मानने पर बाध्य किया गया कि जैसे आप शुक्ति-रजत के असत् ससर्ग का भान 'इदं रजतम्' मे मानते है, वैसे ही असत् रजत का भान भी मानना पडेगा। इस पर प्राभाकर के एक हितैषी ने कहा कि 'इद रजतम्' मे हम असत् ससर्ग का भान नही मानते कि जिसे दृष्टान्त बनाकर असत् का भान मानने पर विवश किया जा सके। हाँ, 'असत् पदार्थ का भासक ज्ञान'—यह भ्रम का लक्षण नही, अपितु 'जो एक सविकल्पक ज्ञान अपने विषय का विश्लेषक न हो, उसे भ्रम कहा जाता है। 'इद रजतम्' भी इसी प्रकार है, अत उसमे भ्रम का व्यवहार होता है ]।

समाधान—उस आधुनिक विद्वान् को यह समझाना चाहिए यदि बिना ससर्ग के पदार्थों का स्वरूपत भान किसी ज्ञान मे मानेगा, तब तो मध्यम वृद्ध का व्यवहार भी वैसे ही एक ज्ञान के विषयीभूत पदार्थों के भेद के अग्राहक ज्ञान से ही निभ जायगा। फिर तो पास मे बैठा बालक ससर्ग-ज्ञान का अनुमान न कर सकेगा, तब तो पूरा शब्द-प्रामाण्य ही भंग हो जायगा। इसी प्रकार अनुमानाभास के ही समान सदनुमान से भी असंसर्गाग्रह से ससर्ग-व्यवहार बन जाने पर अनुमान मात्र का उच्छेद और प्रत्यभिज्ञा-प्रामाण्य का उच्छेद हो जायगा, क्योकि जैसे दीपक की विभिन्न ज्वालाओ मे 'सेयं दीपज्वाला'—इस प्रकार एकत्व-व्यवहार हो जाता है, वैसे ही सभी प्रत्यभिज्ञाओ मे असंसर्गाग्रह से ही ससर्ग-व्यवहार बन जायगा। इस प्रकार प्राभाकर मत के निराकरण से ही इस प्राभाकर-मत के पोषक विद्वान् का मत निराकृत हो जाता है, पृथक् निराकरण की आवश्यकता ही नही रह जाती। दूसरी बात यह भी है कि कणाद और गोतम के मत से दीक्षित होकर यदि ऐसा व्यक्ति अन्यथाख्याति का ऐसा विकृत रूप वर्णन करता है, तब भाष्य तथा वार्तिक से विरोध होता है, क्योकि न्याय-दर्शन के द्वितीय सूत्र मे मिथ्या ज्ञान का विवेचन करते हुए भाष्यकार ( महामुनि वात्स्यायन ) कहते है—"तत्रात्माद्यपवर्गपर्यन्ते प्रमेये मिथ्याज्ञानमनेकप्रकारक वर्तते—आत्मनि तावत् नास्तीति, अनात्मन्यात्मेति, दु खे सुखमिति, अनित्ये नित्यमिति, अत्राणे त्राणमिति, सभये निर्भयमिति" ( नवम सूत्र मे कहे आत्मादि बारह प्रमेयो मे मिथ्या ज्ञान अनेक प्रकार का होता है, जैसे—आत्मा के विषय में 'नही है' अनात्मा के विषय मे 'यह आत्मा है,' दु ख के विषय मे 'यह सुख है,' अनित्य के विषय मे 'यह नित्य है,' अरक्षक के विषय मे 'यह रक्षक है,' सभय के विषय में 'यह निर्भय है'—इत्यादि )। यहाँ भाष्यकार ने 'अनित्यनित्यविषयकम्'—ऐसा न कह

निर्भय'मित्यादिभाष्यविरोध । 'कः पुनर्विपर्ययः ? अतस्मिंस्तदिति प्रत्यय'इत्युद्द्योतकरवार्तिकविरोधश्च प्रसज्येतेति ।

'वध्यतां वध्यतां बालो नानेनार्थोऽस्ति जीवता ।
स्वपक्षहानिकर्तृत्वाद् य' कुलाङ्गारतां गत ॥'

इति न्यायविषयतामस्य नातिवर्तते।तस्मादसत्ख्यात्यनुपपत्तिरपि नान्यत्र सत्तावेदिकारोपितस्य ।

कुत्रचेदमारोपितमन्यत्र भवद्भवेत् ? न तावद्देशान्तरादौ, तस्यासन्निहितस्य द्रष्टुमयोग्यत्वात्। दुष्ट करण विप्रकृष्टमपि द्रष्टु शक्नोतीतिचेन्न, दुष्टकरणस्य पुंस' सर्वदर्शित्वप्रसङ्गात् । अतो दोषोऽप्यसदनिर्वचनीय वा दर्शयति, दृष्टानुसारात् । तदेव न देशान्तरादावारोप्यसद्भाव ।

अस्तु तर्हि बुद्धौ, स्वरूपेणासतो गगनारविन्दादिवदप्रतिभासात्, नेद रजतमिति बाधस्ये

---

अत्र ह्यनित्ये इत्यादिसप्तम्या आधाराधेयरूपसम्बन्धग्राहित्व विभ्रमस्य कण्ठोक्तमिति भावः । स्वपक्षहानीति । प्रह्लाद प्रति हिरण्यकशिपुवचनम् । अन्तिमपक्षोक्तदूषणमुपसंहरति—तस्मादिति ।

तदेव साधारण्येनारोपितस्यान्यत्र सत्त्व नास्तीत्युक्तमिदानीं विशेषतो दूषयितुमुपक्रमते—कुत्र चेदमिति । अन्यथाख्याति निराकरोति—न तावदिति । ननु यदि न दुष्टाक्षस्य विप्रकृष्टद्रष्टृत्व कुतस्तर्हि दोषस्य दोषत्वमिति तत्राह—अतो दोषोऽपीति । प्राप्तकार्यप्रतिबन्धकत्वे सति विपरीतकार्यनिष्पादको दोष', तदिहाप्यसदनिर्वचनीय वा सत्त्वेन भासयतोऽस्तीत्यर्थ । दृष्टानुसारादिति । असत्ससर्गावभासकत्वस्य ज्ञाने त्वयैव स्वीकारादित्यर्थ. ।

आत्मख्यातिमवतारयति—अस्तु तर्हीति । तत्र युक्तीराह—स्वरूपेणासत इत्यादिना । नन्वस्य सत्त्वकल्पन नेद रजतमिति बाधविरुद्धमिति नेत्याह—नेद रजतमिति । अथ किमिति न द्वय निषेध-

---

कर जो 'अनित्ये नित्यम्'—इस प्रकार कहा, उससे यह स्पष्ट हो जाता है कि मिथ्या ज्ञान मे सम्बन्ध का भान होता है, सम्बन्ध-रहित केवल पदार्थों का नही । इसी प्रकार वार्तिककार ( उद्योतकराचार्य ) ने भी कहा है—"क पुनरयं विपर्यय ? अतस्मिस्तदिति प्रत्यय" ( क्या है यह विपर्यय ? अतद् मे तद्–इस प्रकार ( का ज्ञान ) । यहाँ भी मिथ्या ज्ञान की पदार्थों के सम्बन्ध मे विषयता प्रतीत होती है । ऐसे महापुरुषो के कुल मे ऐसा व्यक्ति, जो मिथ्या ज्ञान मे सम्बन्ध का भान नही मानता, वह निश्चित ही कुलाङ्गार है । ऐसे व्यक्ति को हिरण्यकशिपु की गर्जना के अनुसार यह घोर दण्ड मिलना चाहिए—'मार दो, मार दो इस बालक को, इसे जीने का अधिकार नही, जो अपने ही पक्ष का भक्षक और अपने ही कुल को स्वाहा करनेवाला है ।' अत असत्ख्याति की अन्यथानुपपत्ति से भी आरोप्यमाण की अन्यत्र सत्ता सिद्ध नही होती ।

यदि आरोपित ( रजतादि ) अन्यत्र हो भी, तो कहाँ ? देशान्तर मे वह हो नही सकता, क्योकि असन्निकृष्ट देश की वस्तु देखी नही जा सकती । यदि कहें कि विकृत नेत्र उसे भी देख लेगा, तब तो विकृत नेत्र वाला पुरुष सर्वदर्शी हो जायगा । अत यह मानना होगा कि दोष भी असत् या अनिवर्चनीय ( रजतादि ) का भासक है, जैसे कि 'इद रजतम्' मे असत् ससर्ग का भान देखा जाता है । इस प्रकार यह सिद्ध होता है कि देशान्तर मे आरोप्य का सद्भाव नही ।

आत्मख्यातिवादी—बाहर यदि रजत की सत्ता नही तब अन्दर बुद्धि मे मानी जा सकती है, क्योकि रजत यदि अन्दर-बाहर कही नही अर्थात् गगन-कमल की भाँति स्वरूपत' असत् है, तब

---

१ तद् = प्राप्तकार्यप्रतिबन्धकत्वे सति विपरीतकार्यनिष्पादकत्वम्, भासयतश्चक्षुरादेरस्तीत्यन्वय. ।

२ असदवभासकत्वस्य ससर्गे इति पाठान्तरम् । तत्र ससर्गपदोत्तरसप्तम्या निरूपितत्वमर्थ. । अथवा ससर्गविषयके ज्ञाने इत्यर्थ. । ३ न द्वयमित्यस्य स्थाने तद्द्वयमित्यपि पाठस्तत्र तदेदन्तामात्र परामृशति ।

दंतामात्रगोचरत्वात्, द्वयोर्बाधकल्पनायां कल्पनागौरवात्, नेदं रजतमिति च रजते बाधादर्शनात्। नचेदंतानिषेधे सत्यनिदंतया बहिरपि व्यवस्थोपपत्तौ कुतः संविदाकारतेति साम्प्रतम्, व्यवहितस्यापरोक्षसंविदैक्यमन्तरेणापरोक्षत्वानुपपत्तेः, संविदाकारो रजतं संप्रयोगमन्तरेणापरोक्षत्वात्संवेदनवदिति प्रयोगोपपत्तेः। ननु संप्रयोगो नाम किमिन्द्रियसंयोगादिविशेषः ? किं वा संबन्धमात्रम् ? नाद्यः; रूपादिनाऽनैकान्त्यात्। द्वितीये तु विशेषणासिद्धिः। दृष्टान्ते साधनविकलता च। नह्याध्यासिकसंबन्धं विनास्माकं रूप्यं तद्धीश्चापरोक्षा, धीरूपत्वे च रज-

तीत्यत आह—द्वयोर्बाधकल्पनायामिति। अनुभवमपि प्रमाणयति—नेदं रजतमिति। नन्विदंतानिषेधे सत्यनिदंतया विप्रकृष्टं भवत्वस्त्वन्तसन्निधानं त्वात्मरूपप्रत्ययात्मकं कुतस्त्यमिति तत्राह—न चेदंतानिषेधे सतीति। हेतुमाह—व्यवहितस्येति। संप्रयोगरहितस्येति यावत्। संविदाकारतायामनुमानमपि प्रमाणमाह—संविदाकारो रजतमित्यादिना। घटादेरनुमेयस्य च व्यवच्छेदार्थं संप्रयोगमन्तरेणेत्याद्युक्तम्। यदत्र न्यायदीपावल्या दूषणमुक्तं तदनुवदति—नन्वित्यादिना। रूपादिनेति। संयोगमन्तरेणापरोक्षता रूपादेः, समवायमन्तरेण च शब्दव्यतिरिक्तस्य सर्वस्य, तथापि संविद्रूपता नास्तीत्यनैकान्त्यम्। न च तत्रापि संविद्रूपत्वमेव सर्वस्य संविद्रूपताङ्गीकारादिति वाच्यम्, तथा सति विपक्षासंभवेन संप्रयोगमन्तरेणेति विशेषणवैयर्थ्यात्। संबन्धमात्रविवक्षायां तद्राहित्यविशेषणमसिद्धम्, चैतन्येनाध्यासिकसंबन्धस्वीकाराद्रजतसंवेदनयोः। अत एव दृष्टान्तस्य साधनवैकल्यं चेत्याह—द्वितीये त्विति। तर्कबाधमप्याह—धीरूपत्वे चेति। तदेतत्परिहरति पूर्ववादी—मैवमित्यादिना। न संबन्धमात्रराहित्यं विवक्षितं, किंवि-

उसका भान ही नहीं होगा। 'नेदं रजतम्'—यह बाध रजत में इदन्ता मात्र का निषेध करता है, रजत तथा इदन्ता—दोनों का निषेध करने में कल्पना-गौरव होगा, अतः 'इदं रजतम्'—यह रजत का निषेध नहीं करता। [ आत्मख्यातिवादी बौद्ध भ्रमस्थल पर विज्ञात्मा रजत की ही प्रतीति बाहर मानता है। उसका कहना है कि जैसे 'नायं पीतः शङ्खः'—इस बाध से पीतिमा में आरोपित इदन्ता मात्र का निषेध होता है, पीतिमा का नहीं क्योंकि वह नेत्र-गत पित्त द्रव्य में स्थित है ही, वैसे ही 'नेदं रजतम्'—यह निषेध भी रजत में आरोपित इदन्ता ( बाह्यता ) मात्र का निषेध करता है, रजत का नहीं, क्योंकि वह आन्तर विज्ञान में स्थित ही है। जो लोग रजत रूप धर्मी और इदन्ता रूप धर्म—दोनों का निषेध मानते हैं उनके मत में गौरव है ]। यदि सन्देह हो कि इदन्ता ( सन्निहित बाह्यता ) का निषेध हो जाने पर अनिदन्ता ( विप्रकृष्ट बाह्यता ) मान लेने से व्यवस्था बन जाती है, रजत में ज्ञानरूपता क्यों सिद्ध होगी ? तो वह शङ्का उचित नहीं, क्योंकि रजत को व्यवहित देश में मानने से उसका प्रत्यक्ष न बन सकेगा, कारण कि प्रत्यक्ष ज्ञान से जब तक बाह्य वस्तु का ऐक्य स्थापित न हो, तब तक उसका प्रत्यक्ष नहीं होता और व्यवहित देश के पदार्थों से इन्द्रिय-सम्बन्ध न होने के कारण प्रत्यक्ष ज्ञान का ऐक्य हो नहीं सकता। अतः रजत, विज्ञान का आकार ही मानना होगा। उसकी विज्ञानाकारता में अनुमान प्रमाण भी है—'रजत, विज्ञान का आकार है, सम्प्रयोग ( सम्बन्ध ) के बिना ही प्रत्यक्ष होने से, विज्ञान के समान।'

शङ्का—इस अनुमान में सम्प्रयोग से क्या विवक्षित है ? इन्द्रिय का संयोगादि सम्बन्ध विशेष ? अथवा सम्बन्ध मात्र ? प्रथम पक्ष उचित नहीं, क्योंकि संयोग के बिना प्रत्यक्षता है समवेत रूपादि में, इसी प्रकार समवाय के बिना घटादि संयुक्त पदार्थों में प्रत्यक्षतारूप हेतु है कि रूपादि और घटादि में विज्ञानरूपता साध्य है नहीं, अतः हेतु व्यभिचरित हो जाता है। द्वितीय ( सम्बन्ध मात्र ) पक्ष में विशेषणासिद्धि दोष है, क्योंकि बिना आध्यासिक सम्बन्ध के हम ( वेदान्ती ) ज्ञान का या रजतादि का प्रत्यक्ष नहीं मानते। इसी लिए दृष्टान्त में साध्य-विकलता भी है। फिर भी यदि रजत

तादेर्भ्रान्तिं विनापि दर्शनप्रसङ्ग इति चेत्, मैवम्, इन्द्रियसन्निकर्षानधीनापरोक्षत्वस्य विवक्षितत्वात्। संवेदनस्य चेन्द्रियसम्बन्धमन्तरेणैव स्वतः सिद्धतया साक्षिसिद्धत्वेन वा साधनवैकल्याभावात्। न च धीरूपत्वे रजतादेर्भ्रान्तिं विनापि दर्शनप्रसङ्गः, धियोऽन्यत्वेऽपि पटादिवद्भ्रान्तिं विनापि दर्शनप्रसङ्गस्य तुल्यत्वात्। ततो धीरूपमेव रूप्यमिति चेत्,

तदयुक्तम्, अत्यन्तालीकाया अपि बाह्यताया प्रतिभासवदत्यन्तासतोऽपि रजतादेः प्रतिभासोपपत्तेः। नच नेदं रजतमितीदन्तामात्रमेव बाध्यते, कल्पनालाघवादिति न्याय्यम्, इदं रजतमिति प्रतिपन्नविशिष्टरजतस्य नेदं रजतमिति बाधस्य चानुभवसिद्धतया कल्पनीयत्वाभावात्। अतएव कल्पनालाघवन्यायानवतारात्। नच संविदैक्यमन्तरेणापरोक्षत्वानुपपत्तिः, बाह्यतावत्तदुपपत्तेः। किंचारोपितं बुद्धौ चेत्, गुञ्जापुञ्जादौ दहनसमारोपे देहदाहप्रसङ्गः।

---

न्द्रियसम्बन्धराहित्यम्, तेन नानैकान्तिकताऽसिद्धी इत्यर्थः। साधनवैकल्यं परिहरति—संवेदनस्य चेति। रूप्यज्ञानस्येत्यर्थः। स्वतः सिद्धतयेति बौद्धाभिप्रायेण। साक्षिसिद्धतयेति स्वाभिप्रायेण। तर्कविरोधं परिहरति—न चेति। पूर्वपक्षमुपसंहरति—तत इति। न तावदसतः ख्यात्यनुपपत्तिः, वहिष्ट्वे तदभावादित्याह—अत्यन्तालीकाया इति। नच न्याय्यमित्युक्तं तत्र हेतुः—इदं रजतमिति। कल्पनाया हि लाघवमनुसरणीयम्, नचात्र कल्पना, प्रमाणमार्गागतत्वादितरथाऽतिप्रसङ्गादिदं रजतमिति प्रतीतिप्रसङ्गाच्चेति भावः। अनुपपत्त्यन्तरं परिहरति—नच संविदैक्यमिति। तदेवमप्रामाणिकत्वमुक्त्वा प्रमाणबाधं चाह—किंचारोपितमित्यादिना। स यदि ब्रूयादान्तरं न वस्तु रादतो न दाहादिरिति तं प्रत्याह—तर्हीति।

---

को विज्ञान रूप मान लें, तो भ्रान्ति के बिना ही रजतादि का दर्शन होना चाहिए।

समाधान—उक्त 'सम्प्रयोग' पद से इन्द्रिय-सन्निकर्ष विवक्षित है, अर्थात् इन्द्रिय-सम्बन्ध के अनधीन अपरोक्षत्व—यह साध्य का पूरा स्वरूप है। इन्द्रिय-सम्बन्ध के बिना ही विज्ञान हमारे ( बौद्ध मत में ) स्वतः अपरोक्ष और आप ( वेदान्ती ) के मत में साक्षिसिद्ध है, अतः दृष्टान्त ( विज्ञान ) में साध्य विकलता दोष नहीं। यह जो कहा था कि विज्ञानस्वरूप मानने पर भ्रान्ति के बिना ही रजतादि का दर्शन होना चाहिए,-वह कहना उचित नहीं, क्योंकि विज्ञान से अतिरिक्त मानने में भी तो यह शङ्का बनी रहती है कि भ्रान्ति के बिना ही पटादि के समान रजतादि दर्शन होना चाहिए। अतः ऐसा दोष किसी पर नहीं देना चाहिए, जो कि अपने पक्ष में भी लगता हो। इस प्रकार यह सिद्ध हो गया कि रजत, विज्ञान का स्वरूप है।

सिद्धान्ती—आत्म-ख्याति-वादी का यह कहना नितान्त असङ्गत है, ( कि अत्यन्त अलीक रजत का भान नहीं हो सकता, अतः बुद्धि में रजत को सत् मानना चाहिए ), क्योंकि जिस प्रकार अत्यन्त अलीक बाह्यता ( इदन्ता ) का भान रजत में हो जाता है, उसी प्रकार अत्यन्त असत् रजत का भी प्रतिभास बन जायगा। यह जो कहा था हमारे ( आत्मख्याति-वादी के ) मत में इदन्तामात्र का बाध होने से लाघव और आप ( वेदान्ती ) के मत में रजत तथा इदन्ता—दोनों का बाध होने से कल्पना-गौरव है, वह कहना भी सङ्गत नहीं, क्योंकि जहाँ कल्पना करनी हो, वहाँ लघु मार्ग का ही अनुसरण किया जाता है, किन्तु यहाँ 'इदं रजतम्'—इस ज्ञान से विशिष्ट रजत की प्रसक्ति और 'नेदं रजतम्'—इस अनुभव से उसका बाध अनुभव प्रमाण से सिद्ध है, कल्पनीय नहीं। इसलिए 'कल्पना-लाघव' का न्याय यहाँ लागू नहीं होता। 'विज्ञान से अभेद न मानने पर रजत में अपरोक्षता नहीं बन सकेगी'—यह भी कहना संगत नहीं, क्योंकि जैसे बाह्यता विज्ञानरूप नहीं, फिर भी उसमें अपरोक्षता होती है, वैसे ही रजत में अपरोक्षता क्यों न बनेगी? दूसरी बात यह है कि यदि आरोपित रजतादि की सत्ता बुद्धि में मानी जायगी, तब तो गुञ्जासमूह ( घुँघची के ढेर )

बुद्धावपि तस्यातात्त्विकत्वाद‌प्रसङ्ग इतिचेत्, तर्हि न तद्बहि सन्नान्तरित्यत्यन्तासदनिर्वचनीयं वा स्यात्, गत्यन्तराभावात्। संप्रयोगमन्तरेणापरोक्षत्वादिति हेतुर्बहिष्ट्वेऽप्यबुद्धयाकारे वर्तत इति सव्यभिचार । तस्मान्नासन्। नापि सत्समारोपितम्। नापि सदसद्रूपम्, विरोधात्। अविरोधे वा न भ्रान्तिबाधौ, द्वयोरपि परमार्थविषयत्वात्। उभयाकारस्यैकाकारप्रतिभासो भ्रम इतिचेत्, तर्हि बाधस्यापि भ्रमत्वप्रसङ्ग । तस्याप्येकाकारविषयत्वात्। सर्वज्ञानानां च सर्वात्मनाऽनवभासकत्वाद्भ्रान्तित्वप्रसङ्गो दुर्वार स्यात्। तस्माद् गत्यन्तराभावादनिर्वचनीयमारोपितमिति सिद्धम्।

ननु किमिदमनिर्वचनीयत्वम्—किं निरुक्तिविरहः? किंवा निरुक्तिनिमित्तस्य विरह ? नाद्य , इदं रजतमित्यादिनिरुक्तेरङ्गीकारात्। न द्वितीय , विकल्पासहत्वात्। तथाहि निरुक्ते-

---

अपसिद्धान्तापत्तिरित्यर्थः। दस्त्वनुमानमुक्त तद्बहिष्ट्वेऽनैकान्तिकमित्याह—सम्प्रयोगमित्यादिना। सत्ख्यातिनिराकरणमुपसंहरति—तस्मादिति। अस्तु तर्हि सदसदात्मकमारोपितम्। यथाहु —

'स्वरूपपररूपाभ्यां नित्यं सदसदात्मके।
वस्तुनि ज्ञायते किंचिद्रूपं कैश्चित्कदाचन ॥' इति

तत्राह—नापिसदसद्रूपमिति। ननु यद्यपि परमार्थविषयत्वमुभयोस्तथाप्युभयाकारस्य सतोऽर्थस्यैकाकारग्राहित्वात् पूर्वज्ञान भ्रान्तमित्याशङ्कते—उभयाकारस्येति। तर्ह्यसदाकारमात्रग्राहिणो बाधकस्यापि स्याद्भ्रान्तित्वमित्याह-तर्हीति। अत्यल्पचेदम्, सर्वज्ञानानामेवैवभावाद् भ्रान्तित्वप्रसक्तिरित्याह—सर्वज्ञानानां चेति।

आरोपितमनिर्वचनीयमित्युपसंहृत तदाक्षिपति—नन्विति। किं निरुक्तिविरहोऽनिर्वचनीयत्वं? किंवा निरुक्तिनिमित्तस्य विरह.? किं वा ज्ञानबाध्यत्वम्? अथ वा प्रतिपन्नोपाधौ निषेधप्रतियोगित्वमिति? तत्र

---

में आरोपित अग्नि को बुद्धि में सत मानने पर देह जलने लगेगी। यदि कहा जाय कि वह अग्नि बुद्धि में वस्तुत सन् नहीं अतात्त्विक है, फिर दाह-प्रसङ्ग क्यों होगा? तब तो रजत न तो बाहर सत् है और न अन्दर, अत अत्यन्त असन् या अनिर्वचनीय मानना पडेगा, और कोई मार्ग नहीं। 'सम्प्रयोग के बिना अपरोक्षत्व'—यह हेतु बाह्यता ( इदन्ता ) पर भी है, किन्तु वहाँ विज्ञानाकारता रूप साध्य नहीं, अत व्यभिचारी है। इसलिए यह सिद्ध हुआ कि समारोपित ( रजतादि ) न असत् है और न सत्। सदसन्—उभयरूप भी नहीं मान सकते, क्योंकि सद्रूपता और असद्रूपता—दोनों नितान्त विरुद्ध धर्म हैं, एकत्र नहीं रह सकते। यदि विरोध नहीं और वे दोनों धर्म एकत्र रहते हैं, तब तो 'इदं रजतम्'—यह ज्ञान न तो भ्रान्ति होगा और न उसका बाध ही हो सकेगा, क्योंकि दोनों ज्ञान ( 'इदं रजतम्' और नेदं रजतम् ) परमार्थ विषयक होंगे। यदि कहा जाय कि रजत वस्तुत उभयाकार है किन्तु 'इदं रजतम्'—यह ज्ञान उसके केवल एक ( सन् ) आकार को ग्रहण करता है, अत वह भ्रान्ति है। तब तो बाध ( नेदं रजतम् ) ज्ञान को भी भ्रम ही मानना पडेगा, क्योंकि वह भी रजत के केवल एक ( असत् ) आकार को ही विषय करता है। केवल इतना ही नहीं, अपितु सभी ज्ञानों में उभयाकार—ग्राहकता न होने से भ्रान्तित्व दुर्वार हो जायगा। अत और कोई मार्ग न रहने के कारण आरोपित ( रजतादि ) अनिर्वचनीय ही सिद्ध होते हैं।

पूर्वपक्ष—यह अनिर्वचनीयत्व क्या है? क्या निरुक्ति ( निर्वचन ) का विरह? या निरुक्ति के निमित्त का विरह? प्रथम पक्ष ठीक नहीं, क्योंकि रजत के विषय में निरुक्ति का विरह कहाँ? 'इदं रजतम्'—यह निरुक्ति तो मानी ही जाती है। द्वितीय ( निरुक्त के निमित्त का विरह ) पक्ष में

---

१ द्र० ता० परि० पृ० ८१४, तथा न्या० म० पृ० १११। २. श्लो० वा० अभाव० १२ सर्ववस्तु स्वरूपतः सद्रूपं पररूपतश्चासद्रूपम्। यथा घटो घटरूपेण सन् पटरूपेण चासन्नित्यर्थः।

निर्मित्त ज्ञानम् ? अर्थो वा ? नाद्य , रजतादिज्ञानस्य निरुक्तिनिमित्तस्य मायावादिभिरभ्युपगमात् । न द्वितीय , अर्थस्यापि सतो विरहेऽसत्ख्यातिप्रसङ्गात्, असतोपि विरहे सत्त्वप्रसङ्गात् । उभयविरहस्य च परस्परविरुद्धयोर्लोकसिद्धयोरन्यतरनिषेधस्येतरविधिनान्तरीयकत्वनियमदर्शनादेवानुपपत्ते । भावाभावयोरलौकिकयो स्वकपोलपरिकल्पितयोर्निषेधसमुच्चयाङ्गीकरणे तु लौकिकसदसतोरनिषेधात् न निरुक्तिनिमित्तार्थासभव । अतो न सदसद्विलक्षणमनिर्वचनीयम्, नापि ज्ञानबाध्यत्वम्, बाध्यत्वशब्देन निवर्त्यत्वाङ्गीकारे पूर्वज्ञानस्य सस्कारस्य चोत्तरविज्ञाननिवर्त्यत्वादनिर्वाच्यत्वापात. । विश्वस्य चेश्वरज्ञाननिवर्त्यत्वादनिर्वाच्यत्व स्यात् इति लक्षणस्यातिव्याप्ति । अथ बाध्यत्व नाम बाधकज्ञानविषयत्वम्, तदा शुक्त्यादेर्ब्रह्म-

---

प्रथमं निषेधति—**नाद्य इत्यादिना** । **निरुक्तेर्निमित्तमिति** । निर्वचनसबन्धि हि निर्वचनीय, तच्च निमित्त ज्ञानमपि भवति, कारणतया सबन्धित्वात् । तथा विषयतयाऽर्थोऽपि । तयोर्विरहश्चेदनिर्वचनीयत्व विवक्षितमित्यर्थः । ज्ञाननिमित्तविरह दूषयति—**नाद्य इति** । विषयज्ञान हि शब्दप्रयोगे निमित्त तच्च त्वयाप्यभ्युपेयते इत्यर्थः । अर्थविरहपक्ष दूषयति—**न द्वितीय इति** । अर्थविरह इति कोऽर्थ ? कि सन्नर्थो नास्तीति ? तर्ह्यसन्नेवार्थ इत्यसत्ख्यातित्वमेव न पुनरनिर्वचनीयत्वमित्याह—**अर्थस्यापीति** । अथासन्नर्थो नास्तीति ? तर्हि सन्नेवार्थ इति सत्ख्यातित्वमेवेत्याह—**असतोऽपि विरह इति** । ननूभयोरप्यर्थयोर्विरहोऽर्थविरहस्तथा च नाथान्तरतेति तत्राह—**उभयविरहस्य चेति** । तत्र कि लोकप्रसिद्धसदसतार्विरहोऽनिर्वचनीयत्वम् ? उत स्वमतसङ्केतितयोः ? नाद्य , असभवादित्याह—**लोकसिद्धयोरिति** । द्वितीये आह—**भावाभावयोरिति** । निषेधयो' समुच्चय निषेधसमुच्चय. । तृतीय निषेधति—**नापि ज्ञानबाध्यत्वमिति** । तत्र वक्तव्य कि बाधकज्ञाननिवर्त्यत्वम् ? किवा बाधकज्ञानविषयत्वम् ? किवा कालत्रयनिषेधप्रतियोगित्वम् ? तत्र प्रथम निषेधति—**बाध्यत्वशब्देनेति** । द्वितीय दूषयति- **अथ बाध्यत्वं नामेति** । अधिष्ठानयाथात्म्यज्ञान हि त्वन्मते बाधक तथाच स्पष्टैवातिव्याप्ति' । अस्मन्मतेऽपि नेद रजतमित्यत्राधि-

---

जिज्ञासा होती है कि निरुक्ति का निमित्त क्या माना जाता है ? ज्ञान ? या अर्थ ? ( क्योंकि किसी वस्तु का ज्ञान होकर ही निर्वचन होता है, अत उसके निर्वचन मे दोनो निमित्त होते है—वस्तु और उसका ज्ञान ) । निरुक्ति के प्रथम निमित्त ( ज्ञान ) का विरह तो वहाँ हे नही, क्योंकि रजतादि का ज्ञान तो मायावादी मानते ही है । निरुक्ति का द्वितीय निमित्त ( अर्थ ) भी सत् विवक्षित है ? या असत् ? रजतादि रूप सत् अर्थ का अभाव मानने पर असत्ख्याति और असत् अर्थ का विरह मानने पर सत्ख्याति माननी पड जायगी । यदि 'अर्थ-विरह' पद से सदर्थ और असदर्थ—दोनों का विरह लिया जाय, तो इस पक्ष में भी प्रश्न उठता है कि लोक प्रसिद्ध सत् और असत् का विरह अभिमत है ? या कोई अलौकिक सत् और असत् का विरह ? लोक-प्रसिद्ध सत् और असत्—उभय का निषेध सम्भव ही नही, क्योंकि लोक मे सत् का निषेध करने से असत् का विधान समझा जाता है और असत् का निषेध करने से सत् का । अपने कपोल-कल्पित किसी अलौकिक सत् और असत् के निषेधों का समुच्चय मान लेने से लौकिक सत् और असत् का निषेध तो होता नही, अत निरुक्ति के निमित्त अर्थ का अभाव नहीं होता, इस लिए अनिर्वचनीय सदसद्विलक्षण सिद्ध नही होता । ज्ञान-बाध्यत्व भी अनिर्वचनीयत्व का लक्षण नही बन सकता, क्योकि 'बाध्यत्व' शब्द से ( क्या विवक्षित है ? बाधक ज्ञान-निवर्त्यत्व ? या बाधक ज्ञान-विषयत्व ? या कालत्रय निषेध-प्रतियोगित्व ? ) निवर्त्यत्व लेने पर उत्तर ज्ञान से पूर्व ज्ञान भी निवर्त्य है और उत्तर ज्ञान के सस्कार भी, ऐसे सत् पदार्थों मे भी अनिर्वचनीयता की आपत्ति होगी । केवल इतना ही नही, अपितु ईश्वर ज्ञान से निवर्त्य पूरा विश्व है, उसमे निवर्त्यत्व रहने से अनिर्वचनीयत्व प्राप्त होता है, अत निवर्त्यत्व लक्षण अतिव्याप्त है । यदि बाध्यत्व का अर्थ बाधक ज्ञान-विषयत्व करे , तब तो शुक्त्यादि तथा ब्रह्म मे अनिर्वचनीयत्व

णश्चानिर्वाच्यत्व स्यात्, तयोरधिष्ठानतया बाधकज्ञानविषयत्वात्। अथ नाभूदस्ति भविष्यतीति कालत्रयसत्तानिषेधो बाधस्तद्विषयत्व च बाध्यत्वमिति, मैवम्, मायाविवर्तस्य पुरोवर्तिरजतस्य तथाविधनिषेधविषयत्वानङ्गीकाराल्लक्षणस्याव्याप्तेः, लौकिकपरमार्थरजतस्यात्र तथाविधनिषेधविषयत्वाङ्गीकारादनिर्वाच्यत्वापत्तिरिति लक्षणस्यातिव्याप्तेश्च। एतेन प्रतिपन्नोपाधौ निषेध्यत्वमनिर्वचनीयत्वमित्यपास्तम्। पुरोवर्तिनि प्रतिपन्नस्य रजतस्याधिष्ठानज्ञानेन मायाया विलीयमानाया तत्परिणामतया स्वयमेव विलीयमानस्य नेद रजतमिति निषेधाविषयत्वात्।

कि चात्र प्रमाणम्? ख्यातत्वे सति बाध्यत्वानुपपत्ति—असतो नरश्रृङ्गादेरख्यानात्सतश्च चिदात्मनो बाधाभावाद् उभयस्य चेह दर्शनादितिचेत्, न, देशान्तरे सत्त्वात्ख्यातेरिहासत्त्वाद्बाधस्यापि सभवाद् अन्यथाप्युपपत्तेः। किं चासतो भानमनुपपन्नमित्यसन्, असतोपि

ष्ठानमपि स्फुरतीत्यर्थः। तृतीय दूषयति—मैवमिति। त्वन्मतेऽनिर्वचनीयरजतस्य तत्रैवाविद्ययोत्पन्नत्वात्प्रत्यभिज्ञायमानत्वाच्च न कालत्रयेऽप्यभाव शक्याङ्गीकारोऽतोऽव्याप्तिः, कस्मिंश्चिदपि लक्ष्येऽवर्तमानत्वादित्यर्थः। अतिव्याप्तिं चाह—लौकिकेति। तृतीयपक्षोक्त दूषण[3] चतुर्थेऽप्यतिदिशति—एतेनेति। अतिदिश्यमानामव्याप्तिमेव विवृणोति—पुरोवर्त्तिनीति। अधिष्ठानयाथात्म्यज्ञानेनाधिष्ठानाज्ञानमेव बाध्यते। तत्परिणामरूपयोस्तु ज्ञानज्ञेययोः स्वयमेव विलय इति हि तव समयः। तथाच रूप्यादेर्निषेध्यत्वाभावादव्याप्तिर्लक्षणस्येत्यर्थः।

एव लक्षणमाक्षिप्य प्रमाण प्रतिक्षिपति—किंचात्र प्रमाणमित्यादिना। अर्थापत्ति शङ्कते—ख्यातत्वे सतीत्यादिना। अनुपपत्तिमेव स्फोरयति—असतो नरश्रृङ्गादेरित्यादिना। इमामर्थापत्ति मानमनोहरकारोक्तान्यथाप्युपपत्त्या दूषयति—न। देशान्तरेत्यादिना। अनुदयमप्याह[4]—किं चेति। यद्यसतो न भान कथमसत्पद बोधक स्यात्? यदि चाबोधकमसत्पद कथमपार्थक नाम निग्रहस्थान न भवेत्?

प्राप्त होगा, क्योकि वे भी अधिष्ठान होने के कारण बाधक ज्ञान के विषय हैं। यदि कहें तीनो कालो मे होने वाले (न था, न है और न होगा—इस प्रकार के) निषेध को बाध और उसके विषय मे बाध्यत्व मानेगे, तो वह भी नही कह सकते, क्योकि भ्रान्ति काल मे प्रतीयमान शुक्त्यज्ञान का परिणामभूत प्रातीतिक रजत का त्रैकालिक निषेध नही होता, अत उसमे यह (त्रैकालिक निषेध-प्रतियोगित्व) लक्षण की अव्याप्ति (असम्भव) है और शुक्ति मे त्रैकालिक निषेध होता है—लौकिक पारमार्थिक (व्यावहारिक) रजत का, अत उसमे लक्षण अतिव्याप्त होता है। इसीलिए 'ज्ञायमान आश्रय मे निषेध का प्रतियोगित्व ही अनिर्वचनीयत्व है'—यह लक्षण भी खण्डित हो जाता है, वेदान्त-सिद्धान्त मे (इयं शुक्ति—इस प्रकार के) अधिष्ठान-ज्ञान से शुक्त्यज्ञान नष्ट हो जाता है, उसके नष्ट हो जाने से ही उसके कार्य रजतादि स्वय ही विलीन हो जाते है, ऐसे रजतादि का 'नेद रजतम्'—इससे न निषेध होता है और न निषेध करने की कोई आवश्यकता ही रह जाती है, अत उक्त लक्षण असम्भव-ग्रस्त है।

अनिर्वचनीयत्व मे प्रमाण भी क्या? यदि कहे कि 'ख्यातत्वे सति बाध्यत्वानुपपत्ति' रूप अर्थापत्ति प्रमाण है, क्योकि जो असत् पदार्थ है—नर-श्रृङ्गादि, उनकी ख्याति (प्रतीति) नही होती और जो सत् है—ब्रह्म, उसमे बाध्यत्व नही रहता, किन्तु शुक्ति रजत में दोनो (ख्यातत्व और बाध्यत्व) अनुभव मे आते है, अत उसमें अनिर्वचनीयत्व (सदसद्विलक्षणत्व) मानना होगा। तो वह कहना युक्त नही, क्योकि देशान्तर मे सत्ता मान लेने से रजत की ख्याति और शुक्ति मे न होने से बाध—दोनो की ही अन्यथा (अनिर्वचनीय न मानकर देशान्तर मे सत् मान लेने पर) भी उपपत्ति हो सकती है। 'असत् का भान नहीं होता'—यह आपका कहना असत्य भी है, क्योकि असत् का भी 'असन्' शब्द

१ द्र० न्या० म० पृ० ११३ तथा इ० सि० १।४२।२ लक्षणस्यासम्भव इत्यर्थः ३ असम्भवरूपम्। ४. अर्था

तच्छब्दाद्भानात् । अन्यथा त्वपार्थकत्व वाक्यस्य, प्रयुक्तपदाना संभूयकारित्वनियमात् । कि चेदं सद्विवक्षितम् ? कि सत्तायुक्तम ? अथाबाध्यम् ? उत ब्रह्मस्वरूपम ? नाद्य , सत्तायुक्तस्य प्रपञ्चस्य भवन्मते बाध्यतया यत्सत्तद्बाध्यमिति व्याप्तेरसिद्धे । न द्वितीय , यदबाध्यं तदबाध्यमिति साध्याविशिष्टत्वापत्ते । न तृतीय , सिद्धसाधनत्वात् , अर्थान्तरत्वाच्च । किचान्यथैवोपपत्तिरभ्यूहनीया , सद्विलक्षणत्वे नृशृङ्गवत्ख्यात्यनुपपत्ते , असद्विलक्षणत्वे चात्मवद्बा-

इति भावः । निरर्थक चात्रापार्थकत्वेन विवक्षितम् । नन्वसतोऽभानादित्यत्रासत्पदस्याबोधकत्वेऽपीतरपदाना बोधकत्वात्कथमपार्थकता ? तत्राह-प्रयुक्तपदानामिति । इदमपि तेनैवोक्त, यदाह 'असतो भासनायोगा'-दित्यादिनाशङ्क्य प्रथमं त्वसत्पदस्य बाधकत्वेऽसतो भासनायोगादित्यनेन व्याघातः । [2]अन्यथानर्थकत्व प्रयुक्तपदाना सभूयकारित्वनियमादिति । यत्तु तेनैव द्वितीये सत इति कोऽर्थं इत्यादिदूषणमुक्त तदाह—**कि चेद सद्विवक्षितमित्यादिना** । प्रथम दूषयति—**नाद्य इति** । यत्सत्तायुक्त तदबाध्यमिति व्याप्तिः क्व दृष्टा ? न तावत्प्रपञ्चे, तस्य सत्तायुक्तत्वेऽपि बाध्यत्वेन व्यभिचारभूमित्वात् । नापि ब्रह्मणि, तस्याबाध्यत्वेऽपि निर्धर्मकत्वेन सत्तायुक्तत्वाभावादिति भाव । द्वितीये तु सतो बाधाभावादिति कोऽर्थः ? योऽयमबाध्यस्तस्य बाधाभावादिति, तथाच साध्याविशिष्टत्वमित्याह—**न द्वितीय इति** । यद्ब्रह्मस्वरूप तदबाध्यमिति हि तृतीय. पक्ष । तथाचास्यार्थस्यास्माभिरङ्गीकारात्सिद्धसाधन प्रपञ्चस्यानिर्वचनीयत्वापर्यवसानादर्थान्तर चेत्यर्थ. । त्रीणि हि दूषणानि अर्थापत्ते —अन्यथैवोपपत्तिरन्यथाऽप्युपपत्तिरनुदयश्चेति । तत्रान्यथाऽप्युपपत्तिमनुदय चोक्त्वाऽन्यथैवोपपत्तिमाह—**किं चेति** । सद्वैलक्षण्येऽसद्वैलक्षण्ये उभयवैलक्षण्ये चानुपपद्यमानाभ्या ख्यातिबाधाभ्या सदसदात्मकत्वमेव रजतादे. सिद्ध्यतीत्यर्थं । स्यादेतत्—सद्विलक्षणत्व नृशृङ्गवत् ख्यात्यनुपपत्तिरित्युक्तमयुक्तम्, सद्वैलक्षण्यस्य सप्रतियोगिकतयाऽनेकज्ञानापेक्षस्य कल्पनागौरवेण भानाभाव प्रति प्रयोजकत्वायोगात्, एवमसद्वैलक्षण्येऽपि, तस्मादसत्त्वमेवाभाने प्रयोजक तद्धि निरपेक्ष लघ्विति, तथा बाधाभावेऽपि सत्त्वमेव प्रयोजक लघुत्वादेव, तदिह बाधो दृश्यमान सद्वैलक्षण्य गमयति ख्यातिश्चासद्वैलक्षण्य-

से भान होता है । यदि असत् शब्द से असदर्थ का भान नही होता है, तब आपका असत् पद-घटित वाक्य ( असतो भाव न भवति ) निरर्थक हो जायगा , क्योकि वाक्य के घटक सभी पद नियमत मिलकर वाक्यार्थ-बोध पैदा किया करते है, अत. एक पद के भी निरर्थक हो जाने से पूरा वाक्य ही निरर्थक हो जायगा । अर्थापत्ति प्रमाण का उपपादन करते समय आपने यह जो कहा कि "सतश्च चिदात्मनो बाधाभावेन"—इस से आपका तात्पर्य 'यत् सत्, तदबाध्यम्'—इस व्याप्ति मे है । यहाँ पर 'सत्' पद से क्या विवक्षित है ? सत्तायुक्त ? या अबाध्य ? या ब्रह्मस्वरूप ? प्रथम ( सत्तायुक्त ) पक्ष उचित नही, क्योकि सत्तायुक्त प्रपञ्च भी आपके मत से बाध्य है, अत प्रपञ्च में अबाध्यत्व रूप साध्य न रहने पर भी सत्ता रूप हेतु रहता है , इस लिए व्यभिचार हो जाने से आप की व्याप्ति ही सिद्ध नही हो सकती । द्वितीय ( अबाध्य ) पक्ष मे व्याप्ति का स्वरूप होगा—'यदबाध्यम्, तद-बाध्यम्'—यहाँ हेतु भी साध्यरूप हो गया, अर्थात् साध्य पक्ष मे सिद्ध नही, हेतु भी साध्य हो जाने से सिद्ध नही रहा, असिद्ध हो गया । तृतीय ( ब्रह्मस्वरूप ) पक्ष मे सिद्ध-साधन दोष है, क्योकि इस पक्ष मे व्याप्ति का स्वरूप बनेगा—'यद् ब्रह्मस्वरूपम्, तदबाध्यम्'—यह तो हम भी मानते है और इस व्याप्ति से भी प्रपञ्च मे अनिर्वचनीयत्व सिद्ध न होकर दूसरे धर्मो की सिद्धि होने से अर्थान्तरता दोष भी है । आपकी इसी अर्थापत्ति के द्वारा अन्यथा ( सदसद्—उभय रूप होने से ) ही ख्याति और बाध की उपपत्ति होती है, क्योकि सद्विलक्षण होने पर नर-श्रृङ्ग के समान ख्याति नही बनेगी और असद्विलक्षण मानने पर बाध नही बनेगा । इसी प्रकार सत् एव असत्—उभय

पत्तेरित्यादि. १. आदिना सता बाधनायोगादितिबोध्यम् २ अबोधकत्वे ।

वायोगादुभयविलक्षणस्योभयानुपपत्ते. । नच वाच्य सदसत्त्वे बाधाभावाभानप्रयोजके न तु तद्वैलक्षण्ये गौरवादिति, असतोपि तत्पदात्प्रतिभानेन सतोपि प्रपञ्चस्य बाध्यत्वदर्शने-नोक्तोत्तरत्वात् । तदेव नार्थापत्तिरनिर्वचनीये प्रमाणम् ।

अस्तु तर्ह्यनुमानम्—विवादपदमनिर्वाच्य, भ्रमविषयत्वात्, यन्नैवं तन्नैवं यथात्मा । नचाप्रसिद्धविशेषण पक्ष, इच्छादीनामष्टद्रव्यातिरिक्ताश्रितत्वानुमानवत्सामान्यत प्रसिद्धि-विशेषपरिशेषाभ्या तत्प्रसिद्ध्युपपत्तेरितिचेत्, न, शुक्त्यादावात्मनि च विपक्षे वर्तमानतया विरुद्धत्वात् । गुणत्वलिङ्गेन क्वचिदाश्रितत्वप्रसाधनवदनिर्वाच्यत्वसाधने लिङ्गाभावात् ।

मिति, तदेतदाशङ्क्य निषेधति—नच वाच्यमित्यादिना । उक्तान्यथोपपत्तिमेव दूषणमाह—असतोऽपीति ।

एवमर्थापत्ति दूषयित्वाऽनुमान शङ्कते—अस्तु तर्हीति । तत्र हि भ्रमविषयत्व हेतुरधिष्ठानतया भ्रमे प्रतिभासमाने शुक्त्यात्मादौ वर्तत इति विरुद्ध इत्याह—न शुक्त्यादाविति । किं च यथा तत्र गुणत्वेन सामान्यत क्वचिदाश्रितत्वसाधनम्, नैवमनिर्वाच्यत्वस्य सामान्येन साधने लिङ्गमस्ति किंचित्, ततो वैलक्षण्यमित्याह—गुणत्वेति । अप्रसिद्धविशेषणतापरिहारायान्वयव्यतिरेक्यनुमान न्यायरत्नदीपावलीस्थ

विलक्षण मानने पर ख्याति तथा बाध—दोनो ही उपपन्न नही होंगे, अत रजतादि मे सदसद्‌-उभय-रूपता ही सिद्ध होती है । यदि शंका हो कि बाधाभाव और भानाभाव के प्रयोजक सत्त्व और असत्त्व ही होते है सद्विलक्षणत्व और असद्विलक्षणत्व नही, क्योकि इसमे गौरव होगा । [ आशय यह है कि अर्थापत्ति दिखाने वाले ने कहा था कि सत् मानने पर रजतादि का बाध नही होगा और असत् मानने पर भान नही होगा—यहाँ बाधाभाव को सत्त्व और भानाभाव को असत्त्व प्रयोजक माना गया है । किन्तु अर्थापत्ति के खण्डन करने वाले का कहना है कि सद्विलक्षण मानने पर रज-तादि का भान नही होगा और असद्विलक्षण मानने पर बाध नही होगा—यहाँ पर भानाभाव का प्रयोजक सद्विलक्षणत्व को ओर बाधाभाव का प्रयोजक असद्विलक्षणत्व को माना गया । सत्त्वादि की अपेक्षा सद्विलक्षणत्वादि धर्मो मे शरीरकृत गौरव स्पष्ट ही है और प्रतियोग्यादि ज्ञान की अपेक्षा होने से सद्विलक्षणत्वादि मे आर्थिक गौरव भी है, अत लघुभूत सत्त्व और असत्त्व को ही बाधाभाव और भानाभाव मे प्रयोजक मानना चाहिए ] । तो वह शङ्का उचित न होगी, क्योकि असत्त्व को भानाभाव का प्रयोजक नही माना जा सकता, कारण कि असत् का भी 'असत्' शब्द से भान होता है, इसी प्रकार सत्त्व को बाधाभाव का प्रयोजक नही माना जा सकता, कारण कि सत् प्रपञ्च का भी बाध होता है—यह उत्तर दिया जा चुका है । इस प्रकार यह सिद्ध हुआ कि अनिर्वचनीयत्व मे अर्थापत्ति प्रमाण नही ।

शङ्का—अर्थापत्ति यदि नही, तो यह अनुमान प्रमाण मान लीजिए—'विवादग्रस्त ( रजतादि ) अनिर्वाच्य है, भ्रमके विषय होने से, जो वैसा नही, वह ऐसा नही, जैसे—आत्मा ।' यहाँ अनि-र्वाच्यत्वरूप साध्य की अप्रसिद्धि नही, क्योकि साध्य की यहाँ वैसे ही सामान्यत सिद्धि होगी जैसे कि नैयायिक इच्छादि मे अष्टद्रव्यातिरिक्तद्रव्याश्रितत्व के अनुमान मे ( जिसका निरूपण पूर्व पृ० २३ पर आ चुका है ) साध्य प्रसिद्ध किया करते हैं ।

समाधान—उक्त अनुमान मे हेतु विरुद्ध है, क्योकि शुक्त्यादि तथा आत्मा में अनिर्वाच्यत्व रूप साध्य नही माना जाता, अत. वे विपक्ष है, उनमे भी भ्रम-विषयत्व रूप हेतु रहता है । साध्या-प्रसिद्धि रूप दोष का भी परिहार नही होता, क्योकि दृष्टान्त ( इच्छादि मे अष्टद्रव्यातिरिक्त द्रव्या-श्रितत्वानुमान ) मे तो गुणत्व रूप हेतु से इच्छादि मे सामान्यत आश्रितत्वरूप साध्य सिद्ध किया जा सकता है—( इच्छादय क्वचिदाश्रिता, गुणत्वाद्रूपादिवत् ) किन्तु प्रकृत अनुमान के साध्य अनिर्वा-

अथैतद्दोषपरिजिहीर्षया विमतं सदसद्विलक्षणं दोषप्रयुक्तभानत्वात् भ्रान्तिसिद्धतादात्म्यवदिति प्रयुञ्जीत, तदप्यसत्, दृष्टान्तस्य साध्यविकलत्वात्। नहि शुक्तिरजततादात्म्यस्य सदसद्वैलक्षण्यं परीक्षकैरभ्युपगम्यते, येनोभयवादिसिद्धतया तस्य दृष्टान्तता स्यात्। अथ भावरूपतयाऽपरोक्षत्वेन भानाद्बाधाच्च तस्य सदसद्वैलण्यं युक्त्या साध्येत, तदा रजतस्यापि तथा तत्साधयितुं शक्यमिति व्यर्थोऽयं बकबन्धविधिप्रयासः। किंचेदं दोषप्रयुक्तभानत्वम्? किं दोषजन्यज्ञानविषयत्वम्? उत दोपजन्यप्राकट्याश्रयत्वम्? नाद्यः, ज्ञानस्यैकत्वेन तज्ज्ञानविषयाधिष्ठाने व्यभिचारात्। न द्वितीयः, प्रतिवादिनं प्रत्यसिद्धत्वात्—नहि देशकालव्यवहितस्य रजतादेर्दोषजन्यभानाश्रयत्वमुपपद्यतेऽभ्युपेयते वा परैः। किं चेदमनिर्वचनीयत्वं न भ्रान्तिज्ञानानुकूलम्, नापि बाधकज्ञानानुसारि, भ्रान्तौ सदिदं रजतमिति सत्त्वेन बाधे च

शङ्कते—अथैतद्दोपेति। साध्यवैकल्यमेव विशदयति—नहि शुक्तीति। अथ तादात्म्यस्य प्रथमं युक्त्या सदसद्वैलक्षण्यं प्रसाध्य तद्दृष्टान्तेन प्रपञ्चस्य तत्साध्यते, तर्हि सैव युक्तिरत्रैवोपन्यस्यतामलमनेन दण्डमर्पमारणन्यायेनेत्याह—अथ भावरूपतयेत्यादिना। भवतु वा यथाकथञ्चित्पर[2] तथापि हेतुरेवाय न घटत इत्याह—किं चेत्यादिना। भानशब्देन ज्ञानमभिधीयते? प्राकट्यं वेत्यर्थः। प्रथमेऽनैकान्तिकतामाह—नाद्यो ज्ञानस्येति। अधिष्ठानज्ञानस्यादोषजन्यत्वादितरस्य च ज्ञानत्वानङ्गीकारादसिद्धिरित्यप्येके। द्वितीये स्वरूपासिद्धिरित्याह—न द्वितीय इत्यादिना। यद्यपि स्वपक्षे भ्रमस्य साक्षिवेद्यतास्वीकारादस्त्येवापरोक्ष्यं तथापि विषयावच्छिन्नाभिव्यक्तचैतन्यरूपप्राकट्यं नास्तीत्यपि द्रष्टव्यम्। किं च यदुपपादनायेदमनिर्वचनीयत्वमाद्रियते ताभ्यामेव भ्रान्तिबाधाभ्या विरोधादयुक्तमेतदित्याह—किं चेदमिति।

च्यत्व की सामान्यत सिद्धि में भी कोई लिङ्ग नहीं। इस ( अप्रसिद्ध विशेषणता ) दोष का परिहार करने के लिए कुछ लोग जो यह अनुमान बनाया करते हैं—'विवादास्पद ( रजतादि ) सदसद्विलक्षण है, दोष-प्रयुक्त भान का विषय होने से, जैसे-भ्रान्ति-सिद्ध ( शुक्ति रजत का ) तादात्म्य।' उनका यह अनुमान-प्रयोग युक्त नहीं, क्योकि दृष्टान्त ( तादात्म्य ) साध्य-विकल है, कारण यह कि शुक्ति-रजत-तादात्म्य में परीक्षको की दृष्टि से अभी तक अनिर्वाच्यत्व सिद्ध नही हुआ, कि उसे उभय मत-सिद्ध दृष्टान्त बनाया जा सके। यदि कहा जाय कि शुक्ति-रजत-तादात्म्य भावरूप है, अपरोक्ष है और बाधित होता है—इन युक्तियो से उसमें अनिर्वचनीयत्व सिद्ध कर लगे, तब तो उन्ही युक्तियो से सीधे रजत मे भी अनिर्वाच्यत्व सिद्ध किया जा सकता है, यह बक-बन्ध-प्रयास व्यर्थ है। ( साध्य की प्रसिद्धि, किसी तरह मान भी ले फिर भी हेतु ठीक नही जँचता, क्योकि ) 'दोष-प्रयुक्त भानत्व' का क्या अर्थ? दोष-जन्य ज्ञान-विषयत्व? या दोष-जन्य प्राकट्य ( अपरोक्षता ) का आश्रयत्व? प्रथम ( दोष-जन्य ज्ञान-विषयत्व ) हेतु तो व्यभिचारी है, क्योकि अधिष्ठान और आरोप्य—दोनो को विषय करने वाला ज्ञान तो एक ही है, अत उस ज्ञान की विषयता सद्रूप अधिष्ठान में भी है। दूसरा ( प्राकट्य-आश्रयत्व ) प्रतिवादी के प्रति सिद्ध है नही, क्योकि देश, काल-व्यवहित रजत मे दोष-जन्य ऐन्द्रियक भानाश्रयत्व न तो उपपन्न ही है और न दूसरे मानते ही है। दूसरी बात यह भी है कि ( जिस भ्रान्ति और बाध की उपपत्ति के लिए रजतादि मे अनिर्वाच्यत्व की कल्पना करना चाहते है ) वह अनिर्वाच्यत्व न तो भ्रान्ति ज्ञान के ही अनुकूल है और न बाधक-

१. यत्रायासं विना साक्षात् सिद्ध्यन्तमर्थमुपेक्ष्यायासेन परम्परया स एवार्थः साध्यते तत्राय न्यायः प्रवर्तते। कश्चित् सर्पं दृष्ट्वा तन्मारणाय दण्डमिच्छंस्तमलभमानश्च कुठारं गृहीत्वा तच्छेदाय प्रवर्तते। तस्य स आयासो वृथैव, कुठारेणैव सर्पस्य शक्यबधत्वात्। अत्रैव बकबन्धन्यायोऽपि प्रवर्तते—बकं जिघृक्षुः कश्चित् सूर्यरश्मिसन्तप्ते तच्छिरसि नवनीतं निधाय विलीनेन तेन बकनेत्रयोः पूर्णयोरन्धीभूतं तं जिघृक्षति। २. साध्यम्।

नेदं रजतमित्यसत्त्वेन स्फुरणात्।

अपि चानिर्वचनीये रजतशब्दो न जातिनिबन्धनस्तत्र जातेरभावात्, भावे वा सत्यरजतवदेवाबाध्यत्वप्रसङ्गात्। नाप्यौपाधिक, पाचकादिशब्दवदखण्डशब्दत्वात्, उपाधेरनिरूपणाच्च। नाप्यक्षादिशब्दवद्रूढ, स्वभ्रान्तिमात्रसिद्धस्यान्यत्रादृष्टचरत्वेन रजतस्य तेनागृहीतसंबन्धत्वात्। किं चानिर्वचनीय चेद्रजतम्, न प्रतीयेत। तथा हि किं दुष्टेन्द्रियेण तत्प्रतीतिः? उत संस्कारात्? अथवा साक्षिचैतन्यात्? नाद्य, तस्य प्रतिभासमात्रशरीरतया सप्रयोगा-

रजतशब्दप्रयोगानुपपत्तिरप्यनिर्वचनीयत्वबाधिकेत्याह—**अपि चानिर्वचनीयेति**। तत्र वक्तव्य किमयमनिर्वचनीये रजते रजतशब्दो जातिनिबन्धन ? किंवोपाधिनिबन्धन: ? किंवाक्षादिशब्दवद्रूढ: ? इति विकल्पयाद्य निषेधति—**न जातिनिबन्धन इति**। अङ्गीकारे बाधकमाह—**भावे वेति**। रजतत्वाधिकरण हि रजत नाम तदिदमपि चेत्तथाविध तद्वदेवाबाध्यमपि स्यादित्यर्थ। द्वितीय निषेधति—**नापीति**। हेतुमाह—**अखण्डशब्दत्वादिति**। अयौगिकत्वात्। यथाहि पाचक इत्यत्रावयवशक्त्या पचिक्रियासबन्धाभिधानेन तद्युक्ते वर्तन नैव रजतशब्दस्यास्ति, ण्वुलादिवत्कर्त्रादिविहितप्रत्ययाभावादित्यर्थ। अथ यथाऽखण्डत्वेऽपि जातिशब्दस्योपाधिवाचकत्व तद्वत्किं न स्यादित्यत आह—**उपाधेरिति**। तृतीय निषेधति—**नाप्यक्षादीति**। यद्यप्यक्षादौ न सर्वत्रानुगत कश्चिज्जातिरुपाधिर्वार्थोऽस्ति येन साधारणशब्दत्व तथापि विभीतकत्व[1]विदेवनत्वादिभिरवान्तरधर्मै शक्य: सङ्गतिग्रह, आकाशादेश्चानादिवृद्धव्यवहारप्रसिद्धतया, इह तु न तथाविधमपि किञ्चिदस्ति, भ्रान्तिसिद्धस्य प्रतीतिमात्रजीवनत्वात्। प्रतीतेश्च प्रत्यात्मवृत्तित्वादतोऽगृहीतसङ्गतिकत्वादप्रयोग एवात्र रजतशब्दस्य प्रसज्येतेत्यर्थ। अनिर्वचनीयत्वे रजतस्य प्रतीत्यनुपपत्तिरपि बाधिकेत्याह—**किं चानिर्वचनीयचेदिति**। इन्द्रियेण प्रतीतिरिति प्रथम पक्ष निराचष्टे—**नाद्य इति**। इन्द्रियव्यापारात्पूर्वमेव निर्वृत्त पश्चादिन्द्रियसप्रयोगाज्ज्ञायमान ह्यैन्द्रियकम्, न चैव

ज्ञान के, क्योंकि भ्रान्ति में ( सदिद रजतम्—इस प्रकार ) सद्रूप से और बाध में ( नेद रजतम्—इस प्रकार ) असद्रूप से रजत का भान होता है, सदसद्विलक्षणत्वरूप से कही नही प्रतीत होता।

दूसरी बात यह भी है कि अनिर्वचनीय वस्तु में 'रजत' शब्द जाति-निबन्धन प्रवृत्त नही हो सकता, क्योंकि वहाँ 'रजत्व' जाति नही रहती। यदि 'रजत्व' जाति वहाँ मानी जायगी, तब वह भी सत्य रजत हो जाने से बाध्य नही होगी। आरोप्य में 'रजत' शब्द औपाधिक भी नही, क्योंकि 'पाचक' आदि यौगिक शब्दों के समान 'रजत' शब्द, खण्ड ( यौगिक ) शब्द नही। [ भाव यह है कि जैसे 'पाचक' शब्द यौगिक होने से, पाककर्तृत्व रूप उपाधि के निमित्त से प्रवृत्त हो जाता है, वैसा 'रजत' शब्द यौगिक नही कि किसी उपाधि के निमित्त से आरोपित में प्रवृत्त हो जाय ]। उपाधि का निरूपण भी यहाँ नही हो सकता। 'रजत' शब्द अक्षादि शब्दों की तरह रूढ भी नही, क्योंकि ( जैसे 'अक्ष' शब्द लोक में प्रसिद्ध इन्द्रिय, पासा आदि अर्थों में प्रचलित है, उनमें शक्ति-ग्रह सहज है, वैसे ) 'रजत' शब्द का अर्थ लोक-प्रसिद्ध नही, अपितु व्यक्तिगत भ्रान्ति मात्र से सिद्ध है, जो कि अन्यत्र कही देखा नही जाता (क्योंकि एक व्यक्ति की भ्रान्ति का विषय दूसरा कैसे देखेगा ?) अत उस ( आरोपित ) अर्थ में शक्ति-ग्रह नही होगा, बिना शक्ति-ग्रह के 'रजत' पद का प्रयोग ही नही हो सकता। अनिर्वचनीय माने जाने पर रजत की प्रतीति भी नही होगी, क्योंकि यदि उसकी प्रतीति होगी, तब किससे ? दूषित इन्द्रिय से ? या सस्कार से ? या साक्षिचैतन्य से ? दूषित इन्द्रिय से तो उसकी प्रतीति हो नही सकती, क्योंकि वह केवल भ्रान्ति-कल्पित है, उसके साथ

१. विभीतकत्वम् = अर्थविषयकबोधजनकत्वरूपोधर्म इन्द्रियपदप्रवृत्तिनिमित्तम्। विभीतकत्वमित्यपि पाठ.।

योग्यत्वात्। न द्वितीय , अननुभूते सस्काराभावात्। न तृतीय , इन्द्रियान्वयव्यतिरेकानुविधायिन केवलसाक्षिवेद्यत्वासम्भवात्। नचाधिष्ठानविषयतयान्वयव्यतिरेकयोरन्यथासिद्धि , तथासति ज्ञानद्वयस्वीकारेणाख्यातिमतानुमतिप्रसङ्ग । नच संसर्गप्रतीतेरभ्युपगमान्नाख्यातिप्रसङ्ग , तथापि विज्ञानद्वयाभ्युपगमेनाख्यातिप्रसङ्गस्य दुर्वारत्वात्, इदमाकारविषयमिन्द्रियजन्य ग्रहण रजततत्संसर्गविषय साक्षिचैतन्यमित्यभ्युपगमात्। तदित्थ लक्षणप्रमाणयोरनिरूपणान्नानिर्वचनोयावभासो विभ्रम इति ।

अत्रोच्यते—प्रत्येक सदसत्त्वाभ्यां विचारपदवी न यत्।
गाहते तदनिर्वाच्यमाहुर्वेदान्तवेदिन. ॥ १३ ॥

सत्त्वेनासत्त्वेन च विचारासहत्वे सति सदसत्त्वेन च यद्विचारं न सहते तदनिर्वाच्यम्।

प्रतीतिमात्रशरीर रजतमित्यर्थ । **अननुभूत इति** । प्रतीतिसमसमयशरीरस्य पूर्वानुभवाभावात्सस्काराभावे न तत प्रतीतिरित्यर्थ । साक्षिवेद्यता निराचष्टे—**न तृतीय इति** । यत्र हीन्द्रियादिव्यापाराभावेऽप्यापरोक्ष्य यथाऽज्ञानादौ तत्साक्षिवेद्य नाम इतरथातिप्रसङ्गात, नचेह तथाभाव इत्याह—**इन्द्रियान्वयेति** । ननु यद्यप्यधिष्ठानविषयतया अन्वयव्यतिरेकयोरन्यथासिद्धत्वान्न रजतज्ञानमिन्द्रियजम्, अपि त्वविद्यापरिणाम इति ज्ञानद्वित्वमङ्गीक्रियते, तथापि ससर्गज्ञानस्वीकाराद्नाख्यातिप्रसक्तिरिति तत्राह—**नच संसर्गेति** । कि चेन्द्रियान्वयव्यतिरेकयोरधिष्ठानोपक्षये स्पर्शनेनापि तद्ग्रहे तादृशभ्रमप्रसङ्गः । नच तेन सादृश्याग्रहादप्रसङ्ग , विसदृशेऽपि तद्दृष्टेरिति । ज्ञानद्वित्वाभ्युपगममेव प्रकटयति—**इदमाकारेत्यादिना** । **रजततत्संसर्गेति** । तज्ज्ञानाकाराविद्यापरिणामस्याप्युपलक्षणम् । पूर्वपक्षमुपसहरति—**तदित्थमिति** । तत्र लक्षण श्लोकेन सगृह्णाति—**प्रत्येकमिति** । यत्प्रत्येक सदसत्त्वाभ्या सत्त्वेनासत्त्वेन सदसत्त्वेन च विचारपदवी विचारमार्गं न गाहते न प्रविशति तदनिर्वचनीयमिति वेदान्तवेदिन आहुरिति योजना । अत्र सदसत्त्वाभ्या विचारपदवी न गाहते यत्तदनिर्वाच्यमित्युक्ते सदसतोरतिव्याप्ति , तयोरप्युभयप्रकाराभ्यामनिर्वाच्यत्वादत उक्तम्—**प्रत्येकमिति** । तयो प्रत्येक विचारसहत्वात् । तावत्युक्ते समुदितयो सदसतोरतिव्याप्ति , तदर्थं—**सदसत्त्वाभ्यामित्युक्तम्** । सगृहीत लक्षण विवृणोति—**सत्त्वेनासत्त्वेनेत्यादिना** । एतदुक्त भवति—

इन्द्रिय-सम्बन्ध सम्भव नही। दूसरा ( सस्कार ) पक्ष भी उचित नही , क्योकि उसका जब कभी अनुभव ही नही हुआ, तब उसका सस्कार कहाँ से आएगा ? तृतीय ( साक्षिचैतन्य ) पक्ष भी युक्त नही , क्योकि ( जिन पदार्थों का इन्द्रिय-व्यापार के बिना ही अपरोक्ष हो, उन्हे साक्षि-भास्य कहा करते है किन्तु ) रजत का भान इन्द्रि-व्यापार के बिना होता नही, अपितु इन्द्रिय की सहायता से ही हुआ करता है, अत केवल साक्षि-भास्य नही हो सकता । यदि कहा जाय कि इन्द्रिय का अन्वय-व्यतिरेक अधिष्ठान ( शुक्ति ) के ज्ञान मे चरितार्थ है अर्थात् इन्द्रिय की अपेक्षा केवल शुक्ति-ज्ञान मे है, रजत-ज्ञान मे नही । तब तो दो ज्ञान ( एक इन्द्रिय-जन्य अधिष्ठान-ज्ञान और दूसरा इन्द्रिय-सहायता के बिना आरोपित रजतादि का ज्ञान ) मानने से अख्याति-मत ( प्राभाकर-सिद्धान्त ) मानना पड जायगा । यदि कहे कि अख्याति-वादी 'इद रजतम्'—इस ज्ञान मे ससर्ग ( शुक्ति-रजत-तादात्म्य ) का भान नही मानते, किन्तु हम मानते है, अत अख्याति-मत की आपत्ति क्यो होगी ? तो वह कहना भी उचित नही , क्योकि फिर भी दो ज्ञान आप मान लेते है, अत अख्याति-मत-प्रसङ्ग दुर्वार है , अर्थात् दो ज्ञान तो आप मानते ही है—एक इदमाकार विषयक ज्ञान, जो इन्द्रिय-जन्य है और दूसरा रजत एव रजत-ससर्ग को विषय करने वाला साक्षिचैतन्य रूप ज्ञान । इस प्रकार लक्षण और प्रमाण न बन सकने के कारण अनिर्वचनीयत्व सिद्ध नही होता ।

उत्तरपक्ष—अनिर्वचनीयत्व का लक्षण सुसम्पन्न है—'प्रत्येक तथा सदसत्-उभय रूप से विचार की कक्षा मे नही आता, उसे ही वेदान्त-वेत्ता अनिर्वाच्य कहा करते है ।' अर्थात् जिसका सत्त्वरूप

न चैवंसत्यव्याप्तिरतिव्याप्तिर्वा, सर्वभ्रमगोचराणां तथाभावनियमात्, सदादीनां च तत्तद्विचारसहत्वेन परैरभ्युपगमाच्च। एवं च सति निरुक्तिविरहः, किं वा निरुक्तिनिमित्तस्य च विरह इत्यादिविकल्पोऽकाण्डताण्डवितम्, निरुक्तेर्निमित्तभूतायाः प्रतीतेस्तदालम्बनस्य चार्थस्य व्यवहारगोचरत्वेऽपि सदसदादिप्रकारैर्निश्चित्य वक्तुमनर्हत्वाङ्गीकारात्। न च परस्परविरुद्धयोः सदसत्त्वयोर्निषेधसमुच्चयोऽनुपपन्नोऽन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वादिति युक्तम्, निषेधसमुच्चयस्य तात्त्विकत्वानङ्गीकारात्। तत्तत्प्रतियोगिदुर्निरूपतामात्रप्रकटनाय तद्विलक्षणत्वाभिलापः। न हि स्वरूपतो दुर्निरूपस्य किंचिदपि रूपं वास्तवं संभवति, तथा सति तस्यापि तात्त्विकत्वप्रसङ्गात्। न चैकतरनिषेधोऽन्यतरविधिनान्तरीयकः, अनिर्वचनीयवादिनं प्रति व्याप्त्यसिद्धेः।

---

न प्रकारत्रितयप्रतियोगिकाभाववत्त्वमनिर्वचनीयत्वं किंतु प्रकारत्रयप्रतियोगिकाभावत्रयवत्त्वमनिर्वचनीयत्वमिति। अव्याप्त्यभावमाह—**सर्वभ्रमेति**। अतिव्याप्त्यभावमाह—**सदादीनामिति**। एवं च सति यदुदयनेन तात्पर्यपरिशुद्धौ हि द्वितीयसूत्रे विपर्ययविचारावसरे गर्जितं 'किमिदमनिर्वचनीयत्वम्? किं निरुक्तिविरह एव?' इत्यादि, तदस्थाने एवानाकलितपराभिसन्धिना संभ्रान्तमित्याह—**एवं च सतीति**। **अकाण्डताण्डवितम**नवसरनर्तनम्। तत्र हेतुः—**निरुक्तेरिति**। न निरुक्तिमात्रस्य तन्निमित्तस्य वाऽभावोऽनिर्वचनीयत्वं किंतु सदादिप्रकारैर्निश्चित्य वक्तुमनर्हत्वमित्यर्थः। यत्त्वत्रापि तेनोक्तं तदनूद्य निराकरोति—**न च परस्परेति**। समुच्चयानुपपत्तौ हेतुः—**अन्यतरनिषेधस्येति**। न च युक्तमित्युक्तं तत्र हेतुमाह—**निषेधसमुच्चयस्येति**। अनुपपन्न इति कोऽर्थः, यदि प्रमाणयुक्त्याघातं न सहत इति सिद्धमेवेदमस्माकमद्वैतवादिनामिति भावः। करतर्हि सदसद्विलक्षणशब्दार्थस्तत्राह—**तत्तत्प्रतियोगीति**। प्रतियोगी सत्त्वादिः। किमुत्तरकातरतयेयमाश्रीयते विधा? न, अपरथाऽसंभवादित्याह—**न हि स्वरूपत इति**। स्वरूपेण सदसत्त्वादिभिर्दुर्निरूपस्य प्रपञ्चस्य योऽयं सदसद्वैलक्षण्यं धर्मः तस्य कथं सदादित्वेन निरूपणं भवः, तथात्वे वा तदाश्रयस्यापि तथात्वप्रसङ्गादित्यर्थः। किं चाङ्गीकृत्य व्याप्तिमिदमुक्तं सैव नास्तीत्याह—**न चैकतरेति**।

---

से, असत्त्वरूप से तथा सदसत्–उभयरूप से निरूपण नहीं हो सकता, वही अनिर्वाच्य है। इस लक्षण की कहीं अव्याप्ति नहीं, क्योंकि सभी विभ्रम-विषय इसी प्रकार के माने जाते हैं। अतिव्याप्ति भी कहीं नहीं, क्योंकि सत् आत्मादि का सद्रूप से और असत् नर-विषाणादि का असद्रूप से निरूपण दूसरे भी मानते हैं। इस प्रकार आरम्भ में दिखाये गये उदयनाचार्य के 'अनिर्वाच्यत्व क्या निरुक्ति-विरह है? या निरुक्ति-निमित्त का विरह'—ये विकल्प अकाण्ड-ताण्डव मात्र रह जाते हैं, क्योंकि निरुक्ति के निमित्तभूत ज्ञान और रजतादि विषय का विरह हम नहीं कहते, वे दोनों व्यवहार के विषय हैं, अपितु 'सदसदादि तीन प्रकारों से निश्चय-पूर्वक निर्वचन न हो सकना'—यह अनिर्वाच्यत्व हम मानते हैं। यह जो कहा था कि परस्पर विरुद्ध सत्त्व और असत्त्व के निषेधों का समुच्चय नहीं बन सकता, क्योंकि दोनों में से अन्यतर का निषेध करने पर दूसरे का विधान अनिवार्य हो जाता है। वह कहना युक्त नहीं, क्योंकि उन दो निषेधों का तात्त्विक समुच्चय हम नहीं मानते। सत्त्वादि रूप प्रतियोगी से उस ( सदसद्विलक्षणत्व ) की दुर्निरूपता व्यक्त करने के लिए केवल 'सदसद्विलक्षणत्व' शब्द का प्रयोग किया जाता है। सदसद्विलक्षणत्व उसमें पारमार्थिक नहीं, क्योंकि जो रजतादि प्रपञ्च स्वरूपतः अनिरूप्य है, उसमें कोई ( सदसद्विलक्षणत्वादि ) रूप धर्म वास्तविक कैसे सम्भव होगा? यदि सम्भव हो तो वह भी तात्त्विक हो जायगा। 'जहाँ-जहाँ विरोधी धर्मों में से एक का निषेध होता है, वहाँ-वहाँ दूसरे धर्म की अनिवार्य विधि होती है'—यह व्याप्ति अनिर्वचनीय-वादी के प्रति असिद्ध है।

ज्ञानबाध्यत्वं वाऽनिर्वचनीयत्वम्। न च पूर्वज्ञानसंस्कारयोरतिव्याप्तिः, तयोर्ज्ञाननाश्यत्वेऽपि ज्ञानबाध्यत्वाभावात्। बाधो हि नाम प्रतिपन्नोपाधावभावबोधनम्। न च पूर्वज्ञानस्य तत्संस्कारस्य वा प्रतिपन्नोपाधावात्मनि नासीदात्माधिकरण ज्ञानं संस्कारो वेत्यभावो बोध्यते। ईश्वरस्य ज्ञानेन च मुद्गरप्रहारेणेव घटादेः प्रपञ्चस्य प्रध्वस एव क्रियते नाभावबोधनमतो नातिव्याप्तिः। एतेन बाधकज्ञानविषयत्वाच्छुक्त्यादेर्ब्रह्मणश्चानिर्वाच्यत्वप्रसङ्ग इत्यपास्तम्, धर्मितया बाधकज्ञानप्रतिपन्नत्वेऽपि बोध्यमानाभावप्रतियोगित्वाभावात्। अत एव प्रतिपन्नोपाधौ नाभूदस्ति भविष्यतीति कालत्रयसत्तानिषेधो बाधस्तद्विषयत्व च बाध्यत्वमिति केचिदाचार्याः। न चाव्याप्त्यतिव्याप्ती, शुक्तिशकले प्रतिपन्नस्य रजतस्य कालत्रयेऽपि तत्र सत्ताभावस्य नेदं रजतमिति बाधेन बोध्यमानत्वात्, लौकिकपरमार्थरजतस्य देशान्तरादौ सत्त्वेन प्रमितस्य तत्रासत्त्वबोधनस्याशक्यत्वात्। तस्य शुक्तिकाशकले कालत्रयासत्त्वं बोध्यत इति चेत्, न, तस्यात्राप्रसक्तेः। रजताभासप्रसक्तिरेव तत्प्रसक्तिरिति चेत्, मैवम्, रजताभास इत्य-

---

तृतीयमपि लक्षण समर्थयते—**ज्ञानबाध्यत्व वेति**। पूर्वज्ञानादौ ज्ञानबाध्यत्वलक्षणाभाव दर्शयितु बाधस्वरूपमाह—**बाधो हि नामेति**। अभावबोधनप्रकारमेवानुकरोति—**नासीदात्माधिकरण ज्ञान संस्कारो वेति**। यत्त्वीश्वरज्ञाननिवर्त्यत्वस्वीकारादतिव्याप्तिरिति तत्राह—**ईश्वरज्ञानेन चेति**। अत्यन्ताभावबोधन हि बाध, नतु ध्वसकरणमित्यर्थ.। एतेनेत्यस्यैव विवरणम्—**धर्मितयेति**। यत्तु बाधलक्षणमनूद्याव्याप्त्यतिव्याप्तिभ्या दूषयाम्बभूव, तदपि परिहर्तुमुपक्रमते—**अतएवेति**। यत एव निषेधोऽभावबोधनमत एवेत्यर्थ। अव्याप्ति निराकर्तुमाह—**शुक्तिशकले प्रतिपन्नस्येति**। नहि नेद रजतमित्यस्यायमर्थः, यदिदानीं रजत न भवतीति भाव'। नन्वय निषेधो लौकिकपरमार्थरजतविषयस्तथा च तत्रैव तावदतिव्याप्ति अत्रचासिद्धिरिति तत्राह—**लौकिकपरमार्थेति**। तत्रेद वक्तव्यम्—किं यत्रेद सत्त्वेन प्रमित हट्टादा तत्रैव निषेध ? किंवा शुक्तौ ? न तावद्देशान्तरे, तत्र सत्ताग्राहकप्रमाणविरोधादित्यभिधाय द्वितीय शङ्कत—**तस्य शुक्तिकाशकलेति**। अत्राप्रतीतस्य न निषेध सम्भवतीति परिहरति—**न, तस्येति**।

---

अथवा 'ज्ञान-बाध्यत्व'—यह अनिर्वचनीयत्व का लक्षण करते है। उत्तर ज्ञान से निवर्त्य पूर्व ज्ञान तथा उत्तर ज्ञान के सस्कारो मे जो अतिव्याप्ति दी थी, वह युक्त नही, क्योकि वे पूर्वज्ञान तथा सस्कार ज्ञान-नाश्य होने पर भी ज्ञान-बाध्य नही माने जाते, कारण यह कि बाध नाम है—प्रतीयमान आश्रय मे अत्यन्ताभाव-बोधन। किन्तु उत्तर ज्ञान, पूर्वज्ञान तथा अपने सस्कारो के ('आत्मा मे ज्ञान और सस्कार कभी नहीं थे'—इस प्रकार) अत्यन्ताभाव का बोधन नही करता। ईश्वर-ज्ञान-निवर्त्य घटादि मे जो अतिव्याप्ति दी थी, वह भी नही लगती, क्योकि ईश्वर-ज्ञान भी मुद्गर-प्रहार की भॉति घटादि का ध्वसक ही है, उनके आश्रय मे अत्यन्ताभाव का बोधन नहीं करता। इसी से बाधक ज्ञान विषयता रहने के कारण शुक्त्यादि तथा ब्रह्म में दी गई अनिर्वाच्यत्वापत्ति का भी वारण हो जाता है, क्योकि शुक्त्यादि, अधिष्ठान होने के कारण बाधक ज्ञान के विषय तो है, किन्तु आश्रय मे बोध्यमान अत्यन्ताभाव के प्रतियोगी नही। इसीलिए 'ज्ञायमान आश्रय मे (न था, न है और न होगा—इस प्रकार) कालत्रय मे सत्ता का निषेध, बाध है और उसका विषयत्व ही बाध्यत्व है'—यह बाध्यत्व का लक्षण कुछ आचार्यो ने किया है। इस लक्षण की भी कही अव्याप्ति नही, क्योकि शुक्ति-शकल मे प्रतीयमान रजत की त्रैकालिक सत्ता का निपेध 'नेद रजतम्'—इस बाध से बोधित है। लौकिक पारमार्थिक (व्यावहारिक) रजत (जिसकी देशान्तर मे सत्ता प्रमाणित है) की वहॉ (देशान्तर मे) असत्ता का बोधन सम्भव नही और उस (व्यावहारिक) का शुक्ति-खण्डो मे भी त्रैकालिक निषेध नही किया जा सकता, क्योकि वहॉ वह प्रसक्त ही नही। यदि कहे कि रजताभास की प्राप्ति ही शुक्ति-खण्डो मे व्यवहारिक रजत की प्राप्ति

प्रतीतेरिदं रजतमित्येव प्रतीतेश्च। प्रतिपन्नोपाधौ निषेधात्तदाभासता पश्चान्निश्चीयते इति-चेत्, एवं तर्हि नाव्याप्तिः, प्रतिपन्नोपाधौ तस्य निषेधस्य त्वयाङ्गीकारात्। अत एव न देशान्तरादौ प्रमितस्य लौकिकपरमार्थरजतस्यैतन्निषेधप्रतियोगित्वम्, आभासविषयत्वात्तस्य। अन्यथा जगति रजतमेव न स्यात्। तस्माल्लौकिकपरमार्थरजतमेव नेदं रजतमिति निषेधप्रतियोगीति पूर्वाचार्यवाचोयुक्तिरपि पुरोवर्तिनि रजतार्थिनः प्रवृत्तिदर्शनाल्लौकिकरजतात्मत्वेनापरोक्षतया प्रतीतस्य कालत्रयेऽपि लौकिकरजतमिदं न भवतीति निषेधप्रतियोगितामङ्गीकृत्य नेतव्या। न चैवं सत्यन्यथाख्यातेः प्रसक्तिः, संसर्गवत्संसर्गिणोऽपि ख्यातिबाधान्यथानुपपत्त्या

---

ननु यद्यपि तस्यात्र न साक्षात्प्रसक्तिस्तथापि रजताभासः प्रतीतस्तद्द्वारा रजतत्वसाम्यात् तदपि प्रसक्तमिति शङ्कते—**रजताभासेति**। तत्र किं भ्रमकाले रजताभासतयावभासस्तत्प्रसक्तिः? उत दैवगत्या तथाभूतस्य स्वरूपेण? नाद्य इत्याह—**मैव रजताभासेति**। द्वितीयं शङ्कते—**प्रतिपन्नेति**। तत्किं प्रतिपन्नशुक्तिकाद्युपाधौ रजतादेः कालत्रयसत्तानिषेधरूपबाधविषयत्वमङ्गीकृतं रजतादेराभासतासिद्धये? तथाचायुष्मतैवाव्याप्तिः परिहृतेत्याह—**एवं तर्हीति**। ननु तथापि तद्द्वारा लौकिकरजतप्रसक्तिरस्त्यस्तीति नेत्याह—**अत एवेति**। **आभासविषयत्वादिति**। आभासविषयत्वेन त्वयाप्यङ्गीकारादित्यर्थः। न केवलं तवाङ्गीकारः, अनुपपन्नश्च लौकिकरजतनिषेध इत्याह—**अन्यथेति**। रजततदाभासयोरैक्यायोगाद्रजताभाससम्यग्रजतविषयकप्रतीतिद्वयाभावाच्चाप्रसक्तस्यैव सम्यग्रजतस्य निषेध इति वक्तव्यम्, तथा च यत्र यत्र प्रमितं तत्र सर्वत्र निषेधः स्यादित्यर्थः। नन्वेवं सति विवरणकाराचार्यवचनविरोध इत्यत आह—**तस्मादिति**। ननु लौकिकपरमार्थरजतात्मत्वेन चेत्प्रतीतं निषिध्यते, तर्ह्यन्यथाख्यात्यापातः, देशान्तरस्थरजतस्यात्र प्रतीतस्य निषेध इति हि तेषामपि मतमित्यत आह—**नचैवं सतीति**। **संसर्गवदिति**। संसर्गस्य सदसद्वै-

---

है, तो वह नहीं कह सकते, क्योंकि शुक्ति-खण्डों में रजताभास भी कहाँ प्राप्त है? वहाँ 'इदं रजतम्'—इस प्रकार रजत की प्रसक्ति प्रतीत हो रही है, रजताभास की नहीं। यदि कहें कि रजतरूप से वहाँ प्रसक्त तो रजताभास ही है, किन्तु उसमें आभासता का निश्चय पश्चात् होता है, तब तो अव्याप्ति भी नहीं रही, क्योंकि प्रतीयमान आश्रय शुक्ति-खण्डों में उसका त्रैकालिक निषेध आपने मान लिया। [ आशय यह है कि पूर्वपक्षी का कहना था कि शुक्ति-शकलों में त्रैकालिक निषेध होता है व्यावहारिक रजत का। प्रातीतिक रजत का वहाँ त्रैकालिक निषेध हो नहीं सकता, क्योंकि प्रतीति काल में उसकी वहाँ सत्ता मान ली गई है। अतः प्रातीतिक रजत में त्रैकालिक निषेध प्रतियोगिता न होने से लक्षण की अव्याप्ति है। सिद्धान्ती के क्षोद-क्षेम करने पर उसे मानना पड़ा कि शुक्ति-खण्डों में रजताभास की प्रसक्ति है, हाँ! आभासता का निश्चय पश्चात् होगा। इस पर सिद्धान्ती का कहना है कि शुक्ति रजत में आभासता क्या है? तीनों कालों में वहाँ रजत की सत्ता न होने पर भी रजत की प्रतीयमानता—यही मानना होगा। तब तो पूर्वपक्षी ने अपने आप ही मान लिया कि शुक्ति-खण्डों में प्रतीयमान रजत का वहाँ त्रैकालिक अभाव है, फिर अव्याप्ति कहाँ रही? ]। इसीलिए देशान्तरस्थ व्यावहारिक रजत में शुक्तिनिष्ठ निषेध की प्रतियोगिता न होने से वहाँ अतिव्याप्ति भी नहीं, क्योंकि 'नेदं रजतम्'—यह निषेध रजताभास को ही विषय करता है, व्यावहारिक रजत को नहीं। अन्यथा जगत में रजत ही न रहेगा। अतः विवरणाचार्य के "लौकिक पारमार्थिक रजत ही 'नेदं रजतम्,—इस निषेध का प्रतियोगी है"—ऐसा कहने का आशय यह है कि पुरोवर्ति वस्तु में प्रवृत्ति देखी जाती है, इसलिए लौकिक रजतरूपत्वेन अपरोक्ष प्रतीत रजत में 'तीनों कालों में यह व्यावहारिक रजत नहीं हो सकता'—इस प्रकार के निषेध की प्रतियोगिता है।'व्यावहारिक रजत रूप से प्रतीत रजत का यदि निषेध मानेंगे, तब तो अन्यथाख्याति

सदसद्विलक्षणताङ्गीकारात् । एवं च सति कुतोऽतिव्याप्तिः ?

प्रमाणं च तत्र ख्यातत्वे सति बाध्यत्वान्यथानुपपत्तिः । न च देशान्तरे सत्त्वादत्रासत्त्वाच्च ख्यातिबाधयोरन्यथाप्युपपत्तिः, अन्यत्र सत्ताया इह प्रतीत्यहेतुत्वात् । न हि भूमावम्भोरुहं सदिति दुष्टाक्षस्यापि नभसि तदवभासते । अप्रतीतत्वादेव च बाधायोगात् । न चासतोऽभाने शब्दस्यापार्थकत्वप्रसङ्गः, अपरोक्षभानाभावस्येह विवक्षितत्वात्, परोक्षभानस्य चानिराकरणात् । न च सच्छब्दार्थानिरुक्तेर्यत्सत्तदबाध्यमिति व्याप्त्यसिद्धिः, त्वयापि द्वे तत्त्वे सदसती इति तत्त्वं व्यवस्थापयता यदेव सत्त्वेन व्यवस्थापितं तस्यैव मयापि व्यवहारदशायामबाध्यत्वोक्तेः । न चान्यथैवोपपत्तिः, सदसत्त्वयोरेवाबाधाभानप्रयोजकत्वोपपत्तौ तदितरवैलक्षण्यस्य

लक्षण्याङ्गीकारादेव तावदन्यथाख्यात्यादिवादिभ्यः सिद्ध एव भेदः, संसर्गिणस्तु लौकिकपरमार्थरजततया प्रतीतस्यापि सदसद्वैलक्षण्यस्वीकारात् प्रसिध्यतितरां भेद इत्यर्थः । लौकिकपरमार्थरजतप्रतिषेधादेवातिव्याप्तिः परिहृतेत्याह—**एवञ्च सतीति** ।

लक्षणं समर्थयित्वार्थापत्तिं तावत्प्रमाणमाह—**प्रमाणं चेति** । अन्यथाप्युपपत्तिमुक्तां परिहरति—**न च देशान्तरेत्यादिना** । ननु दुष्टाक्षस्यान्यत्र सदन्यत्र प्रतीयत इति, नेत्याह—**न हि भूमाविति** । एवं प्रतीतेरन्यथाप्युपपत्तिं परिहृत्य बाधस्याप्युक्तां परिहरति—**अप्रतीतत्वादेव चेति** । यत्त्वसतो भानाभावेऽसत्पदप्रयोगस्यापार्थकत्वप्रसङ्ग इति तत्परिहरति—**न चासत इति** । नासतो भानमात्रं प्रतिषिध्यतेऽपित्वपरोक्षभानम् । तथा च नान्यथोपपत्तिरपार्थकत्वं चेत्यर्थः । यत्तु सच्छब्दार्थं त्रिधा विकल्प्य दूषणमुक्तं तत्परिहरति—**न च सच्छब्दार्थेति** । शुक्तिरूप्याद्यपेक्षयाऽबाध्यत्वं च घटादौ व्याप्तमित्यर्थः । दूषणान्तरं परिहरति—**न चेति** ।

की प्राप्ति होगी'—यह सन्देह नहीं करना, क्योंकि संसर्ग ( शुक्ति-रजत-तादात्म्य ) को सदसद्विलक्षण मानने से ही अन्यथाख्यातिवादी से हमारा भेद हो जाता है। इतना ही नहीं, हम तो संसर्गी ( रजत ) को भी सदसद्विलक्षण मानते हैं, अन्यथा उसकी प्रतीति और बाध का सामञ्जस्य हो नहीं सकता। इस प्रकार व्यावहारिक रजत का जब शुक्ति में निषेध ही नहीं माना जाता, तब उसमें अतिव्याप्ति क्यों होगी ?

अनिर्वचनीयत्व में प्रमाण है—ख्यातत्व और बाध्यत्व की अन्यथानुपपत्ति रूप अर्थापत्ति। 'रजत को शुक्ति में न मानकर देशान्तर में मान लेने पर भी ख्याति और बाध की अन्यथा भी उपपत्ति हो सकती है'—ऐसी शङ्का नहीं कर सकते, क्योंकि अन्यदेश की रजत का यहाँ ( शुक्तिशकलों ) में प्रत्यक्ष कैसे होगा ? दूषित नेत्र में भी इतना सामर्थ्य नहीं हो सकता कि भूमि में कमल की सत्ता है और आकाश में वह उसे देखे। देशान्तरस्थ रजत की जब यहाँ प्रतीति ही नहीं, तब उसका यहाँ बाध भी नहीं हो सकेगा। यह जो कहा था कि असत् की प्रतीति न मानने पर "असतो भानं न"—यह वाक्य ही अनर्थक हो जायगा, वह कहना भी उचित नहीं, क्योंकि हम असत् की अपरोक्ष प्रतीति का ही निराकरण करते हैं, प्रतीति मात्र का नहीं, ( अतः परोक्ष-प्रतीति के आधार पर शब्द-प्रयोग बन जायगा, अनर्थक नामक निग्रहस्थान की प्राप्ति नहीं )। यह जो दोष दिया था कि 'सत्' शब्द का सत्तायुक्त अर्थ करने पर 'यत्सत्, तदबाध्यम्'—यह व्याप्ति नहीं बनेगी, वह दोष भी निराधार है, क्योंकि आपके मत में भी दो प्रकार के तत्त्वों की व्यवस्था की जाती है ( न्याय भाष्यकार वात्स्यायन मुनि ने प्रथम सूत्र की पातनिका में लिखा है—"किं पुनस्तत्त्वम् ? सतश्च सद्भावोऽसतश्चासद्भावः"—इस प्रकार दो 'सत् और असत्' तत्त्वों की व्यवस्था देकर आगे चलकर "तासां खल्वासां सद्विधानाम्" कह कर प्रमाणादि सोलह पदार्थों को सत् का भेद बताया ) वहाँ आप जिसे सत् मानते हैं, उसे ही हम व्यवहार काल में अबाध्य मानते हैं, वहाँ ( प्रमाणादि प्रपञ्च में ) उक्त व्याप्ति घट जायगी। अन्यथैवोपपत्ति जो कही थी कि सद्विलक्षण

तत्प्रयोजकत्वकल्पनायां गौरवात्। न चासतोऽपि तत्पदात्प्रतिभासनात्सत्तायुक्तस्यापि प्रपञ्चस्य बाधाभ्युपगमात्तयोरप्रयोजकत्वम्, अपरोक्षतयाऽभानस्य व्यवहारदशाया चाबाध्यत्वस्येह विवक्षितत्वात्। ननु सत्त्वासत्त्वयोरेवाबाध्यत्वाभानप्रयोजकत्वे यत्सद्विलक्षणं तद्बाध्य यदसद्विलक्षणं तत्ख्यातीति व्यतिरेके गौरव स्यात्। सत्त्वासत्त्वयोस्तु ख्यातिबाधप्रयोजकतायां लाघवमिति चेत्, मैवम्, तवापि व्यतिरेके गौरवस्य तुल्यत्वात् अख्यात्यबाध्यत्वयो सदसद्वैलक्षण्यस्य प्रयोजकत्वाङ्गीकारात्। एवमपि प्रयोजकत्वविनिगमनाया को हेतुरितिचेत्, पक्षान्तरे ख्यात्यसभव'। तथाहि—न तावत्सत्त्वादध्यस्तस्य ख्याति, तस्येहासत्त्वात्, सतश्च ख्यातौ भ्रान्तिबाधयोरनुपपत्तेश्च। असत्त्वे चापरोक्षतया भानत्वानुपपत्तेः।

---

नन्वसत्त्वमभाने न प्रयोजकम्, असतोऽपि तच्छब्दाद्भानात्। नापि सत्त्वमबाधायाम्, सतोऽपि प्रपञ्चस्य बाधाङ्गीकारादित्युक्तमिति तत्राह—**न चासतोऽपीत्यादिना**। पूर्वोक्तमेव परिहारमत्राप्याह—**अपरोक्षतयेति**। नन्वबाध्यत्वे सत्त्व प्रयोजकमङ्गीकुर्वता सद्वैलक्षण्य बाध्यत्वे प्रयोजक स्वीकर्तव्यम्, तथा च प्रयोजकगौरव स्यात्, एवमितरत्रापि। मत्पक्षे त्वसत्त्व बाध्यत्वे प्रयोजक सत्त्व च प्रतीताविति लाघवमिति न्यायरत्नदीपावलीयमाशङ्क्य तत्रापि व्यतिरेकेऽसद्वैलक्षण्यमबाधे प्रयोजक सद्वैलक्षण्य चाभाने प्रयोजकमिति गौरव समानमित्याह—**मैवं तवापीति**। नन्वेव समानगुणदोषत्वे किमित्यन्यतरपक्षे पक्षपात इति शङ्कते—**एवमपीति**। विनिगमना निर्णय.। सत्त्व भाने प्रयोजकमिति पक्षे बाध्यस्य कि सत्त्वात् स्फुरणम्? उतासत्त्वात्? नाद्य इत्याह—**न तावत्सत्त्वादिति**। दूषणान्तरमाह—**सतश्चेति**। असत इति

---

मानने पर नर-विषाण की भाँति अभान और असद्विलक्षण मानने पर आत्मा के समान अबाध होगा, वह भी युक्त नहीं, क्योंकि अबाध और अभान में सत्त्व और असत्त्व ही प्रयोजक है, सद्विलक्षणत्व और असद्विलक्षणत्व को प्रयोजक मानने में महान् गौरव होगा ( जैसा कि पूर्व कहा जा चुका है )। यह जो कहा था कि असत् की भी प्रतीति 'असन्' शब्द से होती है और सत्तायुक्त प्रपञ्च का भी बाध होता है, अत. असत्त्व अभान का और सत्त्व अबाध का प्रयोजक नहीं। वह कहना भी सगत नहीं, क्योंकि हमारा कहना है कि रजत को असत् मानने पर अपरोक्षतया भान नहीं होगा। ( अर्थात् असत्त्व को सामान्यत भानाभाव का प्रयोजक नहीं मानते, अपि तु अपरोक्षभान के अभाव का )। इसी प्रकार सत्त्व को सामान्यत बाधाभाव का प्रयोजक नहीं मानते, अपितु व्यावहारकालिक बाध के अभाव का। ( अर्थात् रजत को सत् मानने पर व्यवहार-काल में उसका बाध नहीं होगा )। यदि यह शङ्का हो कि सत्त्व और असत्त्व को ही अबाध्यत्व तथा अभान का प्रयोजक मानने पर 'जो सद्विलक्षण है, वह बाध्य है एव जो असद्विलक्षण है, वह प्रतीत होता है'—इस प्रकार की व्यतिरेक व्याप्ति में गौरव होगा ( क्योंकि यहाँ बाध तथा ख्याति के प्रति सद्विलक्षणत्व और असद्विलक्षणत्व को प्रयोजक माना गया है )। किन्तु सत्त्व और असत्त्व को ख्याति तथा बाध का प्रयोजक मानने पर लाघव होता है, तो यह शङ्का उचित नहीं, क्योंकि आप के भी व्यतिरेक में गौरव वैसा ही है, कारण यह कि आप अख्याति और अबाध्यत्व में सद्विलक्षणता तथा असद्विलक्षणता को प्रयोजक मानते हैं। इस प्रकार दोनों पक्षों में तुल्य दोष रहने पर यदि कोई पूछे कि यहाँ अन्यतर पक्ष के उत्कर्ष का निर्णायक हेतु क्या है? तो उसका उत्तर यह है कि अनिर्वचनीय-भिन्न पक्ष में ख्याति की अनुपपत्ति ही निर्णायक है, क्योंकि सत् होने के कारण अध्यस्त ( रजतादि ) की प्रतीति होती है—ऐसा नहीं कह सकते, क्योंकि यहाँ ( शुक्त्यादि में ) रजतादि सत् है नहीं। यदि रजतादि को वहाँ सत् मानकर ख्याति मानेंगे, तब शुक्ति में रजत-ज्ञान भ्रान्ति

---

१. ख्याति—इति क्रियापदम्।

अनुमानमप्यत्र प्रमाणम्—विमतमनिर्वचनीयं बाध्यत्वात् यन्नैवं तन्नैव यथात्मेति। संसर्गस्यैव बाध्यत्वाद्रजतस्य बाध्यत्वं सिद्धमितिचेत्, न, द्वयोरपरोक्षतया प्रतिभासमानयो संसर्गमात्रनिषेधे वनस्पत्योरिव विविक्तयो बाधोत्तरकालमुभयोरपि इहावभासप्रसङ्गात्। न चाप्रसिद्धविशेषण' पक्ष। यस्मात्—

एकालम्बनसंसर्गनिषेधे सदसत्त्वयोः।
धर्मत्वाद्रूपरसवत्सिद्धानिर्वचनीयता ॥१४॥

विवादाध्यासिते सदसत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी धर्मत्वाद् रूपरसवदिति अनि-

---

पाठे द्वितीयपक्षनिषेध.। चस्त्वर्थ.। स च दूषितपक्षात्पक्षान्तरपरिग्रहसूचक.। द्वितीय निषेधति—**असत्त्व इति**। द्वितीययोजनाया तत्रैव हेतुः।

तदेवमर्थापत्तिमुक्त्वानुमानमपि प्रमाणयति—**अनुमानमपीति**। **विमतमिति**। शुक्तिरूप्यादीत्यर्थ.। अत्र च सदसद्विलक्षणत्वमनिर्वचनीयत्व साध्यमिति न साध्याविशिष्टता। असिद्धिमन्यथाख्यातिवादी शङ्कते—**संसर्गस्येति**। परिहरति—**नेति**। असंनिहितबाधनिवारणायापरोक्षतयेत्युक्तम्। सामान्यतो दृष्टानुमानेनानिर्वचनीयता साधयन्नप्रसिद्धविशेषणता परिहरति—**एकालम्बनेति**। धर्मत्वाद्धेतोः सदसत्त्वयोरेकालम्बनसंसर्गनिषेधे एकनिष्ठसंसर्गाभावे एकाधिकरणात्यन्ताभाव इति यावत्। तस्मिन्साधिते रूपरसवदनिर्वचनीयता सिद्धा भवति इति योजना। सग्रह विवृणोति—**विवादाध्यासिते इति**। अत्र च भावत्वाभावत्वे सत्त्वासत्त्वे एकधर्मिनिष्ठौ यावत्यन्ताभावौ तत्प्रतियोगिनी धर्मत्वात्, यौ धर्मौ तावेकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनौ, यथा रूपरसौ तथाचामू, ततस्तथेति प्रयोगः। भिन्नाधिकरणनिष्ठात्यन्ताभावप्रतियोगितयार्थान्तरतानिवृत्त्यर्थम्—**एकधर्मीत्युक्तम्**। सत्त्वमसत्त्वानधिकरणनिष्ठात्यन्ताभावप्रतियोगि धर्मत्वात् रूपादिवदिति तु प्रयोगशरीरम्। नचार्थान्तरता, सतोऽसतो वोभयात्यन्ताभावद्वयाधिकरणत्वाभावात्, मिलितयोश्चैकत्वाभावादेकत्वे वा सदसदन्तर्भूततायामुभयाभावाधिकरणत्वायोगात्, अनन्तर्भूतत्वे च सिद्ध नः समीहितमिति क्वार्थान्तरता। नच प्रमेयत्वादौ व्यभिचार¹, तेषामपि वेदान्तिमते पूर्वोदितन्यायेनैवात्मनिष्ठात्यन्ताभावप्रतियोगित्वात्। नच वैपरीत्यानुमानम्, धर्मत्वहेतो रूपादावनैकान्तिकत्वात्। अपरे त्वेवमेतदनुमान समर्थयामासु—सत्त्वमसत्त्वानधिकरणानात्मनिष्ठात्यन्ताभावप्रतियोगि अना-

---

न बन सकेगा और भ्रान्ति न होने से उसका बाध न होगा। रजतादि को असत् माने, तब उसकी अपरोक्ष प्रतीति न बन सकेगी।

अनिर्वचनीयत्व में अनुमान भी प्रमाण है—विवाद-ग्रस्त ( रजतादि ) अनिर्वचनीय है, बाध्य होने से, जो अनिर्वचनीय नहीं होता, वह बाध्य भी नही होता, जैसे—आत्मा। यदि शङ्का की जाय कि उक्त अनुमान मे 'बाध्यत्व' हेतु असिद्ध है, क्योकि 'नेदं रजतम्'—इस निषेध से रजत का बाध नही होता, अपितु संसर्ग का होताहै। तो यह शङ्का युक्त न होगी, क्योंकि जब दोनो ( रजत तथा संसर्ग ) की अपरोक्ष प्रतीति होती है, उन दोनो मे यदि एक ( ससर्ग मात्र ) का निषेध हो, तब बाध के अनन्तर दूसरे ( रजत ) की वैसे ही प्रतीति होनी चाहिए, जैसे दूर से दो वृक्ष मिले हुए एक रूप प्रतीत होते है, समीप जाने पर एकरूपता का बाध होता है और दोनों वृक्ष पृथक्-पृथक् प्रतीत होते है। उक्त अनुमान मे साध्याप्रसिद्धि भी नही, क्योकि धर्मत्व हेतु से रूप, रस के समान किसी एक आधार मे सत्त्व तथा असत्त्व—दोनो का निषेध कर देने पर सामान्यत अनिर्वचनीयता सिद्ध होती है, अर्थात् विवादास्पद सत्त्वासत्त्व, किसी एक धर्मी में रहने वाले अत्यन्ताभाव के प्रतियोगी है, धर्म होने से, रूप, रसवत् [भाव यह है कि जैसे रूप और रस—दोनो धर्मों का

---

१. प्रमेयत्व किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि धर्मत्वाद्रूपवदितिन्यायेनेत्यर्थः।

धारितधर्मिनिष्ठतया सामान्यत. सिद्धस्य सदसद्वैलक्षण्यस्य केवलव्यतिरेकिणो रजतधर्मिनिष्ठतयोपसंहाराढप्रसिद्धविशेषणत्वाभावात् । न चानिर्वचनीयत्वे सदिद रजतमिति भ्रमानुभवविरोध , अधिष्ठानेदंतासंसर्गवत्तत्सत्तासंसर्गस्यापि अनिर्वचनीयस्यैव भ्रमेऽनुभवात् । अपि च ब्रह्मणीव पारमार्थिकसत्ताया प्रपञ्च इव च व्यावहारिकसत्ताया अभावेऽपि प्रातिभा-

त्मनिष्ठात्यन्ताभावप्रतियोगित्वाद्रूपादिवदित्यत्र विवक्षितम् । तेन चैतत्परिहृतं भवति—धर्मत्वहेतोर्वाच्यत्वादिना व्यभिचार. । अथ तस्यापि निर्धर्मके ब्रह्मण्यभावेनाव्यभिचार , तर्हि तस्मिन्नेव ब्रह्मणि निर्धर्मकतयोक्तसाध्यसिद्धेः, न जडानिर्वाच्यतासिद्धिरित्यर्थान्तरता स्यादिति । नच व्याघातः, परस्परविरुद्धयोरपि नित्यत्वानित्य.वयोरिव शुक्तिरजतादिससर्गेषु व्यावृत्तिसभवात् । अतएव विवादाध्यासिते सत्त्वासत्त्वे एकानात्मनिष्ठससर्गाभावप्रतियोगिनी न भवतः, परस्पराभावरूपत्वात्, नित्यत्वानित्यत्ववदिति न सत्प्रतिपक्षतापि , आरोपितससर्गे एवोभयव्यावृत्त्या साध्यविकल.वादिति । तदेतदसमीचीनमिव , मेयत्वादेरपि सर्वधर्मविधुरे ब्रह्मण्यवृत्तेरव्यभिचारभूमित्वात् । न चार्थान्तरता निर्धर्मके ब्रह्मण्यत्यन्ताभावस्याप्यवृत्ते , वृत्तौ वा सत्त्वस्यापि वृत्तेरनर्थान्तरत्वात् । कथ तर्हि सत्त्वासत्त्वयोस्तत्तदत्यन्ताभावरूपयोर्ब्रह्मण्येव वर्तनम् ? किमत्र चित्र प्रत्यायकश्रुतौ सत्या, परस्परप्रतिक्षेपरूपभावाभावयोः सयोगादेरेकवृत्तितदृष्टेश्च, स्वस्मिन्नेव च मेयत्वाद्यवृत्तेर्वृत्तौ चात्माश्रयात् । प्रसाधयिष्यते चायमर्थः । व्याघातस्तु नियमानङ्गीकारेणात्रैव परिहृत । न च नित्यत्वानित्यत्वव्यावृत्तेरारोप्यससर्ग उदाहरणम् । अत्यन्ताभावरूपस्य तस्य नित्यतायाः परैरङ्गीकृतत्वात् । न हि सत्ता तत्र जातिरूपिणि स्वरूपसत्त्वाङ्गीकारात् । अस्तित्वात्मकस्य[2] च तस्याभावेऽपीष्टेरिति[3], एतेन[4] सामान्यादीना नित्यत्व व्याख्यातम् । तद्यथान्यासमेवास्त्वनुमानम् , अलपतिवैदग्धीप्रकटनेन । **केवलव्यतिरेकिण** इति पञ्चमी । ननु सदिद रजतमिति सत्त्वानुभवबाधितमिदसद्वैलक्षण्यानुमानमिति तत्राह—**न चानिर्वचनीयत्व इति** । यथा ह्यपुरोवर्तिनो रजतस्य पुरोवर्त्यधिष्ठानारोपात्पुरोवर्तित्वप्रतिभासः । तथासद्विलक्षणरजतस्य सदधिष्ठानेसमारोपितत्वात्सद्बुद्धिबोध्यत्वम्, न पुन. सत्त्वादिति परिहरति—**अधिष्ठानेति** । अथवा सदिदं रजतमिति प्रातीतिकसत्त्वमनुभूयते, पारमार्थिकव्यावहारिकसद्वैलक्षण्य चानिर्वचनीयत्वं साध्यत इति नानुभवविरोध इत्याह—**अपि चेत्यादिना** । सदसद्विलक्षणताया भ्रान्तिबाधानुभवविरोधो ह्यधस्ताद-

अत्यन्ताभाव एक ही आकाश मे रहता है, वैसे ही सत्त्व, असत्त्व--दोनों ही धर्म है, अत. इन दोनो का भी कही-न-कही अत्यन्ताभाव अवश्य होगा । जहाँ होगा, वही अनिर्वचनीय होगा—और उसमे रहने वाला सदसद्वैलक्षण्य ही अनिर्वचनीयत्व है ]—इस प्रकार किसी अनिश्चित धर्मी में सामान्यत प्रसिद्ध सदसद्वैलक्षण्यरूप अनिर्वचनीयत्व मे "विमतमनिर्वचनीयम्"–इस केवलव्यतिरेकी प्रयोग से रजतरूप धर्मी की वृत्तिता सिद्ध की जाती है । यदि रजत को अनिर्वचनीय (सदसद्विलक्षण) माने, तब 'यह रजत सत् है'—इस प्रकार रजत-गत सत्त्व का अनुभव विरुद्ध पड़ जायगा—यह शङ्का नही करनी चाहिए , क्योकि जैसे शुक्ति-गत इदन्ता का अनिर्वचनीय संसर्ग रजत मे होने से रजत मे इदन्ता की प्रतीतिमात्र होती है, वैसे ही शुक्ति की सत्ता का अनिर्वचनीय ससर्ग रजत से हो जाने के कारण, उसमे सत्त्व प्रतीत होता है, वस्तुत उसमे सत्त्व नही रहता । विवरणाचार्य का तो कहना है कि ब्रह्म मे पारमार्थिक सत्ता और प्रपञ्च में व्यावहारिक सत्ता मानी जाती है, उन दो सत्ताओ का अभाव रहने पर भी रजत मे प्रातिभासिक सत्ता मानी जाती है, अत "सदिदं रजतम्"–इस अनुभव का कोई विरोध नही रह जाता ( देखिए न्या म. पृ ११८ ) । [ अर्थात् अनिर्वचनीयत्व के स्वरूप में सामान्यत. सत्त्व की विलक्षणता का निवेश नही, अपितु पारमार्थिक और व्यावा-

१. एकतरनिषेधस्यैकतरविधिनान्तरीयकत्वरूपनियमानङ्गीकारेणेत्यर्थ । २. अत्यन्तभावात्मकस्येतिपाठान्तरम् । ३. नित्यत्वस्येत्यर्थः । ४ ध्वंसप्रागभावानुपलक्षितस्वरूपत्वं नित्यत्वम् , तदुपलक्षितत्वमनित्यत्व-

सिकसत्तास्वीकारेण सदिदं रजतमित्यनुभवो न विरुद्ध्यते। न च नेदं रजतमित्यसत्त्वानुभवविरोध', अर्थक्रियासामर्थ्यलक्षणसत्त्वस्यैव तत्र निषिध्यमानत्वात्। न चानिर्वाच्ये रजतशब्दप्रयोगायोग , सविकल्पकरजतानुभवसंस्कारजन्यतया रजतभ्रमस्य तद्वाचकशब्दोल्लेखोपपत्ते । न चानिर्वचनीयत्वे रजतस्य प्रतीत्यनुपपत्ति , शुक्त्यवच्छिन्नात्मचैतन्यस्थाविद्याविवर्ततया

भिदधे। तत्र भ्रान्तिविरोध परिहृत्य बाधविरोध परिहरति—**न च नेदमिति**। नेद रजतमिति कोऽर्थ ? नेद मदभिमतरजतमिति । तथाचार्थक्रियासामर्थ्यलक्षणसत्त्वस्यैव निषेधान्न तद्वैलक्षण्यानुमान विरुणद्धीत्यर्थ'। सदसद्वैलक्षण्यमनिर्वचनीयत्व मत तन्निर्वाहावसरतया च पूर्वोदितलौकिकपरमार्थरजतविषयत्वनिषेधेन [1] न विप्रतिषेधशङ्कापीति भाव'। दोषान्तरमुक्त परिहरति—**न चानिर्वाच्य इति**। रजतानुभवसंस्काररञ्जिता ह्यविद्या रजतज्ञानाकारेण विवर्तते। अननुभूतरजतस्य भ्रान्त्यनुपपत्तेः। स चानुभव. सविकल्पक इतिशब्दोल्लेखवान्। तथा च तत्संस्काररञ्जिताविद्या तद्बुद्धिवत्तच्छब्दप्रयोगेऽपि हेतु'। एतदुक्त भवति—रजतबुद्धिवद्रजतजातीयबुद्धिरप्युदेति। ततश्च तच्छब्दप्रयोग इति परस्यापि शुक्त्यादौ रजतत्वजात्याद्यसभवात्तत्संस्कार एव शरणमिति भाव.। या तु प्रत्यायकानुपपत्त्या प्रतीत्यनुपपत्तिरुक्ता ता परिहरति—**न चानिर्वच-**

हिरक सत्त्व की विलक्षणता का। इस प्रकार रजत मे प्रातिभासिक सत्त्व भी है और इतर द्विविध सत्त्व की विलक्षणता भी, अत कोई विरोध नही ]। रजत को अनिर्वचनीय मानने पर 'यह रजत नही'—इस प्रकार के असत्त्वानुभव का विरोध है—ऐसा भी सन्देह नही कर सकते , क्योकि "नेदं रजतम्"—इस अनुभव मे व्यावहारिक रजत-गत अर्थक्रिया-सामर्थ्य रूप ( अर्थ ( भूषणादि प्रयोजन ) की क्रिया ( निष्पत्ति ) का सामर्थ्य ) सत्त्व का ही निषेध किया जाता है, सामान्य सत्त्व का नही [ आशय यह है कि अनिर्वचनीयत्व मे दो अंश है—सत्त्व-विलक्षणत्व और असत्त्व-विलक्षणत्व, इनमे किस अंश के साथ 'नेद रजतम्'—इस अनुभव का विरोध है ? प्रथम ( सत्त्व-विलक्षणत्व ) अंश का विरोधी नही, अपितु साधक है , क्योकि 'नेदं रजतम्'—इस अनुभव के आधार पर ही सत्त्व-विलक्षणत्व की कल्पना की गई है। दूसरे ( असत्त्व-विलक्षणत्व ) अंश का भी विरोधी नही , क्योंकि इस अंश से यह विरोधी तब होता, जब कि रजत मे असत्त्व का विधान करता। किन्तु असत्त्व का विधान कर नही सकता , क्योकि निषेधार्थक नकार से घटित है। नकार को पर्युदासार्थक मानकर किसी प्रकार "नेक्षेतुद्यन्तमादित्यम्" की भॉति विधिरूप मे यदि परिणत करे, तब भी इसके असत्त्व-विधान को रजत का प्रत्यक्षानुभव नही सहन करेगा। अत यही कहना होगा कि 'नेद रजतम्'—यह अनुभव केवल यही कहता है कि यह रजत हमारे काम का नहीं , अर्थात् व्यावहारिक रजतरूपता का निषेध ही करता है, अत किसी प्रकार विरुद्ध नही। आनन्दबोधाचार्य के भी यही शब्द है—"नेद रजतमित्यय कालत्रयेऽपि लौकिकपरमार्थरजतप्रतियोगिनीमत्रासत्तां प्रतिभासोऽवलम्बते"—न्या म पृ ११९ ]। यह जो आक्षेप किया था कि अनिर्वचनीय मे 'रजत' शब्द का प्रयोग जाति या उपाधि के द्वारा या रूढरूपसे किसी प्रकार हो नही सकता। वह आक्षेप संगत नहीं , क्योंकि हट्टस्थ रजत-विषयक सविकल्पक अनुभव के सस्कार से जन्य होता है—रजत-भ्रम , अत व्यावहारिक रजत के वाचक शब्द का अनिर्वचनीय रजत मे भी प्रयोग होता है। [ अर्थात् यह नियम है कि जिस वस्तु के अनुभव-जन्य सस्कार के द्वारा जो भ्रम उत्पन्न होता है, उस भ्रम के विषय को उस वस्तु के नाम से पुकारा करते है, जैसे सर्पानुभव-जन्य सस्कार से पैदा हुए भ्रम के विषय को 'सर्प' शब्द से ही कहा जाता है। अत प्रकृत मे भी भ्रम-विषय मे 'रजत' शब्द का प्रयोग क्यो न होगा ? ] यह जो कहा था अनिर्वचनीय रजत की प्रतीति किसी इन्द्रियादि साधन से न हो सकेगी। वह

मितिव्यवस्थापनेनेत्यर्थ.। [1] निषेधेनेत्यस्य स्थाने निषेधे इत्यपि पाठस्तस्य निषेधितवानित्यर्थ.।

चैतन्येऽध्यस्तत्वात्तेन प्रतीत्युपपत्तेः । न च सम्प्रयोगाभावादपरोक्षत्वानुपपत्तिः, अध्यस्तस्यापरोक्षतायां सम्प्रयोगानपेक्षत्वात् । अन्यथा भवतोऽपि रजततत्संसर्गयोरपरोक्षत्वाभावापातात् । अधिष्ठानसंप्रयोगादेवापरोक्षत्वमस्मन्मतेऽपि तुल्यम्, अन्यत्र स्वपक्षपातात् । न चेन्द्रियान्वयव्यतिरेकानुविधायित्वं रजतस्य, तयोरधिष्ठानग्रहणेनान्यथासिद्धत्वात् । न चैवं सति स्पर्शनेनाधिष्ठाने गृहीतेऽपि चाक्षुषो रजतविभ्रमः स्यादिति वाच्यम्, सादृश्यदर्शनजन्ये विभ्रमे तेनैवेन्द्रियेण सादृश्यस्य ग्रहणनियमात् । अन्यथा तवापि तिक्तो गुड इति विभ्रमो न भवेत् । आरोप्यस्य रसस्य रसनेन्द्रियग्राह्यतया द्रव्यग्राहकस्पर्शनेन्द्रियागोचरत्वात् । तस्मात्तत्राधिष्ठा-

नीयेति । शुक्त्यवच्छिन्नं यच्चैतन्यं तदविद्यापरिणामो हि रजतम्, न तु केवलशुक्त्यविद्यापरिणामः, शुक्तेरविद्याकार्यस्य स्वकारणाविद्याप्रत्याश्रयत्वायोगात् । तदुक्तमाचार्यैरिष्टसिद्धिकारैः—

'शुक्त्यवस्थात्ममोहोत्था रूप्यधीः शुक्तिमहजा ।
कथ्यते मृदवस्थात्मजातो मृज्जो यथा घटः ॥' इति ।

ततस्तेनैव चैतन्येन रजतमपि वेद्यमित्यर्थः । रजतस्य शुक्तिसामानाधिकरण्योपपादनाय शुक्त्यवच्छिन्नेत्युक्तम् । नन्विन्द्रियसम्प्रयोगाभावे कथमपरोक्षता ? तत्राह—**न च संप्रयोगेति** । न केवलमस्माकमयं नियमभङ्गोऽपितु भवतोऽपीत्याह—**अन्यथेति** । ननु न देशान्तरस्थं रजतं रजतज्ञानविषयोऽपितु पुरोवर्ति वस्तु, तच्चेन्द्रियसंयुक्तमितीन्द्रियसम्प्रयोगादेवापरोक्षं तर्हीदमस्मन्मतेऽपि समानमिति प्रौढिमारूढः[3] प्राह—**अधिष्ठानेति** । नन्विन्द्रियान्वयव्यतिरेकयोः सतोः कथं तदभावः येनैव परिह्रियत इति तत्राह—**तयोरिति** । अधिष्ठानग्राहकेन्द्रियग्राह्यतामन्तरेणारोप्यस्यापरोक्षतायां बाधकमाशङ्क्य परिहरति—**न चैवं सतीति** । न तत्रारोप्याधिष्ठानयोरेकेन्द्रियग्राह्यत्वनियमाद्भ्रमानुदयः, अपि तु सादृश्यजन्यभ्रमेषु सादृश्याधिष्ठानयोरेकेन्द्रियग्राह्यतानियमात् तदभावापराधादित्याह—**सादृश्येति** । यदि च कस्मैचित्समानेन्द्रियग्राह्यत्वनियमदुराग्रहादुक्तरीतिर्न रोचेत, तं प्रति बाधकमाह—**अन्यथा तवापीति** । विभिन्नेन्द्रियग्राह्यतामेव हेतुमाह—**आरो-**

कहना भी युक्त नहीं, क्योंकि शुक्त्यवच्छिन्न चैतन्य के आश्रित अविद्या का परिणाम होने से रजत अपने अधिष्ठान चैतन्य से प्रकाशित होता है। 'प्रतिभास मात्र स्वरूप होने के कारण रजत से सम्प्रयोग होगा नहीं, बिना सम्प्रयोग के उसका अपरोक्ष कैसे होगा'—यह सन्देह भी उचित नहीं, क्योंकि रजतादि-जैसे अध्यस्त पदार्थों का अपरोक्ष बिना सम्प्रयोग के ही होता है। अन्यथा आपके यहाँ भी देशान्तरस्थ रजतादि के साथ सम्प्रयोग है नहीं, अतः उनका प्रत्यक्ष न हो सकेगा। यदि कहें कि शुक्ति के साथ इन्द्रिय-सम्प्रयोग हो जाने से ही रजत का प्रत्यक्ष हो जायगा, तब तो पक्षपात-रहित दृष्टि से देखने पर वही समाधान हमारे पक्ष में भी आप को मिलेगा। यदि कहें रजत कभी साक्षि-भास्य नहीं हो सकता, क्योंकि इन्द्रिय का उसके ज्ञान से अन्वय-व्यतिरेक होता है। तो यह कहना भी उचित न होगा, क्योंकि इन्द्रिय का अन्वय-व्यतिरेक शुक्ति-ग्रहण में उपक्षीण हो जाता है। 'यदि रजत-ग्रहण में इन्द्रिय का उपयोग नहीं, अपितु केवल अधिष्ठान-ग्रहण में है, तब तो त्वगिन्द्रिय से शुक्ति का ग्रहण कर लेने पर अन्धे को भी रजत भ्रम होना चाहिए'—यह शङ्का नहीं करनी, क्योंकि सादृश्य-दर्शन-जन्य भ्रम में सादृश्य-ग्राहक इन्द्रिय से ही अधिष्ठान का ग्रहण होना चाहिए। नहीं तो आप ( तार्किक ) के मत में भी 'गुड़ कड़ुआ है'—यह भ्रम कैसे होगा ? क्योंकि आरोप्य कटु रस, रसनेन्द्रिय से ग्राह्य होने के कारण गुड-ग्राहक त्वगिन्द्रिय का अविषय है। अतः कहना होगा कि त्वगिन्द्रिय का उपयोग केवल गुड़-ग्रहण में ही होता है, रस-ग्रहण में उसकी

१. अनिर्वचनीयख्यातौ । २. इ० सि० १।१२९, शुक्त्यवच्छिन्नचैतन्यमोहजन्येत्यर्थः । ३. ननु सिद्धान्ते रजतस्येन्द्रियसम्प्रयोगजन्यज्ञानविषयत्वं नास्ति, केवलसाक्षिवेद्यत्वाङ्गीकारादित्यत आह–प्रौढिमारूढ इति ।

नग्रहण एवेन्द्रियस्योपयोग इति त्वयापि वक्तव्यम् । तथा च न तत्प्रकृतेऽपि दण्डवारितम् । न च ज्ञानद्वयाङ्गीकारादख्यातिप्रसङ्ग , इदमंशावच्छिन्नसाक्षिचैतन्यस्यैवाधिष्ठानज्ञानफलभूतस्य स्वमायाविवर्तरजतादिसिद्धित्वात्, अन्त करणवृत्तिलक्षणज्ञानद्वयानङ्गीकारात् । तदेव लक्षणप्रमाणयोरनिर्वचनीये रजतादिविभ्रमे संभवात् तद्वद्द्वैतप्रपञ्चविभ्रमोऽपि वेदान्तवाक्यप्रमाणजन्यादधिष्ठानाद्वितीयात्मविज्ञानाद्विलीयत इति सिद्धम् ।

ननु कथं वेदान्तवाक्यानां सिद्धार्थबोधकत्वम् ? सकलपदानां लोके कार्य एव सङ्गतिग्रहणात्, लोकावगतसामर्थ्य. शब्दो वेदेऽपि बोधक इति न्यायात् । लोके च प्रवर्तकवचनश्र-

प्यस्येति । तदेवमधिष्ठान एवेन्द्रियोपयोगमुपपाद्य ज्ञानद्वयाङ्गीकारादख्यात्यापत्तिमुक्ता परिहरति—न च-ज्ञानेति । कोऽयं ज्ञानभेदः ? किं ज्ञप्तिभेद ? उतान्त करणवृत्तिभेद ? नाद्य इत्याह–इदमंशेति । उभयोरपीदमंशावच्छिन्नैकसाक्षिवेद्यत्वेन फलभेदाभावादित्यर्थः । द्वितीये प्राह–अन्त.करणेति । न चैकत्रान्त करणपरिणामोऽपरत्राविद्यापरिणाम इति ज्ञानभेद , अविद्यापरिणामस्य ज्ञानाभासत्वेन ज्ञानताऽसद्धे । उक्तंहि–'अविद्या वेद्यै' सह भ्रम ' इति । वादार्थमुपसहरन् समन्वयोपयोगमाह–तदेवमित्यादिना । भेदप्रपञ्चस्याविद्यापरिणामतया शुक्तिरूप्यादिवदनिर्वचनीयारोपितत्वात् तदधिष्ठानाद्वैततत्त्वसिद्धिः फलमित्यर्थः ।

इत्यनिष्टविपरीतबुद्धितत्तुच्छसद्विषयवाददूषणात्[2] ।
व्यक्तमुक्तमिह तत्तदुक्तिभि शक्यनिर्वचनतानिवारणम् ॥

वेदान्तवाक्यजन्यादद्वितीयात्मविज्ञानादित्युक्तम् । तदसङ्गतम्, सिद्धेऽर्थे वेदस्य प्रामाण्याभावादिति कार्यवादी प्रत्यवतिष्ठते–ननु कथमिति । ननु भवतु लौकिकानां कार्ये शक्तिग्रहो वैदिकानां तु किमायातमित्यत आह—लोकावगतेति । निर्णीत खल्विदं प्रमाणलक्षणे औत्पत्तिक्यधिकरणे[3] तदर्थचिन्तया । तथाहि—

अपेक्षा नहीं, तब तो रजत-भ्रम में भी उस नियम को कौन हटाएगा ? [ आशय यह है कि रजत-भ्रम शुक्ति में रजत-सादृश्य चाकचक्यादि के सदर्शन से होता है, अत रजत-ग्रहण में नेत्र का उपयोग न होने पर भी नेत्र के बिना रजत-भ्रम नहीं होता, कारण यह है कि सादृश्य-ग्राहक नेत्र से ही शुक्ति का सम्बन्ध वहाँ नियमत अपेक्षित है । गुड में तिक्तता का भ्रम सादृश्य-दर्शन से जन्य नहीं, अत. वहाँ अधिष्ठान-ग्रहण में उपयुक्त त्वगिन्द्रिय की कोई भी अपेक्षा तिक्त-भ्रम में नहीं । यदि सब कहीं आरोप्य-ग्रहण में अधिष्ठान-ग्राहक इन्द्रिय की अपेक्षा करेंगे, तब गुण में तिक्तता का भ्रम न बन सकेगा, क्योंकि यहाँ अधिष्ठान गुड रूप द्रव्य के ग्राहक त्वगिन्द्रिय की रस-ग्रहण में योग्यता ही नहीं । अत यह मानना होगा कि इन्द्रिय का उपयोग आरोप्य-ग्रहण में नहीं, फिर तो आरोप्य रजत का इन्द्रिय-सम्प्रयोग के बिना साक्षी से ग्रहण होना उचित ही है ] । यह आपत्ति जो दी थी कि शुक्ति का इन्द्रिय-जन्य ज्ञान और रजत का साक्षि ज्ञान मानने पर प्रभाकर-मत आ जायगा । वह आपत्ति भी उचित नहीं , क्योंकि हमारे यहाँ दो ज्ञान नहीं, अपितु एक ही ज्ञान है—इदमंशावच्छिन्न साक्षिचैतन्य ही फलचैतन्य के रूप में शुक्ति का भासक है और वही स्वाश्रिताविद्या के परिणाम रजतादि का भासक है । अन्त करण-वृत्तिरूप दो ज्ञान हम नहीं मानते । इस प्रकार अनिर्वचनीय रजतादि-भ्रम में लक्षण और प्रमाण की सिद्धि हो जाती है । उसी प्रकार का द्वैत प्रपञ्च-भ्रम भी है वह वेदान्त वाक्य-जन्य अधिष्ठानरूप अद्वितीयात्मा के ज्ञान से विलीन होता है—यह सिद्ध हो गया ।

पूर्वपक्ष—वेदान्त वाक्यों में सिद्धार्थ की बोधकता कैसे होगी ? क्योंकि लोक में सभी पदों की शक्ति कार्य ( साध्य ) अर्थ में ही निश्चित होती है । यह नियम है कि जिस शब्द का सामर्थ्य

१ ब्र० सि० नि० २३ । २. उक्तप्रकारेण अनिष्टाया स्वानभिमताया सत्ख्यातिरूपाया विपरीतबुद्धेर्दूषणात्, तथा तस्यास्तुच्छसद्विषयवादादेर्दूषणाच्चेति विश्लेषः । ३. पू० मी० द० १।१।५।

वणसमनन्तरं श्रोतु प्रवृत्तिमुपलभ्य प्रवृत्तिलिङ्गेन प्रवर्तकप्रत्यये पदसमुदायस्य सामान्यत. सामर्थ्यमधिगम्य पुनरावपोद्धाराभ्या च प्रत्येक कार्यान्विते पदाना सङ्गतिग्रहणात्, आनयनादिलक्षणकार्यविशेषे व्यभिचारेऽपि कार्यमात्रस्य सर्वत्राव्यभिचारात्तदन्वितस्वार्थेषु पदानां

स्वरवर्णलोपागमादिवैलक्षण्यात् अनध्यायादिधर्मभेदाल्लौकिकवैदिकव्यपदेशाच्च स्पष्टभेदयूपादिशब्दसाहचर्याच्च गोशब्दादेरपि लोकवेदयोर्भेदस्तद्भेदाद्यवालादिशब्देष्वर्थान्तरदर्शनात् 'उत्ताना वै देवगवा वहन्ति, तेजो वै घृत'मित्यादिषूत्तानवहनादिविपरीतलिङ्गाच्चार्थभेद इति प्राप्तस्य प्रतिविद्धे, प्रत्यभिज्ञया तावदेकत्व गवादिपदानामवगम्यते। न च स्वरवर्णलोपागमादिवैषम्यमात्रात् प्रत्यभिज्ञायमानशब्दस्वरूपभेद, तथार्थोऽपि स एव, प्रत्यभिज्ञायमानत्वात्, उत्तानवहनादि तु स्तुतिर्न गवादिभेदप्रतिपादकम, तस्माद्भेदकाभावादभेदावगमाच्च शब्दार्थयोरैक्यमेव लोकवेदयोरिति लोकवेदाधिकरणे स्थितम्। नन्वस्तु लोकगृहीतसङ्गतिशब्दाना वेदेऽपि बोधकत्व कथमेतावता सिद्धार्थबोधकत्वाभाव ? तत्राह—लोके चेति। अयमर्थ.—गामानयेत्युत्तमवृद्धवचनश्रवणसमनन्तर मध्यमवृद्धस्य गवानयन दृष्ट्वा व्युत्पित्सुरित्थमाकलयति बाल., ज्ञानपूर्विकेयमस्य प्रवृत्ति स्वतन्त्रप्रवृत्तित्वात् मदीयस्वतन्त्रप्रवृत्तिवदिति। तथैव स्वात्मदृष्टान्तेन प्रवर्तकप्रत्यये शब्दपूर्वकत्व चानुमाय तस्मिञ्छब्दानन्तरभाविनि शब्दस्य शक्ति गृह्णाति, तदनु च प्रयोगान्तरेषु गा बधानाश्वमानयेत्यादिष्वानयनगोशब्दयोरुद्धारे तदर्थयोरप्युद्धारात् प्रक्षेपे च प्रक्षेपदर्शनाद् अन्वयव्यतिरेकाभ्या गवादिविशेषेषु पदविशेषस्य सामर्थ्य गृह्णाति। सर्वत्र च कार्यान्वयाव्यभिचारात्तदन्वितपदार्थेषु सामर्थ्य गृह्णाति, न पुनः पदार्थमात्रे, नाप्यन्यमात्रान्वितेषु, प्रथमावगताव्यभिचारिकार्यान्वयपरित्यागे प्रमाणाभावादिति। ननु कथ कार्यान्विते सामर्थ्यग्रह, यावता पश्यानय बधानेत्यादावन्यदन्यत्कार्यं प्रतीयते अतो व्यभिचाराद्गवादिवदेव शब्दविशेषाभिधेयत्वमेव न सर्वशब्दसामर्थ्यप्रतियोगित्वमिति तत्राह—आनयनादिलक्षणेति। प्रकृत्यभिधेय-

लोक-व्यवहार से गृहीत हो जाता है, वही शब्द वेद में बोधक होता है। लोक में शक्तिग्रहण की परिपाटी यह है कि आज्ञाकारी उत्तम वृद्ध के शब्दो को सुनने के अनन्तर ही मध्यम वृद्ध की कार्य करण मे प्रवृत्ति देखकर पास मे बैठा अव्युत्पन्न बालक 'प्रवृत्ति' हेतु से प्रवर्तक ज्ञान का अनुमान कर लेता है—( यह प्रवृत्ति, ज्ञान-जन्य है, स्वतन्त्र प्रवृत्ति होने से, जैसे कि मेरी प्रवृत्ति )। उस ज्ञान से पूर्वोक्त पद-समूह का सामन्यत सामर्थ्य जानकर पुन उसी से मिलते-जुलते दूसरे प्रयोगो की सहायता से प्रत्येक पद की कार्यान्वित अर्थ मे शक्ति का निर्णय कर लेता है। आनयनादि कार्य-विशेष का व्यभिचार होने पर भी सामान्य कार्य का व्यभिचार कही नही होता, अत सामान्य कार्य से अन्वित इतर अर्थो मे पदो की शक्ति का निश्चय हो जाता है। [ अभिप्राय यह है कि प्राभाकर का यह सिद्धान्त है कि कोई भी पद, द्रव्य गुणादि रूप सिद्ध पदार्थ का बोधक तब तक नही हो सकता, जब तक कि उसमे किसी प्रकार की 'लाना, ले जाना'—आदि क्रिया का समन्वय न हो, क्योकि पिता की गोद मे बैठा शिशु कोई भाषा कैसे सीखता है—इस ओर जब हम ध्यान दे, तो ज्ञात होगा कि पिता ने नौकर को आज्ञा दी–'गौ लाओ।' नौकर गौ लाता है। नौकर की इस क्रिया और पिता की उस आज्ञा को बार-बार देखते-सुनते शिशु की बुद्धि यह पकड़ लेती है कि 'गौ लाओ'—इस पूरे वाक्य का अर्थ है 'गौ लाना'। फिर 'गौ ले जाओ'—इस दूसरी आज्ञा को सुन कर और नौकर की गौ ले जाने की क्रिया देख कर इस दूसरे पूरे वाक्य का अर्थ 'गौ ले जाना, समझ लेता है। शिशु की नवाङ्कुरित विचार-शक्ति उसे यह सुझाती है कि दोनो आज्ञाओ मे 'गौ' पद एक ही है और नौकर की 'लाना, ले जाना'—दोनो क्रियाएँ भी एक ही गौ मे होती है, अत केवल 'गौ' का अर्थ है—सीग-पूँछ-धारी यह पशु। अब यहाँ ध्यान देने की बात यह है कि पिता पूछता था–गौ है ? नौकर उत्तर देता था—है या नही। इस प्रकार की प्रश्नोत्तरी को कई बार सुनने

सामर्थ्याधिगमात् । न चान्तरेणापि व्यवहार पुत्रस्ते जात इत्यादिवाक्यश्रवणसमनन्तर श्रोतुर्मुखविकासादिना लिङ्गेन हर्षमनुमाय, तद्धेतुप्रत्यये वाक्यस्य सामर्थ्यं सामान्यतोऽधिगम्यावापोद्वाराभ्या पुनः पुत्रादिपदाना तनयाद्यर्थविशेषेषु सङ्गतिग्रहो दृश्यते इति वाच्यम्, परिशेषावधारणानुपपत्ते, प्रियासुखप्रसवादेरपि हर्षहेतो संभवात् । यत्र च प्रभिन्नकमलोदरे मधूनि मधुकर. पिबतीति प्रसिद्धपदसमभिव्याहारात्प्रसिद्धेतरपदार्थोऽप्रसिद्धमधुकरपदार्थः समधिगतविभक्त्यर्थश्च य मधुपाने कर्तार पश्यति, त मधुकरशब्दवाच्यत्वेन प्रत्येति । तत्रापि

---

बन्धनादिव्यभिचारेऽपि प्रत्ययाभिधेयानुगतकार्यमात्र न व्यभिचरतीत्यर्थः । ननु यत्र प्रवृत्तिलिङ्गमवलम्ब्य सङ्गतिग्रह', तत्रैव भवतु , यत्र तु मुखविकासादिलिङ्गाद्धर्षहेतुसिद्धार्थमनुमाय शब्दस्य सङ्गतिग्रहः, यथा पुत्रस्ते जात इत्यादिषु तत्रावश्य कार्यमन्तरेणैव सिद्धार्थे शब्दशक्तिराश्रयणीयेति तत्राह—**नचान्तरेणापीति** । न च वाच्यमित्युक्त तत्र हेतुमाह—**परिशेषेति** । अयमभिसन्धिः—न तावत्प्रवर्तकवाक्येष्विव सिद्धार्थवाक्येषु प्रवर्तकविशेषानुमापकानयनादिप्रवृत्तिवदस्ति हर्षहेतुविशेषानुमापक प्रत्यक्षलिङ्गम्, मुखविकासादि तु हर्षहेतुमात्रमनुमापयति । तद्विशेषस्तु परिशेषात्प्रार्थनीय. । न चैव सभवति, पुत्रजन्मवदेव सुखप्रसवादेरनेकस्योपप्लवमानत्वात् विनिगमनाभावादतः पुत्रशब्दस्य सङ्गतिग्रहो दूरोत्सारित इति । यथाहुः नाथा[1] प्रमाणपारायणे[2]—'न च पारिशेष्येण तत्प्रतिपादकताध्यवसाय. , भूतभविष्यद्वर्तमानाना सन्निहितव्यवहिताना सभवात् पारिशेष्यावधारणाया अत्यन्तदुष्करत्वा'दिति । स्यादेतत्—अस्ति प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीत्यादिवाक्य श्रुतवतः पुरुषस्य मधुकरप्रातिपदिकार्थमात्रमजानतः समयान्तरे सरसीरुहोदरविपरिवर्तिमधुकरमधुपानमवलोकयतः प्रसिद्धपदसमभिव्याहारबलान्मधुकरशब्दस्य मधुकरशब्दार्थे सिद्धे सङ्गतिग्रह इति तत्राह–**यत्र चेति** । किमिति न कार्यपरताव्याकोप इति तत्राह—

---

पर भी बालक कुछ समझ नही सका था, किन्तु उक्त आज्ञा और नौकर की क्रिया से ही वह समझ पाया । अत यह निश्चित है कि किसी पद का सामर्थ्य क्रियान्वित वस्तु मे ही हुआ करता है, क्रिया-शून्य केवल सिद्ध अर्थ मे नही । क्रिया दो प्रकार की होती है—लौकिकी और वैदिकी । 'लाना ले जाना–आदि लौकिकी क्रिया प्रसिद्ध है । वैदिकी क्रिया भी दो प्रकार की होती है—( १ ) याग–होमादि रूप और (२) अपूर्व या अदृष्ट रूप । यजति-आदि धातुओ की शक्ति यागादि मे और लिडादि प्रत्यय की शक्ति अपूर्व मे । इन्ही क्रियाओ से अन्वित दूसरे अर्थो में दूसरे शब्दो की शक्ति होती है । ऐसे ही वेदान्त गत ब्रह्मादि पदों की शक्ति केवल ब्रह्मरूप सिद्ध अर्थ मे नही हो सकती, अपितु यागोपासनादि क्रियाओ से अन्वित ब्रह्म मे ही ] । यदि शङ्का हो कि किसी प्रकार के व्यवहार के बिना भी 'पुत्रस्ते जात,' ( आप के पुत्र उत्पन्न हुआ )—आदि वाक्य सुनने के बाद पिता के मुख की प्रफुल्लता से उसके अन्दर के हर्ष का अनुमान करके हर्ष के हेतुभूत पुत्रोत्पत्ति विषयक ज्ञान मे "आप के पुत्र उत्पन्न हुआ"—इस वाक्य की शक्ति समझ कर ऊहापोह से पुत्रादि पदो की शक्ति का ग्रहण पुत्रादि अर्थ मे कर लिया करते है । तो यह शङ्का युक्त नही, क्योकि वहाँ हर्ष का हेतु और कोई नही, परिशेषत पुत्र जन्म ही है —यह परिशेषावधारण नही कर सकते, कारण यह है कि हर्ष का हेतु एक मात्र पुत्र-जन्म ही तो है नहीं, किन्तु पत्नी का सुख-पूर्वक प्रसवादि भी हर्ष के हेतु सम्भव है, ( अत "पुत्रस्ते जात." का सामर्थ्य पुत्र-जन्म मे ही कैसे निश्चित होगा ? ) । जो लोग कहा करते है कि "प्रभिन्नकमलोदरे मधूनि मधुकर पिबति" ( खिले कमल के उदर मे मधुकर करता है मधुपान )—इस वाक्य के दूसरे पदो का एव मधुकर पद के उत्तर प्रथमा विभक्ति का

---

१. द्र० प्र० पं० पृ० ९२ । २. कार्यताज्ञानलक्षणेत्यर्थ । ३. प्रकरणपञ्चिकास्थे प्रमाणपारायणाख्ये प्रकरणे ६३ पुटे इति यावत् । ४. पुत्रजन्मलक्षणविशेषार्थप्रतिपादकतेत्यर्थः ।

न कार्यपरताव्याकोप', तादृश्या अपि व्युत्पत्तेर्व्यवहारनिबन्धनप्रथमकार्यव्युत्पत्तिनिबन्धनतया तदानुगुण्येन व्यवस्थानात्, पुत्रस्ते जात इत्यादेश्च सिद्धार्थप्रयोगस्य लाक्षणिकत्वेनाप्युपपत्ते । परस्परान्वयस्य कार्यान्वयाव्यभिचारात् । पुत्रस्ते जातस्तं पश्येति वक्तव्येऽपि कार्ये, विव्रियतामिति पदावधीरणेन द्वारमिति प्रयोगवत्प्रयोगोपपत्ते । ननु न कार्यान्विते पदानां

तादृश्या अपीति । सोऽपि हीतरपदाना सङ्गति गृहीत्वा तत्समभिव्याहारादस्य सङ्गति गृह्णाति । इतरपदाना च व्यवहारबलात्प्रवर्तककार्यान्विते प्रथममेव सङ्गतिर्ग्रहीतव्या । न हि तत्रापि प्रसिद्धपदार्थसमभिव्याहार शक्यपरिग्रह , अनवस्थादौस्थ्यात् । तथा चोपजीव्यैकप्रयोजकानुगुण्येनात्राप्यव्याहृतकार्यान्विते शक्तिर्ग्राह्येत्यर्थः । कथ तर्ह्यगृहीतसङ्गतिकाना सिद्धार्थे प्रयोगः 'पुत्रस्ते जात.' इत्यादिपदानाम् ? तत्राह—**पुत्र इति** । ननु 'अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते' इति लक्षणालक्षणात् अभिधेयकार्यान्वयसबन्ध सिद्धार्थान्वयस्य लिलक्षयिषितस्य वक्तव्यस्तत्राह—**परस्परान्वयस्येति** । कार्यान्वयस्य परस्परान्वयाविशेषत्वादित्यर्थः । उक्त च नाथेन—"कार्यान्वयो हि परस्परान्वयाव्यभिचारीत्यविवक्षित्वा कार्यान्वय परस्परपदार्थान्वयविवक्षयापि लक्षणया लोक. शब्द प्रयुङ्क्ते" इति । अर्थलक्षणया परिहृत्य वाक्यैकदेशलक्षणया च परिहरति—**पुत्रस्ते जात इति** । यथा हि द्वार विव्रियतामिति प्रयोक्तव्ये द्वारमिति वाक्यैकदेश प्रयुङ्क्ते, न चैतावता विव्रियतामिति नाध्याहरन्ति व्यवहर्तार, तद्वत्त पश्येति वक्तव्ये कार्ये, तद्व्यतिरेकेण पुत्रस्ते जात इत्येव प्रयुङ्क्ते । अध्याहाराच्च वाक्य पूर्णमित्यर्थ । उक्तप्रयोजकस्य कार्यपदे व्यभिचार शङ्कते—**नन्विति** । ननु तस्य योग्येतरान्विताभिधायित्व भवत्वित्यत आह—**योग्येतरेति** ।

अर्थ जो व्यक्ति जानता है, केवल 'मधुकर' पद का अर्थ नही जानता, वह व्यक्ति भी कमलादि प्रसिद्ध पदो के सहयोग से 'मधुकर' शब्द की शक्ति का ग्रहण उस कीट विशेष मे कर लेता है, जिसे कमल मे रस-पान करते वह देखता है । अत कार्यानन्वित सिद्ध अर्थ मे भी शक्ति-ग्रह होता है । वे लोग यह भूल जाते है कि इस दृष्टात से भी कार्यपरता का विरोध नही होता, क्योकि वहाँ 'मधुकर' पद का शक्ति-ग्रह होता है कमलादि प्रसिद्ध पदो की सहायता से । किन्तु 'कमलादि' पदो का शक्ति-ग्रह तो व्यवहार से ही होगा । प्राथमिक शक्ति-ग्रह के लिए कार्य का अन्वय अनिवार्य है, अत उसके अनुसार सब कही कार्यान्वित मे ही शक्ति की व्यवस्था करनी होगी । जहाँ पर कार्य श्रुत नही, वहाँ उसका अध्याहार कर लेना होगा । 'पुत्रस्ते जात '– इस प्रकार के सिद्धार्थ-प्रयोगो की कार्यार्थ मे लक्षणा मान लेने पर भी उपपत्ति हो जाती है । ( यदि कोई प्रश्न करे कि गङ्गादि पदो की लक्षणा सदैव अपने वाच्यार्थ के अव्यभिचारी तीरादि मे हुआ करती है, यहाँ कार्यार्थ से लक्षणा कैसे होगी? तो उसका उत्तर यह है कि ) कार्यान्वय भी परस्परपदार्थान्वय का अव्यभिचारी है ( अर्थात् यत्र-यत्र कार्यान्वय , तत्र-तत्र परस्परपदार्थान्वय , एवं यत्र-यत्र परस्परपदार्थान्वय , तत्र-तत्र कार्यान्वय – इस प्रकार कार्यान्वय समव्याप्त है )। अथवा "पुत्रस्ते जातस्त पश्य"—ऐसा प्रयोग करना चाहिए, किन्तु उसी अर्थ मे लोग "पुत्रस्ते जात "—इतना वैसे ही बोल देते है । जैसे कि द्वार खोलिए—इस अर्थ के लिए "द्वार विव्रियताम्"—यह पूरा प्रयोग न कर के 'द्वारम्'—इतना ही लोग बोल देते है । (अर्थात् जैसे—'द्वारम्'–इस पद से आगे 'विव्रियताम्' पद का अध्याहार करके कार्यार्थ का ज्ञान किया जाता है, वैसे ही प्रकृत मे 'त पश्य'–इतना अध्याहार करके कार्यार्थ-बोध करना चाहिए) ।

शङ्का—'गामानय' यहाँ पर आनयन रूप कार्य से अन्वित है–गौ, अत उसमे 'गो' पद का

१ कार्यान्वितत्वरूपेत्यर्थ. । २. त० वा० १।४।१२ । ३ प्र० प० पृ० ९३ । ४ द्विविधा हि लक्षणा–अर्थे पदस्यलक्षणा अर्थलक्षणा, वाक्ये वाक्यैकदेशलक्षणा वाक्यलक्षणा । ५. शक्तिमत्वस्योक्त यत्प्रयोजक कार्यान्वितस्वार्थाभिधायित्वलक्षण तस्येत्यर्थ. । ६. कार्यपदस्येत्यर्थ. ।

सामर्थ्यमध्यवसातुं शक्यम् .कार्यस्य कार्यान्तराभावेन कार्यपदस्य कार्यान्वितस्वार्थाभिधायित्वानुपपत्ते, योग्येतरान्विताभिधाने च प्रयोजकद्वैविध्यापातादिति चेत्, न, कार्यान्वयान्वयिनि कार्यपरपदार्थान्विते वा पदशक्तिग्रहणाभ्युपगमे प्रयोजकद्वैविध्याप्रसक्तेः ।

यत्तु कैश्चिदुच्यते कार्यान्वयान्वयिनि इत्यत्र किं कार्यं विशेषणमन्वयस्य ? किं वोपलक्षणम् ? नाद्य, अन्वयस्य कार्यविशिष्टस्य सम्बन्धद्वयप्रसङ्गात् । युगपच्च कार्यान्वययोर्विशेषणता विशेष्यता चापद्येत । न चैतत्सर्वमुपपन्नम्, अलौकिकत्वात् । नापि द्वितीय, कार्यस्य शब्दशक्त्य-

---

अनुगत प्रयोजक दर्शयन् परिहरति—न कार्येति । कार्यान्वय कार्यरूपोऽन्वय.स्तदन्वयि तदाधार, स च कार्यमितरच्च भवति सबन्धस्य द्व्याधारत्वात् । तत्र सामर्थ्यं सर्वपदानामास्त च कार्यपदस्येत्यर्थ. । नयविवेककारोक्त प्रयोजकमाह—कार्यपरेति । कार्यपर यत्पद तस्य योऽर्थ. तेनान्विते सामर्थ्यमिति । तथा च न प्रयोजकभेद॰, कार्यपदस्यापि कार्यपरगवादिपदार्थान्वितकार्यशक्तित्वादितरेषामपि कार्यपरलिडादिपदाभिधेयकार्यान्वितगवादिनिष्ठशक्तित्वादित्यर्थः ।

अत्र रत्नदीपावलीकृत प्रथम प्रयोजक दूषयाबभूवु, तदनुवदति—यत्त्वित्यादिना । संबन्धद्वयप्रसङ्गादिति । कार्यान्वयेत्यत्रैक सबन्धस्तदन्वयीत्यत्रापर इत्यर्थ. । किं च कार्यान्वयेत्यत्र कार्यस्य विशेषणत्वमन्वयस्य च विशेष्यत्वम्, अन्वयीत्यत्र चान्वयस्य विशेषणत्वं कार्यस्य विशेष्यत्वमिति युगपदेव विशेषणत्वविशेष्यत्वे प्रत्येकमनयोरन्योन्यापेक्षया स्यातामित्याह—युगपच्चेति । उभयमप्यस्तु, को दोष. ? इत्यत आह—न चेति । शक्त्यगोचरत्वप्रसङ्गादिति । विशेषणस्यैव क्रियान्वयित्वनियमात्कार्यस्य च विशेषण-

---

शक्ति ग्रह हो जायगा, किन्तु आनयनरूप कार्यार्थ, अन्य किसी कार्य से अन्वित है नही, अत उसकी वाचकता 'आनय' पद मे कैसे रहेगी ? यदि अन्य कार्यानन्वित आनयन की ही 'आनय' पद मे वाचकता मान ले, तब तो सभी पदो मे कार्यान्वित स्वार्थ की वाचकता का नियम भंग हो जाता है । यदि कहा जाय कि आनयनरूप कार्यार्थ यद्यपि अन्य कार्य से अन्वित नही, तथापि योग्य इतर गोरूप अर्थ से अन्वित होने के कारण उसकी वाचकता 'आनय' पद मे मान लेंगे । तो यह कहना युक्त न होगा, क्योकि तब तो किसी पद मे कार्यान्वित स्वार्थ की वाचकता और किसी पद मे योग्य इतर अर्थ से अन्वित स्वार्थ की वाचकता—इस प्रकार दो प्रयोजक मानने पड़ेगे ।

समाधान—उक्त शंका युक्त नही, क्योकि कार्य-निरुपित अन्वय के सम्बन्धी, अथवा कार्यपरक पद के अर्थ से अन्वित, स्वार्थ मे सभी पदो की शक्ति मानने पर दो प्रकार का प्रयोजक नही मानना पड़ता । [ वस्तुत प्राभाकर-सिद्धान्त मे लिडादि कार्यार्थ के ही वाचक है कार्यान्वित के नही और दूसरे पद कार्यान्वित के वाचक है । शालिकनाथ ने ऐसा ही कहा है—"तत्रापि कश्चिच्छब्द साक्षादेव कार्यप्रतिपादकतया व्युत्पद्यते, कश्चिच्च कार्यान्वितस्वार्थपरतया" (प्र० प० पृ० ९२) इसी का समर्थन भवनाथ ने भी किया है—"कार्यान्वितस्वार्थाभिधानेऽन्येषाम्, लिडादिस्तु कार्याभिधाने व्युत्पद्यते"—न० वि० पृ० ४४ ]

शङ्का—कुछ लोग जो ऐसा कहा करते है कि 'कार्यान्वयान्वयी'—यहाँ पर कार्य, अन्वय का विशेषण है ? कि उपलक्षण ? प्रथम पक्ष ठीक नही, क्योकि कार्य को विशेषण मानने पर कार्य-विशिष्ट अन्वय का अन्वय कार्यार्थ के साथ करना होगा (अर्थात् गौ को कार्यान्वयान्वयी ाने के लिए उसके साथ कार्य-विशिष्ट अन्वय का अन्वय करना होता है । वैसे ही आनयन रूप कार्यार्थ को भी कार्यान्वयान्वयी बनाने के लिये उसके साथ कार्य-विशिष्ट अन्वय का अन्वय करना होगा ) तब तो दो सम्बन्ध (एक कार्य का अन्वय और दूसरा उस अन्वय का अन्वय) मानने पड़ेगे । एवं वही कार्य, अन्वय का विशेषण भी और वही अन्वय का विशेष्य भी मानना होगा । इस प्रकार के दो-दो सम्बन्धादि बन नही सकते, क्योकि लोक में ऐसा कही देखा नही जाता । द्वितीय ( उपलक्षण ) पक्ष भी उचित नही, क्योकि

गोचरत्वप्रसङ्गादिति, तदसत्, कार्यान्वयान्वयिनीति कार्यस्य संबन्धव्यावर्तकमात्रताया विवक्षितत्वात्। तत्र यथा गवादिपदार्थानामकार्यरूपाणा तत्संबन्धनिरूपकता तथैव कार्यस्यापि, सबन्धस्योभयनिष्ठत्वात्। इतरथा योग्येतरान्वयपक्षेऽप्यन्वययोग्येनेतरेणान्वयस्य विवक्षितत्वात्, अन्वयस्य विशेषणोपलक्षणपक्षयोरुक्तदोषानुषङ्गस्तुल्य एव स्यात्। उपलक्षणपक्षेऽपि कार्यस्य शब्दशक्तिविषयत्वं न व्याहन्यते, कार्योपलक्षितत्वस्यान्वयविशेषणतया कार्यस्यापि परम्परया शब्दशक्तिप्रतियोगित्वोपपत्तेः। एवमनभ्युपगच्छत स्वप्रच्युत्युपलक्षितसत्तायोगित्वमनित्यत्वमित्येवमादिलक्षणमपि न निर्वहति, प्रच्युते कार्यानन्वये सत्तायोगित्वमात्रस्यैव लक्षणत्वादात्मादेरप्यनित्यत्वापत्ते। स्वयमेव चानुभूतिरनुभूतिव्यवहारहेतुप्रकाश इति प्रतिज्ञाय

त्वाभावात् अन्वयवत एव शक्तिगोचरत्व न तु कार्यस्येत्यर्थः। तदेतत्परिहरति—**तदसदिति**। नात्र कार्यस्यान्वय प्रति विशेषणत्वोपलक्षणत्वे विवक्षिते अपितूभयानुगतव्यावर्तकत्वमात्र विवक्षितम्। नचैतदसिद्धमित्याह—**तत्र यथेति**। कार्यतदितरसबन्धस्योभयनिष्ठत्वादितरवदेव कार्यमपि निरूपकमित्यर्थः। एतदेव प्रतिबन्द्या साधयति—**इतरथेति**। योग्येतर इत्यत्रान्वय प्रतीति वक्तव्यम्, यत्किंचिद्योग्यताया अन्वयानुपपादकत्वात्। तथा चान्वययोग्येनेतरेणान्वित इत्यत्राप्यन्वययोग्यान्वययोरुक्तदूषणानतिवृत्ति, अन्वयविशेषितयोग्यविशेषितत्वात्। अन्वयस्योपलक्षणत्वे त्वभिहितान्वयवादत्वापात इत्यर्थः। एतेन व्यावर्तकत्वप्रयुक्तदोषोऽपि परिहृत इत्यभिप्रायः।

विशेषविवक्षायामप्युपलक्षणपक्षे न दोष इत्याह—**उपलक्षणपक्षेऽपीति**। कार्योपलक्षितोऽन्वय इति कोऽर्थ ? कार्यविशेषितोपलक्षितत्वविशेषितोऽन्वय इति। न चोपलक्षितत्वमप्युपलक्षणमेव, अनवस्थानात्। ततश्च परम्परया कार्यस्याप्यन्वयशरीरविनिवेशितया शब्दशक्तिगोचरत्वमित्यर्थः। यदि चोपलक्षणत्वापराधादेवात्यन्तमननुप्रवेश इत्याशय, तर्ह्यनित्यत्वलक्षणमपि न सिद्ध्येत्। तत्र हि स्वप्रच्युत्युपलक्षितसत्तायोगित्वमनित्यत्वमिति लक्षणे प्रच्युतेर्विनाशस्योपलक्षणतया सत्तानन्वयात् केवलसत्तायोगित्वमनित्यत्वमपि स्यात्। तथा चात्मादेरनित्यत्वमित्यतिव्याप्तिस्तदेतदाह—**एवमनभ्युपगच्छत इति**। कार्यं लक्षणम्। इष्टप्रसङ्गता परिहरति—**स्वयमेवेति**। सिद्धे व्युत्पत्तिदूषणेन कार्यव्युत्पत्तिसमर्थनेन च तर्कबाधविपक्ष-

तब तो कार्योपलक्षित अन्वय के अन्वयी में शब्द की शक्ति माननी होगी। उपलक्षण होने से कार्यार्थ शक्यकोटि से बाहर ही पड़ा है, अतः वह शब्द-शक्ति की विषयता से वञ्चित रह जायगा।

समाधान—उन लोगों का यह कहना नितान्त असंगत है, क्योंकि हम कार्य को न तो विशेषण ही मानते हैं और न उपलक्षण, अपितु सम्बन्ध (अन्वय) का व्यावर्तक मात्र मानते हैं। अर्थात् वहाँ जैसे अकार्य रूप गो-आदि पदार्थों को सम्बन्ध (अन्वय) का निरूपक (व्यावर्तक) मानते हैं, वैसे ही कार्य को भी, क्योंकि सम्बन्ध सदैव उभय-निष्ठ होता है, अतः दोनों उसके निरूपक माने जाते हैं। अन्यथा योग्येतरान्वय-पक्ष में भी अन्वय के योग्य इतर (अन्य) के साथ अन्वय करने में भी वही दोषारोपण होगा, जो कि विशेषण और उपलक्षण पक्षों में किया गया है। उपलक्षण पक्ष में भी कार्य, शब्द शक्ति-विषयता से वञ्चित नहीं रहता, क्योंकि कार्योपलक्षितत्व को अन्वय का विशेषण मानते हैं, अतः कार्य में भी परम्परया शब्द-शक्ति-विषयता बन जायगी। अन्यथा (उपलक्षण हो जाने से ही कार्य को शब्द-शक्ति से बाहर निकाल देने पर) 'स्वप्रच्युत्युपलक्षितसत्तायोगित्वम्' (स्वनाशोपलक्षितसत्ता-योगित्व)—यह अनित्यत्व का लक्षण भी नहीं बनेगा, क्योंकि उपलक्षण होने के कारण प्रच्युति (नाश) को लक्षण-कोटि से निकाल देने पर 'सत्ता-योगित्व'—इतना ही अनित्यत्व का लक्षण रह जाता है, फिर तो आत्मादि में भी अनित्यत्व की प्राप्ति होगी। स्वयं आपने

१. सम्बन्धव्यावर्तकतामात्रानङ्गीकारे। २. अनित्यत्वरूपविधेयानन्वये। ३. स्वकीयग्रन्थे निबद्धत्वादित्यन्वय.

मोक्षदशाया व्यवहारहेतुत्वाभावात् लक्षणस्याव्याप्तिमाशङ्क्य व्यवहारहेतुत्वमुपलक्षणमित्यङ्गीकृत्योपलक्षितत्वमपि क्वचित्साध्य यथा विनाशोपलक्षितसत्तायोगित्वमनित्यत्वमिति स्वकीयग्रन्थे निबद्धत्वात्। एतेन विवादपदानि पदानि न कार्यान्वयान्वयिनि शक्तिमन्ति पदत्वात् कार्यपदवदित्यनुमानमपास्तम्, विशेषणोपलक्षणपक्षयोरुक्तदूषणोद्धरणात् कार्यवदस्यापि कार्यान्वयान्वयिनि शक्तिमत्त्वेन दृष्टान्तस्य साध्यविकलत्वात्, विवादपदानि पदानि कार्यपराणि पदत्वात्कार्यपदवदिति प्रयोगसंभवाच्च। न च 'विज्ञानमानन्दं ब्रह्म' इत्यादिपदेषु व्यभिचार, तेषामपि द्रष्टव्य इत्यादिविधिशेषतया कार्यपरत्वात्। तदेवं सकलपदाना कार्यपरत्वान्न सिद्धे ब्रह्मणि वेदान्तवाक्याना प्रामाण्यमिति।

---

बाधकतर्काभावाभ्यामनुमानमपि दूषितमित्याह—**एतेनेति**। यजेतेत्यादौ लिङादिव्यवच्छेदाय विवादपदग्रहणम्, इतरथा दृष्टान्तासिद्धे.। दृष्टान्तस्य साध्यवैकल्य चाह—**कार्यपदस्यापीति**। विशेषणोपलक्षणेत्येतदादिर्वाय ग्रन्थ.। स्वपक्षेऽनुमान दर्शयन् बाधमप्याह—**विवादपदानीति**। कार्यभावार्थपदयो सिद्धसाधनतानिवृत्त्यै विवादपदग्रहणम्। ननु 'विज्ञानमानन्द ब्रह्मे'त्यादीनि पदानि सिद्धब्रह्मस्वरूपपर्यवसितानि, विध्यश्रवणात्, विधिसन्निधिश्रवणाभावाच्च। द्रष्टव्य इत्यादेश्च विधित्व न सभवति। उपयुक्तमुपयोक्ष्यमाण वा सस्कारार्हम्, यथाहु'—'भूतभाव्युपयोग हि द्रव्यं सस्कारमर्हती'ति[3]। न चात्र प्रोक्षितव्रीहीणामिव विज्ञानसस्कृतस्यात्मन क्वचित्क्रतौ विनियोक्ष्यमाणत्वम्। शुद्धबुद्धब्रह्मात्मतत्त्वज्ञानस्य समस्तप्रवृत्तिविरोधित्वात्। नापि कृष्णविषाणादिवद्विनियुक्तत्वम्, येन चात्वालप्रासनेनेव ज्ञानेनात्मा सस्क्रियते। नापि सुवर्ण भार्यमित्यत्र सुवर्णेन बिभृयादितिवदात्मना पश्येदिति विनियोगभङ्ग, दर्शनस्य प्रमाणपराधीनतयाऽविधेयत्वात्। साक्षात्कारस्य फलतया विधानानर्हत्वात्। विधिपरत्वे च ब्रह्मासिद्धे', अतिस्पष्टो व्यभिचार इति तत्राह—**न च विज्ञानमिति**। अयमभिसन्धि —यद्यपि यथाश्रुते सस्कारपक्षोऽनुपपन्नस्तथापि सुवर्णभरणसक्तहोमादिवाद्विनियोगभङ्गे न किंचिदस्ति बाधकम्। न च दर्शनाविधेयत्व बाधकम्; ध्यानत्वात्तस्य विधेयत्वमायुष्मताप्यनुमन्यते। यथाह श्रुति.—'निदिध्यासितव्य.' इति। न च ब्रह्मासिद्धिः, यूपादिवत्तत्सिद्धेरपि सभवात्। ततस्तद्विधिविपयापेक्षितमात्मान सत्यज्ञानादिरूप समर्थयन्ति सन्त्यमूनि पदानि न कार्यपरतामतिवर्तन्ते। सर्ववेदान्तप्रत्ययतया चाश्रयमाणस्थलेष्वपि समर्थयन्त्येव विधिमिति। उपसहरति—**तदेवमिति**।

---

अनुभूति, अनुभूति-व्यवहार का हेतुभूत प्रकाश है–ऐसी स्वयप्रकाशत्व की प्रतिज्ञा की, पश्चात् मोक्ष-दशा में व्यवहार हेतुत्व न रहने से लक्षण की अव्याप्ति की आशका करके व्यवहार-हेतुत्व को उपलक्षण मानकर, उपलक्षितत्व भी कहीं-कहीं साध्य रहा करता है, जैसे—विनाशोपलक्षितसत्ता-योगित्व—इस प्रकार अपने ग्रथ में लिख रखा है। इसी से 'विवादास्पद पद, कार्यान्वय के अन्वयी में शक्तिमान् नहीं, पद होने से, जैसे कार्यपद'–यह अनुमान भी निरस्त हो जाता है, क्योंकि विशेषण और उपलक्षण पक्ष के दोषो का निराकरण कर दिया गया है। 'कार्य' पद भी कार्यान्वय के अन्वयी में शक्तिमान् होने से दृष्टान्त साध्यविकल भी है। एव 'विवादास्पद पद, कार्यपरक है, पद होने से, जैसे–'कार्य'पद'—यह सत्प्रतिक्ष दिया जा सकता है। 'पदत्व' हेतु "विज्ञानमानन्द ब्रह्म"–आदि सिद्धार्थक पदो में व्यभिचारी है–ऐसी शङ्का नहीं कर सकते, क्योंकि उक्त पद भी "द्रष्टव्य"–इस विधि के अङ्ग होने से कार्यपरक ही है। इस प्रकार यह सिद्ध हो गया कि समस्त पद कार्यपरक है, अत सिद्ध ब्रह्म में वेदान्त वाक्यो का प्रामाण्य नहीं बन सकता।

---

१ विधेयमित्यर्थ। २. नियोगशक्तधात्वर्थशक्तपदयोरित्यर्थः। ३ त० वा० २।१।१२। ४ यथाऽत्रसुवर्णस्य कारणत्वेन भरणसम्पादकत्वम्, तथाऽऽत्मनोऽपि दर्शनसम्पादकदर्शनसम्पादकत्वमित्यर्थ'। ५. प्रथमास्थाने

अत्रोच्यते—न तावत्सिद्धे प्राथमिकव्युत्पत्त्यसंभवः। प्रागुन्नीतन्यायेन पुत्रस्ते जात इत्यादिवाक्यादपि व्युत्पत्तिसंभवात्। न च तत्र पारिशेष्यावधारणानुपपत्तिः, यतः—

दृष्टचैत्रसुतोत्पत्तेस्तत्पदाङ्कितवाससा।
वार्ताहारेण यातस्य परिशेषविनिश्चितेः ॥ १६ ॥

यो हि परिदृष्टचैत्रप्रहर्षहेतुपुत्रजन्मा पुत्रपदालिप्तकुङ्कुमाङ्कितपटप्रदर्शकेन वार्ताहारेण सह चैत्रसकाशं गतः, तस्य दिष्ट्या वर्धसे चैत्र! पुत्रस्ते जात इति वार्ताहारव्याहारश्रवणसमनन्तरं समुन्मीलत्पुलकसकलकलेवरमुत्फुल्लगण्डयुगलमुल्लसितनयनयुगलं चैत्रमवलोकयतस्तत्प्रमोदलिङ्गेन स एव नूनमनेन मदवलोकितः सुतसंभवः प्रमोदहेतुरेतस्माद्वाक्यादधिगत इति परिशेषावधारणोपपत्तेः। न च प्रियासुखप्रसवस्यापि संभवात्परिशेषावधारणानुपपत्तिः, पुत्रपदाङ्कितपटप्रदर्शनवत्प्रियासुखप्रसवसूचकाभावात्। न च विद्यमानतामात्रेण तत्रापि शङ्कावकाशः,

---

प्राथमिकव्युत्पत्तौ सिद्धे सिद्धायाः प्रसिद्धार्थपदसमभिव्याहारात् व्युत्पत्तिः स्वत एव सिध्यतीति तां समर्थयते—**न तावदित्यादिना**। परिशेषोपपत्तिं श्लोकेनोपनिबध्नाति—**दृष्टेत्यादिना**। दृष्टा चैत्रसुतोत्पत्तिर्येन तस्य दृष्टचैत्रसुतोत्पत्तेस्तत्पदेन तस्य पुत्रस्य पदेनाङ्कितं चिह्नितं वासो वस्त्रं यस्य हस्तेऽसौ तत्पदाङ्कितवासास्तेन तत्पदाङ्कितवाससा वार्ताहारेण सह यातस्याविदितार्थभाषस्य च पुंसः परिशेषविनिश्चितेः संभवादित्यर्थः। अत्र च विज्ञातपुत्रजन्म विहायाविज्ञातहर्षहेतुकल्पनमयुक्तमिति दर्शयितुं दृष्टेत्यादिविशेषणम्, विज्ञातादपि प्रियासुखप्रसवाद्विशेषदर्शनार्थं तत्पदाङ्कितेति। अस्यैव श्लोकस्यार्थं विवृणोति—**यो हीत्यादिना**। यत्तु तत्पदाङ्कितवाससेति विशेषणस्य प्रयोजनमुक्तं तद्दर्शयति शङ्कानिरासपूर्वकम्—**न च प्रियेति**। तत्र किं पुत्रजन्मैव तत्सूचकम्? किं वान्यत्? आहो संभावनामात्रात्तच्छङ्का? आद्ये प्रथमप्रतीतपुत्रजन्मपरित्यागे कारणाभावात् तत्रैव सङ्गतिग्रहो युक्तः। द्वितीयं निषेधति—**पुत्रपदाङ्कितेति**। तृतीयं निषेधति—**न च विद्यमानतेति**। विशेषनिर्णयकारणाभावेऽपि संभावनामात्रेण चेद्विपरीतशङ्कोदयस्तर्हि गवानयनवदेव छत्राद्यानयनमपि तेन क्रियते इति तेषामपि शब्दार्थताशङ्कया अनिर्णयः स्यादित्यर्थः। एतेन तदपि निरस्तम्। यदाह भवनाथः—'नच स्वाधिगततत्प्रिये तद्धीरिति क्लृप्तत्वादवधृतिरनत्रैवानेकस्य संभवात् सुतो जातः, सुता ते सुखं प्रियेत्यादेरिति', एवं सिद्धे प्राथ-

---

उत्तरपक्ष—सिद्धार्थ में प्राथमिक सगतिग्रह असम्भव नहीं, क्योंकि पूर्वोक्त न्याय से "पुत्रस्ते जात:"—आदि वाक्यों से भी शक्तिग्रहण हो सकता है। यह जो कहा था कि वहाँ पुत्र-जन्म रूप हर्ष-हेतु का परिशेषावधारण नहीं हो सकता, वह कहना उचित नहीं, क्योंकि 'जो व्यक्ति चैत्र के पुत्र की उत्पत्ति देख, पुत्र-पद-चिह्नित वस्त्र लिये आते हुए सन्देश-वाहक के साथ साथ चैत्र के समीप आया है, वह व्यक्ति चैत्र की प्रसन्नता के एकमात्र हर्ष-हेतु (पुत्र-जन्म) का निश्चय क्यो न कर लेगा? क्योंकि जब वह देखेगा कि सदेश-वाहक के "दिष्ट्या वर्धसे चैत्र! पुत्रस्ते जात"—इन शब्दो को सुनते ही चैत्र का पूर्ण कलेवर पुलकित हो गया, दोनो गालो पर हर्ष की लहरियाँ थिरक उठी और नेत्र कमल विकसित हो गये है। तब चैत्र के इस प्रमोद-चिन्हो से तुरत अनुमान कर लेगा कि निश्चित ही वही पुत्र-जन्म इसके हर्ष का कारण है, जिसे मै देख कर आया हूँ। यदि कहें कि स्त्री के सुखपूर्वक प्रसवादि भी इसके हर्ष के हेतु सम्भव है, अतः पारिशेष्यावधारण न हो सकेगा, तो यह कहना उचित नहीं, क्योंकि जैसे पुत्र-पद-चिन्हित वस्त्र देखता है वैसे सुख-प्रसव का चिन्ह कोई नहीं देख रहा है। यदि कहें कि सुख प्रसव की भी उपस्थिति है—एतावता शङ्का हो सकती

---

तृतीयाकल्पनमितियावत्—द्र० पू० मी० ३।४।८। १. नय० वि० ४४ पुटे, स्वेन (व्युत्पित्सुना) अधिगतं यत् देवदत्तस्य प्रियम् (पुत्रजन्म) तस्मिन् (पुत्रजन्मनि) तस्य (पितुः, तस्माद्वाक्यात्)

कार्येऽप्युपानच्छत्रदण्डाद्याहरणलक्षणावान्तरकार्यदर्शनेन शङ्काप्रसरस्य दुर्निवारत्वात् । एवमुक्तरीत्या सिद्धेऽपि प्राथमिकव्युत्पत्तेः संभवात्प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीत्यादिप्रसिद्धपदसमभिव्याहारनिबन्धनव्युत्पत्तावपि सिद्धार्थपरता न व्याहन्यते, मुख्यार्थविषयतया सिद्धेऽपि प्रयोगयोगे लाक्षणिकत्वकल्पनानुपपत्तेः ।

नच प्रथमावगतकार्यान्वयानुरोधेन लक्षणाश्रयणम्; प्रथममपि 'पुत्रस्ते देशान्तरादागतः' 'पुत्रस्ते गच्छति,' 'पुत्रस्ते सुखी,' 'पुत्रस्ते निरामयः' इत्यादिप्रयोगेष्वावापोद्धाराभ्यां पुत्रादिपदानां स्वस्वार्थे व्युत्पत्तेरुपपत्तेः । प्रथमव्युत्पत्त्यनुसारेण च लक्षणाश्रयणे लोके भावार्थकार्ये व्युत्पत्तेर्वेदे तदसंभवात्, यजेतेत्यादिशब्दानामबोधकताप्रसङ्गः । कामाधिकारे च प्रथम

मिकव्युत्पत्तिसमर्थनेन तत्पूर्वकप्रसिद्धार्थसमभिव्याहारनिबन्धनव्युत्पत्तिरपि समर्थितेत्याह—**एवमुक्तरीत्येति** । यत्तु सिद्धार्थपरपदप्रयोगो लाक्षणिक इत्युक्तम्, तत्राह—**मुख्यार्थेति** ।

ननु प्रथमं प्रयोक्तृव्युत्पत्तिकाले पुत्रादिपदानामावापोद्धारेण कार्यान्वितस्वार्थे सङ्गतिग्रहः 'पुत्र पश्य' इत्यादिकार्यवाक्येषु कृतस्तदनुरोधात्स्वप्रयोगसमयेऽपि सिद्धार्थप्रयोगो लाक्षणिक इति तत्राह—**न च प्रथमेति** । **इत्यादिप्रयोगेष्विति** । सिद्धार्थप्रयोगेष्वित्यर्थः । किंच प्रथमं योग्येतरविशेषकार्यान्विते व्युत्पन्नस्यान्यत्र योग्येतरमात्रान्विते प्रयोगो लाक्षणिक इति यदि ब्रूषे, तर्हि लोके धात्वर्थात्मककार्ये व्युत्पन्नस्य वेदे तस्य लाक्षणिकतया कार्यतानङ्गीकारात् लिङादेर्लाक्षणिकत्वं प्रसज्येत । तथा काम्यनियोगे फलदातृनियोगे व्युत्पन्नस्य नित्येषु लाक्षणिकतापातः। तथा नित्यनैमित्तिकविधिषु स्वतन्त्रकार्ये गृहीतसङ्गतिकस्य तदङ्गप्रया-

है, तब तो कार्य-स्थल पर भी नौकर जैसे गौ ला रहा है, वैसे ही जूता, छत्र, दण्डादि भी ला रहा है, अतः उसमें भी शब्द-शक्यता की शङ्का होने लगेगी। इस प्रकार सिद्धार्थ में भी प्राथमिक व्युत्पत्ति ही सम्भव है। "प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति"—आदि वाक्यों में प्रसिद्धपद के सन्निध्य से भी व्युत्पत्ति होने पर सिद्धार्थ-बोधकता अव्याहत है। (यह जो कहा था कि ऐसे वाक्यों को लाक्षणिक माना जाता है, वह कहना भी अनुचित है, क्योंकि) जब मुख्य अर्थ में प्रयोग बाधित हो, तब लक्षणा मानी जाती है। यहाँ सिद्ध रूप मुख्यार्थ में किसी प्रकार का बाधादि नहीं, अतः लाक्षणिकत्व की कल्पना नहीं बन सकती।

पुत्रादि पदों की प्राथमिक शक्ति कार्यान्वित स्वार्थ में हुई है—इसके अनुरोध से भी सदैव लक्षणा मानते रहना भी उचित नहीं, क्योंकि प्रथम-समय भी "पुत्रस्ते देशान्तरादागतः" (आपका पुत्र विदेश से आया),—"पुत्रस्ते गच्छति" (आपका पुत्र जाता है), "पुत्रस्ते सुखी" (आपका पुत्र सुखी है), "पुत्रस्ते निरामयः" (आपका पुत्र नीरोग है)—आदि प्रयोगों में आवाप-उद्धार (कुछ पदों के बढ़ाव-घटाव) के द्वारा पुत्रादि पदों का अपने-अपने अर्थ में शक्ति ग्रह बन जाता है (अर्थात् जिस पद के बढ़ जाने से जो अर्थ बढ़ जाता है और घट जाने से घट जाता है, उसमें उसकी शक्ति का निश्चय हो जाता है)। प्रथम व्युत्पत्ति के अनुसार सब लक्षणा करने पर यजेतादि वैदिक शब्दों में अबोधकता आ जायगी, क्योंकि उनकी प्रथम व्युत्पत्ति लोक-प्रसिद्ध धात्वर्थ रूप कार्य में ही होती है, (नियोगरूप वैदिक कार्य में हो नहीं सकती, कारण यह है कि नियोग या अपूर्व लोक में प्रसिद्ध नहीं, अतः नियोगरूप कार्य में लिङादि की लक्षणा भी नहीं हो सकती, फिर तो वैदिक यजेतादि किसके बोधक होंगे? जिस लौकिक कार्य में उनकी शक्ति है) उसे वेद में कार्य नहीं माना जाता। एवं काम्य नियोग में यदि लिङादि की प्राथमिक व्युत्पत्ति हुई, तब नित्यादि

धीरिति विशेषावधृतिः सम्भवति पुत्रजन्मनः फलत्वादिति न वाच्यमित्यन्वयः। कुत? इत्यत आह—तत्रैव चेति। अनेकसम्भवमेव दर्शयति—सुत इति (न्या०म० १६३ पुटे चित्सुखव्याख्या)। १. काम्यनियोगे

कामसाधने नियोगे लिडादिपदानां व्युत्पत्ते, नित्यनैमित्तिकाधिकारे लाक्षणिको लिडादिप्रयोग स्यात्। एव नित्यनैमित्तिकयो स्वतन्त्रकार्ये पदशक्त्यधिगतेरङ्गवाक्ये परार्थकार्ये लिडादिपदप्रयोगो मुख्यो न स्यात्।

जादिषु परतन्त्रकार्ये लाक्षणिकतापात'। यद्यप्यनुवादाशङ्कया न झटिति नियोगान्तरबोधकत्वमङ्गवाक्यगतलिडादेरिति प्राभाकरराद्धान्तस्तथाप्यङ्गनियोगाभिधायित्वमिष्यत एवारादुपकारकाङ्गवाक्येषु, इतरथा तदुपकारासंभवाद्, अनन्यविषयत्वाच्च। सन्निपत्योपकारकेषु तदुभयाभावादनुवादकत्वमेवेति तदेतदाह—प्रथमव्युत्पत्तीत्यादिना। अबोधकतेति। अपूर्वस्य वाच्यभावार्थसत्रन्वादहेर्लक्ष्यत्वस्याप्यभावादित्यर्थ.।

कर्म-जन्य नियोग में लिडादि लाक्षणिक हो जायँगे, तथा नित्य कर्म-जन्य स्वतन्त्र नियोग में यदि लिडादि व्युत्पन्न हुए, तब प्रयाजादि अङ्ग-वाक्यों में परतन्त्र नियोग में लाक्षणिक ही होंगे।

[ प्रभाकर का कहना है कि "व्यवहारार्थत्वात् प्रयोगस्य, विशेषात्मकत्वाच्च व्यवहारस्य, अन्वितावगतिरेव तदर्थानाम्" ( बृ० १।१।२५ ) अर्थात् लोक-व्यवहार के लिए शब्द प्रयोग हुआ करता है, व्यवहार सदा अन्वितार्थ से ही होता है, अत प्रयोग के बल पर यही सिद्ध होता है कि 'पद' अन्वितार्थ के ही वाचक होते हैं। घटादि पद सुनने के अनन्तर जो केवल ( अनन्वित ) घट, बुद्धि में उतरता है, वह स्मरण होता है, शब्द-जन्य नहीं। वस्तुत स्मरण भी केवल पदार्थ का नहीं होता, अपितु "शुक्लो गुणो, गुण्यन्वित, शुक्लपदाभिधेयोऽयम्" (यह शुक्ल गुण, गुणी से अन्वित एव शुक्ल पद-वाच्य है—ऋ वि वाक्यावि० ) इस प्रकार अन्वित का ही स्मरण होता है। अन्वित में शक्ति मानने से क्या लाभ होगा ? स्वय प्रभाकर ने कहा है—"किमेव भविष्यति ? कार्याभिधायिता नियोगस्यावगता।" अर्थात् स्वर्ग-कामना वाले नियोज्य के साथ अन्वय-योग्य कार्य, क्षणिक यागादि क्रिया नहीं हो सकती, अत कुछ स्थायी नियोग में ही नियोज्य की कार्यता का ज्ञान लिडादि से होगा। इत्थम्—

"कार्यमेव हि सर्वत्र प्रवृत्तावेककारणम्। प्रवृत्त्यव्यभिचारित्वाल्लिडाद्यर्थोऽवधार्यते॥" (प्र प वाक्यार्थ०)

सकल प्रवर्तक वाक्यों में लिडादि का प्रयोग और सकल प्रवृत्तियों में कार्यार्थ का अव्यभिचार देखकर कार्यार्थ में लिडादि की शक्ति का निर्णय हो ही जाता है। कार्य क्या है ? इसका उत्तर आचार्य शालिकनाथ के शब्दों में यह है—

"कृतिसाध्य प्रधान यत् तत्कार्यमवसीयते। तच्च मानान्तरेणापि वेद्यमोदनपाकवत्।" (प्र पं वाक्यार्थ०)

अर्थात् जिसके उद्देश्य से प्रयत किया जाय और जो प्रयत्न के प्रति प्रधान हो, उसे कार्य कहते हैं, जैसे—ओदन-पाक। इसी कार्यार्थ का वेद में नाम-करण किया जाता है 'अपूर्व'—

"तस्माल्लोकानुसारेण व्युत्पत्ति कार्यमात्रके। तस्य त्वपूर्वरूपत्व वेदवाक्यानुसारत॥" (प्र पं वाक्यार्थ०)

अपूर्व ही पुरुष का नियोजक होने से नियोग कहलाता है—

"कार्यत्वेन नियोज्यं च स्वात्मनि प्रेरयन्नसौ। नियोग इति मीमासानिष्णातैरभिधीयते॥" (प्र पं वाक्यार्थ०)

इसी नियोग में वैदिक लिडादि का मुख्य प्रयोग होता है और दानादि क्रियारूप कार्य में लक्षणा, क्योंकि अपूर्व निष्ठ कार्यता की अव्यभिचारिणी है क्रिया-निष्ठ कार्यता। अर्थात् क्रिया जब तक असिद्ध है, तब तक वह कार्य ( कृतिसाध्य ) है और जब वह सिद्ध होगी, तभी अपूर्व का साधक बनेगी—

"अपूर्वं हि क्रियासाध्य साधिता साधनं क्रिया। तस्मादपूर्वसाध्यत्व क्रियासाध्यत्वसङ्गतम्॥

इत्यस्यैव विवरणमेतत्। फलजनकनियोगाख्यकार्ये इत्यर्थः। १. सन्निपत्योपकारकविधायकवाक्येष्वित्यर्थः। कर्माङ्गद्रव्याद्युद्देशेन विधीयमान कर्म, सन्निपत्योपकारकम्, यथा—अवघातप्रोक्षणादय। द्रव्यादिसंस्कारमन्तरा साक्षादुपकारक कर्म, आरादुपकारकम्, यथा—प्रयाजादयः। ( जै. सू. २।१।७,८ )

अथावधीरितभावार्थकामसाधनस्वतन्त्रविशेष कार्यमात्रं व्युत्पत्तिगोचर , सर्वत्र तस्या- व्यभिचारात् लाघवाच्चेति मतम् , तर्हीहापि योग्येतरान्विते पदशक्तेरव्यभिचाराल्लाघवाच्चेति सम समाधि । एवं च सति कार्यान्वयान्वयिनि पदशक्तिरित्यपास्तम् , अन्वितमात्रस्यप्रयोज- कत्वे संभवति कार्यान्वयान्वयिनीति कल्पनायां गौरवात् । न च कार्यपरपदार्थान्वितस्वार्थे शक्ति' , विकल्पासहत्वात् । तथाहि—कार्यपरत्व पदधर्म: ? कि वा पदार्थधर्म ? नाद्य: , सर्वपदानां लिङादिपदवत्कार्यपरत्वे पर्यायतापत्ते । अथ पर्यायतापरिहाराय मुख्यगौणसाक्षात्प-

---

अथ तेषा सग्रहायानुगतरूपे व्युत्पत्तिरिति ब्रूषे ? तर्हि सर्वसग्रहार्थ योग्येतरान्विते व्युत्पत्तिरित्येव स्वीकुरु, सर्वानुगतप्रयोजकलाभात् लाघवाच्चेत्याह—अथावधीरितेति । अवधीरित परित्यक्तः भावार्थ- रूपकामसाधनादिविशेषो येन तत्तथोक्तम् । एव सतीत्यस्यैव विवरणमन्वितमात्रस्येति । द्वितीय प्रयोजक दूषयति—न चेति । कि कार्यपर यत्पद तदर्थेनान्वित इति विवक्षितम् ? उत कार्यपरो यः पदार्थस्तद- न्वित इति विवक्षितम् ? इति विकल्प्य आद्य दूषयति—सर्वपदानामिति । ननु कार्यपरत्वेऽपि न

---

प्रमाणान्तरगम्यं हि लोक' शब्दैर्विवक्षति ।
क्रियाकार्यत्व एवात प्रयोगो लक्षणान्वित ॥" ( प्र. प वाक्यार्थ० )

प्रभाकर के इस सिद्धान्त पर आचार्य चित्सुखाचार्य का कहना है कि प्रथम व्युत्पत्ति व्यवहारा- धीन आप मानते है । लिङादि का व्यवहार तो अपूर्वरूप कार्य में न होकर क्रियारूप कार्य मे ही होता है । उस क्रियारूप कार्य को वेद मे मुख्य कार्य नही कहा जाता, अत वैदिक लिङादि किसी अर्थ के वाचक ही न होगे । जब वाचक ही नही, तब लक्षक भी कैसे होगे ? यदि अपूर्व मे किसी प्रकार शक्ति मान भी ली जाय, तब किस अपूर्व मे ? काम्यापूर्व मे ? या नित्यापूर्व मे ? या अङ्गापूर्व मे ? सभी अपूर्वों का स्वभाव विलक्षण है, अत किसी एक अपूर्व लिङादि की शक्ति है—इसमे विनिगमक कोई नहीं । किसी एक मे शक्ति माने, तब दूसरो मे लक्षणा माननी होगी, किन्तु आप सभी अपूर्वों मे वाच्यता ही मानते है ] ।

यदि कहा जाय कि भावार्थ ( धात्वर्थ रूप क्रिया ) स्वरूप कार्य, काम्यापूर्वरूप कार्य, स्व- तन्त्रापूर्व ( नित्यापूर्व ) रूप कार्य—इन कार्यों की विशेषताओ को छोड़कर सर्वानुगतरूप कार्यरूपता मात्र मे शक्ति मानेगे , क्योकि वह सभी कार्यों भी अव्यभिचरित है और इस पक्ष में लाघव भी है । तो यहाँ भी योग्येतर पदार्थ से अन्वित स्वार्थ मे पद की शक्ति मानने वाला भी वही समाधान कर सकता था कि अव्यभिचार तथा लाघव होने से यही पक्ष उचित है । इस प्रकार कार्य-अन्वय के अन्वयी मे शक्ति-पक्ष भी निरस्त हो जाता है , क्योकि अन्वित मात्र को जब शक्ति की प्रयोजकता बन जाती है, तब कार्यान्वयान्वित मे प्रयोजकत्व की कल्पना गौरव-ग्रस्त है । यह जो कहा था कि कार्यपरक पदार्थ से अन्वित स्वार्थ मे पदो की शक्ति माननी चाहिए, वह मे युक्त नही , क्योंकि कार्यपरत्व किसका विशेषण है ? पद का ? या पदार्थ का ? प्रथम पक्ष ठीक नही , क्योकि यदि सभी पद लिङादि पद के समान कार्यपरक होगे, तब तो सभी पद पर्याय ( एकार्थक ) हो जायँगे । यदि एकार्थकता हटाने के लिए कहा जाय कि लिङादि मुख्य वृत्ति से कार्यपरक है और अन्य पद गौण वृत्ति से अथवा लिङादि पद साक्षात् कार्यार्थ के बोधक है और अन्य पद परम्परा से, जैसा कि शालिकनाथ ने कहा है—

"प्रधानगुणभावेन लब्धान्योऽन्यसमन्वयान् ।
पदार्थानेव वाक्यार्थं सङ्गिरन्ते विपश्चित ॥
एव कार्यात्मकेऽप्यर्थे व्युत्पद्यन्ते लिङादय' ।
तदन्वितेषु स्वार्थेषु तथा शब्दान्तराण्यपि ॥" ( प्रं पं. वाक्यार्थ० )

रम्परादिभेदेन कार्यपरतां विशिष्यात्, न तर्ह्येकप्रयोजकत्वलाभ[1], मुख्यादिविशेषणानां सर्वपदेष्वेकरूपताभावात्। न हि सिंहो देवदत्त इत्यादौ सिंहादिशब्दानां मुख्यगौणयोस्तत्परत्वमेकरूपम्, तथा सति देवदत्तादेरपि केसरादिमत्त्वप्रसङ्गात्। नापि द्वितीय, पदार्थानां कार्याबोधकत्वेन तत्परत्वाभावात्। अथ कार्यशेषत्व कार्यपरत्वं पदार्थानाम्, तर्हि कार्यशेषत्व कार्यपदार्थस्य नास्तीति तदन्विताभिधायिकारकपदाना कार्यपरपदार्थान्विताभिधायित्वं न स्यादिति न किंचिदेतत्। यत्पुनरनुमानं कार्यपराणि पदानि पदत्वात्कार्यपदवदिति, तदपि 'न पिवेन्न हन्यादि, त्यादिनिषेधवाक्यस्थपदैरनैकान्तम्। न हि तत्र प्राप्तक्रियानिवृत्त्यौदासीन्यव्यतिरेकेण किंचिदनुष्ठेयमवबोध्यते, हननप्रागभावस्यानादित्वेनाननुष्ठेयत्वात्। न हन्यामिति

कार्यपर्यायता कार्यपद मुख्यवृत्त्या तत्परामितरद् गोण्या, अथवा कार्यपदमव्यवधानेन तत्परमितरद्व्यवधानेनेत्यवान्तरविशेषादित्याशङ्क्य परिहरति—**न तर्हीति**। न हि मुख्यवृत्त्या तत्परत्वमेव जघन्यवृत्त्या-तत्परत्वमेवमितरदपीत्यर्थ। तदेव निदर्शयति—**न हीति**। किमिति तथा न स्यादित्यत आह—**तथा सतीति**। मुख्यवृत्त्या तत्परत्व हि केसरादिमत्त्वमादाय तदेव चेत्तत्परत्वं गौणेऽपि स्यात्, स्यादेव केसरादिमत्त्वमपीत्यर्थः। द्वितीये किं पदार्थाना कार्यपरत्व कार्यबोधकतया? उत साधकतया? नाद्यः, पदार्थाना बोधकत्वाभावात्। बोधकत्वे वा धूमादिवत् लिङ्गतयाऽनुमेयत्वप्रसङ्गादित्यभिप्रेत्याह—**पदार्थानामिति**। द्वितीय शङ्कते—**अथेति**। दूषयति—**तर्हीति**। अयमर्थ.—न कार्यस्य कार्यशेषत्व भेदाभावादतस्तदन्वितार्थाभिधायिना गवादिपदाना नोक्तरूपवत्तेति। निषेधवाक्येषु साध्याभाव दर्शयन्ननैकान्तिकता स्फोरयति—**न हि तत्रेति**। प्राप्ता या हननक्रिया तन्निषेधादनिष्टसाधनतावबोधाद्यत्पुरुषस्यौदासीन्यं तद्व्यतिरेकेणेत्यर्थ[2]। एतदुक्त भवति—सर्वत्र भावार्थनिष्ठो विधिर्दध्यादावपि भावार्थनिष्ठस्यैव सतो विधेरन्यत. प्राप्तत्वात्तस्याप्राप्ते शक्तिमात्रमुपसङ्क्रामति। 'यदाग्नेयोऽष्टाकपालो भवति' इत्यादावपि द्रव्यदेवतासबन्धानुमितयागविषयत्वमेव, तदिहाभावो न भावार्थ. ततस्तद्व्यावृत्तौ तद्व्याप्तविधिरपि व्यावर्तत इति। तदिदमाह—**अनुष्ठेयमिति**। किं च प्रागभावो ह्यत्र नञाभिधेयः प्रध्वंसे वैयर्थ्यम्, क्षणिकत्वा-

तब तो एक अनुगत प्रयोजकता का लाभ न हो सकेगा, क्योंकि मुख्यार्थत्वादि विशेष धर्मों की सभी पदो मे एकरूपता नही। जैसे कि "सिंहो देवदत्त"—इस वाक्य मे 'सिंह' पद और 'देवदत्त' पद—दोनो सिंहपरक होने पर भी उन दोनो मे सिंहार्थपरता एकरूप की नही। उन दोनो पदो मे यदि एक रुप का सिंहार्थकत्व मान लिया जाय, तब तो देवदत्त की गर्दन पर भी सटा तथा पीछे पूँछ उग जायगी। द्वितीय ( कार्यपरत्व पदार्थ-विशेषण है—यह ) पक्ष भी समुचित नही, क्योकि 'कार्यपरत्व' का अर्थ है—कार्यबोधकता। पदार्थ किसी अर्थ के बोधक नही होते, अत उनमे कार्यबोधकता कैसे रहेगी? यदि कहा जाय कि कार्यपरत्व का अर्थ है—कार्य-शेषत्व ( कार्याङ्गत्व )। पदार्थो मे कार्य-शेषत्व तो है ही, तब तो शेषी होने से कार्यपदार्थ मे कार्यशेषत्व है नही, अत तादृश कार्यान्वितार्थ के वाचक कारक ( गामादि ) पदो मे कार्यपरपदार्थान्वित अर्थ की वाचकता न रहेगी, अत यह द्वितीय पक्ष निस्तत्त्व है। यह जो अनुमान किया था कि 'विवादास्पद पद कार्यपरक है, पद होने से, कार्यपद के समान।' वह भी निर्दुष्ट नही, क्योकि 'कार्यत्व' हेतु "न पिबेत्", "न हन्याद्"—आदि वाक्यो के पदो मे व्यभिचारी है, कारण यह कि इन वाक्यों मे प्रसक्त पान, हनन क्रिया मे उदासीन हो जाने से अतिरिक्त कोई अनुष्ठेय अर्थ ( कार्य ) बोधित नही होता। वस्तुत. जो पुरुष सुरा पान या प्राणि-हनन करने जा रहा है, उसके लिए उक्त निषेध-

१. द्र० भा० पृ० १४५। २. दध्याश्रितभावार्थनिष्ठो यो विधिस्तस्याऽन्यत "अग्निहोत्रं जुहोति" इत्यनेन प्राप्तत्वात्तस्य दध्यादेरप्राप्तसम्बन्धमात्रमेवोपसङ्क्रामति ( बोधयति ) 'दध्ना जुहोति' इतिवाक्यमित्यर्थ.।

संकल्पस्य विधारकप्रयत्नस्य वा विधानाभ्युपगमे तस्याप्रतीयमानतया लक्षणाप्रसङ्गात् । प्राप्त-क्रियायाश्चेष्टसाधनत्वाभावबोधादेव निवृत्तेर्वाक्यस्य चरितार्थत्वोपपत्तेश्च ।

न च 'विज्ञानमानन्दं ब्रह्म' इत्यादिवचसां प्रतिपत्तिशेषत्वम्, विकल्पासहत्वात् । तथा हि कि शाब्दी प्रतिपत्तिर्विधेया ? उत भावनात्मिका ? अथ साक्षात्कारलक्षणा ? नाद्य , तस्या. स्वर्गकामो यजेतेत्यादिशब्दादिवद्विदितपदपदार्थसंगते स्वयमेवोत्पत्ते । न द्वितीय , ज्ञान-प्रकर्षहेतुत्वस्यान्वयव्यतिरेकसिद्धत्वेन भावनाया अविधेयत्वात् । न तृतीय , साक्षात्कारस्य

क्रियाया. स्वत एव निवृत्ते., स चानादिरननुष्ठेय इत्याह—हननेति । ननु यथा 'नेक्षेतोद्यन्तमादित्य' मित्यत्र नेक्षिष्य इति सङ्कल्पविधिपरत्व व्यवसित "तदुत्सर्गे कर्मणीत्यधिकरणे" तद्वदिह पर्युदा-सवृत्त्या हननविरोध्यहननसकल्पो विधीयताम्, अथवा हननोद्यतदेहेन्द्रियादेर्विधारकसामग्रीघटक कश्चन प्रयत्नमन्तरेण नाकस्मादौदासीन्य भवितुमर्हतीति स एवात्र विधीयतामिति, तत्राह—नेति । न तावदत्र सकल्पः श्रौत । किमिति न श्रौतः ? यावता तदन्यद्विरोधितदभावा यथायथ नञोऽर्था. स्मर्यन्ते तद्विरोधी च सकल्प इति चेन्न, अभावस्यैव मुख्यार्थत्वात् । इतरयोस्तु तदनुषङ्गादेव लक्षणादिवृत्त्यन्तरेण प्रयोगो-पपत्ते. । इतरथाऽनेकत्र शक्तिकल्पनाप्रसङ्गात् । एव प्रयत्नोऽपि न श्रौत., श्रौतसभवे च लक्षणा न युक्ता । एतेन नञः प्रकृत्यर्थसबन्धेनाहनन कुर्यादिति कल्पनमपि प्रत्युक्तम् । नेक्षेतेत्यत्र तु तस्य व्रतमित्यु-पक्रमादनुष्ठेयार्थविधिपरतावगमात् लक्षणयापि पर्युदासवृत्तिराश्रितेति वैषम्यादित्यर्थ. । तत्किमिदानीम-कस्मादेव हननोन्मुखाना देहेन्द्रियाणा तत उपरम इति ? नेत्याह—प्राप्तेति । अय भाव.—इष्टसाधनत्व-ज्ञानात्प्रवृत्तिरनिष्टसाधनत्वज्ञानाच्च निवृत्तिरित्यनन्तरमेव समर्थयिष्यते । तदिह यद्धन्यादिति प्रकृतिप्रत्य-याभ्या रागतः प्राप्तहनने इष्टसाधनतामनूद्य तन्नेति निषिध्यतेऽनर्थसाधनता च बोध्यते, तत्रापि प्रत्यक्ष-विरोधात् सहसेष्टसाधनताऽभावं बोधयितुमशक्नुवान. प्रतिषेधस्तदधिगमाय तामनर्थसाधनतामेवावेदयति, ततश्च विरलरागस्यानिष्टसाधनताज्ञानादौदासीन्यमिति निर्वृत्त निषेधवाक्यमतो न विधिनात्र किञ्चित्कृत्यमिति ।

यत्तु विज्ञानादिपदेष्वेव विधिनिष्ठतोपपादनेन व्यभिचारवारणम् , तद्दूषयति—न चेति । न च वच-नीय स्वर्गकामादिवाक्येष्वप्यध्ययनविधित एव बोधनमिति यतोऽत्रापि स एव शङ्कातीति ; पृथग्विध्यपेक्षा-नवकाशादिति, अध्ययनविधेरक्षरग्रहणमात्रविश्रान्तत्वाच्च । अन्वयव्यतिरेकेति । गान्धर्वशास्त्रादौ षड्जा-

वाक्य प्राप्त, हनन के प्रागभाव का ही प्रतिपादन करते है । प्रागभाव अनादि होने से अनुष्ठेय ( कृतिसाध्य ) कदापि नही हो सकता । यदि 'न हन्यात्'—आदि वाक्यो मे 'मै नही मारूँगा'—इस प्रकार के हनन-रोधक सङ्कल्प का विधान माना जाय, तब तो इस अर्थ मे उस निषेध वाक्य की लक्षणा माननी होगी , क्योकि इस प्रकार के संकल्प का वाचक कोई पद वहाँ नही । निषेध वाक्य प्राप्त हननादि क्रिया मे इष्ट-साधनता का अभाव-बोधन करके कृतकार्य हो जाते है, उन्हे किसी कार्य का विधान करने की आवश्यकता ही नही ।

वह जो कहा था कि "विज्ञानमानन्द ब्रह्म"—आदि वाक्य दर्शन-विधि के अङ्ग है, वह कहना भी अनुचित हैं , क्योकि दर्शन-विधि से किस प्रकार के दर्शन का विधान करना चाहते है ? क्या शाब्द ( परोक्ष दर्शन ) ? या ध्यानरूप दर्शन ? या साक्षात्कारात्मक दर्शन ? प्रथम ( शाब्द ज्ञान ) पक्ष युक्त नही , क्योकि यहाँ शाब्द ज्ञान के विधान की वैसे ही आवश्यकता नही, जैसे "स्वर्गकामो यजेत्"—आदि वाक्यो मे , कारण यह है कि जिस पुरुष को पद-पदार्थों का शक्ति-ग्रह हो गया है, उसे शब्द सुनते ही स्वय शाब्द ज्ञान हो ही जाता है । द्वितीय ( ध्यान-विधि ) पक्ष भी युक्त नही , क्योकि किसी वस्तु के ध्यान या मनन से उसका साक्षात्कार हो जाता है—यह लौकिक अन्वय-

( द्र० भा० पृ० १४१ ) । १. द्र० ब्र० सि० पृ० ७४ तथा न्या० म० पृ० १७१ । २ जै० सू० ४।१।३ ।

ब्रह्मरूपत्वेन नित्यत्वेनाविधेयत्वात्। अन्तःकरणपरिणतिरूपत्वे चानन्दसाक्षात्कारतया फलत्वेन विधेयत्वानुपपत्तेः। 'द्रष्टव्य' इत्यादिपदानां चार्हार्थतयाप्युपपत्तेः।

अथापि सिद्धार्थव्युत्पत्तौ किं मानमिति चेत्, उच्यते—

विवादाध्यासितं सिद्धं शब्दव्युत्पत्तिगोचरं।
मेयत्वान्न्यायगम्यत्वात् तवाभिमतकार्यवत्॥१६॥

न च कार्यत्वमुपाधिः, व्यतिरेकासिद्धेः। यत्कार्यं न भवति नासौ शब्दव्युत्पत्तिगोचरो तथा संप्रतिपन्नमिति व्यतिरेकव्याप्तेः परं प्रति दर्शयितुमशक्यत्वात्। नन्वाकृतेरेव शब्दार्थत्वा-

---

दिस्वरग्राममूर्च्छनासाक्षात्कार इत्यर्थः। तृतीयेऽपि साक्षात्कारः किं ब्रह्मस्वभावभूतः? किंवान्तःकरणपरिणामरूपः? नाद्यः, इत्याह— **साक्षात्कारस्येति**। द्वितीयं दूषयति— **अन्तःकरणेति**। नहि फलं विधेयं यथाहुः—'तस्य लिप्सार्थलक्षणे'तीति भावः। तत्किं प्रमत्तप्रगीतमिदं "द्रष्टव्य." इत्यादिवाक्यमित्यत आह— **'द्रष्टव्य' इत्यादिपदानामिति**। 'अर्हे कृत्यतृचश्चे'ति कृत्यप्रत्ययानामर्हार्थेऽपि विधानात्। "कृत्याः प्राङ् ण्वुलः" इति तव्यादीनां कृत्यसंज्ञत्वाच्चेत्यर्थः। एवं च सति सिद्धेऽर्थे व्युत्पत्त्यसंभवेन वेदान्तानामपि आत्मा ज्ञातव्य इति विधिनैकवाक्यतया कार्यपरत्वं शालिकनाथोक्तं थूत्कृतम्। यच्च तेन परमानन्दादित्वस्यानुभवपराहतत्वात् अभिभवकल्पनायाश्चायुक्तेर्निर्विकारत्वस्य च विज्ञानादिविकारवत्तया अयुक्तेर्नानन्दादिपरत्वमित्युक्तं तत्सर्वं चतुर्थपरिच्छेदे एवाचार्येण तुच्छीकरिष्यते।

ननु युक्तिरियम् यदेतावदभिहितम्, प्रमाणमभिधीयतामिति शङ्कते—**अथापीति**। तत्र तावत्कार्यस्यापि पदशक्तिगोचरतामङ्गीकृत्यानुमानमाह—**विवादेति श्लोकेन**। कार्यान्विते सिद्धसाधनताव्यवच्छेदाय विवादाध्यासितग्रहणम्। कार्यान्वयरहित इत्यर्थः। व्यतिरेकासिद्धिमेव विवृणोति— **यत्कार्यमिति**। ततश्च पक्षेतरत्वमिति भावः। केचित्त्विदमेवानुमानमुद्भाव्य दूषयाबभूवुः—"तदसत्[1]। कार्यान्वयोपाधिहतत्वात् गवादिव्यक्त्याऽनैकान्त्याच्च आकृतिः शब्दार्थ इति हि स्थितौ[2] शब्दार्थविदः" इत्यादिना। तत्रोपाधिः परिहृतः, अनैकान्त्यं परिहर्तुमुद्भावयति—**नन्वाकृतेरिति**। किं नैयायिकादिसाधारणमिदमने-

---

व्यतिरेक से ही सिद्ध है, अतः साक्षात्कार के लिए भावना ( ध्यान ) का विधान करना भी व्यर्थ है। तृतीय ( साक्षात्कार-विधि ) पक्ष भी सगत नहीं, क्योंकि यह साक्षात्कार तो ब्रह्मस्वरूप होने से नित्य है, इसका विधान सम्भव ही नहीं। यदि अन्तःकरण-वृत्तिरूप साक्षात्कार लिया जाय, तब भी अखण्डाकार वृत्ति स्वयं फल है, उसका भी विधान नहीं हो सकता। "आत्मा वा अरे द्रष्टव्यः"— यहाँ 'तव्य' प्रत्यय "अर्हे कृत्यतृचश्च"—इस सूत्र के अनुसार अर्ह ( योग्य ) अर्थ में भी माना जा सकता है, विधि में ही मानना कोई आवश्यक नहीं।

अब यह प्रश्न हो सकता है कि सिद्धार्थ की व्युत्पत्ति में प्रमाण क्या? उसके उत्तर में कहा जाता है—'विवाद-ग्रस्त ( ब्रह्मादि ) सिद्धार्थ, शब्द— शक्ति-ग्रह का विषय है, मेय या न्यायगम्य होने से, जैसे प्रभाकराभिमत कार्य'—यह अनुमान प्रमाण। इस अनुमान में 'कार्यत्व' उपाधि है— यह सन्देह नहीं हो सकता, क्योंकि कार्यत्व और प्रकृत साध्य की व्यतिरेक व्याप्ति सिद्ध नहीं, अर्थात् "जो कार्य नहीं होता, वह शब्द-शक्ति का विषय नहीं होता"—इस प्रकार की व्याप्ति दूसरे ( प्राभाकरेतर ) को कहीं दिखाई नहीं जा सकती। यदि शंका की जाय कि आकृत्यधिकरण (पू० मी० १।३।९ ) में यह निर्णय कर दिया गया है कि आकृति (जाति) में ही शब्द की शक्ति हुआ करती है, व्यक्ति में नहीं। व्यक्ति में शब्द-शक्ति-विषयता रूप साध्य न रहने पर भी 'मेयत्व' हेतु रहता है,

---

१. तत् = शब्दगोचरत्वानुमानम्। २. निश्चितवन्त इत्यर्थः।

द्व्यक्तेस्तदभावात्तत्रानैकान्तिकमिति चेत्, मैवम्, आकृतेः शब्दार्थत्वेऽपि तस्या एव शब्दार्थत्वमिति नियमानङ्गीकारात्, "व्यक्त्याकृतिजातयस्तु पदार्थः" इत्यक्षचरणपक्षपातिभिरङ्गीकारात्, आकाशादिपदानां च व्यक्तिवचनतया मीमांसकैरप्यभ्युपगमात्, व्यक्तिशब्दस्य च व्यक्तिवाचकत्वात्। ननु तत्रापि व्यक्तित्वोपाधेरेव वाच्यत्वं न व्यक्तेस्तस्या लक्ष्यत्वादितिचेत्, मैवम्, कचिच्छब्दान्तरवाच्यस्यैव शब्दान्तरलक्ष्यत्वाभ्युपगमात्, व्यक्तिः शब्दवाच्या न भवतीति स्ववचनव्याघाताच्च। तस्मात्सिद्धं सिद्धे ब्रह्मणि वेदान्तानां प्रामाण्यमिति।

अङ्गीकृत्यैतदवोचाम—कार्ये प्रामाण्यमेव शब्दस्यानुपपन्नम्, तत्र सङ्गतिग्रहणायोगात्।

---

कान्तिकत्वम्? किंवा मीमांसकं प्रत्येव? नाद्य इत्याह—आकृतेरिति। आकृतिराकारः सास्नादिमत्त्वं सूत्रे विवक्षितम्। द्वितीयेऽपि सकलशब्दानां जातिवाचकत्वं तेषां[1] मान्यसिद्धं जातिरहितेष्वपि भावादित्याह—आकाशादीति। ननु तथापि गवादिव्यक्तिष्वनैकान्तिकत्वस्य कः परिहारः? तत्राह—व्यक्तिशब्दस्येति। व्यक्तिशब्देनापि न व्यक्तिरभिधीयते किंतु सर्वव्यक्तिष्वनुस्यूतव्यक्तित्वोपाधिरेवेति शङ्कित्वा परिहरति—मैवं कचिदिति। अस्ति मीमांसकानामभ्युपगमः शब्दान्तरवाच्यमेव शब्दान्तरलक्ष्यमिति। तथा च व्यक्तेरपि यत्किंचिच्छब्दवाच्यत्वं मन्तव्यमितरथा लक्षणानुपपत्तेरित्यर्थः। नन्विमं नियममभ्युपगच्छद्भ्यः किमुत्तरं देयमिति तत्राह—व्यक्तिरिति। व्यक्तिः शब्दवाच्या न भवतीत्यत्र यस्या व्यक्तेः शब्दवाच्यत्वं निषिध्यते सा तावद्व्यक्तिशब्देनाभिधेया, इतरथा कस्यायं निषेधः स्यात्ततश्च परस्परं व्याघात इत्यर्थः। न च तत्रापि व्यक्तिशब्दलक्षितस्य शब्दवाच्यत्वनिषेध इति वाच्यम्। यतः किं नाम तल्लक्षितमिति पर्यनुयोगे लक्षणापरपराश्रयणमन्तरेण निरुत्तरताऽऽपातादिति।

यत्तदवोचाम कार्यस्य शक्तिगोचरत्वमङ्गीकृत्येति, तदुद्घाटयति—अङ्गीकृत्यैतदिति। तत्र कार्ये सङ्ग-

---

अतः व्यभिचारी है। तो यह शङ्का उचित नहीं, क्योंकि आकृति (जाति) में शब्द की शक्ति हम भी मानते है, किन्तु आकृति मे ही शक्ति है—यह नियम नही माना जा सकता, क्योंकि "व्यक्त्याकृतिजातयस्तु पदार्थः" ( व्यक्ति, आकृति और जाति—तीनों ही पद के शक्य हैं—न्या० द० २।२।६७ )—इस प्रकार महर्षि गौतम ने माना है। आकाशादि पदों की शक्ति व्यक्ति में ही मीमांसकों ने स्वीकार की है, एवं 'व्यक्ति' शब्द की शक्ति व्यक्ति में भी माननी ही पडेगी। यदि कहें कि 'व्यक्ति' शब्द की भी शक्ति ( सर्व व्यक्तियों में अनुगत ) व्यक्तित्वरूप उपाधि मे ही मानेंगे, व्यक्ति मे लक्षणा मानी जा सकती है, तो ऐसा नही कह सकते, क्योंकि किसी शब्द का वाच्य ही शब्दान्तर का लक्ष्य हुआ करता है ( जैसे 'तीर' शब्द का वाच्यार्थ ही 'गंगा' पद का लक्ष्य होता है ), अतः व्यक्ति यदि किसी शब्द की वाच्य नही, तब लक्ष्य कैसे होगी? 'व्यक्ति किसी शब्द की वाच्य नहीं'—ऐसा कहने मे वदतोव्याधात भी है ( क्योंकि व्यक्ति यदि 'व्यक्ति' शब्द की वाच्य नहीं, तब शब्द-वाच्यता का निषेध किस में करेंगे? और यदि व्यक्ति 'व्यक्ति' शब्द की वाच्य है, तब उसमें सभी शब्दों की वाच्यता का निषेध नहीं हो सकता )। इस प्रकार यह सिद्ध हो जाता है कि सिद्धार्थ ब्रह्म मे वेदान्त वाक्यों का परम तात्पर्य है। ( इस विषय का विशद विवेचन ब्र० सि० पृ० २३, भा० १।२।४ न्या० म० पृ० १५६ में देखें )। कार्य मे शक्ति-विषयता मानकर भी यह कह सकते है कि कार्यार्थ मे शब्द का प्रामाण्य ही नहीं बन सकता, क्योंकि उसे संगतिग्रहण ( शक्ति-ग्रह ) हो नहीं सकता।

प्राभाकर—कार्य मे शक्ति-ग्रह असम्भव कैसे? प्रवृत्ति देखकर प्रवर्तक ज्ञान का अनुमान होता है—( येयं स्वाधीनस्य प्रवृत्तिः, सा बुद्धिपूर्विका, स्वतन्त्रप्रवृत्तित्वात्, मदीयप्रवृत्तिवत्—प्र० पं०

---

१ मीमांसकानाम्। शब्दशक्तिगोचरत्वरूपसाध्यसत्त्वादित्यर्थः।

ननु कथं तत्र सङ्गतिग्रहणायोग', प्रवृत्तिदर्शनात् प्रवर्त्तकज्ञानमनुमाय तस्य च प्रवर्त्तकज्ञानत्वादेवात्मीयप्रवर्त्तकज्ञानवत्कार्यविषयकतामध्यवस्यानन्तरं शब्दान्वव्यतिरेकानुविधायितया तस्य शब्दजन्यत्वावगमेन तत्रैव शब्दशक्तेर्ग्रहणात् । न च स्वात्मनि प्रवर्त्तकबोधस्येष्टसाधनविषयत्वात्परप्रवृत्तावपि तदेव प्रवर्तकतयानुमीयते न कार्यमिति वाच्यम्, अतीतानागतविषयेष्विष्टसाधनज्ञानेषु प्रवर्तकत्वव्यभिचारात् । अथ कृतिसाध्येष्टसाधनत्वज्ञानं प्रवर्त्तकम्, तर्हि कार्यमेव नामान्तरेण प्रवर्तकं त्वयाप्यङ्गीकृम्, तस्यैव कृतसाध्यत्वात् 'कृतिसाध्यं प्रधान

तिग्रहणपरिपाटी दर्शयति पूर्ववादी—नन्विति । प्रवृत्तिदर्शनादिति । स्वतन्त्रस्य प्रवृत्तिदर्शनादिति यावत् । इतरथा बलवदनिसलिलोघेन नुद्यमानप्रवृत्तावनैकान्तिकता स्यादिति । नन्विष्टसाधनत्वज्ञानादेवात्मनि प्रवृत्तिर्दृष्टा न कार्यज्ञानादतस्तदेव परत्राप्यनुमीयतेऽतो विरुद्धो हेतु, साध्यविकलश्च दृष्टान्त इतीमा शङ्का निषेधति—न चेति । तदेवेति । ज्ञायमानतया विवक्षितम्, तेन न पूर्वापरव्याघात. । तत्र किमिष्टसाधनताज्ञानं प्रवर्त्तकम्? किवा कृतियोग्यताविशेषणविशिष्टतज्ज्ञानम्? आद्ये प्राह—अतीतानागतेति । द्वितीय शङ्कते—अथेति । कृति पुरुषप्रयत्नस्तेन साध्य यदिष्टसाधन तज्ज्ञानमिति योजना । तर्ह्यविप्रतिपत्तिः कार्यस्य चैव रूपत्वादित्याह—तर्हीति । यद्यपि भावार्थस्य कृतिसाध्यत्वमस्ति, तथापि कार्योपाधित्वान्न प्राधान्येन तदस्तीति भावः । एतदेव शालिकनाथवचनेन द्रढयति—कृतिसाध्यमिति । कृतिसाध्य कार्यमित्युक्ते भावार्थेऽतिप्रसक्तिस्तदर्थ प्रधानमित्युक्तम, प्राधान्य चेद कृत्युद्देश्यत्वम्, तावति चोक्ते फलेऽपि स्यात्तदर्थं कृतिसाध्यमित्युक्तम्, तत्र कृतिसाध्यत्व कृत्यन्वयव्यतिरेकरूपानुमानगम्यम्, कृतिप्राधान्य च मानसप्रत्यक्षमिति प्रत्यक्षानुमानगम्य बालस्य स्वात्मनि कार्यम्, यथौदन. पाकश्चेत्यर्थ. ।

वाक्यार्थ० परि० पृ० २६ ) प्रवर्तक ज्ञान मे प्रवर्तकज्ञानत्व रूप हेतु से अपने प्रवर्तक ज्ञान को दृष्टान्त बनाकर कार्यविषयकता का अनुमान होता है—( अस्य प्रवृत्तिहेतुभूता बुद्धि, कार्यविषया, प्रवृत्तिहेतुभूतबुद्धित्वात्, मदीयप्रवृत्तिहेतुभूतबुद्धिवत्—प्र० पं० वाक्यार्थ० परि० पृ० २६ )। तदनन्तर 'गामानय'—आदि शब्दो के साथ उक्त कार्य-ज्ञान का अन्वयव्यतिरेक देख ( अर्थात् 'गामानय'—आदि शब्दो के होने से ही उसे कार्य-ज्ञान होता है और न होने से वह ज्ञान नही होता—यह जानकर ) कार्यविषयक ज्ञान से तादृश शब्दो की जन्यता निश्चित हो जाती है, अत उसी (कार्य) मे शब्द का शक्ति ग्रह हो जाता है । आचार्य मण्डन मिश्र का कहना है कि बालक अपने मे प्रवर्तक ज्ञान को इष्ट-साधन-विषयक अनुभव करता है, अत मध्यम वृद्ध की प्रवृत्ति मे उसी ( इष्ट-साधन-विषयक ज्ञान ) को ही प्रवर्तकत्वरूप से अनुमान करता है, न कि कार्यविषयक ज्ञान को । (अत प्रवर्तक ज्ञानत्वरूप हेतु से कार्यविषयकत्व का अनुमान नही हो सकता)। किन्तु मण्डन मिश्र का वह कहना उचित नही क्योकि इष्टसाधनविषयक ज्ञान को प्रवर्तक नही माना जा सकता, कारण यह है कि अतीत धनादि एव भविष्य-वक्ता के बताये राज्यादि मे इष्ट-साधनता रहने पर भी उनका ज्ञान प्रवर्तक नही होता । यदि कहा जाय कि कृति ( प्रयत्न ) से साध्य जो इष्ट-साधन धनादि, उनके ज्ञान को प्रवर्तक मानते है, केवल इष्ट-साधन-विषयक ज्ञान को नही । अतीत और भावी इष्ट-साधन, कृतिसाध्य नही, अत उनका ज्ञान भी प्रवर्तक नही होता । तब तो कार्य-ज्ञान को ही आपने दूसरे शब्दो मे प्रवर्तक मान लिया, क्योकि वही तो कृति साध्य होता है—"कृतिसाध्यं प्रधान यत् तत्कार्यमभिधीयते" ( कृति से जो साध्य हो और जो कृति के प्रति

१ द्र० प्र० प० पृ० १७८ । २. स्वात्मनीष्टसाधनविषयक ज्ञान प्रवर्तकमिति नचेत्यारभ्योक्तम्, इदानी तदेव = इष्टसाधनमेव परात्मनि प्रवर्तकमुच्यत इति विरोध आसीत् । ३. ननु च प्रेषणादयोऽवगम्यन्ते लोके, उपाधयो हिते, न शब्दार्था. । केन पुनरमी उपाधयो नाम? उपाधयो हि तटस्था. प्रयोगदर्शन—

यत्तत्कार्यमभिधीयते' इत्यभिधानात्। तथापि कृतिसाध्येष्टसाधनज्ञानमेव प्रवर्तक न केवलं कार्यज्ञानमिति चेत्, मैवम्, इष्टसाधनतावबोधस्य कार्यावबोध प्रति हेतुतयाऽन्यथासिद्धे ।

उक्त हि— 'किन्तु स्वय क्लेशरूपं कर्म यत्कार्यतां व्रजेत् ।
फलसाधनता तत्र कारण तेन कार्यता ॥' इति । ( प्र० प० पृ० १७८ )

ननु चिकीर्षैवैषा ममेदं कार्यमिति, न तु तदतिरिक्तं कार्यं नामात्र किञ्चित्प्रतीयत इतिचेत्, मैवम्, अन्तरेणापि कार्यधियं समीहितसाधनतामात्रावबोधात्सुधामरीचिमण्डलोदयादौ चिकीर्षाया अप्यनुपपत्ते.। न चास्या कार्यधिय कृतियोग्यतामात्रमालम्बनम्, कृतियोग्ययोरपि दु ख-

भवतु कार्यस्याप्येवविधत्व तथापि न कार्यताज्ञानात्प्रवृत्तिरिति शङ्कते—तथापीति । नेष्टसाधनताज्ञान प्रवृत्तेर्हेतुरपि तु कार्यताज्ञानमेव, तज्ज्ञानाच्च प्रवृत्तिरित्याह-मैवमिति। अत्रापि वाक्यार्थमातृकागत तद्वचनमेव प्रमाणमित्याह—उक्त हीति । अयमर्थ.—हितसाधनताकार्यतयो. पूर्वं भेद उक्त., अनन्तर हितसाधनेष्वेव किमिति कार्यतामतिर्नान्यत्रेति शङ्का परिहरन्त आहु. शालिकनाथा —किंत्विति । सत्यमस्त्वय नियमः, किन्त्वय तत्र विशेप —यत्कर्म कार्यता व्रजेत् तत्स्वय क्लेशरूपमेव । कथ तर्हि तस्य कार्यत्वम् ? नहि दुःखाकारस्य कार्यत्वमुपपद्यते, यथाहु —'अकर्तव्यो दुःखफल" इत्यत आह—फलसाधनता तत्रेति । तस्यैव विवरणम्—तेन कार्यतेति । अथवा फलसाधनता तत्र कथ कारणम् ? यावता प्रवृत्ति प्रत्येव कारण तदिति केचित्तत्राह—तेनेति । तेन कार्यतास्य भवति, नतु प्रवृत्तेरिति । अतएव तैरुक्तम् "ज्ञापककोटिनिविष्टा फलसाधनता कार्यतामनुरुध्यते । नत्वसौ तदात्मैवेति ।"

ननु कार्यसिद्धिरेव कुतः प्रमाणात् ? न तावन्ममेद कार्यमिति बुद्धिः प्रमाणम्, तस्याश्चिकीर्षामात्रतयार्थासाधकत्वादिति शङ्कते-नन्विति । कोऽस्याभिसन्धि ? किं कार्यमेव नास्तीति ? उत तत्रेय प्रमाण न भवतीति ? नाद्यः, तदनङ्गीकारे चिकीर्षाया एवानुत्पत्तिप्रसङ्गात् । न चेष्टसाधनतामात्रावबोधात्तदुपपत्तिः, सुरतारम्भपरिश्रान्तसुदरीसमीहितसाधनेऽपि सुधामरीचिमण्डलोदये मलयमारुततरङ्गसङ्गमेव वा असाध्यस्वभावे चिकीर्षाऽभावादित्याह—मैवमन्तरेणेति । द्वितीये त्वनन्यगतिकत्वादेषैव भविष्यति प्रमाणमिति भाव । भवत्वियमिच्छातिरेकिणी, तथापि कृतियोग्यतामेवालम्बते न तदतिरिक्त किञ्चित्कार्यमस्ति तत्राह—न चास्या इति । साधयितु योग्यत्वमस्ति दु खादेरपि, न कार्यबुद्धिविषयत्वमिति तद तिरिक्तमेवास्या विषय इत्याह—कृतियोग्ययोरिति । अस्तु तर्हीष्टसाधनत्वमेवास्या विषय इति तत्राह—

प्रधान हो, उसे ही कार्य कहा जाता है—प्र० प० वाक्यार्थ० )। 'फिर भी कृति से साध्य इष्ट-साधन के ज्ञान को ही प्रवर्तक मानेंगे, केवल कार्य-ज्ञान को नहीं'—ऐसा आग्रह मत कीजिए, क्योंकि इष्ट-साधनता-बोध, कार्यता-बोध का हेतु होने से अन्यथासिद्ध है, ( जैसे कुलाल का पिता, कुलाल के बनाये घटों के प्रति अन्यथासिद्ध है )। शालिकनाथ ने स्पष्ट ही कहा है–'कष्टरूप होने पर भी कार्य में कार्यता ( कर्तव्यता ) के रहने का कारण है—फल ( इष्ट ) की साधनता का रहना' ( प्र० पं० वाक्य० )। यदि शङ्का हो कि 'ममेदं कार्यम्'—यह बुद्धि का आकार नहीं, अपि तु चिकीर्षारूप सङ्कल्प का है (द्र० नय वि० पृ० ४२)। इससे अतिरिक्त कोई कार्य नाम की वस्तु प्रतीत नहीं होती। तो यह कहना भी नहीं बनता, क्योंकि कार्य-ज्ञान के बिना केवल इष्ट-साधनता-ज्ञान के आधार पर ( न्या० म० पृ० १८९ पर कथित ) चन्द्र-मण्डलोदय में चिकीर्षा भी नहीं बन सकती, ( अत यह मानना होगा कि जहाँ चिकीर्षा होती है, वहाँ कार्य-ज्ञान भी है। इस प्रकार 'ममेद कार्यम्'—यहाँ भी कार्य-ज्ञान सिद्ध होता है )। यदि कहा जाय कि 'ममेदं कार्यम्'—यह बुद्धि का आकार है, तथापि इस बुद्धि का विषय है–कृति-योग्यता मात्र। तो यह भी नहीं कह सकते,

मात्राच्छब्दार्थं विशेषेऽवस्थापयन्ति, यथा हतिहर्यभिधेयस्य पशुत्वम् । एवमसौ नियोगः समहीनज्यायोभिः प्रयुज्यमान. प्रेषणादिव्यपदेश लभते ( वृ० १।१।२५ )

तत्साधनयोस्तददर्शनात् । नापि समीहितसाधनम्; अतीतवर्तमानयो समीहितसाधनयोस्तद-भावात् । नापि फलमेव, तत्साधनेऽपि दर्शनात् । नापि फलतत्साधनयोरनुस्यूतमभिलाष-गोचरतामात्रमस्या आलम्बनम्, अभिलाषमात्रगोचरेऽपि सुधामरीचिमण्डलादौ तदभावस्य दर्शितत्वात् । तस्मादेभ्योऽतिरिक्त एव कश्चिदाकार कार्यधीगम्य, स एव चाकार कृतिसाध्य कृत्युद्देश्य कार्यमित्युच्यते । स एव प्रवर्तकतया स्वात्मन्यधिगतत्वाच्छब्दशक्तेर्गोचरः ।

तथापि कथमलौकिकनियोगे वैदिकलिङ्गादिशब्दाना व्युत्पत्तिरितिचेत्, उच्यते—यद्यपि लोकव्युत्पत्त्यनुसारेण क्रियाया कार्यत्व प्राप्तम्, तथापि वेदे स्वर्गकामो यजेतेति नियोज्या-भिधायिना स्वर्गकामपदेन समभिव्याहारात्, 'नियोज्य. सच कार्यं यः स्वकीयत्वेन बुध्यते'

---

नापीति । तत्र हेतुः—अतीतेति । ननु यद्यपि साधनेऽपि दर्शनात्फलमात्रमस्य आलम्बन न भवति नाप्युभयमेकैकव्यभिचारात्, तथाप्युभयानुगतमिच्छागोचरत्वमात्रमस्य आलम्बनमित्याशङ्क्य पूर्वोक्तव्य-व्यभिचारमेवाह—अभिलाषेति । परिशेषादतिरिक्तमेवालम्बनमित्युपसहरति—तस्मादिति । ननु भवत्व-तिरिक्त तथापि कथं कार्यत्वमिति तत्राह—स एवेति । तथापि कथमस्य शब्दार्थत्वावगतिस्तत्राह—स एवेति । स्वात्मनीति । बालस्येति शेषः ।

कार्यमात्रस्य शब्दार्थत्वेऽपि नियोगस्य शब्दार्थत्वमयुक्तम्, अलौकिकत्वेन तत्रागृहीतसङ्गतिकत्वादिति[2] शङ्कते—तथापीति । अलौकिकत्वेऽपि विमर्शात्मकतर्कतः सभाविते सङ्गतिग्रहमुपपादयति—यद्य-पीत्यादिना । क्रियाया इति । भावार्थस्येत्यर्थः । स्वर्गकामो यजेतेत्येतन्नियोज्यसमर्पणपर ननु फलपरमिति हि गुरुमतम्, तथाच षष्ठाद्ये राद्धान्तितमतस्तत्समर्पकपदेन समभिव्याहारात् सहपाठात् क्रियातिरिक्तं नियोगमवगमयन्ति लिङादय इत्युत्तरेणसम्बन्धः । ननु कर्त्रपेक्षत्वात्कार्यस्य तत्समर्पकत्वमेव स्वर्गकामादि-पदस्येत्यत आह—नियोज्य स चेति । यः कार्यं स्वकीयत्वेन बुध्यते स नियोज्य इति न्यायान्नियोग-

---

क्योकि कृति-योग्य ( साध्य ) तो दुःखादि भी है किन्तु वे कार्य-बुद्धि के विषय नही, ( अत कृति-योग्यता से अतिरिक्त ही इस कार्य-बुद्धि का विषय मानना होगा ) । समीहित-साधन ( इष्ट-साधन ) भी उस बुद्धि का विषय नही हो सकता, क्योकि अतीत और वर्तमान ( धनादि ) मे समीहित-साधनता के रहने पर भी कार्य-ज्ञान नही ( अतीत मे कार्यता सम्भव ही नही और वर्तमान भी सिद्ध ही है, साध्य नही ) । सुखादि फल भी इस बुद्धि का विषय नही हो सकता, क्योकि फल के साधन मे कार्यता-बुद्धि होती हैं । फल और उसके साधन मे अनुगत इच्छा-विषयता भी कार्य-बुद्धि का आलम्बन नही बन सकती, क्योकि इच्छा के विषय चन्द्रमण्डलोदयादि मे कार्यता का अभाव दिखाया जा चुका है । अत इन ( इष्टसाधनत्वादि ) से भिन्न ही कोई आकार कार्य बुद्धि का विषय मानना होगा । वही आकार कृति से साध्य है, कृति का उद्देश्य है, अत कार्य कहा जाता है । उसी आकार विशेष ( कार्य ) को बालक ने अपने प्रवर्तक ज्ञान का विषय निश्चय किया, उसी का अनुमान मध्यम बृद्ध की प्रवृत्ति मे भी करता है, अत वही शब्द-शक्ति का विषय है ।

यदि यह प्रश्न किया जाय कि कार्यमात्र मे शब्दो की शक्ति का निश्चय होने पर भी लोका-प्रसिद्ध नियोग मे वैदिक लिङादि का शक्ति-ग्रह कैसे होगा ? उसका उत्तर यह है कि यद्यपि लोक-व्यवहार के आधार पर धात्वर्थ रूप क्रिया मे ही कार्यत्व प्राप्त है, तथापि वेद मे "स्वर्गकामो यजेत्"—इस प्रकार नियोज्य-वाचक 'स्वर्गकाम' पद के समभिव्याहार ( समीप पाठ ) की सहायता से लिङादि नियोग के बोधक होते है, क्योकि शालिकनाथ ने ( प्र. पं पृ १८२ पर ) कहा है कि 'नियोज्य' वही है जो कार्य को स्वकीय समझे ।' नियोज्य का यहाँ विशेषण है—

---

१ द्र० प्र० प० पृ० १८२ । तथा ऋ. वि. १२५ । २ लिङादीनामिति शेषः ।

इतिन्यायात् । तस्य च कर्मिसंबन्धात्साध्यस्वर्गविशिष्टस्य क्षणप्रध्वंसिन्यां क्रियायां कालान्तरभाविस्वर्गसाधनयोग्यतावैधुर्येण कार्यताबुद्ध्यनुत्पत्तेः क्रियातोऽतिरिक्तं कालान्तरभाविफलसाधनं नियोगमेव नियोज्यं प्रति लिङादयः कार्यमवगमयन्ति । तच्च स्वात्मनि पुरुषं नियुञ्जानं नियोग इति, मानान्तरापूर्वतया अपूर्वमिति च व्यपदिश्यते । नच फलजनकतया फलं प्रति शेषत्वाद् अपूर्वस्य प्राधान्यप्रच्युतिः, स्वसिद्ध्यनुकूलनियोज्यलाभायैव फलशेषतावलम्बनात्। स्वशेषभूतगर्भदासोपकाराय सविधानस्य स्वामिन इव प्राधान्यानुपरोधात् । तदुक्तम्—

सम्बन्धबोद्धा नियोज्येन भवितव्यमितरथाकर्तृत्वानुपपत्तेरित्यर्थः । तथापि भावार्थसम्बन्धबोद्धैव नियोज्यो भवतु, कुतो नियोगसिद्धिरिति तत्राह—तस्येति । स्वर्गकाम इति काम्यस्वर्गविशिष्टत्वात् सिद्धे च कामाभावात् साध्यस्वर्गविशिष्टः प्रतीयते नियोज्यः, एवंविधस्य च भावार्थक्रियाया ममेदं कार्यमिति कार्यताबुद्ध्यनुपपत्तेः, तत्र हेतुः—क्षणप्रध्वंसिन्यामिति । मर्दनादिव्यावृत्त्यर्थं कालान्तरभावीत्युक्तम् । तदुक्तम्—

'लिङादिस्तत्र कार्यं चेत्क्रियामेवावबोधयेत् ।
समन्वयो नियोज्येन तदानीमेव हीयते' ॥ इति ॥ ( प्र० प० पृ० १८३ )

ननु कथमस्य नियोगत्वम्, आज्ञा हि नियोगः, न चापौरुषेये वेदे सा सम्भवति, अत एव नापूर्वत्वमिति तत्राह—तच्च स्वात्मनीति । अथवा अपूर्वस्य शब्दार्थत्वे नियोगस्य वाक्यार्थता कथमिति तत्राह—तच्च स्वात्मनीति । पुरुषाभिप्रायरूपप्रैषाद्यभावेऽपि परस्परव्यभिचारिषु तेष्वनुगतप्रवर्तकत्वरूपो नियोगशब्दार्थः,स चात्रापि सम्भाव्य इत्यर्थः । स्यादेतत्—स्वर्गसाधनत्वयोग्यताबलेन खल्वलौकिकनियोगाङ्गीकारः, तथा च वरघाताय कन्योद्वहनम्, यत 'कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयते' इति कार्यलक्षणमायुष्मन्मते, तत्र स्वर्गं प्रति साधनतया तच्छेषस्य न प्राधान्यमिति तत्राह—न च फलेति । यदि परसिद्ध्यर्थमयं व्याप्रियेत तदा स्यात्प्राधान्यविघातः, नतु तदस्ति, नहि स्वर्गोऽस्य स्यादिति नियोगव्यापारोऽपितु कथंकारमामयं साधयेदिति, तदर्थमेव खल्वयमस्मै स्वर्गं ददाति गर्भदासोपकर्तेव स्वामी, तथाच कुतः प्राधान्यप्रच्युतिरित्याह—स्वसिद्धीति । सविधानस्य । सविधानं योगक्षेमं कुर्वत इत्यर्थः । स्वात्मसिद्धीति ।

स्वर्गकाम ( स्वर्ग-कामनावान् ) । कामना सदैव साध्य मे ही होती है, सिद्ध मे नही । अतः साध्य स्वर्ग विशेषण-विशिष्ट नियोज्य उसे ही अपना कार्य समझेगा, जो कि स्वर्ग साधन-योग्य हो। यागादि क्रिया तो क्षण प्रध्वंसिनी है । भावी जन्म मे मिलने वाले स्वर्ग फल की साधनता उसमे बन ही नही सकती , इस लिए उसको यागादि क्रिया मे कार्यता-बुद्धि न होकर क्रिया से अतिरिक्त नियोग (अपूर्व) मे ही कार्यता-बुद्धि लिङादि से होगी । वह अपूर्व अपनी निष्पत्ति मे पुरुष का नियोजक होने से नियोग, और वह प्रत्यक्षादि प्रमाणान्तरो से गम्य न होने के कारण अपूर्व कहलाता है—

क्रियादिभिन्नं यत्कार्यं वेद्यं मानान्तरैर्न च ।
अतो मानान्तरापूर्वमपूर्वमिति गीयते ॥ ( प्र पं. पृ १८७ )

यदि सन्देह हो कि यदि वह अपूर्व फल-जनक है, तब तो फल के प्रति शेष ( अङ्ग ) बन गया, फिर उसमे प्रधानता न रही ( अर्थात् पहले कहा गया है कि कार्य वही है, जो कृति मे प्रधान हो । किन्तु यहाँ अपूर्व स्वर्गादि का अङ्ग बन जाने से प्रधान नही रहा, उसे कार्य कैसे कहेगे ? ) । तो यह सन्देह उचित नही , क्योंकि वह फल का शेष इसी लिए बना है कि उसकी सिद्धि के अनुकूल नियोज्य का लाभ हो जाय। अतः जैसे अपने अङ्गभूत भृत्यो की उपकार-साधना मे प्रयत्नशील स्वामी प्रधान ही रहता है, वैसे ही अपूर्व भी अपने अङ्गभूत नियोज्य का स्वरूप-लाभ करने के लिए

१ यथाहुर्नाथाः—"नच फलजनकतया गुणभावादपूर्वस्य वाक्यार्थत्वहानिः, स्वानुगुणनियोज्यलाभाय फलानुकूलतावलम्बनात् , यथा आत्मन एव सविधानः स्वामी गर्भदासस्योपकरोति, तद्वदतदपि ।" न्या.वि. १।१।२५

'स्वात्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये ।
कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव नः' ॥ इति ।

तदेवमलौकिकत्वेऽपि नियोगस्य यूपाहवनीयादिवत्पदान्तरसमभिव्याहाराल्लिङादीनां तत्र सम्बन्धग्रहणोपपत्तेरुपपन्नं तत्राम्नायस्य प्रामाण्यम् । प्रयोगश्च विवादाध्यासिता लिङादय एतत्क्रियातिरिक्तकार्याभिधायिनः कार्याभिधायित्वाद् गामानयेत्यादिपदवदिति । विपक्षे यागातिरिक्तकार्यानभ्युपगमात् यागस्य च स्वर्गसाधनत्वानुपपत्तेः स्वर्गकामो यजेतेत्यादिवाक्यानामप्रामाण्यप्रसङ्गो बाधक इति ।

---

अनुष्ठानं विना नियोगासिद्धेः कर्त्रा विना च तस्यासिद्धेः अधिकारिणं विना कर्तुरभावान्नियोज्यं विना च तदभावाद् [१]अकामानुगुणे च [२]कामिनियोगत्वायोगात् तदिदमानुकूल्यम् । अपिर्भिन्नक्रमः । स्वर्गादिकं कुर्वदपि प्रधानमिति । प्रतिपादिततर्कोपसंहारपूर्वकमुपपादितं नियोगशब्दार्थं प्रतिबन्दीग्रहणपूर्वकमुपसंहरति— **तदेवमिति । यूपादीति ।** यथा खलु यूपाहवनीयादौ 'यूपं तक्षति, यूपमष्टाश्रीकरोति, यूपमनक्ति, अर्द्धोदिते सूर्ये आहवनीयमादधाती'त्यादिवाक्यपर्यालोचनया संस्कृतौ कौचन दारुवह्निविशेषो 'यूपे पशुं निबध्नाति' 'आहवनीये जुहोती'त्यत्र यूपाहवनीयशब्दार्थाविति निर्णीयते । आदिशब्देन यवबराहादिग्राह्यम् । **विवादेति ।** कार्याभिधायिन इत्युक्ते भावार्थाभिधानेन सिद्धसाधनता तन्निवृत्त्यर्थं क्रियातिरिक्तेत्युक्तम्, तथाप्यप्रसिद्धविशेषणता तन्निवृत्त्यर्थमेतत्पदम् । क्रियान्तराभिधायिपदेषु च सुप्रसिद्धं साध्यम्, पक्षे चैतदभिधेयक्रियातिरिक्तकार्यत्वमेतदनभिधेयत्वे सति क्रियात्वाद्वा,एतदभिधेयत्वे सति क्रियात्वानधिकरणत्वाद्वा,आद्यमभिधायकत्वसाधनव्याहतम्, द्वितीयं सिध्यत् क्रियात्वानधिकरणकार्यं नियोगमादाय सिध्यतीति नियोगसिद्धिः ।

---

स्वर्ग की साधना करता है, अतः उसकी प्रधानता अक्षुण्ण है । शालिकनाथ ने (प्र. प. पृ. १९० पर) कहा है—'अपनी सिद्ध के अनुकूल नियोज्य की प्रसिद्धि के लिए स्वर्गादि का सम्पादन करता हुआ भी कार्य ( अपूर्व ) हमारे मत में प्रधान ही है ।' जैसे यूप, आहवनीयादि पदार्थ अलौकिक माने जाते हैं ( अर्थात् वैदिकगण 'यूप' शब्द से केवल लोक-प्रसिद्ध किसी काष्ठ-स्तम्भ को नहीं कहा करते, अपितु 'यूपं तक्षति', 'यूपमनक्ति'—आदि वाक्यों से विहित दृष्ट तथा अदृष्ट संस्कार-विशिष्ट लोकोत्तर वस्तु को कहते हैं । इसी प्रकार आहवनीय अग्नि का भी लोकोत्तर आकार है ) वैसे ही नियोग ( अपूर्व ) भी अलौकिक है । तथापि स्वर्गकामादि प्रसिद्ध पदों के सहयोग से लिङादि पदों का शक्तिग्रह अपूर्व में हो जाता है । अतः उस (नियोग) में वेद का प्रामाण्य भी बन जाता है। इस विषय में अनुमान-प्रयोग है—'विवादास्पद लिङादि, एतदभिधेयत्वविशिष्टक्रियात्वाभावयुक्त कार्य के वाचक हैं, कार्य-वाचक होने से, जैसे—'आनय' आदि पद' [ कार्य-वाचकत्वमात्र को साध्य बनाने पर सिद्ध-साधनता दोष हो जाता, क्योंकि क्रियारूप कार्य की वाचकता लिङादि में दूसरे मानते ही हैं । अतः साध्य-घटक कार्य का विशेषण दिया—क्रियात्वाभावयुक्त । क्रियात्व-रहित कार्य की वाचकता दूसरे नहीं मानते, अतः उक्त दोष नहीं । किन्तु साध्याप्रसिद्धि दोष हो जाता है, क्योंकि 'आनय'—आदि पदों में क्रियात्व-विशिष्ट कार्य की ही वाचकता है, क्रियात्वाभावयुक्त कार्य की वाचकता नहीं । अतः क्रियात्व का विशेषण लगाया एतदभिधेयत्व-विशिष्ट । 'आनय'—आदि पदों के वाच्य ( क्रिया ) में क्रियात्व रहने पर भी एतदभिधेयत्व ( लिङादि-वाच्यत्व ) नहीं, अतः विशेषणाभाव-प्रयुक्त विशिष्टाभाव ( एतदभिधेयत्वविशिष्टक्रियात्वाभाव ) रह जाने से एतदभिधेयत्वविशिष्टक्रियात्वाभावयुक्त कार्य-वाचकत्व रूप साध्य 'आनय'—आदि पदों में प्रसिद्ध हो गया । किन्तु यही साध्य अपने

---

१. फलाननुगुणनियोगे इत्यर्थः । २. नियोज्यसम्बन्धायोगादित्यर्थः ।

अत्रोच्यते–भवेदिष्टमनोरथो यदि स्वात्मन्यपि कार्यबोधस्य प्रवर्त्तकत्वमध्यवसीयेत, समीहितसाधनताया एव तु स्वात्मनि प्रवर्तकत्वाध्यवसायात्। न च भूतादौ व्यभिचार , यत.—

कार्यस्यावगतेर्हेतुर्यादृशं हितसाधनम् ।
प्रवृत्तेस्तादृशं हेतुर्व्यभिचारस्तत कुत. ॥१७॥

येनापि हि कार्यावबोधस्यैव प्रवतकत्वमभ्युपेयतेऽभ्युपेयते एव तेनापीष्टसाधनतावबोधस्य कार्यावबोधं प्रति हेतुता, तदभावे कार्यबोधानुपपत्ते'। तत्रापीष्टसाधनतामात्रस्य भूतादौ व्यभिचारात् कृतियोग्येष्टसाधनताज्ञानमेव कार्यताज्ञानहेतुरित्यभ्युपेयम्, तथा च तादृगिष्टसाधतावोधस्यैव प्रवृत्तिहेतुत्वोपपत्तौ किमन्तर्गडुना कार्यावबोधेन। न चेदृगिष्टसाधनताज्ञानमेव

तदेतत्कार्ये व्युत्पत्तिसमर्थनं दूषयितुमुपक्रमते—उच्यत इति। समीहितसाधनताया इति। तद्बोधनम्, विषयेण विषयिलक्षणात्। ततश्च तस्यैव परत्राप्यनुमानेन तत्रैव शब्दशक्ति., नतु कार्ये इत्यभिप्राय:। इष्टसाधनतावबोधस्य भूतादौ प्रवर्तकत्वव्यभिचार पूर्वोक्तमनूद्य श्लोकेन परिहरति—कार्यस्येति। यादृशमिष्टसाधनत्व कृतियोग्यताविशिष्ट तव कार्यज्ञाने हेतुस्तादृशमेव प्रवृत्तिहेतुराश्रीयते मया तत कुतो व्यभिचार इति योजना। श्लोक विवृणोति—येनापीति। ननु कृतियोग्येष्टसाधनज्ञानमेव कार्यज्ञान नत्वनयोर्धूमाग्निबोधवज्जन्यजनकता यदाह—'यथा[2] खल्वेकधीवेद्यत्वेऽप्याकृतितो[3] व्यक्तिधीरुक्ते'ति। तथाच तस्य प्रवर्तकत्वाश्रयणमस्मदनुकूलमेवेति तत्राह—नचेति। हेतुमाह—तस्येति। 'फलसाधनता तत्र कारण तेन कार्यता, इति स्वीकारात् हेतुहेतुमतोरैक्यमनुपपन्नमित्यर्थ.। यत्तु ममेद कार्यमिति बुद्धे'

साधक हेतु के बल पर पक्ष मे सिद्ध होकर विशेषणाभाव-प्रयुक्त विशिष्टाभाव रूप से तो घट नही सकता, क्योकि लिङादि के अभिधेय मे एतद्भिधेयत्व ( लिङाद्यभिधेयत्व ) ही है, उसका अभाव नही। अत यही कहना होगा कि लिङादि के अभिधेय मे क्रियात्वरूप विशेष्य भाग नही, तभी तो विशेष्याभाव-प्रयुक्त विशिष्टाभाव वहाँ सिद्ध होगा। अत यह मानना पड़ गया कि लिङादि क्रियात्वाभावयुक्त कार्य के वाचक हे, अर्थात् लिङादि का वाच्य कार्य धात्वर्थ क्रिया से विलक्षण (अपूर्व) है ]।

वेदान्ती—आपका मनोरथ सिद्ध हो सकता था, यदि बालक कार्य-ज्ञान को अपना प्रवर्तक समझता। किन्तु इष्ट-साधनता-ज्ञान मे ही उसे अपने प्रवर्तकत्व का निश्चय होता है। ( अत मध्यम वृद्ध की प्रवृत्ति से भी उसी का अनुमान करेगा, फिर तो इष्ट-साधनता मे ही लिङादि की शक्ति का निश्चय होता है, कार्य-ज्ञान मे नही )। यह जो कहा था कि अतीतादि विषयो मे इष्ट साधनता रहने पर भी प्रवर्तकत्व नही, अत इष्ट साधनता-बोध मे प्रवर्तकत्व का व्यभिचार है। वह कहना उचित नही, क्योकि आपके कार्य-ज्ञान मे जैसा ( कृति योग्यता-विशिष्ट ) इष्ट-साधनत्व हेतु है, वैसा ही हम प्रवृत्ति का हेतु मानते है, तब व्यभिचार क्यो होगा? जो कार्य-बोध को प्रवर्तक मानता है, वह भी इष्ट साधनता-बोध को कार्य-बोध मे हेतु मानता है, क्योकि इष्ट-साधनता के बिना कार्य-बोध ही नही बन सकता। वहाँ भी तो इष्ट-साधनता मात्र अतीतादि मे व्यभिचारी है, अत कृति-योग्य इष्ट-साधनता-ज्ञान को ही कार्य-ज्ञान मे हेतु मानना होगा। तब तो उसी प्रकार के विशिष्ट इष्ट-साधनता-बोध को प्रवृत्ति का हेतु मान लेने से काम चल जाता है, बीच मे कार्य-ज्ञान को क्यो व्यर्थ में फँसा रखा है? 'इस प्रकार का इष्ट-साधनता-ज्ञान ही कार्यता-ज्ञान है'—ऐसा आप नही कह सकते, क्योकि उक्त इष्ट-साधनता ज्ञान को आप कार्यता-ज्ञान के प्रति हेतु मानते है ( द्र प्र

१. समीहितसाधनताज्ञानम्। २. नयवि० पृ० ३९। ३ आकृतिव्यक्त्योरितिशेष

कार्यताज्ञानम्, तस्य तज्ज्ञानं प्रति हेतुत्वाभ्युपगमात्। न च ममेदं कार्यमिति चिकीर्षामपहाय कार्यज्ञान नाम किंचिदुपलभामहे। न च चिकीर्षैव कार्यधियमन्तरेणानुत्पद्यमाना ता कल्पयतीति युक्तम्, कृतियोग्येष्टसाधनतावबोधादेव चिकीर्षाया अभ्युपपत्तेः।

न च कृतिसाध्य प्रधानमिति कार्यलक्षणं युक्तम्, फलेऽतिव्याप्तेः। अथ साक्षात्कृतिसाध्यत्व विवक्षितं न च तत्फलेऽस्तीति मतम्, मैवम्। नियोगे तदभावेनाव्याप्तेः, भावार्थस्यैव साक्षात्कृतिसाध्यत्वात्। अथ साध्यैकस्वभावत्वम्, न, प्रागभाववत्सु व्यभिचारात्। न च सदा साध्यैकस्वभावत्वम्, यागाद्यनुष्ठानोत्तरकालमपि तस्य साध्यैकस्वभावत्वे कदाचिदपि नियोगासिद्धौ स्वर्गासिद्धिप्रसङ्गात्। अस्तु वा यत्किंचिदविचारितरमणीय लोके कार्यम्, तथापि

परिशेषात्कार्यविषयत्वमुक्त तदप्यसिद्ध तस्याश्चिकीर्षारूपत्वादित्याह—**नच ममेदमिति**। यत्विष्टसाधनतामात्राच्चिकीर्षानुत्पत्तेस्तद्धेतु कार्यं स्वीकर्तव्यमिति तदपि विशिष्टेष्टसाधनस्वीकारात्परिहृतमित्याह—**नचेत्यादिना**

तदेव कार्यस्याप्रवर्तकत्व प्रमाणाभाव चोक्त्वा तल्लक्षणमुक्त दूषयति—**नच कृतीति**। फलमपि हि कृतिसाध्य कृत्युद्देश्यतया प्रधान चातस्तत्रातिव्याप्तिरित्यर्थः। नन्वव्यवधानेन कृतिसाध्यत्व विवक्षितम् नच तत्फलेऽस्ति नियोगव्यवधानात्तस्येति शङ्कते—**अथेति**। तर्हि सिद्धिधात्वर्थस्यैव साक्षात्कृतिलक्षणप्रयत्नसाध्यत्वात् नियोगस्य तद्व्यवधानादिति दूषयति—**मैवमिति**। किमिद साध्यैकस्वभावत्वम्? कि साधनार्हत्वाधिकरणत्वम्? किंवा सिद्धत्वानधिकरणत्वम्? आद्ये प्रागभाववत्सूत्पत्तियोग्येष्वतिव्याप्तिरित्याह—**प्रागभावेति**। द्वितीय दूषयति—**नच सदेति**। एवलक्षणके नियोगे तत्सिद्ध्यर्थं प्रवृत्तिरेवानुपपन्ना व्याघातात्, फलासिद्धिः पूर्वोक्तयोग्यताविरहश्च। तथाच स्वात्मसिद्ध्यनुकूलस्येत्यादिशालिकया केवल विलपितमेव स्यादित्यर्थ। एव कार्यमात्रस्य लक्षणानि दूषयित्वा तद्विशेष नियोग दूषयति—**अस्तु वेति**।

पं पृ १७९ तथा नय वि पृ ३९)। 'ममेद कार्यम्'—यहाँ पर चिकीर्षा को छोडकर कार्य-ज्ञान का अनुभव भी नही होता। 'कार्य-ज्ञान के बिना चिकीर्षा ही अनुपपन्न होकर उस (कार्य-ज्ञान) का कल्पक है'—यह कहना भी युक्त नही, क्योंकि कृतियोग्य इष्ट-साधनता-ज्ञान से ही चिकीर्षा भी बन जाती है, कार्य-ज्ञान की उसे कोई आवश्यकता नही। यह जो कार्य का लक्षण किया था—'कृति-साध्य एव कृति के प्रति प्रधान'—वह भी युक्त नही, क्योंकि स्वर्गादि फल मे भी कृति-साध्यता और कृति की उद्देश्यता रहने से लक्षण अतिव्याप्त है। यदि कहा जाय कि कार्य के लक्षण मे साक्षात् कृति-साध्यता का निवेश है। फल तो साक्षात् कृति-साध्य नही, मध्य मे अपूर्व का व्यवधान है। अतः वहाँ अतिव्याप्ति नही। तो यह भी नही कह सकते, क्योंकि साक्षात् कृति-साध्यत्व तो नियोग में भी नही, किन्तु धात्वर्थ रूप यागादि क्रिया मे ही है। यदि कहा जाय कृति-साध्यत्व का अर्थ है—साध्यमात्रस्वभावत्व। धात्वर्थ क्रिया के दो स्वभाव है—साध्य और सिद्ध, अत उसमे अतिव्याप्ति नही होगी, तब तो प्रागभाववाले पदार्थो मे साध्य मात्र स्वभावता रहने से अतिव्याप्ति है। यदि कहे कि सदा साध्यमात्रस्वभावता विवक्षित है। प्रागभाव वाले पदार्थो मे प्रागभावकालावच्छेदेन साध्यमात्रस्वभावता रहने पर भी सदा नही, अतः उनमे अतिव्याप्ति नही। तो यह कहना भी उचित नही, क्योंकि यागादि का अनुष्ठान पूरा हो जाने पर नियोग सिद्ध होता है? कि साध्य ही रहता है? यदि सिद्ध होता है, तब उसमे सदा साध्यमात्रस्वभावता लक्षण न जाने से असम्भव है और यदि यागादि का अनुष्ठान हो जाने पर भी नियोग साध्य ही है, फिर तो कभी भी नियोग सिद्ध ही नही होगा, नियोग की सिद्धि न होने पर स्वर्गादि की भी सिद्धि न

१. कृतियोग्यत्वेत्यादि.।

कथं वैदिकलिङादिशब्दादलौकिकनियोगस्य प्रतिपत्तिः ? मानान्तरानधिगते तस्मिँल्लिङादेः सङ्गतिग्रहणायोगात् । अधिगमे वा "अतो मानान्तरापूर्वमपूर्वमिति गीयते', इति स्वकपोलकल्पितापूर्वत्वभङ्गप्रसङ्गः । न च कार्यमात्रेऽवसितसङ्गतिका लिङादयः शब्दाः नियोज्याभिधायिस्वर्गकामादिपदसमभिव्याहारसामर्थ्यात्क्रियातिरिक्तमेव कार्यमवगमयति, आशुतरविनाशिन्याः क्रियायाः कालान्तरभाविस्वर्गादिसाधनतानुपपत्तेरिति युक्तं वक्तुम् । अनुपपत्तिवेद्यत्वे मानान्तरगोचरत्वप्रसङ्गात् ।

ननु नेयमर्थापत्तिः, तर्क एवायमुपन्यस्तः, तेन तर्काधिगते नियोगे सङ्गतिग्रहः सङ्गच्छते, तर्कस्यामानत्वात् । प्रमाणानुग्राहकस्तर्को नतु प्रमाणमिति हि परीक्षका इति चेत्, मैवम्, तर्कगोचरत्वेऽपि प्रमाणान्तरगोचरत्वस्यापरिहार्यत्वात् । तथाहि—प्रमाणान्तराधिगतव्याप्य-

---

तादृशो नियोगः किं प्रमाणान्तरेण न गृहीतः ? किं वा गृहीतः ? उभयथापि दूषणमाह—मानान्तरेत्यादिना । ननु नात्यन्तमलौकिकत्वमस्य यावता कार्यताकारेण लोकप्रसिद्धस्यैव सतो विशेषमात्रनिर्णयो वाक्यविशेषविमर्शाद्भवति । यथाहु —

'व्युत्पत्तिरपिकार्येऽर्थे व्यवहारानुसारिणी ।
किंतु निर्धारणामात्रं वेदवाक्यविमर्शजम् ॥' इति ॥ (प्र० पं० पृ० १९२)

तदेतत्पूर्वपक्षावसरोक्तमनूद्य दूषयति—न चेत्यादिना । न च युक्तमित्युक्तम्, तत्र हेतुमाह—अनुपपत्तीति । अर्थापत्तिः खल्वनुपपत्तिः । तथाच मानान्तरगम्यत्वादपूर्वत्वनिवारणमित्यर्थः ।

पूर्ववादिहृदयं शङ्कते—नन्विति । अपूर्वत्वं निर्वाहयति—तर्कस्येति । यद्यपि तर्कः स्वयं न प्रमाणं तथापि तद्विषयः प्रमाणविषय एव, तथा चोक्तदोषानुषङ्ग इत्याह—मैवमिति । तदेव दर्शयितुं तर्कस्वरूपमाह—तथाहीति । एकाभ्युपगमेनेति । व्याप्याहार्यारोपेणेत्यर्थः । अनेन चानुमानेऽतिव्याप्तिः परिहृता ।

---

होगी । अस्तु, मान लेते हैं कोई अविचारित रमणीय कार्य । फिर भी वैदिक लिङादि शब्दों से अलौकिक नियोग का बोध कैसे होगा ? क्योंकि प्रमाणान्तर के अविषयभूत नियोग में लिङादि का शक्ति-ग्रहण ही सम्भव नहीं । शक्ति-ग्रह की उपपत्ति के लिए यदि नियोग को प्रमाणान्तर का विषय मान लें, तब "अतो मानान्तरापूर्वमपूर्वमिति गीयते" ( प्रमाणान्तर का विषय न होने से अपूर्व को अपूर्व कहा जाता है—प्र पं पृ. १८७ )—यह आपका कपोल-कल्पित अपूर्वस्वरूप ही चौपट हो जाता है । यह जो कहा था कि यद्यपि लिङादि शब्दों का शक्ति-ग्रह लौकिक कार्य मात्र में ही होता है, तथापि नियोज्य-समर्पक 'स्वर्गकाम' पद के सहयोग से क्रिया से अतिरिक्त अलौकिक कार्य के बोधक लिङादि हो जाते हैं, क्योंकि क्षणप्रध्वसिनी यागादि क्रिया में तो कालान्तर में होने वाले स्वर्ग की साधनता बन नहीं सकती । वह कहना भी युक्त नहीं, क्योंकि स्वर्ग-साधनता की अन्यथानुपपत्तिरूप अर्थापत्ति से अपूर्व की कल्पना करने पर वह प्रमाणान्तर ( आगम से भिन्न अर्थापत्ति ) का विषय होकर अपनी अपूर्वता ही खो बैठता है । यदि शङ्का की जाय कि स्वर्ग-साधनता की अन्यथानुपपत्ति से अपूर्व की कल्पना—यह अर्थापत्ति नहीं, अपि तु तर्क मात्र है । उस तर्क से अवगत नियोग में लिङादि का शक्ति-ग्रह होता है । तर्क तो प्रमाण है नहीं, क्योंकि तर्क प्रमाणों का अनुग्राहक ( पोषक ) ही है, स्वयं प्रमाण नहीं—ऐसा ही शास्त्रकार मानते हैं । तो वह शङ्का युक्त न होगी, क्योंकि अपूर्व में तर्क की विषयता मानने पर प्रमाणान्तर की विषयता भी अपरिहार्य हो जाती है । प्रमाणान्तर से जिन दो पदार्थों का व्याप्यव्यापकभाव जाना जाता है, उनमें एक पदार्थ को थोड़ी देर के लिए मान कर दूसरे का नियमपूर्वक प्रसञ्जन ( आपादन ) करना ही तर्क कहलाता है । जैसे—( प्रत्यक्ष प्रमाण से धूमाभाव और अग्न्यभाव का व्याप्यव्यापकभाव निश्चित है । पर्वत में

व्यापकभावयोरेकाभ्युपगमेन द्वितीयस्य नियतप्रसञ्जनरूपस्तर्क । यथा यद्ययं वह्निमान्नस्याद्धूमवानपि नस्यादिति । तथा च यद्ययं लिडादि क्रियातिरिक्तकार्याभिधायी न भवेत्तदा न स्वर्गकामपदेन समभिव्याह्रियेत, समभिव्याह्रियते चायम्, तस्मात्क्रियातिरिक्तकार्याभिधायकः इति प्रसङ्गरूपेऽपि तर्के द्वयोरापाद्यापादकभावयोस्तदभावयोश्च धूमवत्त्ववह्निमत्त्वयोस्तदभावयोरिव मानान्तरगोचरता कथ न स्यात् ? न चापाद्यापादकभावोऽपि, क्रियातिरिक्तकार्यस्याप्रसिद्धत्वेन तदभावस्याप्रसिद्धत्वात । अप्रमाणभूतश्च तर्क । स्मृत्यनुभवभेदेन ज्ञानद्वैराश्यवादिना स्मृतावन्तर्भवतीति वाच्यम् । न चात्राननुभूते नियोगे स्मृति सभवति, सस्कारजन्याया स्मृतेस्तदभावेऽभावात् । ननु पूर्वानुभवजन्यसंस्कारमात्रजन्यं ज्ञानं स्मृतिरिति न ब्रूम, कितु सापेक्ष ज्ञानम् । अस्ति चात्र प्रमाणानुग्राहकतया तर्कस्य तदपेक्षा, ततो नोक्तदोष.

---

नियतप्रसञ्जन तर्क इत्युक्ते यद्यनित्य स्यान्मूर्तः स्यादित्यादिप्रसङ्गाभासेऽतिव्याप्तिस्तदर्थं प्रमाणान्तरेत्याद्युक्तम् । नियतपद तु व्यर्थमेव । उदाहरति—**यथेति** । प्रकृतस्थलेऽप्यापाद्यापादके विवेचयति—**तथा चेति** । अस्य च विपर्यये पर्यवसान दर्शयति—**समभिव्याह्रियते चायमिति** । **कथं न स्यादिति** । इतरथा मूलशैथिल्यादिति भावः । अभ्युपगम्यापाद्यापादकभाव प्रमाणान्तरगोचरत्वप्रसक्तिरुक्ता स एव नास्ति अप्रसिद्धविशेषणत्वादित्याह—**न चेति** । अत्र हि क्रियातिरिक्तकार्यानभिधायकत्वमापादक स्वर्गकामपदासमभिव्याहारश्चापाद्य, तत्रातिरिक्तकार्यस्याप्रसिद्धत्वादेव तदनभिधानमप्रसिद्धमेवेत्यर्थः । एव तर्कगोचरत्वेऽपि प्रमाणान्तरगम्यत्वमापादितमिदानीमप्रमाणरूपत्वमपि त्वन्मते तर्कस्य न शक्यसमर्थनम्, स्मृतिव्यतिरिक्ताप्रमाणज्ञानस्य भवतानङ्गीकारात् । स्मृतश्चाननुभूतचरतयाऽनुपचितसस्कारेऽनुपपत्तेरित्याह—**अप्रमाणभूतेत्यादिना** । ननु वयमेतल्लक्षण न कक्षीकुर्म यत्सस्कारमात्रजन्य ज्ञान स्मृतिरिति, येनाननुभूते सस्काराभावात्स्मृत्यनुपपत्ति. स्यात्कि तु सापेक्ष ज्ञानमिति शङ्कते—**नन्विति** । प्रकृततर्के च लक्षण वर्तयते—**अस्ति चात्रेति** । यदिदमस्य सापेक्षत्व तत्क ? स्वोत्पत्तौ ? उत विषयावबोधे ? आद्येऽपि

---

अग्नि का निश्चय-सा होने पर भी थोड़ी देर के लिए अग्न्यभाव का रहना ( आहार्यारोप ) मानकर कहना कि यदि इस पर्वत मे अग्नि का अभाव है, तब धूम का भी अभाव होगा । उसी प्रकार प्रकृत मे यदि यह लिडादि शब्द, धात्वर्थ क्रिया से अतिरिक्त कार्य का वाचक नही होता, तब इसका 'स्वर्गकाम' पद से समभिव्याहार ( सहोच्चारण ) नही होता । किन्तु इसका 'स्वर्गकाम' पद से समभिव्याहार देखा जाता है, अत लिडादि, क्रिया से अतिरिक्त कार्य का वाचक है—इस प्रकार के प्रसङ्गरूप तर्क मे आपाद्य ( 'स्वर्गकाम' पद का समभिव्याहाराभाव ) और आपादक ( क्रियातिरिक्त कार्यवाचकत्वाभाव ) एव उनके अभाव वैसे ही प्रमाणान्तर के विषय होते है, जैसे अग्नि और धूम एव उनके अभाव । वस्तुत क्रियातिरिक्त कार्यावाचकत्व और स्वर्गकामपदासमभिव्याहार का आपाद्य-आपादकभाव ही नही बनता, क्योकि क्रिया से अतिरिक्त कार्य लोक मे प्रसिद्ध नही, अत उसका अभाव भी अप्रसिद्ध ही है । यह जो आपका कहना है कि तर्क अप्रमाण है । आप (प्राभाकर) के मत मे स्मृति और अनुभव के भेद से ज्ञान दो राशियो में विभक्त किया गया है । उनमे अनुभव प्रमाण और स्मृति अप्रमाण है । तर्क यदि अप्रमाण है, तब स्मृति रूप ही मानना होगा । किन्तु यहाँ अननुभूत नियोग की स्मृति बन नही सकती, क्योकि संस्कार से जन्य होती है—स्मृति, संस्कार के न होने से स्मृति भी नही बन सकेगी । यदि कहें कि 'पूर्वानुभव-जन्य संस्कार मात्र से जन्य ज्ञान स्मृति है'—ऐसा स्मृति का लक्षण नही करते, अपितु 'सापेक्षज्ञानत्वम्—यह स्मृति का लक्षण करेंगे । प्रमाण का अनुग्राहक होने से तर्क भी प्रमाण-सापेक्ष हो जाने से स्मृति रूप है, अत

---

१ मानान्तरगोचरत्वानङ्गीकारे तर्कमूलस्य प्रमाणान्तरस्य शैथिल्य स्यादित्यर्थः ।

इति चेत्, मैवम् , विकल्पासहत्वात् । तथाहि—किमुत्पत्तौ सापेक्षत्वम् ? उत विषयावबोधे ? नाद्य , प्रमाणज्ञानानामपीन्द्रियलिङ्गादिसापेक्षतया स्मृतित्वप्रसङ्गात् । न द्वितीय. , विषयावबोधेऽपि सापेक्षत्वे स्मृते प्रदीपवज्ज्ञानत्वाभावप्रसङ्गात् , अपसिद्धान्तापत्तिश्च ।

"प्रमाणमनुभूति सा स्मृतेरन्या स्मृति' पुन ॥
पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यते ॥" ( प्र० पं० अमृ० १ )

इति शालिकनाथवचनविरोधात् ।

न चार्थापत्तिगम्यत्वमपि , कृतेर्भावार्थजननद्वाराऽपूर्वसाधनत्ववत्क्रियाया एवापूर्वावान्तरव्यापाराया स्वर्गसाधनत्वोपपत्ते । अपि च 'यो ब्राह्मणायावगुरेत्त शतेन यातया' दित्यत्रा-

यत्किञ्चिदपेक्षा ? उत ज्ञानापेक्षा ? आद्ये आह—**नाद्य इति** । एतेन द्वितीयोऽपि निरस्तः । लिङ्गज्ञानसापेक्षस्याप्यनुमानस्यास्मृतित्वात् । द्वितीय निरस्यति—**विषयेति** । विषयावबोधे विषयव्यवहारजनने, [१]कारणेन कार्यलक्षणात् । तत्र सापेक्षत्वे प्रदीपवज्ज्ञानत्व न स्यादित्यर्थः । **प्रमाणमनुभूतिरिति** प्रमाणसामान्यलक्षणम् । अनुभूतेर्लक्षणमाह—**सा स्मृतेरन्येति** । स्मृतिव्यतिरिक्तम् ज्ञानमित्यर्थः , तेन च स्मृते प्रामाण्य निवारितम् । स्मृतेरपि लक्षणमाह—**स्मृति' पुनरित्यादिना** । अनुमानप्रत्यभिज्ञादिव्यावृत्त्यर्थं मात्रग्रहणमिति प्रकरणपञ्चिकाप्रमाणपारायणश्लोकार्थ. ।

एवमनुपपत्तिमङ्गीकृत्यापूर्वत्वक्षतिरापादिता । इदानीमनुपपत्तिरेव नास्त्यन्यथैवोपपत्तेरित्येतत्प्रतिबन्दीपूर्वकमाह—**न चार्थापत्तीति** । यथा हि यजेतेत्यत्र कृतिसाध्यनियोगामिधायिना लिङा कृति नियोगयोः प्रतीतेरुभयोश्चैकपदत्वेन साध्यसाधनभावप्रतीतौ भावार्थविषयकत्वेन तज्जनकत्वनियमात्कृतेर्नियोगस्य [२]चाभावार्थत्वात् प्रकृत्यभिधेयभावार्थमुत्पाद्य तद्द्वारा नियोगसाधनता कृतेर्भवद्भिरङ्गीक्रियते तथा क्रियाया एव क्षणिकाया अप्यपूर्वावान्तरव्यापारायाः फलसाधनत्वोपपत्तौ न स्वतन्त्रनियोगव्यतिरेकेण काचनानुपपत्तिरित्यर्थ. । यत्पुनरत्र कैश्चिदुक्तम्—अपूर्वकल्पनायामपि साधनसाधनतैव यागस्य न तु साक्षात्साधनता यागस्येति तत्कल्पनायामपि तदवस्थैवानुपपत्तिरिति, तन्न , व्यापारतयैव कल्पना तेन चाव्यवधानात् । यदि च तत्कल्पनामात्राद्व्यवधान तर्ह्यवगूरणादावपि स्यादिति प्रतिबन्दी गृह्णाति—**अपि चेति** ।

**अप्रमाण है । तो ऐसा नहीं कह सकते , क्योंकि यहाँ जिज्ञासा होती है कि तर्क को प्रमाण की अपेक्षा अपनी उत्पत्ति मे है ? या विषय के प्रकाशन मे ? प्रथम पक्ष उचित नही , क्योकि अपनी उत्पत्ति में किसी की अपेक्षा करने से तर्क, स्मृति है । तब तो प्रमाणज्ञान भी स्मृति बन जायँगे , क्योंकि उन्हें भी अपनी उत्पत्ति में इन्द्रिय, लिङ्गादि की अपेक्षा है । द्वितीय ( विषय-प्रकाशन में अपेक्षा ) पक्ष भी उचित नही , क्योकि विषय-प्रकाशन में यदि स्मृति सापेक्ष होगी, तब तो स्मृति मे ज्ञानत्व ही नही रहेगा, वह भी प्रदीपादि की भाँति ज्ञान से भिन्न ही हो जायगी । यदि स्मृति को ज्ञान न मानें तो वह अपसिद्धान्त होगा , क्योकि शालिकनाथ ने स्पष्ट कहा है—'हमारे मत में प्रमाण है—अनुभूति, अनुभूति नाम है—स्मृति-भिन्न ज्ञान का । स्मृति कहते हैं—पूर्व ज्ञान-जन्य संस्कार मात्र से जन्य ज्ञान को ।'**

**कार्य अर्थापत्ति-गम्य भी नहीं ( अर्थात् कार्य के बिना कोई अनुपपत्ति भी नही ) , क्योंकि जैसे आपके मत मे कृति ( प्रयत्न ) मे धात्वर्थरूप क्रिया के द्वारा अपूर्व की साधनता है, वैसे ही हमारे यहाँ यागादि क्रिया मे ही अपूर्व रूप अवान्तर व्यापार के द्वारा स्वर्ग की साधनता बन सकती है । दूसरी बात यह भी है कि "यो ब्राह्मणायावगुरेत् तं शतेन यातयेत्" ( जो ब्राह्मण को मारने के लिए लाठी उठाता है, उसे उसका वही कर्म सौ वर्ष तक नरक-यातना देता रहता है ) यहाँ पर**

१. व्यवहारप्रति-व्यवहर्त्तव्यज्ञान कारणमिति नीत्या विषयावबोध कारण विषयव्यवहारस्य २ धात्वर्थभिन्नत्वात्

वगूरणकर्मणः क्षणिकस्यापि दुरितापूर्वजननद्वारा कालान्तर्भावि शतयातनाफलसाधनत्ववत्क्षणिकाया अपि यागक्रियाया अपूर्वजननद्वारा स्वर्गसाधनता किं न स्यात्? नन्ववगूरणे दुरितापूर्वकल्पना कामाधिकारे क्रियातिरिक्तनियोगासिद्ध्युत्तरकालीना। तथाहि—तत्राशुतरविनाशिन्या क्रियाया कालान्तरभाविफलसाधनत्वासामर्थ्यात्तदतिरिक्तापूर्वस्य फलसाधनत्वे स्थिते पश्चादवगूरणेऽपि कालान्तरभाविशतयातनाफलमपि दुरितापूर्वद्वारैवेति कल्प्यते, तथा सति कथं नियोगासिद्धि? तत्सिद्ध्युत्तरकालीनत्वादुत्तरकल्पनाया इति चेत्, मैवम्, कृतिसाध्ये नियोगे प्रतीते कृतेर्भावार्थैकविषयत्वात्, नियोगस्य चाभावार्थरूपत्वात्साक्षात्कृतिसाध्यत्वासम्भवात्, भावार्थं साधयन्ती कृतिर्नियोगं साधयतीति यथा कल्प्यते। अत एव चाघटितसंघटकतया भावार्थोऽपि विषयं करणं च नियोगं प्रतीति गीयते। यथाहुः—

य. पुरुषो ब्राह्मणायावगुरेच्छतमुद्यमेत्, उद्यतायुव तदेवावगूरणं शतेन यातयात्। इत्थंभावे तृतीया। यावत्परं[3]त्रानेन दुःखमुत्पाद्यते ततः शतगुणयातनामनुभावयेत्। अथवा शतेन संवत्सरेण यातयात्। तावतः संवत्सरान् पितृलोकं न प्रजानातीति वाक्यशेषात्। अत्र हि कालान्तरभाविशतयातनादेः न क्षणिकावगूरणादि साधनमिति किंचिद्दुरितापूर्वं कल्पनीयमिति। न च तदपि श्रौतम्, दुःखफलतया अकार्यत्वेनाशक्यार्थत्वात्। यत्त्ववगूरणे तादृशापूर्वकल्पनमेव काम्येषु वाक्येषु स्वतन्त्रनियोगं गमयति तमन्तरेण तदनुपपत्तेरिति नयविवेककारेणोक्तं तदुद्भावयति—नन्विति। तत्सिद्ध्युत्तरकालतामेव दर्शयति—तथाहीत्यादिना। अदृष्टचरस्य कल्पनानुपपत्तेः कामाधिकारसिद्धो नियोगोऽत्र कल्प्यत इत्यर्थः। अन्यत्र सिद्धावेव हेतुः—तत्सिद्धीति। सत्यमन्यत्र दृष्टं कल्प्यते तत्तु तत्रावान्तरव्यापारत्वेनैव दृष्टं न तु स्वतन्त्रत्वेनेत्यभिप्रेत्य परिहरति—मैवमित्यादिना। अयं च कृतर्भावार्थजननद्वारेत्यस्य प्रपञ्चोऽपि। अत्र च यागादिधात्वर्थस्य नियोगं प्रति विषयत्वाङ्गीकरणं करणत्वाङ्गीकरणं च गमकमित्याह—अत एव चेति।

जैसे अवगूरण ( ताड़ना ) कर्म क्षणिक होने पर भी पापापूर्व की उत्पत्ति के द्वारा भावी जन्म में मिलने वाले शत यातना रूप फल का साधन है, वैसे ही क्षणिक यागादि क्रिया भी अपूर्व की उत्पत्ति के द्वारा स्वर्ग का साधन क्यों न होगी? यदि यह शङ्का की जाय कि अवगूरण में दुरितापूर्व की कल्पना तभी हो सकती है, जब कि काम्य-प्रकरण में पहले क्रिया से अतिरिक्त नियोग सिद्ध हो जाय। अर्थात् काम्य-स्थल पर शीघ्र नष्ट होने वाली यागादि क्रिया में कालान्तर भावी स्वर्ग फल की साधनता सम्भव नहीं, अतः क्रिया से भिन्न अपूर्व में फल-साधनता स्थिर हो जाने के पश्चात् अवगूरण में भी कालान्तर-भावी शत यातनारूप फल, दुरितापूर्व के द्वारा ही होगा—यह कल्पना हो सकेगी। इस लिए दुरितापूर्व-घटित दृष्टान्त से नियोग की असिद्धि नहीं होगी, क्योंकि नियोग-सिद्धि के पश्चात् ही दुरितापूर्व की कल्पना हो सकेगी। तो यह शङ्का युक्तियुक्त न होगी, क्योंकि जैसे आपके यहाँ नियोग में कृति-साध्यता का ज्ञान होने पर यह सोचा जाता है कि कृति ( प्रयत्न ) तो केवल धात्वर्थ को विषय करती है ( अर्थात् कृति की साध्यताख्यविषयता यागादि में ही होती है, जैसा कि मुरारि मिश्र ने अङ्गत्व-निरुक्ति में कहा है—"त्रिधा हि कृतिविषयता—साध्यता, उपादानता, उद्देश्यता चेति। तद्यथा स्वर्गमुद्दिश्य यागं साधयितुं हविरादिकमुपादत्ते इत्यादिप्रतीत्या यागे साध्यताख्यविषयता, स्वर्गे उद्देश्यताख्या, हविरादावुपादानताख्या" )। किन्तु नियोग भावार्थ ( धात्वर्थ ) रूप न होने से, साक्षात् कृति-साध्य हो नहीं सकता। अतः कृति भावार्थ की सिद्धि करती हुई ही नियोग की साधिका है। अघटित ( साध्य = नियोग ) का संघटक ( साधक ) होने के कारण धात्वर्थ ही नियोग के प्रति करण भी है और विषय भी ) जैसा कि भवनाथ ने कहा है—

१. द्र० प्र०प०पृ० १०५। २. धात्वर्थमन्तराऽनिष्पन्नस्य ( नियोगस्य ) सम्पादकतयेत्यर्थः। ३ ब्राह्मणे।

"कृतितत्साध्यमध्यस्थो यागादिर्विषयोमत ।
कार्येसंघटिताकारे करणत्वेन संमत ।।" इति ।।

तथा लोकावगतसामर्थ्यैर्लिडादिशब्दैरधिगतफलसाधनभावाया क्रियाया नियोगमन्तरेणापि स्वजन्यापूर्वावान्तरव्यापारद्वारा फलसाधनत्वसंभवे तद्दृष्टान्तावष्टम्भत एवावगूरणेऽपि दुरितापूर्वकल्पनायां संभाविन्यामलोकवेदसिद्धनियोगकल्पनानुपपत्ते । इतरथा क्लृप्तक्रियाकार्यवाचकत्वभङ्गोऽपरिक्लृप्तनियोगवाचकत्वकल्पना, अपूर्वस्य फलसाधनत्वकल्पना, यागस्य च फलनियोगयोः करणत्वकल्पना चेति गौरवं प्रसज्येत ।

किं च यथा तवाग्नेयादीनामुत्पत्त्यपूर्वावान्तरव्यापाराणां परमापूर्वसाधनभावस्तथास्मन्मतेऽ-

एतदेव भवनाथवचनेन द्रढयति—**कृतीति** । कृति प्रयत्नः तत्साध्यो नियोगस्तयोर्मध्यस्थो यागदानहोमादिधात्वर्थो विषयो मत. । षिञो बन्धनकर्मणो विषयशब्दव्युत्पत्ते. । कृति नियागादौ घटयतो धात्वर्थस्य युज्यते विषयत्व तथा कार्येऽसघटिताकारे स एव च विषय. तस्मिन्नेव करणत्वेन च समत इति श्लोकयोजना । एतदुक्त भवति—प्रतिपत्त्युपाधौ[1] विषयत्व सिद्धयुपाधौ[2] करणत्वमित्यस्ति तयोर्भेद इति । दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—**तथा लोकावगतेत्यादिना** । गवानयनादिक्रियैव तावत्फलसाधनत्वेनाधिगता लिडादिशब्दै , तद्यदि क्षणिकत्वादनुपपन्न तर्ह्यवान्तरव्यापारवत्यास्तस्या एव साधनत्वमास्थेयम् । एव दृष्टमनुगृहीत भवति, इतरथा हि दृष्टहानिरदृष्टकल्पना प्रसज्येयाताम् । अत एव तद्दृष्टान्तेनावगूरणेऽपि तत्कल्पनासिद्धेर्न नियोगेन विनानुपपत्तिरित्यर्थ. । युक्त चैतदितरथा क्लृप्तक्रियाकार्यवाचकत्वमात्रेण व्यवहारोपपत्तौ अलौकिकबहुकल्पनाप्रसङ्ग इत्याह—**इतरथेति** । **अपूर्वस्येति** । अपूर्वस्य फल प्रति साधनत्वकल्पनेत्यर्थ. । **यागस्येति** । अपूर्वफलयोरेकैकैव भावना एकमेकमेव करण एकैकैव च भाव्यतेति हि तेषामभ्युपगम. । उपलक्षण चैतत, यागस्य नियोग प्रति विषयत्वकल्पनाया । प्रतिपत्त्यनु[3]बन्धितया तस्य करणत्वादपि प्राथमिकत्वात् ।

एव प्रतिबन्दी समर्थ्याग्नेयादिप्रतिबन्द्यापि क्रियाया एव फलसाधनतामुपपादयति—**किंचेति** । 'आग्नेयोऽष्टाकपाल', ऐन्द्र दधि, ऐन्द्र पय' इति यागत्रय दर्शत्रय नाम । आग्नेयोऽष्टाकपालो याग , आज्यहविष्कश्चोपांशुयागः , अग्नीषोमीयैकादशकपालयागश्चेति पौर्णमासत्रयम् । एतेषा च परम दर्शपूर्णमासापूर्व प्रति करणत्व 'दर्शपूर्णमासाभ्या स्वर्गकामो यजेत', इति विधिना बोधितम् , न च क्षणिकानामुदीच्योप-

'कृति और कृति-साध्य ( नियोग ) के मध्य में स्थित यागादि धात्वर्थ ही असघटिताकार ( साध्यत्वमात्राकार ) नियोग मे विषय तथा करण माना जाता है ।' वैसे ही लोक-व्यवहार मे जिनका शक्तिग्रह हो गया है, ऐसे लिडादि शब्दों के द्वारा जिस यागादि क्रिया में स्वर्गादि फल की साधनता निश्चित हुई है, उस धात्वर्थ रूप क्रिया मे ही नियोग के बिना भी स्व-जन्य ( यागादि-जन्य ) अपूर्व रूप अवान्तर व्यापार के द्वारा फल-साधनत्व सम्भव है । इसी दृष्टान्त के आधार पर ही अवगूरण ( ताड़ना ) मे भी दुरितापूर्व की कल्पना सम्भव है, तब लोक और वेद मे नितान्त अप्रसिद्ध नियोग की कल्पना नही हो सकती । अन्यथा लिडादि से प्रसिद्ध क्रियारूप कार्य की वाचकता भङ्ग हो जायगी, अप्रसिद्ध नियोग के वाचकत्व की कल्पना, अपूर्व मे फल-साधनत्व की कल्पना, याग मे फल तथा नियोग के कारणत्व की कल्पना करनी पडेगी, जिससे महान् गौरव होगा ।

दूसरी बात यह है कि जैसे आपके मत मे माना जाता है कि आग्नेयादि कर्म ही अपने उत्पत्त्यपूर्वरूप अवान्तर व्यापार के द्वारा परमापूर्व के साधन है , वैसे ही हमारे मत मे भी अपूर्व रूप

१ नियोग. भावार्थविशिष्टकृतिविशिष्ट सन् प्रतीयतेऽतो नियोगप्रतीतिमपेक्ष्य भावार्थ. करणम् , उक्त हि शालिकनाथेन—"भावार्थ कृतिं विशिषन् कार्य विशिनष्टीति विषय." (प्र०प०१०५पुटे) । २ सिद्धिः = उत्पत्तिः (नियोगस्य),तामपेक्ष्य भावार्थ. करणमितिभावः। ३. ज्ञानविषयविशेषकतया,तस्य = विषयत्वस्य ।

प्त्यपूर्वावान्तरव्यापाराया एव क्रियाया ईश्वरप्रसादावान्तरव्यापाराया वा फलसाधनतोपपत्तेर्न नियोगकल्पनावकाशः। न चोत्पत्त्यपूर्वाणामेव परमापूर्वसाधनत्वमाग्नेयादीनां तु तत्साधनतैवेति युक्त वक्तुम्, प्रमाणाभावात्। तथाहि—किं 'दर्शपूर्णमासाभ्या स्वर्गकामो यजेत' इत्यधिकारवाक्येनैषा परमापूर्वसाधनत्वमवगतम्? उत 'आग्नेयोऽष्टाकपाल' इत्याद्युत्पत्तिवाक्यै? नाद्य, दर्शपूर्णमासाभ्यामित्यस्य कर्मसमुदायवाचकत्वात्, यजेतेति च परमा-

---

कारो घटते इत्यवान्तरव्यापाररूपाणि षडपूर्वाणि कल्यन्ते। न च तावताग्नेयादीनां साधनताऽभाव इति भवतामपि सप्रतिपन्न तथात्राप्यस्मन्मते क्रियैवापूर्वावान्तरव्यापारा स्वर्गसाधन नत्वपूर्वम्। अथ ईश्वरप्रसाद एवापूर्वस्थानेऽभिषिच्यता तस्य श्रुतिस्मृतिपुराणगणनिर्णीतत्वादित्यर्थ। यथा चास्मन्मते तत्तद्देवतायागावैयर्थ्यम् 'देवता वा प्रयोजयेत्'दित्यधिकरणाविरोधश्च, तथा 'फलमत उपपत्ते'रित्यत्र वर्णित वाचस्पतिमिश्रैः। ननु नाग्नेयादिष्वपूर्वाणामवान्तरव्यापारत्वम्, अपि तु तान्येव परमापूर्व प्रति साधनम्, आग्नेयादानि तु तत्साधनानीत्याशङ्क्य दूषयति—**न चोत्पत्तीत्यादिना**। अधिकारवाक्य फलसबन्धबोधक वाक्य नियोज्यसमर्पक वा, उत्पत्तिवाक्य कर्मस्वरूपबोधकम्। आद्येऽपि पक्षे दर्शपूर्णमासाभ्यामित्यनेन वा यजेतेत्यनेन वा। प्रथमे प्राह—**दर्शपूर्णमासाभ्यामित्यस्येति**। आग्नेयादिकर्मसमुच्चयवाचकत्वादु-

---

अथवा ईश्वर-प्रसन्नतारूप अवान्तर व्यापार के द्वारा यागादि क्रिया में ही फल की साधनता बन जाती है, अत नियोग की कल्पना के लिए कोई अवकाश नही रह जाता। [ पूर्व की यह अपूर्वकथा है—"दर्शपूर्णमासाभ्या स्वर्गकामो यजेत्"—इस अधिकार वाक्य ने बताया कि 'दर्शपूर्णमास' नामधारी याग स्वर्ग का साधन है। चिन्ता हुई कि स्वर्ग मिलेगा, कही भावी जन्म में, तब तक यह क्षणभङ्गुर याग टिकेगा कैसे? अर्थापत्ति ने ढाँढस बँधाया—याग जन्म देगा, अपूर्व को और अपूर्व स्वर्ग मिलाएगा। इस अपूर्व की गौरवान्वित प्रख्या है—फलापूर्व या परमापूर्व। परमापूर्व की जन्म-कहानी बहुत मनोरम है—अमावास्या तिथि में अनुष्ठेय तीन कर्म होते है—एक आग्नेय और दो ऐन्द्र ( ऐन्द्र दधि, ऐन्द्र पय )—इस त्रिक की सज्ञा 'दर्श' है। इसी प्रकार पूर्णिमा तिथि मे किये जाने वाले तीन कर्म है—आग्नेय, उपांशु और अग्नीषोमीय, इस त्रिक का 'पूर्णमास, नाम है। इन दोनो त्रिको का एक नाम है—दर्शपूर्णमास। उक्त अधिकार वाक्य ने एक और आज्ञा प्रसारित कर रखी है कि दोनो त्रिक मिलकर परमापूर्व पैदा करे। क्षणभङ्गुरता पिशाची ने उनके मिलन का मुहूर्त ही बिगाड़ दिया है। अत यह निश्चय करना पड़ा कि प्रत्येक त्रिक का प्रत्येक कर्म एक-एक अपूर्व उत्पन्न करेगा। प्रत्येक कर्म से उत्पन्न अपूर्व की अभिख्या है—उत्पत्त्यपूर्व। प्रत्येक त्रिक के तीन-तीन उत्पत्त्यपूर्वों से एक-एक समुदायापूर्व होगा। दोनो समुदायापूर्वों के द्वारा परमापूर्व उत्पन्न किया जायगा। अत यह तय पाया गया कि आग्नेयादि छहो कर्म अपने उत्पत्त्यपूर्वक को व्यापार बनाकर परमापूर्व को जन्म देते है ( द्र० शा० दी० २।१।२ तथा प्र. प. पृ. १९० )। उसी प्रकार अपूर्वरूप अवान्तर व्यापार के द्वारा यागादि ही स्वर्ग के साधन हो जायँगे, नियोग की कल्पना व्यर्थ है ]। यदि यह कहा जाय कि उत्पत्त्यपूर्व मे ही परमापूर्व की साक्षात् साधनता है, आग्नेयादि मे परमापूर्व के साधन की साधनता है। तो यह कहना युक्त नही, क्योकि परमापूर्व की साधनता उत्पत्त्यपूर्व मे है—इसमे प्रमाण क्या है? क्या "दर्शपूर्णमासाभ्या स्वर्गकामो यजेत्"—इस अधिकार ( कर्म-फल-सम्बन्ध-बोधक ) वाक्य से उत्पत्त्यपूर्वों मे परमापूर्व की साधनता ज्ञात होती है? या 'आग्नेयोऽष्टाकपाल"—आदि उत्पत्ति ( कर्मस्वरूप-बोधक ) वाक्यो से? प्रथम पक्ष

---

१. द्र० न्या० म० पृ० २१४.। २. उत्पत्त्यपूर्वाण्येव ३. उत्पत्त्यपूर्वसाधनानीत्यर्थः।

पूर्वाभिधानात्। नापि द्वितीय , दर्शपूर्णमासाभ्यामित्यधिकारवाक्यसंनिधिसमाम्नातानामुत्पत्तिवाक्यानामधिकारापूर्वानुवादशङ्काकुण्ठितशक्तीनां द्रागित्येवापूर्वान्तरप्रत्ययजनकतानाश्रयणात्। अन्यथाधिकारवाक्यसंनिधिपरिपठितसमिदादिवाक्यस्थलिङादिशब्दानामपि स्वतन्त्रकार्याभिधायकत्वे ग्राहकग्रहणभङ्गप्रसङ्ग । प्रयोजनप्रयोजनिभावेनान्विताभिधानं ग्राहकग्रहणमित्यभ्युपगमात् , स्वतन्त्राणा च प्रयोजनप्रयोजनिभावासभवात् । आग्नेयादीनामेव त्वधि-

त्पत्त्यपूर्वानभिधायकत्वादित्यर्थः । द्वितीय निषेधति—यजेतेति चेति । भावार्थविशिष्टपरमापूर्वाभिधायकत्वादित्यर्थ । उत्पत्तिवाक्यैरिति पक्ष दूषयति— नापीति । एष हि तेषामभ्युपगमः—आग्नेयादिवाक्यैरपूर्वान्तराणि नाभिधीयन्ते, प्रधानापूर्वसंनिधिपठिततया तदनुवादाशङ्कया कुण्ठितशक्तित्वात् । केवल कर्मस्वरूपमात्र तत्र शाब्दम् । योग्यतावैधुर्याभावाच्च प्रकरणिनान्विताभिधान कारणान्तरवशाच्चापूर्वाणा कल्प्यत्वमिति सोऽत्र भङ्ग्यैवमभ्युपगच्छत इत्यर्थ । न केवलमनुवादाशङ्कयानभिधायकमनिष्टप्रसङ्गाच्चेत्याह—अन्यथेति । दर्शपूर्णमासाभ्यामित्याद्यधिकारवाक्यप्रकरणपठितसमिदादिवाक्यानामप्याग्नेयादिवाक्यवदपूर्वाभिधायकत्वात् । अपूर्वस्य च कृतिसाध्य प्रधान यदित्युक्तलक्षणवत्तया प्रधानत्वात्प्रधानयोश्चाङ्गाङ्गिभावाभावात्तद्बोधकग्राहकसज्ञकप्रयोगवचनेन परिग्रहो न स्यादित्यर्थ. । आपाद्य चेद दूषणम् । परमापूर्वेण[1] ग्राहकग्रहणस्वरूप दर्शयति—प्रयोजनेति । प्रयोजन प्रधान नियोगः , प्रयोजनिनः तत्प्रकरणपठितसकलपदार्थास्तदन्विततया प्रधाननियोगस्याभिधान ग्राहकग्रहणमित्यर्थः । कथ तर्ह्याग्नेयादीना क्षणिकाना सेतिकर्तव्याताकाना परमापूर्वनिर्वर्तकत्वमित्यत आह—आग्नेयादीनामेव त्विति । अवगतो

उचित नहीं , क्योंकि उक्त अधिकार वाक्य में 'दर्शपूर्णमासाभ्याम्'—यह पद कर्म-समुदाय ( आग्नेयादि छह कर्मों को ) कहता है और 'यजेत'—यह पद परमापूर्व का वाचक है, वहाँ और कोई ऐसा पद ही नहीं, जो उत्पत्त्यपूर्व का वाचक हो । द्वितीय पक्ष भी युक्त नहीं , क्योंकि आप (प्राभाकर) के मत में 'आग्नेयोऽष्टाकपाल '-आदि वाक्य केवल कर्मस्वरूप के बोधक है, किसी भी अपूर्व के वाचक नहीं, कारण यह है कि 'आग्नेयोऽष्टाकपाल '—आदि वाक्य, 'दर्शपूर्णमासाभ्या स्वर्गकामो यजेत्'—इस अधिकार विधि के समीप पढे है, अत शङ्का होती है कि अधिकार विधि सबोध्य परमापूर्व के ही अनुवादक आग्नेयादि वाक्य होंगे ( जैसे कि "व्रीहीनवहन्ति"—आदि वाक्यों के विषय में शालिकनाथ ने कहा है—द्र प्र पं पृ २१३ ) । अन्यथा ( "आग्नेयोऽष्टाकपाल."—आदि वाक्यों को अपूर्वान्तर का प्रतिपादक मानने पर ) उक्त अधिकार वाक्य की सन्निधि में पठित समिदादि वाक्य ( समिधो यजति, तनूनपात यजति, इडो यजति, बर्हिर्यजति, स्वाहाकार यजति ) भी स्वतन्त्र अपूर्व के बोधक हो जायँगे , तब तो ग्राहकग्रहण ( अन्विताभिधान ) ही भङ्ग हो जायगा , क्योंकि प्रयोजनप्रयोजनिभाव ( अङ्गाङ्गिभाव ) से अन्वित पदार्थों का प्रतिपादन ही ग्राहकग्रहण माना जाता है । किन्तु स्वतन्त्र ( प्रधान ) पदार्थों का अङ्गाङ्गिभाव सम्भव नहीं । [ आशय यह है कि प्रभाकर के सिद्धान्त में वैदिक लिङादि प्रत्ययों से प्रतीत होने वाला नियोग, अपने अङ्गभूत, प्रकरण-पठित पदार्थों से विशेषित होकर ही अभिहित होता है । इस प्रकार नियोग-ग्राहक शब्द से ही अङ्गपदार्थों का ग्रहण ( अभिधान ) हो जाता है ।—इसी का नाम ग्राहकग्रहण ( प्रधाननियोगग्राहकेणैव अङ्गाना ग्रहणम् ) या अन्विताभिधान ( अङ्गान्वितस्य प्रधाननियोगस्याभिधानम्) कहा जाता है (द्र० प्र. प. पृ० १८९, २१२ ) । जैसे दर्शपूर्णमास में प्रयाजादिरूप इतिकर्तव्यादि-विशेषित परमापूर्व लिङ् प्रत्यय से अभिहित होता है । नियोग सर्वत. प्रधान होता है, अत नियोग में जिस पदार्थ का अन्वय होगा अङ्गतया ही होगा, प्रधानतया नहीं हो सकता । कारण यह कि अन्वय, साकाङ्क्ष पदार्थों

१. परमापूर्वेण । २ अङ्गाङ्गिभावान्वयानुपपत्तिरूपकारणेत्यर्थ ।

कारापूर्वं प्रत्ययगतकरणविषयभावानां क्षणिकत्वेन तदनुपपत्तौ तत्सिद्ध्यर्थमेवावान्तरव्यापार-तयोत्पत्त्यपूर्वाङ्गीकरणात्।

कश्चाय नियोज्यो नाम यदन्वयात्क्रियातिरिक्तनियोगसिद्धि'? स किं कार्यं प्रति गुणभूत'? प्रधानभूतो वा? नाद्य, गुणत्वे कर्तृत्वान्वयान्तर्भावात्। न द्वितीय, प्राधान्येऽधिकार्यन्वयापातात्, गुणप्रधानभावातिरिक्तप्रकारान्तरासम्भवाच्च। कार्यमात्मीयत्वेन योऽवबुध्यते स नियोज्य इति चेत्, तथाभूतावबोधस्यापि गुणप्रधानभावान्तर्भावेणोक्तदूषणापत्ते। क्रियाकार्यं

---

विषयभाव करणभावश्च येषा ते तथा। अङ्गीकरणादिति। यत्रानन्यनिष्ठभावार्थलक्षणविषयलाभस्तत्राभिधायकत्वकल्पना अन्यत्र केवलकल्पनेत्यर्थ। अत्र भवनाथ प्राह—"न क्षणिका क्रिया व्यवहितस्वर्ग प्रति साधनत्वेनाभिदधाति शब्द। अत कल्पनानुपपत्तेः अपूर्वकल्पनात प्रागयोग्यत्वात् आग्नेयादीना त्वपूर्वं प्रति योग्यत्वादन्विताभिधानम्" इति, तन्न नहि क्षणिकत्वाद्व्यवहितत्वमात्राद्वाऽयोग्यत्वम्, तैलपानादावदर्शनात्। निरन्वयविनाशस्तत्राप्यसिद्धः, आग्नेयादेरिव च क्षणिकस्यापि योग्यताऽस्त्यत कारणान्तरमप्रयोजकम्।

एव नियोगस्याशाब्दत्वमुपपाद्य तद्व्यावर्तक नियोज्य दूषयति—कश्चायमिति। ननु नियोगदूषणसमये नियोज्यदूषणमकाण्डताण्डवमिव नेत्याह—यदन्वयादिति। गुणत्व इति। क्रिया प्रति गुणभूतश्चेतनः कर्तैव न तु तदतिरिक्त इत्यर्थ। तेन न समिदादिषु व्यभिचार.। इद च निगूढाभिसन्धेर्दूषणम्। प्राधान्य इति। क्रिया प्रति प्राधान्य नाम तत्फलभोक्तृत्वमत्र विवक्षित चेतनत्वविशेषितं वा तदेव चाधिकारित्वमित्यर्थ। तेन च व्रीह्यादिव्यावृत्ति। ननु गुणप्रधानभावव्यतिरिक्त एव कश्चित्प्रकारो भवत्विति तत्राह—गुणप्रधानेति। स्वतन्त्रयोः सबन्धाभावप्रसङ्गादिति भावः। तथाभूतेति। आत्मीयत्व नामात्मसबन्धित्वम्। न च निराकाङ्क्षयोः सबन्ध इत्यन्तर्भवत्येव गुणप्रधानभावे सोऽपीत्यर्थ'। यो निगूढोऽभिसन्धिरुक्तस्तमुद्घाटयितु शङ्कते—क्रियाकार्यमिति। द्विविध हि कार्य क्रियारूप तदतिरिक्त-

---

का ही होता है। प्रधानभूत नियोग मे अङ्गो की ही आकाक्षा है, अत अङ्गो का ही उसमे अन्वय होगा। यदि समिदादि वाक्यस्थ लिङादि प्रत्यय दूसरे अपूर्व का प्रतिपादन करे, तब इस अपूर्व का उक्त परमापूर्व से अन्वय होगा नही, क्योकि अपूर्व तो सभी प्रधान ही होते है—यह कहा जा चुका है। अत परमापूर्व-ग्राहक वाक्य से प्रयाजादि का ग्रहण न हो सकेगा—द्र न्या म चि. पृ २१६ ]। परमापूर्व के विषय एव करण अग्नेयादि कर्म यद्यपि क्षणिक है, तथापि अपने उत्पत्त्यपूर्वरूप अवान्तर व्यापार के द्वारा परमापूर्व के निष्पादक हो जायँगे।

जिस नियोज्य के अन्वय से क्रियातिरिक्त नियोग की सिद्धि करते है, वह नियोज्य क्या है? वह कार्य (नियोग) के प्रति गुणभूत है? या प्रधानभूत? गुणभूत यदि है, तब तो वह चेतन ही होगा, जिसका कर्तृत्वरूप से क्रिया मे अन्वय होता है। (कर्ता का अन्वय तो लौकिक क्रियामात्र मे है, उसके अन्वय से क्रियातिरिक्त कार्य कैसे सिद्ध होगा?)। यदि प्रधान है, तब अधिकारी के अन्तर्गत हो जायगा (इसके योग से भी क्रियातिरिक्त कार्य सिद्ध न होगा)। गुण-प्रधान भाव से अतिरिक्त कोई तीसरा प्रकार सम्भव नही। 'कार्य को जो आत्मीय समझता हो, वह नियोज्य है'—यह लक्षण भी युक्त नही, क्योकि कार्य को आत्मीय समझने वाला या तो गुण होगा, या प्रधान, अत यहाँ भी उक्त दोष है। यदि कहें कि क्रियारूप कार्य के प्रति गुणभूतत्व, कर्तृत्व है और क्रिया-

---

१. दर्शपूर्णमासक्रिया प्रति गुणत्व समिदादीना वर्तते, कर्तृत्वान्वयस्तत्र नास्तीति व्यभिचारस्तद्वारणार्थं गुणभूतश्चेतन इत्युक्तमिति भाव। २. "व्रीहीन् प्रोक्षती" त्यत्र प्रोक्षणक्रिया प्रति प्राधान्यं व्रीहीणामस्ति, तत्राधिकार्यन्वयो नास्तीति व्यभिचारस्तद्वारणार्थं भोक्तृत्वविशिष्टं चेतनत्वविशिष्टं वा प्राधान्यं विवक्षित-

प्रति गुणभूतत्वं कर्तृत्वं क्रियातिरिक्तं प्रति गुणभूतत्वमेव नियोज्यत्वमिति विषयभेदाद्भेद इति चेत्, मैवम्। क्रियातिरिक्तकार्यसिद्धौ, नियोज्यान्वयसिद्धि, नियोज्यान्वयसिद्ध्यधीना च क्रियातिरिक्तकार्यसिद्धिरिति परस्पराश्रयप्रसङ्गात्।

न च नियोगस्य कृत्युद्देश्यत्वम्, अपुरुषार्थत्वात्। सुखदुःखप्राप्तिपरिहारौ तदुभयसाधनं वा पुरुषार्थः। न चैषामन्यतमो नियोगः, येन पुरुषार्थतया कृत्युद्देश्यः स्यात्। न च स्वर्गादिसाधनतया पुरुषार्थत्वम्, नित्यनैमित्तिकनियोगयोस्तदभावेन कृत्युद्देश्यतावैधुर्यापातात्। नियोगसिद्धेरेव च पुरुषार्थत्वे नियोगस्य स्वर्गसाधनताऽभ्युपगमानर्थक्यप्रसङ्गात्। ननु काम्याधिकारे फलकामिनो नियोज्यत्वात्फलं प्रति करणीभूतस्यैव यागस्य नियोगं प्रति विषयत्वात् तत्साध्यस्य नियोगस्य फलान्तरसाधनता। नित्ये तु न फलकामिनोऽधिकारः, नापि फलं प्रति

---

नियोगस्य च। तत्र प्रथमं प्रति गुणभूतत्वं कर्तृत्वम्, द्वितीयं प्रति गुणभूतत्वं नियोज्यत्वमिति गुणभावे समानेऽपि यत्प्रति गुणभावस्तद्वैषम्यादिदं वैषम्यमित्यर्थः। दूषयति—**मैवमिति**। विषयनियोज्यनिरूप्य- कश्चित्कार्यविशेषो नियोगो नाम, यथाहुः—

'कार्यत्वेन नियोज्यं यः स्वात्मनि प्रेरयन्नसौ।
नियोग इति मीमांसानिष्णातैरभिधीयते॥' इति।

तथाच नियोज्यनिरूपणान्नियोगनिरूपणं सम्प्रति नियोगेन तं निरूपयसीति परस्पराश्रय इत्यर्थः।

यच्च कृत्युद्देश्यत्वं प्राधान्यं जेगीयते गुरुमतानुसारिभिस्तदपि दूषयति—**न च नियोगस्येति**। पुरुषार्थत्वप्रयोजकं दर्शयन्नपुरुषार्थतामेव विवृणोति—**सुखेति**। ननु किमिति न पुरुषार्थत्वं यावता स्वर्गादिसाधनतया सुखसाधनत्वमस्तीत्याशङ्क्य नित्यनियोगे फलरहिते कृत्युद्देश्यता न स्यादित्याह—**न चेत्यादिना**। स्यादेतत्—लोके खल्वियं कथा यत्सुखादिचतुष्टयान्यतमः स पुरुषार्थ इति, वेदे तु नियोगसिद्धिरेव पुरुषार्थ इति तत्राह—**नियोगसिद्धेरेवेति**। शङ्कते—**नन्विति**। अयमर्थः—नियोगसिद्धिस्तु सर्वत्र पुरुषार्थो भवत्येव। न च काम्येषु स्वर्गसाधनत्वाभावप्रसङ्गः, स्वर्गकामिनस्तत्राधिकारित्वात्। स्वर्गकरणस्यैव यागस्य नियोगं प्रति विषयत्वाच्च। तेन भवतु नाम तत्र स्वर्गोऽपि फलं न तावता नियोगस्यापुरुषार्थता। अतएव च काम्येषु साध्यविवृद्धिरिति वृद्धाः। नित्येषु न तादृशोऽधिकारी, नापि तादृशी विषयकरणे, अपितु कामिनियोगं प्रत्येव विषयः करणं चातो विवृद्धिरहितं नियोगमात्रं तत्र पुरुषार्थः।

---

तिरिक्त कार्य के प्रति गुणभूतत्व ही नियोज्यत्व है। तो यह भी नहीं कह सकते, क्योंकि क्रियातिरिक्त कार्य सिद्ध होने पर नियोज्य का अन्वय सिद्ध होगा और नियोज्य का अन्वय सिद्ध हो जाने पर क्रियातिरिक्त कार्य की सिद्धि—इस प्रकार अन्योऽन्याश्रय दोष होता है।

आपका यह कहना भी असंगत है कि नियोग, कृति का उद्देश्य होता है, क्योंकि वह पुरुषार्थ नहीं। सुख, दुःख-परिहार एवं उन दोनों के साधनों को पुरुषार्थ कहा जाता है। किन्तु इनमें से नियोग किसी में नहीं आता कि जिससे पुरुषार्थ बनकर कृति का उद्देश्य हो जाता। 'स्वर्ग का साधन होने से पुरुषार्थ है'—यह भी नहीं कह सकते, क्योंकि नित्य एवं नैमित्तिक नियोग में स्वर्ग-साधनता न होने से कृति की उद्देश्यता कैसे बनेगी? यदि कहें कि वेद में नियोग-सिद्धि ही पुरुषार्थ है, तब तो उसमें स्वर्ग की साधनता माननी निरर्थक हो जायगी। यदि शङ्का की जाय कि काम्य कर्मों में फल-कामी नियोज्य होता है, अतः फल के प्रति करणभूत याग ही नियोग का विषय होता है, इसीलिए वहाँ नियोग स्वयं पुरुषार्थ रहने पर भी स्वर्ग का साधन भी हो जाता है। किन्तु नित्य कर्मों में फलार्थी का अधिकार नहीं होता और न फल के प्रति कारणीभूत याग ही नियोग के प्रति

---

मिति हृदयम्। १ कर्तृत्वनियोज्यत्वयोर्वैषम्यमित्यर्थः।

करणीभूतस्यैव यागस्य नियोगं प्रति विषयत्वम्, किंतु नियोगं प्रत्येव विषयत्व करणत्वं च, अन्यथा नित्यकाम्यवैषम्यानुपपत्ते.। तस्मान्नित्येषु नियोगसिद्धिरेव पुरुषार्थं इति चेत्, मैवम्, नित्यकाम्यवैषम्यस्यान्यथाप्युपपन्नत्वात्। तथाहि द्वयो फलवत्त्वाविशेषेऽपि यत्र कामना निमित्ततया श्रूयते कल्प्यते वा तत्काम्यम्, यत्र पुनर्नैवं यदकरणे च प्रत्यवायस्तदितरदिति वैषम्यात्। नित्यनैमित्तिकयोश्च फलशून्यत्वे हि तत्साधनताबुद्ध्या प्रवृत्तिरेव पुंसा न स्यात्। ननु नियोगसिद्धे परमपुरुषार्थत्वात्तत्साधने यागादौ हितसाधनबुद्ध्यैव प्रवृत्ति, "नियोगार्थसिद्धे किमन्यत्प्रयोजन सर्वविधीनाम्" इति गुरुणैवोदीरितत्वादिति चेत्, मैवम्, तथा सति तवापि नित्यकाम्यवैषम्यभङ्गप्रसङ्गात्। तथाहि—फल प्रति करणीभूते यागादौ रागत एव प्रवृत्तिरितिकर्तव्येषु तु वैधी कामाधिकारे, नित्येषु तु करणेतिकर्तव्यतयोर्विधित एव प्रवृत्तिरिति वैषम्य तवाभिमतम्, तच्चेदं भज्येत, नियोगस्य फलरूपत्वेन

अवश्य चैव मन्तव्यम्, इतरथोभयथाप्यतिरिक्तफलकत्वे[1] तदभावे वा नित्यकाम्यविभागानुपपत्तेरिति। तदेतन्नित्यकाम्ययोर्व्यतिरिक्तफलकत्वेऽपि प्रकारान्तरेण वैषम्य दर्शयन्दूषयति—**मैवमित्यादिना**। विश्वजिदादिसग्रहार्थमाह—**कल्प्यते वेति**। ननु फलत्त्व चेत्सर्वत्र समान, किमिति नित्येऽपि विश्वजिदादिवदेव न कल्प्यते कामः ? किमिति वा न काम्यत्वम् ? इत्यत उक्तम्—**यदकरणे चेति**। यत्र प्रत्यवायश्रवण तत्र न कल्प्यमित्यर्थः। नित्ये हि न फलं नित्यमिति खण्डलकार्थ'। वैषम्यान्तर वा, यदकरणे प्रत्यवायो न दृश्यते तत्काम्यम्, यत्र च श्रूयते नियत निमित्त तन्नित्यम्, यत्र च तच्छ्रवणेऽप्यनियत निमित्त तन्नैमित्तिकमिति विभाग। 'कर्मणा पितृलोक' इति शास्त्राच्च नित्याना फलवत्ताधिगम, नित्येषु प्रवृत्तिलाभाच्चैवमेव वैषम्य युक्तमित्याह—**नित्यनैमित्तिकयोश्चेति**। ननु किमिति न प्रवृत्तिः यावता नियोगो हितम्, तत्साधन च यागः, ततो हितसाधने प्रवृत्ति संभवतीति शङ्कते—**ननु नियोगेति**। वैषम्यभङ्गमेवोपपादयति—**तथा हि फलं प्रतीति**। यत्र करणे रागात् प्रवृत्तिस्तत्काम्यम्, यत्र पुन करणेऽपि विधित प्रवृत्तिस्तन्नित्यमिति हि नित्यकाम्यवैषम्यमभिमतम्, तन्न स्यात्। नित्येष्वपि करणी-

विषय होता है, अपितु नियोग के प्रति ही विषय और करण होता है। अन्यथा नित्य और काम्य का कुछ अन्तर ही न रहेगा। इस लिए नित्य कर्मों मे नियोग सिद्धि मात्र ही पुरुषार्थ है। तो यह शंका नहीं कर सकते, क्योकि नित्य और काम्य का अन्तर अन्यथा ही बन जाता है—दोनो मे फलवत्ता समान होने पर भी जहाँ कामना निमित्त रूप से श्रुत हो या विश्वजिदादि की भाँति कल्पित हो, वह काम्य है और जहाँ कामना निमित्त रूप से न श्रुत हो और न कल्पित, हाँ, जिसके न करने से प्रत्यवाय कहा गया हो वह नित्य है। नित्य और नैमित्तिक कर्मो मे यदि किसी प्रकार का फल न माना जाय, तब तो फल-साधनता न होने से वहाँ पुरुषो की प्रवृत्ति ही न होगी। यदि शङ्का हो कि नित्य, नैमित्तिक कर्मों मे भी नियोग की सिद्धि ही परम पुरुषार्थ है, उसकी साधनता यागादि में है, अत इष्ट-साधन-बुद्धि से ही प्रवृत्ति होगी, स्वयं प्रभाकर ने कहा है—'सब विधिवाक्यो मे नियोगार्थ की सिद्धि को छोडकर और क्या प्रयोजन है ?' तो यह शका उचित नही, क्योकि नियोग-सिद्धि को सब कहीं फल मानने पर आपके यहाँ भी नित्य और काम्य कर्मों का वैषम्य भङ्ग हो जायगा। अर्थात् आपके मत से काम्य प्रयोगों मे यह व्यवस्था की गई है कि फल के करणभूत यागादि मे रागत ही प्रवृत्ति होती है और इतिकर्तव्य (अङ्गानुष्ठान) अंश में विधि के बल से प्रवृत्ति होती है। किन्तु नित्य कर्मों के दोनो–करण एव इतिकर्त्तव्य अंशो में विधि के बल से प्रवृत्ति होती है–इस प्रकार का वैषम्य नित्य और काम्य में है। अब नित्य कर्मों मे नियोग को फल

१. इतरथा = नियोगमात्रस्यापुरुषार्थत्वे, उभयथा = नित्यकाम्ययोरित्यर्थः।

तत्करणे यागादावपि रागत एव प्रवृत्त्युपपत्ते ।

किंचेद् यागस्य फल प्रति करणत्वम् श्रुतिलिङ्गादिगम्यम् ? उत नियोगानुपपत्तिगम्यम् ? नाद्य , श्रुत्यादेरदर्शनात् । 'स्वर्गकामो यजेते'त्यादौ फलं प्रति करणत्वस्य प्रकृतिप्रत्ययाभ्याम-प्रतीते , यागेन फलशिरस्कस्य नियोगस्यैव साध्यत्वप्रतीतेरभ्युपगमात् । लिङ्गादीनां चाना-शङ्कनीयत्वात् । नापि द्वितीय , विकल्पासहत्वात् । किं नियोग स्वसिद्धये यागस्य फलकर-णत्व कल्पयति ? उत फलसिद्धये ? स्वस्य फलकामिकृतिसाध्यत्वसिद्धये वा ? न प्रथमः,

भूतयागादिषु रागादेव प्रवृत्तेरित्यर्थ ।

यदुक्त पूर्व फल प्रति करणीभूतस्य यागस्य नियोग प्रति विषयत्वमिति तदपि दुर्निरूपमित्याह—**किं चेदमित्यादिना** । किमः श्रुतिलिङ्गादिगम्यमित्यनेनान्वयः । चस्तु किंचार्थ । **श्रुत्यादेरदर्शनादिति** । यथा हि इष्टसाधनतावाक्यार्थवादिनामस्माक स्वर्गयागयो. साध्यसाधनभावः श्रौतः , यथा च भावनावाक्यार्थवादिना भाट्टाना वाक्यगम्यः साध्यसाधनभाव । यथाहु पार्थसारथिमिश्रा —'नहि तत्र स्वर्गकामस्य यागस्य वा साध्यत्व साधनत्व वा केनचिदुक्तम् , पदद्वयसमभिव्याहारादेव तु सम्बन्धे कल्पयितव्ये असाधक तु तादर्थ्या'[1]दिति न्यायेन कामिन प्राधान्य यागस्य च गुणत्व कल्प्यते' इति । तन्मतेऽपि फलसबन्धः श्रौत इष्टसाधनरूपत्वात् विधेर्न तथा भवद्भिरभ्युपगम्यते औपादानिकत्वाङ्गीकारादि[2]-त्यर्थ । किं तर्हि प्रकृतिप्रत्ययाभ्यामभिधीयते ? इत्यत आह—**यागेनेति** । यजेतेत्यस्य यागेन नियोगः इत्यर्थ । स च नियोगो दैवगत्या फलसाधनमिति तच्छिरस्कस्य साध्यत्व नतु फलस्य । फलपरत्वाभावाच्च तद्वाक्यस्य न फलयागयो' साध्यसाधनभाव इत्यर्थः । अस्तु तर्हि लिङ्गवाक्यादीनि प्रमाणमिति तत्राह—**लिङ्गादीनां चेति** । नियोगानुपपत्तिलक्षणौपादानिकत्व दूषयति—**नापि द्वितीय इति** । **फलकामीति** ।

मान लेने पर उसके करण यागादि मे रागत ही प्रवृत्ति होगी फिर नित्य और काम्य का वह वैषम्य भङ्ग हो जायगा ।

यह जो कहा था कि काम्य कर्म मे फल के प्रति करणभूत याग ही नियोग का विषय है । वहाँ जिज्ञासा होती है कि याग मे फल की करणता क्या श्रुति, लिङ्गादि अग बोधक प्रमाणो से प्राप्त है ? या नियोग की अन्यथानुपपत्तिरूप अर्थापत्ति से ? प्रथम पक्ष उचित नही , क्योकि "स्वर्गकामो यजेत्"—आदि पदो मे फल निरुपित करणता का वाचक न कोई प्रकृति है और न प्रत्यय । 'स्वर्ग-कामो यजेत्"—वाक्य से आपके मत में ( 'स्वर्गकामिनियोज्यको यागजन्यो यागविषयको नियोग '—इतना ही बोध होता है अर्थात् ) याग-निरूपित साध्यता नियोग में प्रतीत होती है, वह नियोग यहाँ भले ही फल का साधन है , किन्तु उसमें भी फल की साधनता अर्थात् है किसी शब्द से प्रतीयमान नही, ( क्योकि जैसे भाट्टमत मे 'स्वर्गकाम' पद काम्यतेऽसाविति काम = फलम्, स्वर्गश्चासौ काम = स्वर्गकाम = स्वर्गफलमित्यर्थ । इस प्रकार फल-बोधक है, वैसे आपके मत मे फल-बोधक नही , अपितु नियोज्य-बोधक है ) । लिगादि की तो यहाँ शंका ही नही की जा सकती ( क्योंकि स्वर्गादि पद फलपरक ही जब नही, तब किसकी सामर्थ्य से फल-करणता का लाभ होगा) । द्वितीय ( नियोग की अन्यथानुपपत्ति ) पक्ष भी युक्त नही , क्योकि यहाँ जिज्ञासा होती है कि नियोग क्या अपनी सिद्धि के लिए याग मे फल-करणता का कल्पक है ? या फल-सिद्धि के लिए ? या स्वनिष्ठफलार्थि-कृति-साध्यता की सिद्धि के लिए ? प्रथम पक्ष युक्त नही , क्योकि नियोग अपने साधन रूप याग के अनुष्ठान से ही सिद्ध हो जायगा, उसे अपनी सिद्धि के लिए याग मे फल-करणता-कल्पना करने की

१. जै० सू० ६।१।२, तादर्थ्यात् = स्वर्गार्थत्वाद् यागस्य, असाधकम् = स्वर्गो यागसाधको न भवतीति-तदर्थः । २. प्रवृत्त्यन्यथानुपपत्तिरूपार्थापत्तिगम्यत्वाभ्युपगमात् ।

स्वसाधनीभूतयागानुष्ठानादेव स्वस्य सिद्धेः । न द्वितीय , स्वसिद्ध्यैव फलस्यापि सिद्ध्युपपत्ते । न चरम , यागस्य स्वर्गं प्रति साधनत्वाभाव इव करणत्वाभावेऽपि स्वर्गसाधनीभूतनियोगं प्रति करणत्वादेव स्वर्गकामिकृतिव्याप्यत्वोपपत्तेः । यागादे फल प्रत्यकरणत्वे तत्कामिनस्तत्र कथं प्रवृत्तिरितिचेत्, साधनत्वाभावेऽपि तत्र तस्य प्रवृत्तिरनुपपन्नेति तुल्यम् । किं च साधनत्वाभावे तद्विशेषरूपकरणत्वमपि न स्यात्, 'साधकतमं करण'मिति पाणिनिस्मरणात् ।

अथ परोद्दिष्टकृतिव्याप्यत्व तेन साधनत्वाभावेऽपि करणता किं न स्यादिति चेत्, तर्हि

फलकामिनो य. प्रयत्नस्तेन साध्य'व यन्नियोगस्य तन्नोपपद्यते यागस्य तद्घटकस्य स्वर्गकरणत्वाभाव इत्यर्थ. । **साधनत्वाभाव इति** । न हि यागस्य स्वर्गं प्रति साधनत्वम् , प्रमाणाभावात् , नियोगो हि वाक्यार्थस्त प्रत्येवेतरेषा शेषत्वावगमात् , व्यवहितत्वेनायोग्यत्वाच्च न कामिनस्तस्मिन्साधानताबुद्धि कर्तृव्यापारगोचरगोचरतया करणता तु स्यात् । यथाह भवनाथ'—'न स्वर्गकामो व्यवहितसाधन यागादि कार्यतया बोद्धमल'मिति । एतदुक्त भवति—फल प्रति साधनत्वाभावेऽपि फलसाधनीभूतनियोगसाधनत्वादेव यथा यागस्य फलकामिनस्तद्द्वारा नियोगे प्रवृत्तिर्घटते तथा प्रकृतेऽपीति । ननु यदि न यागः स्वर्गंप्रति करण कथं तर्हि तत्कामिनो यागे प्रवृत्ति ? अनुपाये प्रवृत्त्यभावादिति शङ्कते—**यागादेरिति** । अकरणे प्रवृत्त्यदर्शनवदसाधनेऽपि प्रवृत्तिर्न दृष्टा, तदिहासाधनेऽपि प्रवृत्तिमङ्गीकुर्वतोऽकरणे प्रवृत्तिर्न विरुध्यते दर्शनस्य नियामकत्वानङ्गीकारादिति परिहरति—**साधनत्वेति** । साधनसाधनत्वात्प्रवृत्त्युपपत्तिं ब्रुवाणस्य करणकरणत्वादित्युत्तरम् । न च यत्कामिनो यत्र नियोगस्तत्तस्य साधनामत्यपि नियमः , ग्रामाद्यसाधनेऽपि भोजनादौ 'ग्रामकामो भुङ्क्ष्वे'ति निर्ज्ञातविशेषणेऽन्नभोजनार्थं नियोगदर्शनात् । अथ कर्तृव्यापारगोचरगोचरत्वात्करणमिति' , तन्न, साधनत्वरहितस्य करणत्वाङ्गीकारे व्याहते , सामान्यव्यावृत्तौ विशेषव्यावृत्तेरित्याह—**किंचेति** । **साधकतममिति** । तमपा साधनविशेषत्वमुक्तमिति भाव ।

न साधनविशेषः करणमपित्वन्यदुद्दिश्य प्रवृत्तप्रयत्नव्याप्य यथा छेदनोद्देश्येन प्रवृत्तप्रयत्नव्याप्यत्व हि कुठारादे. करणत्व तत्कुतो व्याघात' ? इति शङ्कते—**अथेति** । तादृमतिव्यापक स्वर्गं प्रत्यकरणस्यानियोगस्य स्वर्गोद्देशिपुरुषप्रयत्नव्याप्यतया करणत्वप्रसङ्गादिति दूषयति—**तर्हीति** । आपाद्य चेदम् । ननु परो-

कोई आवश्यकता नही । द्वितीय पक्ष भी उचित नही , क्योकि नियोग की सिद्धि से ही फल की सिद्धि हो जायगी, फल-सिद्धि के लिए याग मे फल-करणता मानने की क्या आवश्यकता ? अन्तिम पक्ष भी अनुचित है , क्योकि स्वर्ग का साधन नियोग है, याग नही , फिर भी नियोग का साधन होने से ही याग, स्वर्ग-कामनावान् पुरुष की कृति का विषय ( साध्य ) हो जाता है । इसी प्रकार याग मे स्वर्ग की करणता न रहने पर भी फलार्थी पुरुष की कृति की साध्यता बन जायगी । 'याग मे फल की करणता न होने पर फलाभिलाषी उसके अनुष्ठान मे प्रवृत्त क्यो होगा ? यह सन्देह नही करना , क्योकि याग मे फल की साधनता न होने पर तो वहाँ प्रवृत्ति अनुपपन्न है ( अर्थात् फल की साधनता न मानकर आप जैसे याग मे प्रवृत्ति मान लेते है, वैसे ही करणता न रहने पर भी हम प्रवृत्ति मान लेगे ) । दूसरी बात यह भी है कि याग मे सामान्य साधनता न होने पर विशेष साधनता ( करणता ) कैसे रहेगी ? "साधकतम करणम्" ( विशेष साधन ही करण कहलाता है ) पाणिनि के इस सूत्र से नितान्त स्पष्ट है कि करण साधन विशेष होता है ।

यदि कहे कि अन्योद्देश्यक कृति की विषयता का नाम करणता है । इस प्रकार की करणता तो

१. यागे । २ पुरुषकृतिविषयनियोगविषयतयेत्यर्थ । ३ तन्नेति पाठान्तरम् । ४ साधनत्व सामान्यम् , करणत्व विशेष' ।

नियोगस्यापि परोद्दिष्टकृतिव्याप्यतया करणत्वप्रसङ्ग , तस्यापि स्वर्गादिफलोद्देशेन प्रवृत्तकृतिव्याप्यत्वात् । अथ साक्षादिति विशेषणाददोष , मैवम्, इतिकर्तव्यस्य प्रयाजादेरङ्गजातस्य धात्वर्थतया साक्षात्कृतिव्याप्यत्वेन करणत्वप्रसङ्गात् । उभयो साधनत्वाविशेषे करणेतिकर्तव्यतालक्षणो विभागो न सिद्धयेदिति चेत्, न, तवापि नियोगसाधने यागे तदितिकर्तव्येषु च साधनत्वाविशेषाद्विभागानुपपत्तेस्तुल्यत्वात् । न च करणांशे रागत प्रवृत्तिरितिकर्तव्येषु तु विधित इति विभागो युक्त , सेतिकर्तव्यताकस्यैव करणतया तत्र रागत प्रवृत्ते-

दिष्टकृत्या साक्षाद्व्याप्यत्व करणत्व तथाच न नियोगेऽतिव्याप्तिः तस्य भावार्थव्यवधानादिति शङ्कते—**अथेति**। तर्हीतिकर्तव्यतास्वपि भावार्थस्य साक्षात्कृतिव्याप्यतया यागवदेव करणत्वप्रसङ्ग इत्यतिव्याप्त्या दूषयति—**मैवमिति**।

यत्तु साधनत्वव्यावृत्तौ करणत्वव्यावृत्तिरित्युक्त तत्परिहरन्[1] शङ्कते—**उभयोरिति**। प्रयाजादेः षड्यागस्येव स्वर्गं प्रति साधनत्वाविशेषे प्रयाजादेरितिकर्तव्यतात्वमितरस्य करणत्वमिति प्रसिद्धो विभागो न स्यात् । अतः करणेतिकर्तव्यताविभागलोभादेवासाधनस्यैव यागस्य स्वर्गं प्रति करणत्व स्वीकर्तव्यमित्यर्थः । परिहरति—**न तवापीति**। यथाहि नियोग प्रति साधनत्वाविशेषेऽप्यय विभागस्तथा स्वर्ग प्रतीति भावः । यश्च कामाधिकारे करणेतिकर्तव्यताविभागो गुरुमतानुसारिभिः परिकल्प्यते, तमपि प्रसङ्गाद् दूषयति—**न च करणांश इति**। अथवा साधनत्वाविशेषेऽपि कामाधिकारे करणत्वप्रयोजकमाशङ्क्यानेन दूष्यते । तत्र हेतु.—**सेतिकर्तव्यतेति**। यथा ह्युद्यमननिपातनव्यापारविशिष्टस्यैव कुठारस्य करणत्वं न तु केवलस्य तथा सेतिकर्तव्यताक करणम् । तत्र चेद्रागत· प्रवृत्तिस्तर्हीतिकर्तव्यतास्वपि रागत एव सेति न विभाग इत्यर्थः । अथवा इतिकर्तव्यतासाध्योपकारसापेक्षत्वात्करणस्य तदपेक्ष्येष्वपि रागतः प्रवृत्तिरित्यर्थः । तथा नित्ये विभागानुपपत्तिरित्यपि द्रष्टव्यम् । करणेतिकर्तव्यतयो रागत प्रवृत्तिसाम्या-

साधनत्व-रहित पदार्थ मे भी रहती है, तब तो नियोग से भी करणता की प्राप्ति हो जायगी, क्योंकि वह भी पर ( स्वर्गरूप फल ) के उद्देश्य से प्रवृत्त पुरुष की कृति का विषय है । यदि 'साक्षात्'—यह विशेषण लगाकर नियोग में से ( कृति का साक्षात् व्याप्य भावार्थ है और उसके द्वारा नियोग मे कृति की विषयता होती है, अत· नियोग मे साक्षात् कृति-विषयता न रहने के कारण ) अतिव्याप्ति दोष हटाना चाहे, तब इतिकर्त्तव्यरूप प्रयाजादि अग कर्मों मे साक्षात् कृतिव्याप्यता रहने के कारण अतिव्याप्ति होगी । ( इस प्रकार यह सिद्ध हो गया कि करणता का ऐसा कोई लक्षण नही बन सकता, जो साधनता-शून्य पदार्थ मे भी रह जाय । करणता को साधनता विशेष ही मानना होगा, फिर तो वही दोष प्रभाकर-मत मे बना रहा कि यागादि मे साधनता न मानने पर करणता भी न रहेगी, इस लिए फल की साधनता भी मानिए ) । यदि शंका हो कि फल की साधनता यदि वेदान्ती धात्वर्थमात्र मे भी मानेगे, तब आग्नेयादि याग करण है और प्रयाजादि इतिकर्त्तव्य है—यह विभाग सिद्ध न होगा, अत. यह मानना होगा कि आग्नेयादि याग साधन नही । तो ऐसी शका नही करनी चाहिए, क्योंकि आप ( प्राभाकर ) के मत मे फल की साधनता धात्वर्थ मे नही, किन्तु नियोग की साधनता ही मानी जाती है, अत दोनो मे समान साधनता रहने पर करण और इतिकर्त्तव्य के विभाग की अनुपपत्ति समान ही है । 'करण अंश मे राग से प्रवृत्ति होती है और इतिकर्त्तव्यो मे विधि के बल से'—यह विभाग भी युक्त नही, क्योंकि प्रयाजादि रूप इतिकर्त्तव्य-विशिष्ट दर्शपूर्णमास याग ही करण होता है । करणाश में रागत. प्रवृत्ति

१ परिहर्तुमितिपाठान्तरम् ।

कथं चैवं सति 'श्येनेनाभिचरन्यजेते'ति विधौ जाग्रति रागतः प्रवृत्तौ निषेधानुप्रवेशाद्-धर्मता स्यात् ? नहि विधिसंस्पृष्टे निषेधः प्रवर्तमानोऽनर्थतां बोधयितुमीष्टे। तथा सति षोड-शिग्रहणस्यापि नातिरात्रे षोडशिनं गृह्णातीति निषेधादनर्थत्वप्रसङ्गात्। उक्तं हि भट्टाचार्यैः—

'यद्यपि स्याद्विधिस्पृष्टे निषेधो नैव तादृशम्।
विज्ञायते ह्यनर्थत्वं षोडशिग्रहणादिवत् ॥' इति। (श्लो० वा० २।२०३)

---

ननु यद्यप्युभयत्र रागतः प्रवृत्तिः समाना तथापि 'न हिंस्यात्सर्वा भूतानी'ति निषेधानुप्रवेशादधर्मता श्येनयागस्येतरस्य न तथा तदभावादिति वैषम्यमिति नेत्याह— **कथं चैवं सतीति**। रागतः प्रवृत्ति-स्तावदुभयत्र समानेत्यावेदितम्। तथा सति विधिस्पर्शास्पर्शाभ्यां वैषम्यं वक्तव्यम्। न चैतदपि, श्येनेऽपि विधेर्विद्यमानत्वादिति भावः। एतदेव षोडशिप्रतिग्रन्थ्या समर्थयते—**न हि विधिसंस्पृष्ट इत्यादिना**। विधिसंस्पृष्टेऽपि चेन्निषेधादनर्थत्वं तर्ह्यतिरात्रे षोडशिनं गृह्णातीति विहितस्यापि षोडशिग्रहणस्य नातिरात्रे षोडशिनं गृह्णातीति निषेधादनर्थत्वमङ्गप्रसङ्गः। न चेतदुक्तम्। आह हि—

'यद्यपि स्याद्विधिस्पृष्टे निषेधो नैव तादृशम्।
विज्ञायते ह्यनर्थत्वं षोडशिग्रहणादिवत् ॥' इत्यर्थः।

---

है। नियोग में स्वर्गकामिकृति की विषयता तब तक नहीं बन सकती, जब तक नियोग में स्वर्ग-साधना न हो—"तस्माद्यत्कामिनो यत्कार्यतयोपदिश्यते तत्तस्य काम्यस्य साधकमिति नियोज्यकार्यान्वयानुपपत्त्यैव गम्यते" (प्र. प. पृ. १८३)। इस प्रकार की अर्थापत्ति से यागरूप विषय एवं स्वर्गकामि रूप नियोज्य से विशिष्ट नियोग की प्रतीति अपेक्षित है, अतः याग का प्रथमतः नियोग के साथ अन्वय अनिवार्य है, पश्चात् नियोग में फल की साधनता और तदनन्तर याग में करणता का ज्ञान होगा ]।

( यदि कहा जाय कि श्येन और अग्नीषोमीय—दोनों में रागतः प्रवृत्ति समान है, फिर भी "न हिंस्यात् सर्वा भूतानि"—इस निषेध से निषिध्यमान होने के कारण श्येन याग अधर्म है और अग्नीषोमीय विधीयमान होने से धर्म है—इस प्रकार दोनों में महान् अन्तर है। तो यह कहना सगत नहीं, क्योंकि ) श्येन याग में "श्येनेनाभिचरन् यजेत्"—इस विधिवाक्य के जीते-जागते "न हिंस्यात् सर्वा भूतानि"—यह निषेध कैसे पैर धर सकता है ? फिर क्यों वहाँ अधर्मता आयेगी ? ( नियम यह है कि राग-प्राप्त कलञ्ज-भक्षणादि पदार्थों में प्रवृत्त होकर "न कलञ्जं भक्षयेत्"—आदि निषेध अनर्थता या अधर्मता बताया करता है, किन्तु ) विधि वाक्य से विहित पदार्थ में प्रवृत्त निषेध अनर्थता नहीं बता सकता। यदि विहित पदार्थों में भी निषेध अनर्थता कहे, तब तो षोडशि-ग्रहण ( षोडशिसंज्ञक पात्र में सोम-रस-ग्रहण ) में भी अनर्थत्व आ जायगा, क्योंकि उसमें भी "नातिरात्रे षोडशिनं गृह्णाति"—यह निषेध प्रवृत्त होता है। इसीलिए कुमारिल भट्ट ने कहा है—'विधि-विहित पदार्थों में प्रथम तो निषेध प्रवृत्त ही नहीं होता। यदि प्रवृत्त भी हो जाय, तो वैसे ही अनर्थत्व नहीं कह सकता, जैसे षोडशि-ग्रहण में।' [ ज्योतिष्टोम नाम का प्रधान सोम याग होता है। उसकी मुख्य चार संस्थाएँ होती हैं—(१) अग्निष्टोम, (२) उक्थ्य, (३) षोडशी, (४) अतिरात्र। संस्था नाम है समाप्ति का। जिस स्तोत्र से जो प्रयोग समाप्त होता है, उस प्रयोग को उस स्तोत्र के नाम से पुकारा जाता है। ज्योतिष्टोम के जिस प्रयोग में अग्निष्टोम संज्ञक स्तोत्र अन्तिम होता है, इस स्तोत्र के अनन्तर और कोई स्तोत्र नहीं गाया जाता, उसका नाम है- अग्नि-ष्टोम। उक्थ्य में अग्निष्टोम स्तोत्र के अनन्तर उक्थ्यनामक स्तोत्र गाया जाता है, उसके अनन्तर और स्तोत्र नहीं। षोडशी में उक्थ्य के अनन्तर षोडशि स्तोत्र पढ़ा जाता है। अतिरात्र में षोडशिस्तोत्र के बाद रात्रिस्तोत्र और आश्विन स्तोत्र अन्त में गाये जाते हैं। रात्रि के बीतने पर इस कर्म में स्तोत्रों

ननु विधेर्द्विविधो व्यापारो भावार्थफलयोः साध्यसाधनसंबन्धबोधो भावार्थानुष्ठानबोधश्चेति। तत्रैव चानुष्ठानबोधो यत्र भावार्थेऽन्यतो न प्रवृत्तिः, श्येनादौ च फलोपायत्वेऽधिगते रागत एव प्रवृत्त्युपपत्तेर्नानुष्ठापकत्वम्, ततश्च निषेधप्रवेशाच्छ्येनादेरनर्थत्वमिति चेत्, न, उक्तोत्तरत्वात्। उक्तं हि—सेतिकर्तव्यस्यैव करणत्वात्तत्र रागतः प्रवृत्ताविति-कर्तव्येऽपि तत एव प्रवृत्तौ श्येनवदग्नीषोमीयस्यापीतिकर्तव्यस्यानर्थता प्रसज्येतेति। ननु 'अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहती'ति प्रायश्चित्तविधानादनर्थता निश्चीयत इति चेत्, मैवम्, नैमित्तिकत्वेनाप्यस्योपपत्तेः। यथा हि—"वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदे"दित्यनृतवदन-

व्यापारद्वैविध्यं विधेर्दर्शयन् श्येनयागस्याधर्मतामुपपादयति पूर्ववादी—**नन्वित्यादिना**। तदेतदग्नीषोमीयहिंसायामपि समानमिति परिहरति—**न, उक्तोत्तरत्वादिति**। प्रकारान्तरेणाधर्मतामाशङ्कते—**नन्विति**। अहीनोऽहर्गणनिर्वर्त्यः क्रतुविशेषः 'अह्नः खः क्रतावि'ति समूहे गम्यमाने अहन्शब्दात्खप्रत्ययविधानात्। परिहरति—**मैवमिति**। निषिद्धत्वानिर्णये प्रायश्चित्तानिर्णयात् तद्विधानस्य च नैमित्तिकत्वेनाप्युपपत्तेः निषिद्धत्वविधानात्प्रायश्चित्तत्वे प्रायश्चित्तविधानाच्च निषिद्धत्वे परस्पराश्रयमिति भावः। ननु व्यपोहतीति दोषनिर्बर्हणश्रवणात्प्रायश्चित्तत्वमिति तत्राह—**यथा हि वर्णिनामिति**। यत्र यस्मिन्समये ब्राह्मणादीनां वधः प्राप्नोति तत्र तदा साक्ष्यनृतं वदेत्। अनृतवदनमवदनस्याप्युपलक्षणम्। ततश्च यदि वदनमात्राद्वधः प्राप्नोति तदा न वदेत्। यदा तु सत्यवदनात्तदानृतं वदेदित्यर्थः। तत्पावनायेति तच्छुद्ध्यर्थम्। द्विजैस्त्रैवर्णिकैः। सारस्वतः सरस्वतीदेवताकश्चरुः। निर्वाप्यः निर्वपणेन यागपर्यन्त

**की समाप्ति होती है, इसलिए इसे अतिरात्र कहते हैं। इन चारो स्तोत्रों के उलट-फेर से जो तीन संस्थाएँ और होती है—अत्यग्निष्टोम, वाजपेय, आप्तोर्याम, वे उक्त चारो सस्थाओ के अन्तर्गत मानी जाती है। प्रकृत में अतिरात्रसंस्थाक ज्योतिष्टोम की चर्चा है। इसमे षोडशि नामक ग्रह ( सोम-रस रखने का उलूखलाकार दारुमय पात्र ) का ग्रहण विहित भी है और निषिद्ध भी। ग्रहण करने पर या न करने पर किसी प्रकार का वैगुण्य नही आता ]।**

**यदि शङ्का की जाय कि विधि के दो व्यापार होते हैं—एक धात्वर्थरूप क्रिया और फल का साध्य-साधन-भाव बताना तथा दूसरा धात्वर्थ के अनुष्ठान का बोध कराना। अनुष्ठान-बोधन उसी धात्वर्थ में करती है, जिसका अनुष्ठान प्रमाणान्तर से प्राप्त न हो। श्येनादि में तो फल-साधनता का ज्ञान होते ही रागतः प्रवृत्ति हो जाती है, विधि में उसकी अनुष्ठापकता नही होती। विधि का जब कोई सम्पर्क नही, तब निषेध शास्त्र प्रवृत्त होकर श्येनादि मे अनर्थत्व बोधित करेगा ही, यही अग्नीषोमीय से इसका वैषम्य हो जाता है। तो यह शङ्का अयुक्त होगी, क्योकि इसका समाधान किया जा चुका है कि इतिकर्तव्य-विशिष्ट ही याग, करण होता है। विशिष्ट करण मे यदि रागतः प्रवृत्ति होती है, तब तो विशेषणभूत इतिकर्त्तव्य मे भी रागतः प्रवृत्ति माननी होगी। स्वर्ग के करणभूत ज्योतिष्टोम याग का इतिकर्तव्य ( सहायक व्यापार ) अग्नीषोमीय भी है, अतः उसमें रागतः प्रवृत्ति होने पर निषेध शास्त्र के प्रवृत्त हो जाने से अनर्थत्व प्राप्त हो जायगा। यदि कहा जाय कि "अभिचारमहीन च त्रिभिः कृच्छ्रैर्व्यपोहति" ( श्येनादि अभिचारकर्म एवं त्रिरात्रादि अहीन कर्मों को करनेवाला तीन कृच्छ्र व्रतो से शुद्ध होता है—मनु० ११।१९७ ) इस प्रकार प्रायश्चित्त का विधान देखकर श्येनयाग मे अनर्थता निश्चित है। तो यह कहना भी उचित नहीं, क्योकि वहाँ यह भी कहा जा सकता है कि श्येनयाग करने से पाप नही होता कि उसकी शुद्धि के लिए प्रायश्चित्त की आवश्यकता पड़े। हाँ, श्येनयागानुष्ठानरूप निमित्त के उपस्थित होने पर वैसे ही नैमित्तिक व्रत का विधान है; जैसे कि "वर्णिना वधो यत्र तत्र साक्ष्यनृत वदेत्" ( जहाँ पर सत्य**

विधानानन्तर "तत्पावनाय निर्वाप्यश्चरु' सारस्वतो द्विजै"रिति नैमित्तिकत्वेन सारस्वतश्चरु-निर्वाप्यो विधीयते नत्वनृतवदनजनितपापनिबर्हणाय, अनृतवदने कामतोऽप्रवृत्तेर्विधित एव तत्र प्रवृत्त्यङ्गीकारात्। एवमत्रापि। तदेवं नित्यकाम्यवैषम्यस्य वक्तुमशक्यत्वान्नित्यवत्काम्येऽपि नियोगस्य फलसाधनत्वकल्पना नि प्रामाणिका, पुरुषार्थत्वे नियोगस्य स्वर्गसाधनताभ्युपगमानर्थकताप्रसङ्गात्।

न च स्वर्गादिसाधनत्वे नियोगस्य प्राधान्यमपि संभवति, स्वर्गादिसुखशेषत्वात्। न च स्वानुकूलनियोज्यसिद्धये स्वर्गादिकं साधयतो नियोगस्य स्वामिवत्प्राधान्यानुपघात, दृष्टान्तवैषम्यात्। तथा हि—द्वौ तत्र स्वामिभृत्ययो प्रयत्नौ स्वार्थोद्देशेन प्रवृत्तौ परस्परमुपकुर्वाते, न तथेह नियोगस्य चेतनता, येन स्वकीयप्रयत्ने स्वर्गमात्मार्थतया आक्षिपेत्, प्रत्युत गर्भदासस्थानीयो नियोज्य. स एव स्वर्गाय प्रवृत्तो नियोगमेव स्वर्गशेषतया स्वीकुर्यात्। न च

---

लक्ष्यते। ननु तत्पावनायेति श्रवणात्प्रायश्चित्ततैव किं न स्यादिति तत्राह—**नत्वनृतवदनेति**। तत्र हेतु—**अनृतवदनेति**। कामत' प्राप्त ह्यनृतवदनं नानृत वदेदिति निषिद्ध निषिद्धानुष्ठाने च प्रायश्चित्तम्, प्रकृते तु विधित प्रवृत्तेर्न प्रायश्चित्त युक्त निषिद्धानुष्ठानशङ्काभावादित्यर्थ। एव च विषयविभागेन प्रायश्चित्तव्यवस्थापनमपि कैश्चित्क्रियमाणमयुक्तमित्यवान्तरविचारमुपसहरति—**तदेवमिति**।

यच्च प्राधान्यसमर्थनं कृत स्वर्गादिसाधनत्वेऽपि तद्दूषयति—**न चेति**। पूर्वपक्ष्याशयमनूद्य दूषयति—**न चेति**। गर्भदासस्वामिनोश्चेतनतया स्वस्वप्रयोजनोद्देशेन प्रवृत्तिर्युक्ता, अत्र तु नियोगस्य स्वामिस्थानीयता न युक्ता, अचेतनत्वात्। अतएव न प्रवृत्तिरपीत्यर्थं। न केवल नियोगस्य प्राधान्याभावः, प्रत्युत स्वर्गं प्रति शेषत्वमेवेत्याह—**प्रत्युतेति**। ननु कथमिदमवधार्यते स्वर्गशेषो नियोगः नतु विपरीतमिति?

---

बोलने से ब्राह्मणादि का बध सम्भावित हो, वहाँ साक्षी को असत्य बोल देना चाहिए–याज्ञ० २।५।८३)–इस वाक्य से अनृत-वदन विधान करके "तत्पावनाय निर्वाप्यश्चरु सारस्वतो द्विजै" ( ऐसा अनृत-वदन उपस्थित होने पर द्विजाति को सरस्वतीदेवताक चरुद्रव्यक याग करना चाहिए—याज्ञ० २।५।८३ )—इस वाक्य से जो सारस्वत चरु ( अनवस्रावितान्तरुष्मपक्वौदन. ) के निर्वाप ( द्रव्य-राशि से आवश्यक द्रव्य का निकालना, निर्वापोपलक्षित याग ) का विधान किया है, वह नैमित्तिक विधान ही है, न कि असत्य भाषण-जन्य पाप की निवृत्ति के लिए, क्योंकि यहाँ साक्षी स्वेच्छा से असत्य बोलने मे प्रवृत्त नही हुआ, अपितु उक्त विधि के बल से ही अत पाप की सम्भावना ही नही। ऐसे ही प्रकृत मे भी "अभिचारमहीनम्"—आदि से नैमित्तिक विधान है। इस प्रकार नित्य और काम्य का अन्तर कहा नही जा सकता, अत नित्यकर्म के समान काम्य कर्म मे नियोग-निष्ठ फल-साधनत्व की कल्पना अप्रामाणिक है और यदि नियोग ही पुरुषार्थ है, तब उसमे स्वर्ग-साधनत्व की कल्पना करना ही निरर्थक है।

यह जो आप ( प्राभाकर ) मानते है कि नियोग सर्वत प्रधान होता है, वह भी नहीं बनता, क्योकि नियोग को स्वर्ग-साधन मान लेने पर वह स्वर्ग का अंग हो गया, प्रधान कहाँ रहा? यह जो कहा था कि नियोग ने स्वर्ग की साधनता स्वीकार की है, अपने योग्य नियोज्य-लाभ करने के लिए, अत भृत्य का उपकारक जैसे स्वामी अप्रधान नही हो जाता, वैसे ही नियोग भी अप्रधान क्यो होगा? वह कहना भी असगत है, क्योकि दृष्टान्त मे स्वामी और भृत्य दो चेतनो के प्रयत्न है, जो अपने-अपने स्वार्थ के उद्देश्य से प्रवृत्त है और परस्पर उपकार-साधन करते है। प्रकृत मे तो नियोग कोई चेतन वस्तु है नही कि अपने प्रयत्न से स्वर्ग मे आत्मार्थता सम्पादन करे, प्रत्युत भृत्यस्थानीय नियोज्य ही स्वर्ग के लिए प्रवृत्त हुआ है, वह नियोग को ही स्वर्ग का अंग

स्वर्गादिसुखस्यान्यार्थता, स्वभाववैपरीत्यापत्ते । यदर्थं सर्वं यच्च नान्यार्थं तत्सुखमिति हि सुखस्य लक्षणमाचक्षते, तत्कथमन्यशेषता स्वर्गादिसुखस्य भवेत् ? न चालौकिकत्वेऽपि नियोगस्य यूपाहवनीयादिवत्पदान्तरसमभिव्याहारात्संबन्धग्रहणम्, तत्र यूपाहवनीयादेर्यूपं तक्षतीत्यादिप्रसिद्धपदसमभिव्याहारान्यथानुपपत्तिगम्यत्ववन्नियोगस्यार्थापत्तिगम्यत्वानङ्गीकारात् । अङ्गीकारे वाऽपूर्वत्वव्याघाताच्च । यत्तु लिङादे क्रियातिरिक्तकार्याभिधायित्वानुमानम्, तत्प्रत्यनुमानपराहतत्वादसाधनम् । तथाहि—

विवादाध्यासिता शब्दा क्रियाकार्याभिधायिनः ।
कार्यप्रत्ययहेतुत्वाद् आनयेत्यादिशब्दवत् ॥ १८ ॥

इष्टसाधनवादिनो वेदान्तिन प्रति साध्यविकलत्वाच्च । लौकिकलिङादिशब्दानामपि श्रेय-साधनबोधकत्वाभ्युपगमात्, व्यापकानुपलब्धिपराहतत्वाच्च । तथाहि—तदभिधायकत्व तत्र

---

इति तत्राह—**न चेति** । अथवा पूर्वमचेतनत्वान्नियोगस्य न स्वर्गस्य तच्छेषत्वमित्युक्तम् । इदानी स्वभावविरोधादपि न तथेत्याह—**न च स्वर्गादीति** । यच्च नान्यार्थं तत्सुखमित्युक्ते दु खेऽपि स्यादत उक्तम्—**यदर्थमिति** । स्वर्गादिसुखस्यान्यशेषत्व यच्च नान्यार्थमिति लक्षणविरुद्धमित्यर्थ । यत्तु यूपाहवनीयादि दृष्टान्तित तदपि वैषम्य दर्शयन् परिहरति—**न चालौकिकत्वेऽपीति** । प्रत्यनुमानमेव श्लोकेन दर्शयति—**विवादाध्यासिता इति** । लौकिकलिङादौ सिद्धसाधनतापरिहाराय विवादपदम् । वैदिकलिङादय. इत्यर्थ. । क्रियारूप कार्य क्रियाकार्य तदभिधायिन इत्यर्थः । नियोगेनार्थान्तरतानिरासाय क्रियाग्रहणम् । न च लौकिकलिङादित्वमुपाधि', लौकिकपदवैयर्थ्येन पक्षेतरत्वात् । नन्वेवमपि त्वत्पक्षे कि प्रमाणम् ? न तावदिदमेव, प्रतिरोधमात्रतया स्वपक्षासाधनत्वात् । नैतत्सारम्, बाधकत्वेन प्रतिरोधकत्वासिद्धेः । समबलबोधितसाध्यविपर्ययत्व हि प्रतिरुद्धत्वम्, न चात्र समबल:व अधिकबलत्वादितरस्य दुर्बलत्वात्तदाह—**इष्टसाधनेति** । वादिनो वेदान्तिन इति च द्वितीया । साध्यवैकल्यमेव विवृणोति—**लौकिकेति** । एतत्क्रियातिरिक्तकार्याभिधायित्वे गामानयेत्यादिपद हि पूर्ववादिना दृष्टान्तितम् । न च तत्रापि कार्याभिधायित्वमिष्टसाधनताभिधायित्वाङ्गीकारात् मयेत्यर्थ । इदचासिद्धेरप्युपलक्षणम् । दूषणान्तर चाह—**व्यापकेति** । व्यापक विवेचयन् तदनुपलब्धिमिहोपलम्भयति—**तथा हीत्यादिना** । यद्यद्विषयस्याभिधायकम्,

---

मानेगा । स्वर्गरूप सुख मे नियोगार्थत्व मानना भी नितान्त अस्वाभाविक है । 'जो सभी का प्रयोजन है और जिसका अन्य कोई प्रयोजन नही, वह सुख है'—यह सुख का लक्षण किया करते है, तब कैसे अन्य की शेषता ( अगता ) स्वर्ग रूप सुख मे सम्भव होगी ? यह जो कहा था कि अलौकिक होने पर भी यूप, आहवनीयादि के समान नियोग में भी प्रसिद्ध पदो के समभिव्याहार से शक्ति-ग्रह हो जायगा । वह भी दृष्टान्त से विरुद्ध है, क्योंकि "यूपं तक्षति"—आदि प्रसिद्ध पदो के सहोच्चारण की अन्यथानुपपत्तिरूप अर्थापत्ति की विषयता यूपादि मे मानी जाती है, किन्तु नियोग में आगमातिरिक्त किसी भी प्रमाण का स्पर्श आपको सह्य नही । नही तो अपूर्वता ही भंग हो जायगी । लिङादि मे क्रियातिरिक्त कार्य-वाचकता का जो अनुमान किया था, वह भी सत्प्रतिपक्षता-ग्रस्त होने से अभिमत साध्य का साधक नही हो सकता । सत्प्रतिपक्ष का आकार यह है—'विवाद-ग्रस्त ( वैदिक लिङादि ) शब्द, क्रियारूप कार्य के वाचक है, कार्य-प्रतीति के जनक होने से, जैसे—आनयादि पद ।' आपके क्रियातिरिक्तकार्य-वाचकत्व-साधक अनुमान मे, इष्टसाधनवादी वेदान्ती के प्रति दृष्टान्त साध्य-शून्य है, क्योकि आपने 'एतत्क्रियातिरिक्तकार्याभिधायित्वरूप' साध्य के लिये दृष्टान्त दिया है आनयादि लौकिक लिङ् । किन्तु हम ( वेदान्ती ) लौकिक लिङादि शब्दों में भी इष्ट-साधनता-बोधकत्व ही मानते हैं, कार्याभिधायकत्व नही । व्यापकानुपलब्धिरूप दोष भी आपके

सङ्गतिग्रहणेन व्याप्तम्, तच्च मानान्तरानधिगतादपूर्वाद्व्यावर्तमान लिङादीनां तदभिधायकतां व्यावर्तयति। न च क्रियातिरिक्तकार्यानभिधाने स्वर्गकामो यजेतेत्यादिशास्त्रस्याप्रामाण्यप्रसङ्ग, क्रियाया एवापूर्वावान्तरव्यापाराया परमेश्वरप्रसादावान्तरव्यापाराया वा फलसाधनत्वोपपत्तेः प्रदर्शितत्वात्। तदेवं विधिवाक्यानामपि सिद्धार्थबोधकत्वाद्विधिसंस्पर्शविधुराणां सत्यज्ञानादिवाक्यानामखण्डैकरसब्रह्मलक्षणसिद्धार्थावबोधकत्व सुतरां सिद्ध्यतीति सिद्धम्।

ननु कथ वेदान्तानामखण्डार्थत्वम्? तस्य निर्वक्तुमशक्यत्वात्, तत्र प्रमाणासंभवाच्च। तथाहि—किमिदमखण्डार्थत्वम्? किं निर्विशेषवस्तुपरत्वम्? उत निर्भेदार्थनिष्ठत्वम्? आहोस्विदपर्यायशब्दाना प्रातिपदिकार्थमात्रपर्यवसायित्वम्? अथवा तेषामेवैकप्रातिपदिकार्थमात्र-

---

तत्तस्य गृहीतसङ्गतिकमिति व्याप्तम्। न च प्रमाणान्तरानधिगतेऽपूर्वे तत्सभव इति व्यापकव्यावृत्त्या व्याप्यव्यावृत्तिरग्निव्यावृत्त्येव धूमव्यावृत्तिरित्यर्थ। यस्तु तेन विपक्षे बाधकस्तर्क उक्तस्तमपि प्रशिथिलमूलमुन्मूलयति—**न च क्रियातिरिक्तेति**। वादार्थमुपसहरन् समन्वयोपयोगमाह—**तदेवमित्यादिना**।

"हितसाधनतामवलम्ब्य यदा वृत्ते विधिबोधकवाक्यमपि।
परमामृतबोधविधौ सुतरा परमात्मनि वेदशिरासि तदा॥"

अखण्डबोधकत्वमुक्तमाक्षिपति—**ननु कथमित्यादिना**। अखण्डार्थत्वस्य सभवल्लक्षणानि दूषयति—**किमिदमित्यादिना**। खण्डशब्दस्य च विशेष भेद चार्थमादाय प्रथमद्वितीययोः प्रवृत्तिस्तृतीयचतुर्थयो स्वविवक्षावशात्। **तेषामेवेति**। अपर्यायशब्दानामेवेत्यर्थ। पञ्चमस्तु खण्डशब्दस्य ससृष्टमर्थमादाय, निर्विशेषाणामप्यन्त्यविशेषाणा भिन्नत्वस्य परैरङ्गीकारात् नाद्यद्वितीयसङ्करः। तात्पर्यमभिहितेषु लक्षितेषु

---

अनुमान मे है, क्योकि 'तदभिधायकत्व' तत्संगतिमत्त्व से व्याप्त है (यद्, यदभिधायकम्, तत् तेन संगतिमत्, यथा गोपदं गवाभिधायक, गवा सह गृहीतशक्तिकमस्ति) अर्थात् 'तदभिधायकत्व' व्याप्य और 'तत्सगतिमत्त्व' व्यापक है। प्रमाणान्तर के अविषय नियोग के साथ सगति-ग्रह सम्भव नही, अत लिङादि मे नियोग के साथ सगति-ग्रहण रूप व्यापक न रहने से अपने व्याप्य तदभिधायकत्व को भी नही रहने देगा। यह जो कहा था कि क्रियातिरिक्त कार्य की वाचकता न मानने पर "स्वर्गकामो यजेत्"—आदि शास्त्र अप्रमाण हो जायँगे। वह कहना भी अनुचित है, क्योकि अपूर्व या ईश्वर-प्रसाद रूप अवान्तर व्यापारवाली यागादि क्रिया मे ही स्वर्गादि-साधनता की उपपति दिखाई जा चुकी है। इस प्रकार यह सिद्ध हा गया कि विधि वाक्य भी सिद्धार्थ के बोधक होते है, तब तो विधि-सपर्क-रहित सत्य, ज्ञानादि शब्दो मे अखण्ड, एक रस, ब्रह्मरूप सिद्धार्थ की बोधकता का कहना ही क्या है? आनन्दबोधाचार्य ने मनोरम शब्दों मे कहा है—

इति गलितकलङ्क' सिद्धतत्त्वे प्रसिद्धे,
सविधिकपदराशेर्मानभाव प्रमाणात्।
प्रतिहतपरयुक्तिव्रातनीतिप्रपञ्चात्,
किमु विगलितभेदे पुसि वेदान्तवाच॥

पूर्वपक्ष—वेदान्त वाक्यो में अखण्डार्थत्व कैसे सिद्ध हो सकता है? जब अखण्डार्थत्व का न कोई लक्षण बनता है और न उसम कोई प्रमाण ही है—यह अखण्डार्थत्व क्या है? क्या (१) निर्विशेष वस्तुपरत्व? या (२) निर्भेदार्थनिष्ठत्व? (सजातीयविजातीयस्वगतभेदशून्यवस्तुविषयकत्व?) या (३) अपर्याय शब्दों की प्रातिपदिकार्थ मात्र मे पर्यवसायिता? या (४) अपर्याय शब्दों

---

१. द्र. न्या. म. पृ २५७। २ प्रवृत्तिरे इतिशेषः।

पर्यवसायित्वम् ? संसर्गगोचरप्रमाजनकत्वं वा ? नाद्यः; विकल्पासहत्वात्। तथाहि—पदानां निर्विशेषवस्तुपर्यवसायित्वमभिधायकतया ? लक्षकतया वा स्यात् ? न प्रथमः; तस्यात्यन्तमप्रसिद्धतया सबन्धाग्रहणेन पदानां तत्पर्यवसायित्वासंभवेन लक्षणस्यासभवित्वप्रसङ्गात्। नापि द्वितीयः, अप्रसिद्धत्वादेवाभिधेयाविनाभावस्य लक्षणाहेतोरसभवेन प्राचीनदोषानुषङ्गप्रसङ्गात्। न चाभिधेयाविनाभावं विनापि 'गरमभ्यवहरे'त्यादिगिरामिव वाक्यप्रामाण्यानुपपत्तिरेव लक्षणाक्षेपिका, अत्यन्ताप्रसिद्धत्वेन गगनारविन्दादेरिव लक्ष्यत्वानुपपत्तेः।

वा सभवति यथा गङ्गाया यादासीति, यथा वा गङ्गाया घोष इति, तमुभयमपि प्रकारं विकल्प्य दूषयति—तस्यात्यन्तमिति। अन्त्यविशेषाणां[1] भवद्भिरनङ्गीकारादिति भावः। लक्षणापक्षं दूषयति—नापीति। अभिधेयाविनाभूतं हि लक्ष्यं दृष्टं यथा गङ्गाया घोषः प्रतिवसति इत्यत्र गङ्गाऽविनाभूतं तीरं गङ्गापदेन, न पुनरनविनाभूतम्। अविनाभावश्चाय भूयः सबन्धदर्शनमात्रम्, मञ्चाः क्रोशन्तीत्यत्र मञ्चपुरुषयोर्मुख्याविनाभावाभावेऽपि लक्षणादर्शनात्। न चान्त्यताप्रसिद्धस्य निर्विशेषवस्तुनोऽभिधेयाविनाभावः सभवतीति लक्षणाऽसभवाल्लक्षणाऽसभव[2][3] इत्यर्थः। नन्वभिधेयासबद्धमपि क्वचिल्लक्ष्यं दृष्टं यथा कश्चित् किमस्य गृहे भोक्तव्यम्? इति केनचित्पृष्टः तन्निवारयन्नाह—विषं भुङ्क्ष्वेति। न चात्र लक्ष्यमाणैतद्गृहनिष्ठभोजननिवृत्तेः विषभक्षणस्य च सबन्धोऽस्ति। अथ च लक्ष्यते, तत्कस्य हेतोः? वाक्यप्रामाण्यानुपपत्तेः। एवमत्रापि सत्यादिवाक्यप्रामाण्यानुपपत्तेरेव किमिति न लक्षणेत्यत आह—न चाभिधेयेति। तत्र हेतुः—अत्यन्ताप्रसिद्धेति। अनुपपत्तिरपि हि योग्ये लक्षणां प्रवर्तयति न त्वयोग्ये, इतरथा खपुष्पादेरपि लक्षणाप्रसङ्गात्, तस्मात् प्रामाण्यानुपपत्तिरपि अन्यपरतायामेव[4] बीजम्, न त्वखण्डार्थतायामिति भावः।

की एकप्रातिपदिकार्थमात्र मे पर्यवसायिता ? या (५) ससर्गविषयक प्रमा की जनकता ? प्रथम (निर्विशेषवस्तुपरत्व) मे जिज्ञासा होती है कि निर्विशेषवस्तुपरत्व से क्या अभिमत है ? निर्विशेष वस्तु-वाचकत्व ? अथवा निर्विशेषवस्तु-लक्षकत्व ? प्रथम (निर्विशेषवस्तु-वाचकत्व) लक्षण असम्भव है, क्योकि निर्विशेष वस्तु लोक मे कही प्रसिद्ध ही नही, अतः उसके साथ शब्द का सम्बन्ध-ग्रह न हो सकने के कारण वेदान्त उसके वाचक कैसे बनेगे ? द्वितीय (निर्विशेषवस्तु-लक्षकत्व) भी युक्त नही, क्योकि लक्षणा का हेतु होता है—अभिधेयाऽविनाभाव (अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते—त वा १।४।२३)। जब अभिधेय ही प्रसिद्ध नही, तब उसका अविनाभाव कहाँ प्रसिद्ध होगा ? अत इस लक्षण मे भी वही असम्भव दोष है। यदि शङ्का करे कि अभिधेयाविनाभाव लक्षणा का हेतु नही, क्योकि उसके बिना भी 'विष भुङ्क्ष्व' मे लक्षणा देखी जाती है (अर्थात् कोई अपने मित्र से पूछता है कि अमुक व्यक्ति के यहाँ भोजन करना चाहिए ? कि नहीं ? वह मित्र उसे हटाने के लिए उत्तर देता है कि उससे अच्छा है विष खा लीजिए। यहाँ अभिधेय है—विष-भोजन और लक्ष्य है—उस व्यक्ति के घर भोजन न करना, इन दोनो का अविनाभाव हो ही कैसे सकता है ?) अत लक्षणा का हेतु कहना होगा—वाक्य-प्रामाण्य की अनुपपत्ति। वेदान्त वाक्यों का प्रामाण्य तभी बन सकता है, जब कि निर्विशेष वस्तु मे उनकी लक्षणा की जाय। तो यह शङ्का युक्त न होगी, क्योकि प्रामाण्यानुपपत्ति भी अत्यन्त अप्रसिद्ध वस्तु (जो लक्ष्य बनने के योग्य ही नही) को लक्ष्य नही बना सकती। अन्यथा गगन-कुसुम मे भी लक्षणा होनी चाहिए।

१. नन्वन्त्यविशेषाणा निर्विशेषाणा प्रसिद्धिरस्तीत्यत आह—अन्त्येति। स्वतोव्यावृत्तत्वमत्रान्त्यत्वम्। विशेषाणा विशेषान्तराभावात् स्वतोव्यावृत्ता निर्विशेषा विशेषा इतिवैशेषिकाणामभ्युपगमो न तु पूर्वोत्तरमीमासकानामिति भावः। २. लक्षणाया असम्भवादित्यर्थः। ३. लक्षणस्यासम्भव इत्यर्थः। ४. संसृष्टार्थत्वपरतायामित्यर्थः।

अथ निर्भेदवस्तुपरत्वम्? तदपि न, निर्भेदत्वस्यानिरुक्तेः। तथाहि—निर्भेदत्वं नाम किं भेदाभावविशिष्टत्वम्? उत भेदाभावोपलक्षितत्वम्? नाद्यः, तत्परत्वे वाक्यस्य निर्घटं भूतलमितिवत्संसृष्टार्थत्वप्रसङ्गात्। न द्वितीयः, तत्रापि संसृष्टार्थत्वस्यानतिवृत्तेः। तथाहि—भेदस्य योऽभावस्तेनोपलक्षणेनोपलक्षितवस्तुपरत्वे कथं न संसृष्टार्थता? वस्तुमात्रमेव तत्र प्रतिपाद्यम्, भेदाभावस्तु द्वारमिति चेत्, तथापि नाखण्डार्थता, उपलक्ष्यमाणस्य स्वेतरेभ्यो व्यावृत्तत्वेन प्रतीतावखण्डार्थत्वासंभवात्। अप्रतीतौ चानुपलक्षकत्वादेवोपलक्षणस्य वैयर्थ्यप्रसङ्गात्। नापि तृतीयः, शीतोष्णस्पर्शवन्तौ पयःपावकावित्यत्रापर्यायशब्दानां प्रातिपदिकार्थमात्रपर्यवसायित्वेऽप्यखण्डार्थत्वादर्शनात्। नापि चतुर्थः, तथासत्येकेनैव तत्प्रतिपत्ते

द्वितीयं दूषयति—**अथ निर्भेदवस्त्विति**। निर्भेदत्वं नाम भेदाभावविशिष्टत्वमिति प्रथमपक्षं दूषयति—**नाद्य इति**। यथा हि निर्घटं भूतलमिति घटाभावविशिष्टभूतलबोधकस्य नाखण्डार्थमेव तत्रापीत्यर्थः। भेदाभावोपलक्षितत्वपक्षं दूषयति—**न द्वितीय इति**। तत्रापि वक्तव्यं किं भेदाभावोपलक्षितत्वविशिष्टम्[१] उत वस्तुमात्रम्? इति। आद्ये प्राह—**भेदस्य योऽभाव इत्यादिना**। द्वितीयं शङ्कते—**वस्तुमात्रमेवेति**। दूषयति—**तथापीति**। भेदाभावेन यद्ब्रह्म लक्ष्यते[२] तत्किमितरेभ्यो व्यावृत्तं प्रतीयते? न वा? प्रथमे प्राह—**उपलक्ष्यमाणस्येति**। व्यावृत्तिविशिष्टस्याखण्डत्वाभावादित्यर्थः। द्वितीयं दूषयति—**अप्रतीताविति**। कादाचित्कव्यावर्तकमुपलक्षणं नाम तस्य चाव्यावर्तकत्वं व्याहतमित्यर्थः। अपर्यायशब्दानां प्रातिपदिकार्थमात्रनिष्ठत्वमिति तृतीयं दूषयति—**नापि तृतीय इति**। यस्य हि लक्षणवाक्यं लक्ष्यप्रातिपदिकार्थमात्रपर्यवसितमिति मतं तस्येमे लक्षणवाक्ये लक्ष्यजलानलस्वरूपपर्यवसिते, तथापि नाखण्डार्थता भिन्नत्वाल्लक्ष्ययोरित्यर्थः। अथवा पयःपावकशब्दयोरपि शीतोष्णस्पर्शवन्तावेवार्थौ जातिमात्रपरत्वायोगात्। तथा च शीतोष्णस्पर्शवच्छब्दयोः पयःपावकशब्दयोश्च प्रातिपदिकार्थमात्रपरत्वमस्ति, नचात्राखण्डार्थतेत्यर्थः। अपर्यायशब्दानामेकप्रातिपदिकार्थत्वमिति चतुर्थं पक्षं दूषयति—**नापि चतुर्थ**

द्वितीय ( निर्भेदार्थनिष्ठत्व ) लक्षण भी समुचित नहीं, क्योंकि यहाँ निर्भेदत्व का निर्वचन ही नहीं हो सकता—निर्भेदत्व क्या है? क्या भेदाभाव विशिष्टत्व? या भेदाभावोपलक्षितत्व? प्रथम ( भेदाभाव-विशिष्टत्व ) पक्ष ठीक नहीं, क्योंकि वेदान्त वाक्यों में भेदाभाव-विशिष्ट-बोधकत्व मानने से वैसे ही सखण्डार्थत्व प्राप्त होगा, जैसे—निर्घट भूतलम्—आदि वाक्यों में। द्वितीय ( भेदाभावोपलक्षितत्व ) पक्ष में भी संसृष्टार्थत्व ( सखण्डार्थत्व ) की निवृत्ति नहीं हो सकती, क्योंकि भेद का जो अभाव, उस उपलक्षण से उपलक्षित वस्तु की बोधकता में संसृष्टार्थत्व ( संसर्ग-घटितार्थ-वाचकत्व ) क्यों न होगा? यदि कहा जाय कि यहाँ भेदाभाव तो द्वारमात्र है, वेदान्त-बोध्य है—केवल वस्तु। तो भी अखण्डार्थत्व नहीं बनता, क्योंकि उपलक्ष्यमाण ( ब्रह्म ) वस्तु यदि स्वेतर से व्यावृत्त होकर प्रतीत होती है, तब अखण्डार्थत्व कैसे? ( अर्थात् इतरव्यावृत्तत्व-विशिष्ट वस्तु, अखण्ड नहीं हो सकती )। यदि उपलक्ष्यमाण वस्तु इतर-व्यावृत्तत्वेन प्रतीत नहीं होती, तब वह उपलक्षण ही व्यर्थ है, जो लक्ष्य का उपलक्षण नहीं। ( भाव यह है कि कादाचित्क व्यावर्तक को ही उपलक्षण कहते हैं। लक्ष्य वस्तु जब इतरव्यावृत्तरूप से प्रतीत नहीं हो सकी, तब उसके उपलक्षण में इतर-व्यावर्तकत्व न रहा )। तृतीय ( अपर्याय शब्दों की प्रातिपदिकार्थमात्र में पर्यवसायिता ) लक्षण भी अतिव्याप्त है, क्योंकि 'शीतोष्णस्पर्शवन्तौ पयःपावकौ'—इस लक्षण वाक्य में शीतस्पर्शवत्, उष्णस्पर्शवत्, पयः और पावक—ये चारों अपर्याय शब्द केवल जलाग्नि रूप प्रातिपदिकार्थ के ही बोधक हैं, किन्तु अखण्डार्थत्वके नहीं। चतुर्थ ( अपर्याय शब्दों की एक प्रातिपदिकार्थ

१. सत्यादिपदेऽपीत्यर्थः। २. उपलक्ष्यते इत्यर्थः।

पदान्तरप्रयोगस्य वैयर्थ्येन लक्षणस्यासभवित्वापातात्। व्यवच्छेद्यभेदादवैयर्थ्यमिति चेन्न। तदनिरुक्ते। तथाहि—किं व्यवच्छेद्याना व्यावृत्तय पदैः प्रतिपाद्यन्ते? अथवा तद्विशिष्टम्? आहोस्विदुपलक्षितं स्वरूपमात्रं वा? तत्र न प्रथमद्वितीयौ, तथासति ससृष्टार्थत्वेनाखण्डार्थत्वानुपपत्ते.। नापि तृतीय, तत्राप्यन्यतो व्यावृत्तस्य प्रतिपादने प्राचीनदोषानुषङ्गात्। स्वरूपमात्रप्रतिपादने च पदान्तरप्रयोगवैयर्थ्यस्य दर्शितत्वात्।

नापि पञ्चम। तथात्वस्यात्यन्तादृष्टचरत्वेन लक्षणासभवित्वात्। ननु प्रकृष्टप्रकाशश्चन्द्र इत्यादिलक्षणवाक्येषु दृष्ट संसर्गागोचरप्रमितिजनकत्वमिति चेत्, मैवम्, लक्षणवाक्यैरपि

---

इति। यदि ह्येकमेव वस्तु बुबोधयिषित तदेकेनैव बुद्धमिति पदान्तरप्रयोगो वृथैव स्यात्, न च पदमात्र वाक्यमस्ति तस्मादसभविलक्षणमित्यर्थः। यद्यप्येकमेव लिलक्षयिषितम्, तथापि व्यवच्छेद्या बहवः सन्ति असत्यजाड्याद्य। न चैकपदमात्रात्सर्वेषा व्यवच्छेद., तदर्थमात्रेणेतरेषा विरोधाभावात्। अतो न पदान्तरवैयर्थ्यमिति शङ्कते—**व्यवच्छेद्येति**। दूषयति—**न तदनिरुक्तेरित्यादिना**। तद्व्यवच्छेदमात्रप्रतिपादन व्यवच्छेदविशिष्टवस्तुप्रतिपादन च ससृष्टार्थतया अखण्डार्थताविरोधीति दूषयित्वा व्यवच्छेदोपलक्षितवस्तुप्रतिपादनमिति तृतीयं पक्ष दूषयति—**नापि तृतीय इति**।

ससर्गागोचरप्रमाजनकत्वमिति पञ्चमपक्ष दूषयति—**नापीति**। सर्वत्र हि वाक्यार्थस्य पदार्थससर्गतया वा ससृष्टपदार्थतया वा समर्गग्राहि वाक्यमित्यसभवि लक्षणमित्यर्थ। सिद्धान्त्यभिमतसभवस्थमाशङ्कते[2]—**ननु प्रकृष्टेति**। अत्र हि चन्द्रप्रातिपदिकार्थमात्र पृष्टमेतद्वाक्यविषय न पुन. प्रकर्षादिससर्गस्तस्याबुभुत्सितत्वादिति, तदेतद्दूषयति—**मैबमिति**। तदितरव्यावृत्तिर्वा तच्छब्दव्यवहारो वा लक्ष-

---

मे पर्यवसायिता ) लक्षण भी उचित नही, क्योकि यदि सत्य, ज्ञानादि सभी पद एक ही प्रातिपदिकार्थ के बोधक है, तब तो एक ही पद से उसका बोध हो जायगा, दूसरे पदो का प्रयोग ही व्यर्थ है, फिर तो वाक्य-रचना सम्भव न होने से यह लक्षण असम्भव है। यदि कहा जाय कि प्रत्येक पद के दो व्यापार है—एक लक्ष्यार्थ का बोध और दूसरा इतर की व्यावृत्ति ( व्यवच्छेद )' लक्ष्य एक होने पर भी व्यावर्त्य ( व्यवच्छेद्य ) असत्य, जडत्वादि अनेक है, जिनकी व्यावृत्ति एक पद से नही, सभी पदो की सार्थकता है। जैसा कि आनन्दबोधाचार्य ने कहा है—

लक्ष्यार्थभेदाभावेऽपि व्यवच्छेद्यविभेदत।
विज्ञानानन्दपदयोः पर्यायव्यर्थता कुत॥ ( न्या म पृ २६० )

तो यह कहना भी उचित नही, क्योकि सत्यादि पदो से व्यवच्छेद्य असत्यत्वादि की व्यावृत्तियों का प्रतिपादन होता है? या व्यावृत्ति-विशिष्ट वस्तु का? या व्यावृत्त्युपलक्षित वस्तु के स्वरूपमात्र का? प्रथम और द्वितीय पक्ष मे तो इतर प्रतियोगिकत्व-विशिष्ट व्यावृत्ति एव व्यावृत्ति-विशिष्ट वस्तु का प्रतिपादन होने से अखण्डार्थत्व नही बनता। तृतीय पक्ष मे भी इतरव्यावृत्त्युपलक्षितत्व-विशिष्ट वस्तु का प्रतिपादन मानने पर वही पूर्व का ( अखण्डार्थत्वानुपपत्ति ) दोष होता है और लक्ष्य-स्वरूपमात्र प्रतिपादन मानने पर पदान्तर-प्रयोग की व्यर्थता तो दिखाई जा चुकी है।

पञ्चम ( ससर्गाविषयक प्रमा की जनकता ) तो नितान्त असम्भव है, क्योकि ससर्गाविषय प्रमा की जनकता लोक मे कही देखी ही नही जाती। यदि कहा जाय कि 'प्रकृष्टप्रकाश चन्द्र'—आदि लक्षणवाक्यो मे ससर्गाविषयक प्रमा की जनकता देखी गई है ( अर्थात् किसी ने पूछा—गगन की इन चमचमाती ज्योतियो मे चन्द्र कौन है? उत्तर मिला—'प्रकृष्टप्रकाशश्चन्द्र.'—यहाँ चन्द्ररूप प्रातिपदिकार्थमात्र ही प्रश्न एव उत्तर का विषय है, प्रकाश-ससर्गादि विवक्षित नही—द्र. न्या. म.

---

१. एकपदार्थेत्यर्थः। २. सिद्धान्ती शङ्कते इत्यन्वय.।

लक्ष्यस्य सजातीयविजातीयेभ्यो व्यावृत्तत्वेन प्रतिपादनात् तच्छब्दैर्व्यवहर्तव्यत्वेन प्रतिपादनाद्वा लक्षणवाक्यानामपि संसृष्टार्थत्वानतिवृत्ते । ननु सोऽयं देवदत्त इत्यादिषु देवदत्तगतभेदभ्रमव्युदासेन तत्स्वरूपमात्रपर्यवसायित्वमपर्यायशब्दना दृष्टमिति चेत्, मैवम्, तत्रापि परोक्षदेशकालोपलक्षितस्यैतद्देशकालविशिष्टत्वप्रतिपादकतया संसृष्टार्थत्वानतिवृत्ते', तावतैव च भेदभ्रमव्युदासादुभयपदलक्षणाभ्युपगमे गौरवप्रसङ्गाच्च । तदेवं नाखण्डार्थत्वनिरुक्ति. ।

नापि तत्र प्रमाणम् । प्रकृष्टप्रकाश इति वाक्यार्थश्चन्द्रप्रातिपदिकमात्रार्थस्तत्प्रश्नोत्तरार्थत्वात् यन्नैवं तन्नैव यथा वाक्यान्तरार्थ इति व्यतिरेक्यनुमानमस्तीति चेत्, मैवम्, विकल्पासहत्वात् । तथाहि—चन्द्रप्रातिपदिकमात्रार्थोऽन्यत्र प्रसिद्ध ? न वा ? आद्ये तत्र हेतोर्वृत्तावन्वयव्यतिरेकितया केवलव्यतिरेकित्वव्याघात । अवृत्तौ तु सत्यपि सपक्षे तत्र हेतोर-

णार्थ',उभयथापि ससृष्टार्थपरतानतिवृत्ति । तदिह प्रकर्षादिससर्गपरताऽभावेपि भवत्येव विधान्तरेण ससृष्टार्थत्वमित्यर्थ. । उदाहरणान्तरमाङ्कते—**ननु सोऽयं देवदत्त इति** । देवदत्तैक्यस्यैकैकपदादपि सिद्धेर्वाक्यवैयर्थ्यमाशङ्कयोक्तम्—**भेदभ्रमव्युदासेनेति** । यद्यपि लक्षणवाक्यमिद न भवति, तथापि महावाक्याखण्डार्थत्वसभावनाया भवत्येव भूमारितीदमाशङ्कितम् । यदि ह्युभयोरपि लक्षणया देवदत्तमात्रपर्यवसितमिद स्यात्तदाखण्डार्थत्वम्, नत्वेतदस्ति, एतद्देशकालससर्गप्रतिपादनपरत्वात्, तत्पदस्यैव केवल लक्षणाश्रयणात् तावन्मात्रादेव भेदभ्रान्तिनिवृत्तेः, विना कारण लक्षणायामतिप्रसङ्गात्तदेतदाह—**मैवं तत्रापीति** । **गौरवप्रसङ्गादिति** । प्रथम मुख्याथप्रतीतिस्तत्परित्यज्य तत्सबन्धादर्थान्तरप्रतीतिश्चेति बहु कल्पयमित्यर्थः । एतेनार्थादेकत्वप्रतिपादनाद्वार साक्षादेकत्वप्रतिपादनमित्यपि परास्तम्, लक्षणागौरवादेव ।

यदत्र न्यायरत्नदीपावल्यामनुमानमुक्तम्, तदनुवदति—**प्रकृष्टेत्यादिना** । सिद्धसाधनतानिवृत्त्यर्थं मात्रग्रहणम्, ससृष्टपदार्थाना वाक्यार्थत्वेन चन्द्रपदार्थस्यापि तत्स्वीकारात् । तत्प्रश्नस्योत्तर यद्वाक्यं तदर्थत्वादित्यर्थ' । अत्र साध्यश्चन्द्रप्रातिपदिकार्य. क्वचित्प्रसिद्धो न वेति विकल्प्य दूषयति—**तथा हीत्यादिना** । ननु माभूत्केवलव्यतिरेकिता, अन्वयव्यतिरेकिता तु भवतु, किमेतावतेत्यत आह—**अन्व-**

पृ २६१ ) । तो यह कहना सगत न होगा, क्योकि लक्षण के दो प्रयोजन होते है—इतर-व्यावृत्ति और व्यवहार । सजातीय, विजातीय-व्यावृत्तत्व-विशिष्ट या चन्द्रादिशब्द-व्यवहर्तव्यत्व-विशिष्ट का प्रतिपादन होने से लक्षण-वाक्यो से सखण्डार्थत्व निवृत्त नही होता । यदि कहा जाय कि 'सोऽयं देवदत्त'—आदि वाक्यो मे सभी अपर्याय पद, देवदत्त-गत-भेद-भ्रम को हटाकर देवदत्त के स्वरूप मात्र का प्रतिपादन करते है, यहाँ तो अखण्डार्थत्व स्पष्ट है ( द्र. न्या म. पृ २६७ ) । तो यह भी कहना युक्त नही, क्योकि यहाँ भी परोक्षदेशकालोपलक्षित देवदत्त मे एतद्देशकाल-वैशिष्ट्य का प्रतिपादन होने के कारण ससृष्टार्थत्व से पीछा नही छूट सकता । केवल 'तत्' पद की लक्षणा से ही भेद-भ्रम निवृत्त हो जाता है 'तत्' और 'इदम्'—दोनो की लक्षणा मानने मे व्यर्थ का गौरव भी है । इस प्रकार अखण्डार्थत्व का लक्षण नही बन सका ।

प्रमाण भी उसमे कोई नही । यदि कहा जाय कि 'प्रकृष्टप्रकाश—यह वाक्यार्थ चन्द्रप्रातिपदिकार्थरूप है, प्रातिपदिकार्थक प्रश्न के उत्तर भूत वाक्य का अर्थ होने से, जो वैसा नही, वह ऐसा नही, जैसे—वाक्यान्तरार्थ'—यह अनुमान प्रमाण है । तो नही कह सकते, क्योकि चन्द्रप्रातिपदिकार्यमात्र अन्यत्र प्रसिद्ध है ? या नही ? प्रथम कल्प मे जहाँ प्रसिद्ध है, वहाँ यदि हेतु भी रहता है, तब केवलव्यतिरेकिता भग हो जाती है और यदि नही रहता है, तब उस सपक्ष मे न रहने के

१. केवलतत्पपदस्य लक्षणाश्रयणेऽर्थादेकत्वप्रतिपादनम्, उभयपदलक्षणाया तु साक्षादेकत्वप्रतिपादनमितिविवेकः।

वृत्तेरसाधारणानैकान्तिकता। द्वितीये पुनरप्रसिद्धविशेषणतैव। अन्वयव्यतिरेकितायां च यो यत्प्रश्नोत्तरार्थ इति व्याप्तिरभ्युपेया। तथाच त्वत्करे कति वराटका इति प्रश्नस्य पाणौ पञ्च वराटका इति प्रतिवचने व्यभिचार.। न च विमतमखण्डार्थ लक्षणवाक्यत्वात्पृथुबुध्नोदराकार कुम्भ इति वाक्यवदित्यनुमानं मानम्, लक्षणवाक्यानामप्युक्तप्रकारेण ससृष्टार्थपरतया दृष्टान्तस्य साध्यविकलत्वात्। तदेव लक्षणप्रमाणयोरभावान्नाखण्डार्थत्व शब्दानाम्। विवादाध्यासितं पदार्थससर्गप्रतीतिजनक वाक्यत्वाद् गवानयनादिवाक्यवत्। नच जरद्गवादिवाक्ये व्यभिचार, तस्य वाक्याभासत्वात्। आकाङ्क्षासन्निधियोग्यतावन्ति पदानि वाक्य-

येति। कति वराटका इति प्रश्नोत्तरार्थे वराटकसङ्ख्याविशेषे वराटकप्रातिपदिकार्थत्व नास्ति सङ्ख्यासबन्धपरत्वाद्वाक्यस्येत्यर्थ.। वराटक कपर्दक। न च तत्प्रातिपदिकप्रश्नोत्तरार्थत्वोपाधौ व्याप्तिः, क्वचिदपि प्रातिपदिकमात्रनिष्ठवाक्यासप्रतिपत्ते। अन्यथा तस्यैव दृष्टान्ततोपपत्तौ एतत्प्रसाधनवैयर्थ्यापातादिति। अतएव चन्द्रप्रातिपदिकप्रश्नोत्तरार्थत्वोपाधावपि न व्याप्ति', असिद्धेरेव। आनन्दबोधाचार्यानुमानमुद्भाव्य दूषयति—विमतमित्यादिना। विज्ञानादिवाक्यमित्यर्थः। उक्तप्रकारेणेति। इतरव्यावृत्तेर्व्यवहारस्य वा बोधनादित्यर्थ.। स्वपक्षे चानुमानमाह पूर्ववादी—विवादाध्यासितमिति। सत्यज्ञानादिवाक्यमित्यर्थ। प्रतीति. प्रमिति। प्रयोगद्वये च ससृष्टपदार्थस्य पदार्थससर्गस्य वा पक्षीकरणे बाधस्तदितरस्य त्वप्रसिद्धेराश्रयासिद्धिरित्यपि द्रष्टव्यम्। जरद्गवेति।

'जरद्गवः कम्बलपादुकाभ्या द्वारि स्थितो गायति भद्रकाणि।
त ब्राह्मणी पृच्छति पुत्रकामा राजन्रुमाया ल्शुनस्य कोर्घ'॥

इति श्लोकादावित्यर्थ। वाक्याभासतामेव दर्शयति—आकाङ्क्षेति। न तत्र योग्यतास्तीत्यर्थ। ननु ख

कारण हेतु असाधारण अनैकान्तिक हो जाता है। द्वितीय पक्ष मे ( चन्द्रप्रातिपदिकार्थ के अन्यत्र प्रसिद्ध न होने पर ) साध्याप्रसिद्धि दोष आ जाता है। यदि उक्त प्रयोग को केवलव्यतिरेकी न मानकर अन्वयव्यतिरेकी माना जाय, तब 'जो जिस प्रश्न का अर्थ है, वह उस प्रातिपदिक का अर्थ है'—यह व्याप्ति माननी होगी। तब तो 'आपके हाथ मे कितनी कौड़ियाँ है ?' इस प्रश्न के उत्तर ( हाथ मे पाँच कौडियाँ है ) मे व्यभिचार होता है, क्योकि यह उत्तर सख्या-सम्बन्ध-प्रतिपादक है, केवल प्रातिपदिकार्थत्वरूप साध्य न रहने पर भी हेतु रह जाता है। 'विवादास्पद ( विज्ञानानन्दादि वाक्य ) अखण्डार्थक है, लक्षणवाक्य होने से, जैसे—पृथुबुध्नोदराकार कुम्भ.—यह वाक्य' ( द्र. न्या म पृ २६३ )—यह अनुमान भी अखण्डार्थत्व मे प्रमाण नहीं हो सकता, क्योकि लक्षण वाक्य ससृष्टार्थपरक ही होते है—यह गत पृष्ठ पर कहा जा चुका है, अत दृष्टान्त मे साध्य-विकलता है। अत लक्षण और प्रमाण न होने से शब्दो मे अखण्डार्थत्व सिद्ध नही होता। प्रत्युत सखण्डार्थत्व मे पुष्कल प्रमाण मिलते है, जैसे—'विवादास्पद ( विज्ञानानन्दादि वाक्य ) पदार्थ-ससर्ग-प्रतीति के जनक है, वाक्य होने से, जैसे—गामानयादि वाक्य'—यह अनुमान। यदि कहे कि 'वाक्यत्व' हेतु तो असम्बद्धार्थक ( बूढा बैल कम्बल-निर्मित खड़ाऊँओ की जोड़ी पर चढ़ा, द्वार पर मगल-गान करता है, अन्दर से पुत्र की इच्छावाली ब्राह्मणी निकल कर उससे पूछती है—राजन् नमक की खान में लहसुन का भाव क्या है ? इत्यादि ) वाक्यो में भी रहता है, अत व्यभिचारी है। तो ऐसा नही कह सकते, क्योंकि असम्बद्धार्थक पद-समूह, वाक्य नही, वाक्याभास होते है। वाक्याभिज्ञ मनीषियो ने वाक्य का लक्षण किया है—आकाक्षा, सन्निधि,

१. प्रकृष्टप्रकाश इति वाक्यस्याखण्डार्थत्वसाधनेत्यर्थः। २. प्रातिपदिकमात्रार्थनिष्ठत्वासिद्धेरित्यर्थः।

मिति हि वाक्यविद । न च खं छिद्रमित्यादौ व्यभिचार , तस्यापि लक्षणवाक्यत्वेन लक्ष्यस्य सजातीयविजातीयेभ्यो व्यावृत्तिप्रतिपादनपरत्वेनाखण्डार्थत्वाभावात् । न च विपक्षे बाधकतर्काभाव., संसर्गप्रतीत्यजनकत्वे वाक्यत्वाभावप्रसङ्गस्यैव बाधकत्वात् । तदेव नाखण्डार्थता वेदान्तानामिति ।

अत्राभिदध्महे—न तावल्लक्षणासंभवो , यत —

संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् ।
उक्ताखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ।। १९ ।।

अपर्यायशब्दानां ससर्गागोचरप्रमितिजनकत्वमखण्डार्थता । न चेदमसंभवि लक्षणम्, प्रकृष्टप्रकाशादिवाक्येषु तरसद्भावात् । न च लक्षणवाक्यमपि ससृष्टार्थ लक्ष्यस्य सजातीयविजातीयेभ्यो व्यावृत्तिवैशिष्ट्यप्रतिपादनपरत्वात्तत्तच्छब्दैर्व्यवहर्तव्यत्वप्रतिपादनाद्वेति युक्तम् , विकल्पासहत्वात् । किं प्रकृष्टप्रकाशादिवाक्य साक्षादन्यतो व्यावृत्तिं प्रतिपादयति ? किंवा

---

छिद्रमित्यत्र वाक्यत्वमस्ति, नच साध्यमस्ति, अनेकपदार्थाभावेन ससर्गाभावादतो व्यभिचार इति तत्राह—**न च खं छिद्रमितीति** ।

अत्र समाधातुमुपक्रमते—**अत्रेति** । **ससर्गेति** । गिरामपर्यायशब्दाना या संसर्गाविषयत्वे सति सम्यग्धीहेतुता इयमखण्डार्थतोक्ता । अथवा तेषामेव शब्दाना तत्प्रातिपदिकार्थता तदिति ससर्गराहित्येन लक्षितमेकत्व परामृशति—एकप्रातिपदिकार्थतेति लक्षणसग्राहकश्लोकयोजना । अनेन च चतुर्थपञ्चमपक्षौ परिगृहीतौ । श्लोक विवृणोति—**अपर्यायेति** । हस्त कर इत्यादौ व्यभिचारवारणायापर्यायग्रहणम् । इन्द्रियव्यावृत्त्यै शब्दग्रहणम् । गामानयेत्यादिव्यवच्छेदार्थं ससर्गागोचरग्रहणम् । वाक्याभासव्यावृत्त्यर्थं प्रमितिग्रहणम् । **तत्सद्भावात्** । लक्षणसद्भावादित्यर्थः । तत्रापि ससृष्टार्थत्व पूर्ववादिनोक्तमनूद्य त दूषयितुम् विकल्पयति—**किं प्रकृष्टेत्यादिना** । साक्षादित्यभिधानेनेत्यर्थः । **अर्थादिति** । नान्तरीयकत-

---

योग्यता वाले पदो का समूह । जरद्गवादि वाक्यों मे यह लक्षण नही जाता, अत उनमे वाक्यत्व रहता ही नही, कि व्यभिचारी हो । यदि कहा जाय कि "ख छिद्रम्" ( आकाश, अवकाश रूप है ) इस वाक्य मे अनेक पदार्थ न होने से ससर्गविषयत्व नही, किन्तु 'वाक्यत्व' हेतु वहाँ भी है, अत व्यभिचारी है । तो यह भी कहना सगत नही , क्योकि उक्त वाक्य आकाश का लक्षण-वाक्य है, उसमे भी सजातीय, विजातीय की व्यावृत्ति का प्रतिपादन होने से अखण्डार्थता नही, सखण्डार्थत्वरूप साध्य ही रहता है । विपक्ष मे बाधक तर्क का भी अभाव नही , क्योकि 'ससर्ग-प्रतीति की जनकता न मानने पर वाक्यत्व ही न रह सकेगा'—यह विपक्ष-वाधक तर्क है । इस प्रकार वेदान्त-वाक्यो मे अखण्डार्थता नही बनती ।

उत्तर पक्ष—अखण्डार्थ का लक्षण असम्भव नही , क्योकि 'वाक्यो मे जो संसर्गाविषयक सम्यक् ज्ञान की हेतुता है, वही अखण्डार्थता है, अथवा अपर्याय पदो की एकप्रातिपदिकार्थता का नाम अखण्डार्थता है ।' अर्थात् अखण्डार्थत्व का 'अपर्याय शब्दों में ससर्गाविषयक-प्रमा-जनकत्व—यह पञ्चम लक्षण नितान्त निर्दुष्ट है । यह लक्षण असम्भव नही , क्योकि प्रकृष्टप्रकाशादि वाक्यो में देखा जाता है । यह जो कहा था कि लक्षण-वाक्य भी सजातीय, विजातीय की व्यावृत्ति के वैशिष्ट्य का या तत्तत् शब्दो से व्यवहर्त्तव्यत्व का प्रतिपादन करते है, अतः ससृष्टार्थक है । वह कहना युक्त नहीं , क्योकि प्रकृष्टप्रकाशादि वाक्य साक्षात् इतर-व्यावृत्ति के प्रतिपादक है ? या

---

१. अतिव्याप्तिवारणायेत्यर्थः । २ प्रकृष्टप्रकाश इतिवाक्येऽपीत्यर्थः ।

स्वरूपप्रतिपादनेनार्थात् ? नाद्य , व्यावृत्तिप्रतिपादकशब्दाभावात् । नापि द्वितीय॰ , नान्तरीयकतया सिध्यतोऽर्थस्य शब्दार्थत्वाभावात्, 'यश्चार्थादर्थो न स चोदनार्थ' इति न्यायात् । अन्यथा गामानयेत्यादिवाक्येष्वश्वाद्यानयनव्यावृत्तरपि वाक्यार्थत्वप्रसङ्गात् । नन्वय चन्द्र इति व्यवहर्तव्य , प्रकृष्टत्वे सति प्रकाशत्वात्, यन्नैवं न तदेव यथा नक्षत्रादि, न तथा चायम् , तस्मान्न तथेति केवलव्यतिरेकितया लक्षणवाक्य पर्यवस्यति, तथा च कथमखण्डार्थता ? चन्द्र इति व्यवहर्तव्यतालक्षणधर्मवैशिष्ट्यप्रतिपादनपरत्वादिति चेत्, मैवम् , 'चन्द्रतया व्यवहर्तव्य , इति कि चन्द्ररूपार्थविशेषितो व्यवहार कर्तव्य ? उत चन्द्रशब्दमात्रविशेषितो व्यवहार ? आद्ये चन्द्रविशिष्टं व्यवहारं यदि नाज्ञासीत्तदा लक्षणवाक्यादपि विषयविशेषितकर्तव्यतां तस्य कथमधिगच्छेत् ? नह्यविदिताग्निरनुमानादप्यग्निसबन्धमधिगमयितु शक्य । अथाधिगतवान् तदा लक्षणवाक्यरूपमनुमान निष्प्रयोजनम् , ज्ञातस्यैव ज्ञाप-

---

येत्यर्थः । यश्चार्थाच्छ्रुतार्थनान्तरीयकतया लभ्यते, न च स चोदनार्थो वेदार्थ इति शबरस्वामिवाक्यार्थः । न चाश्वाद्यानयनव्यावृत्तिरपि तद्वाक्यार्थः, वाक्यभेदप्रसङ्गादिति भावः । ननु माभूद्व्यावृत्तिप्रतिपादनपरत्वम् व्यवहारसाधनमेव लक्षणप्रयोजन ब्रूम॰ , तावताप्यखण्डार्थता खण्डितैवेति शङ्कते—**नन्वयमित्यादिना** । चन्द्ररूपार्थविशेषितव्यवहारकर्तव्यतासाधने दोषमाह—**आद्य इति** । यस्य कर्तव्यतामात्र साध्यते स कि चन्द्रविशेषितो व्यवहारः प्रतिवादिनोऽज्ञातः ? ज्ञातो वा ? यद्यज्ञातस्तदाऽप्रसिद्धविशेषणत्वम् । अविदितदहन प्रतीव दहनानुमानप्रवृत्ताविल्याह—**तदा लक्षणवाक्यादपीति** । अपिना स्वरूवसाधकत्व लक्षणस्य सूच्यते । द्वितीय दूषयति—**अथेति** । चन्द्रव्यवहारस्य कर्तव्यतामात्रमेव तावत्साध्यते, न पुनरग्निसबन्ध इवान्यत्र सिद्धस्यान्यत्र सबन्ध॰ , केवलव्यतिरेकिताभङ्गात् तच्चेत्क्वचित्सिद्ध सिद्ध-

---

**स्वरूप-प्रतिपादन के द्वारा ? प्रथम पक्ष सम्भव नही , क्योकि उक्त वाक्य मे व्यावृत्ति-वाचक कोई पद ही नही । द्वितीय पक्ष भी युक्त नही , क्योकि स्वरूप-प्रतिपादन से जो अर्थत सिद्ध होने वाली व्यावृत्ति है, उसे शब्दार्थ नही माना जाता । शबर स्वामी ने कहा है—जो अर्थ अर्थत प्रतीत होता है, वह शब्द का शक्यार्थ नही कहलाता । अन्यथा 'गामानय' कहने पर अर्थ-सिद्ध अश्वानयन की व्यावृत्तिको भी 'गामानय'–इस वाक्य का अर्थ मानना पडेगा । यहाँ यह शङ्का हो सकती है कि 'यह 'चन्द्र '—इस प्रकार व्यवहर्तव्य है, प्रकृष्ट प्रकाश-युक्त होने से, जो वैसा (प्रकृष्ट प्रकाश-युक्त) नही, होता वह ऐसा 'चन्द्र' शब्द से व्यहर्तव्य नही होता, जैसे नक्षत्रादि, यह (चन्द्र) वैसा ( प्रकृष्ट प्रकाश-रहित ) नही, अत. ऐसा ( 'चन्द्र' शब्द से अव्यवहर्तव्य ) भी नही,—इस प्रकार यहाँ व्यतिरेकी हेतु के रूप में लक्षण आ गया है, अत॰ अखण्डार्थता कैसे ? जब कि 'यह चन्द्र है'—इस प्रकार की व्यवहर्तव्यता के वैशिष्ट्य का प्रतिपादक हो रहा है । किन्तु यह शङ्का उचित नही , क्योकि यहाँ 'चन्द्र –इस प्रकार व्यवहर्तव्य है'—इस साध्य का क्या अर्थ है ? क्या 'चन्द्र रूप अर्थ-विशेषित व्यवहार करना चाहिए'—यह ? अथवा 'चन्द्र' शब्द मात्र-विशेषित व्यवहार ? प्रथम पक्ष में चन्द्र-विशिष्ट-व्यवहार यदि कोई नही जानता, तब लक्षण-वाक्य से भी चन्द्र-विशिष्ट-व्यवहार मे कर्तव्यता का निश्चय वह कैसे कर सकेगा ? ( अर्थात् साध्य का कोई भी अश अप्रसिद्ध हो जाने से पूरा साध्य अप्रसिद्ध हो जाया करता है । प्रकृत मे साध्य है—'चन्द्र-विशिष्ट-व्यवहार की कर्तव्यता' । चन्द्र-विशिष्ट-व्यवहार अप्रसिद्ध हो जाने से पूरा साध्य अप्रसिद्ध हो गया ) जैसे कि जो व्यक्ति अग्नि को नही जानता, उसे अनुमान के द्वारा भी अग्नि सम्बन्ध का निश्चय नही कराया जा सकता । जो चन्द्र-विशिष्ट-व्यवहार जानता है उसके लिए लक्षण-वाक्य रूप अनुमान करना पिष्ट-पेषण**

---

१. व्यवहारकर्तव्यत्वम् ।

नात्। अथ सामान्यतो जानात्यस्ति कश्चिद्विषयश्चन्द्रव्यवहारस्येति, विशेषतस्तु न जानातीत्युच्यते, तथापि किं सामान्यतो व्यवहारस्य निमित्तवत्ता जानाति? किं वा व्यवहारविशेषस्य? आद्ये प्रकृतानुपयोग', व्यवहारविशेषस्य विचार्यमाणत्वात्। द्वितीयेऽपि चन्द्रलक्षणार्थविशेषापरिज्ञाने तद्विशिष्टव्यवहार एव विज्ञातुमशक्य । ज्ञाते च लक्षणवाक्यवैयर्थ्यमित्युक्तम्। नापि द्वितीय , लक्षण विनापि गवादिशब्दानामिव वृद्धव्यवहारादेव वाच्यवाचकसंबन्धग्रहोपपत्ते । पूर्व प्रतिपन्न एव वाच्यवाचकभावो लक्षणवाक्येन स्मार्यत इति चेत्, न; अवगतसंबन्धस्य तत्र तच्छब्दादेव सबन्धस्मरणोपपत्तौ लक्षणाभिधानवैयर्थ्यात्। अवगतसबन्धस्यापि शब्दस्य लक्षणवाक्यादेव सबन्धस्मरणनियमे, लक्षणवाक्य-

---

मनुमानसाध्यमित्यर्थ. । ज्ञाताज्ञातविकल्पोक्तदोष परिहरन्नाशङ्कते—**अथ सामान्यत इति** । अयमर्थः—यद्यपि न स्थलान्तरे सिद्धि केवलव्यतिरेकित्वात्, तथापि नाप्रसिद्धत्व सामान्यत सिद्धत्वादिति तदेतद्दूषयति—**तथापीति** । कीदृशमिद सामान्येन ज्ञानम्? किं वक्ष्यमाणदिशा चन्द्रशब्दविशेषितत्वासिद्धेश्चन्द्रलक्षणार्थाज्ञानाच्चाश्वकर्णादिर्व्यवहारमात्रस्य नाम चन्द्रव्यवहार इति ततो व्यवहारमात्र निमित्तवदिति? किंवा चन्द्रव्यवहारो निमित्तमात्रवानिति? आद्ये गवादिव्यवहारमात्रस्य निमित्तवत्त्वज्ञान न चन्द्रव्यवहारकर्तव्यतानुमानस्याप्रसिद्धविशेषणता निवारयति, न ह्यग्निमत्त्वप्रसिद्धिरनित्यत्वानुमाने ता वारयितुमलमित्यभिप्रेत्याह—**आद्ये प्रकृतानुपयोग इति** । द्वितीये चन्द्रविशेषितव्यवहारः किं चन्द्रलक्षणार्थविशेषितो व्यवहारः? उत चन्द्रशब्दविशेषित.? द्वितीयस्तु प्राथमिकद्वितीयविकल्पसमानजीवनः । प्रथमेऽपि किं चन्द्रोऽविदित? विदितो वा? आद्ये प्राह—**द्वितीयेऽपि चन्द्रेति** । द्वितीये प्राह—**ज्ञाते चेति** । चन्द्रशब्दविशेषितो व्यवहारः साध्यत इति द्वितीय पक्ष दूषयति—**नापि द्वितीय इति** । अत्र चन्द्रशब्दः प्रयोक्तव्य इति वाच्यवाचकसङ्गतिग्रहो हि यदा लक्षणप्रयोजन तदा लक्षण व्यर्थमन्तरेणापि लक्षण गवादिपदानामिव सङ्गतिग्रहसंभवादित्यर्थ. । प्रथमतोऽवगतस्यापि शब्दसबन्धस्य लक्षणवाक्यात्स्मरणसाधनमप्यनर्थकम्, गवादिपदानामिवान्तरेणापि लक्षण स्मरणसभवादित्युक्तम्, इदानी न केवलमानर्थक्यमपि त्वनवस्थालक्षणानर्थोऽपि स्यादित्याह—**अवगतसंबन्धस्यापीति** । तत्तद्वाक्यस्थपदानामपि तैस्तैरथै सबन्धो लक्षणैरेव स्मारयितव्यः, एवं तत्तत्स्मारकवाक्यस्थपदानामपीति न कश्चिदपि स्या-

---

**है। यदि कहा जाय कि सामान्यरूप से 'चन्द्र-व्यवहार का कोई विषय है'—इतना जानता है, किन्तु विशेषरूप से नही जानता। इसलिए अनुमान की आवश्यकता है। तथापि प्रश्न उठता है कि लक्षण निमित्त होता है और व्यवहार निमित्तवान—यहाँ क्या सामान्य व्यवहार मे निमित्तवत्ता का ज्ञान है? या विशेष व्यवहार मे? सामान्य व्यवहार का तो प्रकृत मे उपयोग नही, क्योकि व्यवहारविशेष ही विचार्यमाण है। द्वितीय पक्ष मे चन्द्ररूप अर्थ विशेष का ज्ञान न होने पर चन्द्र-विशिष्ट-व्यवहार नही जाना जा सकता। यदि चन्द्ररूप अर्थविशेष का ज्ञान है, फिर लक्षण-वाक्य व्यर्थ हो जाता है। द्वितीय ('चन्द्र' शब्द-विशेषित व्यवहार की सिद्धि की जा रही है) पक्ष भी उचित नही, क्योकि लक्षण के बिना ही गवादि शब्दो के समान वृद्ध-व्यवहार से ही वाच्य-वाचक-ग्रह बन सकता है। यदि कहा जाय कि पूर्व-निश्चित वाच्य-वाचक-भाव का ही लक्षण-वाक्य से स्मरण दिलाया जाता है, तब तो जिसे पहले से शक्ति-ग्रह है, उसे केवल शब्द सुनने से ही स्मरण हो सकता है, लक्षणाभिधान की क्या आवश्यकता? यदि ऐसा नियम लागू किया जाय कि गृहीतशक्तिक शब्द के सम्बन्ध का स्मरण लक्षण-वाक्य से ही करना चाहिए, तब लक्षण-वाक्यस्थ पदो के सम्बन्ध का स्मरण दिलाने के लिए लक्षणान्तर और उस लक्षण-वाक्य के पदो का सम्बन्ध-**

स्थपदानामपि प्रत्येकं लक्षणवाक्यै' संबन्धस्मरणप्रसङ्गादनवस्थादुरवस्था स्यात्। तस्माद् गवानयनादिवाक्यवदाप्तोपदेशतयैव लक्षणवाक्यमवबोधकम्। तच्च सर्वं स्वरूपमात्रे पर्यवस्यति, अर्थात्पुनरन्यतो व्यावृत्ति फलतीति युक्तम्।

नन्वेवमपि नैतल्लक्षणम्, अप्राप्तयोः प्राप्ति संयोग., नित्यः संबन्ध समवाय इत्येवमादिसबन्धप्रतिपादकलक्षणवाक्येष्वव्याप्ते । तेषा संसर्गगोचरप्रमितिजनकत्वादितिचेत्, मैवम्, तेषामपि स्वस्वपदस्मारितपदार्थानामन्योन्यससर्गागोचरप्रमितिजनकत्वात्। संसर्गगोचरप्रमितिजनकत्वशब्देन चास्यैवार्थस्य विवक्षितत्वात्। नाप्यतिव्याप्ति , संसर्गप्रमितिजनकेपु गवानयनादिवाक्येषु लक्षणाभावात्।

यद्वा अपर्यायशब्दानामेकप्रातिपदिकाथमात्रपर्यवसायित्वमखण्डार्थता। न चैव पदान्तर-

---

दित्यर्थः। तत्किं लक्षणमेव तेषु ग्रन्थेषु न प्रयोक्तव्यम्? तथाच गत सत्य ज्ञानमनन्तमिति ब्रह्मलक्षणेन तत्प्रयुक्तजन्माद्यधिकरणेनापीत्य आह—**तस्मादिति**। न लक्षणमनुमानतयोपयुज्यते, अपि तु शब्दप्रमाणतयेत्यर्थः। ननु भवतु लक्षण शब्दतयोपयोगि किमायातमखण्डार्थतायामिति तत्राह—**तच्च सर्वमिति**। उक्तमेतत्पुरस्तादेव स्वरूपमात्र शब्देन बोध्यते इतरव्यावृत्तिस्त्वार्थिकी न चार्थिकः शब्दार्थ इति।

यद्यपीद सभवति, तथाप्यव्यापकमिद लक्षणम्, सयोगसमवायात्मकसबन्धस्य यल्लक्षणवाक्यं तस्य लक्ष्यसंसर्गविषयत्वेन ससर्गागोचरत्वलक्षणाशाभावादिति शङ्कते—**नन्वेवमपीति**। ससर्गागोचरप्रमितिजनकत्वमिति कोऽर्थ? यद्बोधयति तदीयमसर्गागोचरत्वे तत्प्रमितिजनकत्वमिति, अस्ति चैतदत्रापि, नहि सयोगस्य समवायस्य वा तत्तद्विशेषणससर्गबोधपरमिद वाक्यं तस्याबुभुत्सितत्वादित्यभिप्रेत्य परिहरति—**मैवं तेषामपीति**। न च विष भुङ्क्ष्वेत्यादिसर्वलक्षणावाक्येष्वतिव्याप्ति , प्रतिपिपादयिषितससर्गगोचरत्वात् तदभावस्येह विवक्षितत्वात्।

यद्वा तत्प्रातिपदिकार्थतेति श्लोकावयव विवृणोति—**यद्वा अपर्यायेत्यादिना**। यद्यप्येकपदलक्ष्यमेव

---

स्मरण और-और लक्षणो से—इस प्रकार अनवस्था हो जायगी। अत यह मानना होगा कि लक्षण का उपयोग उक्त अनुमान के रूप मे नही, अपितु आप्तोपदेश ( शब्द-प्रमाण ) के रूप मे अपने लक्ष्य का बोधक है। शब्द प्रमाण तो लक्ष्य के स्वरूप मात्र का परिचायक होता है और इतर-व्यावृत्ति तो अर्थत फलित होती है।

यदि शङ्का हो कि फिर भी यह लक्षण ( अपर्याय शब्दो मे ससर्गाविषयक प्रमा की जनकता ) अव्याप्त है—"अप्राप्तयो प्राप्ति सयोग." ( अप्राप्तपदार्थो की प्राप्ति का नाम सयोग है ), "नित्य सम्बन्ध समवाय" ( नित्य सम्बन्ध का नाम समवाय है )—आदि—सम्बन्ध-प्रतिपादक लक्षण-वाक्यों मे संसर्गाविषयक प्रमा-जनकता नही, अपितु ससर्गविषयक प्रमा-जनकता ही है। तो यह शङ्का उचित नही, क्योकि उक्त लक्षण-वाक्यो मे भी तत्तत् पदो से स्मारित पदार्थों का जो ससर्ग, तादृशससर्गाविषयक प्रमा की जनकता है ही। संसर्गाविषयकप्रमाजनकत्व का यही अर्थ विवक्षित है। ( अर्थात् 'ससर्गाविषयक प्रमा-जनकत्व'—यहाँ पर 'ससर्ग' पद से पदार्थ रूप संसर्ग नही अपितु पदार्थों का परस्पर सम्बन्ध विवक्षित है, सयोगादि के लक्षण-वाक्यो मे सयोगादि, पदार्थरूप से प्रतीयमान है, न कि किन्ही दो पदार्थों के सम्बन्ध के रूप मे )। इस लक्षण की अतिव्याप्ति भी कहीं नही, क्योकि संसर्गविषयक प्रमा-जनक 'गामानय'—आदि वाक्यो मे लक्षण नही जाता।

अथवा 'अपर्याय की एक प्रातिपदिकार्थ मात्र में पर्यवसायिता'—यह अखण्डार्थता का लक्षण है। यह जो कहा था कि जब एक पद से वही प्रातिपदिकार्थ कह दिया गया, तब पदान्तर-प्रयोग

वैयर्थ्यम्, व्यावर्त्यभेदादर्थवत्त्वोपपत्तेः। तथाहि—लोके प्रकृष्टप्रकाशश्चन्द्र इत्यत्र प्रकृष्टपदेनाप्रकृष्टखद्योतादेः प्रकाशपदेनाप्रकाशात्मप्रकृष्टसतमसादेश्च व्यवच्छेदेन बुभुत्सितश्चन्द्रप्रातिपदिकमात्रार्थः प्रतिपाद्यते, अन्यथा वक्तुरबुभुत्सितमर्थं प्रतिपादयतोऽनवधेयवचनत्वप्रसङ्गात्। न च व्यावृत्तिपरत्वे व्यावृत्तिमत्परत्वे वा संसृष्टार्थत्वम्, स्वरूपमात्रपरत्वे च पदान्तरवैयर्थ्यमिति वाच्यम्, व्यावृत्तिद्वारा पदानां स्वरूपमात्रपर्यवसायित्वाङ्गीकारात्, व्यावर्त्यभेदेनावैयर्थ्याच्च। तथा वेदेऽपि 'सत्यं ज्ञानमनन्तं ब्रह्म'इत्यादौ सत्यज्ञानानन्दानन्तात्मशब्दा अनृतजडदुःखान्तवत्त्वानात्मत्वभ्रान्तिनिवृत्तिद्वारा लक्ष्ये ब्रह्मणि पर्यवस्यन्ति। न चैवमनेकाकारविज्ञानजनकत्वात्पदानां लक्ष्यस्य ब्रह्मणोऽनेकाकारत्वप्रसङ्गः, लक्षणासमये[1]

पदान्तरपर्यवसानभूमिस्तथापि नैकरूपव्यावर्त्यमेव पदान्तरव्यावर्त्यं जाड्यानृतादीनां विभिन्नत्वात्, ततो न संसृष्टार्थतावैयर्थ्ये इत्युक्तम्। एतदेव लौकिकोदाहरणेन दर्शयति—**तथा हीत्यादिना**। सतमसं विष्वक्तमः। अत्र च व्यवच्छेदेनेति व्यवच्छेदानां द्वारतोक्ता। **प्रतिपाद्यत इति**। तात्पर्यविषयत्वं तेन न शून्यनिष्ठतापत्तिः। ननु किमिति स्वरूपमात्रपरताश्रयणं न पुनर्यथाश्रुतप्रकर्षादिसंसर्गपरत्वमिति तत्राह—**अन्यथेति**। यदि हि स्वरूपमात्रे पृष्टे गुणादिसंसर्गं प्रतिपादयेत्तर्ह्यश्रद्धेयवचनः स्यादित्यर्थः। यत्तु पूर्वपक्षिणा त्रेधा विकल्प्य दूषणद्वयमुक्तं तन्निराकरोति—**न च व्यावृत्तीति**। ननूक्तं स्वरूपमात्रपरत्वे पदान्तरवैयर्थ्यमिति तत्राह—**व्यावर्त्यभेदेनेति**। तदेवं लौकिकेषूदाहृत्य विवक्षितसत्यादिवाक्येषु लक्षणं वर्तयति—**तथा वेदेऽपीति**। ननु स्ववाच्यप्रक्षेपेण वा पदानां विरोधिव्यावर्तनम्? अप्रक्षेपेण वा? न तावद् द्वितीयः। विरोध्यदर्शनेनानृतादिव्यावृत्तेरशक्यज्ञानत्वात्। प्रथमे तु विभिन्नैर्ज्ञानत्वादिभिराकारैर्ब्रह्मणोऽप्यनेकाकारत्वमिति तत्राह—**न चैवमनेकाकारेति**। लक्षणासमय इति सामीप्यात् लक्षणाप्राक्समयो विवक्ष्यते। न हि तत्तदाकाराः प्रतिपिपादयिषिता इति प्रतिपाद्यन्ते किन्तु कथं नु नामानृताद्यारोपरहितब्रह्मप्रतिपत्तिरिति? तद्यावदनृतादिव्यावृत्तिस्तावदेव सत्यत्वाद्याकाराणां स्थितिः, निवृत्तेषु तु तेषु एते एवाकारा अनृता जायन्ते, कः खलु विशेषोऽनृतादिभिराकाराणामद्वैतविरोधे? तस्मादेकानन्दव्यक्तिपरमेव सत्यादिवाक्यं न सत्यत्वादिपरं नाप्यनृतादिव्यावृत्तिपरमित्यर्थः। विधिमुखेषु वाक्येषु उक्तन्यायं निषेध-

व्यर्थ है। वह कहना युक्त नही, क्योंकि व्यावर्त्य ( व्यवच्छेद्य ) पदार्थ भिन्न-भिन्न है, उनकी व्यावृत्ति के लिए सभी पदो की आवश्यकता है, जैसे कि लोक मे "प्रकृष्टप्रकाश. चन्द्र"—यहाँ 'प्रकृष्ट' पद से अप्रकृष्ट खद्योतादि की, 'प्रकाश' पद से अप्रकाशरूप प्रकृष्ट अन्धकारादि की व्यावृत्ति करके जिज्ञासित चन्द्रप्रातिपदिकार्थमात्र का प्रतिपादन किया जाता है, नही तो अजिज्ञासितार्थ का प्रतिपादन पागलपन समझा जायगा ( द्र न्या म पृ २६२ )। यह जो कहा था कि व्यावृति या व्यावत्तिमत् पदार्थ का प्रतिपादन मानने से ससृष्टार्थत्व की आपत्ति होगी। वह कहना भी ठीक नही, क्योंकि व्यावृत्ति के द्वारा लक्ष्य-स्वरूप की परिचायकता में पदो का तात्पर्य माना जाता है। व्यावर्त्य ( व्यवच्छेद्य ) का भेद होने से सभी पदो का सार्थक्य तो दिखाया ही जा चुका है। वैसे ही वेद मे "सत्य ज्ञानमनन्तम्"—आदि वाक्यो मे सत्य, ज्ञान, आनन्द और अनन्त आदि पद क्रमश असत्य, जड, दु ख आदि की व्यावृत्ति-द्वारा लक्ष्य ब्रह्म के समर्पक है। यदि सन्देह हो कि इस प्रकार तो सभी पद, अनेकाकार विज्ञान के जनक होते हैं, अतः लक्ष्य ब्रह्म में अनेकाकारता आ जायगी [ आशय यह है कि सत्यादि पद ब्रह्म मे सत्यत्वादि बताकर ही असत्यत्वादि की व्यावृति करेंगे, अत एक ही ब्रह्म मे सत्यत्व, ज्ञानत्व, आनन्दत्वादि अनेक आकार आ जाते है ]। तो यह

१ लक्षणासमये इत्यस्य लक्ष्ये ब्रह्ममात्रे तात्पर्येण पर्यवसानादित्यन्वयः। एतेन सामीप्यात्प्राक्कालाविवक्षायामपि न क्षतिः।

भिन्नाकारविज्ञानजनकानामपि पदाना तत्तद्भ्रान्तिनिवृत्तिमात्रप्रयोजनकतया लक्ष्ये ब्रह्ममात्रे तात्पर्यंण पर्यवसानात्। एव च तत्तच्छब्दजन्यविज्ञानाना तत्तद्भिन्नाकारसमर्पिणां नान्तरीयकतया तत्तद्विरोध्याकारनिवर्तकत्वाद्वाक्यस्याखण्डार्थत्वसिद्धि । उक्तं चैतत्सुरेश्वराचार्यैं —

"प्रतिपद्य पदार्थ हि विरोधात्तद्विरोधिन ।
पश्चादभाव जानाति वध्यघातकवत्पदात् ॥१॥
शब्दात्प्रतीयते तावत्सङ्गतिर्धर्मधर्मिणो ।
मानान्तरादपोहस्तु न शाब्दस्तेन स स्मृत ॥२॥
तत्रानन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम् ।
स्वार्थार्पणप्रणाड्या च परिशिष्टौ विशेषणम् ॥३॥
तद्विरोध्यर्थसत्याग सामर्थ्यात्स्यान्न शब्दत. ।" इति ।

मुखेन प्रतिपादकेष्वप्यतिदिशति—एव च तत्तच्छब्दजन्येति। तदतद्विराधिनिवृत्त्यर्थमेव तत्तदाकारविधान किञ्चिदुक्तम् , तत्तदाकारविरोधिनिवृत्तेश्चाशब्दत्वमुक्तम् , तदाचार्यवचनेन द्रढयति—उक्त चेतदिति। तैत्तिरायके वार्तिके सत्य ज्ञानमनन्तमिति वाक्यव्याख्यानसमये इति शेष. । पदात्सत्याद पदार्थ सत्यत्वादि ब्रह्मणि प्रतिपद्य ज्ञात्वा तेन विरोधाद्धेतोर्विरोधिनोऽनृतादेरभाव जानाति[1]। तत्र निदर्शनम्—वध्यघातकवदिति । यथा खल्वाखुभूषिता भूमि दृष्ट्वाऽर्थान्मार्जाराभावोऽवगम्यते एवमिति । तत्किमुभयमपि शाब्दम् ? आहोस्विदन्यतरद् ? इति तत्राह—शब्दादिति। प्रथम धर्मधर्मिणो सत्यत्वादेः ब्रह्मणश्च सगति शब्दात्प्रतीयते तावताचास्यास्तात्पर्याविषयत्व[2] द्योत्यते, अपोहस्तु विरोधिव्यावृत्तिर्मानान्तरादनुपपत्तिलक्षणात्[3] ज्ञायते तेन स अपोहस्तु न शाब्द । तत्र कि त्रयाणामविशिष्टोय न्याय इति ? नेति ? वैषम्यमाह—तत्रानन्त इति। तत्र तेषु मध्येऽनन्त अनन्तशब्दार्थ' अन्तवद्वस्तुव्यावृत्त्यैव विशेषण व्यावर्तक साक्षादेव ब्रह्मणो व्यावर्तकमित्यर्थ । परिशिष्टौ तु सत्यज्ञानशब्दौ स्वार्थसमर्पणप्रणाड्या व्यवधानेन विशेषणम् । न हि यथाऽनन्तमित्युक्तेऽन्ताभाव साक्षात्प्रतीयते तथा सत्य ज्ञानमित्यत्रानृताद्यभाव', अपि तु स्वार्थविधानव्यवधानेनेत्यर्थ । तर्हि तयोर्विरोधिव्यवच्छेदः किनिबन्धन ? इति तत्राह— तद्विरोधीति । एतच्च मानान्तरा-

सन्देह नही करना चाहिए , क्योकि यद्यपि सत्यादि पद सत्यत्वाद्यनेकाकार का विज्ञान पैदा करते है, तथापि इससे सत्यादि पदो का ब्रह्म मे असत्यत्वादि की भ्रान्ति निवृत्त करनामात्र प्रयोजन है, लक्षणा के समय शुद्ध ब्रह्म मे ही उनका तात्पर्य होता है, अनेकाकार ब्रह्म मे नहीं। इस प्रकार सत्यत्वादि विभिन्नाकार-समर्पक, सत्यादि पद-जन्य विज्ञान, अर्थात् असत्यत्वादि विरोधी आकार के निवर्तक होते है। अत वेदान्तवाक्यो मे अखण्डार्थत्व सिद्ध हो जाता है। ऐसा ही आचार्यवर्य सुरेश्वराचार्य ने तैत्तिरीय-वार्तिक मे कहा है—"सत्यादि पदो से सत्यत्वादि रूप अर्थ को ब्रह्म मे जानकर, पश्चात् सत्यादि रूप विरोधी तत्त्वो के सद्भाव से असत्यत्वादि विरोधी पदार्थो के अभाव का निश्चय वैसे ही होता है, जैसे कि वध्य ( मूषकादि ) को देखकर वहाँ घातक ( बिल्ली ) के अभाव का निश्चय होता है ॥१॥ सत्यादि शब्दो से सत्यत्वादि धर्म और ब्रह्मरूप धर्मी का सङ्गति ग्रहण होता है। पश्चात् अर्थापत्तिरूप प्रमाणान्तर से असत्यत्वादि विरोधी धर्मो का अपोह ( निवृत्ति ) होता है , इस लिए इतर निवृत्ति को शाब्द ( शब्द-जन्य प्रतीति का विषय ) नही माना गया है ॥२॥ सत्य, ज्ञान और अनन्त—इन तीन पदो मे 'अनन्त' पद साक्षात् अन्तवत् ( सान्त ) वस्तु की व्यावृत्ति का प्रतिपादक है और शेष सत्य एवं ज्ञान शब्द प्रथमत अपना-अपना सत्यत्वादिरूप अर्थ बताकर अर्थत असत्यत्वादि के व्यावर्तक है ॥३॥ असत्यत्वादि विरोधी पदार्थों की निवृत्ति अर्थत होती है, शब्दत नही।"

१. इतरव्यावृत्तिर्ब्रह्मस्वरूप चेत्यर्थ. । २ अनृतादिव्यावृत्ते. । ३ यदि सत्यादिपदादितरव्यावृत्तिर्नावबुध्येत तदा सत्यादिपदमनर्थकं स्यादित्यनुपपत्त्याकृति' । ४ सत्यज्ञानयो ।

न च गुणगुण्यादिभावप्रतिपादनेऽपि तत्तद्विरोध्याकारनिवृत्त्युपपत्तेः कथमखण्डैकरसत्त्वसिद्धिरिति वाच्यम्, ब्रह्मशब्दार्थमात्रस्यैव बुभुत्सितत्वात्। सर्वतोऽनवच्छिन्नवस्तुप्रतिपादनपरब्रह्मानन्तशब्दाभ्यां विरोधाच्च, एकधैवानुद्रष्टव्यमेकमेवाद्वितीयमित्याद्येकरसत्वप्रतिपादकवाक्यविरोधाच्च, नेह नानास्ति किंचनेत्यनेकरसत्वप्रतिषेधाच्च।

न चाप्रसिद्धत्वाद्ब्रह्मणो लक्ष्यत्वासंभवः, प्रत्यगात्मतया स्वतः सामान्येन प्रसिद्धत्वात्। न च तथात्वे लक्षणवैयर्थ्यम्, लक्षणस्य विशेषाकारसमर्पणार्थत्वात्। अन्यथा 'गन्धवती पृथिवी' 'नित्यज्ञानाधार ईश्वर' इत्यादिलक्षणानामपि लक्ष्यस्याप्रसिद्धत्वप्रसिद्धत्वयोर्वैयर्थ्यापातात्। एतेन 'सोऽयं देवदत्तः' इत्यत्रापि तत्कालोपलक्षितस्यैतत्कालवैशिष्ट्यं प्रतिपाद्यत इत्यपास्तम् ।

दपोहस्तु इत्यस्यैव प्रपञ्चः। ननु विरोध्याकारनिवृत्तिरखण्डार्थतामन्तरेण संसर्गपरत्वेऽपि सेत्स्यति किमर्थमखण्डार्थताऽऽग्रहः ? इति तत्राह—न चेति। लौकिकवाक्येषु संसर्गपरतायामुत्कृष्टबोधकप्रकृतेऽप्याह—ब्रह्मशब्देति। 'ब्रह्मविदाप्नोति पर'मिति श्रुतस्य ब्रह्ममात्रस्य बुभुत्सितत्वादित्यर्थः। न केवलमबुभुत्सितार्थपरत्वं बुभुत्सितार्थपरानन्तादिपदविरोधश्चेत्याह—सर्वत इति। साक्षादेवैकार्थप्रतिपादकानन्ताकारनिवारकश्रुत्यन्तरविरोधश्चेत्याह—एकधैवेत्यादिना।

ननु प्रसिद्धमेव लक्ष्यं नत्वप्रसिद्धं गगनारविन्दादेर्लक्ष्यत्वादर्शनात्, अप्रसिद्धं च ब्रह्म सर्वप्रमाणागम्यत्वादिति तत्राह—न चेति। अथवा लक्षणलक्ष्यत्वमत्राक्षिप्य समर्थ्यते। स्वप्रकाशस्य प्रत्यगात्मतया प्रसिद्धिरस्तीति संभवत्येव लक्ष्यत्वमित्यर्थः। न केवलमस्माकमेवेयं रीतिः, अपितु सर्वेषामेव लक्षणवादिनामित्याह—अन्यथेति। घटादिषु सामान्येन प्रसिद्धस्य पृथिवीव्यवहारस्येतरेभ्यो भेदस्य च परमाण्वादिभूगोलकान्तसमुदायेऽप्रसिद्धस्य लक्षणेन साधनमिति पराङ्गीकारादित्यर्थः। यत्तु 'सोऽयं देवदत्तः' इत्यत्राखण्डार्थताऽभावाय पूर्वपक्षिणोक्तम् तत्राप्युक्तन्यायमतिदिशति—एतेनेति। एतेनेत्यस्यैव विवरणम्—

यदि कहा जाय कि ज्ञानादि पदों का 'ज्ञान गुणवाला ब्रह्म है'—ऐसा अर्थ करने पर भी विरोधी अज्ञानादि की निवृत्ति सिद्ध हो जाती है, उसके लिए ब्रह्म में अखण्डैकरसत्व मानने की क्या आवश्यकता ? तो ऐसा नहीं कह सकते, क्योंकि उपक्रम में 'ब्रह्म' शब्द सुनकर केवल ब्रह्मशब्दार्थ की जिज्ञासा होती है, उसे निवृत्त करने के लिए "सत्यं ज्ञानमनन्तं ब्रह्म" कहा गया है। अतः वहाँ गुणगुणिभाव विवक्षित ही नहीं, कैसे उसका प्रतिपादन होगा ? दूसरी बात यह भी है कि गुणगुणिभाव के प्रतिपादन में सर्वविच्छेद-रहित ब्रह्म के बोधक अनन्त और ब्रह्म शब्दों से विरोध है, एवम् "एकधैवानुद्रष्टव्यम्" ( बृ ४।४।२० ), 'एकमेवाद्वितीयम्' ( छा ६।२।१ )—आदि एकरसत्व प्रतिपादक श्रुतियों से विरोध है "नेह नानास्ति किञ्चन" ( बृ ४।४।१९ )—आदि श्रुतियों में अनेकरसत्व का प्रतिषेध भी किया गया है।

ब्रह्म नितान्त अप्रसिद्ध है, लक्ष्य कैसे बनेगा ? यह सन्देह भी निराधार है, क्योंकि प्रत्यगात्मारूप से सामान्यतः स्वयं सिद्ध है। 'यदि प्रसिद्ध है, तो लक्षण व्यर्थ है'—यह आक्षेप भी युक्त नहीं, क्योंकि विशेष ( आनन्दादि ) रूप से ज्ञात नहीं, उस रूप से बोध कराने के लिए लक्षण-वाक्य की सार्थकता है। ( सभी कहीं लक्ष्य की सामान्यरूप से प्रसिद्धि और विशेषरूप से अप्रसिद्धि मानकर लक्षण-वाक्यों की सार्थकता दिखाई जा सकती है ) अन्यथा 'गन्धवती पृथिवी', 'नित्यज्ञानाधार ईश्वर'—आदि लक्षण-वाक्यों की भी लक्ष्य की प्रसिद्धि और अप्रसिद्धि के विकल्प उठाकर व्यर्थता की आपत्ति दी जा सकेगी। इसी से ही 'सोऽयं देवदत्त'—यहाँ परोक्षकालोपलक्षित वस्तु में एतत्काल का वैशिष्ट्य बताया जाता है—यह कहना भी निरस्त हो जाता है; क्योंकि देवदत्त के स्वरूपमात्र की जिज्ञासा शान्त करने के लिए ही 'सोऽयं देवदत्त' का प्रयोग हुआ है। एतत्काल-

१. प्रकृष्टप्रकाशेत्यादि·। २ अबुभुत्सितार्थप्रतिपादनमिति यावत्। ३. संसर्गपरत्वे इतिशेषः।

इत्येतन्निरस्तम् ; । देवदत्तस्वरूपमात्रस्यैव बुभुत्सितत्वात् । एतत्कालवैशिष्ट्यस्य दृष्टत्वेनाबुभुत्सितत्वात् । न च पूर्वकालोपलक्षितस्यैतत्कालवैशिष्ट्यप्रतिपादनेऽपि भेदभ्रमनिरास सिध्यतीति वाच्यम् , एतत्कालविशिष्टस्य पूर्वकालसंबन्धासंभवेन तदुपलक्षितत्वस्यासभवात्, तयोरभेदप्रतिपादनस्याशक्यत्वात् ।

ननु तथापि पूर्वकालोपलक्षितस्यैतत्कालवैशिष्ट्यसंभवात्संभवत्येव तयोरभेदप्रतिपादनमितिचेत् , मैवम् , विकल्पासहत्वात् । किं पूर्वकालोपलक्षितस्यैतत्कालविशिष्टेनाभेद प्रतिपाद्यत इत्युच्यते ? कि वा पूर्वकालोपलक्षिते वर्तमानकालवैशिष्ट्यलक्षणधर्मप्रतिपादनेनार्थादभेद. सिद्धयतीति ? नाद्य , विशिष्टाविशिष्टस्वरूपयोरभेदासभवात् । तथा सति वर्तमानकालविशिष्टस्य पूर्वमपि सद्भावप्रसङ्गात् । नापि द्वितीय , साक्षादेवाभेदप्रतिपादने संभवति परम्परया तत्प्रतिपादनाश्रयणस्यायुक्तत्वात् । उभयपदलक्षणाश्रयणे कल्पनागौरवात्तथाश्रीयत

---

**देवदत्तस्वरूपेति** । नन्वितरदपि बुभुत्सितं किं न स्यात् ? नहि देवदत्तमात्रमत्र केनचित्पृष्ट येन लक्षणवाक्यवत्तन्मात्रमेव बुभुत्सित स्यादिति तत्राह—**एतदिति** । न केवलमबुभुत्सितत्वादप्रतिपाद्यत्वं बुभुत्सितैक्यविरोधाच्चेत्याह—**न चेति** । तत्किमेतत्कालविशिष्टस्य पूर्वकालोपलक्षितेनैक्य बोधयति ? कि वा पूर्वकालोपलक्षितस्यैतत्कालविशिष्टेन ? नाद्य इत्याह— **एतत्कालेति** । सबद्ध खलूपलक्ष्य नासबद्धम् । न चैतत्कालविशिष्टस्य पूर्वकालसबन्धः सभवति, एतत्काले पूर्वकालाभावादतो न तयोरैक्यमित्यर्थ ।

द्वितीयं शङ्कते—**नन्विति** । किमुपलक्षितस्य विशिष्टेनाभेद शब्दगम्य ? कि वोपलक्षिते वैशिष्ट्यमात्र शब्दार्थः ? अभेदस्त्वानुपपत्तिक इति विकल्प्य दूषयति—**मैवमित्यादिना** । एतत्कालविशिष्टस्य पूर्वकालोपलक्षितस्वरूपस्य चैक्यासभवेन प्रथम पक्ष दूषयति—**नाद्य इति** । किमित्यसभवस्तत्राह—**तथा सतीति** । द्वितीये तु शब्दाद्विशिष्टमर्थाच्च स्वरूपमात्रैक्यमिति कल्पनागौरवाद्वर शब्दादेवोभयोपलक्षितस्यैक्यप्रतिपादनमित्याह—**साक्षादेवेति** । ननु साक्षाच्छब्दादभेदप्रतिपत्तावुभयोरपि लक्षणा प्रसज्येत, ततो वरमेकलक्षणया पारस्पर्याश्रयणमिति शङ्कते—**उभयेति** । पारपर्यकल्पनातो लक्षणाश्रयणं न्याय्य व्यापारवत्प्रमाणगौरवात् , व्यापारगौरवस्य लघयस्त्वात् । यदुद्दिश्य च वाक्य प्रवर्तते तस्य बुभुत्सि-

---

वैशिष्ट्य तो दृश्यमान होने से जिज्ञासित ही नही । यदि कहा जाय कि पूर्वकालोपलक्षित देवदत्त मे एतत्काल-वैशिष्ट्य के प्रतिपादन से भी देवदत्त-गत भेद-भ्रम का निरास किया जा सकता है ( अखण्डबोध मानने की आवश्यक्ता क्या ? ) । तो यह नही कह सकते , क्योकि एतत्काल-विशिष्ट वस्तु मे पूर्वकाल का सम्बन्ध ही सम्भव नही । सम्बन्ध न होने से पूर्वकालोपलक्षितत्व भी नही रह सकता , ( कारण यह है कि जो जिससे उपलक्षित होता है, वह उससे सम्बद्ध होता है ) । अत पूर्वकालोपलक्षित और एतत्काल-विशिष्ट का अभेद-प्रतिपादन असम्भव है । फिर भी यदि शङ्का हो कि यद्यपि एतत्काल-विशिष्ट मे पूर्वकालोपलक्षितत्व सम्भव नही तथापि पूर्वकालोपलक्षित मे एतत्काल-विशिष्टत्व तो सम्भव हो सकता है, अत उन दोनो मे आर्थिक अभेद का लाभ हो जाता है । तो यह शङ्का भी युक्त नही , क्योकि आपका आशय क्या है ? क्या पूर्वकालोपलक्षित का एतत्कालविशिष्ट से अभेद का प्रतिपादन करना चाहते है ? या पूर्वकालोपलक्षित मे एतत्कालविशिष्टत्वरूप धर्म का प्रतिपादन करके अर्थत अभेद की सिद्धि करना चाहते है ? प्रथम पक्ष युक्त नही , क्योकि एतत्काल-विशिष्ट यदि पूर्वकालोपलक्षित से अभिन्न है, तब तो एतत्काल-विशिष्ट की पूर्वकाल में भी सत्ता प्राप्त होगी । द्वितीय पक्ष भी उचित नही , क्योकि अर्थत अभेद-लाभ की अपेक्षा दोनो ( तत् और इदम् ) पदो की लक्षणा एक देवदत्त-स्वरूप मे मानकर साक्षात् अभेद-प्रतिपादन करना ही उचित है । यदि कहें कि दोनों ( तत् और इदम् ) पदो की लक्षणा मानने मे

इति चेत्, मैवम्, अत्रापि परम्परया अभेदप्रतिपादनात्साक्षादभेदप्रतिपादने बुद्धिलाघवस्य दर्शितत्वात्। तथापि विनिगमनायां को हेतुरिति चेत्, बुभुत्सितार्थस्य साक्षात्प्रतिपादनलाभ एवेति ब्रूमः। उक्तं च प्रतिज्ञावचनस्य साधनाङ्गत्वमाचक्षाणेनाचार्यवाचस्पतिना—"अनित्यं शब्दं बुभुत्समानायानित्य शब्द इत्यनुक्त्वा यदेव किंचिदुच्यते यत्कृतकं तदनित्यमिति वा, कृतकश्च शब्द इति वा,तत्सर्वमसबद्धबुद्धया न प्रत्येति प्रतिवादी" इति। एतेनोभयपदलक्षणास्वीकारे गौरवदोषो निरस्तो वेदितव्य.। बुभुत्सितार्थप्रतिपादनप्रयोजनतायां गौरवस्यैवोचितत्वात् 'प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि' इति न्यायात्। तदेवमखण्डार्थत्वे न लक्षणासभव.।

तस्याभेदस्य साक्षात्प्रतिपादन न्याय्यमितरथानुद्दिष्टस्य साक्षात्प्रतिपादन भवति उद्दिष्टस्य पारपर्येणेति-क्लिष्टकल्पना स्यात्, तदेतद्धृदि निधाय परिहरति—**मैवमत्रापीति**। अनधिगतपराभिसन्धि. शङ्कते—**तथापीति**। विनिगमना निर्णय। अभिसन्धिमुद्घाटयन्परिहरति—**बुभुत्सितेति**। बुभुत्सितस्यार्थिकप्रतिपत्ते. साक्षात्प्रतिपत्तिरभ्यर्हितेत्यत्राचार्यवाचस्पतिवचनमपि प्रमाणयति—**उक्तं चेति**। हेतूदाहरणावयवद्वयवादिन सौगत प्रति प्रतिज्ञानानन्तर्यं हेतोर्ब्रुवतेत्यर्थः। अत्र च यत्कृतक तदनित्यमित्युदाहरणनिर्देश। कृतकश्च शब्द इति हेतुनिर्देश। एतदुक्त भवति—यद्यप्युदाहरणहेतुनिर्देशादार्थाच्छब्दस्यानित्यत्व पर्यवस्यति, तथापि साक्षादनिर्देशापराधमात्रादिदमसबद्धबुद्ध्यभिधानमिति। एतेनेत्यस्यैवविवरणम्—**बुभुत्सितार्थेति**। लक्षणसमर्थनमुपसहरति—**तदेवमिति**। प्रमाण श्लोकेन सगृह्णाति—

गौरव होगा, तो यह भी कहना उचित न होगा; क्योकि एक पद लक्षणा की अपेक्षा यदि उभय-पदलक्षणा-पक्ष मे गौरव है, तो साक्षात् अभेद प्रतिपादन होने से महान् लाघव भी तो है। अब यदि प्रश्न हो कि दोनो पक्ष समान हो गये किसी एक पक्ष के उत्कर्ष मे विनिगमक ( निर्णायक ) क्या है ? तो इस का उत्तर है जिज्ञासितार्थ के प्रतिपादन का लाभ। ( अर्थात् यह कहा जा चुका है कि जिज्ञासु को केवल देवदत्त के स्वरूप की जिज्ञासा है, उसकी शान्ति, उभय पद-लक्षणा पक्ष मे ही होती है, अन्यतर पदलक्षणा-पक्ष मे नही )। प्रतिज्ञा-वचन को साधनाङ्ग बताते हुए आचार्य वाचस्पति मिश्र ने कहा भी है—शब्द-गत अनित्यत्व का जिज्ञासु के प्रति "अनित्य शब्द"—यह प्रतिज्ञा वाक्य न बोलकर जो कुछ भी कहा जाता है—"यत् कृतक, तदनित्यम्"—यह उदाहरण वाक्य या "कृतकश्च शब्द"—यह उपनय वाक्य, वह सब कुछ असम्बद्धाभिधान होने के कारण प्रतिवादी नही समझ पाता।" इससे दोनो पदो की लक्षणा मानने मे गौरव दोष का भी प्रतीकार हो जाता है, क्योकि जिज्ञासितार्थ-प्रतिपादन के लिए गौरव उचित ही है। कुमारिल भट्ट ने कहा है—
प्रमाणवन्त्यदृष्टानि कल्प्यन्ते सुबहून्यपि। अदृष्टशतभागोऽपि न कल्प्यो ह्यप्रमाणक ॥ ( त वा.२।१।२ )

( अर्थात् सप्रमाण तथा सप्रयोजन अनन्त अपूर्वो की कल्पना मे भी गौरव नही, किन्तु बिना प्रयोजन के अपूर्व के शतांश की भी कल्पना करना महान् गौरव है।' इस प्रकार यह सिद्ध हो गया कि अखण्डार्थत्व का लक्षण सम्भव है।

१. न्या०सू० १।१।३४ सूत्रे हेतोरवसरप्राप्तस्येति वार्तिकं तात्पर्यतस्टीकयतेत्यादिः। तत्राद्यत्वे "अनित्य शब्द बुभुत्समानायानित्य शब्द इत्यनुक्त्वा यदेव किञ्चिदुच्यते कृतकत्वादिति वा, यत्कृतकं तदनित्यमिति वा, कृतकश्च शब्द इति वा तत्सर्वमस्यानपेक्षितमापाततोऽसम्बद्धाभिधानम्, तथा चानवहितो न बोद्धुमर्हति" इत्येवानुपूर्वी दृश्यते। अत्र कृतकत्वादिनिवेत्यादितो हेतूदाहरणोपनयाः कण्ठतो निर्दिष्टा, न त्ववयवद्वयमात्रम्। २. एकपदलक्षणारूपव्यापारमाश्रित्य वैशिष्ट्यज्ञानमार्थिकाभेदज्ञान चेति गौरवम्।

नापि प्रमाणासंभव'। तथाहि—

सत्यज्ञानादिगीरेतत्ससर्गव्यतिरेकिणि ।
अर्थे प्रमाणं मानत्वान्नयनादिप्रमाणवत् ॥२०॥

सत्यादिवाक्यमेतत्पदार्थसंसर्गातिरिक्तेऽर्थे प्रमाणं प्रमाणत्वाच्चक्षुरादिवत्। विपक्षे चैकरसत्व-प्रतिपादकश्रुतीनामुदाहृतानामप्रामाण्यप्रसङ्ग ,बुभुत्सिते ब्रह्मणि प्रामाण्याभावप्रसङ्गश्च बाधक-स्तर्क उन्नेय । यत्तु वाक्यत्वाद् गवानयनादिवाक्यवत् ससर्गपरत्वानुमानम्, तदेकरसत्व-प्रतिपादकश्रुतिविरोधात्कालात्ययापदिष्टम् , उक्तरीत्या च ससर्गप्रतीतिजनकत्वाभावेऽपि वाक्यत्वोपपत्ते सदिग्धव्यतिरेको हेतु । आकांक्षासनिधियोग्यतावन्ति पदानि वाक्य'मिति

सत्यज्ञानादीति। सत्यज्ञानादिगीर्वाक्यमेतत्ससर्गव्यतिरेकिण्यर्थे य एते सत्यादय पदार्थास्तेषा ससर्ग-व्यतिरिक्ते ससर्गरहित प्रमाणमिति प्रतिज्ञानिर्देश. । शेप विशदम् । सिद्धसाधनतानिवृत्त्यै ससर्गव्यतिरेकि-णीत्युक्त, तथापि यत्किञ्चित्ससर्गव्यतिरिक्तत्वेनार्थान्तरता तन्निवृत्त्यर्थमेतत्पदम् । यद्यपि गामानयेत्या-दिवाक्य ससर्गविषय तथाप्येतत्ससर्गव्यतिरेकिण्यर्थे प्रमाणमेवेति न व्यभिचारः। ततश्चाससृष्टार्थप्रमिति-जनकत्वसिद्धिः। एतदेव विवृणोति—**सत्यादिवाक्यमित्यादिना**। पूर्वमद्वैतश्रुतीनामप्रामाण्यप्रसङ्ग उक्तः, इदानी सत्यज्ञानादिवाक्यस्य गुणगुण्यादिपरत्वेऽप्यप्रामाण्यप्रसङ्गमाह—**बुभुत्सितेति**। पूर्वपक्षि-णोऽनुमान दूषयति—**यत्त्वित्यादिना**। विपक्षबाधकतर्काभावाच्छङ्कितोपाधिता चाह—**उक्तेति**। उक्त-नीत्या वाक्यत्वोपपत्तेरिति सबन्धः। ननु ससर्गपरत्वाभावे वाक्यत्वभङ्गप्रसङ्ग एव बाधक इत्यत आह—

प्रमाण भी असम्भव नही—"सत्य ज्ञानमनन्तम्"—यह वाक्य, सत्यादि पदार्थ ससर्ग से भिन्न अर्थ मे प्रमाण है, प्रमाण होने से, जैसे—चक्षुरादि प्रमाण—यह अनुमान प्रमाण है। [ 'अर्थे प्रमाणम्'—इतना ही साध्य रखने पर सिद्धसाधन दोष होता, क्योंकि सखण्डार्थवादी भी इस वाक्य का ससर्गार्थ मे प्रामाण्य मानता ही है, अत 'संसर्गातिरिक्तार्थे' कहा। फिर भी यत्किञ्चिद् घटादि-ससर्ग से अतिरिक्त सत्यादि संसर्गार्थ मे प्रामाण्य वादि-सम्मत है, अत संसर्ग का विशेषण लगाया 'एतद्' ( एतत्पदार्थ )। फिर भी एतत्पदार्थ-ससर्गातिरिक्त संसर्गिरूपार्थ में प्रामाण्य दूसरे भी मानते है, अत सिद्धसाधनता हटाने के लिए एतदर्थससर्गव्यतिरिक्तार्थे एव प्रमाणम्—ऐसा सावधारण साध्य आचार्य मधुसूदन सरस्वती ने माना है। चक्षुरादि भी सत्यादि पदार्थों के ससर्ग से अतिरिक्त घटाद्यर्थ मे ही प्रमाण है, अत वहाँ साध्य प्रसिद्ध है ]। विपक्ष ( अखण्डार्थ न मानने ) मे, 'एक-रसत्व-प्रतिपादक "एकधैवानुद्रष्टव्यम्"—आदि श्रुतियो से अप्रामाण्य-प्रसग तथा जिज्ञासित अखण्ड ब्रह्म मे सत्यज्ञानादि वाक्यो की अप्रमाणता का प्रसग ही बाधक तर्क है। [ भाव यह है कि सत्य-ज्ञानादि वाक्यो को तत्ससर्गान्य अर्थ मे प्रमाण न माननेवाले से पूछा जा सकता है कि क्या तत्सं-सर्गान्य कोई अर्थ है ही नही ? या कि उसमे सत्यज्ञानादि वाक्यो की प्रमाणता नही ? प्रथम कल्प मे "एकधैवानुद्रष्टव्यम्"—आदि श्रुतियाँ नितान्त अप्रमाण हो जायँगी। दूसरे कल्प मे सत्यज्ञानादि वाक्यों से अखण्डार्थ का प्रतिपादन न मानकर, सत्यत्वादि धर्म-विशिष्ट का प्रतिपादन मानने पर अजिज्ञासिताभिधान की आपत्ति होगी]। यह जो अनुमान किया था—"विवादास्पदं ( सत्यज्ञानादि-वाक्यम् ) पदार्थसंसर्गप्रमितिजनक वाक्यत्वाद् गवानयनादिवाक्यवत्" वह "एकधैवानुद्रष्टव्यम्"—आदि श्रुतियो से बाधित है। ( यह जो विपक्ष-बाधक तर्क दिया था कि संसर्ग-प्रतीति-जनकता न मानने पर वाक्यत्व ही न बनेगा, वह भी युक्त नही, क्योकि ) 'खं छिदम्' आदि वाक्यों में संसर्ग-प्रतीति-जनकता न रहने पर भी वाक्यत्व निभ जाता है, अत 'वाक्यत्व' हेतु के आधार मे साध्य का

१ सन्दिग्धः सत्यादिवाक्ये पक्षे साध्यव्यतिरेको यस्य हेतोरिति व्यासः।

वाक्यविद्', ननु ससर्गप्रमितिजनकान्यपीति, विशेषणवैयर्थ्यात्। आचार्यशबरस्वामिना च 'शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानमि'त्येतावत एव लक्षणस्याभिधानात्। प्रातिपदिकमात्रार्थप्रश्नोत्तरत्वानुपपत्तिश्च, लौकिकवैदिकलक्षणवाक्यानामेकप्रातिपदिकार्थमात्रपर्यवसायित्वे प्रमाणम्। प्रदर्शिता च तत्रानु पत्तिः—अबुभुत्सितार्थप्रतिपादनेऽनवधेयवचनत्वप्रसक्तिरिति। तदेवमशेषोपनिषदामखण्डैकरसे ब्रह्मणि स्वत सिद्धमेव प्रामाण्यमिति सिद्धम्।

ननु किमिदं प्रामाण्यस्य स्वतस्त्वम्? न तावत्स्वत एव जन्म, स्वस्य स्वहेतुकत्वविरोधात्।

आकाङ्क्षेति। ननु प्रामाण्यभङ्गप्रसङ्गो बाधको नेत्याह—**आचार्येति**। शब्दविज्ञानाच्छब्दविषयज्ञानादसनिकृष्टेऽर्थे प्रमाणान्तरेण तथा चानधिगते यद्विज्ञान जायते तच्छास्त्र शब्दप्रमाणमिति शाबरवाक्यार्थः। अत्र चानुवादविसवादव्यवच्छेदायासन्निकृष्टपदम्। अपेक्षितादिपदनिराकरणायार्थग्रहणम्। अनुमानत्वनिराकरणाय शब्दविज्ञानग्रहणम्। एतावदेवाचार्यैर्लक्षणमभिहित शब्दप्रमाणस्य न तु ससर्गविषयत्वमपीत्यर्थः। द्वितीयपक्षेऽप्यर्थापत्ति प्रमाणमाह—**प्रातिपदिकेति**। अनुपपत्तिमेव दर्शयति—**अबुभुत्सितेति**। वादार्थमुपसहरन् वर्तिष्यमाणमेवोद्घाटयति—**तदेवमिति**।

अद्वैतवादे सत्यादिपदपर्यायतां तथा। अपर्यायेऽद्वयध्वस वादी वागीश्वरोऽब्रवीत्॥
तस्य वाच्यार्थनाना वाल्लक्ष्यस्यैक्यसमाश्रयात्। न पर्यायाद्वयध्वसावित्यनुत्तरमुत्तरम्॥

यत्तु प्रकृष्टप्रकाशशब्दावपि प्रकर्षादिव्रलात्प्रवृत्ताविति, तदबुभुत्सितत्वेनात्रैव परिहृतम्। यत्तु पृथक्प्रवृत्तयोः प्रकृष्टप्रकाशशब्दयोरेकत्र प्रयोगाद्युज्यते अर्थविशेषबोधकत्वम्, न तथेह, लौकिकज्ञानादेरपि ब्रह्मत्वादिति। तत्रोपहितज्ञानादेर्न ब्रह्मस्वरूपत्वमनुपहित तु न वाच्यमित्यस्त्येव पृथक्प्रवृत्ति ज्ञानादिशब्दस्येति न कोऽपि व्यतिकरः।

अद्वयसत्सुखबोधविताने देहहृषीकमनोमतिहीने॥
विश्वविवर्तनिदानमबोध घ्नन्ति वचासि स यत्र परोऽस्मि॥

स्वतःसिद्धमेव प्रामाण्यमित्युक्तमुपश्रुत्य परतः प्रामाण्यवादी प्रत्यवतिष्ठते—**नन्विति**। तत्र लक्षण

व्यतिरेक ( अभाव ) भी सम्भावित है। आकांक्षा, सन्निधि, योग्यतावाले पद-समूह को ही वाक्य माना गया है। उसमे ससर्ग-प्रमाजनकत्व अनिवार्य नही, क्योकि ससर्ग-प्रमा-जनकत्व विशेषण का कोई प्रयोजन नही। आचार्य शबरस्वामी ने भी "शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्" ( शब्द-विषयक ज्ञान से जो प्रमाणान्तरागम्य अर्थ का ज्ञान होता है, उसे शब्दप्रमाण कहते है—शा भा १।१।५ ) इतना ही लक्षण किया है। यहाँ भी ससर्गविषयक प्रमा-जनकत्व का प्रवेश नही। लौकिक तथा वैदिक लक्षण-वाक्यो का तात्पर्य प्रातिपदिकार्थमात्र ( अखण्डार्थमात्र ) मे है। इसमे प्रमाण है—प्रातिपदिकार्थमात्र विषयक प्रश्न एव उत्तर की अन्यथानुपपत्ति। प्रातिपदिकार्थमात्र का प्रतिपादन न मानने पर यह अनुपपत्ति दिखाई जा चुकी है कि अजिज्ञासितार्थ का प्रतिपादन करने पर उत्तर-वाक्यो मे अनवधेयवचनता ( उपेक्षणीयता ) की प्रसक्ति होगी। इस प्रकार यह सिद्ध हो गया कि समस्त उपनिषदो का अखण्डैकरस ब्रह्म मे स्वत सिद्ध प्रमाण्य है, अर्थात् उपनिषद्-वाक्य से जन्य ब्रह्मविषयक ज्ञान मे स्वत सिद्ध प्रमात्व है। [मीमासक और वेदान्ती, स्वत प्रामाण्य-वादी है। यहाँ प्रामाण्य का अर्थ है—प्रमात्व। प्रमात्व, स्वत (स्वाश्रय प्रमा-जनक सामग्री से) ही उत्पन्न होता है—यही प्रमात्व की स्वत उत्पत्ति या उत्पत्ति-गत स्वतस्त्व कहलाता है। एवं प्रमात्व, स्वत ( स्वाश्रय प्रमा-प्रकाशक सामग्री से ) ही प्रकाशित होता है—इसी को प्रमात्व की स्वत ज्ञप्ति या ज्ञप्ति-गत स्वतस्त्व कहते है तथा व्यवहारादि फल भी ज्ञानमात्र के अधीन है—यह व्यवहृति-स्वतस्त्व है।]

पूर्वपक्ष—प्रमात्व में यह स्वतस्त्व क्या है? ( प्रमात्व मे स्वनिरूपित जन्यता? या स्वाश्रय

१. तथा च ससर्गपरत्वेन वाक्यत्वस्य व्याप्तिरेव नास्ति, किन्तु आकाङ्क्षादिमत्त्वेनैवेति सिद्धान्त्यभिसन्धिः।

नापि प्र[1]माणादेव जन्म, ज्ञानस्य गुणत्वेन स्वप्रामाण्यं प्रति समवायिकारणत्वासंभवात्। नापि ज्ञानसामग्रीतो जन्म, प्रामाण्यस्योपाधित्वे जातित्वे च जन्मासभवात्। तथाहि—उपाधिपक्षे स्मृतित्वानधिकरणस्य ज्ञानस्य बाधात्यन्ताभाव प्रामाण्यम्। न च तस्योत्पत्ति संभवति, अत्यन्ताभावत्वादेव। नापि जातेर्जन्म, नित्यत्वात्। ज्ञानसामग्रीजन्यत्व प्रमाया प्रामाण्यस्य स्वतस्त्वमिति चेत्, मैवम्, अप्रमाया अपि स्वतस्त्वप्रसङ्गात्, तस्या अपि ज्ञानसामग्रीजन्यत्वात्। अथ ज्ञानसामग्रीमात्रजन्यत्व स्वतस्त्वम्, अप्रमा तु न तन्मात्रजन्या,

तावदाक्षिपति—**न तावदित्यादिना**। तत्र किं स्वत एव प्रामाण्यस्य जन्म स्वतःप्रामाण्य नाम? आहोस्वित्स्वाश्रयज्ञानजन्यत्वम्? उत स्वाश्रयज्ञानसामग्रीजन्यत्वम्? अथवा ज्ञानसामग्रीजन्यप्रमाश्रितत्वम्? किंवा ज्ञानसामग्रीमात्रजन्यप्रमाश्रितत्वम्? नाद्य इत्याह—**न तावदिति**। **विरोधादिति**। स्वस्यैव स्वकारणतया प्राक्क्षणे सत्त्व, कार्यतया च प्रागसत्त्वमिति व्याघातादित्यर्थ। द्वितीय निषेधति—**नापीति**। एतच्च स्वशब्दस्य स्वीयवचनत्वमाश्रित्य। स्वाश्रयप्रामाण्यजनकत्वे हि समवायिकारणतया द्रव्यत्वापातो ज्ञानस्येत्यर्थः। तृतीय निषेधति—**नापि ज्ञानेति**। तत्सामग्र्यामपि हि यथाकथचित्स्वीयतया स्वशब्दो भवत्येवेति भाव। तदेतदसभवेन दूषयति—**प्रामाण्यस्येति**। बाधात्यन्ताभावो घटादेरप्यस्तीति ज्ञानस्येत्युक्तम्। त[2]थापि स्मृतावतिव्याप्तिस्तदर्थं **स्मृतित्वानधिकरणस्येति**। अबाध्यानुभवत्वमित्यर्थ। विषयापहारश्च बाधस्तदभावश्चापातत सशयादेरप्यस्तीत्यत्यन्तग्रहणम्। अत्र च भ्र[3]मादौ धर्म्यंशे जातिसङ्करप्रसङ्गात् प्रामाण्यमुपाधिरिति केचित्। अपरे तु तत्र गौण व्यवहारमादाय जातिरिति वदन्ति, तेनेद द्वैविध्यमुक्तम्। चतुर्थं शङ्कते—**ज्ञानसामग्रीति**। यदिद प्रमाया ज्ञानसामग्रीजन्यत्व तत्प्रामाण्यस्य स्वतस्त्वमिति योजना। तदेतदतिव्याप्त्या दूषयति—**मैवमिति**। ज्ञानविशेषो[4] ह्यप्रमा, विशेषसामग्र्या च सामान्यसामग्र्यनुप्रविशति, शिंशपासामग्र्यामिव वृक्षसामग्री, इतरथा तस्याकस्मिकत्वप्रसङ्गात्। अत परतस्त्वेनाभिमताप्रामाण्येपि ज्ञानसामग्रीजन्याश्रितेऽतिव्याप्ति रित्यर्थ। **अप्रमाया अपीति**। अप्रामाण्यस्येत्यर्थ। पञ्चमं शङ्कते—**अथेति**। अप्रमायामतिव्याप्तिपरिहार मात्रग्रहणेन विवक्षितम्, स एव विवृणाति—**अप्रमा त्विति**।

प्रमानिरूपित जन्यता? या स्वकीय ज्ञान-सामग्रीनिरूपितजन्यता? या स्वकीय ज्ञान-जनक सामग्री-जन्य प्रमा-वृत्तित्व? या स्वकीय ज्ञान जनक सामग्रीमात्र-जन्य-प्रमावृत्तित्व?) स्वत ही जन्म (स्वनिरूपित जन्यता) को स्वतस्त्व नही कह सकते, क्योकि स्व मे स्व (प्रमात्व मे प्रमात्व) की जन्यता माननी नितान्त विरुद्ध है। प्रमा से ही जन्म (स्वाश्रय प्रमा-निरूपित जन्यता) को भी स्वतस्त्व नही मान सकते, क्योकि प्रमा ज्ञान, गुण होने से प्रमात्व का समवायिकारण नही बन सकता (यह नियम है कि कार्यमात्र का समवायिकारण द्रव्य ही होता है। प्रमात्व का समवायिकारण प्रमा नही बन सकती, अत प्रमानिरूपित जन्यता वहाँ कैसे रहेगी?)। ज्ञान-सामग्री से जन्म (स्वकीय ज्ञान-सामग्री-निरूपित जन्यता) भी सम्भव नही, क्योकि इस पक्ष में प्रमात्व क्या है? उपाधि? या जाति? उपाधि-पक्ष मे प्रमात्व का स्वरूप मानना होगा—स्मृतित्व के अनधिकरणभूत ज्ञान मे रहनेवाला बाधात्यन्ताभाव। बाधात्यन्ताभावरूप प्रमात्व मे किसी की भी जन्यता नही रह सकती, क्योकि अत्यन्ताभाव नित्य होता है, किसी से जन्य नही होता। प्रमात्व को जाति मानने मे भी यही बात। स्वाश्रयप्रमा मे ज्ञान-सामग्री की जन्यता (स्वकीय ज्ञान-सामग्री-जन्य प्रमा-वृत्तित्व) को भी स्वतस्त्व नही मान सकते, क्योकि ज्ञान-सामग्री से जन्य तो अप्रमा भी है, फिर तो उसमे रहनेवाले अप्रमात्व को भी स्वत मानना पडेगा (जैसा कि उदयनाचार्य ने कहा है—"यदि च तावन्मात्राधीना भवेदप्रमाऽपि प्रमैव भवेत्"—कु० २।१)। यदि कहा

१ प्रमाज्ञानादेव। २ ज्ञानस्येत्युक्तावपि। ३. भ्रमादौ धर्म्यंशे। ४. ज्ञानविशेषस्य।

दोषसहकृतज्ञानसामग्रीजन्यत्वादिति चेत्, मैवम्, विकल्पासहत्वात्। तथाहि—दोषाभावसहकृतज्ञानसामग्रीजन्यत्व मात्रशब्दार्थः[1] किं वा दोषासहकृतज्ञानसामग्रीजन्यत्वम्? नाद्य, परतःप्रामाण्यवादिमतानुप्रवेशप्रसङ्गात्। तेऽपि हि दोषाभावसहकृतज्ञानसामग्रीजन्यत्वमेव परतःप्रामाण्यमितीच्छन्ति। नापि द्वितीयः, विशेषदर्शनस्य भ्रमनिवृत्तिहेतुत्वे तद्विपर्ययस्य भ्रमहेतुत्ववद्दोषसहकृतज्ञानसामग्रीजन्यं ज्ञानमप्रमेत्यङ्गीकुर्वता प्रमा प्रति दोषाभावस्य हेतुताया अनिराकार्यत्वात्। नन्वीश्वरज्ञान इव दोषाभावस्यावर्जनीयतया अस्मत्प्रमास्वपि तथासन्निधि किं न स्यात्? नहीश्वरज्ञानेऽपि दोषाभाव प्रयोजक इति युक्तं वक्तुम्, तत्प्रयुक्तत्वस्य तदन्तर्भूतसामग्रीजन्यत्वानतिरेकात्, तस्य च नित्यतया विशिष्टसामग्रीजन्यत्वा-

---

अत्र मात्रग्रहणेनाप्रमासामग्रीरूपदोषासाहित्यद्वारेण तदभावसाहित्यमपि ज्ञानसामग्र्या विवक्षितम्? उतासाहित्यमात्रम्? इति विकल्प्यात्र दूषयति—नाद्य इति। एवं[1] स्वतःप्रामाण्य परतस्त्वेऽप्युपपद्यते इत्यर्थान्तरमित्यर्थः। द्वितीयं दूषयति—नापि द्वितीय इति। यथा हि प्रमाणज्ञानहेतोर्विशेषदर्शनस्याभावोऽप्रमाणज्ञानहेतुः, एवमप्रमाणज्ञानहेतोर्दोषस्याभावोऽपि प्रमाणहेतुर्भवत्येव। एवमवधृतस्वाभाव्यादनयोरित्यर्थः। यद्यपि प्रमासामग्र्या दोषाभावाऽविघातस्तथापि न हेतुतयाऽपित्ववर्जनीयसन्निधेराकाशवत्। युक्तं चैतत्, इतरथा नित्यस्येश्वरज्ञानस्य तदनुत्पाद्यतया प्रामाण्याभावप्रसङ्गादिति शङ्कते—नन्विति। जन्या प्रमा दोषाभावसहकृतज्ञानसामग्रीजन्या न भवति प्रमात्वादीश्वरप्रमावदिति भावः। साध्यवैकल्यं परिहरति—न हीति। ननु जन्यत्वाभावेऽपि त[2]त्प्रयुक्तत्वं किं न स्यादित्यत आह—तत्प्रयुक्तत्वस्येति। तदन्तर्भूतेति। स दोषाभावादिरन्तर्भूतो यस्यां सामग्र्यां सा तदन्तर्भूता सामग्री, अथवान्तर्भाव एवान्तर्भूतम्, भावे निष्ठा, तदन्तर्भाववती सामग्रीत्यर्थः। न तद्गर्भसामग्रीजन्यत्वं तत्प्रयुक्तत्वम्, नहि गुणवत्त्वप्रयुक्तं द्रव्यत्वमित्यत्र गुणवत्त्वद्रव्यत्वयोर्जन्यजनकभाव, परस्परमेकस्योपाधित्वात् परस्य च जातित्वात्, किं तर्हि

---

जाय कि ज्ञान-सामग्रीमात्र-जन्यत्व ( स्वकीय ज्ञान-जनक सामग्रीमात्र-जन्य प्रमा-वृत्तित्व ) को स्वतस्त्व कहेंगे। अप्रमा, ज्ञान-सामग्री-मात्र से जन्य नहीं, अपितु दोष-सहित ज्ञान-सामग्री से जन्य है, अत उसमें अतिव्याप्ति नहीं। तो यह कहना भी युक्त नहीं, क्योंकि यहाँ 'मात्र' शब्द से क्या विवक्षित है? ज्ञान-सामग्री से दोषाभाव युक्तत्व? या दोष-रहितत्व? प्रथम पक्ष मानने से परत प्रामाण्य-वादी का मत आ जाता है, क्योंकि परतः प्रामाण्य-वादी तार्किक प्रमात्व में दोषाभाव-युक्त ज्ञान-सामग्री-जन्यत्व को ही परतस्त्व मानते हैं। द्वितीय पक्ष में भी वही दोष रह जाता है, क्योंकि विरोधी कार्यों में से एक की सामग्री का अभाव, दूसरे की सामग्री होता है, जैसे—भ्रम-निवृत्ति और भ्रम—दोनों परस्पर विरुद्ध हैं, अत भ्रम-निवृत्ति की सामग्री विशेषकोटि-दर्शन का अभाव, भ्रम का हेतु होता है, वैसे ही अप्रमा ज्ञान की सामग्री ( दोष ) का अभाव प्रमा का हेतु मानना होगा। इस प्रकार दोषाभाव-युक्त ज्ञान-सामग्री की ही जन्यता प्रमा में आती है, जिसे परतस्त्व-वादी परतस्त्व मानते हैं। यदि सन्देह हो कि दोषाभाव, हेतु न होने पर भी जैसे ईश्वर के ज्ञान में अनिवार्यरूप से आकाश के समान सन्निहित रहता है, वैसे ही हमारी प्रमा में भी दोषाभाव का सन्निधान मात्र क्यों न रहेगा? ईश्वर के ज्ञान में दोषाभाव को प्रयोजक नहीं माना जा सकता, क्योंकि दोषाभाव-प्रयुक्तत्व, दोषाभाव-घटित सामग्री-जन्यत्व के बिना नहीं रह सकता। ईश्वर-ज्ञान नित्य होने के कारण दोषाभाव-विशिष्ट सामग्री से जन्य है नहीं। (इसी प्रकार वेदान्ति-सम्मत प्रमा में दोषाभाव की सन्निधि होने पर भी जन्यता नहीं, अतः परतस्त्वापत्ति नहीं होगी )।

---

१. एवंविधं प्रामाण्यमित्यन्वयः। २ दोषाभावज्ञानजन्यज्ञानविषयत्वम्।

दिति चेत्, मैवम्, अन्तरेणापि तत्सामग्रीजन्यत्वं नित्यद्रव्येषु गुणवत्त्वप्रयुक्तद्रव्यत्ववत्तत्प्रयुक्तत्वोपपत्ते। न च दोषाभावस्याभावत्वादेवाकारणत्वम्, विशेषदर्शनाभावस्य भ्रमहेतुत्ववत्प्रमाणाभावस्य प्रमेयाभावप्रमितिहेतुत्ववद्विहिताकारणस्य प्रत्यवायहेतुत्ववच्च तदुपपत्ते।

न च प्रामाण्यस्य स्वतस्त्वे मानमस्ति। प्रामाण्यं ज्ञानहेतुमात्रजन्याश्रयमप्रामाण्येतरत्वे-

समव्यापकत्वमात्रेण प्रयोज्यप्रयोजकभाव॰, एवमत्रापीति परिहरति—**मैवमिति**। अनित्ये स्वाश्रयद्वारा कादाचित्कत्वमपि कथञ्चित्सम्भाव्यमिति नित्यद्रव्येष्वित्युक्तम्। नन्वभावस्य कारणतैवायुक्ता, नि.स्वभावत्वादिति तत्राह—**न चेति**। किमिदं नि स्वाभावत्वम्? यद्यसत्त्वम्, तत्किं सत्तानधिकरणत्वम्? तर्हि? गत सामान्यादीना बुद्धिकारणत्वेन। न च स्वरूपसत्त्वरहितत्वम्, तदसिद्धम्। यथाहोदयनं—'नह्यसौ विधिरूपेण तुच्छ इति स्वरूपेणापि तथा, इतरथा भावस्यापि तथात्वापाता'दिति[1]। अथ भावत्वानधिकरणत्वम्? किमेतावता? किं चाभावस्य कार्यत्वमङ्गीक्रियते? न वा? न यदि, तदा प्रध्वंसानुत्पत्त्या घटस्य नित्यता स्यात्। अस्ति चेत्, कारणत्वेन किमपराद्धम्। क खलु विशेषो नियतप्राक्क्षणसत प्रागसत्त्वे-सति सत्तायोगित्वसत्त्वे? अथान्यथैवाभूत्वाभावित्वाद्यात्मक तत्र कार्यत्वं शिक्षयसि कारणत्वमपि तथा शिक्षयेति मूकीभाव। उक्त चोदयनेन—'भावो यथा तथाऽभाव कारण कार्यवन्मत' इति। किंच न सर्वत्र भावरूपा एव दोषा॰, येन तदभावस्याभावतया न कारणत्वम्, अपि त्वभावरूपा अपि सन्ति दोषा, तदभावस्य न किमिति कारणता स्यात्। अथ भावस्य तत्र तत्र दृष्टचर कारणत्व न त्वभावस्येति, तन्न, अभावस्यापि तत्र तत्र दर्शनात्स्वीकाराच्च भवद्भिरित्याह—**विशेषदर्शनेत्यादिना**। साधारणधर्मदर्शनविशेषादर्शनाभ्या सर्वत्र भ्रम इत्यर्थ। भाट्टानेव प्रत्याह—**प्रमाणाभावस्येति**। योग्यानुपलब्ध्या ह्यभावप्रमितिरङ्गीक्रियते अनुपलब्धिश्चोपलब्ध्यभाव इत्यर्थ। मतद्वयसमतमुदाहरणमाह—**विहिताकरणेति**। ये त्वत्र—

> 'स्वकाले यदकुर्वन् हि करोति यदचेतनः।
> प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते॥'[2]

इति ब्रुवते, तैरप्यतिप्रसक्तिपरिहारायाकुर्वन् यदन्यत्करोतीति वचनादभावहेतुताऽशक्यप्रत्याख्याना।

एवं लक्षणमाक्षिप्य प्रमाणमाक्षिपति। **न च प्रामाण्येति**—रत्नदीपावलीकृतमनुमानमुद्भावयति—**प्रामाण्यमिति**। ज्ञानहेतुजन्याश्रयत्वसाधने सिद्धसाधनता तदर्थं मात्रग्रहणम्, ज्ञानैकधर्मत्वमप्रामाण्ये-

**तो यह सन्देह उचित नहीं, क्योंकि ईश्वर-ज्ञान में दोषाभाव-घटित सामग्री जन्यत्व न रहने पर भी दोषाभाव-प्रयुक्तत्व वैसे ही माना जाता है, जैसे कि नित्य द्रव्य-वृत्ति द्रव्यत्ववत्ता में गुणवत्त्व-घटित सामग्री-जन्यत्व न होने पर भी गुणवत्त्व-प्रयुक्तत्व रह जाता है। यदि कहा जाय कि दोषाभाव, अभाव होने से किसी का हेतु बनता ही नहीं। तो यह कहना युक्त नहीं, क्योंकि जैसे विशेष दर्शनाभाव भ्रम का, प्रमाणाभाव प्रमेयाभाव-प्रमा का, विहित ( नित्य कर्मों ) के अनुष्ठान का अभाव प्रत्यवाय का हेतु होता है, वैसे ही दोषाभाव भी हेतु क्यों न बनेगा?**

**प्रमात्व-गत स्वतस्त्व में कोई प्रमाण भी नहीं। कुछ विद्वान् जो–'प्रमात्व, ज्ञान-हेतु मात्र-जन्य प्रमा-वृत्ति है, अप्रमात्व-भिन्न ज्ञानैकधर्म होने से, जैसे—ज्ञानत्व।' [ 'ज्ञानहेतुजन्याश्रयकत्व' साध्य**

१. "भावो यथा तथा भावः कारण"मिति (१।१०) पद्यव्याख्यायामितिशेष। "न हि विधिरूपेणासौ तुच्छ इति स्वरूपेणापि तथा, निषेधरूपाभावे विधेरपि तुच्छत्वप्रसङ्गादि"ति पाठानुपूर्वी। 'असावभावो विधिरूपेण यद्यपि कारणं न भवति, अन्यनिषेधरूपेण तु भवत्येव। अन्यनिषेधरूपत्वापराधेनास्याकारणत्वे भावस्याप्यभावनिषेधरूपत्वेनाकारणत्वापात इति तदर्थ। २. नयविवेके १३५ पुटे उद्धृतमिदं पद्यम्।

सति ज्ञानैकधर्मत्वात् ज्ञानत्ववत्। दोषजन्यत्वेन व्यभिचारो मा भूदिति ज्ञानैकधर्मत्वादित्युक्तम्। तथा प्रामाण्यमुक्तविधमप्रामाण्येतरत्वे सति ज्ञानत्वन्यूनवृत्तित्वात् प्रत्यक्षत्ववदित्यनुमानं मानमिति केचित्, तन्न, विकल्पासहत्वात्। तथाहि—किं तथाविधव्यक्तिवृत्तितामात्रं विवक्षितम्? उतान्यावृत्तित्वे सति तथाविधव्यक्तिवृत्तित्वम्? नाद्य, अंशत सिद्धसाधनत्वात्, अनुव्यवसायानुमित्युपमितीनां स्वत प्रमात्वस्य परैरप्यङ्गीकारात्। न द्वितीय, आद्यप्रयोगे दृष्टान्तस्य साध्यविकलत्वात्, ज्ञानत्वस्य दोषजन्याप्रमाणज्ञानवृत्तित्वस्याप्यङ्गीकारात्। नाप्रमाणज्ञाने ज्ञानत्वस्य वृत्तिस्तस्य ज्ञानाभासत्वादितिचेत्, मैवम्, तथा सत्यप्रामाण्येतरत्वे सति इति विशेषणस्य वैयर्थ्यात्, अप्रमाणज्ञानस्य ज्ञानाभासत्वेनाप्रामाण्यस्य ज्ञान-

ऽप्यस्तीति तत्र व्यभिचारवारणायाप्रामाण्येतरत्वे सतीत्युक्तम्। घटत्वादिव्यावृत्त्यै ज्ञानग्रहणम्। उत्तरविशेषणकृत्यमाह—दोषेति। तद्धि व्याधेराप धर्म इति न ज्ञानैकधर्म इत्यर्थः।

तदीयमेवानुमानान्तरमाह—तथेति। ज्ञानत्वन्यूनवृत्तित्वमप्रामाण्येऽप्यस्तीति अत उक्तम्—अप्रामाण्येतरत्वे सतीति। सत्तागुणत्वज्ञानत्वैर्व्यभिचारनिवारणाय ज्ञानत्वन्यूनवृत्तित्वग्रहणम्। अत्र किं ज्ञानहेतुमात्रजन्यवृत्तित्वमात्र साध्यम्? किं वा ज्ञानहेत्वतिरिक्तजन्यावृत्तित्वे सति ज्ञानहेतुमात्रजन्यवृत्तित्वमिति विकल्याद्येऽशत सिद्धसाधनमाह—अंशत इति। यथा चैतेषा स्वतः प्रमात्व तैरङ्गीकृत तथा सिद्धान्ते दर्शयिष्यते। साध्यविकलत्वमेव दर्शयति—ज्ञानत्वस्येति। दोषजन्येत्यतिरिक्तजन्यत्वमुक्तम्। अत्रान्तरासिद्धान्तिमतमवलम्ब्य कश्चिच्चोदयति—नाप्रमाणेति। उक्त हि अविद्या वेद्यैः सह भ्रम इत्यभिमान। एव प्रकृतदूषण परिहरतो विशेषणवैयर्थ्यम्, तथाचैक सन्धित्सतोऽपर प्रच्यवत इत्याह—मैवमिति। व्यभिचारमेव स्फोरयति—तथाहीति। दूषणान्तर चाह—दृष्टान्तस्येति। तस्यैव विव-

रखने पर सिद्ध-साधन दोष आ जाता है, क्योंकि परतस्त्ववादी भी ज्ञान-हेतु से जन्य प्रमात्वाश्रय मानता है, अत 'मात्र' पद दिया। परतस्त्ववादी ज्ञान की सामग्री मात्र से प्रमा की उत्पत्ति नही मानता, अपितु दोषाभाव-सहित सामग्री से। 'ज्ञानैकधर्मत्व' हेतु अप्रमात्व मे भी रहने के कारण व्यभिचारी है, अत अप्रमात्वेतरत्व विशेषण लगाया। 'अप्रमात्वेतरत्वे सति धर्मत्व' घटत्वादि मे व्यभिचरित है, अत 'अप्रमात्वेतरत्वे सति ज्ञानधर्मत्व' कहा। इतना भी दोषजन्यत्वरूप धर्म मे व्यभिचारी है, अत 'अप्रमात्वेतरत्वे सति ज्ञानैकधर्मत्व' हेतु बनाया। दोषजन्यत्व ज्ञानमात्र का धर्म नहीं, अपितु ज्वरादि मे भी है ]। एव 'प्रमात्व, ज्ञान-हेतुमात्र-जन्य प्रमा-वृत्ति है, अप्रमात्वभिन्न ज्ञानत्व-न्यूनवृत्ति होने से, जैसे—प्रत्यक्षत्व'—इस प्रकार अनुमान प्रमाण कहा करते है। वह उचित नही, क्योंकि उक्त अनुमानो मे ज्ञान-हेतुमात्र-जन्य-वृत्तित्वमात्र साध्य विवक्षित है? या कि ज्ञानहेतु मात्र-जन्यान्यावृत्तित्वे सति ज्ञान-हेतुमात्र जन्य-वृत्तित्व? प्रथम पक्ष युक्त नही, क्योंकि अनुव्यवसाय, अनुमिति और उपमिति मे रहने वाले प्रमात्व मे इस प्रकार का स्वतस्त्व दूसरे भी मानते है, अत आंशिक सिद्ध-साधन दोष है। ( अनुव्यवसायादि मे दूसरे स्वतस्त्व मानते है—यह उत्तर पक्ष मे कहा जायगा )। द्वितीय पक्ष भी उचित नहीं, क्योंकि इस प्रकार का साध्य तो प्रथम अनुमान-प्रयोग ( प्रमात्व ज्ञानहेतुमात्रजन्याश्रयकम्, अप्रमात्वेतरत्वे सति ज्ञानैकधर्मत्वात्, ज्ञानत्ववत् ) के दृष्टान्त ( ज्ञानत्व ) मे नही रहता, अर्थात् ज्ञान के हेतुमात्र से जन्य है—प्रमा, उससे अन्य अप्रमा ज्ञान मे भी ज्ञानत्व माना जाता है। 'अप्रमा, ज्ञान नही, ज्ञानाभास है, अत· उसमे ज्ञानत्व नही रहता'—यह मानने पर "अप्रमात्वेतरत्वे सति"—यह हेतु का विशेषण व्यर्थ हो जाता है, क्योंकि अप्रमा ज्ञान, ज्ञान ही नही रहा, तब उसमे रहने वाला अप्रमात्व भी ज्ञान-वृत्ति नही रहता ( अत· ज्ञान-वृत्तित्वात्–इतना ही हेतु पर्याप्त है, अप्रमात्वेतरत्वे सति–यह विशेषण निरर्थक है )। द्वितीय

वृत्तित्वाभावात् । द्वितीयानुमाने च संशयत्वादिना व्यभिचारः । तथाहि—तदपि ह्यप्रामाण्येतरत्वे सति ज्ञानत्वन्यूनवृत्ति भवति, न तु भवति ज्ञानहेतुमात्रजन्याश्रयम्, तिमिरादिदोषजन्याश्रयत्वात् । दृष्टान्तस्य साध्यविकलता च, प्रत्यक्षत्वस्यापि परत प्रामाण्यवादिना ज्ञानहेतुमात्रजन्याश्रयत्वानाश्रयणात् । प्रमात्वमेव यस्य ज्ञानहेतुमात्रजन्याश्रय न भवति, गुणविशिष्टज्ञानसामग्रीजन्यवृत्तित्वात्, तस्य कथ तदवान्तरजातिप्रत्यक्षत्व तद्धेतुमात्रजन्याश्रयं स्यात्?

अस्तिच परतस्त्वेऽपि प्रयोग –अनीश्वरप्रमा विज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वाद्धटवत् । ननु कि ज्ञानव्यक्ते प्रमाव्यक्तितोऽस्ति कश्चिद्विशेष ? कि वा प्रमाव्यक्तिरेव ज्ञानव्यक्ति ? आद्ये प्रत्यक्षज्ञानव्यक्त्या स्पष्टो व्यभिचार., प्रत्यक्षज्ञानव्यक्तेर्विज्ञानहेत्वतिरिक्तहेत्वधीनत्वाभावात् । द्वितीयेऽपि जन्यापि विज्ञानरूपा प्रमा न ज्ञानहेत्वतिरिक्तहेत्वधीनेति बाध इति

रण प्रत्यक्षत्वस्यापीति । ननु किमिति प्रत्यक्षत्व नाङ्गीक्रियते, नहि तत्प्रमात्वमित्यत आह—**प्रमात्वमेवेति** । गुणविशिष्टसामग्रीजन्यप्रमाश्रय प्रमात्वमिति यस्याङ्गीकार' स कथ तदवान्तरजाति प्रत्यक्षत्व ज्ञानहेतुमात्रजन्याश्रयमङ्गीकुर्यादित्यर्थ । गुणग्रहण दोषाभावस्याप्युपलक्षणम् ।

एव स्वतस्त्वलक्षणप्रमाणे दूषयित्वा परतस्त्वे कुसुमाञ्जलीयमनुमान दर्शयति—**अनीश्वरप्रमेति** । इदं च तत्र युक्तं प्रक्षिप्तमीश्वरप्रमाया बाधासिद्धी मा भूतामिति । यदस्य रत्नदीपावल्यामनुमानदूषणमुक्तं तदुद्दिधीर्षुरनुवदति—**ननु किं ज्ञानव्यक्तेरिति** । कि ज्ञानत्वाश्रयो या ज्ञानरूपिणी व्यक्तिस्ततो भिन्ना प्रमात्वाश्रयः प्रमाव्यक्तिः ? कि वा नेति विकल्प्याद्ये व्यभिचारमाह—**प्रत्यक्षेति** । द्वितीये ज्ञानरूपाया. प्रमाव्यक्तेर्ज्ञानहेत्वतिरिक्तहेतुजन्यत्वसाधन व्याहतम्, ज्ञान ज्ञानहेतुत्वानधिकरणजन्यमिति हि तदर्थ स्यादित्याह—**द्वितीयेपीति** । तदेतद्दूषयति—**मैवमिति** । यद्यपि व्यक्त्योर्भेदो नास्ति तथापि ज्ञानत्वप्रमात्व-

अनुमान ( प्रमात्वं ज्ञानहेतुमात्रजन्याश्रयकम्, अप्रमात्वेतरत्वे सति ज्ञानत्वन्यूनवृत्तित्वात्, प्रत्यक्षत्ववत् ) का हेतु सशयत्वादि मे व्यभिचारी है, क्योकि सशयत्व भी अप्रमात्व से भिन्न है और ज्ञानत्व से न्यूनवृत्ति भी, किन्तु संशयत्व का आश्रय, ज्ञान हेतुमात्र-जन्य नही, अपितु तिमिरादि दोष से भी जन्य है । एव दृष्टान्त ( प्रत्यक्षत्व ) मे साध्य-विकलता भी है, क्योकि परत प्रामाण्यवादी प्रत्यक्षत्व मे ज्ञान-हेतुमात्र-जन्य-वृत्तित्व नही मानता—जिस ( परत प्रामाण्य-वादी ) के मतमे प्रमात्व भी ज्ञान-हेतुमात्र-जन्य-वृत्ति नही, अपितु गुण-विशिष्ट ज्ञान-सामग्री से जन्य मे वृत्ति होता है । उसके मत मे प्रमात्व-व्याप्य प्रत्यक्षत्वरूप जाति, ज्ञान-हेतुमात्र से जन्य मे वृत्ति कैसे होगी ?

परतस्त्व की सिद्धि मे अनुमान-प्रयोग भी है—'अनित्य प्रमा, ज्ञान हेतु से अतिरिक्त हेतु के अधीन है, कार्य होने से, जैसे–घट ।' ( यहाँ प्रमा मात्र को पक्ष बनाने से ईश्वरीय नित्य प्रमा मे कार्यत्व न रहने से बाध और असिद्धि दोष होते, अत नित्य प्रमा की व्यावृत्ति के लिए अनीश्वर-प्रमा या अनित्य प्रमा को पक्ष बनाया गया है । ज्ञान सामान्य का हेतु है–आत्ममन का सन्निकर्ष । उससे अतिरिक्त इन्द्रिय-सन्निकर्षादि हेतु की अधीनता इस पक्ष मे सिद्ध हो सकती है–द्र० न्या० कु० २।१ ) । यदि कोई शङ्का करे कि इस अनुमान मे ज्ञानव्यक्ति का प्रमाव्यक्ति से कुछ अन्तर माना जाता है ? या प्रमाव्यक्ति ही ज्ञानव्यक्ति है ? यदि कुछ अन्तर है, तब तो प्रत्यक्षज्ञान व्यक्ति मे स्पष्ट व्यभिचार है, क्योकि प्रत्यक्ष ज्ञान व्यक्ति, ज्ञान-हेतु से अतिरिक्त हेतु के अधीन नही ( अर्थात् ज्ञान-हेतु से अतिरिक्त हेतु के अधीन है—प्रमाव्यक्ति । उससे भिन्न है ज्ञानव्यक्ति, अत इसमे ज्ञान-हेतु से अतिरिक्त हेतु की अधीनता भी नही रहेगी और 'कार्यत्व' हेतु वहाँ रहता है ) । द्वितीय पक्ष भी उचित नही, क्योकि जो प्रमाव्यक्ति ज्ञानरूप ही है, उसमे ज्ञान-हेतु से अतिरिक्त हेतु की जन्यता रह

१. भ्रमे इतिशेष' । २. ईश्वरेति विशेषणम् । ३. अतिरिक्तहेत्वधीनत्वेन बाधः, कार्यत्वाभावेन चासिद्धिः ।

चेत्, मैवम्, ज्ञानव्यक्तेः प्रमाव्यक्तितो भेदाभावेऽपि विज्ञानत्वप्रमात्वधर्मयोर्भेदात्। ततश्च घटत्वस्य पृथिवीत्वप्रयोजकातिरिक्तप्रयोजकत्वसाधन इव प्रमाया विज्ञानत्वप्रयोजकातिरिक्तप्रयोजकत्वसाधने बाधाभावात्। विपक्षे च प्रमात्वस्य विज्ञानत्वप्रयोजकमात्रप्रयोज्यत्वात्, ज्ञानत्ववदप्रमाज्ञानवृत्तित्वं स्यादिति बाधकस्तर्क उन्नेयः। ननु ज्ञानसामग्र्या एवानिरूपणात् तदतिरिक्तहेत्वधीनत्वं दुर्ज्ञानमिति चेत्, मैवम्; एवं सत्यप्रमाया परतस्त्वं दत्तजलाञ्जलि स्यात्। तदपि हि ज्ञानसामग्रीनिरूपणाधीननिरूपणं, तस्य दोषानुषक्तविज्ञानसामग्रीजन्यताप्रतिज्ञानात्। तस्मान्नोत्पत्तौ प्रमायाः स्वतस्त्वम्।

नापि ज्ञप्तौ। तथाहि—नीलसंवेदनस्य प्रामाण्यं नीलसंवेदनेनैवावेद्यत इति स्वतस्त्वमुच्यते ? किंवा तद्वेदनग्राहकमात्रग्राह्यत्वेन ? नाद्यः, तस्य तत्राप्रमाणत्वात्। तथाहि—

---

योर्भेदात् प्रमाया अपि ज्ञानत्वप्रयोजकव्यतिरिक्तप्रयोज्यत्वमुपपद्यते, यथा ह्येकस्मिन्नेव घटे द्रव्यत्वपृथिवीत्वघटत्वानां विभिन्नप्रयोजकतया द्रव्यादीनामपि विभिन्नप्रयोज्यतेत्यर्थः। ज्ञानहेत्वतिरिक्तहेत्वधीनत्वाभावे च बाधकमाह—**विपक्षे चेति**। यदि ज्ञानहेतुमात्रप्रयोज्येयं तर्हि तत्प्रयोज्यज्ञानवृत्तिज्ञानत्ववत्प्रमात्वमप्यप्रमाया वर्तेतेत्यर्थः।

ननु साध्यमेवेदं नाङ्गं धारयति, ज्ञानहेतोरेवानिरूपणादिन्द्रियादीनां परस्परव्यभिचारादात्ममनःसयोगस्य च सुखादिसाधारण्यात्। अतस्तदतिरिक्तहेतुरपि दुर्निरूप इति शङ्कते—**नन्विति**। दूषयति—**मैवमिति**। अवश्यं तावद्दोषानुषक्तविज्ञानसामग्रीजन्यत्वमप्रमाया मन्वानेन ज्ञानसामग्री तावन्निरूपणीया, सा च नास्मन्मते दण्डवारिता, भवितव्यं च तया, अन्यथा विलक्षणकार्यादर्शनप्रसङ्गादिति भावः। किमाश्रयज्ञानवेद्यत्वं प्रामाण्यस्य ज्ञप्तौ स्वतस्त्वम् ? किं वा ज्ञानग्राहकग्राह्यत्वम् ? इति विकल्प्याद्यं दूषयति—**नाद्य इति**। नीलसंवेदनस्य स्वप्रामाण्यग्राहकत्वाभावमेवोपपादयति—**तथा हीति**। इन्द्रियार्थसंनिकर्षोत्पन्नं ह्यनीश्वरप्रत्यक्षं तदिदं बहिरिन्द्रियस्यान्तरस्य वा प्रामाण्येन संनिकर्षादुत्पद्यते इति वक्तव्यं प्रत्यक्षवा-

---

नहीं सकती, अतः बाध दोष होता है। तो यह शङ्का नहीं करनी चाहिए, क्योंकि ज्ञानव्यक्ति का प्रमाव्यक्ति से कोई भेद न होने पर भी ज्ञानत्व और प्रमात्व धर्मों का भेद है। इसलिए जैसे घटत्व में पृथिवीत्व-प्रयोजक से अतिरिक्त प्रयोजक की प्रयोज्यता के साधन में बाध नहीं, वैसे ही प्रमात्व में ज्ञानत्व-प्रयोजक से अतिरिक्त प्रयोजक की प्रयोज्यता के साधन में भी बाध नहीं हो सकता। विपक्ष में बाधक तर्क यह है कि प्रमात्व यदि ज्ञानत्व-प्रयोजक मात्र से प्रयोज्य होगा, तब ज्ञानत्व के समान अप्रमा में भी रहेगा। ( अर्थात् यदि प्रमात्व और ज्ञानत्व—दोनों का एक ही प्रयोजक है, तब तो ज्ञानत्व जहाँ-जहाँ रहेगा, वहाँ-वहाँ प्रमात्व भी रहेगा, किन्तु अप्रमा में ज्ञानत्व के रहने पर भी प्रमात्व नहीं रहता। अतः मानना होगा कि प्रमात्व का प्रयोजक, ज्ञानत्व के प्रयोजक से भिन्न है )। यदि कहें कि ज्ञान सामग्री का ही निरूपण सम्भव नहीं, अतः उससे अतिरिक्त हेतु की अधीनता प्रमा में कैसे सिद्ध होगी ? तब तो अप्रमा-गत ( वेदान्तिसम्मत ) परतस्त्व से भी हाथ धोना पड़ेगा, क्योंकि दोष विशिष्ट ज्ञान-सामग्री की जन्यता को ही परतस्त्व माना गया है, अतः वह ( अप्रमा-गत परतस्त्व ) भी ज्ञान-सामग्री के निरूपण से ही निरूपणीय है। इस प्रकार प्रमा की उत्पत्ति में स्वतस्त्व नहीं बन सकता।

और न ज्ञप्ति में ही। यदि मानें तो नीलविषयक प्रमा-वृत्ति प्रमात्व का, क्या नील ज्ञान से ही प्रकाशित होना स्वतस्त्व कहा जाता है ? या नील-ज्ञान के ग्राहक मात्र से गृहीत होना ? प्रथम पक्ष युक्त नहीं, क्योंकि वही ज्ञान, स्वनिष्ठ प्रमात्व का प्रकाशक नहीं हो सकता। अर्थात् जो यह नील-

**यदेतन्नीलप्रकाशनप्रत्यक्षं तन्नीलं प्रति तावत्प्रत्यक्षमिन्द्रियार्थसंनिकर्षोत्पन्नत्वात्। स्वप्रामाण्य-परिच्छित्तौ तु कथ तत्प्रमाणम् ? तस्य बहिरिन्द्रियैरसन्निकर्षात्। अपि च तत्प्रत्यक्ष विज्ञान-स्यैव प्रामाण्य गृह्णीयात् ? उत तत्फलस्य ? नाद्य , ज्ञानस्य फललिङ्गानुमेयत्वेन तस्याप्रत्यक्ष-तया तत्प्रामाण्यस्यापि प्रत्यक्षतानुपपत्ते । फलस्यापि स्वप्रकाशतया बाह्येन्द्रियाविषयत्वात्, तद्गतयथार्थत्वलक्षणप्रामाण्यस्यापि बाह्येन्द्रियप्रत्यक्षविषयत्वानुपपत्ते। नापि द्वितीय , ज्ञानग्राहकमात्रग्राह्यत्वे प्रामाण्यस्य क्वचिदपि ज्ञाने प्रमाणमप्रमाणं वेति संशयाभावप्रसङ्गात्।**

दिना, तत्र बहिरिन्द्रियग्राह्यत्व प्रामाण्यस्यान्तर्धर्मत्वादेवासम्भवीत्याह—**तस्येति**। नापि मानसत्वम्। तदा हि प्रामाण्यस्य मनःसंनिकर्षसमये तत्सत्त्वार्थं तदाश्रयज्ञानस्यापि सत्त्व वक्तव्यम्, तथा च न तदेव ज्ञान स्वाश्रितप्रामाण्येन्द्रियसन्निकर्षाद् उत्पत्तुमर्हति, सिद्धस्वभावात्। ज्ञानान्तरस्योत्पत्तौ तु परतःप्रामाण्य-प्रसक्तिरिति, लिङ्गादिजन्यत्वाभावाच्च नानुमित्यादिरूपताशङ्कापि। किं चेद् प्रामाण्यमिति वा तत्तेन गृह्यते तत्प्रामाण्यमिति वा। आद्ये ज्ञाननिष्ठतया अग्रहणात् गृहीत तस्मिन् संशयप्रसङ्ग[1]। द्वितीये स्वविशेषित-प्रामाण्यग्रहणे स्वग्रहापत्ति.। अपि च यथातथा भवतु, तत्तु कस्य प्रामाण्य गृह्णातीति भाट्टं प्रति विकल्प-यति—**अपि चेत्यादिना**। तत्फल प्राकट्यम्, प्राकट्यलिङ्गानुमेय विज्ञान भाट्टैरभ्युपगत। न चाप्रत्य-क्षगत प्रामाण्यं भवितु प्रत्यक्षमर्हति। न च स्पर्शशब्दादितुल्यता जातित्वात्। जातेरेव व्यक्तिप्रत्यक्ष-तानियतप्रत्यक्षत्वम्, वक्ष्यते च जातित्वमतमनन्तरमेवेति भावः। फलगतप्रामाण्यग्रहणपक्षेऽपि किं बहिरि-न्द्रियेण ? आन्तरेण वा ? नाद्य इत्याह—**फलस्यापीति**। अर्थनिष्ठत्वादेव नान्तरप्रत्यक्षत्वमपि। यदि कश्चिदात्मनिष्ठत्व मन्वीत सुचरितमिश्रमतानुसारेण तथापि स्वप्रकाशत्वादेवाविषयत्वे तद्गतप्रामाण्यमविषय' इत्यपि द्रष्टव्यम्। ज्ञानग्राहकादेव तत्प्रामाण्यग्रहण ज्ञप्तिस्वतस्त्वमिति द्वितीय पक्ष दूषयति—**नापि द्वितीय इति**। दृश्यते हि क्वचिज्ज्ञाने प्रतीतेऽपि प्रामाण्ये संशय', स न स्यात् ज्ञाननिश्चायकादेव तन्नि-श्चयप्राप्तेरित्यर्थः। तत्र ज्ञानग्राहकमात्रग्राह्यत्वेऽप्युपपन्न' संदेह ज्ञानगततदर्थविशेषितत्वस्य ज्ञानग्राहक-मात्रग्राह्यत्वेऽपि तत्र संदेहदर्शनादत' प्रशिथिलमूलस्तर्क. हेतुश्च सव्यभिचार इत्योदयन परतस्त्वानुमान

**प्रत्यक्ष है, वह नीलरूप विषय के प्रति प्रमाण ( प्रकाशक ) माना जाता है, कारण यह है कि इन्द्रिय और नील का सन्निकर्ष होने पर वह प्रत्यक्ष उत्पन्न हुआ है , वह प्रत्यक्ष स्वगत प्रमात्व का प्रका-शक कैसे होगा ? प्रमात्व ( आन्तरिक ज्ञान का धर्म है, अत उस ) के साथ बाह्य इन्द्रिय का सन्निकर्ष नही हो सकता। यह भी जिज्ञासा होती है कि प्रत्यक्ष प्रमाण, ज्ञान-गत प्रमात्व का ग्राहक होता है ? या ज्ञान-जन्य ज्ञातता के प्रमात्व का ? प्रथम पक्ष युक्त नही , क्योकि भाट्ट के मत मे ज्ञान प्रत्यक्ष नही, अपितु ज्ञाततारूप फल के द्वारा अनुमेय माना जाता है—( अय घट , विषयता सम्बन्धेन ज्ञानवान्, ज्ञाततावत्त्वात् )। ज्ञान ही जब प्रत्यक्ष नही, तब उसका धर्मरूप प्रमात्व कैसे प्रत्यक्ष होगा ? ज्ञाततारूप फल भी स्वप्रकाश होने के कारण, बाह्य इन्द्रिय का विषय नही होता, अत ज्ञातता-गत प्रमात्व का भी बाह्य इन्द्रिय से प्रत्यक्ष नही बनता। द्वितीय ( ज्ञान-ग्राहक से ही प्रमात्व का ग्रहण ) भी उचित नही , क्योकि ज्ञान की ग्राहक सामग्री से ही यदि उस ज्ञान के प्रमात्व का ग्रहण हो जाय, तब किसी ज्ञान से भी 'यह ज्ञान प्रमा है ? या अप्रमा ?—इस प्रकार का संशय नही हो सकेगा। ( अर्थात् संशय की सामग्री है—धर्मी का ग्रहण, विशेषाग्रहण और विशेष कोटि का स्मरण। इस प्रकार ज्ञान मे प्रमात्व का संशय होने के लिए ज्ञानरूप धर्मी का ग्रहण, प्रमात्व और अप्रमात्व—इन दोनों का अग्रहण तथा दोनों कास्मरण। किन्तु यहाँ धर्मी की**

१. यथा वाय्वाकाशादिरूपाश्रयप्रत्यक्ष विनैव स्पर्शशब्दादीना प्रत्यक्ष तथा ज्ञानस्याप्रत्यक्षत्वेऽपि प्रमात्वं प्रत्यक्षं स्यादिति तुल्यता ( द्र०ता०परि०पृ० ४८ )। २. प्रामाण्यस्येत्यादि।

ननु ज्ञानग्राहकमात्रग्राह्यत्वेऽप्यर्थविशेषितत्वस्य सांशयिकत्ववत्प्रामाण्यस्यापि सांशयिकत्वमुपपद्यते। तथाहि—कुम्भज्ञानस्याम्भो विषयोऽभून्न वेति संशयाना दृश्यन्ते जना, साम्भसामनम्भसामपि कुम्भानामुपलम्भात्। एवं प्रामाण्येऽपि संशय. किं न स्यादिति चेत्, मैवम्, अम्भस कुम्भग्राहकसामग्रीमात्रग्राह्यत्वानङ्गीकारात्, अङ्गीकारे वाऽविशेषेण सकलकलशाना सलिलवत्त्वप्रसङ्गात्। तस्मान्नारिकेलफलान्तर्गतसलिलादिवद्भिन्नसामग्रीग्राह्यत्वादेव तत्र संशय। प्रामाण्ये तु न तथेति युक्तमुत्पश्याम। किं च विज्ञानग्राहकसामग्रीमात्रग्राह्यतायां प्रामाण्यस्य शुक्तिकारजतादिबुद्धिष्वपि तद्ग्रहप्रसङ्गः, सत्यम्, गृहीतमेव तत् बाधकादपनीयते। यथाहु —

'तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता।
अर्थान्यथात्वहेतूत्थदोषज्ञानै अपोद्यते ॥'इति। (श्लो० वा० २।५३)

तस्मादस्माकमिष्टप्रसञ्जनमिति चेत्, मैवम्, परत.प्रामाण्यप्रसङ्गात्। तथाहि—प्रसक्तमपि

---

केचिद्दूषयावभूवु, तत्प्रसङ्गादनूद्य दूषयति—**नन्वित्यादिना**। ज्ञानग्राहकग्राह्यत्वे समानेऽपि कुम्पसलिल्यार्भिन्नसामग्रीग्राह्यत्वात् सोदकेऽपि कुम्भे कुतश्चिन्निमित्तात्सलिलग्राहकसामग्रीवैकल्याद्विषयत्वापह्नवेन सम्भवत्यपि तावत्यंशे संशय., इह तु न तथा किंचिदस्ति संशयकारणमिति परिहरति—**मैवमिति**। बाधकान्तरमाह—**किं चेति**। पूर्वमुत्पत्तिस्वतस्त्वे विभ्रमेऽपि तत्सत्त्व स्यादित्युक्तम्, संप्रति ज्ञप्तिस्वतस्त्वे तदुच्यत इति न जामिता। उत्सर्गतः प्राप्तस्यापि तत्र तस्यापवादमाह स्वत प्रामाण्यवादी—**सत्यमिति**। सत्यमर्धाङ्गीकारे। अनङ्गीक्रियमाणांशमाह—**बाधकादिति**। बोधात्मकत्वेन, ज्ञानत्वादेव, शुक्तिरजतादिबुद्धेरपि प्रमाणता प्राप्ता गृहीता तथाप्यर्थान्यथात्वज्ञानै प्रतीतार्थस्यान्यथात्वबोधकैः बाधकज्ञानैर्हेतूत्थदोषज्ञानैर्हेतुगतदोषज्ञानैश्चापोद्यते बाध्यत इति भट्टोक्तेरर्थ, परतःप्रामाण्यमापादयन्ननिष्टतामेव समर्थयते—**मैवमिति**। प्राप्तप्रामाण्यस्यापि बाधकज्ञानादपवादे तत्सदसत्त्वाभ्यामप्रामाण्यप्रामाण्यव्यवस्थेति परत.प्रामाण्यापत्ति· प्राप्नोतीत्यर्थः।

---

ग्राहक सामग्री से ही प्रमात्व का ग्रहण हो जाता है, अत विशेष कोटि का ग्रहण हो जाने से सशय कैसे होगा ? )। यदि शङ्का हो कि विषय-विशेषितत्वरूप धर्म यद्यपि ज्ञान-ग्राहक मात्र से गृहीत होता है, फिर भी सशय होता है कि इस घट-ज्ञान का जल विषय हुआ ? कि नही ? क्योंकि सजल और निर्जल—दोनो प्रकार के घट उपलब्ध होते हैं। इसी प्रकार प्रकृत मे ज्ञान-ग्राहकमात्र-ग्राह्यत्व होने पर भी प्रमात्व मे सशय क्यो न होगा ? तो यह शका उचित न होगी, क्योंकि दृष्टान्त और दार्ष्टान्त का वैषम्य है—दृष्टान्त में सशय का विषय है–जल। और जल, घट-ज्ञान की ग्राहक सामग्री मात्र से ग्राह्य माना नहीं जाता। यदि घट-ग्राहक सामग्री से ही जल का ग्रहण मान ले, तब सभी घट, जलवाले ही हो जायँगे। इसलिए नारियल मे स्थित जल के समान सभी जल, घट-ग्राहक-सामग्री से भिन्न सामग्री से ग्राह्य है, फिर तो जल के विषय में सशय का होना उचित ही है। किन्तु प्रमात्व रूप दार्ष्टान्त मे ऐसा नही। दूसरी बात यह भी है कि ज्ञान-ग्राहक सामग्री मात्र से ग्राह्य मानने पर प्रमात्व का शुक्ति-रजत-ज्ञान मे भी ग्रहण होना चाहिए। यदि कहा जाय कि शुक्ति-रजत-ज्ञान मे प्रथमत' प्रमात्व का ग्रहण होता ही है, किन्तु पश्चात् बाधकज्ञान से उस प्रमात्व का अपनयन ( बाध ) होता है, जैसा कि कुमारिल भट्ट ने कहा है—'बोधरूप होने के कारण शुक्ति-रजत-बुद्धि मे भी यद्यपि प्रमात्व गृहीत होता है, तथापि पश्चात् अर्थान्यथात्वज्ञान (बाधकज्ञान) और हेतु गत दोषो के ज्ञान से बाधित हो जाता है।' अत. शुक्ति-रजत-ज्ञान मे प्रमात्व-ग्रहण की आपत्ति का इष्टापत्ति के रूप मे स्वागत है। तो यह कहना युक्तियुक्त न होगा, क्योंकि शुक्ति-रजत-ज्ञान मे गृहीत प्रमात्व का बाध मानने पर बाधक ज्ञानाभाव को भी प्रमात्व का व्यवस्थापक मान लिया गया,

प्रामाण्य रजतादिबुद्धिपु बाधकज्ञानादपनीयते इति वदता बाधकज्ञानाभावनिबन्धनमेव प्रामाण्यावधारणमभ्युपगत स्यात् ।

न च ज्ञप्तिस्वतस्त्वे मानमस्ति । ननु 'प्रमा स्वतो ज्ञायते परनिरपेक्षोत्पत्तिकत्वात् ज्ञानवत्', तथा 'प्रामाण्य स्वतो ज्ञायते अप्रामाण्येतरत्वे सति ज्ञानैकधर्मत्वात् ज्ञानत्ववत्' इत्यस्त्येवानुमानमिति चेत्, मैवम्, आद्यप्रयोगे परत प्रामाण्यवादिन प्रति हेतोरसिद्धे , दृष्टान्ताभावाच्च । न हि पक्षीकृता प्रमा विपक्षकुक्षिनिक्षिप्ताप्रमा च विहाय ज्ञानस्यापरा कोटिरस्ति, या दृष्टान्तपदवीमुपारोहेत् । द्वितीये च प्रयोगे प्राभाकरस्य स्वयप्रभत्वे ज्ञानैकधर्मे, भाट्टस्य च ज्ञाततानुमेयत्वधर्मे व्यभिचार । तयोर्ज्ञानैकधर्मत्वेऽपि ज्ञानग्राहकसामग्रीमात्रग्राह्यत्वाभावात् । अन्यथा तत्र वादिना विप्रतिपत्त्यभावप्रसक्ते । ज्ञप्तिपरतस्त्वे चानुमान न्यायकुसुमाञ्जलावाह स्म चोदयन 'प्रामाण्यं परतो ज्ञायते अनभ्यासदशाया सांशयिकत्वात् अप्रा-

ज्ञप्तिस्वतस्त्वानिरुक्तिमुक्त्वा प्रमाणमपि तत्राक्षिपति—**न चेति** । रत्नदीपावलीयमनुमानमुद्भावयति—**ननु प्रमेति । स्वतो ज्ञायत इति ।** ज्ञानज्ञापकमात्राज् ज्ञायते । **परनिरपेक्षेति ।** ज्ञानसामग्रीमात्रादुत्पन्नत्वादित्यर्थः । परतःप्रामाण्यवादिनः परनिरपेक्षोत्पत्तित्वं प्रमाया अप्रसिद्धमिति दूषयति—**मैवमिति ।** किं च प्रमाणाप्रमाणाभ्या द्वैराश्यमेव ज्ञानस्य । तत्र प्रमाणवर्ग पक्षः सर्व , इतरस्तु विपक्ष' ततो दृष्टान्तोऽपि नास्तीत्याह—**दृष्टान्तेति ।** अप्रामाण्येतरत्वे सति ज्ञानैकधर्मत्वादिति द्वितीयानुमानेऽपि गुरुमतभाट्टमतयोर्यथायथमनैकान्तिमाह—**द्वितीये चेति ।** ज्ञाततयानुमेय हि ज्ञान भाट्टमते ततो ज्ञाततानुमेयत्व नाम कश्चिज्ज्ञानस्य धर्मस्तस्मिन्नित्यर्थ. । ज्ञानसामग्रीमात्रजन्यत्वधर्मे च व्यभिचारो द्रष्टव्य । अथ किमिति तयोरपि न स्वतो ज्ञानमिति तत्राह—**अन्यथेति ।** यदि हि ज्ञानग्राहकादेव तयोरपि ज्ञान स्यात्तर्हि ज्ञानवदेव तयोरपि न विवादो वादिना स्यात्, विवदन्ते चेत्यर्थ । सांशयिकत्वादित्युक्ते भागासिद्धि स्यात् , न हि करतलस्पर्शवस्त्रादिप्रत्यक्षे मुग्धोऽपि सदिग्धे । तत उक्तम् —**अनभ्यासदशायामिति ।** विपक्षे बाधकस्तर्क इति सम्बन्ध. ।

जो कि ज्ञान-ग्राहक सामग्री से भिन्न ( पर ) है, अत. परत प्रामाण्यवाद स्वीकार करना पड़ेगा ।

ज्ञप्ति-स्वतस्त्व मे कोई प्रमाण भी नही । यदि शङ्का हो कि 'प्रमा स्वत ज्ञात होती है, परनिरपेक्षोत्पत्तिक होने के कारण, जैसे-ज्ञान ।' एव 'प्रमात्व स्वत ज्ञात होता है, अप्रमात्व से भिन्न तथा ज्ञानमात्र का धर्म होने से, जैसे-ज्ञानत्व ।' इस प्रकार अनुमान प्रमाण है । तो यह शङ्का युक्त न होगी , क्योकि प्रथम प्रयोग मे परत' प्रामाण्य-वादी के प्रति प्रमा मे 'परनिरपेक्षोत्पत्तित्व' रूप हेतु ही असिद्ध है और दृष्टान्त का भी अभाव है , क्योकि ज्ञान की दो ही कोटियाँ है-प्रमा और अप्रमा । उनमे समस्त प्रमा पक्ष के और अप्रमा विपक्ष के अन्तर्गत आ जाती है । इनको छोड़कर और कोई ज्ञान की तीसरी कोटि है ही नही, जिसे दृष्टान्त बनाया जाता । द्वितीय अनुमान प्रयोग का 'अप्रमात्वेतरत्वे सति ज्ञानैकधर्मत्व' हेतु प्राभाकर के ज्ञानमात्र-वृत्ति 'स्वयप्रकाशत्व' धर्म मे और भाट्ट के 'ज्ञाततानुमेयत्व' धर्म मे व्यभिचारी है , क्योकि उक्त दोनो धर्म ज्ञानमात्र मे वृत्ति तो है , किन्तु ज्ञान-ग्राहक सामग्री मात्र से ग्राह्य नहीं । अन्यथा ( ज्ञान-ग्राहक सामग्रीमात्र से उक्त धर्मों को ग्राह्य मानने पर ) उक्त धर्मों के विषय मे वैसे ही विवाद नही होना चाहिए, जैसे कि ज्ञान के विषय में । किन्तु ज्ञान मे स्वयप्रकाशत्व और ज्ञाततानुपेयत्व के विषय मे वादी विवाद करते है । ज्ञप्ति में परतस्त्व सिद्ध करने के लिए न्यायकुसुमाञ्जलि ( स्तब २ ) मे उदयनाचार्य ने अनुमान प्रयोग किया है—'प्रमात्व परत ज्ञात होता है, अनभ्यास दशा मे सांशयिक होने के कारण ।' [ अर्थात् जिस विषय में कई बार प्रवृत्ति हो चुकी है, वहाँ सफल प्रवृत्ति के आधार पर प्रमात्व का निश्चय हो

माण्यवत् ।' विपक्षे प्रामाण्ये संशयो न स्यात् ज्ञाननिश्चायकादेव तन्निश्चयप्राप्तेर्बाधकस्तर्कः । ननु नैवमनुमानमुदेति, धर्मिहेत्वोरसिद्धेः । तथाहि—प्रामाण्यं प्रवृत्तिसामर्थ्यलिङ्गावगम्यं भवद्भिरुपगम्यते, तस्य च लिङ्गस्य प्रवृत्तिः प्रामाण्ये संशयपूर्विका । असंदिग्धे सिषाधयिषाभावात्, अनुमानाप्रवृत्तेः । तत्संशयश्च क्वचिन्निश्चयाधीन इति प्रामाण्ये संशयनिश्चययोरन्योन्याश्रयादनवस्थानाद्वा नैकमपि सिद्ध्येदिति चेत्, मैवम्, विकल्पासहत्वात् । किं स्वार्थानुमानमसंदिग्धे न प्रवर्तते ? किंवा परार्थम् ? नाद्य, सद्य समुन्मीलितविलोचनस्य शिखरिशिखरविपरिवर्तमानधूमलेखावलोकनसमनन्तरमप्रत्यूहं धूमध्वजमनीषासमुन्मेषात् । नापि द्वितीयः, विपर्यस्तमपि प्रति प्रतिवादिनमनुमानप्रयोगोपगमात् । अन्यथा जल्पवितण्डयो

यदत्र रत्नदीपावल्या दूषणमुक्तं तदनुवदति—ननु नैवमिति । प्रवृत्तिसामर्थ्येति । 'विमतमर्थाव्यभिचारि समर्थप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथा ज्ञानाभासः' इति व्यतिरेकिणाऽनुमानादित्यन्वयिना वा । अनभ्यासदशापन्नेषु प्रामाण्यमनुमीयते संशयाच्च प्रवृत्तिः, अभ्यासदशापन्नेषु तु तज्जातीयत्वलिङ्गेन इत्यभ्युपेयत इत्यर्थः । क्वचिदनिर्णीतस्य साधारणधर्मदर्शनानुपस्थापिततया संशयकोटिताऽभावात् तन्निर्णयस्य च संशयसापेक्षानुमानाधीनत्वात्संशयनिर्णययोः परस्परसापेक्षत्वे परस्पराश्रयात् संशयान्तरनिर्णयान्तरापेक्षायामनवस्थानाच्च नैकमपि सिद्ध्यति, लोकसिद्धं च किंचिद्रूपं सर्वत्र प्रमाणतः सिद्धमभिवाञ्छतो नास्ति । अतो निर्णीतप्रामाण्याभावाद्धर्म्यभावः संशयाभावाच्च हेत्वभाव इति खण्डलार्थः । अत्र विकल्पपूर्वकं संशयव्यतिरेकेणापि निश्चयमुपपादयन्धर्मिहेतू समर्थयते—मैवमित्यादिना । शिखरी पर्वतः तस्य शिखरमग्रिमभागः, अप्रत्यूहं निर्विघ्नम्, धूमध्वजो वह्निर्मनीषा बुद्धिः, स्वार्थानुमानं च हितसाधनादिज्ञानप्रामाण्यानुमानमित्यर्थः । परार्थानुमानेऽपि न संशयपूर्वकत्वनियमः, विपर्यस्तं प्रत्यपि प्रयोगादित्याह—विपर्यस्तमिति । जल्पवितण्डयोरिति । नहि तत्र संदिहानः प्रतिवादी, यं प्रत्यनुमानं प्रयुज्येत, अपि तु विपर्यस्तः । तथा चाह वाचस्पतिः—'निश्चितौ हि वादं कुरुतः' इति । वादे तु स्वत एव

जाने से संशय नहीं होता, किन्तु जहाँ प्रथम बार ही प्रवृत्ति हो रही है, वहाँ अवश्य प्रमात्व में संशय होता है । इसका कारण यही है कि ज्ञान-ग्राहक से भिन्न प्रमात्व-ग्राहक सामग्री है, जिसकी उपस्थिति न होने से प्रमात्व का ग्रहण नहीं हुआ, अतः उसमें सन्देह है ] । विपक्ष में बाधक तर्क यह है—'यदि ज्ञान के निश्चायक से ही प्रमात्व का निश्चय होता, तो प्रमात्व में संशय नहीं होता ।' यदि शङ्का हो कि यह अनुमान बन नहीं सकता, क्योंकि इसके धर्मी ( पक्ष ) और हेतु ही असिद्ध है—प्रमात्व को आप सफल प्रवृत्तिरूप लिङ्ग से अनुमेय मानते हैं । उस लिङ्ग की प्रमात्व में प्रवृत्ति तभी होगी, जब कि प्रमात्व में संशय हो, क्यों असन्दिग्ध साध्य में सिषाधयिषा ( सिद्धि करने की इच्छा ) न होने से अनुमान की प्रवृत्ति नहीं हो सकती । वह प्रमात्व का संशय कहीं निश्चय के अधीन है ( अर्थात् प्रमात्व का कहीं यदि निश्चय हो, तभी उसका संशय बनेगा, क्योंकि प्रमात्व और प्रमात्वाभावरूप दोनों कोटियों का स्मरण, संशय में अपेक्षित है । स्मरण संस्कारों की और संस्कार निश्चय की अपेक्षा करते हैं ) । इस प्रकार प्रमात्व के संशय और निश्चय में अन्योऽन्याश्रयता और अनवस्था दोषों के आ जाने से किसी की सिद्धि नहीं हो सकती । तो यह शङ्का ठीक नहीं, क्योंकि संशय के बिना स्वार्थानुमान नहीं प्रवृत्त हो सकता ? या परार्थानुमान ? स्वार्थानुमान में तो संशय की कोई अपेक्षा नहीं—देखा जाता है कि नेत्र खोलते ही पर्वत-श्रृङ्गस्थ धूम-स्तम्भ देखा और अनन्तर क्षण में ही अग्नि की अनुमिति हो जाती है । परार्थानुमान में भी संशय की आवश्यकता नहीं—जिसको विपरीत कोटि का निश्चय है ( किसी कोटि का भी निश्चय हो जाने से संशय नहीं होता ) ऐसे प्रतिवादी के प्रति भी अनुमान-प्रयोग किया जाता है । अन्यथा जल्प और वितण्डा में

प्रमाणतर्काभ्यां स्वपरपक्षसाधनोपालम्भासंभवात्। 'सदिग्धे न्यायः प्रवर्त्तते'इति वचनस्यायोगव्यवच्छेदपरत्वात्, क्वचित्साधकबाधकप्रमाणानुदयात्संदेहे सति न्यायप्रवृत्त्युपपत्तेः। न चानभ्यासदशायामिति विशेषणस्य वैयर्थ्यम्, असिद्धिवारकत्वात्। न च व्यभिचारवारकमेव हेतोर्विशेषणमिति नियमः, चक्षुस्तैजसं रूपादिषु मध्ये रूपस्यैवाभिव्यञ्जकत्वात्, प्रदीपवदित्यादिचिरंतनानुमानेष्वसिद्धिनिवारकाणां विशेषणाना बहुलमुपलम्भात्। अपि चासिद्धिनिवारणार्थेऽपि विशेषणोपादाने न दोषं पश्याम। क्षित्यादिकमकर्तृकं शरीर्यजन्यत्वादाकाश-

वाहार्यो वा सशयोऽस्ति नानयोरित्यर्थः। ननु 'सदिग्धे न्याय. प्रवर्तते' इति वृद्धवचनस्य तर्हि का गतिरित्यत आह—सदिग्धे इति। नैतत्सदेहाभावेऽनुमाननिवृत्तिपरम्, अपि त्वनुमानस्थले सदेहोऽप्यस्तीत्ययोगव्यावृत्तिपरमित्यर्थः। अयोगव्यावृत्तमेवोपपादयति—क्वचिदिति। यच्च तैरेवानभ्यासदशायामिति विशेषण व्यर्थं व्यभिचारानिवारकत्वादसिद्धिपरिहाराय च विशेषणप्रक्षेपायोगादित्युक्तम्, अनभ्यासदशायामित्यादिना तदनूद्य दूषयति—न चानभ्यासेत्यादिना। रूपव्यञ्जकत्वादित्युक्ते मनस्यनैकान्तिकता तदर्थं रुपस्यैवेत्युक्तम्, तथा चासिद्धिः द्रव्यसामान्यादेरपि व्यञ्जकत्वाच्चक्षुषस्तदर्थं रूपादिषु मध्य इत्युक्तम्, यद्यपि रसाग्राहकत्वे सति रूपव्यञ्जकत्वादित्युक्त एव मनस्यपि न व्यभिचार., तथाप्यसिद्धिपरिहारार्थमपि भवति विशेषणमिति दर्शयितुमिद चिरन्तनैर्विशेषण प्रक्षिप्तमिति भाव। तत्किमनुपपन्नो व्याप्तवचनेनैव साध्योऽयमर्थ इति मत्वा त प्रत्यनुपपत्त्यभाव दर्शयति—अपि चेत्यादिना। दोष शङ्कयति—क्षित्यादिकमिति। अत्र ह्यजन्यत्वादित्युक्तेऽङ्कुरादेर्जन्यत्वादसिद्धि. स्यात्तदर्थं शरीर्यजन्यत्वादित्युक्तम्। तदत्र यथाऽसिद्धिपरिहाराय विशेषणे कृते व्याप्यत्वासिद्धिः अजन्यत्वस्यैवाकर्तृकत्वोपाधित्वात्तद्वदिहापि स्यादित्यर्थः। न तत्रासिद्धिपरिहारप्रयोजनविशेषणवत्वाद्व्याप्यत्वासिद्धिः, किं तर्हि तदेकदेशस्योपाधित्वसभवात्। नचात्र

प्रमाण और तर्क के आधार पर स्वपक्ष-साधन तथा परपक्ष-दूषण सम्भव न हो सकेगा। यह जो कहा था कि सन्दिग्ध विषय के लिए ही अनुमान-प्रयोग होता है, उसका तात्पर्य अयोग-व्यवच्छेद मात्र मे है ( अर्थात् "सन्दिग्धे न्याय· प्रवर्तते"—इस न्याय का तात्पर्य इतना ही है कि अनुमान स्थल पर सन्देह भी होता है )। जैसे कि जहाँ स्वपक्ष-साधक और परपक्ष-बाधक प्रमाण का उदय नही हुआ, वहाँ सन्देह रहता ही है, अत वहाँ उक्त न्याय चरितार्थ हो जाता है। हेतु का 'अनभ्यासदशायाम्'—यह विशेषण व्यर्थ नही, असिद्धि-वारक है ( अर्थात् जिस ज्ञान के आधार पर कई बार सफल प्रवृत्ति हो चुकी है, उसके प्रमात्व मे सशय नही होता, अत प्रमात्वरूप पक्ष मे 'सांशयिकत्व' हेतु न रहने से स्वरूपासिद्धि होती है, उसे 'अनभ्यासदशाया' कहकर हटाया जाता है। फलत प्राथमिक ज्ञान-गत प्रमात्व मे ही हेतु रखना अभीष्ट है, प्रमात्वमात्र मे नही )। यदि कहें कि व्यभिचार-वारक विशेषण ही सार्थक होता है। तो ऐसा नही कह सकते, क्योकि 'चक्षुरिन्द्रिय, तैजस है, रूपादि गुणो मे केवल रूपमात्र का व्यञ्जक होने से, जैसे—प्रदीप' इस प्रकार के प्राचीन-अनुमानो मे असिद्धि-वारक "रूपादिषु मध्ये"—आदि विशेषणो की सार्थकता प्रचुरमात्रा मे पाई जाती है। ( अर्थात् "रूपस्यैव व्यञ्जकत्वात्"—इतना ही हेतु रहने पर मे असिद्धि होती है, क्योकि चक्षु केवल रूप का ही ग्राहक नही, अपितु घटादि द्रव्य का ग्राहक भी है, अत कहा "रूपादिषु मध्ये।" अब अवधारण का स्वरूप हो गया—'रूपादिगुणो के मध्य मे रूप का ही प्रकाशक है।' द्रव्य, गुण नही कि उसकी भी व्यावृत्ति हो जाय )। असिद्धि-वारणार्थ विशेषण देने मे किसी प्रकार का दोष भी नहीं दिखाई देता ( यदि कहें कि 'पृथिव्यादि अकर्तृक है, शरीरिकर्ता से अजन्य होने के कारण, जैसे—आकाश—इत्यादि प्रयोगो मे 'शरीरि' विशेषण व्यर्थ होने से व्यर्थ विशेषण-घटित हेतु मे जैसे व्याप्यत्वासिद्धि होती है, वैसे ही प्रकृत मे भी व्याप्यत्वासिद्धि दोष होगा। तो ऐसा नही कहना

वदित्यादाविव व्याप्यत्वासिद्धिरिति चेत्, मैवम्, तत्राकर्तृकत्वे साध्ये तदेकदेशस्याजन्यत्वस्यैवोपाधितया विशिष्टस्य व्याप्यत्वासिद्धेः। उक्तं हि—'एकामसिद्धिं परिहरतो द्वितीयाऽसिसिद्धिरापद्यते' इति। प्रकृते तु परतो ज्ञाने न सांशयिकत्वमुपाधिः; स्फीतालोकविपरिवर्तिनां परतो ज्ञायमानानामपि घटादीनां सांशयिकत्वादर्शनात्। ननु प्रामाण्यस्य परतो ज्ञानेऽनवस्था, तत्तत्प्रामाण्यग्रहणायान्यस्यान्यस्य प्रमाणस्यापेक्षणादतः प्रतिकूलतर्कपराहतं परतः प्रामाण्यानुमानमितिचेत्, मैवम्, मानान्तरस्यावश्यभावनियमाभावात्।

न च स्फुरत एव मानस्यार्थनिश्चायकत्वमन्यथा ज्ञानेऽप्यनन्तरं सदेहापत्तेरिति वाच्यम्, ज्ञाततयानुमेयं ज्ञानमिति मते निलीनस्यापि ज्ञानस्यार्थनिश्चायकत्वात्। स्वयं वेदनं संवेदनमिति वदतः प्राभाकरस्यापि मते प्रामाण्यस्य तद्धर्मस्य तद्गतगुणत्वादेरिव न स्वतः स्फुरणम्,

तथा सांशयिकत्वस्यैकदेशस्योपाधित्वमिति परिहरति—**मैवमित्यादिना**। **एकामसिद्धिमिति**। स्वरूपासिद्धिं परिहरतो व्याप्यत्वासिद्धिरिति बौद्धधिक्कारे उदयनेनोक्तमित्यर्थः। **परतो ज्ञायमानानामिति**। ज्ञानग्राहकातिरिक्तग्राह्याणामित्यर्थः। प्रकृतानुमानस्य तर्कपराहतिं शङ्कते—**ननु प्रामाण्यस्येति**। येन हि प्रमाणेन प्रार्थमिवस्य प्रामाण्य गृह्यते तत्प्रामाण्यमपि प्रमाणान्तरेणैवमुत्तरत्रापीत्यनवस्थेत्यर्थः। उक्तं च वाचस्पतिमिश्रैः—'परं हि तद्गोचरं वा ज्ञानमभ्युपेयते अर्थक्रियानिर्भासं वा ज्ञानं तद्गोचरं नान्तरीयकार्थान्तरदर्शनं वा तत्सर्वं स्वयमबोधितप्रामाण्यमाकुलं सत्कथं प्रवर्तकज्ञानं पूर्वमनाकुलये'दिति।

ननु कथमवश्यभावनियमाभावः यावता स्फुरत एव प्रामाणस्य स्वविषयनिश्चायकत्वनियमात् तदुत्तरप्रमाणानामपि भवितव्यमेव स्फुरणेनेति, नेत्याह—**न च स्फुरत एवेति**। न च वाच्यमित्युक्तं तत्र हेतुः—**ज्ञाततयेति**। स्वतःप्रामाण्येपि समानैवानस्थेत्यपि द्रष्टव्यम्। भवतु भाट्टान्प्रति अज्ञायमानप्रकाशहेतुत्वावादिनो व्यभिचारः, स्वप्रकाशवादिनं प्रभाकरं प्रति किं वक्तव्यमित्याह—**प्राभाकरस्यापीति**। तत्र

चाहिए, क्योंकि "शरीरजन्यत्वात्" में शरीरी विशेषण असिद्धि-वारक होने पर भी व्यर्थ है और व्यर्थविशेषण-घटित हेतु मे व्याप्यत्वासिद्धि होती है—यह बात नही, अपितु वहाँ हेतु का एक देश 'अजन्यत्व' उपाधि है ( 'अजन्यत्व' अकर्तृकत्वरूप साध्य का व्यापक और शरीर्यजन्यत्व रूप साधन का अव्यापक है, क्योकि विद्युदादि में शरीर्यजन्यत्व रहने पर भी अजन्यत्व नही रहता, अतः अजन्यत्व उपाधि है ) अतः शरीर्यजन्यत्व हेतु सोपाधिक हो जाने से व्याप्यत्वासिद्ध है। उदयनाचार्य ने (आ त वि पृ ८३४) कहा है—'एक असिद्धि (स्वरूपासिद्धि) का परिहार करने के लिए शरीर्यादि विशेषण देने पर द्वितीय असिद्धि (व्याप्यत्वासिद्धि) प्राप्त होती है।' प्रकृत "अनभ्यासदशायां सांशयिकत्व" हेतु मे एक देश 'सांशयिकत्व' उपाधि नही, क्योकि परत ज्ञायमान ( ज्ञान-ग्राहक सामग्री-भिन्न सामग्री से गृहीत ) घटादि मे सांशयिकत्व नही देखा जाता ( अत साध्य का व्यापक न होने से 'सांशयिकत्व' धर्म, उपाधि नही बन सकता )। कोई शङ्का कर सकता है कि 'यदि प्रामाण्य परतः ज्ञात होगा, तब प्रथम प्रमाण का प्रामाण्य द्वितीय प्रमाण से, द्वितीय का तृतीय से और तृतीय का चतुर्थ से ग्रहण मानने पर अनवस्था होगी'—इस प्रकार की प्रतिकूल तर्क से पराहत प्रकृत अनुमान है। किन्तु यह शङ्का युक्त नही, क्योकि पूर्व-पूर्व प्रामाण्य का उत्तरोत्तर प्रमाण से ग्रहण होना अवश्यंभावी नहीं ( द्र न्या. कु.स्तब २ पृ. १३ )। यदि कहा जाय कि ज्ञायमान प्रमाण ही अपने विषय का निश्चायक होता है ( अत उत्तरोत्तर प्रमाण की अपेक्षा होने से अनवस्था अवश्य है )। अन्यथा ( अज्ञात प्रमाण को भी विषय का निश्चायक मानने पर ) ज्ञान होने के अनन्तर उस ज्ञान मे भी सन्देह होना चाहिए ( मुझे ज्ञान हुआ ? कि नही ? )। तो यह कहना उचित नही, क्योकि भाट्टसिद्धान्त में ज्ञान, सदैव ज्ञातता से अनुमेय होता है, अतः ज्ञान प्रथमत अगृहीत होकर ही विषय का निश्चायक होता है। विषय-निश्चायक प्रमाण ज्ञात ही हो—ऐसा नियम नही। ज्ञान को स्वयं

तस्यापि संवेदनवत्स्वयंप्रभावत्वापत्तेः। तथात्वे चाप्रमात्वस्यापि स्वत एव स्फुरणप्रसङ्गात्, ततश्चाप्रामाण्य परत प्रतीयते इति स्वसिद्धान्तभङ्गप्रसङ्ग'। वेदान्तिनां च प्रामाण्यस्य साक्षिवेद्यत्वेन स्फुरणनियमादिदं प्रमाणमप्रमाणं वेति सन्देहो न भवेत्। न च प्रमाण स्वत एव फलं जनयति, हानोपादानोपेक्षालक्षणस्य त्रिविधस्यापि फलस्य वस्तुज्ञानातिरिक्तगुणदोषमाध्यस्थ्यदर्शनपूर्वकत्वाभ्युपगमात्, तस्माद्वेदान्ता स्वत एव प्रमाणमिति न प्रामाणिकप्रतीतिपथमवतरति।

अत्राभिदध्महे—न तावत्प्रमाया. स्वतस्त्वानिरुक्तिः, यत'—

आहुर्विज्ञानसामग्रीजन्यत्वे सत्यजन्यता।
तदन्यत प्रमायास्तत्स्वतस्त्वमिति तद्विद.॥२१॥

विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वं प्रमाया स्वतस्त्व नाम। न चैतल्लक्षणमव्यापकम्, सर्वप्रमाणानुगमात्। न चाजन्यत्वादव्याप्तिरीश्वरज्ञाने, तस्याजन्यत्वेऽपि ज्ञानसा-

---

किं ज्ञानगत प्रामाण्य अर्थप्रकाशनसमसमये ज्ञानेन स्फुरति? स्वत एव वा? न तावज्ज्ञानेन, पूर्वमेव निरस्तत्वात्। द्वितीय निषेधति—**न स्वत स्फुरणमिति**। कुतो न स्वतःस्फुरणमिति तत्राह—**तस्यापीति**। ततोऽपि वा किमनिष्टमिति तत्राह—**तथात्वे चेति**। तथाप्यपरितुष्यन्त प्रत्याह—**ततश्चेति**। ननु साक्षिवेद्यवृत्तिज्ञानवादिना तत्समये च साक्षिणैव प्रामाण्यमपि स्फुरतीति वदतामखण्डितैव व्याप्तिरित्यत आह—**वेदान्तिना चेति**। तेषा सन्देहानुपपत्तिरेव बाधिकेत्यर्थ। एवमुत्पत्तौ ज्ञप्तौ च स्वतस्त्वं दूषयित्वा परतस्त्व समर्थितम्, इदानी व्यवहृतावपि तदुभय व्याकरोति—**न च प्रमाणमिति**। नच वस्तुज्ञानमात्राद्धानादयोऽपि तु इष्टसाधनतादिज्ञानात्ततश्च घटज्ञानस्येष्टसाधनतादिज्ञानाधीनव्यवहारजनकत्वं तस्य व्यवहृतौ परतस्त्वमित्यर्थ.।

लक्षण तावत्समर्थयते—**न तावदिति**। श्लोकेन लक्षणं संगृह्णाति—**आहुरित्यादिना**। यद्विज्ञानसामग्रीजन्यत्वे सति तदन्यतः तदतिरिक्तसामग्रीतोऽजन्यता प्रमायास्तत्स्वतस्त्व प्रमास्वतस्त्वमिति तद्विद आहुरिति योजना। लक्षणवाक्य विवृणोति—**विज्ञानेति**। विज्ञानसामग्रीजन्यत्वे सति विज्ञानसामग्रीत्वानधिकरणजन्यत्वानधिकरणत्व स्वतस्त्वमित्यर्थ। विज्ञानसामग्रीजन्यत्वमप्रामाण्येऽप्यस्तीति परत.प्रामाण्यवादिभिश्च स्वीक्रियत इत्यतिव्याप्तिरर्थान्तरता वा स्यात् तन्निवृत्त्यर्थ तदतिरिक्तहेत्वजन्यत्वमित्युक्तम्। ननु कथ नाव्यापक यावतश्वरज्ञानेऽजन्येऽव्याप्ति' विशेषणाभावादिति तत्राह—**न चाजन्यत्वादिति**।

---

प्रकाश मानने वाले प्रभाकर के मत में भी प्रमा ज्ञान का प्रमात्व धर्म, गुणत्वादि धर्मों के ही समान स्वत स्फुरित नही हो सकता, नही तो वह भी अपने आश्रय-ज्ञान के ही समान स्वयप्रकाश हो जायगा। प्रमात्व धर्म को स्वय प्रकाश मान लेने पर 'अप्रमात्व' धर्म को भी स्वयं प्रकाश मानना पड़ेगा। तब तो अप्रमात्व परत. गृहीत होता है—यह सिद्धान्त ही भङ्ग हो जाता है। वेदान्त-मत में प्रमात्व साक्षि-भास्य होता है। प्रमात्व को नियमत स्वय प्रकाश साक्षी से ग्रहण होने पर 'यह प्रमा है? या नही? यह सन्देह नही होना चाहिए। (किन्तु सन्देह होता है, अत प्रमात्व का स्वत ग्रहण किसी के मतमे नही बन सकता। अगत्या परत. प्रमात्व-ग्रहण मानना होगा, भले ही अनवस्था हो)। प्रमाण स्वत व्यवहार रूप फल भी उत्पन्न नहीं कर सकता। व्यवहार तीन प्रकार का होता है—हान (त्याग) उपादान (ग्रहण) और उपेक्षा। वस्तु के ज्ञान मात्र से तीनो प्रकार का व्यवहार पैदा नही होता, अपि तु वस्तुमे दोष-दर्शन से हान, गुण-दर्शन से उपादान और ताटस्थ्य-दर्शन से उपेक्षा की उत्पत्ति मानी जाती है। अत. 'वेदान्त वाक्य स्वत. प्रमाण है'—यह सिद्धान्त प्रामाणिक नही।

उत्तर पक्ष—प्रमात्व का लक्षण अनुपपन्न नहीं, क्योकि प्रमा मे जो विज्ञान-जनक सामग्री की जन्यता विज्ञान-जनक-सामग्री से अतिरिक्त की अजन्यता है, उसी को ही प्रमात्व-गत स्वतस्त्व

मग्रीजन्यत्वे सत्यतिरिक्तकारणजन्यत्वलक्षणविशिष्टधर्मवत्त्वाभावात् । नाप्यतिव्यापकम्; अप्रमाया विज्ञानसामग्रीजन्यत्वे सत्यतिरिक्तहेतुजन्यत्वात् । अस्ति चेह मानमनुमानम्, तथा हि—

प्रमा विज्ञानसामग्रीजन्यत्वे सति नान्यतः ।
जायते व्यतिरिक्तत्वादप्रमातः पटादिवत् ॥२२॥

प्रमा विज्ञानसामग्रीजन्यत्वे सत्यतिरिक्तजन्या न भवति अप्रमातिरिक्तत्वात् पटादिवत् । न च ज्ञानत्वानधिकरणत्वमुपाधिः; ईश्वरज्ञाने साध्याव्याप्तेः । नापि ज्ञानसामग्र्यजन्यत्वमुपाधिः, यज्ज्ञानसामग्रीजन्यं तज्ज्ञानसामग्रीजन्यत्वे सत्यतिरिक्तजन्यमप्रमाणवदिति व्यतिरेकव्याप्तावप्रमात्वस्यैवोपाधित्वात् । विपक्षे च विज्ञानसामग्रीमात्रादेव प्रमोत्पत्तिसंभवे तदतिरिक्तस्य गुणस्य दोषाभावस्य वा कारणत्वकल्पनागौरवप्रसङ्गो बाधकस्तर्कः । एतेन—'प्रमा विज्ञान-

विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तसामग्रीजन्यत्व यदप्रमासु प्रसिद्ध तदत्यन्ताभाववत्त्व हि लक्षणं एतच्चेश्वरज्ञानेऽस्तीति नाव्यातिरित्यर्थ । अत्र चाप्रमाव्यतिरिक्त सर्व लक्ष्यसमानयोगक्षेमम्, पराभिमतपरतस्त्वव्यतिरिक्तस्वतस्त्वस्य विवक्षितत्वात् । श्लोकविवरणयो प्रमापदस्य प्रकृतोपयोगमात्रनिबन्धनत्वात् । अत एव वक्ष्यमाणानुमाने पटादीना सपक्षीकरणम् । एव च सति पटादिष्वव्याप्तिपरिहारार्थं विज्ञानसामग्रीजन्यत्वग्रहणमिति द्रष्टव्यम् । स्पष्टार्थं वा विज्ञानग्रहणम् । प्रमायामुक्तस्वतस्त्वसद्भावेऽनुमानमाह श्लोकेन—प्रमेति । अत्र जायत इत्यन्ता प्रतिज्ञा, अप्रमातो व्यतिरिक्तत्वादिति हेतुः । अतिरिक्तसामग्रीजन्या न भवतीत्युक्ते बाध । यत्किंचिद्व्यतिरिक्तसामग्रीजन्यत्वात्तदर्थं विज्ञानसामग्रीजन्यत्वे सतीत्युक्तम् । तावत्युक्ते परतस्त्वेऽप्युपपन्नमानतयार्थान्तरा तदर्थमुत्तर विशेष्यग्रहणम् । ईश्वरज्ञाने विज्ञानसामग्रीजन्यत्वे सत्यतिरिक्तसामग्रीजन्यत्वाभावलक्षण साध्यमस्ति, नच ज्ञानत्वानधिकरणत्वरूपोपाधिः, अतः साध्याव्याप्तेरनुपाधिरित्याह—ईश्वरेति । ननु तर्हि ज्ञानसामग्र्यजन्यत्वमुपाधिः, तथा चेश्वरज्ञानेऽपि विद्यमानत्वान्न साध्याव्याप्तिरिति तत्राह—नापीति । नायमुपाधिर्व्यतिरेके सोपाधिकतया साध्यव्यापकत्वादित्याह—यज्ज्ञानेत्यादिना । ईश्वरप्रमाया चाप्रमात्वस्य व्यतिरेकसिद्धिः । न चाप्रमा विज्ञानसामग्रीजन्यत्वे सत्यतिरिक्तजन्या न भवति प्रमातिरिक्तत्वात् पटवदित्याभाससमानयोगक्षेमता । दोषान्वयव्यतिरेकबाधात्, प्रतियोग्यप्रसिद्ध्या अप्रसिद्धविशेषणत्वाच्च । विपक्षे बाधकतर्कमाह—विपक्षे चेति । यत्तु पूर्व-

कहा करते हैं । यह लक्षण अव्याप्त भी नहीं, क्योकि सभी प्रमा व्यक्तियों में अनुगत है । 'ईश्वर-प्रमा जन्य नही, अत उसमें लक्षण अव्याप्त है'—यह सन्देह नही करना, क्योकि ज्ञान-सामग्री-जन्यत्वे सति अतिरिक्त ( दोषादि ) कारण-जन्यत्वरूप ( अप्रमा-वृत्ति ) विशिष्ट धर्म का अत्यन्ताभाव ईश्वर-प्रमा मे रहता है । यह लक्षण अतिव्याप्त भी नही, क्योकि अलक्ष्यभूत अप्रमा, विज्ञान-सामग्री से जन्य होने पर भी अतिरिक्त दोषादि हेतु से जन्य है । इसमें प्रमाण भी अनुमान है—'प्रमा विज्ञान-सामग्री से जन्य होकर अतिरिक्त कारण से जन्य नही, अप्रमा से भिन्न होने के कारण, जैसे—घटादि । यहाँ 'ज्ञानत्वानधिकरणत्वम्' (पटादि मे साध्य-व्यापक और प्रमारूप पक्ष मे साधन का अव्यापक होने से) उपाधि है—ऐसा नही कह सकते, क्योकि ईश्वर के ज्ञान मे साध्य रहने पर भी ज्ञानत्वानधिकरणत्व नही, अत साध्य का व्यापक नही । 'ज्ञान-सामग्री की अजन्यता का अभाव' भी उपाधि नही बन सकता, क्योकि 'जो ज्ञान-सामग्री से जन्य है, वह ज्ञान-सामग्री-जन्य होकर अतिरिक्त कारण से जन्य है, जैसे अप्रमा—इस प्रकार की व्यतिरेक व्याप्ति मे 'अप्रमात्व' ही उपाधि है ( साध्य का निश्चय है—अप्रमा मे, वहाँ अप्रमात्व है ही, अत साध्य का व्यापक है और प्रमा मे ज्ञान-सामग्री-जन्यत्व रूप साधन के रहने पर भी अप्रमात्व नही, अतः साधन का अव्यापक है ) । विपक्ष मे बाधक तर्क यह है—'विज्ञान-सामग्री-मात्र से ही प्रमा की उत्पत्ति सम्भव होने पर उससे

हेत्वतिरिक्तहेत्वधीना कार्यत्वात्पटवत्'इति योऽयमुदयनस्य परतस्त्वेऽपि प्रयोग' सोऽपि परास्त' । प्रमा दोषव्यतिरिक्तज्ञानहेत्वतिरिक्तजन्या न भवति ज्ञानत्वादप्रमावदिति प्रतिसाधनग्रस्तत्वाच्च । न च प्रमात्वस्य विज्ञानसामग्रीमात्रप्रयोज्यत्वादप्रमाज्ञानवृत्तित्व स्यादिति वाच्यम्, तत्र प्रयोजकाभावादेव प्रयोज्यस्याप्रसक्ते. । दोषासहकृतज्ञानसामग्रीप्रयोज्य हि प्रमात्वम्, तत्र दोषस्यैव सद्भावात् कथं प्रमात्वस्य वर्तमानत्वसभावनापि समुद्भवेत् ? दोपस्याप्रमाहेतुत्वे तदभावस्य गले पादुकान्यायेन प्रमां प्रति हेतुत्वं स्यादिति चेत्, स्यादेवं यद्यनन्यथासिद्धावन्वयव्यतिरेकौ कारणत्वावेदकौ स्याताम्, तौ तु विरोध्यप्रमाप्रतिबन्धकत्वेनोपक्षीणौ न कारणमात्रत्वमावेदयत । तथा चाहुर्भट्टपादा.—

'तस्माद् गुणेभ्यो दोषाणामभावस्तदभावत: ।
अप्रामाण्यद्वयासत्व तेनोत्सर्गोऽनपोदित:' ॥ इति । (श्लो०वा० २।६५)

---

पक्षे परतस्त्वेनानुमानमुदयनीयमुक्त तत्रापि गौरवतर्कपराहत्याशङ्कितोपाधितामतिदिशति—**एतेनेति** । सत्प्रतिपक्षता चाह—**प्रमेत्यादिना** । ज्ञानहेत्वतिरिक्तहेतुजन्यत्वानधिकरणत्वमात्रसाधने दृष्टान्ते साध्यवैकल्यम् । अतिरिक्तदोषजन्यत्वादप्रमायास्तन्निवृत्त्यर्थं दोषातिरिक्तेत्युक्तम् । दोषातिरिक्तजन्या न भवति इत्युक्ते बाधस्तदर्थमुत्तर विशेषणम् । दोषव्यतिरिक्तज्ञानहेत्वतिरिक्ताजन्यत्व दोषजन्यत्वाद्वा ? ज्ञानहेत्वतिरिक्ताजन्यत्वाद्वा ? नाद्य., प्रमायामुभयानभिमत हि तत् । द्वितीयेऽभीष्टसिद्धि । न च सिद्धसाधनतानिवृत्त्यै प्रथम विशेषणम्, अनधिकरणत्वस्य विवक्षितत्वात् । न चाप्रमात्वमुपाधि , ईश्वरज्ञाने साध्याव्याप्ते. । यत्तु स्वतस्त्वे बाधकतर्क. उक्तः, विज्ञानसामग्रीमात्रजन्यत्वे ज्ञानत्ववदप्रमाणवृत्तित्वमपि स्यादिति तत्परिहरति—**न चेति** । प्रयोजकमेव दर्शयन् तदभाव दर्शयति—**दोषेत्यादिना** । अत्रापि पूर्वपक्षोक्त स्मारयति—**दोषस्येति** । नान्वयव्यतिरेकमात्रात्कार्यकारणभावावसायः । माभूद्धूमपैङ्गल्ययोस्तथाभाव , स्तोऽन्वयव्यतिरेकाविति । किंत्वनन्यथासिद्धाभ्याम् । न चात्र तथाविधाविति परिहरति—**स्यादेवमिति** । प्रमोत्पत्तौ या विरोधिन्यप्रमा तदुत्पत्तिप्रतिबन्धकविषयावित्यर्थः । यथा च न प्रतिबन्धकाभावस्य कारणता, तथोपरितनवादे विवरिष्यते । यत एव स्वत प्रामाण्य तस्माद्गुणेभ्यो दोषाणामभाव एव पर जायते, न तु प्रमाणोत्पत्ति' । ननु तर्हि दोषाभावादेव भवतु प्रामाण्यम्, तथापि सैव परत प्रामाण्यपिशाचिका विशेदिति तत्राह—**तदभावत इति** ।

---

अतिरिक्त गुण या दोषाभाव को कारण मानने पर गौरव-प्रसङ्ग होगा।' इसीसे ही 'प्रमा, विज्ञान-हेतु से अतिरिक्त हेतु के अधीन है, कार्य होने से, पट के समान'—यह उदयनाचार्य का परतस्त्व-साधक प्रयोग निरस्त हो जाता है । और यहाँ—'प्रमा, दोष-भिन्न, ज्ञान-कारण-अतिरिक्त, हेतु से जन्य नहीं, ज्ञान होने से जैसे-अप्रमा'—यह सत्प्रतिपक्ष भी है । यह जो कहा था कि विज्ञान-सामग्रीमात्र से प्रयोज्य होने पर प्रमात्व, अप्रमा में भी वृत्ति हो जायगा । वह कहना उचित नहीं, क्योंकि अप्रमा में प्रयोजक न रहने से प्रयोज्य ( प्रमात्व ) भी कैसे रहेगा ? अर्थात् दोष-रहित ज्ञान-सामग्री से प्रयोज्य माना जाता है—प्रमात्व, अप्रमा में तो दोष ही विद्यमान होता है, वहाँ प्रमात्व के वृत्तित्व की सम्भावना कैसे होगी ? 'दोष को अप्रमा का हेतु मानने पर दोषाभाव को प्रमा का हेतु विवश होकर मानना होगा'—यह कहना भी असगत है, क्योकि कारणता ( हेतुता ) के निश्चायक होते हैं अन्यथासिद्धि-शून्य अन्वय-व्यतिरेक । ( दोषाभाव में प्रमा का अन्वय-व्यतिरेक होने पर भी, दोषाभाव वैसे ही अन्यथासिद्ध है, जैसे घट के प्रति दण्डरूप ) । अर्थात् प्रमा का विरोधी है—अप्रमा । अप्रमा का प्रतिबन्धक है—दोषाभाव, अतः उसके साथ अन्वय-व्यतिरेक हो जाता है, एतावता दोषाभाव में कारणता नही आ सकती । कुमारिल भट्ट ने स्पष्ट कहा है—"गुणों से दोषाभाव और दोषाभाव से 'मिथ्यात्व तथा संशय रुप'—दो प्रकार की अप्रमा के असत्त्व का

नन्वेकस्यापि दोषाभावस्याप्रमाप्रतिबन्धकत्वं प्रमाहेतुत्वं च किं न स्यात् ? एकस्यापि संस्कारस्यानुभवनाशकत्वस्मृतिहेतुत्वयोरपि दर्शनादिति चेत्, मैवम्, तत्र संस्कारस्यानुभवनाशकत्वेऽपि स्मृतेः संस्कारातिरिक्तकारणान्तरानिरूपणात्, उभयहेतुताया अवश्याश्रयणीयत्वात्। न च तत्रापि संस्कारनाशात्स्मृतिः किं न स्यादितिवाच्यम्, स्मृतिसमुदयव्यतिरेकेण संस्कारनाशस्यैवासंभवात्। प्रकृते तु ज्ञानसामग्रीत एव प्रमोद्भवसंभवे दोषाभावस्यापि तद्धेतुत्वकल्पना निष्प्रामाणिका। तस्मात्प्रमा विज्ञानसामग्रीमात्रादेव जायत इति सिद्धम्।

तथा प्रमाज्ञप्तिरपि विज्ञानज्ञापकसामग्रीत एव। न च तथात्वे विज्ञान इव प्रमाणमप्रमाणं वेति संशयानुदयप्रसङ्गः, स्वतः प्रमाणत्वेन भवदभिमतधर्मिज्ञानेऽनुव्यवसाये च स्फुरत्यपि सुगतमतानुसारिणामप्रमाणमेवेति विपर्यासदर्शनात्, स्वतः प्रमाणत्वेन भवदङ्गीकृतानुमित्या-

---

दोषाभावादप्रामाण्यद्वयस्य मिथ्यात्वसंशयत्वलक्षणस्यासत्त्वमेव जायते, अनुत्पत्तिलक्षणाप्रामाण्यस्यानाद्यभावतया दोषादुत्पत्त्यसंभवेन तदभावेनाभावस्याप्यसंभवात् तेन कारणेनोत्सर्गो ज्ञानसामग्रीमात्रप्रयुक्तत्वलक्षणोऽनपोदितः अपोदितो न भवतीति भट्टवार्तिकार्थः।

भवतु दोषाभावस्य विरोधिप्रतिबन्धकत्वम्, तथापि किमायातं प्रमानुत्पादकत्वे ? नहि संस्कारस्य स्वजनकानुभवविनाशकत्वमित्येतावता स्मृतिं प्रति हेतुत्वमपनीयत इत्याशङ्क्य वैषम्येण परिहरति—**नन्वित्यादिना**। ननु किमिति तत्र कारणान्तरानिरूपणम् ? यावता संस्कारनाश एव स्मृतिकारणं भवत्विति। नेत्याह—**न च तत्रापीति**। नित्यद्रव्येषु गुणनाशस्य गुणान्तरोत्पादनियतत्वादिति भावः। एवं तत्रानन्यगतिकत्वमुक्त्वा प्रकृते तदभावमाह—**प्रकृते त्विति**। एतेनाप्रामाण्ये दोषाणामन्यथासिद्धिरुदयनापादितापोदिता। तत्र हेत्वन्तराभावादभावहेतुताया निरस्तत्वादिति। न च सामग्र्यैक्ये ज्ञानप्रमालक्षणकार्यभेदानुपपत्तिर्बाधिका, एकस्मादप्यग्निसंयोगात्पार्थिवपरमाणौ रूपरसगन्धस्पर्शदाहादीनां बहूनामङ्गीकारात्। प्रागभावभेदस्य च तदभावे कार्याभावलक्षणव्यतिरेकाभावादकारणत्वात्।

उत्पत्तिस्वतस्त्वमुपसंहृत्य ज्ञप्तिस्वतस्त्वमपि निर्वक्ति—**तथा प्रमेति**। यत्तत्राप्युक्तं विज्ञानग्राहकसाक्षिमात्रग्राह्यत्वेन प्रामाण्यस्य संदेहो न स्यात्, ज्ञानवदेव निर्णीतत्वादिति तत्परिहरति—**न चेति**। तथा हि भवता

---

निश्चय होता है, अप्रमारूप विरोधी के न आने से स्वतःप्राप्त प्रमात्व अबाधित रहता है।" यदि शङ्का हो कि एक ही दोषाभाव, अप्रमा का प्रतिबन्धक और प्रमा का हेतु वैसे ही क्यों न मान लिया जाय ? जैसे कि एक ही संस्कार, अनुभव का नाशक और स्मृति का हेतु देखा जाता है। तो यह शङ्का युक्त नहीं, क्योंकि संस्कारों में अनुभव की नाशकता रहने पर भी स्मृति के प्रति संस्करातिरिक्त और कोई हेतु न बन सकने के कारण स्मृति की भी हेतुता माननी ही पड़ती है। यदि कहा जाय कि संस्कारातिरिक्त संस्कार-नाश को स्मृति का हेतु क्यों न मान लिया जाय। तो यह कहना उचित नहीं, क्योंकि स्मृति की उत्पत्ति के बिना संस्कार का नाश ही असम्भव है। (अतः संस्कारों में अगत्या अनुभव की नाशकता और स्मृति की हेतुता–दोनों मानने पड़ते हैं) किन्तु प्रकृत में केवल ज्ञान की सामग्री से ही प्रमा की उत्पत्ति सम्भव है, दोषाभाव में प्रमा-हेतुत्व की कल्पना अप्रामाणिक है। अतः प्रमा विज्ञान-सामग्रीमात्र से ही उत्पन्न होती है—यह सिद्ध हो गया।

उसी प्रकार प्रमा की ज्ञप्ति (ज्ञान) भी विज्ञान की प्रकाशक सामग्री से ही होती है—(यही ज्ञप्ति-गत स्वतस्त्व है)। यह जो कहा था कि विज्ञान-प्रकाशक से प्रकाश हो जाने पर 'प्रमा ? अप्रमा वा ?' संशय वैसे ही नहीं होगा, जैसे ज्ञान में 'ज्ञान हुआ ? या नहीं ?'—यह संशय नहीं होता। वह कहना भी उचित नहीं, क्योंकि आप (नैयायिक) जिस (धर्मिज्ञान तथा अनुव्यवसाय) को

दावपि ज्ञायमानायां चार्वाकस्य प्रामाण्ये विप्रतिपत्त्युपलब्धेः । स्वरूपभेदवादिना च गृह्यमाणेऽपि स्थाणौ स्वरूपे स्थाणुर्वा पुरुषो वेति संदेहस्य पुरुष एवेति विपर्ययस्य चोपलम्भात् । सत्यपि प्रतिभासपुष्कलकारणे प्रतिबन्धकदोषादिसमवधानात्तत्र संशयविपर्यासयोरुपपत्तौ प्रकृतेऽपि समं समाधानमन्यत्राभिनिवेशात् । नच ज्ञानज्ञापकादेव प्रामाण्यग्रहणे मिथ्यारजतादिबुद्धिषु प्रामाण्यग्रहणप्रसङ्गः, प्रसक्तस्यापि प्रामाण्यग्रहणस्य कारणदोषावगमबाधबोधाभ्यामपनयात् । न च ताभ्यामपनये तयोरभावज्ञानस्य प्रामाण्यग्रहणहेतुत्वोपपत्तौ परतःप्रामाण्यापत्तिरिति वाच्यम्, दोषबाधबोधयोरनुदयमात्रेण प्रामाण्यस्फुरणोररीकरणात् । तथाचाहुर्भट्टपादाः –

धर्मिमात्रज्ञानं स्वत एव प्रमाणम्, सर्वं ज्ञानं धर्मिण्यभ्रान्तमिति स्वीकारात् । तथानुव्यवसायज्ञानप्रामाण्यमपि तत्तज्ज्ञानस्फुरणसमय एव स्फुरति, तथापि तत्र बौद्धानां धर्मधर्मिभावाद्यपलापाय बहिष्ठारोपवादिनां स्वप्रकाशज्ञानरुचीनामप्रामाण्यबुद्ध्या विपर्यासः, तथानुमित्युपमित्योश्च भवदभिमतस्वाभाविकमानभावोश्चार्वाकवैशेषिकयोर्विपर्यासः । यथा वा प्राभाकरार्कबन्धुप्रभृतीनां स्वरूपभेदवादिनां स्वरूपे स्फुरत्यपि भेदाग्रहात् संदेहविपर्ययौ तथात्रापि किं न स्यातामित्यर्थः । समाधानसाम्यं दर्शयितुं तन्मुखेनैव समाधानमुद्भावयति —**सत्यपीत्यादिना** । प्रतिभासस्य पुष्कलकारणे सत्यापि प्रबलप्रतिबन्धकवशात् तत्र तत्र संशयाद्युत्पत्तिरत्रापि समानेत्यर्थः । यत्तु ज्ञप्तिस्वतस्त्वे तेन बाधकमुक्तं तत्परिहरति—**न चेति** । हेतुमाह—**प्रसक्तस्यापीति** । ननु कारणदोषज्ञानबाधकज्ञानाभ्यां चेत्प्रसक्तस्यापि प्रामाण्यग्रहणस्यापनयस्तर्हि तयोरभावज्ञानस्य प्रामाण्यज्ञानहेतुत्वं स्यादिति युक्तमिति तत्राह—**न च ताभ्यामिति** । न वयमप्रामाण्यज्ञाने करणदोषज्ञानबाधकज्ञानवत्प्रामाण्यावगमे तयोरभावज्ञानं कारणमाश्रयामहे, अपि तु तज्ज्ञानानुदयमात्रम्, तेन न परतःप्रामाण्यापत्तिरित्यर्थः । उररीकरणं स्वीकारः । दोषाभावादिज्ञानस्य प्रामाण्यज्ञानहेतुताऽभावं भट्टाचार्यवचनेन द्रढयति—**तथा चाहुरिति** । यदा स्वतः प्रमाणत्वमस्याश्रीयते तदान्यज्ज्ञानग्राहकातिरिक्त

स्वतः प्रमाण मानते है, उसमें भी बौद्धों को 'अप्रमा ही है'—ऐसा विपर्यय होता है। इसी प्रकार प्रमात्वविषयक अनुमित्यादि मे भी आप प्रमात्व का स्वतः ज्ञान मानते है, उनकी प्रमाणता में भी चार्वाक को विप्रतिपत्ति होती है। ऐसे ही भेद को वस्तु का स्वरूप मानने वाले प्राभाकर के मत मे स्थाणु के स्वरूप का ग्रहण होने पर भी 'स्थाणु है ? या पुरुष ?'—यह सन्देह तथा 'पुरुष ही है'—यह विपर्यय देखा जाता है। ( इसी प्रकार हमारे प्रमात्व का स्वतः ग्रहण होने पर भी 'प्रमा है ? या अप्रमा ?' यह सन्देह क्यो नही बनेगा ? )। यदि कहा जाय कि उक्त दृष्टान्तो मे तो ज्ञान की पुष्कल सामग्री रहने पर भी प्रबल प्रतिबन्धक ( दोष ) के कारण सशय और विपर्यय बन जाते है, तो हमारे मत मे भी वही समाधान किया जा सकता है। यह जो कहा था कि ज्ञान के ज्ञापक से ही प्रमात्व का ज्ञान होने पर मिथ्या रजतादि ज्ञानो मे भी प्रमात्व का ग्रहण होने लगेगा। वह कहना भी सगत नही, क्योकि हम मानते है कि मिथ्या रजतादि ज्ञानो मे स्वतः प्राप्त प्रमात्व-ग्रहण, कारण मे दोष-दर्शन एव बाधक ज्ञान से हटा दिया जाता है। 'कारण-गत दोष-दर्शन तथा बाधक ज्ञान—इन दोनो से प्रमात्व का अपनय मानने पर उन दोनों के अभावो का ज्ञान प्रमात्व-ग्रह का हेतु बन जायगा फिर तो परतः प्रामाण्यवाद की आपत्ति होगी—यह सन्देह भी नही करना चाहिए, क्योकि दोष-ज्ञान और बाधक-बोध—इन दोनो के अनुदय मात्र से प्रमात्व का स्फुरण माना जाता है। ( अर्थात् दोषादि के ज्ञान से मिथ्यात्व उत्पन्न होता है, जो कि प्रमात्व का घातक है। दोषादि का ज्ञान न होने से मिथ्यात्व उत्पन्न नही होता, अतः प्रमात्व अबाधित रह जाता है )। जैसा कि कुमारिल भट्ट ने कहा है—'जब कि 'प्रमात्व' स्वतः ही गृहीत होता है, तब उसके

'यदा स्वतःप्रमाणत्वं तदान्यन्नैव मृग्यते ।
निवर्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः' ॥ इति (श्लो० वा० २।५२)

अन्यथा तदभावावगमस्यापि प्रामाण्यस्फुरणहेतुत्वेन तदभावावगमस्यापि प्रामाण्यावगमाय तत्तदभावावगमान्तराणामप्यवश्याश्रयणीयत्वादनवस्था, तथा चानभ्यासदशायां सांशयिकत्वादिति हेतो स्पष्टमनैकान्तिकत्वम् । स्वतःप्रमाणत्वेन भवदभिमतेष्वेवानुमानोपमानानुव्यवसायधर्म्यध्यवसायेषु व्यभिचारस्य दर्शितत्वात् । उक्तं चैतदनुमानादेः स्वतःप्रामाण्यमाचार्यवाचस्पतिना न्यायवार्तिकटीकायाम् "विमतं ज्ञानमर्थाव्यभिचारि समर्थप्रवृत्तिजनकत्वात्, यदि पुनरेवं नाभविष्यन्न समर्थां प्रवृत्तिमकरिष्यत्, यथा प्रमाणाभास इति व्यतिरेकी ।

नैव मृग्यते । ननु दोषाभावज्ञानमतिरिक्तं मृग्यत इति तत्राह—निवर्तत इति । दोषज्ञानानुदयमात्रात् अयत्नतो मिथ्यात्वशङ्का निवर्तत इत्यर्थः । नच दोषज्ञानानुदयमादायैव परतस्त्वापत्तिरिति वचनीयम्, विरोधिबुद्ध्युदयप्रतिबन्धकतयैव कृतसमाधानत्वात् । दोषाभावावगमस्यापि प्रामाण्यहेतुत्वेऽनवस्थाबाधकमाह—अन्यथेति । येन हि दोषाभावज्ञानेनान्यस्य प्रामाण्यमवगम्यते, तत्प्रामाण्यावगमार्थमपि दोषाभावज्ञानान्तरं गवेषणीयम् । एवकारमुपर्यपीत्यनवस्थेत्यर्थः । यत्तु ज्ञप्तिपरतस्त्वेऽनुमानमुदयनीयम्, तत्राप्युक्तं दूषणमतिदिशति—तथा चेति । तथा चेत्येतदेवोद्घाटयति—स्वतःप्रमाणत्वेनेति । ननु यद्यनुमानादि स्वतःप्रमाणमिति परैरङ्गीकृतं स्यात् स्यादयं मनोरथस्तदेव तु कुत इति तत्राह—उक्तं चैतदिति । प्रमाणतोऽर्थप्रतिपत्ताविति प्रथमभाष्यव्याख्यानावसर इति शेषः—समर्थप्रवृत्तीति । फलाभिसन्धिप्रवृत्तिजनकत्वादित्यर्थः । व्यतिरेकव्याप्तिं दर्शयति—यदि पुनरेवमिति । अभविष्यदिति च क्रियातिपत्तौ लृङो रूपम् । अत्र चोपेक्षाज्ञानानां पक्षत्वेनानुपादानान्न भागासिद्धिः । व्यतिरेकी सर्वत्र सपक्षाभावमभ्युपेत्य वर्तत इति नासाधारणानैकान्तिकता । ननु नास्त्येव वादी यः प्रामाण्यनिश्चये विप्रतिपद्येत । नहि प्रामाण्यं स्वीकृत्य तन्निश्चये विप्रतिपत्तिः, स्वीकारस्य निश्चयमूलत्वात् । नाप्यस्वीकृत्य, प्रमाणशून्यविप्रतिपत्तेः सर्वत्र सुलभतया सर्ववादविधिनिषेधप्रसङ्गात् । अनिश्चिते तु प्रामाण्ये तदतद्रूपसन्देहोऽपि क्वचिद्दुर्लभः, विशेषस्मृतेरभावात्, तत्पूर्वकत्वाच्च संशयानाम् । नापि सर्वत्राप्रामाण्यप्रसञ्जनम्, प्रामाण्यग्रहणोपायनिराकरणस्याप्रामाण्येऽपि तुल्यत्वात्तदस्ति प्रामाण्यादिकं तन्निश्चयश्च, तदुपायस्तच्चिन्तामर्हति । एवञ्चान्वयोऽस्त्येव तत्कथं केवलव्यतिरेकीत्याशङ्क्य सप्रत्युत्तरमाह—अन्वयव्यतिरेकीति । नन्वनुमान-

ग्रहण के लिए अन्य सामग्री की अपेक्षा ही नहीं । दोषादि-ज्ञान के अनुदयमात्र से मिथ्यात्व की आशङ्का अनायास निवृत्त हो जाती है ।' अन्यथा ( दोषाभाव-ज्ञान को भी प्रमात्व-ग्रह का हेतु मानने पर ) प्रमात्व-ग्राहक दोषाभाव-ज्ञान में प्रमात्व का ग्रहण करने के लिए दूसरे दोषाभाव-ज्ञान की अपेक्षा और इस दोषाभाव-ज्ञान में प्रमात्व-ग्रहण के लिए तीसरे दोषाभाव-ज्ञान की, इस प्रकार अनवस्था होगी । उदयनाचार्य के परतस्त्व-साधक ( प्रामाण्यं परतो ज्ञायते, अनभ्यासदशायां सांशयिकत्वात्, अप्रामाण्यवत् ) अनुमान में 'अनभ्यासदशायां सांशयिकत्व' हेतु स्पष्ट व्यभिचारी है । स्वतः प्रमाणत्वेन नैयायिकाभिमत अनुमिति, उपमिति, अनुव्यवसाय और धर्मिज्ञान में व्यभिचार पहले ही दिखाया जा चुका है । अनुमिति आदि में स्वतः प्रामाण्य आचार्य वाचस्पति ने न्यायवार्तिक तात्पर्य टीका में (पृ० ५ पर) कहा है—'विवादास्पद ज्ञान, अर्थाव्यभिचारी है, सफल प्रवृत्ति का जनक होने से, यदि ज्ञान वैसा ( अर्थाव्यभिचारी ) न होता तो सफल प्रवृत्ति को जन्म नहीं दे सकता था, जैसे-प्रमाणाभास'—यह व्यतिरेकी अनुमान । अथवा अन्वयव्यतिरेकी भी हो सकता है; क्योंकि अनुमिति स्वतः प्रमाण है, अतः उसमें अन्वय सम्भव है । इसी प्रकार मिश्रजी ने वहीं ( पृ० १२, १३ पर ) कहा है—"अनुमानस्य तु प्रवृत्तिसामर्थ्यलिङ्गजन्मनोऽन्यस्य वा निरस्तसमस्तव्यभिचाराशङ्कस्य स्वत एव प्रामाण्यम्, अनुमेयाव्यभिचारिलिङ्गसमुत्थत्वात् ।" ( सफलप्रवृत्तिरूप लिङ्ग से

वा। अनुमानस्य स्वतःप्रमाणतया अन्वयस्यापि संभवात्।" तथा—"अनुमानस्य तु परितो निरस्तसमस्तविभ्रमाशङ्कस्य स्वत एव प्रामाण्यम्, अनुमेयाव्यभिचारिलिङ्गसमुत्थत्वात्।" "एतेनोपमानं व्याख्यातम्" इत्यादि। सत्प्रतिपक्षसाधनत्वाच्च—विवादस्थले प्रमात्वं विज्ञानग्राहकसामग्रीमात्रग्राह्यं अप्रमामात्रवृत्तित्वानधिकरणत्वे सति ज्ञानैकवृत्तिजातित्वात् ज्ञानत्ववत्।

ननु कथं प्रमात्वम् जातिः? साक्षात्कारित्वेन तस्य परापरभावासंभवात्। तथा हि—यदि साक्षात्कारित्वं परम्, तदा तदपरसामान्यस्य प्रमात्वस्य परसामान्याविनाभावनियमात्सर्वैव प्रमा साक्षात्कारिण्येवेत्यनुमानादेः परोक्षस्याप्रमात्वमेव भवेत्। अथापरम्, तदा साक्षात्कारित्वस्य

मेव कथं स्वतःप्रमाणं यद्दृष्टान्तादन्वयित्वमित्याशङ्क्य तत्रापि तदीयमेव ग्रन्थं पठति—तथानुमानस्येति। परितः सर्वप्रकारेण निरस्ता समस्तविभ्रमाशङ्का यस्येति विग्रहः। अनुमेयेनाग्न्यादिना यल्लिङ्गमव्यभिचारि तेनोत्पन्नत्वात्। प्रत्यक्षज्ञानं ह्यर्थादुत्पद्यमानमपि न गृहीताव्यभिचारादुत्पद्यते, अपि तु सत्तामात्रेणावस्थितादेव। एवमिन्द्रियादीन्यपि न गृहीताव्यभिचारीणि, व्यभिचारीणि वा अर्थेन, शाब्दज्ञानं तु नार्थादुत्पन्नम्। न च शब्दस्यार्थाव्यभिचारस्तस्मान्न तयोः स्वतोऽव्यभिचारग्रहणमिति। प्रवृत्तिसामर्थ्यं तज्जातीयत्वं वा अर्थाव्यभिचारायानुसरणीयम्। अनुमानोपमानानुव्यवसायधर्मिज्ञानानां धर्मिज्ञाने स्वत एव तत्, व्याप्तिपक्षधर्मत्वग्राहकेणैवानुमाने, कारणतः स्वरूपतश्च व्यभिचाराशङ्कानिरासात्, उपमानेऽयतिदेशवाक्यसादृश्यज्ञानयोः प्रामाण्यावधारणेन तन्निरासादनुव्यवसायेऽप्यज्ञातानुव्यवसायादित्यर्थः। एवमनैकान्तिकतामुक्त्वा सत्प्रतिपक्षतामप्याह—सत्प्रतिपक्षसाधनत्वाच्चेति। विवादस्थल इति। अनुमित्यादिव्यतिरिक्तस्थल इत्यर्थः। इतरथांशतः सिद्धसाधनतापातादिति, परतःप्रामाण्यवादिनोऽर्थान्तरतानिवृत्त्यै मात्रग्रहणम्। गुणत्वादिव्यभिचारवारणाय ज्ञानैकवृत्तीत्युक्तम्। अप्रमात्वसंशयत्वादिव्यभिचारनिवृत्त्यर्थमप्रमावृत्तित्वानधिकरणेत्युक्तम्। साधनवैकल्यनिवृत्त्यर्थं मात्रग्रहणम्। प्रमामात्रवर्तिना प्रमान्यान्यत्वादिना व्यभिचारनिवृत्त्यर्थं जातिग्रहणम्। तस्यान्योन्याभावत्वेन प्रतियोगिज्ञानापेक्षत्वेन विवक्षितत्वात्।

उदयनीयां विशेष्यासिद्धिं शङ्कते—ननु कथमिति। साक्षात्कारित्वप्रमात्वयोः परापरभावाभावं स एवोपपादयति—तथाहीत्यादिना। अत्र साक्षात्कारित्वं किं परं व्यापकं प्रमात्वमपरं व्याप्यमिति मतम्? विपरीतं वा? नाद्य इत्याह—यदीति। साक्षात्कारित्वव्याप्यत्वे प्रमात्वस्य तद्रहितेषु परोक्षेष्वनुमानादिषु प्रमात्वं न स्यादस्ति च तदतो न व्याप्यमित्यर्थः। द्वितीयमाशङ्क्य दूषयति—अथापरमित्या-

जन्य अथवा अन्य अनुमिति स्वतः प्रमाण है, साध्याव्यभिचारी लिङ्ग से जन्य होने के कारण उक्त समस्त व्यभिचार शङ्काओं से निर्मुक्त है)। "एतेनोपमानं व्याख्यातम्" (इसीसे उपमिति में भी स्वतः प्रमाणता कह दी गई)। उदयनाचार्य के उक्त अनुमान में सत्प्रतिपक्ष भी है—'अनुमित्यादि से भिन्न विवादास्पद ज्ञान में प्रमात्व, ज्ञान-ग्राहक सामग्रीमात्र से ग्राह्य है, अप्रमामात्र की वृत्तिता की अनधिकरण, ज्ञानमात्र-वृत्ति जाति होने से, जैसे-ज्ञानत्व।'

शङ्का—प्रमात्व को जाति नहीं कह सकते, क्योंकि साक्षात्कारित्व (प्रत्यक्षत्व) के साथ उसका व्याप्यव्यापकभाव सम्भव नहीं। अर्थात् यदि साक्षात्कारित्व पर (व्यापक) है, तब तो उसकी व्याप्य प्रमात्व जाति में उस (साक्षात्कारित्व) का अविनाभाव-नियम मानना होगा (अर्थात् व्याप्य वही होता है, जो व्यापक के बिना न रहे)। तब तो प्रमात्व जाति केवल अपरोक्ष प्रमा में ही रह सकेगी, परोक्ष (अनुमिति-आदि) प्रमा में नहीं, (क्योंकि वहाँ साक्षात्कारित्वरूप व्यापक के न रहने से व्याप्य प्रमात्व कैसे रहेगा?)। यदि साक्षात्कारित्व को अपर (व्याप्य) माना जाय साक्षात्कारित्वरूप व्याप्य जाति से व्यापकरूप प्रमात्व का अविनाभाव-नियम मानना होगा। तब तो 'इदं रजतम्'—इस प्रकार के प्रत्यक्ष भ्रम से भी प्रमात्व की प्राप्ति होगी, (क्योंकि जहाँ व्याप्य साक्षा-

प्रमात्वाविनाभावादिद रजतमित्यादिसाक्षात्कारिणो विभ्रमस्य प्रमात्वप्रसङ्गः। किं च यदि प्रमात्वं जातिस्तदा सर्वं ज्ञानं धर्मिण्यभ्रान्त प्रकारे तु विपर्यय इत्येषा परिभाषा परिलुप्येत। एकस्यैवेदं रजतमिति ज्ञानस्य धर्म्यंशे प्रमात्वमप्रमात्व चेतरांशे इति जातिसङ्करप्रसङ्गादिति चेत्, मैवम्, साक्षात्कारित्वस्य रजतादिविभ्रमावृत्तित्वात्। तत्रतद्व्यवहारस्येन्द्रियसंप्रयोगजन्यतोपाधिमात्रेणोपपत्तेः, धर्म्यंशे प्रमाव्यवहारस्य चाबाधितानुभूतित्वोपाधिनिबन्धनतयापि सभवात्। न चैव सर्वत्रोपाधिनिबन्धन एवास्तु प्रमाव्यवहार, कृत जातिकल्पनयेति वाच्यम्,

दिना। यदि हि साक्षात्कारित्व प्रमात्वावान्तरजातिस्तदा तद्रहितेषु विभ्रमेषु साक्षात्कारित्व न स्यात्, यदि स्यात्तर्हि तद्व्यापक प्रमात्वमपि स्यादित्यर्थ। तत. परापरभावशून्ययोरेकत्र वृत्तौ सङ्करः स्यात्स च जातिबाधकः यथा वक्ष्यति—सङ्कर इति। सङ्करान्तरमाह—किंचेति। यदि प्रमात्व जातिस्ततो जातिसङ्करपरिहाराय विभ्रमेष्वप्रमात्वाधिकरणेषु सा नेष्टव्या, ततश्च सर्वज्ञानाना धर्म्यंशे प्रामाण्य प्रकारे रजतादौ विपर्यय इति यौक्तिकपरिभाषा निरर्थका स्यादित्यर्थ.। साक्षात्कारित्वमपर प्रमात्व परम्, विभ्रमेषु न साक्षात्कारित्व व्यवहारस्तु औपाधिकस्ततो न जातिसङ्कर इति परिहरति—मैवमिति। प्रमात्वाप्रमात्वसङ्करं परिहरति—धर्म्यंशे इति। न चाबाधितानुभूतित्वसभवे तद्व्यञ्ञ्या जातिरपि तत्र भवेदिति वाच्यम्। प्रसाधने सङ्करबाधात्, प्रसञ्जने विपर्ययपर्यवसानात्। न तावदिद प्रयोजक मीमासकाना यथाह सूत्रकारः—'अर्थेऽनुपलब्धे तत्प्रमाण'मिति। तथा तद्भाष्यकारोऽपि—'असन्निकृष्टेऽर्थे ज्ञान'मिति। सशयविपर्ययस्मृतिव्यतिरिक्तज्ञानानि स्वतदतिरिक्तवृत्तित्वानधिकरणजातिमन्ति जातिमत्त्वात्सप्रतिपन्नवदिति च प्रमात्वजातावनुमानम्। अत्र चैतदवसेयम्। परसिद्धान्तमाश्रित्यैव जातिसङ्करपरिहार इति। यतः—

'विज्ञानत्वमधिष्ठानधियामारोपितेषु यत्। अविद्यापरिणामत्वाद्विज्ञानाभासता मता॥
तेन यत्तत्र विज्ञान तत्प्रमाणमुपेयते। अप्रमाण न विज्ञान तत्क्व सङ्करसंभव॥'

ननु तर्हि सर्वमेव ज्ञान प्रमाणमप्रमाण च ज्ञानाभास इति ज्ञानस्य परतोऽप्रामाण्यमिति वचसः कोऽर्थः? न कोपि। विज्ञान परतः प्रमाण अपि तु स्वत इत्येतावदुपपादनीयम्, अथवा अप्रामाण्य परत इत्यस्यैवाय पर्यवसितोऽर्थ. यद्विज्ञानव्यतिरिक्तसमवाय्यप्रामाण्यमिति। सामग्रीभेदस्य कार्यभेदनियमात् अप्रमायाश्च ज्ञानविशेषत्वस्यासिद्धेरिति। न च सर्वप्रत्ययाना यथार्थत्वेऽख्यातिमतापात., अविद्यापरिणामरूपभ्रमारोप्ययोरङ्गीकारेण ततो विशेषादिति। नन्वेकत्रोपाधिनिबन्धश्चेत्प्रामाण्यव्यवहारः सर्वत्र तन्निबन्धनः एव भवतु किमित्यर्धजरतीय कल्प्यत इति तत्राह—न चैवमिति। तत्र किं कल्पक नास्तीत्युच्यते?

त्कारित्व है, वहाँ व्यापक प्रमात्व को रहना ही होगा)। (इस प्रकार व्याप्यव्यापकभाव-रहित साक्षात्कारित्व और प्रमात्व का एकत्र समावेशरूप साङ्कर्य हो जाने से प्रमात्व को जाति नहीं कह सकते)। दूसरी बात यह भी है कि यदि प्रमात्व को जाति मान ले, किन्तु उसे अप्रमा मे, जाति-साङ्कर्य के भय से रख नहीं सकेंगे, तब तो 'सभी ज्ञान धर्मी अंश मे प्रमा, केवल धर्म अंश मे ही अप्रमा होते हैं—यह परिभाषा लुप्त हो जायगी, (अर्थात् इस परिभाषा के आधार पर 'इदं रजतम्'—यह अप्रमा ज्ञान भी शुक्तिविषयकत्वेन प्रमा माना जाता है, किन्तु उसमें प्रमात्व का सर्वथा अभाव होने पर उसे प्रमा कैसे कहेंगे?)। यदि अप्रमा मे भी प्रमात्व मान ले, तब तो 'इदं रजतम्' इस एक ही ज्ञान में धर्मिविषयकत्वेन प्रमात्व और धर्मविषयकत्वेन अप्रमात्व रह जाने से जाति-सङ्कर हो जायगा।

समाधान—(साक्षात्कारित्व को व्याप्य और प्रमात्व को व्यापक मानने मे कोई दोष नहीं, क्योंकि) रजतादि भ्रम मे साक्षात्कारित्व रहता ही नहीं कि वहाँ प्रमात्व की प्रसक्ति हो। वहाँ (भ्रम मे) साक्षात्कारित्व का व्यवहारमात्र इन्द्रिय-सयोग-जन्यत्वरूप उपाधि के निमित्त से हो जाता है। प्रमात्व भी भ्रम में नहीं रहता, धर्मी अंश में अबाधितानुभूतित्वरूप उपाधि के निमित्त से प्रमात्व का व्यवहारमात्र हो जाता है। 'सर्वत्र उपाधि के निमित्त से ही प्रमा-व्यवहार बन जायगा,

प्रमिणोमीत्यबाधितानुगतव्यवहारस्य गौर्गौरिति व्यवहारस्येव जातिमन्तरेणानुपपत्ते·। उपाधिमादाय जातिप्रत्याख्यानस्य गोत्वादिष्वपि तुल्यत्वात्। तस्माद्यत्र—

'व्यक्तेरभेदस्तुल्यत्व संकरोऽथानवस्थिति.।
रूपहानिरसबन्धो जातिबाधकसंग्रह.'॥

अन्यथासिद्धिर्वा ? प्रथमे प्राह—प्रमिणोमीति। एष ह्युत्सर्गः यदनुवृत्तव्यवहारस्यानुवृत्तालम्बनमिति, तच्चेत्कथमपि दु सपादम्, तदाऽगत्यैवाश्रीयते साधारणशब्दता यथाक्षादीनाम्। सभवति चेहानुवृत्तोऽर्थः तत्रापि वक्ष्यमाणबाधकाभावे जातित्वमेवेति भावः। द्वितीये प्राह—उपाधीति। यदि हि सभवेप्युपाधिना जातिप्रत्याख्यान तदा गोत्वादिष्वप्यनाश्वासः स्यात् तत्तद्व्यञ्जकस्यैवोपाधे. सभवादित्यभिप्राय। ननु तर्हि पाचकादावपि किमिति जातिर्न कल्प्यते ? अस्तिहि अनुवृत्तप्रत्ययत इति तत्राह—तस्मादिति। यत्रैकैव व्यक्ति. यथाकाशत्वादौ, न तत्र जातित्वकल्पना। अनुवृत्तप्रत्ययहेतुत्वाभावात्, अनेकसमवेतत्वाभावाच्च। तस्य च तल्लक्षणत्वात्। तथा यत्र तुल्यव्यक्तित्व यथा कुम्भत्वकलशत्वयो', न तत्रोभयोर्जातित्व एकयैवानुगतव्यवहारसिद्धेः, इतरथा पर्यायत्वविलयप्रसङ्गात्। तथा यत्र सङ्करप्रसक्तिः परस्परव्यभिचारिणोरेकत्र स्थितिर्तथा दण्डित्वकुण्डलित्वयोस्तत्रापि न जातित्वम्। प्रथममस्य दूषणत्व शृणु! परस्परपरिहारेणैव वर्तमानतयावधृतस्वभावयोरेकत्र प्रतीतिरुत्पद्यमाना 'माता मे वन्ध्ये' तिवत्तद्विरुद्धार्थविषयतया अप्रमाणीभवतीति प्रमाणाभावादेव तदभाव' परस्परपरिहारेण वर्तमानयोः सामान्ययोरेकत्र समावेशे तदतजातीयविरोधोच्छेदापत्तिश्‍च ति, तथा यत्रानवस्थाप्रसक्तिः यथा सत्तायाम्, सत्तास्वीकारे तत्रापि न जातिकल्पना। यत्र रूपहानिप्रसक्ति रागन्तुकत्वादिनाऽनित्यत्वहानादिना यथा पाचकत्वादौ, यथा वा विशेषेषु, तत्रापि न जातिकल्पना। यत्र जातिकल्पनाया व्यक्त्या सह सबन्धाभाव, यथा समवाये जातिकल्पनाया समवायाभावात् जातिव्यक्त्योश्च तन्नियमान्न तत्रापि जातिरिति किरणावलीकारसहितजातिबाधकाना अन्यतमस्यापि यत्राभावस्तत्र जातित्वमितरत्रोपाधित्वमिति खण्डलार्थः। प्रमात्वजातिसमर्थनेऽस्य प्रकृतोपयोग

'प्रमात्व' जाति की कल्पना ही व्यर्थ है'—ऐसा नही कह सकते, क्योकि. सभी प्रमा व्यक्तियो मे 'प्रमिणोमि'—इस प्रकार का अनुगत व्यवहार 'प्रमात्व' जाति के बिना वैसे ही नही बन सकता, जैसे कि सभी गो व्यक्तियो मे 'गौ'—यह व्यवहार 'गोत्व' जाति के बिना। उपाधि को लेकर जाति का निराकरण तो गोत्वादि मे भी समान ही है। [ उदयनाचार्य ने किरणावली ( पृ ३३ ) मे जाति या जातित्व के बाधक छह धर्म गिनाये है—(१) "व्यक्तेरभेद" ( एक व्यक्ति-वृत्तित्व )। जिस धर्म का आश्रय, एक ही व्यक्ति है, उसे जाति नही कहा जाता, क्योकि जाति नाम है—सामान्य धर्म का। सामान्य का अर्थ है—( समानाना भाव ) कई समान पदार्थों का एक धर्म। समानता अनेक पदार्थों मे ही होती है, एक मे नही। आकाश व्यक्ति, एक ही है, अतः उसमे रहने वाले आकाशत्व धर्म को जाति नही कह सकते, क्योकि आकाशत्व मे एकव्यक्ति-वृत्तित्वरूप धर्म, जातित्व का बाधक है। (२) "तुल्यत्वम्" ( जाति-समनियतत्व )। जो धर्म किसी जाति के तुल्य ( समानाश्रय-वृत्ति ) होता है, वह जाति नही कहलाता। जैसे—'घटत्व' जाति के तुल्य होने के कारण 'कम्बुग्रीवादिमत्त्व' धर्म को जाति नही माना जाता। घटत्व और कलशत्व तो भिन्न धर्म ही नही, अपि तु अभिन्न है। अत उनमे तुल्यत्व की शङ्का ही नही। (३) "सङ्कर" ( परस्पर व्यभिचारी धर्मों का एकत्र समावेश )। भिन्न-भिन्न अधिकरणो मे रहने वाले धर्म, यदि कही एक अधिकरण मे रह जायें, तब उन्हे जाति नही कहा जाता। जैसे–भूतत्व और मूर्तत्व परस्पर वियोगी धर्म है–आकाश मे भूतत्व ही रहता है, मूर्तत्व नही एवं मन मे मूर्तत्व ही रहता है, भूतत्व नही। उन दोनों धर्मों का साङ्कर्य ( समानाधिकरणत्व ) पृथिवी, जल, तेज और वायु—इन चारो मे होता

इत्युक्तबाधकानामन्यतमोपि बाधको न प्रसरति, तत्र जातिनिमित्तो व्यवहार इतरत्र तूपाधिनिबन्धन इति विभागो द्रष्टव्य । तस्माज्ज्ञानैकनिष्ठजातित्वादिति न विशेष्यासिद्धो हेतु.। विपक्षे चानवस्थाप्रसङ्गो बाधकस्तर्क.। न च निलीनस्यैव प्रमाणस्यार्थे व्यवहारजनकत्वोपपत्तेर्नानवस्थेति वाच्यम्, तथात्वनिश्चायकप्रमाणानुदये तदस्तित्वस्यैव निश्चेतुमशक्यत्वात्

अस्तु तर्हि ज्ञानस्य स्वत एव स्फुरणम्, तथापि तत्प्रामाण्यं तद्गतगुणत्वादिवदन्यत एव स्फुरिष्यति को विरोध इति चेत्, मैवम्, तस्यादित एव प्रमाणत्वेनास्फुरणे तद्विषये नि शा-

---

दर्शयितुमुपसहरति—**तस्मादिति**। ज्ञप्तिपरतस्त्वे बाधकमाह—**विपक्षे चेति** । पूर्वपक्ष्याशयमनूद्य दूषयति—**नचेत्यादिना**।

ननु भवतु तदस्तित्वलोभाज्ज्ञानस्य स्वत स्फुरणम्, प्रामाण्य तु किमिति न परत स्फुरतीति प्राभाकर प्रति पूर्वोक्तं स्मारयति पूर्वपक्षी—**अस्तु तर्हीति**। अर्थे तु नि शङ्कप्रवृत्ति प्रथमत प्रमाणतया स्फुरण एव घटते, नेतरथेति परिहरति—**मैव तस्यादित इति**। तद्विषये तस्य ज्ञानस्य विषय इत्यर्थः। एतदेव विपक्षे बाधकेन विवृणोति—**नहीति**। मरुभूमिषु मरीचिका मरुमरीचिकाः। नन्वप्रामाण्यस्फुरणादेव तत्र प्रवृत्त्यभाव न प्रामाण्यास्फुरणात्, प्रामाण्यास्फुरणेऽपि प्रवृत्तिर्घटते इति प्रस्तुत तत्किं केन सगतमिति शङ्कते—**अस्तु तर्हीति**। प्रामाण्यास्फुरणे न नि शङ्कप्रवृत्तिरुपपन्नेति परिहरति—**मैव विज्ञानस्येति**।

---

है। अत. भूतत्व और मूर्तत्व—दोनो जाति नही कहलाते। कुछ प्राचीन आचार्यो के मत में साङ्कर्य, केवल एक मे जातित्व का बाधक होता है, दोनों मे नही। (४) "अनवस्थिति" (अनवस्थापत्ति)। जाति में जाति मानने से अनवस्था दोष होता है, अतः जाति में जाति नही रह सकती। (५) "रूपहानिः" ( लक्षण-हानि या स्वरूप-हानि )। कुछ विद्वानो का कहना है कि वैशेषिकाभिमत विशेष पदार्थ का लक्षण है-"निस्सामान्यत्वे सति, सामान्यभिन्नत्वे सति, समवेतत्वम्।" अब यदि विशेष मे 'विशेषत्व' जाति मान ली जाय, तब उक्त लक्षण की हानि हो जाती है, क्योकि 'विशेषत्व' सामान्य के रहने से 'विशेष' मे निस्सामान्यत्व नही रह सकता। दूसरे विद्वानो का कहना है कि 'विशेष' का वही ( जाति-घटित ही ) लक्षण करना अनिवार्य नही, जाति-रहित लक्षण भी हो सकता है। अतः यहाँ रूप-हानि का अर्थ है—स्वरूप-हानि। 'विशेष' का स्वरूप है-विशेषत्व। विशेषत्व का अर्थ है—सजातीय परमाणुओं का विशेषकत्व ( व्यावर्तकत्व )। उसमे जाति मान लेने से व्यावर्तकत्व परम्परया जाति मे पर्यवसित होगा, जिससे 'विशेष' का व्यावर्तकत्व स्वरूप भङ्ग हो जायगा, अत 'विशेष' मे विशेषत्वादि जाति नही मान सकते। (६) "असम्बन्ध" ( प्रतियोगिता या अनुयोगिता अन्यतर सम्बन्ध से समवाय का अभाव )। जाति उसी मे रहा करती है, जो समवाय सम्बन्ध से कही रहता हो या उसमे कोई समवाय सम्बन्ध से रहता हो, जैसे—द्रव्य, गुण और कर्म। 'समवाय' पदार्थ समवाय सम्बन्ध से कही नहीं रहता है और न उसमे कोई समवाय सम्बन्ध से रहता है, अत 'समवायत्व' को जाति नही मान सकते। इस विषय का विस्तार प्रभा और मञ्जूषा ( का ८ ) मे किया गया है ]। इन जाति-बाधको मे से जहाँ कोई भी बाधक नही, वहाँ जातिनिमित्तक व्यवहार और जहाँ कोई बाधक हो, वहाँ उपाधिनिमित्तक व्यवहार—यह व्यवस्था उचित है। अतः उक्त ( ज्ञानैकनिष्ठजातित्व ) हेतु के विशेष्य भाग की असिद्धि नही। यह जो कहा था कि अज्ञात प्रमा को ही व्यवहार का जनक मान लेने से अनवस्था नही होती। वह कहना भी उचित नही, क्योकि अज्ञात प्रमा में व्यवहार-जनकत्व का निश्चायक प्रमाण न होने से यह निश्चय ही नहीं किया जा सकता कि अज्ञात प्रमा में व्यवहार जनकत्व है।

यदि शङ्का हो कि ज्ञान का स्वत स्फुरण होने पर भी ज्ञान-गत प्रमात्व का स्फुरण, गुणत्वादि के समान भिन्न सामग्री से होने पर क्या विरोध है? तो यह शङ्का युक्त न होगी; क्योकि यदि वह

ङ्कप्रवृत्त्यनुपपत्ते'। न हि ज्ञातमित्येतावता प्रवृत्ति, मरुमरीचिकादौ सत्यपि विज्ञाने तदप्रामाण्यनिश्चये प्रवृत्त्यदर्शनात्। अस्तु तर्ह्यप्रामाण्यास्फुरणे प्रामाण्यस्फुरणमन्तरेणापि ज्ञानमात्रात्प्रवृत्तिरितिचेत्, मैवम्, विज्ञानस्य प्रामाण्याप्रामाण्ययोरस्फुरणे संशयान्नि शङ्कप्रवृत्त्यनुपपत्ते। अस्ति चानाभ्यासदशायां नववनस्थलीस्थितेषु फलितरसालादिषु तत्फलादानेच्छोर्नि.शङ्कप्रवृत्ति। अपि च त्वयापि पारलौकिकफलसाधनेषु नि शङ्कप्रवृत्तिः प्रामाण्यनिश्चयाधीनाभ्युपगता। न च कृष्यादौ सशयेति प्रवृत्तिर्दृष्टेति वाच्यम्, तत्र निःशङ्कप्रवृत्तेरभावात्। एवं च यत्र यत्र नि शङ्कप्रवृत्ति, तत्र तत्र प्रामाण्यनिश्चयाधीनैव सेत्यभ्युपगन्तव्यमपरथा प्रामाण्यानिश्चयान्निवृत्तेरपि प्रसङ्गात्। न च फलेपि परतस्त्वम्, ज्ञेयाभिव्यक्तिलक्षणफलस्य

ननु ज्ञानोदयसमसमयमेव नि.शङ्कप्रवृत्तिः क्व दृष्टा ? यद्बलादिद साध्यते इति तत्राह—**अस्ति चेति**। रसाल आम्रः। अपि च त्वयापि पारलौकिकसाधनेषु इहलौकिकेषु ऽनभ्यासदशापन्नेषु च नि'शङ्कप्रवृत्तिः प्रामाण्यनिश्चयाधीनैवेति स्वीकृता, तत्साम्यात्सर्वत्र नि शङ्कप्रवृत्तिस्थलेषु शक्य प्रामाण्यनिश्चयाधीनत्वमनुमातुमित्यभिप्रेत्याह—**अपि च त्वयेति**। ननु सशयादपि निःशङ्कप्रवृत्तिः कृष्यादौ दृष्टा इति सव्यभिचारः इति तत्राह—**न च कृष्यादाविति**। एव पारलौकिकेषु निःशङ्कप्रवृत्तेर्निर्णयपूर्वकत्वस्य च व्याप्तिनिश्चयात् सर्वत्रैव शक्यानुमानमित्याह—**एवं च यत्र यत्रेति**। यदि च सशयात्प्रवृत्तिस्तदा सशयस्य कोटिद्वयसमानत्वात्प्रवृत्तिवन्निवृत्तिरपि स्यात्। नचानक्षजत्वाद्वैषम्यम्, वैधर्म्यमात्रत्वात्। अथाप्रामाण्यानिश्चयान्न निवृत्तिः, प्रामाण्यानिश्चयान्न प्रवृत्तिरित्यपि पश्य। तस्मान्नि शङ्कप्रवृत्ति. प्रामाण्यनिश्चयाधीनैवेत्यभिप्रेत्याह—**अपरथेति**। यदत्र कुसुमाञ्जलावुदयनेन झटिति प्रचुरसमर्थप्रवृत्ते स्वत' प्रामाण्यानधीनतामुपपादयतोक्तम्—'झटिति प्रवृत्तिर्हि'त्याद्युपक्रम्य 'इच्छा च प्रवृत्तेः कारण सा च समीहितोपायताज्ञानमपेक्षते तच्चेज्जातीयत्वलिङ्गानुभव सोऽपीन्द्रियसन्निकर्षात्, प्रामाण्यग्रहण तु न केनाप्यशेनोपयुज्यते उपयोगेऽपि वा स्वत इति कुत एतदिति ? तदपि तस्करस्य पुरत कक्षे सुवर्णमपलपत' सर्वाङ्गोद्घाटनमिव, यत समीहितसाधनताज्ञानमेव प्रमाणतयावगम्यमानमिच्छा जनयति' इत्यत्रैव स्फुट. स्वतः प्रामाण्योपयोगः। किं च क्वचिदपि चेन् नि.शङ्कसमर्थप्रवृत्तिः सशयादुत्पद्यते, तर्हि सर्वत्रैव तथाभावसभवात् प्रामाण्यनिश्चयो निरर्थकः अनिश्चितस्य सत्त्वमेव दुर्लभमिति प्रामाण्यस्य जलाञ्जलिरेव वदतः स्यादिति। एवमुत्पत्तौ ज्ञप्तौ च स्वतस्त्वमुपपाद्य व्यवहृतौ स्वतस्त्वमुपपादयति—**न च फलेऽपीति**। यदि तावज्ज्ञानाना ज्ञेयाभिव्यक्तिः फलम्, यथाहुः—

ज्ञान, प्रथमत ही प्रमारूप से प्रकाशित न होगा, तब उसके विषय मे नि शङ्क प्रवृत्ति नही हो सकेगी। ज्ञात मात्र हो गया, एतावता ही प्रवृत्ति नही होती, क्योकि मरु-मरीचिका मे जल-ज्ञान होने पर भी, उसमे अप्रामात्व का निश्चय होने से प्रवृत्ति नही देखी जाती। यदि कहा जाय कि प्रमात्व-स्फुरण के बिना ही केवल ज्ञान मात्र से प्रवृत्ति होती है, हाँ, अप्रमात्व का भान नही होना चाहिए ( अर्थात् प्रवृत्ति का जनक तो ज्ञानमात्र ही है, उसमे प्रमात्व-निश्चय की अपेक्षा नही। उक्त स्थल पर प्रवृत्ति न होने का कारण है—अप्रमात्व का भान। अत अप्रमात्व का भान न होने पर ज्ञानमात्र से प्रवृत्ति होती है )। तो यह कहना सगत नही, क्योंकि ज्ञान मे प्रमात्व या अप्रमात्व किसी का भी निश्चय न होने पर संशय ( यह ज्ञान प्रमा है ? या अप्रमा ) रहने के कारण नि शङ्क प्रवृत्ति नहीं होगी। अपि च आप ( परत प्रामाण्यवादी ) भी परलोक-साधन यागादि में प्रवृत्ति, प्रमात्व-निश्चय के अधीन ही मानते है ( अत सब कही प्रमात्व-निश्चय से ही निःशङ्क प्रवृत्ति माननी चाहिए )। कृषि-आदि कर्मो मे सशय होने पर भी जो प्रवृत्ति देखी जाती है, वह नि शङ्क प्रवृत्ति नही। इस प्रकार जहाँ-जहाँ नि शङ्क प्रवृत्ति होती है, वहाँ-वहाँ प्रमात्व—निश्चय के अधीन ही होती है—यह मानना होगा। नही तो प्रमात्व का निश्चय न होने से निवृत्ति भी प्राप्त होगी। व्यवहारादि फल में भी परतस्त्व नही, क्योकि ( ज्ञान का फल दो प्रकार का माना जाता है—एक ज्ञेय की

ज्ञानमात्रादेव सिद्धे । उपादानादीनां पुनरिष्टसाधनादिज्ञानाधीनतया तद्विषयप्रमाणस्य तत्रापि फलजनकत्वं स्वत एव । तस्मादवधीयैव गुणगणमनपेक्ष्यैव दोषाभाव स्वशक्त्यैव स्वार्थमावेदयन्ति वेदान्ता इति सिद्धम् ।

ननु स्वरूपसहकारिसमवधानातिरिक्तां शक्तिमेव न जानीम, तत्र प्रमाणाभावात् । तथा हि स्फोटादिलक्षणकार्यान्यथानुपपत्तिस्तत्र प्रमाणम् ? उतोपादानोपादेयभावनियमानुपपत्ति ? नाद्यः; स्वरूपादेव पावकादे प्रतिबन्धकाभावादिसहकार्युपबृंहितात्, स्फोटादिलक्षणकार्योत्प-

'ज्ञेयाभिव्यक्तितो यस्मान्न च ज्ञानात्फलान्तरम् ।
इष्यते कर्म्यवबातस्तदर्थं विधिकल्पना ॥'

इति । तच्च फल ज्ञानमात्रादेव न पुनरन्यनिबन्धनमित्यर्थः । अथोपादानाद्येव सर्वत्र फल विज्ञानस्य, तच्चेष्टसाधनादिज्ञानाधीनमिति परतस्त्व पुरस्तादेव वर्णितमिति तत्राह—**उपादानादीनामिति** । न वस्तुमात्रज्ञानफलमुपादानादि,अपि तु गुणदोषमाध्यस्थ्यज्ञानाना तेषा च स्वत एव तज्जनकत्वमिति तत्रापि वर्णितस्वतस्त्व न व्यभिचरतीत्यर्थः । वादार्थमुपसहरन् समन्वयोपयोगमाह—**तस्मादिति** ।

'इति स्वतस्त्व' परितः प्रसाधित प्रमाणमात्रस्य सतः स्वतो यदा ।
निषिद्धपुदोषकथेषु लीलया समस्तवेदान्तवचस्सु सिध्यति ॥'

स्वशक्त्यैव वेदान्ताः स्वार्थमावेदयन्तीत्युक्त तत्र स्वरूपसहकार्यतिरिक्तशक्त्यसहिष्णवस्तार्किका' प्रत्यवतिष्ठन्ते—**नन्वित्यादिना**। समवधान मेलनम् । तत्र किं कार्योत्पत्तिप्रयोजकधर्ममात्र शक्ति. ? किं वातीन्द्रियत्वे सति तादृशो धर्मः ? किं मृदादिगतातीन्द्रियप्रयोजकधर्मविशेषो वा ? मृदादिस्वरूपमात्रगतस्तादृशो वा ? प्रथमे त्वविवादः, घटत्वाग्नित्वादिजातीनामङ्गीकारात् । द्वितीयेऽपीश्वरेच्छादीनामङ्गीकारादविवादः । तृतीयेऽपि कालादिसयोगस्य मृदादावङ्गीकारादविगानमेव । चतुर्थश्चेत्तत्राह— **तत्र प्रमाणाभावादिति** । तत्र किमर्थापत्ति. ? अनुमानम् ? आगमो वा प्रमाणम् ? तत्रार्थापत्ति द्विधा विकल्प्य दूषयति—**तथा हीत्यादिना** । कार्योत्पत्त्यनुपपत्तिर्वा, इदमस्योपादान दुग्धादि दध्यादेर्न पुनस्तिलादीति, तिलाद्येव तैलस्य न पुनर्दुग्धादीति योय नियमस्तदनुपपत्तिर्वेत्यर्थ' । स्यादेतत्—यदि स्वरूपसहकारिसमवधानमात्रात्कार्योत्पत्तिः प्रतिबन्धदशायामपि किमिति नोत्पद्यत स्फोटादिः । नहि तदाग्निरनग्नि सहकारिणो वेन्धनादयोऽनिन्धनादय' । तस्माद्यत्प्रतिबन्धात्कार्यं नोत्पद्यते, सैव शक्तिरित्यनुपपन्नैव कार्योत्पत्तिरन्तरेण शक्तिमिति तत्राह—**प्रतिबन्धकाभावादीति** । एतदुक्त भवति—प्रमाणद्वयविरोधोऽर्थापत्ति, यथा देवदत्तस्य जीवनग्राहकस्य गृहाभावग्राहकस्य च विरोधो बहिर्भाव कल्पयति विरोधपरिहृत्यै । न चात्र तथा-विरोधः, स्फोटोत्पत्त्यनुत्पत्तिग्राहकयोरग्निमात्रे विरोधेऽपि प्रतिबन्धाभावतद्राहित्यवदग्निविषयत्वेन विरोधशान्तेरिति । ननु न प्रतिबन्धकाभाववदग्निविषयतया विरोध. शाम्यति, अभावस्य कारणताभावादिति

अभिव्यक्ति और दूसरा हानोपादानादि व्यवहार) ज्ञेयाभिव्यक्ति तो ज्ञानमात्र से ही होती है । उपादानादि व्यवहार इष्ट-साधन-ज्ञान के अधीन होते है, अतः तद्विषयक प्रमाण (उपादानादिनिष्ठ इष्ट-साधनता का ज्ञान) वहाँ भी स्वत ही फल का जनक है। इसलिए आप्तत्वादि गुण एव भ्रमादिदोषो के अभाव की अपेक्षा न करते हुए ही वेदान्त वाक्य अपनी शक्ति से स्वार्थ के बोधक है–यहसिद्ध हो गया ।

पूर्वपक्ष—कारणस्वरूप, सहकारी-सचयन—इनको छोड़कर अतिरिक्त शक्ति पदार्थ मे कोई प्रमाण नहीं । यदि माने, तो कौन प्रमाण होगा ? दाहादिरूप कार्य की अन्यथानुपपत्ति या उपादानोपादेयभाव-नियम ( कार्य-कारणभाव के नियम ) की अन्यथानुपपत्ति ? प्रथम पक्ष ( दाहादि कार्य के लिए अग्नि-आदि मे शक्ति माननी ) उचित नही, क्योकि प्रतिबन्धकाभावादि सहायक सामग्री से युक्त, अग्नि–आदि कारण से ही जब दाहादि कार्य सम्पन्न हो जाता है, तब उसके लिए किसी अती-

त्युपपत्तावतीन्द्रियशक्तिकल्पनानुपपत्ते । न चाभावस्याकारणत्वात्प्रतिबन्धकाभावो न सहकारीति सांप्रतम् , किमन्वयव्यतिरेकित्वं नास्ति ? उताभावस्य कारणत्वेऽनिष्टप्रसक्ति ? नाद्य ; भाववदभावस्यापि कार्यान्वयव्यतिरेकित्वात् । न द्वितीय., योग्यानुपलब्धेरभावप्रमितिहेतुत्वात् , विवेकाग्रहस्य च विभ्रमहेतुत्वात् । ननु किं प्रतिबन्धकप्रागभावस्य कारणत्वम् ? उत तत्प्रध्वंसस्य ? नाद्य , उत्तम्भकसद्भावे सत्यपि प्रतिबन्धके विनापि प्रागभावं कार्यदर्शनात् । न द्वितीय , प्रतिबन्धकानुदयेऽपि कार्योपलब्धेरिति चेत् , मैवम् , उत्तम्भकमणिमन्त्राद्यभावसहकृतस्यैव प्रतिबन्धकस्य प्रतिबन्धकत्वात् , तेन तत्र प्रतिबन्धकप्रागभावसहकृतस्यैव कार-

---

तत्राह—**न चाभावस्येति** । किंच नाद्वैतस्तावदेवमयुक्त वक्तुमित्याह—**योग्येति** । गुर्वनुवर्तिन. प्रत्याह—**विवेकाग्रहस्येति** । विभ्रमशब्दोऽयथार्थव्यवहारपरो गुरुनये । अत्र प्रतिबन्धकाभावस्य कारणत्व विकल्पैकैक व्यभिचारेण दूषयति शक्तिवादी—**नन्वित्यादिना** । यदा ह्युत्तम्भक. प्रतिबन्धकसविध निधीयते तदा सत्यपि प्रतिबन्धके मण्यादौ कार्यमुत्पद्यते, न तत्र प्रागभावोऽस्तीत्यर्थ । इयमपि प्रबन्धकध्वसव्यभिचारभूमिर्भवत्येव, तथाप्यसाधारण दूषणमाह—**प्रतिबन्धकेति** । नह्यनुदितप्रतियोगी प्रध्वंस सभवतीति भावः । तदेतत्परिहरति—**मैवमिति** । नास्माभिर्मण्यादिस्वरूपमात्रस्य प्रतिबन्धकत्वमुच्यते , अपितूत्तम्भकाभावविशिष्टस्य । न च तादृशमुत्तम्भकसन्निधानेऽस्तीति तदापि प्रतिबन्धकप्रागभावस्य न व्यभिचार इत्यर्थ. । उक्त च कुसुमाञ्जलावुदयनेन—"प्रतिबन्धकोत्तम्भकाले तर्हि व्यभिचार. ? स्यात् , यदि यादृशे सति कार्यानुदयस्तादृशे एव सत्युत्पाद , नत्वेवम् , तदापि प्रतिपक्षस्याभावात् असत्प्रतिपक्षो हि प्रतिबन्धकोऽभिमता, न सत्प्रतिपक्ष. । स च तादृशो नास्त्येव, यस्त्वस्ति नासौ प्रतिपक्ष "इति । स्यादेतत्—प्रतिबन्धकाभावस्य सामग्र्यन्त·पातित्वमयुक्तम् , अनियतहेतुकत्वप्रसङ्गात् । तथाहि—यत्राग्न्यादिसमवधाने प्रतिबन्धकमण्याद्यभावे झटिति कार्यमुत्पद्यते, तत्र विशेष्यमण्यादिप्रतिबन्धकाभावादिति वक्तव्यम् । यत्र मण्यादौ विद्यमानेऽपि उत्तम्भकसन्निधौ कार्यमुत्पद्यते, तत्रोत्तम्भकाभावरूपविशेषणाभावादिति नैकहेतुनि-

---

**न्द्रिय शक्ति की कल्पना हो ही नही सकती । यदि कहा जाय कि अभाव तो कारण ही नही होता, फिर प्रतिबन्धकाभाव सहकारिकारण कैसे होगा ? तो यह कहना उचित नही , क्योकि क्या अभाव के साथ कार्य का अन्वय-व्यतिरेक नही, इसलिए अभाव को कारण नही माना जाता ? या अभाव को कारण मानने मे कोई अनिष्ट प्राप्त होता है ? प्रथम पक्ष युक्त नही , क्योंकि अभाव के साथ भी अन्वय-व्यतिरेक वैसे ही होता है, जैसे भाव के साथ । द्वितीय पक्ष भी समुचित नही , क्योकि जब योग्यानुपलब्धि ( प्रत्यक्ष-योग्य उपलम्भाभाव ) को अभाव-प्रमा का हेतु मानने मे, विवेकज्ञानाभाव को भ्रम का हेतु मानने से कोई अनिष्टापत्ति नही होती, ( तब प्रतिबन्धकाभाव को हेतु मान लेने पर कहाँ से अनिष्टापत्ति फाट पडेगी ? ) । यदि शङ्का हो कि प्रतिबन्धाभाव को कारण मानने का अर्थ क्या प्रतिबन्धक-प्रागभाव को कारण मानना ? या प्रतिबन्धकध्वस को ? प्रथम पक्ष युक्त नहीं , क्योकि जहाँ पर प्रतिबन्धक के आ जाने से प्रतिबन्धक-प्रागभाव नष्ट हो गया है, वहाँ भी उत्तेजक ( सूर्यकान्तादि ) के रहने पर दाहादि कार्य देखा जाता है । द्वितीय पक्ष भी उचित नही , क्योकि जहाँ प्रतिबन्धक उत्पन्न नही हुआ, वहाँ उसका ध्वस है नही , फिर भी वहाँ दाहादि कार्य पाया जाता है । तो यह शङ्का उचित नही , क्योकि उत्तेजक मण्यादि के अभाव से युक्त, प्रतिबन्धक ( चन्द्रकान्तादि ) को ही प्रतिबन्धक माना जाता है । ( उक्त स्थल पर जहाँ उत्तेजक और प्रतिबन्धक-दोनो है, वहाँ प्रतिबन्धक मे प्रतिबन्धकता ही नही । जो प्रतिबन्धक है—उत्तेजकाभावविशिष्ट प्रतिबन्धक, उसका वहाँ भी अभाव है ) अत प्रतिबन्धक-प्रागभाव-सहकृत अग्नि की कारणता**

णत्वान्न व्यभिचार । एतेनानियतहेतुकत्वमप्यपास्तम् । सर्वत्र प्रतिबन्धकसंसर्गाभावविशिष्टस्यैव कारणात्वाङ्गीकारात् । अन्यथानुपलब्धावप्युपलब्धिप्रागभावप्रध्वसाभावविकल्पेनाभावप्रमितेरनियतहेतुकताया दुष्परिहरत्वात् । शक्तिपक्षेऽप्यप्रतिबद्धाया एव तस्या कारणत्वादभावविकल्पोत्थदोषतत्परिहारयो. समानत्वात् ।

ननु न प्रतिबन्धकाभावस्य कारणता, प्रतिबन्धापेक्षस्तदभाव कारणम्, कारणापक्षश्च तदभावः प्रतिबन्ध इत्यन्योन्याश्रयग्रस्तत्वात्, प्रतिबन्धो विसामग्री तद्धेतु प्रतिबन्धक 'इत्यङ्गी-

---

रूपणमिति तत्राह–**एतेनेति** । एतेनेत्यस्यैव विवरणम्–**सर्वत्रेति** । न विशेषणाभावो विशेष्याभावो वा हेतुस्तयोरप्रतिबन्धकत्वात्, किंतु विशिष्टाभाव, सचोभयथापि न भिद्यते । यथाहि–केवलदण्डसद्भावे दण्डपुरुषसद्भावे द्वयाभावे केवलपुरुषाभाव सर्वत्राविशिष्ट, तथा केवलोत्तम्भकसद्भावे, प्रतिबन्धकोत्तम्भकसद्भावे, द्वयाभावे वा, केवलप्रतिबन्धकाभावोऽविशिष्ट. । ससर्गाभावशब्देन तद्विशेषप्रागभावादित्रितय विवक्षितम् । प्रागभावप्रध्वसाद्यपेक्षया चेदमनियतहेतुकत्वमाशङ्क्य परिह्रियते । तदा च ससर्गाभावशब्दोऽप्यनुगुण त्रयानुगतत्वात् 'यस्मिन्न सति कार्यं न जायत यस्मिन्सत्येव कार्यं जायते इत्येव ससर्गाभावमात्रस्यैव प्रयोजकत्वा' दित्युदयनोक्तेश्च । अतश्चैवमेवाङ्गीकर्त्तव्यम्, अन्यथाऽनुपलब्धेरप्यभावप्रमितिहेतुतायामपि उक्तदूषणसाम्यादित्याह—**अन्यथेति** । अल वा स्थलान्तरप्रतिबन्धा शक्तावेवेय सुग्रहा—सापि ह्यप्रतिबद्धा कार्याय प्रभवति, ततस्तत्रापि प्रतिबन्धकाभावे समानावेवेमावाक्षेपपरिहारावित्याह—**शक्तिपक्षेऽपीति** ।

एवमभावविकल्पप्रयुक्तदोषे परिहृते प्रकारान्तरेण प्रतिबन्धकाभावस्य कारणतामाक्षिपति शक्तिवादी—**नन्विति** । यस्तदभाव. प्रतिबन्धकाभाव कारणमसौ प्रतिबन्धापेक्ष' तन्निरूपणीयत्वात्, यश्च कारणाभावः प्रतिबन्ध. सोऽपि कारणापेक्षः तन्निरूपणीयत्वादेव । ततश्च प्रतिबन्धाभावरूपकारणस्य कारणाभावरूपप्रतिबन्धस्य च परस्पराधीननिरूपणादन्योन्याश्रयतेत्यर्थ । ननु कारणाभावस्य प्रतिबन्धत्वे स्यादयमन्योन्याश्रयस्तदेव तु कथम्, यावता कार्यानुत्पाद एव प्रतिबन्ध इति तत्राह—**प्रतिबन्ध इति** ।

---

में किसी प्रकार का व्यभिचार नहीं । इसी से अनियतहेतुता ( उत्तेजकाभाव-विशिष्ट प्रतिबन्धक के अभाव को कारण मानने पर जहाँ उत्तेजकाभावरूप विशेषण है, किन्तु प्रतिबन्धक मण्यादि रूपविशेष्य के न होने से दाहादि कार्य होता है, वहाँ विशेष्याभाव को कारण मानना होगा और जहाँ प्रतिबन्धक मण्यादिरूप विशेष्य है, किन्तु उत्तेजकाभावरूप विशेषण नहीं, उत्तेजक ही है, वहाँ विशेषणाभाव को कारण मानना पड़ेगा । इस प्रकार कभी विशेष्याभाव में हेतुता और कभी विशेषणाभाव में हेतुता—द्र० न्या० कु० स्तब० १ पृ० ४२ ) का भी प्रतीकार हो जाता है, क्योंकि ( विशेष्याभाव या विशेषणाभाव में हेतुता न मानकर प्रतिबन्धक के ससर्गाभावरूप ( प्रागभाव, ध्वंस और अत्यन्ताभाव ) विशिष्टाभाव को हेतु माना जाता है । ( अर्थात् जहाँ विशेषण नहीं, वहाँ विशेषणाभाव-प्रयुक्त विशिष्टाभाव और जहाँ विशेष्य नहीं, वहाँ विशेष्याभाव-प्रयुक्त विशिष्टाभाव ही रहता है ) । अन्यथा ( अनियतहेतुता का उक्त परिहार न मानने पर ) अनुपलब्धि में भी उपलब्धि के प्रागभाव और ध्वसादि विकल्पों को लेकर अभाव ज्ञान की अनियतहेतुता का भी परिहार न हो सकेगा । इसी प्रकार शक्ति-पक्ष में भी प्रतिबन्धकाभाव-विशिष्ट शक्ति को ही कारण मानना होगा, वहाँ भी प्रागभावादि के आक्षेप का यही समाधान करना होगा ।

यहाँ शङ्का होती है कि प्रतिबन्धकाभाव को कारण मानने पर अन्योऽन्याश्रय दोष होगा, क्योंकि प्रतिबन्धकाभावरूप कारण को अपने प्रतियोगी प्रतिबन्धक की अपेक्षा और कारणाभावरूप प्रतिबन्धक को अपने प्रतियोगी कारण की अपेक्षा होती है । कारणाभाव को ही प्रतिबन्धक उदयनाचार्य ने माना है—"प्रतिबन्धो विसामग्री तद्धेतु प्रतिबन्धक" ( सामग्री का अभाव, प्रतिबन्ध

कारादिति चेत्, मैवम्, अवधीयैवाभावस्य कारणता कार्यानुदयमात्रेणैव मन्त्रादे. कार्यप्रतिकूलतावगमात्, अनवलम्ब्यैव च मणिमन्त्रादे कार्यप्रतिबन्धकतां तदभावस्यान्वयव्यतिरेकाभ्यामेव कारणताध्यवसायात्। किं चेदमन्योन्याश्रयत्वमुत्पत्तौ ज्ञप्तौ वा स्यात्? नाद्य., मन्त्रतदभावयो परस्परहेतुत्वाभावात्। नापि द्वितीय, अज्ञातयोरपि मन्त्रतदभावयो कार्यं प्रति प्रतिकूलत्वकारणत्वयोरुपपत्ते। ननु कार्याभावावसेयकार्यप्रतिकूलभावा मन्त्रादयः शक्तेरपह्नवाय कारणाभावरूपा इष्यन्ते, अत एव मन्त्राद्यभावोऽपि कारणमिष्यते, ततो मन्त्रतदभावनिष्ठप्रतिबन्धकत्वकारणत्वयोरन्योन्योपाधिकत्वादुत्पत्तौ ज्ञप्तौ वान्योन्याश्रयता दुर्वारेति

अयमर्थः—न तावत्कार्यानुत्पादः प्रतिबन्ध, तस्यानादितया प्रतिबन्धकाधीनत्वाभावात्। नापि तस्य कालान्तरसबन्ध, कालस्यैकत्वात्, औपाधिकानेकत्वे च कालोपाधेर्मण्याद्यजन्यत्वात्। कस्तर्हि कारणाभावात्कार्याभाव इति परिभाषार्थ? भावधर्मोपचारात्, सामग्रीकार्ययो पौर्वापर्यनियमः तदभावयोरप्युपचारात्प्रयुज्यते, वस्तुतस्तु समसमयत्वमेव। कस्तर्हि प्रतिबन्ध? इति हृदि निधायोक्तमुदयनेन—

'भावो यथा तथाऽभाव. कारण कार्यवन्मत।
प्रतिबन्धो विसामग्री तद्धेतु. प्रतिबन्धक.'॥ इति। (न्या०कु० १।१०)

अत्र पूर्वार्धेनाभावस्य कारणतानिरूपणेन प्रतिबन्धाभावस्य कारणत्वमुक्तम्। उत्तरार्धेन च प्रतिबन्धप्रतिबन्धको निर्दिष्टौ। प्रतिबन्धो नाम विसामग्री, सामग्रीवैकल्य मन्त्रादि, तद्धेतुस्तु मन्त्रप्रयोक्ताप्रतिबन्धक इति, तस्मात्सामग्रीप्रतिबन्धयोरस्त्येवान्यान्याश्रयतेति। यद्यप्युभयाभावत्वमुभयस्य तथाप्यन्योन्यनिरपेक्षस्य शक्यनिरूपणत्वान्नान्योन्याश्रयत्वमिति परिहरति—मैवमिति। मन्त्रादेः स्वाभावकारणतयाज्ञानमन्तरेणैव कार्यानुदयेन्वयव्यतिरेकाभ्या कार्यप्रतिकूलतालक्षणप्रतिबन्धकत्वावगमादित्यर्थः। मन्त्राद्यभावस्य कारणत्वमपि मन्त्रादिप्रतिबन्धकत्वज्ञानव्यतिरेकेणैव शक्यं ज्ञातुमित्याह—अनवलम्ब्यैव चेति। यथाह्यग्न्यादे कारणत्व कार्यान्वयव्यतिरेकाभ्यामेव तथा मन्त्राद्यभावस्यापीत्यर्थ.। एव साधारण्येन परिहारमुक्त्वा विकल्प्याह—किं चेति। यद्यपि मन्त्रादिप्रागभावस्य मन्त्रादि प्रति हेतुता सभवति, तथापि त प्रति न हेतुता मन्त्रादेरत आह—परस्परेति। ज्ञप्तौ परस्पराश्रय परिहरति—नापीति। नहि यद्यत्कारणं तत्सर्वं ज्ञातमेव कारणम्, चक्षुरादेरदर्शनात्। एवप्रतिबन्धाभावोऽपीति भाव.। तमिममुदयनीयमन्यान्याश्रयतापरिहार परिजहु न्यायरत्नदीपावलीकृतस्तदनुवदति—नन्विति। यद्यपि कार्यानुदयोदयान्वयव्यतिरेका-

पदार्थ है और उसका हेतु प्रतिबन्धक पुरुष होता है, मण्यादि नही)। किन्तु यह शङ्का उचित नही, क्योकि प्रतिबन्धकाभाव-निष्ठ कारणता की अपेक्षा न करके ही, दाहादि कार्य के न होने मात्र से मण्यादि मे कार्य-प्रतिकूलतारूप प्रतिबन्धकता का ज्ञान हो जाता है। इसी प्रकार मण्यादि-निष्ठ प्रतिबन्धकता की अपेक्षा किये बिना ही स्वतन्त्र अन्वय व्यतिरेक के आधार पर मण्यादि के अभाव मे कारणता का निश्चय हो जाता है। दूसरी बात यह भी है कि उक्त अन्योऽन्याश्रयदोष उत्पत्ति मे है? या ज्ञप्ति मे? (अर्थात् प्रतिबन्धक और कारण—दोनो एक-दूसरे के उत्पादक हैं? या ज्ञापक?)। प्रथम पक्ष ठीक नही, क्योकि मन्त्रादि प्रतिबन्धक और उनके अभाव रूप कारण का परस्पर जन्य-जनकभाव होता नही। द्वितीय पक्ष भी युक्त नही, क्योकि (कारणता और प्रतिबन्धकता के लिए ज्ञान की कोई आवश्यकता ही नही) अज्ञात मन्त्र मे दाह की प्रतिबन्धकता और अज्ञात मन्त्राभाव मे दाह की कारणता बन जाती है। यदि सन्देह हो कि जिन मणि-मन्त्रो मे कार्यानुत्पाद के द्वारा कार्यप्रतिकूलता का निश्चय किया जाता है, उन्हे ही शक्ति का निराकरण करने के लिए कारणाभाव रूप माना जाता है। इसीलिए मन्त्रादि के अभाव को कारण कहा जाता है। अत मन्त्रादिनिष्ठ प्रतिबन्धकता, मन्त्राद्यभाव-निष्ठ कारणता-निमित्तक और मन्त्राद्यभाव-निष्ठ कारणता, मन्त्रादिनिष्ठ प्रतिबन्धकता-निमित्तक है, फिर तो प्रतिबन्धकत्व और कारणत्व-दोनो को अपनी उत्पत्ति या

चेत्, न, उक्तोत्तरत्वात्—अन्तरेणैवाभावस्य कारणतावावगमं मन्त्रादे' कार्याभावमात्रेण कार्यप्रतिकूलभावस्यावगन्तु शक्यत्वात्, तदभावकारणत्वस्याप्यन्वयव्यतिरेकाभ्यामेव सुकरावगम्यत्वात् इति। न च शक्त्यनङ्गीकारे प्रतिबन्धासंभव., मणिमन्त्रादिसन्निधानासन्निधानयो. स्वरूपस्याविशेषादिति वाच्यम्, कार्यौदासीन्यस्यैव प्रतिबन्धशब्दाभिधेयस्य विशेषत्वात्, अन्यथा शक्तिपक्षेऽपि प्रतिबन्धस्य दुर्विवेकत्वात्। नहि शक्तेर्नाश. प्रतिबन्ध., प्रतिबन्धापाये कार्याभावप्रसङ्गात्। न च स्फोटाख्यकार्योत्पत्तये शक्त्यन्तर तत्रोत्पन्नम्, तत्कारणानिरूपणात्। न च प्रतिबन्धाभाव कारणम्, अभावस्य कारणतानङ्गीकारात्। अङ्गीकारे वा तस्यैव स्फोटा-

---

वसेये मन्त्रतदभावयो. प्रतिबन्धकत्वकारणत्वे, तथापि सामग्रीवैकल्यरूपतया मन्त्रादेः प्रतिबन्धकत्व नतु स्वरूपेण। एवं तदभावस्यापि प्रतिबन्धकाभावतया कारणत्व न स्वरूपेण, तथा च प्रतिबन्धकत्वकारणत्वयोरपरिहार्यैव सत्ताज्ञप्त्योरन्योन्याश्रयतेति खण्डलकार्थः। दूषयति—**नेति**। उक्तमेवोत्तर दर्शयति—**अन्तरेणेत्यादिना**। यद्यपि कोष्ठगत्या विद्यत एवायमर्थः, तथापीतरेतरनिरपेक्षत्वमन्वयव्यतिरेकाभ्या प्रतीयमानमनुभवसिद्ध न युक्तिसहस्रेणापि शक्यनिवारणमित्यर्थः। ननु प्रतिबन्धान्यथानुपपत्तिः शक्तौ प्रमाणम्। तथाहि—अग्न्यादिस्वरूप तावन्न प्रतिबध्यते, पूर्ववदेवाविकलमुपलभ्यमानत्वात्तस्माद्यदनेन प्रतिबध्यते तदतीन्द्रिय शक्तिर्नामेति तदिद सहेतुकमनूद्य प्रतिषेधति—**न चेत्यादिना वाच्यमित्यन्तेन**। तत्र हेतुः—**कार्यौदासीन्येति**। अग्न्यादिस्वरूपावैकल्येऽपि मन्त्रादिसन्निधाने कार्योत्पादं प्रत्युदासीना: भवन्त्यग्न्यादय, अयमेव प्रतिबन्ध इत्यर्थ.। शक्तिपक्षेऽप्ययमेव प्रतिबन्धशब्दार्थो वक्तव्यः, स मत्पक्षेपि समान इति प्रतिबन्दी गृह्णाति—**अन्यथेति**। एतदेव शक्तिपक्षे परिशेषयति—**न हीत्यादिना**। ननु सा शक्तिविनष्टैव, उत्तरकाल तु शक्त्यन्तरमुत्पन्न तदा कार्योदय इति तत्राह—**न च स्फोटाख्येति**। न तावदग्निसामग्रीतस्तस्योत्पाद; तस्या नष्टत्वात्। नाप्याश्रयभूताग्नेः, तस्याऽशक्तस्यानुत्पादकत्वात्। उत्पादकत्वे वा कार्ये तथा इति कृत शक्तिपिशाचिकया। शक्तश्चेत्सैव शक्तिः कार्येऽप्यस्तु, मुधोत्पाद्या शक्ति, तस्मात्कारणान्तरानिरूपणान्न शक्त्यन्तरोत्पाद इति भाव.। ननु किमिति कारणाभावः, यावता प्रतिबन्धाभावादेवेयमुत्पद्यतामिति तत्राह—**न चेति**। ननु शक्तेरपि शक्तिरस्ति सैव प्रतिबद्ध्यतामिति

---

ज्ञप्ति में परस्पर की अपेक्षा होने से अन्योऽन्याश्रयता दुर्वार है। तो यह सन्देह युक्त नही, क्योकि यह कहा जा चुका है कि अभाव-निष्ठ कारणता—ज्ञान के बिना ही कार्यानुत्पाद के आधार पर मन्त्रादि मे प्रतिबन्धकत्व और प्रतिबन्धकत्व-ज्ञान के बिना ही मन्त्राद्यभाव मे कारणता का अन्वय-व्यतिरेक से निश्चय सुकर है।

यदि कहा जाय कि शक्ति को न मान कर प्रतिबन्ध ही सम्भव नही, क्योकि मणि-मन्त्रादि की सन्निधि और असन्निधि से अग्नि के स्वरूप मे कोई अन्तर नही आता ( अत अग्नि का स्वरूप प्रतिबध्य नही हो सकता, अपितु अग्नि मे एक अतीन्द्रिय शक्ति माननी होगी जिसके प्रतिबध्य हो जाने से दाह नही होता )। तो यह कहना सगत नही, क्योकि 'प्रतिबन्ध' शब्द का अर्थ शक्ति नाश होना नही, अपितु कार्य के प्रति उदासीन होना। प्रतिबन्धक की सन्निधि से अग्नि, दाह के प्रति उदासीन हो जाती है। शक्ति-पक्ष मे भी यही 'प्रतिबन्ध' शब्द का अर्थ मानना होगा। शक्ति का नाश, प्रतिबन्ध नही कहा जा सकता, क्योकि प्रतिबन्धक के आने से यदि अग्नि की शक्ति ही नष्ट हो जाती है, फिर प्रतिबन्धक के हटाने से दाह नही होना चाहिए। 'दाह रूप कार्य के लिए अग्नि मे दूसरी शक्ति उत्पन्न हो जाती है'—यह नही माना जा सकता, क्योकि दूसरी शक्ति के कारण का निरूपण नही हो सकता। प्रतिबन्धाभाव को कारण नही कह सकते, क्योकि अभाव मे कारणता नही मानी जाती। यदि मान ली जाय, तब तो वही ( प्रतिबन्धाभाव ही ) दाह का भी जनक हो

दिकार्यजनकत्वमस्तु, कृतमतीन्द्रियशक्तिकल्पनादुर्व्यसनेन। शक्तेः शक्त्यन्तरं प्रतिबध्यते इति वदतोऽनवस्था, तस्मात्कार्यस्यान्यथाप्युपपन्नत्वान्नातीन्द्रियशक्तिकल्पनावकाशः।

नापि द्वितीयः, उपादानोपादेयभावनियमस्याप्यनादिसिद्धवृद्धव्यवहारावसिततत्कार्यानुकूलस्वभावभेदादेवोपपत्तेः। अन्यथेयमिहैव किमिति शक्तिर्नान्यत्रेति पर्यनुयोगे कः स्वभावभेदादन्यः परिहारः स्यात्? तस्मादर्थापत्तिद्वयमपि नात्र प्रमाणम्। अस्तु तर्ह्यनुमानम्, तथाहि-विमतमजनकदशातो जनकदशायामतिशययोगि, कारकत्वात् कुण्ठकुठारवदिति चेत्, न, सहकारिसमवधानातिशयेनैव सिद्धसाधनत्वात्। अस्तु तर्ह्यग्निरतीन्द्रियसामान्यवन्निष्क्रि-

---

तत्राह—शक्तेरिति। तत्राप्युक्तदूषणपरिहाराय शक्तिप्रतिबन्धो वक्तव्यः, तथाचानवस्थेति भावः। प्रथमार्थापत्तिदूषणमुपसंहरति—तस्मादिति।

अनादिसिद्धो यो वृद्धव्यवहारस्तेनाऽसितो यस्तत्तत्कार्यानुकूलस्वभावस्य भेदो विशेषः तस्मादेवोपादानोपादेयनियमोपपत्तेः तदर्थमपि शक्तिर्न कल्पनीयेति द्वितीयामर्थापत्तिं दूषयति—उपादानेति। यदि हि स्वभावो नियामको न स्वीक्रियते तर्हि शक्तावपि न स्यान्नियम इत्याह—अन्यथेति। तिमिरादिप्रयोगमनुवदति—विमतमिति। विमतमग्न्यादि। अतिशययोगीत्युक्ते अविद्यमानदशातो विद्यमानदशाया सत्त्वलक्षणातिशयवत्त्वात् सिद्धसाध्यता तदर्थमजनकेति विशेषणम्। इदं शक्तिसाधकं न भवति, सहकारिसमवधानस्यातिशयस्यापि जनकावस्थाया साधकतयार्थान्तरत्वादिति परिहरति—न। सहकारीति। न्यायरत्नदीपावलीस्थमनुमानमुद्भावयति—अस्तु तर्हीति। निष्क्रियाश्रय इत्युक्ते सामान्याभावाद्याश्रयत्वेन सिद्धसाधनं तदर्थं सामान्यवदित्युक्तम्। तथापि गुणकर्मस्था सिद्धसाधनता तदर्थमतीन्द्रियेत्युक्तम्। तेजोद्व्यणुकरूपादिना सिद्धसाधनतापरिहारायैतत्सामान्यग्रहणम्। तस्यैन्द्रियकसामान्यवत्त्वात्। वाय्वाश्रयत्वेनार्थान्तरतानिवृत्त्यै निष्क्रियेत्युक्तम्। गुरुत्वगुणाश्रयः पार्थिवमाप्यं वाऽत्र दृष्टान्तः। गुरुत्वत्वजातेरतीन्द्रियतया गुरुत्वाश्रयस्योक्तरूपत्वात् तजसि गुरुत्वासम्भवेन शक्तिसिद्धिः। तदुक्तमेव व्यावर्त्यमाह—तेज

---

सकता है, छोडिए यह अतीन्द्रिय शक्ति-कल्पना का दुर्व्यसन। यदि कहें कि प्रतिबन्धक की सन्निधि में अग्नि नष्ट नही होती, अपितु शक्ति की शक्ति प्रतिबद्ध हो जाती है, तब तो अनवस्था होगी। अतः दाहादि-कार्य की अन्यथा (शक्ति के बिना) भी उपपत्ति हो जाती है। अतीन्द्रिय शक्ति की कल्पना का कोई अवसर नही।

द्वितीय (उपादानोपादेय भाव के नियम की अन्यथानुपपत्ति) भी शक्ति में प्रमाण नही, क्योंकि तैल के उपादान कारण तिल ही है, दुग्ध नही, दधि का उपादान कारण, दुग्ध ही है, तिल नही—इस प्रकार का उपादानोपादेय भाव का नियम भी अनादि सिद्ध वृद्ध-व्यवहार के आधार पर निश्चित कार्यानुकूल कारण के स्वभावविशेष से ही बन जाता है। अन्यथा (स्वभावविशेष को उपादानोपादेयभाव का नियामक न मानने पर) 'दाहादि की शक्ति अग्नि मे ही क्यो?'—इस प्रश्न के उत्तर मे अग्नि के स्वभावविशेष को छोडकर और क्या कहा जायगा? अतः उक्त दोनो प्रकार की अर्थापत्तियाँ, शक्ति में प्रमाण नही हो सकी। 'विवादास्पद (आग्न्यादि) पदार्थ, अजनक अवस्था की अपेक्षा जनक अवस्था मे किसी अतिशय (विशेषार्थ) से युक्त होते है, जनक होने से, जैसे-कुण्ठित कुठार'—इस अनुमान से भी शक्ति की सिद्धि नही हो सकती, क्योकि सिद्ध-साधन है—पहले अग्नि, जलाती नही थी, अब जलाने लगी, अतः उसमे अवश्य कुछ विशेषता आई है, वह विशेषता है—सहकारि-समागम, यह तो सर्व-सम्मत है ही। कुछ विद्वान् शक्ति साधन मे यह अनुमान-प्रयोग किया करते है—'अग्नि, अतीन्द्रिय जातिवाले निष्क्रिय पदार्थ का आश्रय होती है, कारण होने से, जैसे गुरुत्वा-

याश्रयः कारणत्वात् गुरुत्वाश्रयवदिति प्रयोग. । तेजोद्व्यणुकमतीन्द्रियरूपस्य वायोश्चाधिकरणमिति तद्व्यावृत्त्यर्थमतीन्द्रियसमान्यवन्निष्क्रियेत्युक्तमत शक्तिसिद्धिरिति कश्चित्, तन्न, योगिस्वीकारवादिन प्रत्यतीन्द्रियविशेषणस्याप्रसिद्धत्वात्। विमतं न गुरुत्वजातिविषयमिन्द्रियत्वादस्मच्चक्षुर्वदित्यतीन्द्रियसिद्धिरिति चेन्न । योगिनमनङ्गीकुर्वतो मीमांसकस्याश्रयासिद्धे, तत्सिद्धौ वा धर्मिग्राहकप्रमाणबाधात्। अस्तु तर्ह्यस्मदाद्यभिप्रायेणातीन्द्रियत्वविशेषणम्, मैवम्, अनुव्यवसायप्रत्यक्षगोचरतया सर्वस्यास्मदादिविशेषणस्वीकारेऽपि पूर्वोक्तदोषतादवस्थ्यात् । अनुव्यवसायेतरास्मदाद्यैन्द्रियकबुद्ध्यगोचरत्वाभिप्रायेणातीन्द्रियत्वविशेषणमिति-

---

इति । तदेतद्दूषयति—योगीति । तार्किकाणा हि सर्वं योगिप्रत्यक्षमित्यतीन्द्रियविशेषणस्यासिद्धत्वात् अप्रसिद्धविशेषण पक्ष इत्यर्थ. । अत्र तेनैव गुरुत्वत्वजातेर्योगिन. प्रत्यतीन्द्रियत्वसमर्थनेनैवाप्रसिद्धविशेषणतासाध्यवैकल्ये परिहृते । तदनुवदति—विमतमिति । योगीन्द्रियमित्यर्थ. । एवमनुमिमानस्य योगीन्द्रिय प्रसिद्धमप्रसिद्ध वा ? द्वितीये प्राह—योगिनमिति । प्रथमे प्राह—तत्सिद्धौ वेति । साध्य विशेषयति—अस्तु तर्हीति । तथाप्यप्रसिद्धविशेषणतामाह—मैवमिति । यदा हि परमाणु जानाम्याकाश जानामीत्यनुव्यवसायो जायते, तदा परमाण्वादि तज्ज्ञान चानुव्यवसायस्य मानसप्रत्यक्षस्य विषयो भवति, एव सर्वोऽप्यैन्द्रियकज्ञानविषय इत्यप्रसिद्धमतीन्द्रियत्वमस्मदादि प्रत्यपीत्यर्थ. । अनुव्यवसायेतरत्वे

---

श्रय पृथिव्यादि ।' तैजस द्व्यणुक मे निष्क्रिय रूप की तथा अतीन्द्रिय जातिवाली वायु की आश्रयता लेकर क्रमश सिद्ध साधनता और अर्थान्तरता दोष होते है, उन्हें व्यावृत्त करने के लिए जाति का अतीन्द्रियत्व तथा जातिमान् का निष्क्रियत्व विशेषण लगाया [ 'निष्क्रियाश्रय'—इतना ही साध्य रखने पर अग्नि में सामान्य समवायादिरूप निष्क्रिय पदार्थो की आश्रयता लेकर सिद्ध-साधनता होती थी, उसे हटाने के लिए साध्य का विशेषण लगाया—'सामान्यवत्ता' । सामान्यादि मे सामान्यवत्ता नही । फिर भी रूपत्वादि जातिवाले निष्क्रिय रूपादि की आश्रयता, अग्नि मे सिद्ध ही है । अत इस सिद्ध-साधनता की निवृत्ति के लिए सामान्य का विशेषण दिया—'अतीन्द्रियता' । रूपादि, अतीन्द्रिय जाति वाले नही होते । अतीन्द्रिय-यह विशेषण, सामान्य का न मानकर यदि सामान्यवान् का माने, तब भी अनुद्भूत रूप की आश्रयता तेज मे सहज-सिद्ध है, इस लिए जाति का ही 'अतीन्द्रिय' विशेषण उचित है । अनुद्भूत रूप-गत रूपत्व जाति अतीन्द्रिय नही मानी जाती । गुरुत्वत्वरूप अतीन्द्रिय जाति वाले गुरुत्वरूप निष्क्रिय गुण के आश्रय-पृथिवी, जल दृष्टान्त है ] अग्निरूप पक्ष में वैसा कोई गुरुत्वादि रहता नही, अत वहाँ इस अनुमान से अतीन्द्रिय शक्ति सिद्ध हो जाती है । किन्तु यह अनुमान निर्दुष्ट नही, क्योकि तार्किको के मत से समस्त जगत्, योगी के प्रत्यक्ष का विषय है, उसके लिए अतीन्द्रिय कुछ भी नही, अत: अतीन्द्रिय-घटित साध्यरूप विशेषण ही अप्रसिद्ध है । यदि कहा जाय कि 'विवादास्पद ( योगीन्द्रिय ) गुरुत्व-जाति ( गुरुत्वत्व ) को विषय नही करती, इन्द्रिय होने से, जैसे-हम लोगो के नेत्र'—इस अनुमान के बल पर सर्वथा अतीन्द्रिय 'गुरुत्वत्व' जाति सिद्ध हो जायगी । तो ऐसा नही कह सकते, क्योकि योगी की सत्ता न मानने वाले मीमासको के प्रति 'योगीन्द्रियरूप' पक्ष ही अप्रसिद्ध है । यदि उसकी सिद्धि मान ले, तब योगीन्द्रिय मे सर्वार्थ-ग्राहकता के प्रतिपादक शास्त्रादि प्रमाणो से ही उक्त साध्य का बाध हो जायगा । यदि कहा जाय कि जाति-गत अतीन्द्रियत्व का तात्पर्य है—योगि-भिन्न हम लोगो की इन्द्रियो के अविषयत्व मे, तब भी 'गुरुत्वत्वज्ञानवान् अहम्'—आदि हम लोगों के मानस प्रत्यक्ष की विषयता को लेकर वही 'अतीन्द्रियत्व-अप्रसिद्धि' दोष जेसे का तैसा बना रहता है । 'अतीन्द्रियत्व' का अर्थ, 'मानस प्रत्यक्ष से भिन्न हमलोगो की ऐन्द्रियक बुद्धि की अविषयता' करने पर भी

स्तान्निरस्तत्वात्, मन्त्रादिसमवधानासमवधानयोरविशेषेण कार्यजननप्रसङ्गो बाधकः। न चैवंविधधर्माश्रयत्वे गुणकर्मादेरपि द्रव्यत्वप्रसङ्ग , तेषां गुणानधिकरणत्वात्। न चैवविधधर्माश्रयत्वाद् गुणाधिकरणत्वमपि स्यादिति वाच्यम्, प्रसङ्गस्य विपर्ययापर्यवसायित्वात्। न हि यद्गुणानधिकरण तदेवविधधर्माधिकरणं न भवतीति प्रतिवादिसंप्रतिपन्नमुदाहरणमस्ति, येनाय प्रसङ्गो विपर्यये पर्यवसायी स्यात्; शक्तिव्यतिरिक्तस्य सर्वस्य पक्षकोटिनिक्षिप्तत्वात्। द्वितीयानुमानेऽपि मायावादिनं प्रति नेश्वरकारणत्वेन सिद्धसाधनता। तस्योभयवादिसंमतकारणातिरिक्तत्वाभावादीश्वरकारणत्वस्य वेदान्तिभिरभ्युपगमात्, जन्यभावजन्य इति विशेषणान्तरप्रक्षेपेण भाट्टस्याप्यर्थान्तरपरिहारसम्भवात्। न चैवं सति नित्येषु शक्त्यभावप्रसङ्गः,

---

निराकरोति—**नचैवमिति**। तद्यपि शक्तिवादिना गुणादिष्वप्येव धर्मोभिमतस्तथापि माभूद् गुरुत्वस्थितिस्थापकादेरुक्तरूपतत्तदवान्तरजात्याश्रयत्वमात्राद्द्रव्यत्वप्रसक्ति। अथ तदप्यनेकवृत्तित्वाद्द्विष्ठमपि भवतीति मत तथापि गुणवत्त्व द्रव्यत्वप्रयोजकम्। नच तद्गुणादावप्यस्तीति न द्रव्यत्वप्रसक्तिरित्याह—**तेषामिति**। तर्ह्यनेनैव गुणाधिकरणत्वमपि प्रसञ्जनीयमिति तत्राह—**न चैवमिति**। प्रशिथिलमूलतया आपादन दूषयति—**प्रसङ्गस्येति**। एवं ह्यस्य विपर्यय., विप्रतिपन्न गुणादि एवविधधर्मानधिकरण गुणानधिकरणत्वादिति। नचात्र व्याप्तिरस्ति, शक्तिगुरुत्वाश्रयव्यतिरिक्तस्य सर्वस्य पक्षकोटिनिक्षिप्तत्वात्। अस्तु तर्हि शक्तिरेव विपर्ययपर्यवसानभूमिः, तस्या. गुणानधिकरणत्वादद्विष्ठातीन्द्रियत्वादिविशिष्टधर्मानाश्रयत्वाच्च। तथा शक्तावपि शक्तिस्वीकारेणानवस्थापातादिति चेत्, मैवम्, नैयायिकादिमते तदसिद्धेः। नच परसिद्धेन दृष्टान्तेन प्रसङ्ग. प्रसरमासादयतीति साम्प्रतम्, उभयवादिप्रमितस्यसाधनाङ्गतानियमभङ्गप्रसङ्गादितिभावः। एव प्रथमानुमान समर्थयित्वा स्फोट सम्प्रतिपन्नस्फोटकारणातिरिक्तकारणजन्य इत्यनुमानेऽर्थान्तरतामुक्त्वा परिहरति—**द्वितीयेति**। ननु भवतु वेदान्तिभिरीश्वराङ्गीकारादुभयवादिसम्प्रतिपन्नत्वेन तदतिरिक्तत्वाभावान्नेश्वरेणार्थान्तरता, मीमासकाना त्वनीश्वरवादित्वाद्भवत्येव तेनार्थान्तरतेति तत्राह—**जन्यभावेति**। तथा च न नित्येश्वरेणार्थान्तरतेति भावः। भाट्टस्यापीत्युपलक्षणम्। तर्हि नित्यगतनित्यशक्तावव्याप्तिरित्याशङ्क्य निषेधति—**न चेत्यादिना**। नित्यद्रव्येषु द्रव्यत्वेन नित्यगुणेषु

---

यह जो आपत्ति दी थी कि उक्त विशिष्ट धर्म की आश्रयता मानने पर गुण कर्मादि भी द्रव्य हो जायँगे। वह कहना युक्तियुक्त नहीं, क्योकि गुणादि में ( द्रव्यत्व-नियामक ) गुणाधिकरणता ही नहीं। यदि कहा जाय कि उक्त साध्य की आश्रयता से गुणाश्रयता की भी वहाँ प्रसक्ति होगी। तो यह भी नहीं कह सकते, क्योकि उक्त तर्क का यदि 'गुणादि, अद्विष्ठातीन्द्रियस्थितिस्थापकेतरभाव के अनाश्रय हैं, गुणो के अनाश्रय होने से'—इस प्रकार के विपर्यय-प्रयोग मे पर्यवसान हो जाता, तब वहाँ गुणाश्रयता की सिद्धि हो सकती थी। किन्तु इस प्रकार के साध्य—साधन की व्याप्ति मे कोई दृष्टान्त ही नही, शक्ति-भिन्न समस्त पदार्थ पक्ष-कोटि मे ही प्रविष्ट हो जाते है। द्वितीय अनुमान ( विवादाध्यासितः स्फोट., उभयवादिसम्प्रतिपन्नस्फोटकारणातिरिक्तकारणजन्य, कार्यत्वाद्, घटवत् ) में जो ईश्वर को लेकर सिद्ध-साधनता दी थी। वह माया-वादियो ( वेदान्तियो ) के मत मे नही हो सकती, क्योकि वे भी ईश्वर मानते है। अत ईश्वररूप कारण, उभयवादि-सम्प्रतिपन्न ही हो जाता है, उससे अतिरिक्त नही। अतिरिक्त कारण का 'जन्यत्व' विशेषण लगा देने से भाट्ट मत में अर्थान्तरता का परिहार सम्भव हो जाता है। 'अतिरिक्त कारण का 'जन्यत्व' विशेषण देने पर अनित्य शक्ति ही सिद्ध होगी, नित्यपदार्थों मे नित्य शक्ति की सिद्धि कैसे होगी'—यह शङ्का नही करनी चाहिए, क्योकि अनित्य पदार्थों में शक्ति सिद्ध हो जाने पर, उन शक्तिमान् अनित्यपदार्थों को दृष्टान्त बनाकर नित्यपदार्थों मे शक्ति सिद्ध की जा सकेगी ( जैसे-नित्यं द्रव्यं शक्तिमद्, द्रव्यत्वाद्,

अनित्येषु शक्तिसिद्धौ तद्दृष्टान्तावष्टम्भत एव नित्येष्वपि तत्सिद्धेः सलिलपरमाणुरूपादिवन्नित्येषु तस्याश्च नित्यत्वोपपत्तेः ।

व्रीहीन्प्रोक्षतीत्यादिद्वितीयाश्रुतिभिश्च व्रीह्यादिषु अतीन्द्रियशक्तिसद्भावसिद्धिः । न चादृष्टस्य चेतनधर्मस्याचेतनेषु व्रीह्यादिष्वसम्भवात् तद्विषयक्रियाजन्यतामात्रेण तदीयत्वप्रतिपत्त्युपपत्तेश्च द्वितीयाश्रुतिर्गौणीति वाच्यम्, धर्माधर्मलक्षणादृष्टविलक्षणस्यैव कस्यचिदतिशयस्य तण्डुलपिष्टपुरोडाशादिपरम्परया प्रधानापूर्वजननसामर्थ्यापरनामधेयस्याभ्युपगमात् । अन्यथा स्वरूपेणैव व्रीह्यादीना तत्साधनत्वे प्रोक्षणादिविधानवैयर्थ्यप्रसङ्गात्, दृष्टस्यासभवे

---

गुणत्वेन सामान्यादिषु च शक्त्यन्यनित्यत्वेन सप्रतिपन्नवदेव शक्त्यनुमानादिति भाव'। स्यादेतत्-साध्यता नाम, नित्यता तु कथ स्यात्? यावता शक्त्युपाधावेकरूपाया नित्यत्वानित्यत्वविरोधादिति तत्राह—सलिलेति । इदमत्राकूतम्—नेय शक्तिरेकैव, येनैकस्या. शक्तेर्जन्यत्वमजन्यत्व च विप्रतिपिध्यते, अपि तु प्रतिपदार्थविभिन्ना, तथाचावयविषु अनित्यत्वेऽपि रूपस्य पाथ पावकपरमाणुषु नित्यत्ववन्नित्यत्व कि न स्यादिति ?

आधेयशक्तावागम प्रमाण समर्थयते—व्रीहीनिति । यत्तु मुख्यार्थानुपपत्त्युपन्यासेनार्थान्तरत्वमुक्तम्, तदनूद्य दूषयति—न चेत्यादिना, वाच्यमित्यन्तेन । तत्र हेतुमाह—धर्माधर्मेति । नास्माभिर्धर्माधर्मात्मकादृष्ट व्रीह्यादिष्वभ्युपेयते, अपि तु तद्विलक्षणम् । नह्यतीन्द्रियातिशयः सर्वो धर्माधर्माभिधान , गुरुत्वादेरपि तत्प्रसङ्गात् । यौ हि सुखदु खफलौ पुरुषार्थावतिशयौ पुरुषसमवेतौ, तौ नाम पुण्यापुण्याभिधानौ । एतादृशानि तु क्रत्वर्थानि, तथैव श्रुत्यादिप्रमाणैरवगमादित्यर्थ' । यथा च प्रोक्षणादीना गुणकर्मतया स्वतन्त्रापूर्वकल्पनानवकाश , भेदलक्षणे भावार्थपादे 'तानि द्वैध गुणप्रधानभूतानि' इत्यत्रोक्तम् । ननु व्रीहीणामेव प्रोक्षिताना तण्डुलादिपरपरया प्रधानापूर्वनिर्वर्तकत्वमस्तु, किमत्रादृष्टेन विनानुपपन्नमिति ? तत्राह—अन्यथेति । एतदनुपपत्त्यात्मकम्, प्रमाणान्तरमेव वोच्यते, त्रिविध ह्यङ्ग दृष्टार्थमदृष्टार्थमुभयार्थ

---

अनित्यद्रव्यवत् । नित्यो गुण शक्तिमान्, गुणत्वाद्, अनित्यगुणवद्—आदि ) । नित्यपदार्थ गत शक्ति वैसे ही नित्य होती है, जैसे जलीय परमाणुगत-रूप नित्य होता है ( अर्थात् शक्ति कोई एक व्यक्ति तो है नहीं, जिसमे नित्यता और अनित्यता—दोनो न रह सके । जैसे रूप व्यक्तियाँ अनन्त है, पृथिवी मे रूप, अनित्य होने पर भी जलीय परमाणुओ मे नित्य होता है , वैसे ही अनित्य पदार्थों मे अनित्य होने पर भी नित्यपदार्थो मे शक्ति नित्य मानी जाती है ) ।

"व्रीहीन् प्रोक्षति"—आदि श्रुतियो से भी व्रीह्यादि मे अतीन्द्रिय शक्ति का सद्भाव सिद्ध होता है । यह जो कहा था कि अदृष्ट, सदैव चेतन का धर्म होता है, अचेतन व्रीह्यादि मे नही रहता , केवल व्रीहि विषयक प्रोक्षण क्रिया से जन्य होने के कारण उस अदृष्ट को प्रोक्षण का अदृष्ट कहा जाता है । इस प्रकार द्वितीया श्रुति ( विभक्ति ), मुख्य ( व्रीहिगत सस्कार ) अर्थ मे बाधित होकर गौण अर्थ ( आत्मगत धर्माधर्म ) का बोध करा सकती है । वह कहना सगत नही , क्योकि हम धर्माधर्मरूप शक्ति, व्रीह्यादि में नही मानते, अपितु उससे विलक्षण कोई एक ऐसा अतिशय मानते है, जिसे चावल, आटा, पुरोडशादि परम्परा से [ प्रोक्षित धानो को कूटा, चावल निकले , उन्हे पीसा, आटा बना । उस आटे को आग पर कढ़ाई मे सेक लिया , उसमे गरम जल इतना डाला कि बहुत गीला न हो, एक गोला कछुए की पीठ के आकार का बना लिया । गार्हपत्य अग्नि मे परिगणित कपालो को रख, उन पर वही गोला रखा, ऊपर से आग चढ़ा दी । बाटी की तरह पकाकर बाहर निकाला—इसी गोले का नाम पुरोडाश है । इसके निर्दिष्ट कटे भाग की आहुति विधिपूर्वक आहवनीय अग्नि में डाली जाती है—इस क्रम से ] प्रधानापूर्व की उत्पत्ति का सामर्थ्य भी कहते है । अन्यथा ( प्रोक्षण से व्रीहिगत अदृष्ट न मानने पर) स्वरूपतः व्रीहि ही उक्त परम्परा से प्रधानापूर्व के साधन हो जायँगे ,

**चादृष्टस्यैव कल्पनीयत्वात्, सम्भवति च मुख्ये लक्षणाश्रयणस्यानवकाशत्वात्। एतेन लीलावतीकारस्यापि निराकृत प्रयोगः। प्रमाणानामागमार्थापत्त्यनुमानाना दर्शितत्वेन प्रमाणेनानुपलभ्यमानत्वादिति हेतोरसिद्धे। तदेवमर्थप्रत्यायनशक्तिसद्भावात्पदानां तदभिहितेभ्यः पदार्थेभ्य सन्निधानादिसहकारिवशात्पदार्थानामन्योन्यान्वयप्रतिपत्तिर्लक्षणया सिद्ध्यतीति सिद्धम्**

चेति। तत्र दृष्टार्थेष्वपि नियमादृष्टमस्त्येव, केवल दृष्टे विधिवैयर्थ्यात्, अनन्यलभ्यस्य च शब्दार्थत्वात्। अतोऽविध्यन्यथानुपपत्तिरप्यदृष्टसाधिकेत्यर्थः। ननु दृष्टसभवेनादृष्टकल्पानऽयुक्तेति तत्राह—**दृष्टस्येति**। ननु भवतु विध्यन्यथानुपपत्त्याऽदृष्टम्, तच्च चेतनसमवायि, चेतनधर्मत्वात् भावनाया इति तत्राह—**संभवति चेति**। अयमर्थ.—व्रीहीन्प्रोक्षतीति द्वितीयाश्रुत्या व्रीहीणामेव प्रोक्षणेन सस्कार्यत्व श्रुतम्, नतु सक्तूनामिव होमेन भस्मसाद्भूताना विनियोक्ष्यमाणत्वानुपपत्ति., येन सक्तुभिरितिवद् व्रीहिभिरिति श्रुतविनियोगभङ्गावकाश.। न च तीर्थस्नानादिवत्कर्तृधर्मता, तदिह न विषयतामात्रेण द्वितीया श्रूयते, किंतु सस्कारजन्यातिशयाधारतया। तथा सति लक्षणा स्यात्। न च विना कारण लक्षणा, अतिप्रसङ्गात्। न चागमैकभूमिषु प्रमाणान्तरावतारः, येन विरोधशङ्कापि स्यात्। तदुक्त भाष्यकृद्भिः—'न विधौ परः शब्दार्थ.' इति। यत्तु श्रीवल्लभेन शक्त्यपह्नवायानुमानमुक्तम्, तदप्युक्तप्रकारेण दूषितमित्याह—**एतेनेति**। एतेनेत्येतद्विवृण्वन्नसिद्धिमाह—**प्रमाणानामिति**। किं च यच्छब्दतच्छब्दयोस्तावदर्थपर्यालोचनायामनुमानशरीरं पूतिकूष्माण्डायते। तथा हि यत्तच्छब्दाभ्या साध्यविवक्षाया यथा नील पीतरूपेणेति दृष्टान्तासङ्गति.। नीलरूपविवक्षाया तु पक्षासङ्गतिः। अन्यश्चानुगतोऽर्थोऽनतिप्रसङ्गी दुर्निरूपः, सत्प्रतिपक्षत्वाच्च। तथाहि—विवादपदं स्वरूपमात्रमबद्धातीन्द्रियसापेक्ष जन्यजनकत्वादात्मवदिति शक्यमनुमातुम्। नचात्रात्मत्वमुपाधिः, स्वरूपमात्रसबद्धातीन्द्रियगुरुत्वसापेक्षाणा पतने पाषाणादीनामात्मत्वाभावेन साध्याव्यापकत्वात्। न च विवादपद स्वरूपमात्रसबद्धातीन्द्रियभावनासापेक्षमदृष्टसापेक्षमिति वा जनकत्वादात्मवदित्यपि प्रसङ्गेनाभाससमानयोगक्षेमता, आत्मत्वस्यैव तत्रोपाधित्वात्। यच्च तेनोक्त शक्तेरपि शक्त्यन्तरापेक्षायामनवस्थितिः, अनपेक्षत्वे तयैव व्यभिचार इति, तदसत्, शक्तस्य कारणत्वाभ्युपगमात्। न चान्तत. प्रतीतिं प्रत्यपि कारणत्वमस्तीति वचनीयम्, प्रत्यक्षप्रतीतेरेवार्थजन्यत्वात्। शक्तेश्चाप्रत्यक्षत्वात्। अनुमानादीना तु नार्थजन्यत्वमितरथाऽतीताद्यनुमानानुदयप्रसङ्गात्, न च योगिनामतीताद्यपि प्रत्यक्षमितिप्रत्यक्षेप्यर्थजन्यत्व शक्यभञ्जनम्, अतीतादीना प्रत्यक्षत्व एव विवादात्। यथाह परमर्षि—'विद्यमानोपलम्भना' दिति। वादार्थमुपसहरन् शक्तिसमर्थनस्य समन्वयोपयोगमाह—**तदेवमित्यादिना**। अर्थप्रत्यायनशक्तिसद्भावात्पदाना पदैरेव स्वाभिहितपदार्थेभ्यो द्वारभूतेभ्य सन्निधानादिसहकारिवशात् पदार्थानामन्योन्यान्वयप्रतिपत्तिर्लक्षणया सिद्ध्यतीति सिद्धमित्यन्वय.।

इत्येषा[1] सदसत्प्रकारविधुरा माया दुरुन्नीतितो मूलत्वात्प्रकृतिः प्रबोधभयतोऽविद्या सहायोहिता।
शक्तिर्विश्वमयस्य यस्य विशदानन्दप्रबोधोदधेर्निर्धूताखिलभेदगन्धममल वन्दे भवानीपतिम्॥

**"व्रीहीन् प्रोक्षति"—आदि विधि वाक्यो से प्रोक्षणादि का विधान व्यर्थ ही हो जायगा। प्रोक्षण से दृष्ट फल उत्पन्न नही होता, अत. वहाँ अदृष्ट मानना होगा। जहाँ तक श्रुतियो का मुख्य अर्थ हो सके, गौण नहीं माना जाता। इसी से लीलावतीकार का प्रयोग ( पृ० २३६ पर कथित ) भी—खण्डित हो जाता है, क्योकि शक्ति मे आगम, अर्थापत्ति और अनुमान प्रमाणो को दिखा देने पर उक्त अनुमान का हेतु (प्रमाणेन तथानुपलभ्यमानत्व) असिद्ध हो जाता है। इस प्रकार पदो मे अर्थ-बोधन की शक्ति का सद्भाव होने के कारण पदो से पदार्थों का अभिधान होता है और उन पदार्थों के द्वारा सन्निधि, योग्यतादि सहकारी कारण के बल पर पदार्थों के परस्पर अन्वयार्थ में लक्षणा होती है—यह सिद्ध हो गया।**

१. विवादिवदनतो वादार्थ साधयन्निव स्तोकव्यत्यस्तपदेनोदयनपद्येनैव वादनिर्णीतसकीर्तनव्याजेन शक्तिपतिं स्तौति—इत्येषेति। सदसत्प्रकारविधुरा (सत्त्वासत्त्वाभ्यां निरूपयितुमनर्हा)। दुरुन्नीततः (अघटन

नतु पदानामेवान्योन्यान्वितस्वार्थाभिधायकत्वसंभवे किमिति पदार्थानां लक्षणयान्योन्यान्वयप्रतिपत्तिजनकत्वमास्थीयते ? तथा हि—योग्येतरान्वितस्वार्थेषु पदानामावापोद्धारदर्शनात्तत्रैव सामर्थ्यमध्यवसीयते। यद्यपि प्रतिप्रयोगं विशेषान्तरतत्संसर्गयोर्व्यभिचार, तथापि योग्येतरान्वितस्य स्वार्थमात्रस्याव्यभिचारात्, प्रथमावगतयोग्येतरान्वितस्वार्थाभिधानसामर्थ्यानुसारेण प्रयोगान्तरेष्वपि तथैव कल्पयिष्यते।

ननु किमनभिहितेन पदार्थेनान्वित स्वार्थमवबोधयति गोपदम् ? उत पदान्तराभिहितेन ?

पदार्थान्वयप्रतिपत्ति पदैर्लक्षणया सिद्धयतीत्युक्तम्, तत्र पदार्थानामन्विताावस्थापि पदैरभिधेयैव न लक्ष्येति अन्विताभिधानवादिनः प्रत्यवतिष्ठन्तेतराम्—**नन्वित्यादिना**। श्रौतत्वसंभवे लक्षणा न न्याय्या, मुख्यामुख्ययोर्मुख्यस्याभ्यर्हितत्वादिति भाव । नन्वन्विते सामर्थ्याश्रयणाद्वर स्वरूपमात्रे सामर्थ्याश्रयणमतिलाघवात्, इतरथा गौरवप्रसङ्गादिति तत्राह—**तथा हीति**। प्रमाणगर्भगौरवं न दोषायेति भावः। नन्वेकस्मिन्प्रयोगे बन्धनान्वित गोत्व प्रतीयते, अपरस्मिन्नानयनान्वितम्, अपरत्र दर्शनान्वितमिति व्यभिचारिणौ पदार्थान्तरतदन्वयौ, अव्यभिचारि च गोत्वम्, अव्यभिचारिणि सामर्थ्यं युक्तमाश्रयितुमैकरूप्यादतः पदार्थमात्रमेव पदशक्तिगोचर इति तत्राह—**यद्यपीति**। ननु किमित्येव व्यभिचारिणोरपि पदार्थान्तरतत्संसर्गयोरनुगतमेक रूपमापाद्य अनुगतशक्तिकल्पनानिर्बन्ध इति तत्राह—**प्रथमेति**। तदुक्त वाक्यार्थमातृकाया नाथेन—'आकाङ्क्षासन्निधिप्राप्तयोग्यार्थान्तरसंगमात्।

'स्वार्थानाहु' पदानीति व्युत्पत्तिः संश्रिता यदा ॥

अन्वयव्यभिचाराभ्या तदा दोषो न कश्चन ॥' इति। (प्र० पं० परि० पृ० ५)

**प्रयोगान्तरेषु** तुरगमानयेत्यादिषु इत्यर्थ ।

अत्राभिहितान्वयवादिनामाक्षेपमवतारयति—**नन्वित्यादिना**। येन पदार्थान्तरेणान्वितं स्वार्थमभिदधाति गोपदं तत्किमन्येनानभिहितम्? उताभिहितम्? आद्ये पदान्तरवैयर्थ्यम्, विनैव तदभिधान तदन्वयलाभात्, एकपदादेव सर्वार्थप्रतीतिप्रसङ्गात्। न च योग्येतरमात्रान्विताभिधानेऽपि तद्विशेषान्विताभिधानसिद्धये पदान्तरोपादानम्, विशेषान्विताभिधानेप्यभिहितानभिहितविकल्पस्य तुल्यत्वात्। द्वितीयं

**अन्विताभिधानवादी—पदों से जब परस्पर अन्वित स्वार्थ का अभिधान हो सकता है, तब पदार्थों में लक्षणा से परस्पर अन्वय-बोध की जनकता क्यों मानी जाती है ? आवापोद्वाप के द्वारा प्रत्येक पद का सामर्थ्य योग्येतरार्थान्वित स्वार्थ में ही देखा जाता है। यद्यपि प्रत्येक प्रयोग में विशेष पदार्थान्तर और उसका अन्वय व्यभिचारी है। [भावार्थ यह है कि जैसे 'गो' शब्द का सभी गोव्यक्तियों में प्रयोग देखकर सवत्राव्यभिचरित 'गोत्व' जाति में 'गो' शब्द की शक्ति का निश्चय होता है, गोव्यक्तियों में नहीं, क्योंकि व्यक्तियाँ परस्पर व्यभिचरित हैं। ऐसे ही प्रकृत में इतरार्थान्वय-विशिष्ट स्वार्थ में पदों का तभी सामर्थ्य माना जायगा, जब कि इतर अर्थ और उसका अन्वय—दोनों सर्वत्र अव्यभिचरित हों। किन्तु 'गामानय' में गोत्व, आनयनार्थ से अन्वित, 'गा पश्य' में दर्शनार्थ से—इस प्रकार इतरार्थ और उसका अन्वय—दोनों व्यभिचरित हैं, अत इतरार्थान्वय-विशिष्ट में पदों का सामर्थ्य नहीं माना जा सकता ]। तथापि सामान्यत' योग्येतरान्वित स्वार्थमात्र व्यभिचरित नहीं। प्राथमिक शक्ति-ग्रह योग्येतरार्थ से अन्वित स्वार्थ में होता है, उसी के अनुसार दूसरे प्रयोगों में भी शक्ति की कल्पना होगी।**

**शङ्का—क्या अनभिहित पदार्थ से अन्वित स्वार्थ का बोधक 'गो' पद है ? या पदान्तराभिहित**

घटनापटीयस्त्वात्) माया, मूलकारणत्वात् प्रकृतिः, प्रबोधबाध्यत्वादविद्या यस्य विश्वाधिष्ठानस्य विश्वरचनाया सहाया, ऊहिता कल्पितेत्यर्थः। शेष सुबोधम्।

नाद्यः, एकस्मादेव पदात्तत्तदर्थावबोधसम्भवेन पदान्तरस्य वैयर्थ्यप्रसङ्गात्। न द्वितीयः, परस्पराश्रयप्रसङ्गात्। तथाहि—गामानयेत्यत्र गोपदं यावदानयपदेन गोपदार्थान्वितस्वार्थो नाभिधीयते, न तावत्तदन्वितस्वार्थमभिधातुमर्हति, एवं तदपि पदं यावत्स्वार्थान्वितमर्थं गोपदं नाभिदध्यात्, तावत्तदन्वितस्वार्थं नाभिधत्ते। ततश्च गोपदेन तदन्वितस्वार्थेऽभिहिते पश्चादानयपदेन तदन्वितः स्वार्थोऽभिधातव्यः, सति च तस्मिन् गोपदेन स्वार्थोऽभिधातव्य इति व्यक्तमेव परस्पराश्रयत्वम्। पदार्थमात्राभिधानपूर्वके तु तदन्विताभिधाने द्विरभिधानमप्रमाणमनुपपद्यमानं चापद्येत। ननु द्विरभिधानं न पदजातस्य, साहचर्यवशात्स्वार्थेषु प्रथमं स्मारकाणां पश्चादन्विताभिधायकत्वाभ्युपगमादिति चेत्, मैवम्, साहचर्यदर्शनदशायामन्वितानामेवानुभूततया तथैव स्मरणस्यावश्याश्रयणीयत्वात्। न हि पदं पदार्थमात्रप्रतिपत्तये

---

दूषयति—न द्वितीय इति। आनय इति पदेन गोत्वान्विततयाऽनयनाभिधाने सति आनयनान्वितं गोत्वं गोपदमभिदध्यात्, एवं गोपदेनानयनान्विते गोत्वेऽभिहिते तदन्वितमानयनमानयेतिपदमभिदध्यादित्यन्योन्याश्रय इति खण्डलकार्थः। ननु नात्र परस्पराश्रयताया अवतारः, परस्परनिरपेक्षाणि प्रथमं पदानि पदार्थानसंसृष्टानभिधाय पश्चादन्योन्यान्वितांस्तानेव पदार्थानभिदधत इति तत्राह—पदार्थमात्रेति। न केवलमेव कल्पनाया प्रमाणाभावः, अपि तु प्रमाणविरोधश्चेत्याह—अनुपपद्यमानं चेति। तथाहि संसृष्टांशेऽपि चेत् पदानि गृहीतसंगतिकानि, तमपि प्रथममेवाभिदध्युः, अगृहीतसंगतिकत्वे पश्चादपि नाभिदध्युः, इत्यस्त्येवानुपपत्तिः, सकृत्प्रयुक्तशब्दस्य विरम्य व्यापारानुपपत्तिर्वानुपपत्तिः। ननु न प्रथममभिधायकानि पदानि, येन द्विरभिधानं प्रसज्येत, अपि तु प्रथमं पदार्थेषु स्मृतिरेव जायते, सहचरितदर्शनात्, सहचरितानि हि पदार्थैः प्रथमपदान्यनुभूतानि देवदत्तदर्शनादिवत्तत्सहचरितयज्ञदत्ते, अनन्तरं तु संसृष्टदशाया स्मारिताना पदार्थानामभिधानमिति तदेतच्छङ्कयित्वा परिहरति—मैवमिति। अन्वितपदार्थैः साहचर्यमेवोपपादयति—न हि पदमिति। व्यवहारसमर्थसंसृष्टपदार्थैः साहचर्यात्तादृगर्थस्मारक-

---

पदार्थ से अन्वित स्वार्थ का? प्रथम पक्ष उचित नहीं, क्योंकि इस पक्ष में तो एक ही 'गो' पद से आनयनादि-समन्वित गोत्व का बोध हो जाता है, पदान्तर (आनय) का प्रयोग व्यर्थ हो जाता है। द्वितीय पक्ष भी उचित नहीं, क्योंकि इस पक्ष में अन्योऽन्याश्रय दोष होता है—'गामानय'-यहाँ 'गो' पद तब तक आनयनान्वित स्वार्थ का बोधक नहीं हो सकता, जब तक कि 'आनय' पद गोपदार्थान्वित स्वार्थ का बोध न कर दे। एवं 'आनय' पद भी तब तक गोपदार्थान्वित स्वार्थ का बोधक नहीं हो सकता, जब तक कि 'गो' पद, आनयनान्वित स्वार्थ का बोध न कर दे। इस लिए 'गो' पद से आनयनान्वित स्वार्थ का अभिधान हो जाने के पश्चात्, 'आनय' पद स्वार्थ का अभिधान करेगा और 'आनय' पद से गोपदार्थान्वित स्वार्थ का अभिधान हो जाने के अनन्तर ही 'गो' पद अपने अर्थ का बोधक होगा—इस प्रकार स्पष्ट अन्योऽन्याश्रयता होती है। पदार्थमात्राभिधानपूर्वक इतरान्वित स्वार्थ का अभिधान मानने पर (अर्थात् प्रत्येक पद पहले शुद्ध अपने अर्थ को कहता है, तदनन्तर इतरान्वित स्वार्थ को—ऐसा मानने पर) प्रत्येक पद से दो-दो बार वह अर्थाभिधान मानना पडेगा, जिसमें न कोई प्रमाण है और न जो बन ही सकता है। यदि कहा जाय कि एक पद से हम दो बार अर्थाभिधान नहीं मानते, अपितु प्रथमतः प्रत्येक पद अपने सहचारी शुद्ध अर्थ का स्मरण दिलाता है, पश्चात् इतरान्वित स्वार्थ का अभिधान करता है। तो यह कहना भी युक्त नहीं, क्योंकि पद का जो अपने अर्थ से साहचर्य-दर्शन होता है, उसमें अन्वित पदार्थ ही अनुभूत होता है, अतः अन्वित का ही स्मरण मानना होगा, शुद्ध का नहीं, क्योंकि पद का प्रयोग केवल पदार्थमात्र की प्रतीति के लिए ही नहीं होता, अपितु व्यवहार के लिए, व्यवहार

प्रयुज्यते, किंतु व्यवहाराय, स चान्वित एवेति कथमनन्वितानामेव पदार्थानां पदेभ्यः स्मृति स्यात् ? तथा च गां पश्येति प्रयोगे गोपदेन पूर्वानुभूतानयनान्वितस्वार्थस्य स्मारितत्वात्पश्येति पदमनाकाङ्क्षितार्थमसङ्गतं प्रसज्येत, एवं प्रासाद पश्येत्यत्र प्रासादान्वितस्वार्थाभिधायकत्वात्पश्येति पदस्य, न गोपदं तेन संबध्येत। तथा च वाक्यार्थ क्वापि परिनिष्ठितो न सिद्ध्येत्। नन्वव्यभिचाराद्गोपदं स्वार्थमात्रमेव स्मारयति, नार्थान्तराणि, तेषा व्यभिचारित्वादिति चेत्, मैवम्, पटुत्वभ्यासादरप्रत्ययैराहिताया भावनाया. प्रबोधवत्या स्मरणहेतुत्वाङ्गीकारात्। तत्प्रबोधस्य च व्यभिचारिण्यर्थान्तरे परिगणितप्रणिधानसाहचर्यादिजन्मनोऽविशेषात्। परिगणिता हि स्मृतिहेतव· "प्रणिधानाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रिताश्रयसबन्धानन्त-

---

पदाना पदार्थमात्रस्मारकत्वमप्रसिद्धमित्यर्थ। अङ्गीकारे च दूषणान्तरमाह—**तथा चेति**। अयमर्थ.—गामानयेति प्रयोगे गोपदस्यानयनान्वितगोत्वेन साहचर्योपलम्भात् गा पश्येति प्रयोगेऽपि कारकाभिधायिगोपदमानयनान्वितमेव गोत्व स्मारयेदिति पश्येति पदमनाकाङ्क्षितार्थमसङ्गत प्रसज्येत। एव तस्मिन्नेव प्रयोगे गोपदमपि पश्येत्यनेन क्रियावाचिनाऽनाकाङ्क्षितार्थस्मारकमसङ्गतमेव स्यात्, पश्येत्यस्य प्रयोगान्तरेऽर्थान्तरसाहचर्यदर्शनादिति। उक्तामव्यवस्था सर्ववाक्येष्वतिदिशति—**तथा चेति**। साहचर्याविशेषेऽपि पदार्थान्तरवैषम्य शङ्कते—**नन्विति**। व्यभिचारेऽपि भूयोदर्शनाद्याहितसस्कारोद्बोधादुत्पद्यमाना स्मृतिर्नानन्वितान्वितपदार्थयोर्विशिष्यत इति परिहरति—**मैवमिति**। भावना सस्कार। सकृद्गृहीतेऽपि तडिदादौ पटुप्रत्ययः, कण्डिकादावभ्यासप्रत्ययः, अद्भुतेष्वादरप्रत्यय., तथाप्यप्रबुद्धस्य न स्मृतिजनकत्वमिति प्रबोधग्रहणम्। ननु भावनोद्बोध एव न तथा व्यभिचारिणि, यथा अव्यभिचारिणि पदार्थमात्र इति, तत्राह—**तत्प्रबोधस्येति**। प्रबोध उद्बोध। परिगणितेभ्य. प्रणिधानसाहचर्यादिभ्यो जन्म यस्य प्रबोधस्य तस्येत्यर्थ.। भगवदक्षपादेन परिगणितानेव शास्त्रान्तरे स्मृतिहेतून्दर्शयति—**परिगणिता हीति**। **स्मृतिहेतवः**। सस्कारोद्बोधनद्वारेति शेषः। प्रणिधान मनोऽवधानम्। अभ्यासः प्रसिद्धः। लिङ्गाद्व्याप्तिसस्कार। लक्षणं धवलच्छत्रादिचिह्न राजादिसस्कारोद्बोधकम्। सादृश्य शुक्तिभास्वरतादि रजतादि-

---

सदैव अन्वित मे ही होता है, अत पदो से शुद्ध ( इतरार्थानन्वित ) अर्थ की स्मृति भी कैसे होगी ? इस प्रकार गा पश्य'—इस प्रयोग मे 'गो' पद ने पूर्वानुभूत आनयनान्वित स्वार्थ का स्मरण दिला दिया, तब तो 'पश्य' पद अनाकांक्षितार्थक और असङ्गत हो जाता है, ( 'गो' पद को 'पश्य' पद की आकांक्षा तब होती, जब कि 'पश्य' पद के बिना उसके अर्थ का बोधक 'गो' पद न होता, किन्तु यहाँ दर्शनान्वित का बोधक, अकेला 'गो' पद ही हो जाता है, फिर उसे 'पश्य' पद की आकाक्षा क्यों होगी ? इसी प्रकार 'गामानय' में 'गो' पद आनयनान्वित गोत्व का बोधक हो चुका है, फिर 'गां पश्य' मे भी 'गो' पद आनयनान्वित 'गोत्व' का ही उपस्थापक होगा, उसका 'पश्य' के साथ सङ्गमन क्या ? )। एवं 'प्रासाद पश्य'—यहाँ प्रासादान्वित स्वार्थ का अभिधायक होने से 'पश्य' पद, 'गो' पद से कैसे जुडेगा ? इस प्रकार तो कहीं भी वाक्यार्थ सम्पन्न न होगा। यदि कहा जाय कि साहचर्य-दर्शन काल मे यद्यपि 'गो' पद इतरार्थान्वित ही अनुभव मे आता है, तथापि 'गो' पद केवल अपने अव्यभिचरित अर्थ 'गोत्व' का स्मारक होगा, दूसरे-दूसरे अर्थों का नहीं, इतरार्थ सभी व्यभिचरित है। तो यह कहना भी निराधार है, क्योकि तीव्र आकर्षक, या वार-वार देखी गई, या आदरणीय वस्तु के अनुभवो से जन्य सस्कार, उद्बुद्ध होकर स्मरण दिलाया करते है। व्यभिचारी अर्थों मे भी संस्कारो का उद्बोधन प्रणिधानादि परिगणित हेतुओ से होता है। महर्षि गौतम ने ( न्या० सू० ३।२।४३ ) उद्बोधक गिनाये है—प्रणिधान ( एकाग्रता ), निबन्ध ( समारोप ), अभ्यास, लिङ्ग ( धूमादि ), लक्षण ( चिह्न ), सादृश्य, परिग्रह ( स्वस्वामिभावादि ), आश्रित,

र्यवियोगैककार्यविरोधातिशयव्याप्तिव्यवधानसुखदु.खेच्छाद्वेपभयार्थित्वक्रियारागधर्माधर्मा· ” प्रामाणिकै , अस्ति चेह योग्येतरान्वयस्यापि साहचर्यं स्मरणहेतु· । तस्मात्पदैरभिहिता. पदार्था. एवाकाङ्क्षादिमन्त परस्परान्वय बोधयन्तीति युक्तमाश्रयितुम् ।

मैवम् ; त्वयापि पदार्थविषया. प्रत्यया प्रमाणविपर्ययसंशयादिष्वनन्तर्भावात्स्मृतय एष्टव्या:, ताश्चान्वितगोचरा न स्वरूपमात्रगोचरा इति तुल्यो दोप । न च वाच्यमभिधानतः स्मारितमेव वाक्यार्थान्वयि, न साहचर्यमात्रादिति, गङ्गायां घोष प्रतिवसतीत्यादौ पदानभिहिततीरादीनां वाक्यार्थानन्वयप्रसङ्गात् । अभ्यासातिशयश्च पदार्थस्मरणहेतु । स च यथा

संस्कारोद्बोधकम् । परिग्रह· स्वीकारः कलत्रादिसस्कारस्य । एवमाश्रिताश्रयावपि परस्परसस्कारस्य । सम्बन्धः सहचारः सहचरितसस्कारस्य । आनन्तर्य पूर्वतनपदार्थसस्कारस्य । वियोग कामिन्यादौ । एककार्यमेकस्मादुत्पन्नकार्याणामन्यतमसस्कारस्य । विरोधः सर्पनकुलादौ । अतिशयेनातिशयिते । व्याप्त्या व्याप्यव्यापकया. । व्यवधानं प्रियतमव्यवहिते । सुखदुःखादि तज्जातीयस्य तद्धेतोश्च । अर्थित्वमर्थनीये । अर्थित्व तु अप्राप्तविषये पुनःपुनरिच्छा । तेनेच्छया न पोनरुक्त्यम् । क्रियारागः क्रियासक्तिः स्वविषयस्य । धर्माधर्मौ शुभाशुभविषयसस्कारोद्बोधकौ । यस्मादेवमन्विताभिधानपक्षो न घटतेऽतोभिहितान्वयपक्ष एव श्रेयानित्युपसहरति अभिहितान्वयवादी—**तस्मादिति** ।

अत्रान्विताभिधानवादी स्वपक्षदूषण प्रतिबन्द्या समादधाति—**मैवमित्यादिना** । पदार्था एव पदैरभिधीयन्ते, तदन्वयस्तु लक्ष्यते इति यस्याभिहितान्वयवादिनो मत तेनापि पदार्थविषयाः प्रत्यया प्रमाणत्वेन नाभ्युपगन्तु शक्या. । अनधिगतार्थगन्तृत्वाभावात्, सर्वस्य सत्त्वप्रसङ्गाच्च । नापि विपर्ययसशयत्वाभ्याम्, यथार्थनिश्चयत्वात् । अत· परिशेषात्स्मृतय एवैष्टव्या । ताश्च न पदार्थमात्रगोचराः, सहचरितदर्शनात् खल्वय सस्कारोद्बोधः, साहचर्यं चान्वितैः पदार्थैः नत्वनन्वितैरित्यायुष्मतैवावेदितम् । तथाच कथं त्वन्मतेऽपि पदार्थमात्रस्य प्रथम स्मरणम् ? सोऽयमात्मीय एव बाणो भवन्त प्रहरतीति भावः । ननु द्विविधा स्मृतिः पदजनिता, साहचर्यादभिधानाच्च । तत्र साहचर्यमन्वितेऽपि समानम् । अभिधान तु पदार्थमात्रे । अभिधानद्वारा च यत्स्मारित तदेव वाक्यार्थान्वयोपयोगि नेतरदिति ब्रूम , देवदत्त ! गामानयेत्यादौ तत्सहचरितयज्ञदत्तादेरन्वयादर्शनात्ततो वैषम्यमिति तत्राह—**न चेति** । हेतुमाह—**गङ्गायामिति** । यदि ह्यभिधानेन स्मारितमेव वाक्यार्थोपयोगि, तर्हि तीरादिपदार्थाना वाक्यार्थान्वयो न स्यात्तेषामभिधानाभावान्मुख्यार्थसाहचर्यादेव स्मारितत्वादित्यर्थ । तत्किमेवमनुपपत्तिसाम्यापादनेन निवृत्तो भवन् तथा च मतानुज्ञाराजयक्ष्मकक्षीकारः स्यादित्यतः स्वपक्षे परिहारमाह—**अभ्यासेति** । यस्माद-

**आश्रय, सम्बन्ध, आनन्तर्य, वियोग, एक कार्य ( समान क्रिया ), विरोध, अतिशय ( विशेषज्ञता ), प्राप्ति (अव्यवधान), व्यवधान, सुख, दु ख, इच्छा, द्वेष, भय, अर्थित्व, क्रिया (कार्य), राग, धर्म और अधर्म । प्रकृत मे इतरार्थान्वय के स्मरण का हेतु 'साहचर्य' है । अत. पदो से अभिहित पदार्थ ही आकांक्षादि से युक्त होकर परस्पर अन्वय-बोध के जनक होते हैं ।**

**समाधान—आपकी शङ्का युक्त नही , क्योकि पदार्थविषयक वृत्तियों को ( यो सू १।६ मे कथित ) प्रमाण, विपर्यय, सशय में अन्तर्गत न होने के कारण स्मृतिरूप ही मानना होगा । स्मृति तो अन्वित विषयक ही होती है, स्वरूपमात्रविषयक नही—इस प्रकार आपके मत मे भी वही दोष आ जाता है । यह कोई नियम नही कि पदो से अभिहित पदार्थो का ही वाक्यार्थ मे अन्वय होगा , क्योकि 'गङ्गायां घोष प्रतिवसति'—यहाँ पदानभिहित तीरादि अर्थो का अन्वय वाक्यार्थ मे देखा जाता है, वह कैसे होगा ? ( यह जो आपने कहा कि परिगणित स्मारक हेतुओ से सभी का स्मरण हो सकता है, केवल अव्यभिचरित अर्थ का ही नही । वह कहना भी असगत है , क्योकि )**

**पदानां स्वार्थेषु, न तथार्थान्तरेषु , तेषां व्यभिचारित्वात् । तथा च स्वरूपमात्रेणैव पदेभ्यः स्मारिता पदार्था आकाङ्क्षादिमन्त. पदैरन्विता अभिधीयन्त इति न परस्पराश्रयता । नापि पदान्तरानाकाङ्क्षा , आकाङ्क्षा हि प्रतिपत्तुर्जिज्ञासा, सा चाभिधानापर्यवसानादभिहितार्थापर्यवसानाद्वा भवति । यथा वृक्ष इत्यत्र प्रातिपदिकार्थमात्रे प्रथमाविभक्तेस्स्मरणात्तेनैव तस्यान्विताभिधानासम्भवादन्यस्य चानभिधानादभिधानपर्यवसानायैवाकाङ्क्षा । यथा वा 'विश्वजिता यजेत'इत्यत्र कार्यस्य विपयकरणान्विततया प्रतीतस्यैवापर्यवसानाद्विशिष्टाधिकारिकल्प-**

---

व्यभिचारिपदार्थेष्वभ्यासातिशयात्तावन्मात्रस्य प्रथमं स्मरणोपपत्ति॰, अतः पूर्वोक्तः परस्पराश्रयपरिहार. स्थित एवेत्याह—**तथाचेति** । तदुक्तम् शाब्दनिर्णये—

'क्रमेणावगतानर्थान्युगपत्सहतानय । प्रमिमीरन्पदानीति नान्योन्याश्रयदोषता ।।' इति ।।

नाथैरपि—'श्रूयमाण पद सर्व स्मारितानन्वितार्थकम् । न्यायसपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ।।

स्मृतिसन्निहितैरेवमर्थैरन्वितमात्मानः । अर्थमाह पद सर्वमिति नान्योन्यसश्रयः ।।' इति ।

यत्तु सर्वेपा पदानामन्योन्यानाकाङ्क्षितार्थसमर्पणमापादित तत् , न , अभिधानापर्यवसानाद्वा अभिहितार्थापर्यवसानाद्वा पदार्थान्तरे पुरुषस्य जिज्ञासा ह्याकाङ्क्षानाम । यथाहु॰—

'अभिधानावसाना हि जिज्ञासार्थाच्च जायते ।
प्रयोजनावसानाच पदार्थे सा निवर्तते ।।' इति ।।

नाथेनापि 'अन्वितस्याभिधानार्थ'मित्यादि । तदिहाभिधानानवसानजानताकाङ्क्षा पदार्थान्तरेऽपि समाना, तद्विशेषनिर्णयस्तु सन्निहितयाग्यपदावमर्शादित्यभिप्रेत्य परिहरति—**नापीति** । नच पदत्रयाद्यात्मके अन्यतरानाकाङ्क्षा कारणद्वयाभावादिति वाच्यम् , अश्रूयमाणे हि तथा, श्रूयमाणे तु रक्तपटन्यायेनाकाङ्क्षाकल्पनात् । अभिधानपर्यवसानोदाहरणमाह—**यथा वृक्षेति** । वृक्ष इति पदेनापि हि पदत्वादन्वितो वृक्षोभिधातव्यः , स च केनान्वित इति विमर्शे न तावद्वृक्ष वृक्षैरित्यादौ कर्मकरणादिभिरिव विभक्त्यर्थेन । प्रातिपदिकार्थमात्रे प्रथमाविधानात् । 'प्रातिपादिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इति प्रातिपदिकार्थादिष्वर्थेषु प्रथमा पाणिनिः स्मरति स्म । नच पदार्थान्तरमभिहितमस्ति । तस्मादभिधानपर्यवसानायैव तत्र तिष्ठतीत्यादौ जिज्ञासेत्यर्थ. । अभिहितापर्यवसानस्योदाहरणमाह—**यथा वेति** । विषयो धात्वर्थः , स एव करण हि पदान्तरश्रवणादभिधानपर्यवसानेप्यभिहितापूर्वापर्यवसानमस्ति । विषयो नियोज्यव्यावृत्तो हि नियोग प्रतीयमानोऽनुष्ठानाय कल्पत इति विषयवन्नियोज्येप्यस्त्येवाकाङ्क्षेत्यर्थ । प्रतिपादितामाकाङ्क्षा

---

**यहाँ पदार्थ-स्मरण का हेतु है—अभ्यासातिशय । इसके द्वारा शुद्ध स्वार्थों की जैसे स्मृति होती है, वैसे अर्थान्तर की नहीं , क्योंकि वे व्यभिचारी है । अत पदों के द्वारा प्रथमतः स्मारित शुद्ध पदार्थ ही आकांक्षादि के बल से अन्वित होकर पदो से अभिहित होते है, किसी प्रकार का अन्योऽन्याश्रय दोष नही । यह जो कहा था कि अन्विताभिधान-वाद मे पदान्तर अनाकांक्षित हो जायँगे । वह भी युक्त नहीं , क्योकि अकांक्षा नाम है–प्रतिपत्ता की जिज्ञासा का। वह जिज्ञासा, अभिधान या अभिहित अर्थ के अपर्यवसान ( अपूर्णता ) से होती है जैसे कि 'वृक्ष॰'—यहाँ पर इतरार्थान्वित स्वार्थ का अभिधान 'वृक्षः' पद से हो नही सकता , क्योकि वहाँ इतरार्थ का उपस्थापक कोई पदान्तर है नही, प्रथमा विभक्ति तो प्रातिपदिकार्थमात्र में विहित है, इतरार्थ की उपस्थिति उससे भी नहीं हो सकती, अत इतरार्थ के उपस्थापक 'अस्ति'–आदि–पदो की आकांक्षा वहाँ अन्विताभिधान को सम्पन्न करने के लिए होती है । अथवा 'विश्वजिता यजेत'—यहाँ यागरूप विषय और करण से अन्वित कार्य ( नियोग ) अभिहित होता है । वह अपर्यवसित ( अपूर्ण-सा ) है, अत. वहाँ नियोज्य**

---

१. प्र० प० वाक्य० परि० पृ० १५ । २. प्र० प० वाक्य० परि० पृ० ७ । ३. द्र० २६४ पुटस्था टिप्पणी ।

ना। तदेवंभूताकाङ्क्षावशात्पदानामन्विताभिधान न विरुध्यते। ननु तथापि पदानामन्विताभिधाने सामर्थ्यं न कल्पनीयम्, पदस्मारितानामेव पदार्थानामाकाङ्क्षादिवशादन्योन्यान्वयप्रत्यायकत्वोपपत्तेरिति चेत्, मैवम्, मानान्तराधिगतानां पदार्थानां वाक्यार्थप्रत्यायकत्वादर्शनात्। ननु

'पश्यत' श्वेतिमारूपं ह्रेषाशब्द च शृण्वत.।
खुरनिक्षेपशब्दं च श्वेतोऽश्वो धावतीति धी.'॥ (श्लो०वा०वाक्य०३५८)

इतिन्यायादस्त्येव पदार्थाना ससर्गबोधजनकत्वमिति चेत्, न; अनुमानादर्थापत्तेर्वा तत्र संसर्गावगमात्। तथाहि—एषां पदार्थानामेकाधिकरणतयावगतानां प्रत्यायकत्वेनानुमानानतिरेक, विशकलितावगतानां वार्थान्तराभावे निश्चितेऽर्थापत्तिरेव परिशिष्यते,अनिश्चिते त्वनध्यवसाय एव। अपि च शब्दसामर्थ्याजन्यत्वे वाक्याथप्रत्ययस्य पदार्थाख्य सप्तम प्रमाण-

---

प्रकृतेऽपि दर्शयति—**तदेवमिति**। यद्यप्यन्योन्याश्रयादिदोषो नास्ति, तथाप्यभिहितपदार्थेभ्य एव ससर्गसिद्धौ पदानामपि सामर्थ्यकल्पनाया कल्पनागौरव दूषणमित्यभिहितान्वयवादी शङ्कते—**नन्विति**। यदि हि पदार्थाना ससर्गबोधकत्व स्यात्तदा तदपहाय पदानामपि सामर्थ्यकल्पनाया स्यादेव गौरवम्, ननु तदस्ति, प्रमाणान्तरगृहीतपदार्थेष्वदर्शनादित्याह—**मैवमिति**। उक्त च नाथेन—

'किंतु तेषा न दृष्टैषा शक्तिर्मानान्तरोद्गतौ।
कल्या विशिष्टार्थपरपदसस्पर्शभाविते॥' ( प्र० पं० वाक्य० परि० पृ० १० )

प्रमाणान्तरगृहीतानामप्यस्त्येव ससर्गबोधकत्वमिति शङ्कते—**नन्विति**। अत्र हि दृश्यमान श्वेतिमारूपमव्यक्तरूपं श्रूयमाणौ च ह्रेषाखुरनिक्षेपशब्दौ श्वेतोऽश्वो धावतीति संसर्गबुद्धि जनयन्तीत्यर्थ। अत्र किमेकनिष्ठतयावगतमेतत्त्रय ससर्गबोधकम्? विशकलिततया वा? प्रथमेऽनुमानता दर्शयति—**तथा हीति**। यत्र ह्येतत्त्रयमेकत्रावगत तत्राश्वत्व दृष्टमिति व्याप्त्या बोधकत्वादनुमानमित्यर्थ। द्वितीयेऽर्थापत्तितामाह—**विशकलितेति**। नन्वर्थान्तराभावे विनिश्चितेऽनुपपत्त्याश्वत्वबोधकत्वाद्भवेदर्थापत्तित्वमर्थान्तराभावोऽपि यदा न निश्चितस्तदा कथमर्थापत्तित्वमिति तत्राह—**अनिश्चिते त्विति**। किंच शब्दाजन्यत्वे ससर्गबुद्धेरप्रामाणिकत्व पदार्थाख्यसप्तमप्रमाणाभ्युपगमो वा प्रसज्येत, प्रत्यक्षादिष्वनन्तर्भावादित्याह—**अपि चेति**।

---

की आकांक्षा से स्वर्गकामनावान् नियोज्य की कल्पना की जाती है। इस प्रकार की आकांक्षा के वश से पदो में अन्विताभिधान भी विरुद्ध नही। यदि शङ्का हो कि अन्विताभिधान में पदो के सामर्थ्य की कल्पना व्यर्थ है, क्योकि पद-स्मारित पदार्थ ही, आकांक्षादि के बल से परस्परान्वय-बोध के जनक हो जाते हैं। तो यह शङ्का उचित नही, क्योकि पदाभिहित पदार्थ ही अन्वय-बोध के जनक होते है, प्रमाणान्तर से अविगत पदार्थों में वाक्यार्थ-प्रत्यायकत्व नही देखा जाता। यदि कहा जाय कि 'जो व्यक्ति दूर श्वेतवर्ण की कोई अव्यक्त वस्तु ऑख से देखता है, हिनहिनाने का एवं टाप का शब्द कानो से सुनता है, बस! उसे यह बोध हो जाता है कि श्वेत अश्व दौड़ा आता है'—इस भट्टोक्ति के आधार पर यह कहा जा सकता है कि किसी प्रकार से भी उपस्थित पदार्थ ससर्ग-बोध के जनक होते है। तो यह शङ्का उचित नही, क्योकि उक्त स्थल पर शाब्दबोध नही होता, अपि तु अनुमान या अर्थापत्ति से संसर्ग-बोध होता है। यदि श्वेतरूपादि पदार्थ समानाधिकरण रूप से प्रतीत होकर 'श्वेत अश्व' के बोधक हैं तब तो अनुमान है ( विमत' पदार्थोऽश्वत्ववान् श्वेतरूपवत्त्वे सति ह्रेषाखुरनिक्षेपशब्दवत्त्वात् सम्मतवत् )। यदि उक्त श्वेतरूपादि, व्यधिकरणतया प्रतीयमान है, तब वहाँ अर्थापत्ति ही कहनी होगी। यदि अर्थान्तर के अभाव का निश्चय नहीं, तब वह अनध्यवसायात्मक ही ज्ञान है। दूसरी बात यह भी है कि यदि शब्द सामर्थ्य से वाक्यार्थ-बोध न मानकर पदार्थों से माना जायगा, तब पदार्थ नाम का एक सप्तम प्रमाण मानना पड़ेगा; क्योंकि

मभ्युपेयं स्यात् , प्रत्यक्षादिषु तस्यानन्तर्भावात् । किं च पदार्थानामनभिहितानां संसर्गबोधकत्वाभावादभिहितानामेव तदेष्टव्यम् , तथा च पदार्थानां ससर्गप्रत्ययजननसामर्थ्यम् , पदानां च पदार्थेषु तत्सामर्थ्याधानसामर्थ्यमिति द्वयं कल्पनीयमिति कल्पनागौरवमभिहितान्वयवादिन , अन्विताभिधानवादिनस्तु पदाना योग्येतरान्वितस्वार्थाभिधानसामर्थ्यमेकमेव कल्पनीयमिति कल्पनालाघवमित्ययमेव पक्ष श्रेयानिति ।

अत्राभिहितान्वयवादिन प्रत्यवतिष्ठन्ते—

विनाभिधेयस्मरणमन्वयाप्रतिपत्तित ।
तत्तत्पदार्थस्मृतयस्तेषामन्वयबोधिका ॥ २५ ॥

पदकदम्बकश्रवणसमनन्तरमपि कुतश्चिन्मानसापराधादनुपजनितपदार्थस्मृतेर्वाक्यार्थप्रत्ययानुदयादुदयाच्चोपजातपदार्थस्मृतेरन्वयव्यतिरेकाभ्या पदार्थस्मृतीना वाक्यार्थप्रत्ययहेतुत्व तावदवसीयते । न च पदार्थस्वरूपमात्रविषयस्मृतीनामन्योन्यान्वयबोधकत्वमनुपपन्नमन्यत्रादृष्टत्वा-

---

अथ पदस्मारितानामेवेद सामर्थ्यम्, तर्ह्यनेकशक्तिकल्पनागौरव स्यादित्याह—किंचेति । पदार्थाना तावत्संसर्गबुद्धिजननसामर्थ्यम् एकम् , अपरमपि पदाना पदार्थेषु ससर्गप्रत्ययजननसामर्थ्यमुत्पादयितु सामर्थ्यम् , पदैरेवाभिहितपदार्थेषु तादृश सामर्थ्यमाधीयते , अनभिहितेषु सामर्थ्यादर्शनात् । नैवपरस्तत्पक्षे, अन्वितस्वार्थेषु पदानामेकसामर्थ्याश्रयणात् । यद्यप्यर्थसामर्थ्यादन्विते सामर्थ्यकल्पनाया गौरवमस्ति, तथापि न सामर्थ्यद्वित्वम्, अपि तु स्थौल्यमात्रमिति भावः । अत्र च सामर्थ्यद्वयाभिधान प्राथमिकपदार्थबुद्धेः साहचर्यात्स्मृतित्वमभिप्रेत्य , तच्च परिहारावसरे स्वयमेव स्फुटीकरिष्यति । उभयसाधारणत्वाद् वावधीरित पदार्थस्मृतिजननसामर्थ्यमिति ।

अभिहितान्वयवादे अन्वयव्यतिरेकौ तावत्प्रमाणमाह—विनेत्यादिना श्लोकेन । अभिधेयपदार्थस्य स्मरण विनान्वयस्य वाक्यार्थस्याप्रतिपत्तिरित्यत्राविगानमायुष्मतोऽपि । ततोऽवश्यापेक्षणीयाभिधेयस्मरणैः स्मृतैर्वाभिधेयैरन्वयव्यतिरेकवद्भिरन्वयो बोध्यत इत्ययमेव श्रेयानिति श्लोकार्थ । श्लोक विवृणोति—पदेत्यादिना । कदम्बक समूह । एव पूर्वार्धेनान्वयव्यतिरेकौ प्रदर्श्य उत्तरार्ध व्याचष्टे—अन्वयेति । पूर्वपक्षिणोऽनुशयबीजमुन्मूलयति—न चेत्यादिना । विशकलितपदार्थमात्रस्मृतीनामदर्शनेऽपि पदस्मारि-

---

प्रत्यक्षादि छह प्रमाणो में 'पदार्थरूप' प्रमाण का अन्तर्भाव होता नही । एव अनभिहित पदार्थ, संसर्ग-बाधक होते नही, अभिहित पदार्था मे ही ससर्ग-बोधकता माननी होगी । इस प्रकार पदार्थों में ससर्ग बोध-जनन-सामर्थ्य और पदो से पदार्थ-निष्ठ उक्त सामर्थ्य के उत्पादन का सामर्थ्य, दो-दो शक्तियो की कल्पना करने से अभिहित-अन्वय-वादी को महान गौरव होगा । किन्तु अन्विताभिधानवादी के लिए तो केवल पदो मे एक योग्येतरान्वितस्वार्थाभिधान का सामर्थ्य कल्पनीय है, अत. इस मत मे कल्पना-लाघव है । यही ( अन्विताभिधान ) पक्ष ही युक्ततर है ।

अभिहितान्वय-वादी—'अभिधेय पदार्थों के स्मरण के बिना वाक्यार्थ-बोध नहीं होता, अत. पद-जन्य पदार्थ-स्मरण या स्मृत पदार्थों को ही वाक्यार्थ-बोध का हेतु मानना होगा ।' किसी पद-समूह को सुन लेने पर भी जिस व्यक्ति को किसी मानस दोष के कारण पदार्थों का स्मरण उत्पन्न नहीं होता, उसे वाक्यार्थ-बोध नही होता और जिसे पदार्थ-स्मरण होता है, उसे वाक्यार्थ-बोध भी होता है—इस प्रकार के अन्वय-व्यतिरेक से पदार्थ-स्मरण मे वाक्यार्थ-बोध की हेतुता निश्चित होती है । यदि शङ्का हो कि पदार्थ-स्वरूपमात्र-विषयक स्मरण में पदार्था के पारस्परिक अन्वय की बोधकता नही बन सकती , क्योकि जहाँ-जहाँ 'गो' पदार्थ का स्मरण होता है, वहाँ सर्वत्र आनयन

दिति वाच्यम् । स्मरणमात्रस्य सामर्थ्याभावेऽपि समभिव्याहृतपदकम्बकसमुपजनितपदार्थस्मृतीनामाकाङ्क्षादिसहकारिणीनां संभवत्येव तद्बोधकत्वम्,सहकारिभेदोपादानात्, कथमन्यथा सस्कारेन्द्रिययोरन्यत्र परस्परसंगतार्थाविषययो प्रत्यभिज्ञायां पूर्वापरदेशकालससृष्टैकवस्तुबोधकत्वम् ? परस्परसहकारितया तथात्व तु प्रकृतेऽपि तुल्यम्। न च पदार्थस्मृतीनां वा पदार्थानामन्वयबोधकत्वे सप्तमप्रमाणाभ्युपगमप्रसङ्ग., लिङ्गप्रकरणस्थानानामिव शब्दप्रमाणान्तर्भावोपपत्तेः । ननु लिङ्गादिषु श्रुतिं कल्पयित्वैव विनियोगप्रतीते स्वीकाराच्छाब्दत्व न विरुद्धयते, इह तु पदार्थस्मृतीनां स्मृताना वा पदार्थानामन्वयबोधकत्वमिति वैषम्यम् । शब्दावगतपदार्थ-

---

तपदार्थस्मृतीना सहकारिवशादुपपद्यत इत्यर्थः । **सहकारीति** । सहकारिणो भेदो विशेषस्तत्सबन्धादित्यर्थः । अन्यत्रादृष्टस्य कथ कल्पनमित्याशङ्क्य प्रतिबन्दी गृह्णाति—**कथमिति** । यथान्यत्र विभिन्नविषयनिष्ठतया दृष्टयोश्चक्षु सकारयो प्रत्यभिज्ञायां सहकारिवैचित्र्यवशात्सोऽय देवदत्त इत्येकार्थविषयत्वमेवमत्रापि सभाव्यत इत्युपपाद्य सप्तमप्रमाणत्व पदार्थानामापादित परिहरति—**न चेति** । तथा हि—श्रुतिवाक्यसमाख्याना शब्दरूपत्वेऽपि लिङ्गप्रकरणस्थानाना न शब्दरूपत्वम् । अथ च न शब्दात्पृथक्प्रमाणत्वम्, तथेहापीत्यर्थः । यद्यपि प्रकरणमप्यङ्गवाक्यापेक्ष प्रधानवाक्यमिति शब्दरूपमेव प्रतीयते, तथापीतिकर्तव्यताकाङ्क्षाया अर्थरूपत्वादशब्दत्वमभिप्रेतमिति द्रष्टव्यम् , अविनियोजकत्वाद्वा । न हि लिङ्गादीनि साक्षाद्विनियोजकानीति । लिङ्गादिभ्यो वैषम्य दर्शयितु तद्वृत्तान्तमाह—**नन्विति** । शब्दस्यार्थस्यापेक्षितोऽर्थः शब्देनैव समर्पणीय., न प्रमाणान्तरेण । न हि त्रयो ब्राह्मणा आगताः कठश्च माठरश्चेत्युक्त्वा तृतीयमङ्गुल्या निर्दिशन्तं सन्त' प्रशसन्ति, प्रशसन्ति तु कौण्डिन्य इति शब्देनैव समर्पयन्तम् । तदिहापि श्रुतिभिरेव चेत्तत्तदङ्गानि समर्प्यन्ते, समस्यन्ते तदा श्रुतप्रधानेन, नेतरथेति श्रुतिकल्पनयैवैषा लिङ्गादीना विनियोजकत्वम् , न स्वातन्त्र्येण । श्रुतिकल्पनाया च त्वरामन्थरतातारतम्येनैषा प्राबल्यदौर्बल्ये, यथाह परमर्षि.—'अर्थविप्रकर्षा'दिति । अन्येऽपि—

"एकद्वित्रिचतुष्पञ्चवस्त्वन्तरायकारितम् । श्रुत्यर्थं प्रति वैषम्य लिङ्गादीना प्रतीयते ॥" इति ।

प्रकृते तु वैषम्यमाह—**इत्विति** । न शब्दस्येति शेषः । नन्वशब्दत्वेऽपि पदार्थाना शब्दावगतत्वात्तज्जन्यप्रतीतिरपि शाब्दी एवेति नातिप्रसङ्ग इत्याशङ्क्याह—**शब्दावगतेति** । तामिमा शङ्का परिहरति सि-

---

**का अन्वय देखा नही जाता । तो यह शङ्का उचित नही , क्योकि स्मरणमात्र से वैसा सामर्थ्य न होने पर भी समभिव्याहृत पद-समूह से जन्य, आकांक्षादि विशिष्ट, पदार्थ-स्मरण मे सहकारिविशेष के सम्बन्ध से अन्वय-बोधकता सम्भव हो जाती है । अन्यथा ( विभिन्न विषयक साधनो को मिल कर एक कार्य-जनकत्व न मानने पर ) जहाँ सस्कार, केवल असन्निहितदेशस्थ देवदत्त को विषय करते है और इन्द्रिय केवल समीपस्थ देवदत्त को विषय करती है, वहाँ दोनो मिलकर "सोऽयं देवदत्त "—इस प्रकार पूर्वापर देश-काल-सम्बद्ध एक वस्तु के बोधक कैसे हो सकेगे ? परस्पर के सहयोग से, सस्कार और इन्द्रिय मे यदि वैसा सामर्थ्य माना जाता है, तब प्रकृत मे परस्पर सहयोग से एक वाक्यार्थ की बोधकता, पदार्थ-स्मरण मे क्यो न होगी ? यह जो कहा गया कि पदार्थ-स्मरण या स्मृत पदार्थो को अन्वय-बोधक मानने पर सप्तम प्रमाण मानना पड़ेगा । वह कहना भी उचित नही , क्योकि जैसे अङ्गत्व-बोधक ( श्रुति, लिङ्ग, वाक्य, प्रकरण, स्थान और समाख्या—इन छह प्रमाणो मे से श्रुति, वाक्य और समाख्या,—तीनो प्रमाण शब्दरूप है किन्तु अवशिष्ट ) लिङ्ग, प्रकरण और स्थान—ये तीन शब्दरूप न होने पर भी शब्द प्रमाण के अन्तर्गत माने जाते है, वैसे ही पदार्थ-स्मरण या स्मृत पदार्थ भी शब्दप्रमाण में अन्तर्भूत हो जाते है । यदि कहें कि लिङ्गादि प्रमाणों में, शब्दस्वरूप श्रुति की कल्पना के द्वारा ही विनियोजकत्व ( अङ्गाङ्गिभाव-बोधकत्व ) होने**

जन्यत्वेनान्वयप्रतीते. शाब्दत्वे, चक्षुषावगतधूमजन्यस्यापि वह्निज्ञानस्य चाक्षुषत्वप्रसङ्ग इति चेत्, मैवम्, अन्वयप्रतीति जनयता पदानामवान्तरव्यापारत्वात्पदार्थस्मरणानाम्। न च स्वव्यापारव्यवधानाद्व्यापारवत करणत्वं विहन्यते, यागादीनामपूर्वव्यवधानेन फलसाधकानामकरणत्वप्रसङ्गात्। न च चक्षुषो लिङ्गज्ञानमवान्तरव्यापार, अगृहीताविनाभावस्यानुमानानुदयात्, अचाक्षुपस्थलेऽपि लिङ्गस्य बोधकत्वात्। गुरुमतानुसारिभिरपि लिङ्गप्रकरणादीनामन्तरेणैव श्रुतिकल्पन विनियोजकानां शब्दप्रमाणान्तर्भावाभ्युपगमाच्च।

ननु त्वयाप्यभिहितान्वयवादे तिस्र शक्तयः कल्पनीया., पदानां तावदर्थस्वरूपानुभव-

---

द्धान्ती—मैवमिति। नात्र शब्दावगतपदार्थजन्यत्वमात्रादन्वयप्रतीते. शाब्दत्वमुच्यते, येनानुमितेरपि चाक्षुषत्वप्रसक्ति., किंतु शब्दावान्तरव्यापाररूपपदार्थस्मरणजन्यत्वात्। उक्त हि—(श्लो० वा० ७।३४२, ३४३)

'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्। वर्णास्तथापि नैतस्मिन्पर्यवस्यन्ति निष्फले॥

वाक्यार्थमितये तेषा प्रवृत्तौ नान्तरीयकम्। पाके ज्वालेव काष्ठाना पदार्थप्रतिपादनम्॥' इति।

ततो नातिप्रसक्तिरिति भाव.। ननु तथापि पदार्थैर्व्यवधानात् पदाना कथमन्वयप्रतीति प्रति करणत्वम्? तद्धयनन्तरफलत्वमिति तत्राह—न चेति। यागादीनामिति। गुरुमतेऽपि यागस्य फल प्रति करणत्वमस्त्येवेति भावः। पदार्थेभ्यो लिङ्गज्ञानस्य वैषम्यमाह—न चेति। अथ किमिति न व्यापारस्तत्राह—अगृहीतेति। तज्जन्यस्तदाश्रितो यस्तत्क्रियाहेतु स हि तद्व्यापारो नाम। तथा च कथ चक्षुषि व्याप्रियमाणेऽप्यगृहीतव्याप्तिकस्य लिङ्गज्ञानमनुत्पद्यमान चक्षुर्व्यापारः स्यात्? नहि धूमज्ञानमात्र लिङ्गज्ञानम्, अपि तु व्याप्तस्य सतः पक्षधर्मतया ज्ञानमिति भावः। चक्षुर्व्यतिरेकेणोत्पद्यमानत्वादपि न तद्व्यापारत्वमित्याह—अचाक्षुषेति। अथवा न चक्षुर्जन्यानुमितिः, तस्मिन्सत्यपि नियमेनोत्पत्त्यभावात्। असति चोत्पत्तेरतो नेद तस्य व्यापार इति ग्रन्थार्थ। यत्तु लिङ्गप्रकरणादि उदाहृतम्, तदन्विताभिधानवादिन प्राभाकरस्य भवत्येवोदाहरणम्। श्रुतिकल्पनाव्यतिरेकेणैव लिङ्गादीनि विनियोजकानीति हि गुरूणा मतमित्याह—गुरुमत इति।

यत्तु शक्तिकल्पनागौरवमुक्तम्, तत्परिहर्तुमुत्थापयति—नन्विति। ननु कथ शक्तित्रयकल्पना? या-

---

से, शब्दान्तर्गतत्व बन जाता है। किन्तु यहाँ तो पदार्थ-स्मरण या स्मृत पदार्थों मे ही अन्वय-बोधकत्व है, शब्द-कल्पना-द्वारा नहीं। शब्दावगत पदार्थों से जन्य होने के कारण अन्वय-प्रतीति को शाब्द मानने पर नेत्रावगत धूम से जन्य होने के कारण वह्न्यनुमिति को चाक्षुष प्रत्यक्ष मानना पड़ेगा। तो ऐसा नही कह सकते, क्योकि हमारे मत में अन्वय-प्रतीति के जनक तो पद ही हैं, पदार्थ-स्मरण को अवान्तर व्यापारमात्र माना जाता है। व्यापार का व्यवधान हो जाने से व्यापारी (व्यापार-जनक) में से कारणता निवृत्त नहीं हो जाती, नहीं तो अपूर्वरूप अवान्तर व्यापार का व्यवधान हो जाने से याग में स्वर्गादि फल की कारणता कैसे मानी जा सकेगी? (लिङ्ग-ज्ञान-जन्य अनुमिति से चाक्षुषत्व की आपत्ति तब होती, जब कि लिङ्ग-ज्ञान, चक्षु का व्यापार होता, किन्तु) लिङ्ग-ज्ञान, चक्षु का व्यापार नहीं, क्योकि (व्यापार उसे ही कहते है, जो कारण से जन्य होकर फल का जनक हो। जैसे अपूर्व, यागरूप करण से जन्य होकर स्वर्ग फल का जनक है। किन्तु) व्याप्ति-ज्ञान-शून्य पुरुष के चक्षु से जन्य लिङ्ग-ज्ञान, अनुमितिरूप फल को जन्म नहीं देता। एव अचाक्षुष स्थल पर भी लिङ्गज्ञान अनुमिति का जनक होता है। यह जो कहा था कि लिङ्गादि प्रमाण, श्रुति की कल्पना करके ही विनियोजक होते हैं। वह भी उचित नहीं, क्योकि प्रभाकर के मत मे श्रुति-कल्पना के बिना ही लिङ्गादि, विनियोजक होकर शब्द प्रमाण के अन्तर्गत माने जाते है।

शङ्का—अभिहितान्वय-वाद से तीन शक्तियो की कल्पना करनी पड़ती है—(१) पदो मे अर्था-

जननशक्ति , अर्थानां चान्योन्यान्वयप्रत्यायनशक्ति ,तदाधानशक्तिश्चापरा पदानामिति। पदानां साहचर्येणार्थस्मारकत्वे पुन शक्तिद्वय कल्पनीयम्, पदार्थानामन्वयबोधनशक्ति , तेषु तदाधानशक्तिश्च पदानाम् , अन्विताभिधाने तु पदानामन्योन्यान्वितस्वार्थाभिधानशक्तिरेकैवेति कल्पनालाघवमिति चेत् , मैवम् , त्वयाप्यर्थान्तरे तदन्वये स्वार्थे च पदशक्तीनां कल्पनीयत्वात् । न चार्थान्तरान्वितस्वार्थाभिधायकमपि पद स्वार्थस्यैव वाचकम , नार्थान्तरतदन्वययोर्जातिवाचकमपि पदं व्यक्तितदन्वययोरिवेति वाच्यम् , विकल्पासहत्वात् । तथा हि—कि जातिवाचकपदेन व्यक्तेरिव लक्ष्यत्वमर्थान्तरतदन्वययो ? उत वाच्यत्वम् ? नाद्य , पदानामन्विताभिधानभङ्गप्रसङ्गात् । न द्वितीय , वाच्यत्वे तयोरपि शक्तेरवश्यकल्पनीयतया गौरवस्य तादवस्थ्यात् । किंचैकैकस्य पदस्य श्रूयमाणस्य स्मर्यमाणस्य वा तत्तत्पदार्थस्मरणजननशक्ति , पुनरेकस्मरणगोचराणा च तेषामेव पदानामन्योन्यान्वितपदार्थाभिधानशक्ति , सकलपदगोचरस्यास्मरणस्य पदेष्वन्विताभिधानशक्त्याधानशक्तिश्चेति शक्तित्रयकल्पनान्विताभिधानवादेऽपि

---

वता साहचर्यवशादेव प्रथम स्मृति पदार्थेषूत्पद्यते भवतामिवेति, तर्हि शक्तिद्वयमवश्यभावीत्याह—**पदानामिति** । यत्तु पूर्वपक्षे स्पष्टीकरिष्यतीत्युक्तम्, तदत्र स्पष्टीकृतम् । स्वपक्षे च लाघव स्मारयति—**अन्वितेति** । अत्राभिहितान्वयवाद्यन्विताभिधानेऽपि शक्तित्रयकल्पनामापादयन्परिहरति—**मैवमिति** । स्यादेतत्–यथा नित्यत्वे सत्यनेकसमवेतरूपजातिवाचकमपि पद नानेकात्मकव्यक्तीना तदन्वयस्य समवायस्य वा वाचकम् , गोत्ववाचक यथा तद्व्यक्तितदन्वययोरवाचकम्, तद्वदन्यान्वितस्वार्थवाचकमपि पद स्वार्थमात्रमेव वक्तीति न शक्तित्रय कल्पनीयमिति तत्राह—**न चेति** । कि यद्दैवगत्यान्वित तद्वाचकमित्यन्वयस्योपलक्षणत्वम् ? आहोस्विदन्वितस्य वाचकम् ? इति विशेषणत्वमिति विकल्याद्य दूषयति–**नाद्य इति** । अभिहितान्वयवादिभिरप्येवमभ्युपगमाद्भावस्येति भावः । द्वितीये तु शक्तित्रयमवश्यभावीत्याह—**न द्वितीयः इति** । स यदि ब्रूयान्नान्विताभिधानवादे शक्तित्रयम् , नह्येतदर्थत्रयम् , अपि तु एक एव विशिष्टोर्थः, परतु सविशेषणत्वमिव शक्तेरिति, त प्रकारान्तरेण शक्तित्रयमापादयति—**किंचेति** । एषा हि अन्विता-

---

नुभव-जननशक्ति, ( २ ) अर्थों मे पारस्परिक अन्वय-प्रतीति-जनन शक्ति और ( ३ ) पदो मे, अर्थ-निष्ठ शक्ति की जनक शक्ति । पद साहचर्यमात्र से अपने अर्थों के यदि स्मारक ही है, बोधक नही, तब भी दो शक्तियों की कल्पना अनिवार्य है—एक पदार्थों में अन्वय-बोधन शक्ति और दूसरी पदार्थ-निष्ठ अन्वय-बोध-जनकता की आधान शक्ति, पदो मे । किन्तु अन्विताभिधान-वाद मे एक ही इतरान्वित स्वार्थ के अभिधान की शक्ति—इस प्रकार शक्ति-कल्पना मे लाघव होने से अन्विताभिधान-वाद ही युक्ततर है ।

समाधान—आप ( अन्विताभिधान-वादी ) को भी तीन शक्तियो की कल्पना करनी पड़ती है–पदो मे अर्थान्तर-बोधन-शक्ति, अन्वय-बोधन–शक्ति और स्वार्थ-बोधन शक्ति । यदि कहे कि अर्थान्तर से अन्वित स्वार्थ का बोधक भी पद, वाचक केवल स्वार्थ का ही होता है, अर्थान्तर तथा उसके अन्वय का नही , जैसे कि जाति-वाचक पद, व्यक्ति एव उसके अन्वय का वाचक नही होता । तो यह कहना उचित नही , क्योकि जाति-वाचक पद के ही समान आप अर्थान्तरान्वय से उपलक्षित स्वार्थ की बोधकता पदो मे मानते है ? या कि अर्थान्तरान्वय-विशिष्ट स्वार्थ की ? प्रथम पक्ष में तो आपका अन्विताभिधान-वाद ( अन्वय-विशिष्ट-वाचकता ) भङ्ग हो जाता है और द्वितीय पक्ष में अर्थान्तर और उसके अन्वय मे भी शक्ति अवश्य माननी होगी, फिर तो वही कल्पना-गौरव आपको भी है । दूसरी बात यह है कि श्रूयमाण या स्मर्यमाण प्रत्येक पद मे इतरार्थ-स्मरण-जनन-शक्ति, प्रत्येक स्मरण के विषयीभूत प्रत्येक अर्थ से अन्वित अर्थ की अभिधान-शक्ति और सकल पद विषयक स्मरण मे पद-निष्ठ अन्विताभिधान शक्ति की आधान-शक्ति—इस प्रकार तीन शक्तियो की कल्पना

तुल्या। न चाभिहितान्वयवादेऽपि शक्तिकल्पनागौरवस्य तुल्यत्वात् विनिगमनाभाव आशङ्कनीय., विशिष्टार्थप्रत्यायनप्रयुक्तपदकदम्बसमभिव्याहारान्यथानुपपत्त्या पदस्मारितानामर्थानामन्योन्यान्वयस्य लक्ष्यमाणत्वेनोपपत्ते शक्तेरकल्पनीयत्वात्, 'अनन्यलभ्य शब्दार्थ.'इति न्यायात्। उक्त च 'विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जन.' इति।

ननु नेयं लक्षणा भवितुमर्हति, तथाहि—

'वाच्यस्यार्थस्य वाक्यार्थे संबन्धानुपपत्तित ।
तत्संबन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते ॥' इति। (प्र० पं० वाक्य० परि० पृ० १३)

भिधानपरिपाटी–प्रथम श्रूयमाणै स्मयमाणैर्वा पदैरन्योन्यामसृष्टार्था प्रत्याय्यन्ते, अन्त्यपदोच्चारणानन्तर चैकस्मृत्यारूढानि तान्येव पदानि पदार्थानन्योन्यान्विततया प्रतिपादयन्तीति। तथा च पदार्थमात्रेषु ससृष्टपदार्थेषु च प्रत्ययाधाने पदाना सामर्थ्यद्वयम्, सकलपदविषयस्मरणस्य सकलपदेष्वन्विताभिधानसामर्थ्यं तृतीयम्, एकस्मृत्यानारूढपदाना तत्सामर्थ्याभावादित्यर्थ । ननु शक्तित्रयकल्पनायामुभयोः समानायां कोऽयमाग्रह यदभिहितान्वयवाद एव श्रेयानिति ? तत्राह—न चेति। अनन्यलभ्यो हि शब्दार्थ, लभ्यते चान्येभ्योऽपि व्यवहार समर्थससृष्टपदार्थबोधार्थ प्रयुक्तपदस्मारितेभ्य पदार्थेभ्य। न च तस्याशाब्दत्वम्, शब्दैरेव लक्ष्यमाणत्वादतो न शक्तित्रयमिति खण्डलकार्थ:। एतदुक्त भवति–पदाना पदार्थस्मृतिजनकत्व तवापि तुल्यम्, स्मृतपदार्थानामन्वयप्रतिपत्तिहेतुतामात्रमपि तुल्यमेव, इतरथा प्राथमिकपदार्थस्मृतेस्तवापि वैयर्थ्यात्, करणत्व तु मयापि नेष्यते, पदाना पदार्थेष्वन्वयप्रतिपत्तिजननसामर्थ्याधानसामर्थ्यं भवदीयसमुदायस्मृतिसामर्थ्येन तुल्यम्, पदाना स्मृतपदार्थान्वयबोधने यत्सामर्थ्यमभिधानात्मक त्वया परिकल्प्यते, तन्मत्पक्षे नास्तीति मत्पक्षे लाघवमिति। जने मध्यमवृद्धे लोकव्यवहार इति वा पदसमभिव्याहृतिरुत्तमवृद्धस्य पदप्रयोगो वा विशिष्टार्थप्रयुक्तेति मण्डनमिश्रोक्तियोजना।

परस्परान्वये पदाना लक्षणैव वृत्तिर्नतु मुख्येत्युक्तम्, तदाक्षिपति मुख्यवृत्ति मन्वानोऽन्विताभिधानवादी—ननु नेयमिति। लक्षणाभाव दर्शयितु शालिकनाथोक्त तल्लक्षणमाह—तथा हीति। वाच्यस्यार्थस्य गङ्गादिरूपस्य वाक्यार्थे घोषप्रतिवासादिरूपे सबन्धानुपपत्तौ सत्या वाच्यार्थसबन्धवशात्प्राप्तस्य वाक्यार्थान्वयाद्धेतोर्या शब्दस्य तत्र प्रवृत्ति लक्षणेति श्लोकार्थ.। प्रकृते च वाच्यार्थाना वाक्यार्थे सबन्धानुपपत्तिरूप-

**अन्विताभिधान-वाद मे भी समान ही है। 'अभिहितान्वय-वाद मे भी यह शक्ति कल्पना-गौरव के समान है, अत विनिगमन ( अन्यतर पक्ष-साधुत्व के निर्णय ) का अभाव है'—यह शङ्का नही करनी चाहिए, क्योकि विशिष्टार्थ-बोधन के लिए प्रयुक्त पदो के समभिव्याहार की अन्यथानुपपत्ति के द्वारा पदो से स्मारित पदार्थों की पारस्परिक अन्वय मे लक्षणा से ही काम चल जाता है, शक्ति-कल्पना की आवश्यकता हमारे मत मे नही, क्योकि आचार्य शबरस्वामी ने कहा है—"अनन्य-लभ्य शब्दार्थ." ( शब्द की शक्ति उसी अर्थ मे माननी चाहिए, जो अन्यत = लक्षणादि से लब्ध न हो सके )। एवं आचार्य मण्डन मिश्र ने भी कहा है—**

**सम्बन्धयोग्यरूपेण तस्मात्संसर्गभागिन ।
विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जने ॥ ( ब्र. सि पृ. १११ )**

**( सभी पदार्थ अपने पदों से स्मारित क्रिया कारकादिरूप ससर्ग के भागी होते हैं, क्योकि व्यवहार मे विशिष्टार्थ की प्रतीति के लिए ही पदो का समुच्चारण किया जाता है )।**

**यदि शङ्का हो कि आपने जो पारस्परिक अन्वय मे पदो की लक्षणा मानी है, वह उचित नहीं, क्योकि लक्षणा का लक्षण है—'वाक्यार्थ मे वाच्यार्थ के सम्बन्ध की अनुपपत्ति होने के कारण वाच्यार्थ के सम्बन्ध से प्राप्त तीरादि अर्थ का वाक्यार्थ मे अन्वय होना । अत तीरादि अर्थ मे गङ्गादि पदो की वृत्ति को लक्षणा कहा जाता है।' किन्तु प्रकृत मे 'ओदन चैत्रः पचति पिठरे'—**

न च 'ओदनं चैत्र. पचति पिठरे, इत्यादौ चैत्रपिठरादीनामर्थानां वाक्यार्थसंबन्धानुपपत्ति । न च पदार्थैर्लक्षिताया पदार्थानामन्वितावस्थाया. पुनरन्वयान्तरशालिता, तेनेयं न लक्षणा तल्लक्षणविरहादिति चेत्, मैवम्, अव्यापकत्वादेतस्य लक्षणालक्षणत्वासंभवात्। न हि विषं भुङ्क्ष्वेत्यादावेतल्लक्षणमस्ति। तत्र सर्वेषा पदानां लक्षकत्वेन वाच्यार्थाभावात्, वाच्यार्थाविनाभूतस्य वाक्यार्थेन पुनरन्वयाभावाच्च। यदपि—

'मानान्तरविरोधे तु मुख्यार्थस्य परिग्रहे।
मुख्यार्थेनाविनाभूते प्रतीतिलक्षणोच्यते ॥'

इतिलक्षणालक्षणम्, तदप्यव्यापकम्। कुण्डपायिनामयने'मासमग्निहोत्र जुह्वती'त्येतल्लक्षणाऽव्यापकत्वात्, 'उपसद्भिश्चरित्वा मासमग्निहोत्र जुह्वती'ति श्रूयमाणत्वात्, प्रसिद्धाग्निहोत्रे चोपसदामभावात्कर्मान्तरेऽग्निहोत्रशब्द प्रसिद्धाग्निहोत्रसाधर्म्याल्लक्षणया वर्तते। न च तत्र मानान्तर-

---

लक्षणभागो नास्तीत्याह—**न चेति**। पिठर भाण्डम्। यत्तु तत्सम्बन्धवशात् प्राप्तस्यान्वयादिति लक्ष्यमाणार्थस्य पुनर्वाक्यार्थेऽन्वय उक्त', सोऽपि नास्तीत्याह—**न च पदार्थैरिति**। नह्यत्र वाक्यार्थद्वयमस्ति, येन लक्ष्यमाणवाक्यार्थस्य वाक्यार्थसम्बन्धो भवेत्, स्वेनैव स्वसम्बन्धानुपपत्तेरिति भाव । लक्षणमेवेद लक्षणाया न सभवति, अव्यापकत्वात्, अतो नैतदभावमात्राल्लक्षणात्वक्षय इति परिहरति अभिहितान्वयवादी—**मैवमित्यादिना**। वाक्यार्थे सबन्धानुपपत्तित., अत्र कोऽय वाक्यार्थोभिमतः ? किं न्यायपरिशोधनया निष्पन्नोर्थः ? किंवा क्रिया ? आहोस्वित्परिशिष्टपदवाच्योऽर्थ' ? नाद्यः, तदानीमनिष्पन्नत्वाद्वाक्यार्थस्येत्यभिप्रेत्याह—**नहीति**। नापि द्वितीय , विष भुङ्क्ष्वेत्यत्र क्रियाया अविवक्षितत्वात् भुङ्क्ष्वेत्यस्यापि तन्निवृत्तिपरत्वात्। अत एव न तृतीय इत्याशयवानाह—**तत्रेति**। इतरोऽपि लक्षणागो नास्तीत्याह—**वाच्यार्थेति**। नहि भोजननिवृत्तिव्यतिरेकेणापरो वाक्यार्थोऽस्ति येनान्वियादिति भाव ।

लक्षणान्तरमप्यनुवदति—**यदपीति**। मुख्यार्थस्य परिग्रहे मानान्तरविरोधे सति मुख्यार्थेनाविनाभूते संबद्ध इति यावत्। मञ्चाः क्रोशन्तीत्यत्राविनाभावादर्शनात्, तस्मिन्नविनाभूते या प्रतीति सा लक्षणोच्यते इति योजना। अस्ति कुण्डपायिनामयनगत कर्म 'मासमग्निहोत्र जुहोती'ति श्रूयमाणम्, तत्र चाग्निहोत्रशब्दो गौण्या प्रयुज्यते इति स्थितम्। उक्तं 'क्रियाभिधानम्' इत्यत्र। 'गौण्यपि हि गुणलक्षणयोगेन वर्तते इति लक्षणोच्यते'। लक्षितलक्षणा हि गौणी, न च तत्र एतल्लक्षणमस्तीत्य व्याप्त्या दूषयति—**तदित्यादिना**। ननु किमिति गौणः, मुख्य एवाग्निहोत्रशब्दः किं न स्यात्? अत आह—**उपसद्भिरिति**। एतच्च भाष्यकारीय मतम्, वार्तिककारमतं त्वनुपादेयमाससम्बन्धात्, विच्छिन्नप्रकरणत्वाच्च, प्रत्यभिज्ञाभावाच्च कर्मान्तरमिति। तच्च दर्शित प्रकरणान्तराधिकरणमनुक्रामद्भिरस्माभिर्मिथ्यात्ववादपूर्वपक्षावसरे। अस्तु लक्षणात्वम्, लक्षणस्य तत्र कथमभाव इति ? मानान्तरविरोधाभावादित्याह—**न चेति**। यथाहि

---

**आदि वाक्यो मे चैत्र, पिठरादि वाच्यार्थों की वाक्यार्थ मे सम्बन्धानुपपत्ति नही होती और न वाच्यभूत पदार्थों के सम्बन्ध से लब्ध अन्वितावस्था का अन्य किसी वाक्यार्थ मे अन्वय ही होता है, अत यह लक्षणा कैसी, जिसमे उसका लक्षण नहीं घटता ? तो यह शङ्का उचित नही, क्योंकि उक्त लक्षणा का लक्षण 'विष भुंक्ष्व'—आदि स्थलो पर अव्याप्त है। यहाँ सभी पदो के लक्षक होने से न तो कोई वाच्यार्थ ही है और न वाच्यार्थ से लब्ध अर्थान्तर का वाक्यार्थ मे अन्वय ही होता है। यह जो लक्षणा का लक्षण किया जाता है कि—'जहाँ मुख्यार्थ का ग्रहण करने पर प्रमाणान्तर का विरोध होता है, वहाँ मुख्यार्थ से अविनाभूत अर्थ की प्रतीति होती है—उसे ही लक्षणा कहते है।' वह भी अयनगत "मासमग्निहोत्रं जुह्वति"—मे अव्याप्त है, क्योकि वहाँ प्रसिद्ध अग्निहोत्र में उपसद् होमो के न होने से, नित्य कर्म से भिन्न कर्म मे 'अग्निहोत्र' पद की लक्षणा तो होती है,**

विरोधः, तदर्थस्य मानान्तरागोचरत्वात्। तस्मात्पदानां पदार्थस्वरूपमात्रपरत्वे वाक्यप्रामाण्यानुपपत्तिरेव लक्षणाक्षेपिकेति तदेव लक्षणं लक्षणायाः, सर्वलौकिकवैदिकलक्षणायां व्यापकत्वात्। तथा हि 'गङ्गायां घोषः प्रतिवसति, आदित्यो यूपः, कुण्डपायिनामयने मासमग्निहोत्रं जुह्वती'त्यादावस्ति पदार्थमात्रपरत्वे वाक्यप्रामाण्यानुपपत्तिः। ननु तत्र वाच्यार्थान्वयानुपपत्तिरप्यस्ति, तत्कथमिदमेव लक्षणमिति नियम्यते? इति चेत्, मैवम्, वाच्यार्थान्वयानुपपत्त्यभावेऽपि लोकवेदयोर्लक्षणादर्शनात्। तथाहि लोके—

'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।
शूरश्च कृतविद्यश्च योऽभिजानाति सेवितुम्॥'

इत्यादौ पदार्थानामन्वयसंभवेऽपि निष्प्रयोजने तात्पर्यासम्भवेन वाक्यप्रामाण्यानुपपत्तेः, प्रतीयमानवाक्यार्थं हित्वा शूरादित्वं सम्पदो हेतुरिति ध्वनिना सूच्यते। तथा च वेदे 'वायुर्वै क्षेपिष्ठ' इत्यादौ संभवत्येव वाच्यार्थान्वये कैमर्थक्यवशेन देवताप्राशस्त्यलक्षणया कर्मणः

---

गङ्गाया घोष इत्यत्र तद्वाक्यव्यतिरेकेण मानान्तरविरोधो मुख्यार्थपरिग्रहे, न तथेह प्रमाणान्तरविरोधः, तदर्थस्य तदयोग्यत्वात्, केवलमेतद्वाक्यव्यापारपर्यालोचनया मुख्यार्थपरित्यागादिति भावः। एवं पराभिमतलक्षणं दूषयित्वा सर्वलक्षणानुगतं लक्षणमुपसंहारफलेनाह—**तस्मादिति**। लौकिकवैदिकलक्षणासु लक्षणव्याप्तिमेव दर्शयति - **तथा हीति**। आदित्यो यूप इत्यत्रादित्यशब्दस्तेजस्वित्वलक्षणापरः। निर्णीतं खल्विदं प्रमाणलक्षणे नामधेयपादे—'तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रया इत्यत्र सारूप्यादादित्यशब्दो यूपे वर्तते' इति। नन्वेतेषूदाहरणेष्वस्मल्लक्षणमपि वाच्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्त्यात्मकमस्ति तत्कथं निर्णयः? इति शङ्कयित्वा तल्लक्षणरहितेऽपि स्वकीयलक्षणानुवृत्त्या लक्षणान्वयं लोकवेदयोर्दर्शयति—**मैवमित्यादिना**। **सुवर्णपुष्पामिति**। सुवर्णमयपुष्पशालिनी पृथ्वी चिन्वन्तीति तत्र योजना। अथवा पृथिवीं सुवर्णपुष्पां चिन्वन्ति पृथिव्येव सुवर्णपुष्पा यथा भवति तथा चिन्वन्ति सम्पादयन्ति। एवं तु नाम बहुसुवर्णमुपार्जयन्तीत्यर्थः। तांश्च त्रीनाह—**शूरश्चेत्यादिना**। **कैमर्थक्यवशेनेति**।

---

किन्तु प्रमाणान्तर का विरोध नहीं, कारण यह है कि वह प्रमाणान्तर का विषय ही नहीं। इसलिए पदों को पदार्थस्वरूपमात्रपरक मानने पर जो वाक्य-प्रामाण्य की अनुपपत्ति होती है, वही लक्षणा की नियामिका है। यह लक्षणा का निर्दुष्ट लक्षण है, क्योंकि लौकि-वैदिक सभी लक्षणाओं में घट जाता है। जैसे कि "गङ्गाया घोषः प्रतिवसति"—( इस लौकिक उदाहरण में वाक्य-प्रामाण्य की अनुपपत्ति से 'गङ्गा' पद की तीर में लक्षणा होती है )। "आदित्यो यूपः", "उपसद्भिश्चरित्वा मासमग्निहोत्रं जुह्वति"—[ आदि वैदिक उदाहरणों में वाक्य-प्रामाण्य की अनुपपत्ति से ही 'आदित्य' पद की 'तेजस्वित्व में लक्षणा होती है–द्र० पू० मी० १।४।१५। एवं 'अग्निहोत्र' पद की नैयमिक अग्निहोत्र-साधर्म्य में लक्षणा होती है–द्र० पू० मी० २।३।११ ]। यदि कहना चाहें कि उक्त उदाहरणों में वाच्यार्थ के अन्वय की अनुपपत्ति भी तो है, तब वाक्य-प्रामाण्यानुपपत्ति ही क्यों लक्षणा की नियामिका है? तो यह नहीं कहना चाहिए, क्योंकि वाच्यार्थ के अन्वय की अनुपपत्ति न होने पर भी लोक और वेद में लक्षणा देखी जाती है। जैसे कि 'तीन पुरुष सुवर्णमय पुष्पवाली पृथिवी का सञ्चयन करते हैं, शूर, विद्वान और सेवक'—आदि लौकिक वाक्यों में पदार्थों का अन्वय उपपन्न होने पर भी निष्प्रयोजन अर्थ में तात्पर्य सम्भव नहीं, अतः वाक्य-प्रामाण्य की अन्यथानुपपत्ति से प्रतीयमान वाक्यार्थ का परित्याग करके केवल 'शूरतादि, सम्पत्ति के हेतु होते हैं'—इतना अर्थ वहाँ माना जाता है। वैसे ही वेद में भी "वायुर्वै क्षेपिष्ठा देवता" ( वायु शीघ्रगामी देव है )—आदि स्थलों पर वाच्यार्थ का अन्वय सम्भव होने पर भी 'किमर्थोऽयम्?'–इस प्रकार की कैमर्थक्य-आकांक्षा

प्राशस्त्यं लक्ष्यते। तस्माद्वाक्यप्रामाण्यानुपपत्तिरेव लक्षणाक्षेपिकेति निश्चिनुम । अस्ति चेहापि लोकानुसारतो विशिष्टार्थप्रत्यायनप्रयुक्तसमभिव्याहृतीनामर्थमात्रपरत्वे पदाना प्रामाण्यानुपपत्ति । 'विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जन ' इति न्यायात् । अस्ति च शब्दानामर्थरूपसबन्धवशप्राप्तिरन्वितावस्थायाम्, तथा चार्थरूपबोधनसामर्थ्यान्नाधिकसामर्थ्यद्वयकल्पनापि।

ननु पदाना सस्कारोन्मेषमात्रोपयोगान्नाभिधातृत्वम्, पदार्थानामपि स्ववाचकपदसस्कारो-

नहि वायोः क्षेपिष्ठत्व प्रमाणान्तरेण विरुद्ध्यते । अविरुद्ध एव तु तस्मिंस्तावति निष्प्रयोजनतया पर्यवसानाभावात् किमर्थमिदमित्यपेक्षावशेन रक्तपटन्यायेन वा नष्टाश्वदग्धरथन्यायेन[1] वा देवताप्राशस्त्यलक्षणया कर्मप्राशस्त्यमिति वाक्यार्थः । एव लौकिकवैदिकलक्षणासु लक्षणस्यानुगति दर्शयित्वा प्रकृतेऽपि तदनुगतिमाह—**अस्तीति** । विशिष्टार्थप्रत्यायनप्रयुक्ता समभिव्याहृतिरुच्चारण येषा पदाना तानि विशिष्टार्थप्रत्यायनप्रयुक्तसमभिव्याहृतीनि तेषामित्यर्थः । अर्थ. पदार्थ । ननु वाक्यार्थे सबन्धानुपपत्तेः अन्वयान्तरशालित्वस्य च सर्वलक्षणास्वननुगमेऽपि तत्सबन्धवशप्राप्तेरस्त्यन्वय , इह च पदार्थानामेव वाक्यार्थत्वात् न तत्सबन्धात्प्राप्तिरिति तत्राह—**अस्ति चेति** । वाक्यार्थस्वरूपाणा परस्पर य संबन्ध' तद्वशात्परस्परयान्विताचस्थाया शब्दाना प्राप्तिरस्तीत्यर्थः । अथवा अर्थस्वरूपाणा यो वाक्यार्थेनान्वयः, विशिष्टस्वरूपयास्तादात्म्याङ्गीकारात्, तद्वशाच्छब्दानामपि प्राप्तिरस्ति वाक्यार्थ इत्यर्थ । एव च यदन्विताभिधानवादिनामतिरिक्तसामर्थ्यद्वयम् , पदानामन्वितबोधनसामर्थ्यमेकम्, स्मृतेश्च पदेष्वन्वितबोधनसामर्थ्याधानसामर्थ्यमपरमिति, तदपि निष्प्रयोजन नास्मिन्मतेस्तीत्याह—**तथा चेति** ।

स्यादेतत्—न पदाना पदार्थाभिधायकत्वम् , येन तत्सामर्थ्यादधिक न कल्पनीय स्यात् , अपि तु

**के वश से देवता-प्राशस्त्य के द्वारा कर्म-प्राशस्त्य मे लक्षणा मानी जाती है । इस लिए वाक्य-प्रमाण्य की अनुपपत्ति ही लक्षणा का निमित्त है—यह हमारा निश्चय है । प्रकृत मे भी विशिष्टार्थ-बोधन के लिए प्रयुक्त पदो के प्रामाण्य की अनुपपत्ति होगी, यदि उन्हे स्वार्थमात्रपरक माना जाय । जैसा कि आचार्य मण्डन मिश्र ने ( ब्र सि नि पृ १११ पर ) कहा है—'विशिष्टार्थ का बोध कराने के लिए ही पदा का समुच्चारण होता है ।' यह जो कहा जाता है कि "तत्सम्बन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते" ( वाच्यार्थ प्रवाहादि के सम्बन्ध से बुद्धि में उतरे तीरार्थ का वाक्यार्थ में अन्वय, लक्षणा कहलाता है–प्र प परि पृ १३ ) । वह भी यहाँ घट जाता है—अनन्वित अर्थरूप सम्बन्ध के वश से अन्वित अवस्था मे शब्दो की प्राप्ति होती है । अत अर्थ-बोधन-सामर्थ्य से अधिक दो और शक्तियो की कल्पना हमे नही करनी पडती ( अर्थात् अन्विताभिधान-पक्ष मे जो दो अधिक शक्तियाँ मानी जाती है—एक पदो मे अन्वितार्थ-बोधन-शक्ति और दूसरी स्मरण मे पद-निष्ठ अन्वित अर्थ बोधन-शक्ति की आधान शक्ति, ये दोनो अभिहितान्वय-वाद मे नही माननी पड़ती, अत' यहाँ कल्पना-लाघव है ) ।**

**यदि सन्देह हो कि पद अपने अर्थ के स्मारक मात्र होने से वाचक नही कहे जा सकते , स्मारक को वाचक मानने पर अपने वाचक पदो के स्मारक पदार्थ भी वाचक हो जायँगे**

१ दैवदुर्विपाकाद् दन्दह्यमाने ग्रामे एकस्य रथिनो रथो दग्धोऽपरस्य चाश्वा प्रणष्टा. । तौ च यथा रथिनावन्योऽन्याकाङ्क्षया मिलित्वैक रथ कृत्वाभीष्टमापतुस्तथाऽर्थवादविधिवाक्ये प्रधानाङ्गपरेऽपरापराकाङ्क्षयैकवाक्यता गतऽनवगतमर्थं गमयतः । यदा तु निराकाङ्क्षयार्वाक्ययोराकाङ्क्षामुत्थाप्यैकवाक्यता सम्पाद्यते, तदा रक्तपटन्यायोऽवतरति । यथा पटोऽस्तीति वाक्यास्याकाङ्क्षाविधुरस्यापि 'कीदृशः' इत्याकाङ्क्षामुत्थाप्य 'रक्त.' इत्यनेनैकवाक्यता क्रियते; तथा विध्यर्थवादा 'कथम्? किमर्थोऽयम्?' इत्याकाङ्क्षे समुत्थाप्यैकवाक्यता नीयेते ।

न्मेषकाणां तत्स्मारकतयाभिधायकत्वप्रसङ्गादितिचेत्, न पदानामेव पदार्थस्मारकाणामभिधातृत्वस्य लौकिकपरीक्षकप्रसिद्धिसिद्धस्यानिवारणीयत्वात्, शब्दविषयविज्ञानस्यैव पदार्थस्मरणजननशक्त्युपहितस्याभिधाव्यापारत्वेन स्वीकारात्, अन्यस्य च परिस्पन्दप्रयत्नलक्षणस्य व्यापारस्य विभौ विभुगुणे वा शब्दे चैतन्यानधिकरणे दुर्निरूपत्वात्। तस्मात्समभिव्याहृतपदकदम्बकस्मारितपदार्थाना परस्परान्वयप्रत्ययो लाक्षणिक शाब्दश्चेति सर्वमवदातम्। तथाचोक्त मीमासावार्तिककारमिश्रै —

'न विमुञ्चन्ति सामर्थ्य वाक्यार्थेऽपि पदानि न ।
वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति च स्थिति'॥' इति। (श्लो० वा० वाक्य० २२९)

प्रयोगश्च—शब्दास्तात्पर्यविषयव्यतिषङ्गस्य लक्षकाः ।
तत्तात्पर्याभिधानत्वात्क्ष्वेळ भुङ्क्ष्वेति शब्दवत्॥ २६ ॥

---

साहचर्यवशात्संस्कारोन्मेषकतया स्मारकत्वम्। नचैतदेवाभिधायकत्वम्, अर्थानामपि शब्दाभिधायकत्वप्रसङ्गात्, अस्ति च तेषामपि शब्दस्मारकत्वमिति। ततश्च तदतिरिक्ताभिधाव्यापारस्वीकारेऽन्विताभिधानवादस्वीकार इत्यभिप्रेत्य शङ्कते—**नन्वित्यादिना**। यद्यपि स्मारकत्व पदतदर्थयो समान, तथापि पदानामेवाभिधायकत्व लौकिकप्रसिद्ध नेतरस्येति परिहरति—**न पदानामिति**। नन्वन्य एवाभिधाव्यापारः शब्दस्य भाट्टैरभ्युपेयते, तत्कथं स्मारकाणामेव प्रसिद्धिवशादभिधायकत्वमिति तत्राह—**शब्देति**। अथवा स्मृतिजननशक्तिविशिष्ट शब्दविज्ञानमभिव्यापार, नचैवविधो व्यापारोऽर्थस्यास्तीति कथमभिधायकत्वप्रसक्ति ? इत्याह—**शब्दविषयेति**। अथवाभिधायकत्व न निवारयामः, किंतु स्मरणजनकतातिरिक्तमेव तत्स्वीकर्तव्यमिति तत्राह—**शब्दविषयेति**। पदजनितविज्ञाने परिशेषात्स्मृतित्वेन तज्जनकत्वमेव शब्दस्याभिधायकत्वमित्यर्थः। अत्र वक्तृविशेषानुमापकशब्दविज्ञाने तदनभिधानरूपेऽति व्याप्तिनिवृत्त्यै शब्दग्रहणम्। ननु परिस्पन्द प्रयत्नो वा अन्य एव व्यापारो लोकप्रसिद्धः, यथा वा कौमारिलानामात्मन, तत्कथ विज्ञानस्य व्यापारत्वम् ? इत्याशङ्क्याह—**अन्यस्येति**। विभाविति भट्टनये। विभुगुणे इति काणादादिनये। तदनेन मूर्तद्रव्यानुविधायिपरिस्पन्दो निरस्त.। प्रयत्ननिरासायाह—**चैतन्येति**। अयमभिसन्धि.—तज्जन्यस्तदाश्रितश्च तत्क्रियाहेतुस्तद्व्यापार इति चक्षु सयोगादौ यद्यपि दृष्टस्तथापि श्रोत्रशब्दसन्निकर्षे तज्जन्यत्वाभावेऽपि तद्व्यापारत्व दृष्टम्, तथा अपूर्वस्य यागाश्रयत्वाभावेऽपि यागजन्यतया तद्व्यापारत्वमभ्युपगतम्, तदिहापि शब्दविषयविज्ञानस्य शब्दाश्रयत्वाभावेऽपि तज्जन्यत्वादपि भवति तद्व्यापारत्वमिति। स्वपक्षदूषणसमाधानमुपसहरति—**तस्मादिति**। लाक्षणिकत्वेऽत एव शाब्दत्वे च भट्टपादसमतिमाह—**तथा चेति**। ननु तथापि वाक्यार्थस्य लाक्षणिकत्वे कि प्रमाणम्? नह्येतदभियुक्तवचनैकगम्यमिति तत्राह—**प्रयोगश्चेति**। तात्पर्यविषयो व्यतिषङ्गसंबन्धस्तस्य लक्षका इति साध्यनिदश । विष भुङ्क्ष्वेति

---

तो यह शङ्का उचित नही, क्योकि सभी स्मारक, वाचक नही होते, केवल स्वार्थ-स्मारक पदो को ही लोक-प्रसिद्धि के आधार पर वाचक माना जाता है। पदार्थ-स्मरण-जनन-शक्ति-विशिष्ट शब्द-ज्ञान को ही अभिधाव्यापार माना गया है। इससे भिन्न और कोई प्रयत्न परिस्पन्दादिरूप व्यापार चैतन्य के अनाधार विभु ( भाट्टाभिमत विभु शब्द ) मे या विभु के गुण ( नैयायिकादि-सम्मत आकाश के गुण ) शब्द मे बन नही सकता। इसलिए समभिव्याहृत पद-समूह से स्मारित पदार्थों का परस्पर अन्वय-बोध, लाक्षणिक होनेसे शब्द कहलाता है। जैसा कि मीमासा-वार्तिककार मिश्रपाद ने कहा है— 'हमारे मत मे पद, वाक्यार्थ-बोधन के लिए भी अपना सामर्थ्य रखते है। वाक्यार्थ सर्वत्र लक्ष्यमाण ही होता है।' अनुमान प्रयोग भी है—शब्द, तात्पर्य-विषयीभूत व्यतिषङ्ग ( अन्वय ) के लक्षक होते है, अन्वय-बोधन के तात्पर्य से उच्चरित होने के कारण, जैसे—विष भुङ्क्ष्व—यह वाक्य। अर्थात्

विवादपदानि पदानि, लक्षणया पदार्थानामन्योन्यान्वयप्रतिपत्तिपराणि, अन्वितप्रतिपत्तिपरत्वे सति पदत्वाद्विष भुङ्क्ष्वेति पदकदम्बवत् ।

न च पदानि स्वार्थपरित्यागेन लक्षणयान्वयप्रतिपत्तिपराणि उक्तसाधनत्वात् त्वदुदाहृतवाक्यवदित्याभाससमानयोगक्षेमता । अस्यैव त्वदुदाहृतानुमानवाक्यस्य स्वार्थपरित्यागापरित्यागयोस्तदनुपपत्तेः । तथा हि स्वार्थपरित्यागे विशिष्टसाध्यप्रतीत्यभावादेवाविघातकत्वात्, अपरित्यागे च तत्रैवानैकान्तिकत्वात्, मुख्यार्थबाधोपाधिप्रयुक्तत्वाच्च स्वार्थपरित्यागस्य । इह च बाधाभावान्न स्वार्थपरित्यागानुमानम्, तस्मादभिहितान्वयवाद एव श्रेयानिति केचिदाचार्याः ।

---

शब्दवदित्यर्थः । श्लोकेन सगृहीतमनुमानं विवृणोति—**विवादपदेति** । विष भुङ्क्ष्वेत्यादौ सिद्धसाधनतानिवृत्त्यै विवादग्रहणम् । अन्विताभिधानेनार्थान्तरतानिवृत्त्यै लक्षणयेत्युक्तम् । **पदार्थानामिति** । अन्वयिना, न पुनः स्वस्मारितानाम् । तेन न दृष्टान्तस्य साध्यवैकल्यम् । पक्षे च सामर्थ्यात्स्वस्मारितान्यसिद्धिः, इतरस्यासभवात् । गोरश्व इत्यादिपदैरनैकान्तिकतापरिहाराय हेतौ प्रथमं विशेषणम् । लिङ्गिलिङ्गसबन्धपरलिङ्गव्यवच्छेदाय पदग्रहणम् । अनन्वितानधिकरणेत्यपि विशेषणीयमिति केचित्, इतरथा स्वपुत्रानुमापकपदेषु व्यभिचारादिति ।

आभाससमानयोगक्षेमता निराकरोति—**न चेति** । उदाहृतानुमानवाक्ये वाच्यार्थपरित्यागापरित्यागयोः प्रकृताविघातं दर्शयति—**तथा हीत्यादिना** । **अनैकान्तिकत्वादिति** । तत एव व्याघातकाभावादव्याघात इति शेषः । उपाधिमप्याह—**मुख्यार्थेति** । साधनव्याप्तिं परिहरति—**इह चेति** । किं चेदमन्विताभिधानं नाम न तावदन्वितप्रतिपादनमात्रम्, अविप्रतिपत्तेः । नापि पदार्थाभिधायकशब्दस्यान्विते तात्पर्यम्, अत्राप्यविवादादेव । नापि पदार्थमात्रे गृहीतसगतिकस्यान्विताभिधायकत्वम्, पदार्थसगतेस्तन्मात्रोपक्षीणत्वात्, इतरथाऽतिप्रसङ्गात् । अन्वितपदार्थसगतिबलेन तत्प्रतिपादनं तदिति चेत्, तत्र वक्तव्यम्, किमन्वयविशेषवति सगतिग्रहः ? किं वान्वयमात्रवति ? आद्ये, वाक्यार्थस्यापूर्वत्वक्षतिः । अन्वयपदार्थप्रतीत्योः समसमयतया योग्यतादिप्रतिसन्धानविरहिणामपि पदार्थप्रतीतिवदन्वयप्रतीत्यापत्तिश्च । द्वितीयस्त्वसभवनिरस्तः । नह्यन्वयमात्रवति गृहीतसगतिकस्यान्वयविशेषवद्वाचकत्वं सभवति, जातौ गृहीतसगतिकस्यापि व्यक्तिवाचकत्वप्रसङ्गात् । अन्वयमात्रवति गृहीतसगतिकेन तावन्मात्रमभिधीयते विशेषस्तु लक्ष्यत इति चेत्, हन्त ! पदार्थाभिधायिभिरेव शब्दैरयं लक्ष्यताम्, कृतमन्तर्गडुनान्वयमात्रेण प्रमाणप्रयोजनरहितेनेत्यलम् । केचिदाचार्याः, वाचस्पतिमिश्रप्रभृतयः । यदि चैवं न्यायपरिशुद्धेऽपि पक्षे विवरणकारादिमतमवलम्ब्यापसिद्धान्तगन्धिता कश्चिदादध्यात्, तन्मुखं भाष्यकारप्रभृतिवृद्धवचनप्रतिबन्धेन पिद-

---

**विवादास्पद पद, लक्षणा के द्वारा पदार्थों के पारस्परिक अन्वय के बोधक होते हैं, अन्वय-बोधपरक पद होने से, जैसे 'विष भुक्ष्व'—यह पद-समूह । 'पद, स्वार्थ का त्याग करते हुए लक्षणा-द्वारा अन्वय के बोधक हैं, अन्वय-बोध-परक पद होने से, जैसे—विष भुक्ष्व—यह वाक्य'—इस प्रकार के अनुमानाभास की समानता हमारे अनुमान में नहीं दिखा सकते, क्योंकि इस आपके अनुमान-वाक्य ने स्वार्थ-परित्याग किया है ? या नहीं ? यदि यह स्वार्थ-परित्याग करता है, तब विशिष्ट साध्य का प्रत्यायक न होने से हमारे अनुमान का घातक नहीं । यदि यह आपका अनुमान-वाक्य स्वार्थ-त्याग नहीं करता, तब आपका हेतु इसी में व्यभिचारी हो जाता है । आपके अनुमान में 'मुख्यार्थ-बाध' उपाधि भी है । मुख्यार्थ-बाध ही स्वार्थ-परित्याग का प्रयोजक (साधक) होता है । अतः मुख्यार्थ-बाध के न होने से पक्ष में स्वार्थ-परित्याग का अनुमान नहीं किया जा सकता । इस लिए अभिहितान्वय-वाद ही युक्ततर है—ऐसा कुछ आचार्य मानते हैं । इस प्रकार का मानना वेदान्त-सिद्धान्त से विरुद्ध**

न चैवमपसिद्धान्त , भाष्यकारसमतत्वात् । तथा च समन्वयसूत्रे वेदान्तवाक्यानि प्रस्तुत्य भाष्यकार प्रतिपादयति स्म–"न च तद्गतानां पदार्थाना ब्रह्मस्वरूपविषये निश्चिते समन्वयेऽवगम्यमानेऽर्थान्तरकल्पना युक्ता , श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्" । तत्र च पदार्थानामेवान्योन्यान्वयप्रत्यायकता प्रतीयते, मण्डनमिश्रादिभिरप्यङ्गीकृतत्वात् ।

'पदार्थान्तरतुल्यत्वाद्विध्यकाङ्क्षानिबन्धन ।
न ससर्ग पदार्थाना स्वशब्दैस्तु प्रकाशिता ॥
संबन्धयोग्यरूपेण तस्मात्संबन्धभागिन ।
विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जन ॥' इति । (ब्र० सि० पृ० १११)

व्यवहारे भट्टनय इत्यङ्गीकारात् भट्टपादैश्च वाक्यार्थस्य सर्वत्र लाक्षणिकत्वस्वीकारात् । 'वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति च स्थिति ' इति । तस्मात्पौरुषेयवाक्येभ्य इवापौरुषेयेभ्यो वेदान्तवाक्येभ्यो लक्षणया यथोक्तलक्षणं ब्रह्म सिद्ध्यतीति सिद्धम् ।

ननु कथमपौरुषेयत्व वेदान्तानाम् ? तत्प्रतिपादकप्रमाणाभावात् । नन्वपौरुषेया वेदा संप्रदाया-

---

धाति—न चेत्यादिना । पदार्थान्तरेति । पदार्थाना ससर्गो न विध्याकाङ्क्षानिबन्धन , कुत. ? विधेरपि पदार्थान्तरतुल्यत्वात् , तस्मात्सबन्धयोग्यरूपेण स्वशब्दै· प्रकाशिता पदार्था· स्वयमेव ससर्गभागिन· । सबन्धयोग्यतया पदार्थप्रकाशे कारणमाह—विशिष्टार्थेति । सप्रयोजनकथन वादार्थमुपसहरति—तस्मादिति ।

ससृष्टपरवाक्येषु ससृष्टार्थस्य लक्षणा ।
अखण्डार्थपर वाक्यमखण्डस्यैव लक्षणम् ॥
यद्वा—अखण्डार्थपरेऽप्यादावस्ति ससर्गलक्षणा ।
तस्यापि च ततस्त्यागस्तेन नाखडखण्डना ॥

अपौरुषेयेभ्य इत्युक्तमसृष्यमाणा वैशेषिकादय· प्रत्यवतिष्ठन्ते—ननु कथमिति । जीर्णकूपारामादिव्यभिचारवारणाय सम्प्रदायाविच्छेदे सतीत्युक्तम । कालिदासादिवचस्सु व्यभिचारवारणायास्मर्यमाणकर्तृ-

---

नही , क्योकि भाष्यकार को भी यह सम्मत है। भाष्यकार ने "तत्तु समन्वयात्" (वे० सू० १।१।४) मे वेदान्त वाक्यो के विषय मे कहा है—"वेदान्त-गत पदार्थो का ब्रह्मस्वरूप मे जब कि निश्चित अन्वय प्रतीत होता है, तब उनका अर्थान्तर ( क्रियादिरूप अर्थ ) मे तात्पर्य मानना युक्त नही , क्योकि अर्थान्तर में तात्पर्य मानने पर श्रुत की हानि और अश्रुत की कल्पना करनी पड़ेगी।" इस भाष्य से पदार्थो मे ही अन्योऽन्य अन्वय की प्रत्यायकता प्रतीत होती है । आचार्य मण्डन मिश्र ने भी माना है—'पदार्थों का परस्पर अन्वय, विध्यर्थ ( नियोग ) की आकाक्षा से प्रयुक्त नही , क्योकि वह भी पदार्थान्तर के तुल्य ही है । अत· अपने वाचक पदो से प्रकाशित, सम्बन्ध-योग्य पदार्थ स्वय ही अन्वय के बोधक होते है , इसका कारण यह है कि व्यवहार-जगत मे विशिष्ट अर्थ की प्रतीति कराने के लिए ही पदो का समुच्चारण होता है ।' वेदान्तिगण व्यवहार मे भट्ट मत मानते है । भट्टपाद ने वाक्यार्थ को सर्वत्र लाक्षणिक ही माना है–'सर्वत्र वाक्यार्थ लक्ष्यमाण ही होता है–यह हमारा सिद्धान्त है ।' इसलिए पौरुषेय वाक्यो के ही समान अपौरुषेय वेदान्त वाक्यो से लक्षणा के द्वारा सत्यादिस्वरुप ब्रह्म सिद्ध होता है—यह सिद्ध हो गया ।

पूर्वपक्ष—वेदान्त अपौरुषेय कैसे है ? जबकि उनकी अपौरुषेयता मे कोई प्रमाण ही नही । 'वेद, अपौरुषेय है, अविच्छिन्नसम्प्रदायक और अस्मर्यमाणकर्तृक होने से, जैसे आत्मा'—यह अनु-

विच्छेदे सत्यस्मर्यमाणकर्तृकत्वादात्मवदित्यनुमानमस्तीति चेत्, मैवम्, विशेषणासिद्धेः। पौरुषेयवेदवादिभिः प्रलये सम्प्रदायविच्छेदस्याभ्युपगमात्। अस्मर्यमाणकर्तृकत्वं च किमप्रमीयमाणकर्तृकत्वं विवक्षितम्? उत स्मरणागोचरकर्तृकत्वम्? नाद्य, "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत," "त्रयो वेदा अजायन्त, ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्," "इदं सर्वमसृजत ऋचो यजूंषि सामानि" इत्यादिश्रुतिभिः कर्तुः प्रमीयमाणत्वात्। नापि द्वितीयः; विकल्पासहत्वात्। तथाहि— किमेकेनास्मरणं विवक्षितम्? उत सर्वास्मरणम्? नाद्यः, मुक्तकश्लोकादावनैकान्तिकत्वात्। न द्वितीयः, सर्वास्मरणस्यासर्वज्ञविज्ञानाविषयत्वात्। ननु "वाचा विरूप! नित्यया," "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै", "नाचिकेतमुपख्यानं मृत्युप्रोक्तं सनातनम्,"

कत्वादित्युक्तम्। विशेषणासिद्धिमेवाह—**पौरुषेयेति**। अस्मर्यमाणेत्यत्रापि स्मृतिपदं किं मूलप्रमितिपरम्? किं वा मुख्यवृत्ति? इति विकल्प्याद्ये तदविषयत्वं वेदकर्तुरसिद्धमित्याह—**नाद्यस्तस्माद्यज्ञादिति**। तस्मात्प्रकृताद्यज्ञात्यज्ञरूपिणः परमेश्वरात् सर्वहुतः हुतं हुतं यस्मिंस्तत्सर्वं विद्यते स सर्वहुत् ततः सर्वहुतः सकाशात्, अथवा सर्वं जुहोतीति सर्वहुत् यद्यपि स एवेति यावत्। प्रलयकाले वा सर्वं स्वमात्रतया जुहोतीति सर्वहुत् ततः ऋगादयो जज्ञिरे उत्पन्ना इति पुरुषसूक्तार्थः। त्रयो वेदा इति श्रुत्यन्तरम्। इदं सर्वमित्यपरा श्रुतिः। **मुक्तकेति**। विप्रकीर्णाः श्लोकाः मुक्तश्लोकाः तेषु यैः कैश्चिदस्मर्यमाणकर्तृकत्वमस्ति नचास्त्यपौरुषेयत्वमित्यर्थः। नित्यत्वप्रतिपादकागमविरोधात् सृष्टिश्रुतीनामन्यार्थत्वम् शंकते—**नन्वित्यादिना**। हे विरूप! वृष्णे! नित्यया वाचा सुष्ठु स्तुतिं चोदयस्वेत्यर्थः। तथा यः परमेश्वरो ब्रह्माणं हिरण्यगर्भं विदधाति विहिताय च तस्मै वेदान्प्रहिणोति प्रददाति। उपदिशतीति यावत्। न तु करोतीति श्वेताश्वतरोपनिषन्मन्त्रार्थः। नाचिकेतमिति कठवल्लीश्रुतिः। अनादिनिधनेति स्मृतिः। आदिनिधनरहिता, अत एव नित्या उत्सृष्टेत्युपदिष्टेत्यर्थः। अतत्परत्वादासां न्यायसापेक्षाणां तदभावे नास्ति स्वार्थे

मान अपौरुषेयता में प्रमाण नहीं हो सकता, क्योंकि हेतु का विशेषण ( सम्प्रदायाविच्छेद ) असिद्ध है—वेद को पौरुषेय माननेवाले प्रलय में सम्प्रदाय ( वैदिक अध्यनाध्यापन ) का विच्छेद मानते है। 'अस्मर्यमाणकर्तृकत्व' पद से भी क्या विवक्षित है? अप्रमीयमाणकर्तृकत्व? या स्मरणाविषयकर्तृकत्व? प्रथम पक्ष उचित नहीं, क्योंकि "तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत" (उस सर्वहुत् यज्ञरूप परमेश्वर से ऋक्, साम उत्पन्न हुए, गायत्र्यादि छन्द और यजु उससे ही उत्पन्न हुए—ऋ० ८।४।१८), "त्रयो वेदा अजायन्त—ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः, सामवेद आदित्यात्" ( तीन वेद उत्पन्न हुए—ऋग्वेद अग्नि से, यजुर्वेद वायु से और सामवेद आदित्य से ), "इदं सर्वमसृजत ऋचो यजूंषि सामानि" ( यह सब कुछ उत्पन्न किया—ऋङ्मन्त्र, यजुर्मन्त्र, साममन्त्र )—आदि श्रुतियों से कर्ता प्रमीयमाण है। द्वितीय ( स्मरणाविषयकर्तृकत्व ) पक्ष में भी 'अस्मरण' पद से किसी एक पुरुष का अस्मरण विवक्षित है? या सर्वपुरुषों का अस्मरण? प्रथम पक्ष युक्त नहीं, क्योंकि मुक्तक श्लोकादि में व्यभिचार है ( अर्थात् प्रकीर्ण श्लोकों के कर्ता का अस्मरण आज देखा जाता है, अतः 'अस्मर्यमाणकर्तृकत्व' हेतु उन श्लोकों में भी है, किन्तु वहाँ 'अपौरुषेयत्व' साध्य नहीं रहता )। द्वितीय ( सर्वपुरुषों का अस्मरण ) पक्ष तो असम्भव है, क्योंकि असर्वज्ञ व्यक्ति के लिए यह जानना सम्भव ही नहीं, कि वह किसी वस्तु के विषय में यह कहे कि इसका कभी भी किसी ने भी स्मरण किया ही नहीं )। यदि कहा जाय कि "वाचा विरूप! नित्यया" ( हे विरूप! नित्य वाणी से स्तुति करने की प्रेरणा हमें दे—तै० सं० २।६।११), "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" ( 'जो

"अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा"—इत्यादिश्रुतिस्मृतिवाक्येभ्यो वेदस्य नित्यत्वावगमात् पौरुषेयत्वप्रतिपादकानि कल्पादौ तत्सम्प्रदायप्रवर्तकत्वपराणीति चेत्, मैवम्, 'वाचा विरूप ! नित्यया इत्यस्य वाक्यस्य "वृष्णे चोदस्व सुष्टुतिम्" इति वाक्यशेषादग्निस्तुतिविधिपरत्वावगमात् अन्यार्थदर्शनस्य प्राप्त्यभावे प्रमाणत्वानुपपत्तेः । "यो वै वेदांश्च प्रहिणोति" इत्यस्य च पौरुषेयत्वापौरुषेयत्वयोः साधारणत्वात्, स्वयं निर्मायापि वेदानां प्रदानसंभवात् । 'मृत्युप्रोक्तं सनातनम्' इत्यस्य वाक्यस्य 'उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते' इति वाक्यात् उपाख्यानानुवचनश्रवणप्रशंसापरत्वात् । 'अनादिनिधना नित्या' इति स्मृतेश्च प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते' इति स्मृत्यन्तरविरोधेनानिर्णायकत्वात् । एवं च नित्यत्वप्रतिपादकानामन्यार्थतया पौरुषेयत्वप्रतिपादकवाक्याबाधकत्वात् पौरुषेयत्वमेव वेदान्तानां निश्चिनुमः ।

अनुमानतोऽपि तथात्वमध्यवस्यामः—वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् कालिदासवाक्यवदिति, वेदवाक्यान्याप्तप्रणीतानि प्रमाणत्वे सति वाक्यत्वान्मन्वादिवाक्यवत् ।

---

प्रामाण्यम्, अतो न सृष्टिश्रुतिविनिवारकत्वमिति परिहरति—मैवमित्यादिना । अन्यार्थेति । अन्यशेषे वाक्ये यद्दर्शनं पदसमभिव्याहारमात्रम्, तदन्यार्थदर्शनम् । साधारण्यमेव दर्शयति—स्वयमिति । उपाख्यानेति । उपाख्यानस्यानुवचनं श्रवणं च यत्तयोः प्रशंसापरत्वादित्यर्थः । स्मृतेः स्मृत्यन्तरविरोधमाह—अनादीति ।

एवं नित्यत्वानुमानागमदूषणपूर्वकमनित्यत्वागमं प्रदर्श्यानुमानमप्यनित्यत्वे दर्शयति—अनुमानेति । गीतिरूपेषु हुंफडादिस्तोभभागेषु चासिद्धिपरिहारार्थं वाक्यानीति विशेषणम् । ईश्वरकृतत्वेऽप्यनुमानमाह—वेदेति । उन्मत्तवाक्ये प्रत्यक्षादौ च व्यभिचारवारणाय विशेषणद्वयं गृहीतम् । सत्प्रतिपक्षतां शङ्कते—

---

परमेश्वर ब्रह्मा को पहले बनाता है और फिर ब्रह्मा को वेदों का उपदेश देता है'—श्वेता० ६।१८), "नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम्" यम के इस सनातन उपदेश नचिकेता के उपाख्यान को—कठ० उ० ), "अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा" (स्वयंभु ने आरम्भ में आदि और अन्त से रहित नित्यवाक् का उपदेश किया ( म० भा० शान्ति २३१।५६) )—आदि श्रुतियों और स्मृतियों से वेद में नित्यत्व प्रतीत होता है, अतः पौरुषेयत्व के प्रतिपादक वचन, कल्प के आरम्भ में सम्प्रदाय-प्रवृत्तिमात्र के ही बोधक हैं । तो यह कहना युक्त नहीं, क्योंकि "वाचा विरूप"—इस श्रुति का "वृष्णे चोदस्व सुष्टुतिम्"—इस वाक्यशेष के बल पर अग्निके स्तुति विधान में ही तात्पर्य निश्चित होता है । वाक्यशेष-गत जो अन्य ( वेद-नित्यत्व या यूप की आदित्यरूपता ) अर्थ का दर्शन है वह, उस प्रकार की विधि के न होने से प्रमाण ही नहीं । "यो वै वेदांश्च प्रहिणोति"—यह श्रुति तो पौरुषेयत्व तथा अपौरुषेयत्व—दोनों पक्षों में लग सकती है, क्योंकि स्वयं निर्माण करके भी वेदों का प्रदान भी सम्भव है । "मृत्युप्रोक्तं सनातनम्"—यह वाक्य तो "उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते"—इस वाक्यशेष के बल से नाचिकेतस उपाख्यान के कहने-सुनने की प्रशंसा करता है । "अनादिनिधना"—यह स्मृति "प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते" ( प्रत्येक मन्वन्तर में यह वेद नया बनाया जाता है )—इस स्मृति से विरुद्ध होने के कारण निर्णायक नहीं मानी जा सकती । इस प्रकार नित्यत्वप्रतिपादक वाक्य अन्यपरक होने के कारण, पौरुषेयत्व-प्रतिपादक वाक्यों के बाधक नहीं हो सकते, अतः वेदान्त पौरुषेय ही है—यह हमारा निश्चय है ।

अनुमान से भी पौरुषेयत्व का निश्चय होता है—'वेद-वाक्य, पौरुषेय है, वाक्य होने से जैसे—कालिदासादि के वाक्य ।' एवं 'वेद-वाक्य, आप्त-प्रणीत है, प्रमाणभूत वाक्य होने से, जैसे—मन्वादि-

ननु—'वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनरूपत्वादधुनाध्ययनं यथा ॥' ( श्लो० वा० वाक्य ३६६ )

इत्यनुमानात्सप्रतिसाधनतेति चेत्, मैवम्, सर्ववेदाध्ययनपक्षीकारे दृष्टान्तासिद्धेः, अतीतकालीनाध्ययनपक्षीकारे चांशतः सिद्धसाधनत्वात्, सर्गकालीनाध्ययनपक्षीकारे सर्गमनङ्गीकुर्वतो मीमांसकस्याश्रयासिद्धेः ।

'भारताध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
भारताध्ययनत्वेन सांप्रताध्ययनयथा ॥'

इत्याभाससमानयोगक्षेमत्वात् । अथ तत्र कर्तृस्मृत्या बाधः—

'कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ? ॥'

तर्हि इहापि सकर्तृकताप्रतिपादकश्रुतिभिर्बाध इति समानम् । विपक्षे चाप्ताप्रणीतत्वात् बालोन्मत्तादिवाक्यवदप्रामाण्यप्रसङ्गो बाधकस्तर्कः । अथ बालोन्मत्तादिवाक्यानामनाप्तप्रणीतत्वेनाप्रामाण्यम्, इह तदभावादाप्तवाक्यवत्प्रामाण्यमुपपद्यत इतिचेत्, मैवम्, अना-

---

नन्विति । अत्र किं कृत्स्नं वेदाध्ययनं पक्षः ? उतातीतकालीनम् ? उत सर्गकालीनाध्ययनम् ? इति विकल्प्य क्रमेण दूषयति—मैवमित्यादिना । आभाससमानयोगक्षेमतया दौर्बल्यमाह—भारतेति । ननु तत्र व्यासः कर्तेति स्मर्यते 'को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ?' इत्यादौ तेन बाधाद्वैषम्यमिति तत्राह—अथेति । शङ्कितोपाधिता निराकरोति पूर्ववादी—विपक्षे चेति । सोपाधिकतया प्रशिथिलमूलतां शङ्कते—अथेति । अनाप्ताप्रणीतं चेदाप्तप्रणीतमेवेति नित्यत्वाभावाद्वाक्यस्येति हृदि निधाय परिहरति—मैवमिति । आत्मादिषु व्यभिचारवारणाय वाक्यग्रहणम् । ननु न वक्त्रा शब्दानां निष्पादनं क्रियते, किंत्वभिव्यक्तिरेव, तेन वक्त्रभावो नानुत्पत्तिव्याप्त इति प्रशिथिलमूलतां शङ्कते—अथेति । अतिप्रसक्त्या परिहरति—मैवमिति । तदेव सदोपलब्ध्यनुपलब्धिप्रसङ्गं नित्यत्वे बाधकमभिधायानित्यत्वेऽप्यनुमानमाह—

---

वाक्य ।' यदि कहा जाय कि यहाँ 'सर्व वेदाध्ययन, गुर्वध्ययनपूर्वक है, वेदाध्ययन रूप होने से, जैसे आधुनिक वेदाध्ययन'—यह सत्प्रतिपक्ष है । तो नही कह सकते, क्योकि यदि समस्त वेदाध्ययन पक्ष बनाते है, तब दृष्टान्त की असिद्धि और अतीत वेदाध्ययन को पक्ष बनाने पर अंशतः सिद्ध-साधन होता है ( क्योकि अतीतकालीन अध्ययन को दो भागो मे बाँटा जा सकता है—एक सृष्टि के आरम्भ का अध्ययन और दूसरा उसके उत्तरकाल का अध्ययन । नैयायिक-गण प्रथम भाग मे तो गुर्वध्ययनपूर्वकत्व नही मानते, किन्तु उत्तर काल के अध्ययन मे मानते है, अत. पक्ष के एक भाग में सिद्ध-साधन है ) । सृष्ट्यारम्भकालीन अध्ययन को पक्ष बनाने पर सृष्ट्यारम्भ न मानने वाले मीमासको के मत मे आश्रयासिद्धि हो जाती है । तथा 'सर्व भारताध्ययन, गुर्वध्ययनपूर्वक है, भारताध्ययन होने से, जैसे आधुनिक भारताध्ययन'—इस अनुमानाभास की समानता भी उक्त अनुमान मे है । यदि कहा जाय कि इस भारताध्ययनपक्षक अनुमान का "कृष्णद्वैपायन व्यास को साक्षात् नारायण ही समझना चाहिए, क्योकि भगवान् विष्णु को छोड़कर इतने बड़े विशाल काम महाभारत का प्रणयन कौन कर सकेगा ?"—इस स्मृति से बाध है, अत इसकी समानता हमारे अनुमान मे नही । तो यह कहना युक्त न होगा, क्योकि आपके वेदाध्ययनपक्षक अनुमान का भी वेद को सकर्तृक बतानेवाली श्रुतियो से बाध होने के कारण समानता ही है । विपक्ष मे बाधक तर्क यह है—वेद यदि आप्त-प्रणीत न माना जायगा, तब बाल या उन्मत्त के वाक्यो-जैसा अप्रमाण हो जायगा । यदि कहा जाय बालकादि के वाक्य अनाप्त-प्रणीत होने के कारण अप्रमाण है, किन्तु वेद अनाप्त व्यक्ति से प्रणीत न होने से वैसे ही प्रमाण होता है, जैसे—आप्त-प्रणीत वाक्य । तो यह कहना उचित

प्ताप्रणीतवाक्यस्य जगत्याप्तप्रणीतत्वनियमदृष्टे, अन्यथा वक्तुरभावे वाक्यस्योत्पत्तिप्रतीत्योरसंभवात्। अथाभिव्यक्तिरेव शब्दानां वक्तृव्यापारान्नोत्पत्ति, मेवम्, एवं सति पाषण्डाद्यागमानामपि नित्यत्वप्रसङ्गात्। किं च शब्दोऽनित्यः कृतको वा सामान्यवत्वे सत्यस्मदादिबाह्येन्द्रियप्रत्यक्षत्वात् घटवदित्यनुमानेन शब्दानां कृतकत्वेन पौरुषेयत्वसिद्धिः। न च मीमांसकं प्रति योगिव्यवच्छेदार्थमस्मदादिपदं व्यर्थम्, तेन योगिनामनभ्युपगमादिति वाच्यम्, स्वमते व्यभिचारनिवारणार्थत्वात्। तथा च चिरन्तनाचार्याणामपि स्वमते व्यभिचारनिवारणार्थं विशेषणोपादानं दृश्यते—नित्यः शब्दो ध्वनिधर्मान्यत्वे सति श्रावणत्वात् शब्दत्ववदिति। न हि वर्णनित्यत्ववादिमते वर्णातिरिक्ता ध्वनय उदात्तादयो वा तद्धर्माः सन्ति, ये व्यावर्तेरन्, स्वमते तु ध्वनेस्तद्धर्माणां चोदात्तादीनां सद्भावादुपपद्यते ध्वनिधर्मान्यत्वे सतीति विशेषणम्।

न चोपान्त्यादिशब्देषु भागासिद्धिः, श्रोत्रग्राह्यशब्दविशेषस्यैव पक्षीकरणात्। न चैव-

---

किंचेति। अथायमभिव्यक्तिवादित्वान्मीमांसकः कृतत्वे एव विवदेत्तर्हि तदपि साधनीयमित्याह—कृतको वेति। ईश्वरप्रत्यक्षेष्वाकाशादिषु व्यभिचारनिवृत्त्यर्थमिन्द्रियप्रत्यक्षत्वादित्युक्तम्। तथापि मनोग्राह्यात्मनि व्यभिचारस्तदर्थं बाह्येति। तथापि योगिग्राह्येन्द्रियप्रत्यक्षपरमाण्वादिषु व्यभिचारस्तदर्थमस्मदादीत्युक्तम्। तथापि सामान्ये व्यभिचारस्तदर्थं सामान्यत्वे सतीत्युक्तम्। अत्रास्मदादीतिविशेषणं मीमांसकं प्रति व्यर्थम्, तेन तन्निवर्त्ययोग्यनङ्गीकारात्तदुद्धारे च त्वन्मते व्यभिचार इति केचिद् दूषणमूचिरे, तत्परिहरति—नचेति। ननु न स्वमतमात्रव्यभिचारनिवारणाय विशेषणं युक्तमदृष्टचरत्वादिति तत्राह—तथा चेति। ध्वनिषु तद्धर्मोदात्तादिषु च व्यभिचारनिवारणायोक्तं ध्वनिधर्मान्यत्वेसतीति। स्वमतममत व्यभिचारवारकत्वं दर्शयति—नहीत्यादिना। वर्णग्रहणं शब्दपरम्। एतदुक्तं भवति—व्यभिचारमात्रनिवृत्त्यापि भवति सार्थक्यं हेतोरिति।

यच्च दूषणान्तरमुच्यतेऽस्मदादिबाह्येन्द्रियग्राह्यत्वमुपान्त्यादिषु नास्तीति भागासिद्धिरिति तत्राह—न चोपान्त्यादीति। ननु तथापि धर्म्यसिद्धिः, भेरीदण्डसंयोगान्निमित्तकारणात् भेर्याकाशसंयोगादसमवायिकारणात् महाकाशप्रदेशे समवायिकारणे प्रथममेकः शब्द उत्पद्यते तस्य च शब्दस्य विभुगुणतया आश्रयद्वारा स्वतो वा गमनानुपपत्तेः प्रदेशान्तरोत्पन्नत्वात् स्वभावभेदाद्वा न श्रोत्रेण संबन्धः, ततश्च तस्मा-

---

नहीं, क्योंकि संसार में यह नियम है कि जो वाक्य, अनाप्त-प्रणीत नहीं होता, वह अवश्य आप्तप्रणीत होता है। अन्यथा उस वाक्य का कोई कर्ता न होने से वाक्य ही कैसे बनेगा ? और कैसे उसका ज्ञान होगा ? 'कर्ता, वाक्य की अभिव्यक्तिमात्र करता है, उत्पत्ति नहीं—यह नहीं कहना चाहिए, क्योंकि इस प्रकार तो पाखण्डियों के आगम भी नित्य हो जायेंगे। दूसरी बात यह है कि 'शब्द अनित्य या कृतक है, जातिमान् होकर हम लोगों की बाह्येन्द्रिय से प्रत्यक्ष होने के कारण, जैसे—घट'—इस अनुमान से शब्दमात्र में कृतकत्व सिद्ध होने से पौरुषेयत्व सिद्ध हो जाता है। यदि कहा जाय कि आपके हेतु में योगि-व्यावर्तक 'अस्मदादि' पद व्यर्थ है, क्योंकि मीमांसक, योगी मानते ही नहीं, कि योगि-प्रत्यक्ष-गम्य परमाण्वादि में व्यभिचार होने का भय हो। तो यह कहना उचित नहीं, क्योंकि अपने मत से योगि-प्रत्यक्ष-विषय परमाण्वादि में व्यभिचार हटाने के लिए 'अस्मदादि' पद आवश्यक है। प्राचीन आचार्यों का अपने मत से प्राप्त व्यभिचार वारण करने के लिए विशेषण देना देखा जाता है—'शब्द, नित्य है, ध्वनि तथा ध्वनि के धर्म (उदात्तादि) से भिन्न होकर श्रावण होने के कारण, जैसे—शब्दत्व।' वर्णनित्यत्व-वादी के मत में वर्णों से अतिरिक्त ध्वनि एवं ध्वनि-धर्म ( उदात्तादि ) होते ही नहीं, कि जिनकी व्यावृत्ति की जाय। हाँ, अपने मत में ध्वनि एवं ध्वनि-धर्मों का सद्भाव है, अतः उनमें व्यभिचार-वारणार्थ "ध्वनितद्धर्मान्यत्वे सति"—यह विशेषण देना बन जाता है।

उपान्त्य ( अन्तिम शब्द के अव्यवहित पूर्व ) शब्द में पूर्व हेतु ( सामान्यवत्त्वे सति अस्मदादि

मपि विशिष्टधर्मिहेत्वोरसिद्धिस्तत्तच्छ्रोत्रेष्वेकस्यैव शब्दस्य समावयानङ्गीकारात्, एकस्य शब्दस्य बहूनां प्रत्यक्षत्वानुपपत्तेरिति वाच्यम्; शब्दनित्यत्वानुमानेऽप्यस्य दोषस्य तुल्यतया स्वव्याघातकत्वेन जात्युत्तरत्वापत्ते, तथाहि—भवदिन्द्रियग्राह्य शब्द पक्ष ? अस्मदिन्द्रियग्राह्यो वा ? नाद्य, प्रतिवादिनं प्रत्यसिद्धे । न द्वितीय, वादिनं प्रत्यसिद्धे । तस्माल्लोकप्रसिद्धशब्दत्वजात्याधार एव शब्दो नित्यत्वसाधने पक्ष इति वाच्यम् । एवमनित्यत्वसाधनेऽपीति न कश्चिद्दोप' । न च स एवायं गकार इति प्रत्यभिज्ञाप्रत्यक्षविरोधात् कालात्ययापदिष्टमनित्यत्वानुमानम्, प्रत्यभिज्ञाया जातिविषयत्वेन व्यक्तिविषयत्वेन च सदिह्यमानाया बाधकतानुपपत्तेः । ननु विवादाध्यासित कालो वेदाध्ययनयुक्त कालत्वात् सम्प्रतिपन्नकालवदिति प्रत्यनुमानविरोध इति चेत्, मैवम्, विकल्पासहत्वात्, तथाहि—किं वेदप्रणयनात्प्राक्काल. ? किं वा तदुत्पादोत्तरकाल. ? उत सर्गकाल पक्षीक्रियते ? पक्षत्रयेऽपि मीमांसकस्य धर्म्यसिद्धि, प्रथमे च प्रतिज्ञापदयोर्व्याघातोऽतिरिच्यते, कालिदासादिवाक्यपाठेऽप्येवम-

च्छब्दादसमवायिकारणात् अदृष्टादिनिमित्तकारणादाद्यशब्दाश्रयाकाशप्रदेशानन्तराकाशप्रदेशेषु समवायिकारणेषु सर्वतो दिशि शब्दा उत्पद्यते, तेभ्यश्चान्ये तेभ्यश्चान्ये इति वीचीसतानवत् यावच्छ्रोत्रसमवेतशब्द शब्दसताना उत्पद्यन्ते, तत्र य. कर्णशष्कुल्यवच्छिन्नाकाशप्रदेशे शब्द उत्पद्यते, स श्रोत्रसमवायात् श्रोत्रेण गृह्यते, स च न श्रोत्रान्तरग्राह्य, तत्रासमवेतत्वात् स्वभावभेदाद्वेति वैशेषिकादिदर्शनम्, ततश्च न वादिप्रतिवादिश्रोत्रग्राह्य एक शब्दोऽस्तीति धर्म्यसिद्धि, अतएवोभयसमतहेत्वसिद्धिरिति, तदेतदनूद्य निराकरोति—**न चैवमित्यादिना**। जात्युत्तरता दर्शयितु परपक्षेपि विकल्पसाम्यमुत्तरसाम्य च दर्शयति—**तथा हीत्यादिना** । लोकप्रसिद्ध', श्रावणत्वेन लोकप्रसिद्धः । ननु प्रत्यभिज्ञाप्रत्यक्षबाधितमिदमनित्यत्वानुमानम्, स एवाय गकार इति प्रत्यभिज्ञया गकारस्थैर्यमवगम्यत इति तत्राह—**न च स इति** । यथाहि—ज्वालादौ जातिमवलम्ब्य प्रत्यभिज्ञा प्रवर्तमाना न व्यक्तिस्थैर्यसाधिका तद्वदिहापीत्याह—**प्रत्यभिज्ञाया इति** । न केवल वेदप्रणयनोत्सादनव्याकुर्वतो मीमासकस्य प्रणयनात् प्राक्कालोत्पादोत्तरकालप्रणयनकालानामसिद्धया धर्म्यसिद्धिः, किंतु प्रथमपक्षे वेदसर्गात्प्राक्कालोऽपि वेदाध्ययनप्रयुक्त इति प्रतिज्ञाविरोधश्चाधिक इत्याह—**प्रथम चेति** । दूषणान्तर चाह—**कालीति** । ननु यदीश्वरो वेदकर्ता तर्हि शारीरी

बाह्येन्द्रियग्राह्यत्व ) की भागासिद्धि नही, क्योकि श्रोत्र-ग्राह्य शब्द विशेष को पक्ष बनाया जाता है । यदि कहे कि फिर भी विशिष्ट ( उभय-सम्मत ) पक्ष और हेतु असिद्ध है, क्योकि वादी एव प्रतिवादी दोनो के श्रोत्रो मे कोई एक शब्द समवेत हो नही सकता, अपितु भिन्न-भिन्न शब्द । अतः ऐसा कोई शब्द हो नही सकता, जिसका दोनो प्रत्यक्ष करते हो । तो यह कहना युक्त नही, क्योकि यह दोष तो आपके शब्दगत नित्यत्वानुमान मे भी तुल्य है । अत स्वपक्ष का घातक होने से जात्युत्तर बन जाता है । यहाँ पर जिज्ञासा होती है कि आप अपनी इन्द्रिय से ग्राह्य शब्द को पक्ष बनाते है ? या हम लोगो की इन्द्रिय से ग्राह्य शब्द को ? प्रथम पक्ष तो प्रतिवादी के लिए प्रसिद्ध नही और द्वितीय, वादी के लिए प्रसिद्ध नही । अत लोक-प्रसिद्ध शब्दत्व जाति के आधार किसी शब्द को नित्यत्व-साधन मे पक्ष बनाना होगा। इसी प्रकार अनित्य-साधन मे भी कहा जा सकता है, अत कोई दोष नही । यदि कहे कि "स एवाय गकार."—इस प्रत्यभिज्ञारूप प्रत्यक्ष से शब्दानित्यत्वानुमान बाधित है। तो ऐसा नही कह सकते, क्योकि प्रत्यभिज्ञा, जाति-विषयक है ? या व्यक्ति-विषयक ?—इस प्रकार सन्दिह्यमान होने से प्रत्यभिज्ञा बाधक नहीं हो सकती । 'विवादास्पद काल, वेदाध्ययन-युक्त है, काल होने से वर्तमान काल के समान'—यह सत्प्रतिपक्ष भी युक्त नहीं, क्योकि यहाँ कौन काल पक्ष है—वेद-निर्माण का पूर्व काल ? या उसका उत्तर काल ? या वेद-निर्माण काल ? तीनों पक्षों में मीमांसक के मत से धर्मी असिद्ध है। प्रथम पक्ष में "विवादाध्यासित कालो वेदाध्ययन-

नुमानोत्थानादाभाससमानयोगक्षेमता चानुमानस्य । नन्वशरीरस्येश्वरस्य ताल्वादिविवृति-रूपवर्णोच्चारणासम्भवात्कथं तत्प्रणीतत्वं वेदस्येति चेन्, नैवम्, स्वभावतोऽशरीरस्यापि परमेश्वरस्य भक्तानुग्रहार्थं लीलाविग्रहग्रहणोपपत्तेः । तदेवं वेदपौरुषेयतानुमानस्य निरस्त-समस्तदूषणतया वेदाः पौरुषेया इति प्राप्तम् ।

अत्र समाधिः—श्रुतीनामीश्वराज्जन्म केवलं श्रुतिषु श्रुतम् ।
मानान्तरोपलब्धेऽर्थे रचना तु न मीयते ॥ २७ ॥ इति ।

किमिदं पौरुषेयत्वं नाम, यत्र श्रुतयः स्मृतयश्च प्रमाणत्वेनोदाहृताः ? किं पुरुषाधीनोत्पत्ति-मत्त्वं वेदानां पौरुषेयत्वम् ? उत प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वम् ? तत्राद्योऽङ्गीक्रियते, आकाशवन्नित्यत्वेन सर्वगतत्वेन कालतो देशतश्च क्रमशून्यानां वर्णानामनित्योच्चारणप्रतिपत्ति-

---

स्यादिति तर्कविरुद्धं वेदकर्तृत्वानुमानमिति शङ्कते—**नन्विति** । इष्टप्रसङ्गतया परिहरति—**नैवमिति** । लीलया विग्रहस्य ग्रहणं लीलाविग्रहग्रहणम् ।

सिद्धान्तयति—**अत्र समाधिरिति** । समाधिः समाधानम् । अभिधीयत इति शेषः । अत्र किं पुरुषादुत्पन्नत्वमात्रं पौरुषेयत्वं विवक्षितम्, यथास्मदादिभिरहरहः उच्चार्यमाणो वेदः ? किं वा प्रमाणे-नार्थमुपलभ्य तत्प्रकाशनाय विरचितत्वात्मकत्वं वेदानां पौरुषेयत्वम्, यथास्मदादिभिरेव बध्यमानग्रन्थ-पद्धतिः ? आद्ये त्वविवादः । द्वितीयेऽपि किमागमबलात् तत्साधनम् ? अनुमानाद्वा ? नाद्य इत्याह—**श्रुतीति श्लोकेन** । श्रुतिष्वीश्वरात् श्रुतीनां केवलं जन्म श्रुतम्, न तु पुनरुपलभ्यविरचनम्, तत्पुनरनुमीयते, तच्चायुक्तम्, वक्तव्यदोषादित्यर्थः । विषयविवेचनपूर्वकं श्लोकं व्याचष्टे—**किमित्यादिना** । ननु नित्यस्य कथं पौरुषेयत्वमिमं विरुद्धमाद्याङ्गीकारमेव विवृणोति—**आकाशवदित्यादिना** । क्रमविशेषवान् शब्द-राशिर्हि वेदः, क्रमश्च कालतो देशतो वा नियतः, स चोभयविधोऽप्यत्र न सम्भवति, वक्ष्यमाणनित्यत्व-प्रमाणबलान्नित्यानां विभूनां च शब्दानां कालतो देशतो वा क्रमासम्भवात् । प्रतीयते च, तेनाभिव्यञ्ज-कोच्चारणप्रतिपत्त्योरन्यतरक्रमोपरागात्क्रमवत्त्वं वक्तव्यम्, तत्रोच्चारणप्रतिपत्ती अनित्ये, इति तत्क्रमविशिष्ट शब्दराशिरपि तदुपाधावनित्य एवेति इष्टमेवेदृशं पौरुषेयत्वमित्यर्थः । ननु प्रतिपुरुषं क्रमद्वाराऽनित्यत्वे

---

युक्तः"—इस प्रतिज्ञावाक्य का विरोध, अधिक दोष है। कालिदासादि-प्रणीत वाक्यों के अध्ययन में भी ( विवादाध्यासित कालः कालिदासवाक्याध्ययनयुक्तः कालत्वात् सम्प्रतिपन्नकालवत् ) ऐसा ही अनुमान किया जा सकता है, अतः इस अनुमानाभास की समानता भी आपके अनुमान में है। 'ईश्वर के शरीर नहीं, कण्ठ तालु-आदि स्थान नहीं, अतः शब्दों का उच्चारण ही सम्भव नहीं, फिर तो ईश्वर वेदों का प्रणयन कैसे करेगा ?'—यह सन्देह नहीं करना चाहिए, क्योंकि स्वभावतः शरीर-रहित ईश्वर, भक्तों पर अनुग्रह करने के लिए लीलाविग्रह धारण कर लेता है। इस प्रकार वेदगत पौरुषेयत्व अनुमान के सर्वथा निर्दुष्ट होने से वेद पौरुषेय ही हैं।

उत्तर पक्ष—'श्रुतियों में केवल इतना ही श्रुत है कि ईश्वर से वेदों का जन्म हुआ। प्रमा-णान्तर से पदार्थों का ज्ञान करके किसी ने वेदों की रचना की—यह अनुमान नहीं किया जा सकता।' यह पौरुषेयत्व क्या है, जिसके लिए श्रुतियाँ और स्मृतियाँ प्रमाणरूप से उद्धृत की गई हैं ? क्या पुरुष के अधीन उत्पत्तिमत्त्व ? या प्रमाणान्तर से जाने हुए पदार्थों का प्रकाश करने के लिए पद-रचना ? इनमें प्रथम पक्ष तो हम मानते ही हैं—आकाश के समान ही शब्द नित्य और सर्वगत है, अतः उनमें दैशिक या कालिक किसी प्रकार का क्रम नहीं बन सकता। हाँ, प्रतीयमान क्रम, या तो शब्दों के उच्चारण में है या शब्दों के ज्ञान में। क्रमिक व्यञ्जकों से शब्द की अभिव्यक्तिमात्र होती

क्रमविशिष्टानां पूर्वपूर्वक्रमानुस्मृतिनिमित्ततत्तत्सदृशोत्तरोत्तरक्रमवतां वेदशब्दवाच्याना सांप्रतमपि पुरुषाधीनोत्पत्तिमत्तया सर्गसमयेऽपि श्रुत्या तथात्वस्य प्रतिपादयितुमुचितत्वात्। द्वितीयस्तु न, प्रमाणान्तरेणार्थमुपलभ्य तत्रेश्वरेण वेदा विरचिता इति श्रुतिभिरप्रतिपादितत्वात्। नच पुरुषाधीनोत्पत्तिमत्त्वश्रवणान्यथानुपपत्त्यैव प्रमाणान्तरेणार्थमुपलभ्य विरचितत्व सिध्येत्, इदानीमस्मदादिभिरुच्चार्यमाणवेदवाक्येषु मालतीमाधवादिवाक्येषु च व्यभिचारात्। एतेन—प्रमाणभूतवाक्यस्य रचनान्यथानुपपत्त्या मानान्तरोपलब्धेऽर्थे विरचितत्वकल्पनापि प्रत्युक्ता, अस्मदादिभिरुच्चायमाणमन्वादिवाक्येषु व्यभिचारात्। किं च यदि विरचितत्वान्यथानुपपत्तिर्मानान्तरोपलब्धेऽर्थे रचना कल्पयेत्, हन्तैवम् 'ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायो. सामवेद आदित्या'दिति वेदानामग्न्यादिभ्यो जन्मश्रवणात् तत्तत्कर्तृकतया ईश्वरकर्तृकत्वनियमो न स्यात्। अथ 'तस्माद्यज्ञात्सर्वहुत ऋच सामानि जज्ञिरे' इत्यादिवाक्य वेदानामीश्वरकर्तृकत्वाधिगमादधिष्ठातृदेवतापर तत्तद्वाक्यमिति कल्प्येत, तर्हि 'ब्रह्म स्वयभु, वाचा विरूप नित्यया, अनादिनिधना नित्या वागुत्सृष्टा' इत्यादिश्रुतिस्मृतिशतेभ्योऽपि वेदाना नित्यत्वाव-

कथ स एवाय वेद इति प्रत्यभिज्ञानमिति ? तत्राह—**पूर्वेति**। क्रमस्येद प्रथमतया पोरुषेयत्वभङ्गमाशङ्क्य चेदमुत्तरम्—**साप्रतमपीति**। सृष्टिश्रुत्याप्येतदविरुद्धमेव प्रतिपादयितुमुचितमित्यर्थ। एव पूर्वार्धं व्याख्यायोत्तरार्धं व्याचष्टे—**द्वितीय इत्यादिना**। अथर्शन हेतुमाह—**प्रमाणेति**। स्यादेतत्—यद्यपि न साक्षात्श्रुताऽयमर्थ, तथापि श्रुतोत्पत्त्यनुपपत्त्या कल्प्यत पोरुषेयत्वम्, सोऽपि हि भवति कश्चित् श्रुतो व्यापारः। यथाहुः—'अर्थाद्वा कल्पनैकदेशत्वा' दिति। तत्रैव वक्तव्यम्—किं पुरुषाधीनोत्पत्त्यनुपपत्त्या कल्प्यते? उत प्रमाणभूतवाक्यरचनान्यथानुपपत्त्या? नाद्य इत्याह—**न चेति**। प्रागुक्तनीत्या वेदवाक्यानि काव्यवाक्यानि च उच्चारणसमये सृज्यन्ते, तत्र प्रमाणान्तरेणोपलभ्यार्थरचनव्यतिरेकेण पुरुषाधीनोत्पत्तिमत्त्वमुपपद्यमान न वेदेष्वपि तत्कल्पयतीत्यर्थः। द्वितीये पक्षेऽपीदमेव दूषणमतिदिशति—**एतेनेति**। किंच भवतैवायमङ्गीकर्तव्योऽर्थ, इत्युत्पत्तिश्रुतेरन्यथासिद्धौ प्रतिबन्दीमाह—**किंचेत्यादिना**। अथ श्रुत्यन्तरवशादन्यथा नेतव्य तदिदमिति, तदस्मन्मतेऽपि समानमित्याह—**अथेत्यादिना**। ब्रह्म वेद। पूर्वपक्षा-

है। अत पूर्व-पूर्व क्रमानुस्मरण के अनुसार उत्तरोत्तर क्रमिक उच्चारणो से आज भी वेदो की अभिव्यक्ति पुरुषाधीन पाई जाती है। सर्गारम्भ-समय भी इस प्रकार का ही पौरुषेयत्व श्रुतियो से प्रतिपादित है। द्वितीय पक्ष युक्त नही, क्योकि प्रमाणान्तर से अर्थों को जानकर ईश्वर ने वेदो की रचना की—यह श्रुतियो मे प्रतिपादित नही। पुरुषाधीन उत्पत्तिमत्त्व के श्रवण की अन्यथानुपपत्ति से वेदो मे विरचितत्व की कल्पना नही कर सकते, क्योकि जैसे प्रमाणान्तर से अर्थों का ज्ञान करके पद-रचना न करते हुए भी हमलोग मालतीमाधवादि काव्य-वाक्यो का उच्चारण करते है, ठीक वैसे ही वेद-वाक्यो का उच्चारण हो सकता है, यहाँ रचितत्व-कल्पना की क्या आवश्यकता? इसी प्रकार प्रमाणभूत वाक्य के उच्चारण की अन्यथानुपपत्ति से भी, प्रमाणान्तर ज्ञात पदार्थो का प्रकाश करने के लिए वेदो मे रचितत्व की कल्पना नही हो सकती, क्योकि बिना रचे ही हमलोग प्रमाणभूत मन्वादि-वाक्यो का उच्चारण कर लेते है। यदि बिना रचना के वेदो का उच्चारण नही हो सकता, तब तो "ऋग्वेद एवाग्नेरजायत, यजुर्वेदो वायो, सामवेद आदित्यात्"—इन श्रुतियो मे वेदो का अग्न्यादि से जन्म श्रुत है, अत. अग्न्यादि ही वेद के कर्त्ता होगे, 'वेद ईश्वर की ही कृति है'—यह आपका नियम भङ्ग हो जाता है। यदि कहा जाय कि "तस्मात् यज्ञात्"—इस श्रुति से वेदो मे ईश्वरकर्तृकत्व का प्रतिपादन है, अत श्रुत्यन्तर मे 'अग्न्यादि' पदो से केवल अधिष्ठातृदेवता का प्रकाशन है। तो यह नही कह सकते, क्योकि 'ब्रह्म स्वयभु" (वेद स्वय प्रकट हुआ), "वाचा विरूप! नित्यया",–आदि श्रुतियो तथा "अनादिनिधना नित्या वागुत्सृष्टा"—आदि स्मृतियो से वेदो

गमात्। तस्माद्यज्ञादित्यादिवाक्यं सम्प्रदायप्रवर्तकत्वपरमिति कल्पना न प्रकृतेऽपि दण्डवारिता। नन्वेषामन्यपरत्वान्नैतेभ्यो नित्यत्वसिद्धिरिति चेत् मैवम्, देवताधिकरणन्यायेन प्रमाणान्तरप्राप्तिविरोधयोरसतोन्यपराणामपि स्वार्थे प्रामाण्योपपत्ते।

एतेन वाक्यत्वादिति पौरुषेयत्वानुमानपि परास्तम्। पुरुषप्रणीतत्वमात्रसाध्ये सिद्धसाधनत्वात्। प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वसाधने च मालतीमाधवादिष्वनैकान्तिकत्वात्। तथा च प्रमाणत्वे सति वाक्यत्वादाप्तप्रणीतत्वानुमानेऽपि सिद्धसाधनता। आप्तेनोच्चार्य-

शयमनुवदति—नन्वेषामिति। देवताधिकरणन्यायेनेति। द्वे वा हि वाक्यार्थो द्वारभूत', प्रधान चेति। तत्र प्रधाने तात्पर्य द्वारे त्वतत्परमपि प्रमाणम्। अबाधितासदिग्धानधिगतार्थबोधकत्व हि प्रमाणत्वम्। न चान्यपरैरपि मन्त्रादिभिः प्रतीयमानो वज्रहस्तेन्द्रादिलक्षणोऽर्थ सदिग्धः, नापि विपर्यस्त, बाधाभावात्, प्रमाणान्तरायोग्यत्वाच्चानधिगत इति प्रमाणमेव तस्मिन्नपि मन्त्रादय। न चायमेदे वाक्यभेदप्रसक्ति, प्रधानार्थस्य भेदाभावात्, अवान्तरवाक्यस्येष्टत्वाच्च। न चानत्परत्वादप्रामाण्यम् अतत्परस्याप्यर्थवादस्य द्वारभूतार्थे प्रामाण्यस्वीकारात्। इतरथा तद्द्वारा तत्प्रधानेऽपि तत्प्रामाण्याभावाद् 'गुणवादस्तु' 'तत्सिद्धि.' इत्यादि सूत्राणामनारम्भप्रसङ्गात्। विशिष्टविधौ च तात्पर्याविषयेऽपि विशेषणे प्रामाण्यस्यावश्यम्वीकर्तव्यत्वात्। तत्रापि विशेषणांशे तत्पर विध्यन्तरमुन्नीयते इति चेत्, किं तदुन्नायक विशिष्टविधानमेवेति चेत्, हन्त! परस्पराश्रयप्रसङ्गात्, विशिष्टविधिप्रवृत्तौ च विध्यन्तरोन्नयनं विध्यन्तरप्रवृत्तौ च विशिष्टविधानमिति। न च प्रमाणान्तरगोचरत्व विशेषणस्य सर्वत्र सभवति, वारवन्तीयादौ तदभावात्, तस्मादतत्परमपि प्रमाणान्तरप्राप्तिविरोधयोरभावे प्रमाणमेवेति सोऽय देवताधिकरणन्यायसार। तेनासामपि श्रुतीना वेदनित्यत्वे प्रामाण्यमस्त्येवेत्यर्थः।

ननु नेद पौरुषेयत्व श्रुत श्रुतसामार्थ्यसिद्ध वेति अस्माभि स्वीक्रियते, किंत्वनुमानबलादिति, तत्राह—एतेनेति। एतद्विशदयति—पुरुषेति। मालतीमाधवादिष्विति। यद्यपि प्रथम कविकृतवाक्येषु साध्याभावान्न व्यभिचार., तथाप्यस्मदुच्चार्यमाणमालतीमाधवादिवाक्ये व्यभिचार। नहि तत् तद्वाक्यम्, तस्यान्यत्वादित्यर्थ। कविकृतेऽप्यात्प्रेक्षिकचित्रकथापरेषु वाक्येषु व्यभिचार इत्यपि द्रष्टव्यम्। द्वितीयानुमानेऽपि सिद्धसाधनतामाह—तथेति। अत्रापि किमाप्तेनोच्चर्यमाणत्व पौरुषेयत्वम्? किं वोपलभ्यविरचनम्? प्रथमं सिद्धसाधनता विशदयति—आप्तेनेति। स्यादेतत्—द्वितीय एव न पक्षः सिषाधयिषित। न चेदानीमुच्चर्यमाणवेदवाक्यैरनैकान्तिकता, तेषामपि पक्षतुल्यत्वेनान्त. परमेश्वरविरचितत्वस्येष्टत्वादिति, तत्राह—

में नित्यत्व प्रमाणित होता है। "तस्माद् यज्ञात्"—यह वाक्य केवल सम्प्रदाय-प्रवर्तक ( वेद के अध्यनाध्यापन की परम्परा के प्रवर्तक ) का निर्देश कर रहा है। यह जो शङ्का की थी कि "वाचा विरूप ! नित्यया"—आदि श्रुतियों का अन्य (अग्नि-स्तुति-प्रेरणा) अर्थ में ही तात्पर्य है, उनके बल पर वेद में नित्यत्व सिद्ध नहीं हो सकता। वह शङ्का युक्त नहीं, क्योंकि देवताधिकरण (वे० सू० १।३।३३) में सिद्ध कर दिया गया है कि अन्यपरक वाक्यों का उस अपने अमुख्य अर्थ से भी प्रामाण्य माना जाता है जिस अर्थ का प्रमाणान्तर से ज्ञान या बाध न हो।

इसी प्रकार 'वाक्यत्वात्'– यह पौरुषेयत्वानुमान भी परास्त हो जाता है, क्योंकि 'पुरुषप्रणीतत्व'—इतना ही साध्य रखने पर सिद्ध-साधन होता है। 'प्रमाणान्तरेणार्थमुपलभ्य विरचितत्व'—साध्य बनाने पर मालतीमाधवादि-वाक्यों में व्यभिचार होता है। इसी प्रकार 'प्रमाणत्वे सति वाक्यत्वात्'—इस हेतु से आप्त-प्रणीतत्व साधन करने पर भी सिद्ध-साधनता है, क्योंकि आप्तोच्चरितत्व रूप आप्त-प्रणीतत्व, वेद में अपौरुषेय-वादी भी मानते हैं। प्रमाणान्तर से अर्थ-ज्ञान पुर सर विरचि-

माणतया तत्प्रणीतत्वस्यापौरुषेयवादिभिरप्यभ्युपगमात् । प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वानुमाने तु हेतोरन्यथासिद्धिः । अस्मदादिभिरुच्चार्यमाणेदानीतनवेदवाक्यानामिव सर्गकालीनानामपि तेषामीश्वरेणोच्चार्यत्वमात्रेणापि प्रमाणवाक्यत्वोपपत्तौ प्रमाणान्तराधिगतिपूर्वकविरचितत्वस्यानुमातुमशक्यत्वात्, तस्य च सर्वज्ञत्वादतीतकल्पान्तरगतवेदापरोक्ष्यसंभवात् । अविग्रहस्यापि तस्य भक्तानुकम्पितया लीलाविग्रहग्रहणेन तदुच्चारणोपपत्तेश्च । एतेन—सर्गकालीनाध्ययनस्य पूर्वपूर्ववेदाध्ययनपुरःसरत्वमपि समर्थनीयम् । न चाश्रयासिद्धिः, वेदान्तिभिः सर्गाङ्गीकारात् । न च भारताध्ययनस्य तथात्वप्रसङ्गेनाभाससमानयोगक्षेमता, तत्र दृढतरकर्तृस्मरणेन बाधात् । न चेहापि कर्तृश्रुत्या बाधः, तस्याः संप्रदायप्रवर्तकत्वप-

प्रमाणेति । अन्यथासिद्धिमेव दर्शयति—अस्मदादीति । यदि हि विरचनं प्रमाणान्तरेणापलभ्यविरचनेन व्याप्तम्, तदास्मदादावपि तथा स्यात्, नचास्ति, ततोऽवगम्यते—नूनमनयोः सम्बन्धोऽन्यप्रयुक्त इति भावः । स्यादेतत्—कल्पाङ्गीकारे निर्लेपं प्रलीनस्य चिरकालातीतस्य संस्कारप्रमोषात् कथमीश्वरेणापि शक्यः पूर्ववद्वेद उच्चारयितुमिति ? तत्राह—तस्य चेति । न तावन्निर्लेपः प्रलयः, तत्संस्काररञ्जितमायोपबृंहितपरमेश्वरस्य मूलकारणस्य वा विद्यमानत्वात् । अत एव तत्संस्कारवशात् तत्सदृशक्रमवद्वेदोच्चारणमपि सम्भवतीत्यर्थः । तथापि ताल्वादिकरणरहितस्य कथं कर्तृत्वं सम्प्रदायप्रवर्तकत्वं चेति ? तत्राह—अविग्रहस्यापीति । अभ्युपगम्येदमुच्यते, वस्तुतस्त्वीश्वरस्य शरीरादिनोपदेष्टृत्वमेव नास्ति, कल्पादिभुवामतीतकल्पानुष्ठितविशिष्टज्ञानपरम्परापरितुष्टपरमेश्वरानुग्रहवशान्निरतिशयज्ञानसमृद्धानां हिरण्यगर्भप्रभृतीनां बुद्धौ यो वेदानामाविर्भावः, स खलु परमेश्वरस्य वेदोपदेष्टृत्वं नाम । इदमेव च यो वै वेदांश्चेति श्रुत्याप्युच्यते, न तत्र शरीरेण किञ्चित्कृत्यमिति । यत्तु वेदाध्ययनस्यानिदम्प्रथमतायामनुमानमुद्भाव्य दूषितं पूर्ववादिना, तदपि संस्काराप्रमोषादित्यादिना समर्थितमित्याह—एतेनेति । यत्तु तेनाश्रयासिद्धिरित्युक्तम्, तत्र भवतु मीमांसकप्रत्ययदोषः, नास्मान्प्रतीति परिहरति—न चेति । तन्मतेऽपि यादृगहोरात्रादिपरिगणनाविशिष्टस्य सर्गकालत्वं पराङ्गीकृतम्, तत्काल शक्यः पक्षीकर्तुमिति द्रष्टव्यम् । आभाससमानयोगक्षेमतां परिहरति—न चेति । ननूक्तमत्रापि कर्तृप्रतिपादकश्रुतिस्मृती विद्येते इति तत्राह—न चेहापीति । अथ किमित्युपलभ्यविरचयिता कर्तैवाभिः श्रुतिभिः न स्वीक्रियते ? तत्राह—

तत्व' का अनुमान करने पर हेतु अन्यथासिद्ध हो जाता है । अर्थात् जैसे हम लोग इस समय वेद का उच्चारण करते हैं, उसी प्रकार सृष्टयारम्भ काल में ईश्वर ने उच्चारण किया था, एतावता वेदों में प्रमाणवाक्यत्व बन जाता है, प्रमाणान्तराधिगमपूर्वक विरचितत्व का अनुमान नहीं किया जा सकता । ईश्वर सर्वज्ञ है, अतः अतीत कल्प में प्रचलित वेदों का अपरोक्ष ज्ञान कर सकता है । स्वभावत अशरीर होने पर भी ईश्वर भक्तानुकम्पा से लीलाविग्रह धारण कर, वेदों का उच्चारण भी कर सकता है । इसीलिए सर्गकालीन वेदाध्ययन में पूर्वपूर्वाध्ययनपूर्वकता का भी समर्थन हो जाता है ( अर्थात् उक्त अनुमान का आकार रखेंगे—'सर्गकालीनवेदाध्ययनं पूर्ववेदाध्ययनपूर्वकं वेदाध्ययनत्वाद् वर्तमानाध्ययनवत् ।' इस अनुमान से वेदाध्ययन में अनादित्व सिद्ध होता है । अनादित्व की सिद्धि होने से ही अपौरुषेयत्व की सिद्धि हो जाती है । महामुनि गौतम ने इसे अधिकरण सिद्धान्त माना है—"यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः"—न्या० सू० १।१।३० । मीमांसक, सर्ग नहीं मानते हैं, अतः उनके मत से यहाँ आश्रयासिद्धि दोष होता था, किन्तु अब ) वह आश्रयासिद्धि नहीं, क्योंकि वेदान्ती सर्ग मानते हैं । यह जो कहा था "सर्वं भारताध्ययनं गुर्वध्ययनपूर्वकं भारताध्ययनत्वात् साम्प्रतिकाध्ययनवत्"—इस अनुमानाभास की समानता उक्त अनुमान में है । वह भी संगत नहीं, क्योंकि यह अनुमान दृढतर कर्तृस्मरण से बाधित है और हमारे वेदाध्ययन-

रतयाप्युपपत्ते, अन्यथा नित्यत्वप्रतिपादकवाक्यानामनवकाशत्वप्रसङ्गात्, भारतस्य नित्यत्वप्रतिपादकप्रमाणाभावाच्च।

न च वेदानामनाप्तप्रणीतत्वादाप्तप्रणीतत्वमनुमातुं युक्तम्, आत्माकाशादौ व्यभिचारात्। अथ शब्दत्वे सतीति विशेषणाददोषः, मैवम्, आप्तप्रणीततामात्रस्य पूर्वोक्तन्यायेन वेदेऽप्यङ्गीकारात्। न चैव सति पाषण्डाद्यागमानामपौरुषेयत्वम्, मानान्तरेणार्थमुपलभ्य तत्तत्पुरुषविरचितत्वस्य सौगतादिभिः स्वयमेवाङ्गीकारात्प्रसिद्धेश्च। न च सामान्यवत्त्वे

---

अन्यथेति। नित्यत्वं चेद पुरुषास्वातन्त्र्यम्, न पुनः सर्वथैव, निःश्वसितमित्यादिश्रुतिविरोधप्रसङ्गात्। उक्तं च वृद्धैः—'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता' इति। स्यान्मतम्—वयमपि तावद्वेदमुच्चारणद्वारेण विरचयामः, परमेश्वरोऽपि चेत्तथैव रचयति, नतु पूर्वक्रममन्यथयति, नाप्युपलभ्यार्थं विरचयति, कस्तर्हि विशेषः परमेश्वरस्य मादृशेभ्यः? येन निःश्वसितामित्यादिश्रुतयः परमेश्वरमेव कर्तारमावेदयन्तीति, उच्यते, उपादानत्वात्स खलु परमेश्वरः प्रतिसञ्चरसमये समस्तमेव जगत्संहरन् वियदादिवदेव वेदाद्यात्मकमपि शब्दराशिं संहरति, महासर्गसमये च तत्तद्वासनावासिताचिन्त्यशक्तिराशिमहामायासहायमापन्नः शब्दाकारेण विवर्तते, तदनु च पूर्वक्रमसदृशक्रमवच्छब्दराशिरूपवेदाकारेण विवर्तते, सर्गादिषु वा हिरण्यगर्भप्रभृतीनां च तमुपदिशतीति शब्दकर्तृत्वं सम्प्रदायप्रवर्तकत्वं चेश्वरस्यैवेत्युच्यते। यद्यपि सर्वज्ञस्येश्वरस्य वेदार्थविषयमपि ज्ञानमस्ति, तथापि न तस्य वेदनिर्माणे कारणभावः, पूर्वपूर्वक्रमानुसरणमात्रेण तत्सदृशक्रमनिर्माणक्षमत्वात्। अस्मदादीनामिवेदानीतनभारतादिक्रमनिर्माणे, तेन नापौरुषेयत्वक्षतिः। नन्वेवं भारतस्यापि सम्प्रदायप्रवर्तयितैव व्यासः, न तु कर्तेति तस्याप्यपौरुषेयत्वं स्यादिति तत्राह—**भारतस्येति।**

यच्चानाप्तप्रणीतत्वे सत्याप्तप्रणीतत्वमेवायाति गत्यन्तराभावादित्युक्तम्, तत्र किमनाप्तप्रणीतत्वमात्रेणाप्तप्रणीतत्वमात्रमनुमीयते? शब्दत्वविशेषितेन वा? नाद्य इत्याह—**न चेति।** द्वितीयं शङ्कते—**अथेति।** तत्रापि किमाप्तप्रणीतत्वमात्रमनुमीयते? उपलभ्य विरचनं वा? आद्ये प्राह—**मैवमिति।** द्वितीये तु पूर्वोक्तमेव दूषणमिति भावः। यत्तु पाषण्डाद्यागमानामप्यपौरुषेयत्वमेवं सति स्यादित्युक्तम्, तत्राह—**न चेति।** अथ तदङ्गीकारे भ्रान्तो नैयायिकादीनामिव वेदपौरुषेयत्वे इति तत्राह—**प्रसिद्धेश्चेति।**

---

पक्षक अनुमान में किसी प्रकार का बाध नहीं। "यो वै वेदांश्च प्रहिणोति"—आदि श्रुतियाँ वेद-कर्ता का प्रकाश नहीं करतीं, अपितु सम्प्रदाय-प्रवर्तक का ही प्रतिपादन करती हैं। अन्यथा नित्यत्व-प्रतिपादक वाक्यों के लिए कोई अवकाश न मिलेगा। महाभारत में नित्यत्व-प्रतिपादक कोई प्रमाण नहीं, अतः वहाँ महामुनि व्यास को महाभारत का कर्ता ही मानना होगा, सम्प्रदाय-प्रवर्तक मात्र नहीं। वेदों में 'अनाप्तप्रणीतत्व' हेतु से आप्त-प्रणीतत्व का अनुमान भी नहीं कर सकते, क्योंकि आत्मा एवं आकाशादि में हेतु व्यभिचारी है ('आप्त-प्रणीत' साध्य के न रहने पर भी अनाप्त-प्रणीतत्व का अभाव-रूप हेतु रहता है)। हेतु का 'शब्दत्वे सति'—यह विशेषण लगाने पर उक्त व्यभिचार तो हट जाता है, किन्तु सिद्धसाधनादि दोष बने ही रहते हैं, क्योंकि आप्तोच्चरितत्वरूप आप्त-प्रणयन वेदों में माना ही जाता है। यह जो कहा था कि इस प्रकार पाखण्डियों के आगम भी नित्य सिद्ध हो जायँगे। वह कहना नितान्त असम्बद्ध है, क्योंकि बौद्धादि स्वयं मुक्तकण्ठ से यह स्वीकार करते हैं कि प्रमाणान्तर से जाने हुए पदार्थों का प्रकाश करने के लिए ही विशिष्ट व्यक्तियों ने शास्त्रों का प्रणयन किया है। प्रसिद्धि भी ऐसी ही है। यह जो 'सामान्यवत्त्वे सत्यस्मदादिबहिरिन्द्रियप्रत्यक्षत्व' हेतु से वर्णों में अनित्यत्व का अनुमान किया था। वह उचित नहीं, क्योंकि भाट्ट मत से काल, आकाशादि

सत्यस्मदादिबहिरिन्द्रियप्रत्यक्षतया वर्णानां कृतकत्वानुमानम्, अस्मदादिबहिरिन्द्रियप्रत्यक्षस्य कालाकाशादेर्नित्यत्वेन भाट्ट प्रत्यनैकान्त्यात्, सत्प्रतिपक्षत्वाच्च । श्रोत्र नित्यद्रव्यग्राहक निरवयवेन्द्रियत्वात् मनोवदिति भाट्टमतेन प्रयोगसंभवात् । न च श्रोत्रं न नित्यद्रव्यग्राहकम्, अनित्यभूतविशेषगुणग्राहक वा, बहिरिन्द्रियत्वादिन्द्रियत्वाद्वा चक्षुर्वदिति प्रत्यनुमानबाध, प्रथमानुमाने नयनस्य नित्यगगनादिग्राहकत्वेन दृष्टान्तस्य साध्यवैकल्यात्, द्वितीये च ध्वनिग्राहकतया सिद्धसाधनत्वात् । व्यक्तिभेदासिद्धौ च 'स एवाय गकार' इति प्रत्यभिज्ञाया

ननु सर्वमेतच्छब्दानित्यत्व सति स्यात्तदेव तु नास्ति, अनुमानाच्छब्दानित्यत्वसाधनान्नित्यत्वप्रमाणदूषणाच्चेति, तत्राह—**न चेति** । अत्र तावदेकदेशिमतेन दूषणमाह—**अस्मदादीति** । आकाशमस्मदादिप्रत्यक्ष प्रदेशवृत्तिविशेषगुणवत्त्वात् आत्मवत्, दिक्कालाकाशानि अस्मदादिप्रत्यक्षाणि विभुत्वादात्मवत्, श्रोत्र विभुग्राहकमिन्द्रियत्वान्मनोवदित्यादिना च तेषा प्रत्यक्षत्वसिद्धे. । न मबन्धासमवो बाध, अजसयोगसभवात् । वक्ष्यते च तत्र प्रमाण द्वितीयपरिच्छेदे । तन्मतेनैव सत्प्रतिपक्षतामप्याह—**सदिति** । जातौ सिद्धसाधनतानिवृत्त्यै द्रव्यपदम्, घ्राणे रूपे वानेकान्त्यनिवृत्त्यै हेतौ पदद्वयम् । प्रत्यनुमानविरोध निराचष्टे—**न चेति** । अनित्यो यो भूतविशेषगुणस्तस्येत्यर्थ । वेदान्तिप्रभाकरयोर्मते सिद्धसाधनतापरिहाराय अनित्यग्रहणम् । शब्दनिष्ठद्वित्वादिना भाट्ट प्रत्यर्थान्तरतानिवृत्त्यै विशेषग्रहणम् । नभोगुणत्वार्थं भूतपदम् । मानसप्रत्यक्षात्मवादिना मनसि व्यभिचारवारणाय बहिरिन्द्रियेत्युक्तम् । अत्रापि भाट्टमतेन दूषणमाह—**प्रथमेति** । नैयायिकादीना च योगीन्द्रियैर्व्यभिचारः । अस्मदादिविशेषण च परस्य व्यर्थमिति द्रष्टव्यम् । तावतापि तव मते किं दूषणमस्य ? इत्याशङ्क्य प्रत्यभिज्ञाबाध दर्शयितु तस्या अपि जातिविषयत्वेनोक्तामन्यथासिद्धि परिहरति—**व्यक्तीति** । अथ कथ व्यक्तिभेदासिद्धिर्यावतो-

नित्य पदार्थों में व्यभिचार है । [ भाट्ट मत में आकाश, काल, दिशा—तीनों को प्रत्यक्ष माना जाता है, जैसा कि नारायण भट्ट ने कहा है—

'व्योमकालदिशामादौ प्रत्यक्षत्वं समर्थ्यते ।
अनिष्ट भट्टपादोक्तिमाधुर्यानभिलाषिणाम् ॥' ( मानमेयोदय० )

अनुमान प्रयोग भी किया है—'दिक्कालाकाशा प्रत्यक्षा, अमनस्त्वे सति विभुत्वादात्मवत्' । पार्थसारथि मिश्र ने भी कहा है—"यद्यपि न स्वातन्त्र्येण दिश श्रोत्रग्राह्यत्वम्, तथापि रवे गृह्यमाणे तद्विशेषणतया दिगपि श्रोत्रेण गृह्यते इति दृष्टत्वादङ्गीक्रियते कालवत्"—शा दी तर्क पृ १३९ । अत. आकाशादि मे 'कृतकत्व' न रहने पर 'अस्मदादिबाह्येन्द्रियप्रत्यक्षत्व रह जाता है, इसलिए व्यभिचारी है ] । एव उक्तानुमान मे सत्प्रतिपक्षता भी है–'श्रोत्र, नित्यद्रव्य का ग्राहक है, निरवयवेन्द्रिय होने के कारण, जैसे–मन'—यह प्रयोग भाट्टमत से किया जाता है । यदि कहा जाय कि इस अनुमान का भी प्रत्यनुमान है—'श्रोत्र, नित्य द्रव्य का ग्राहक नही, बहिरिन्द्रिय होने से, जैसे चक्षु' अथवा 'श्रोत्र, भूतो के अनित्य विशेष गुण का ग्राहक होता है, इन्द्रिय होने से जैसे—चक्षु' । तो यह नही कह सकते, क्योकि भाट्ट मत मे चक्षु, आकाशादि नित्य द्रव्य का ग्राहक माना जाता है, अत प्रथमानुमान का दृष्टान्त साध्य-शून्य है । द्वितीय अनुमान में सिद्ध-साधनता दोष है—भाट्ट के मत से ध्वनिरुप अनित्य विशेष गुण का ग्राहक श्रोत्र माना ही जाता है । ( 'स एवाय गकार'—इस प्रत्यभिज्ञा को जो जातिविषयक मान लिया था । वह मानना भी युक्त नही, क्योकि जहाँ व्यक्तियो में भेद प्रमाणित होता है, वहाँ ही प्रत्यभिज्ञा को जातिविषयक माना जाता है । किन्तु प्रकृत मे ) वर्ण व्यक्तियो का भेद प्रमाणित नही, अत' 'स एवाय गकार'—इस प्रत्यभिज्ञा को जातिविषयक न मानकर व्यक्तिविषयक ही मानना होगा । फिर शाब्दाभेदबोधक उस प्रत्यभिज्ञा

जातिविषयत्वकल्पनानुपपत्ते, तद्विरोधश्च अनित्यत्वानुमाने दुर्वार। न च 'द्रुतो गकारो विलम्बितो गकार' इति विरुद्धधर्मसंसर्गित्वाद् गकारव्यक्तिभेदसिद्धि, तस्या प्रतीतेर्ध्वनि-विषयतया वर्णविषयत्वाभावेन प्रामाणिकविरुद्धधर्मसंसर्गस्यासिद्धे। प्रातीतिकस्य च तस्य मणिकृपाणादिष्विवाननस्य भेदासाधकत्वात्। वेदान्तवादिभि संसर्गस्य तद्विशेषितकालस्य

---

दात्तानुदात्तादितारतम्यादिविरुद्धधर्माध्यासाद्भेद एव गकारादेरवगम्यते इति? तत्राह—न चेति। अत्र किं प्रामाणिकविरुद्धधर्माध्यासाद्भेद साध्यते? प्रातीतिकाद्वा? आद्येऽसिद्धिमाह—तस्या प्रतीतेरिति। यदि व्यक्तिभेद. स्यात्तदा द्वौ गकाराविति स्यात्, न पुनर्द्विर्ग उच्चरित इति। तदिह स्वारसिक प्रत्यभिज्ञयैक्य प्रतीयते, विरुद्धधर्मसंसर्गस्तु परोपाधिक। न च परोपाधिभेदेन स्वाभाविकमैक्य विहन्यते, न हि नभसोपि कुम्भाद्युपाधिभेदादाजानतो भेद इति, तेनानुवृत्तिव्यवहारः स्वरूपेण, व्यावृत्तव्यवहारस्तूपाधिनिदान इत्यनवद्यम्। उक्त च वृद्धै —

'तेन[2] यत्प्रार्थ्यते जातेस्तद्वर्णादेव लभ्यते। व्यक्तिलभ्य तु नादेभ्य इति गत्वादिगीर्वृथा॥'(श्लो०वा०स्फोट २६)

द्वितीयेऽप्यनैकान्तिकतामाह—प्रातीतिकस्येति। यथा हि मणिकृपाणदर्पणादिषु तद्भेदेन भिन्नमिव प्रतीयमानमपि मुख न स्वतो भिद्यते, एवमित्यर्थ। एतेन तीव्रादिधर्मोपेतत्वादुत्कर्षनिकर्षवत्त्वादित्यादिकमनित्यत्वसाधकहेतुजातमपहस्तित मन्तव्यम्। तथाच—

प्रत्यभिज्ञा यदा शब्दे जागर्ति निरवग्रहा। अनित्यत्वानुमानानि सैव सर्वाणि बाधते॥

किञ्च सामान्यवत्त्वे सतीत्यनुमाने शब्दमात्रपक्षीकारेऽपि ध्वन्यंशे सिद्धसाधनता, तदितरत्वविशेषणे चानिष्टाव्यवच्छेदाद्वैयर्थ्यम्, हेतोश्चोपान्त्यादिष्वसिद्धि। अन्त्यशब्दपक्षीकारे च पूर्ववदेव वैयर्थ्यम्, तथा स्वमतेन सोपाधिकत्वम्, अश्रावणत्वस्योपाधित्वात्। शब्दत्वादिनिवर्त्यसद्भावाच्च न पक्षेतरत्वम्। एतेनेदमप्यपास्तम् यदाह मानमनोहरकारः—"अनित्यः शब्द, इन्द्रियविशेषगुणत्वात्, चक्षूरूपवत्" इति। तत्रापि हि समान ध्वन्यंशे सिद्धसाधनत्वं तदितरविशेषणे वैयर्थ्यमश्रावणत्वोपाधिहतत्व चेति। उदयनस्तु आश्रयाप्रत्यक्षत्वेऽप्यभावस्य प्रत्यक्षता महता संरम्भेण समर्थयन्नेव निवृत्तकोलाहल, उत्पन्नः शब्द इति व्यवहारचरणैकशरण प्रत्यक्षमेव शब्दानित्यत्वे प्रमाणयति स्म, स च विरुद्धधर्मसंसर्गस्यौपाधिकत्वोपपादनन्यायेन दत्तबलिरेव वेताल.। योऽपि नित्यत्वे सर्वदोपलब्ध्यनुपलब्धिप्रसङ्गो न्यायभूषणकारोक्त., सोऽपि ध्वनिसंस्कृतस्योपलम्भाभ्युपगमान्निरस्त। यत्तु युगपदिन्द्रियसंबद्धत्वेन प्रतिनियतसंस्कारसंस्कार्यत्वाभावानुमानम्, तद्ध्वन्मत एवात्मन्यनैकान्तिकमित्यलमतिकलकलेन। यत्तु वैदिक्यानुपूर्वी इदंप्रथमा वर्णानुपूर्वीत्वात्सम्प्रतिपन्नवदित्यनुमान नैयायिकानाम्, तदसत्, विगीत कालो वेदाध्ययनयुक्त कालत्वादिदानीतनवदिति सत्प्रतिपक्षत्वात्। यत्तत्र पूर्वपक्षिणोक्त तत्परिहरति—वेदान्तवादिभिरिति।

---

प्रमाण का विरोध, अनित्यानुमान में अनिवार्य है। 'द्रुतो गकार.', 'विलम्बितो गकार'—इन अनुभूतियो के आधार पर द्रुतत्व, विलम्बितत्वादि विरुद्ध धर्मों के योग से गकारादि व्यक्तियो का भेद सिद्ध नही किया जा सकता, क्योंकि उक्त अनुभूतिया ध्वनिविषयक है ( 'नादवृद्धिपरा"—जै सू १।१।१७ में शबर स्वामी ने कहा है—'नादस्यैष वृद्धिर्न शब्दस्य' अर्थात् शब्द में प्रतीत होनेवाले दीर्घत्व, ह्रस्वत्वादि धर्म, वस्तुत शब्द की व्यञ्जक ध्वनि के धर्म होते है, शब्द के नही )। प्रामाणिक विरुद्ध धर्मों का योग ही व्यक्ति-भेद सिद्ध कर सकता है, किन्तु यहाँ वह नही है। प्रातीतिक विरुद्ध धर्मों ( वर्तुलत्व, वक्रत्वादि ) का सम्बन्ध मणि, कृपाण—आदि में होने पर भी मुख के भेद

---

१. स्वभावत· परमार्थत इति यावत्। २ तेन = वादिना, यत् = प्रत्यभिज्ञारूपम्, जाते = जातिपदार्थात्, वर्णात् = गकारादि वर्णात्, व्यक्तिलभ्यम् द्रुतविलम्बितादिव्यवहाररूपम्, नादेभ्य ध्वन्यात्मकव्यञ्जकेभ्य·, गत्वादिगी गत्वादिजात्या प्रत्यभिज्ञान जातिस्वीकरण च व्यर्थम्। अनिष्टाव्यवच्छेदादितिशेष.।

चाङ्गीकारात्। अतीतकालशब्देन तत्पक्षीकारेणानुमानप्रवृत्तावपि न धर्म्यसिद्धिः। न चाभासमानयोगक्षेमता, भारताध्ययनानामनादित्वनिरासेन पुरस्तान्निरस्तत्वात्। एवमपौरुषेयतया वेदान्तानामसंभावितादोषपुरुषदोषसंसर्गेभ्यस्तेभ्यो विगलितनिखिलभेदविशुद्धब्रह्मप्रमिति सिद्ध्यतीति सिद्धम्।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीज्ञानोत्तमपूज्यपादशिष्यश्रीचित्सुखाचार्यमुनिविरचितायां तत्त्वप्रदीपिकाया प्रथम परिच्छेद ॥

---

वाद।र्थमुपसंहरन्प्रथमपरिच्छेदार्थं संकलयति—एवमपौरुषेयतयेत्यादिना। अत्र च पुरुषदोषासंभवग्रहणमितरशब्ददोषासंभवस्याप्युपलक्षणम्, तेन स्वतःप्रामाण्यशक्त्यभिहितान्वयापौरुषेयसिद्ध्यर्थंप्रामाण्यकार्याप्रामाण्यवादाना संग्रह कृत। विगलितनिखिलभेदग्रहणेनाखण्डवाक्यार्थप्रपञ्चमिथ्यात्वतदुत्पादकभावरूपाज्ञानतदुपयोगितस ख्यातिविशेषविचारा. संगृहीता'। परिशुद्धब्रह्मग्रहणेन विज्ञानात्मस्वप्रकाशवादौ संगृहीताविति परिच्छेदार्थः सकल' सङ्कलित इति सर्वं निर्मलम्।

विज्ञान स्वप्रकाश भवति च पुरुषस्तद्वपुर्भावरूपम्,
ध्वान्त मिथ्या प्रपञ्चो भ्रमभरनिलयोऽनादिभावोऽप्रबोध।
आरोपारोप्यसिद्धप्रमितिजनकताऽखण्डता स्वप्रमात्वम्,
शक्तिर्लक्ष्यः पदार्थान्वय इति कथिताः पौरुषेयो न वेदः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यप्रत्यक्प्रकाशपूज्यपादशिष्यस्य प्रत्यग्रूपभगवत कृतौ तत्त्वप्रदीपिकाव्याख्याया नयनप्रसादिन्या प्रथम. परिच्छेद ॥

---

का साधक नही होता। वेदान्तिगण सर्ग और सर्ग-विशिष्ट काल को मानते है, अत उसी को ही अतीतकाल शब्द से पक्ष बनाकर (अतीत काल वेदाध्ययनयुक्त कालत्वात् सम्प्रतिपन्नवत्—इस प्रकार) अनुमान किया जा सकता है। धर्मी की असिद्धि नही। अनुमानाभास की समानता भी नही, क्योकि भारताध्ययन मे अनादित्व के निरास से ही अनुमानाभास निरस्त हो जाता है। इस प्रकार वेदान्त अपौरुषेय है। इनमे सभी प्रकार के भ्रम प्रमादादि, पुरुषो के दोष सम्भावित नही। इन निर्दुष्ट वेदान्तवाक्यो से निखिल भेद-रहित शुद्ध ब्रह्म का बोध होता है—यह सिद्ध हो गया।

श्रीचित्सुखार्यास्यसरोजभाजो
विधेरिद हास्यमभूतपूर्वम्।
समन्वयाख्याद् वदनात् प्रवृद्ध
भाषामय रातु हित प्रकामम् ॥

इति तत्त्वप्रदीपिका–भाषानुवादे प्रथमः परिच्छेद



# द्वितीयः परिच्छेदः

ननु कथं विगलितनिखिलभेदब्रह्मप्रतिपत्तिः ? प्रत्यक्षादिविरोधात्। तथा हि—प्रत्यक्षेण तावदिदमस्माद्भिन्नमिति नीलपीतादेर्भेदमध्यवस्याम । अथ मतम्—किं प्रत्यक्षं भेदमेव गोचरयति ? उत वस्त्वपि ? तदापि भेदपूर्वकं तद्गोचरयेत् ? तत्पूर्वकं वा भेदम् ? युगपदेव वोभयम् ? नाद्यः, धर्मिप्रतियोगिवस्तुप्रतिपत्तिमन्तरेण भेदस्य प्रत्येतुमशक्यत्वात्। अत एव न भेदग्रहपूर्वको वस्तुग्रहः । न च वस्तुग्रहपुरस्सरो भेदग्रहः, बुद्धेर्विरम्य व्यापाराभावात्। नापि युगपदुभयग्रहः, कार्यकारणबुद्ध्योर्यौगपद्यायोगात्। धर्मिप्रतियोगिप्रतिपत्तिर्हि भेद-

ननन्ये मानोघैः प्रमितममितं स्थाणुमनिशं
समस्तज्ञं लोकत्रितयनयनं सत्रिनयनम्।
सकालं कालारिं सकलवपुषं निष्कलमुमा-
सहायं कामारिं स्वममवमीशं पशुपतिम् ॥१॥
ब्रह्मणि वेदान्तानामुदिताऽद्वैते समन्वयस्तस्य ।
भेदावगाहिमानैर्निरोधनुत्यै परः परिच्छेदः ॥२॥

यद्यप्यद्वये ब्रह्मणि वेदान्तानां प्रामाण्यं साधितम्, तथापि भेदग्राहिप्रत्यक्षादिविरोधादसाधितसमं तत्, अतोऽनुत्पत्तिलक्षणाप्रामाण्याभावेऽपि विरोधान्मिथ्यात्वलक्षणमप्रामाण्यं भवेत्, को हि खलु विशेषः स्वगोचरशूराणां प्रत्यक्षादीनामागमेभ्यः ? इति प्रामाणिकभेदवादिनः प्रत्यवतिष्ठन्ते—**ननु कथमित्यादिना।** अनेन परिच्छेदयोर्विषयविषयिभावलक्षणासङ्गतिरपि दर्शिता, पूर्वस्य विषयत्वादुत्तरस्य विषयित्वादिति। अत्र मण्डनमिश्रैर्भेदवस्तुनोः किमेकैकग्राहकं प्रत्यक्षम् ? उतोभयग्राहकम् ? उभयग्रहपक्षेऽपि युगपत्क्रमेण वा ? क्रमपक्षेऽपि किं पूर्वम् ? किमपरम् ? इति विकल्प्य दूषयद्भिर्भेदग्राहित्वमेव प्रत्यक्षस्य नास्तीत्युक्तम् तदनुवदति पूर्ववादी **अथ मतमिति।** वस्त्वेवेति तु पक्षस्तदनर्थबीजमिति परित्यक्तः। धर्मिप्रतियोगिरूपं वस्तु धर्मिप्रतियोगिवस्तु। इदमेव दूषणमुभयग्रहेऽपि भेदग्रहपूर्वकवस्तुग्रहपक्षेऽप्यतिदिशति—**अत एवेति।** कार्यकारणभावमेवोपपादयति—**धर्मिप्रतियोगीति।** ननु यद्यपि भेदप्रतिपत्तिसमये धर्म्यादिज्ञानमन्वेति, तथापि न तावता कारणत्वं शक्याध्यवसायम्, व्यतिरेकाभावादितरथा नभसोऽपि निमित्तकारणतापातात्, अस्ति ह्यन्वय इति,

समन्वयं समाराध्य प्राज्ञा ज्योतिरसङ्गया ।
विरोधाभावभावोऽहं द्वैतध्वान्ताद् बिभेमि किम् ॥

भेदोज्जीवन—निखिल भेद-रहित ब्रह्म की सिद्धि कैसे हो सकती है ? उसमें प्रत्यक्ष—विरोध है, क्योंकि प्रत्यक्ष प्रमाण से 'यह इससे भिन्न है'—इस प्रकार नील, पीतादि का भेद निश्चित होता है।

शङ्का—क्या प्रत्यक्ष, भेदमात्र को विषय करता है ? या वस्तु (प्रतियोगी, अनुयोगी) को भी ? इसमें भी भेद-ग्रहपूर्वक वस्तु को विषय करता है ? या वस्तु-ग्रहपूर्वक भेद को ? या दोनों को युगपत् (एक साथ) ? (ब्र० ब्र० सि० पृ० ४४)। प्रथम (भेदमात्र-विषयता) पक्ष युक्त नहीं, क्योंकि अनुयोगी एवं प्रतियोगीरूप वस्तु की प्रतीति के बिना भेदमात्र की प्रतीति हो ही नहीं सकती। इसीलिए ही भेद-ग्रहपूर्वक वस्तु का ग्रहण सम्भव नहीं। वस्तु-ग्रहपूर्वक भेद-ग्रह भी नहीं हो सकता, क्योंकि (प्रत्यक्ष पहले वस्तु का प्रकाश करे, तदनन्तर भेद का—इस प्रकार) बुद्धि का विरम्य व्यापार होता नहीं। युगपत् दोनों (वस्तु और भेद) का ग्रहण भी सम्भव नहीं, क्योंकि कारणरूप बुद्धि और कार्यरूप बुद्धि—दोनों एक काल में हो नहीं सकतीं। धर्मी एवं प्रतियोगी

प्रतिपत्ते कारणम्, सन्निहितेऽपि धर्मिण्यसन्निहितप्रतियोगिप्रतिपत्तिमन्तरेण भेदप्रतिपत्तिव्यतिरेकस्य वादिप्रतिवादिनो समतत्वादिति, मैवम्, स्वरूपभेदवादिनं प्रत्येतेषा विकल्पानामनवसरदुःस्थत्वात्, वस्तुग्रहस्यैव भेदग्रहत्वात्। न च वस्तुस्वभावस्यैव भेदत्वे तद्ग्रहस्य प्रतियोग्यनपेक्षत्वप्रसङ्ग , वस्तुस्वभावतया भेदस्यानपेक्षदृष्टिदृष्टस्य सविकल्पके व्यवहारे प्रतियोगिसापेक्षत्वोपपत्ते । दृश्यते हि प्रादेशमात्रपरिमाणवस्तुनोऽनपेक्षदृष्टिदृष्टस्य ह्रस्व दीर्घमिति सविकल्पके व्यवहारे न्यूनाधिकपरिमाणवस्तुग्रहसापेक्षता। न च धर्मभेदवादिनं प्रत्यप्येते विकल्पा प्रसरमर्हन्ति , युगपदुभयग्रहेऽपि विरोधाभावात्। असन्निहिते धर्मिणि प्रतियोगिनि वा युगपदुभयग्रहाभावेऽपि सन्निहितस्थले दण्डी देवदत्त इतिवदपर्यायमेवोभयग्रहोपपत्ते । न च धर्मभेदवादे तस्य तस्य भेदस्य भेदान्तरभेद्यत्वादनवस्थादोषापाति' , मूल

तत्राह—**सन्निहितेऽपीति**। तमिममनूदित पक्ष प्रतिक्षिपति—**मैवमिति**। कि वस्तुस्वरूपमेव भेद इति तस्य मत प्रतीमानिदूषणान्युच्यन्ते ? कि वा धर्मभेदवादिन प्रति ? प्रथमे चौरापराधान्माण्डव्यनिग्रहन्यायः, उच्यमानदूषणाना तदविषयत्वादित्याह—**स्वरूपभेदेति**। ननु वस्तुस्वभावत्वमेव भेदस्य न घटते , तथासति घटस्वभाववदेव प्रतियोग्यनपेक्षितत्वप्रसङ्गात्, प्रतियोगिसापेक्षश्च सर्वत्र भेदः प्रतीयत इति, तत्राह—**न च वस्तुस्वभावस्येति**। अत्र यदि वस्तुस्वभावो भेद स्यात्तर्हि सापेक्षप्रतीतित्व न स्यादिति ह्यापादनम्, तच्चायुक्तम्, वस्त्वेव भेद इति वदन्त मा प्रति व्याप्त्यसिद्धे. प्रशिथिलमूलत्वादित्याह—**वस्तुस्वभावतयेति**। प्रतीतिविशेषो व्यवहारविशेषप्रयुक्तः , न वस्त्वतिरेकप्रयुक्त इति भावः। अथैवमापाद्यते—यदि हि निरपेक्षदृष्टिदृष्ट स्यात्, नस्यात्तर्हि सापेक्षदृष्टिदृष्ट इति, तत्रापि प्रशिथिलमूलतामाह—**दृश्यते हीति**। दीर्घमिति व्यवहारे न्यूनवस्तुग्रहापेक्षा, ह्रस्वव्यवहारे त्वधिकग्रहापेक्षा। अधिकत्व चात्र दीर्घत्व विवक्षितमित्यर्थ.। अस्तु तर्हि द्वितीय., नेत्याह—**न च धर्मभेदवादिनमिति**। ननु कथ युगपदुभयग्रह. ? यावता कार्यकारणभावस्तदुभयग्रहयोर्वर्णित., असन्निहितप्रतियोगिस्थले स्थितव्यतिरेकत्वादिति तत्राह—**असन्निहिते धर्मिणीति**। यथा हि—विभिन्नेन्द्रियग्राह्यसन्निहितविशेषणविशेष्यज्ञानयोर्विशिष्टज्ञानपूर्वभावित्वेऽप्येकेन्द्रियग्राह्यसन्निहितस्थले पूर्वभावित्व नास्थीयते, तत्र कस्य हेतो. ? व्यासे. सकोचात्, व्याप्तिसकोचश्च

---

दोनों का ज्ञान, भेद-ज्ञान का कारण होता है , क्योकि केवल अनुयोगी के सन्निहित होने पर भी असन्निहित प्रतियोगी-ज्ञान के बिना भेद-प्रतीति का न होना, वादी तथा प्रतिवादी—दोनो को सम्मत है।

समाधान—भेद को वस्तु का स्वरूप मानने वाले वादी के प्रति उक्त विकल्पो को कोई अवसर ही नही मिलता। उसके मत मे तो वस्तु का ज्ञान ही भेद-ज्ञान है। 'यदि भेद, वस्तुस्वरुप है, तब उसका ज्ञान, प्रतियोगी के ज्ञान के बिना ही होना चाहिए'—यह आपत्ति नही दे सकते , क्योकि हमारे मत मे प्रथमत प्रतियोगि-निरपेक्ष ही भेद का ग्रहण होता है, हाँ विशेषधर्मविषयक व्यवहार मे प्रतियोगि-ज्ञान की अपेक्षा होती है। यह देखा जाता है कि प्रादेशमात्र ( तर्जनी और अँगूठे को फैलाने पर, तर्जनी के सिरे से अँगूठे के सिरे तक की लम्बाई, लगभग साढ़े सात इञ्च ) परिमाण की वस्तु का, किसी की अपेक्षा के बिना ही प्रथमत ग्रहण होता है। अनन्तर यह ह्रस्व है, यह दीर्घ है—इस प्रकार के विशेष व्यवहार मे न्यूनाधिक परिमाण की वस्तु के ज्ञान की अपेक्षा होती है। जो वादी भेद को वस्तुस्वरूप न मानकर वस्तु का धर्म मानता है, उसके प्रति भी उक्त विकल्प नही उठ सकते, क्योकि एक साथ दोनो के ग्रहण मे किसी प्रकार का विरोध नही, प्रतियोगी और अनुयोगी के असन्निधान मे युगपत् उभय-ग्रह न होने पर भी सन्निहित स्थल पर 'दण्डी देवदत्त.'—के समान एक साथ दोनो का ग्रहण बन जाता है। धर्म का धर्मी से भेद मानने पर प्रथम भेद का भेदक द्वितीय और द्वितीय भेद का भेदक तृतीय—इस प्रकार अनवस्था दोष नही , क्योकि

क्षतेरभावात्, 'मूलक्षतिकरीं प्राहुरनवस्था हि दूषणम्' इति न्यायात्।

ननु धर्मपक्षेऽपि धर्मिणो भेदेन प्रतिपन्नस्य प्रतियोगितायां परस्पराश्रयदोषः. स्तम्भात्कुम्भस्य भेदसिद्धौ, कुम्भात्स्तम्भस्य भेदसिद्धिरिति। अप्रतिपन्नभेदस्य तु प्रतियोगितायां दुष्परिहरः स्वात्मनोऽपि तत्प्रसङ्ग इति चेत्, मैवम्, विद्यमानभेदयोरपि स्वरूपेण च स्फुरतोर्धर्मिप्रतियोगित्वोपपत्तौ एकस्मिन्भेदग्रहप्रसङ्गाभावात्। ननु क्षीरनीरयोर्विद्यमानभेदयोरपि स्वरूपग्रहणे भेदग्रहो न दृश्यत इति चेत्, मैवम्, तत्र समानाभिहारलक्षणदोषप्रतिबन्धादेव तदग्रहोपपत्तेः। एतेन दूरस्थवनस्पत्योरपि भेदग्रहप्रसङ्गः प्रत्युक्तः। उक्तञ्च—

दर्शनबलादेव, तथेहाप्यसन्निहितस्थले पार्वापर्यदर्शनेन वस्तुभेदयग्निविशिष्टपर्वतवत्प्रमाणान्तरगम्यत्वेऽपि सन्निहितस्थले यागपद्यं भवतु, को दोषः ? इत्यर्थः। **मूलक्षतेरिति**। मूलं प्राथमिकभेदप्रतीतिस्तत्क्षतेरभावादज्ञायमानानामेव भेदानां प्रथमभेदोपपादकत्वादित्यर्थः।

धर्मभेदपक्षे धर्मिप्रतियोगिज्ञानयोः परस्पराश्रयदोषमाशङ्कते—**ननु धर्मपक्षेऽपीति**। परस्पराश्रयमेवाभिनयति—**स्तम्भादिति**। ननु न भेदेन प्रतिपन्नस्य प्रतियोगिता, येनायमनन्तरो दोषः प्रसज्येत, अपि तु स्वरूपेण प्रतीतस्येति, तत्राह—**अप्रतिपन्नेति**। तदेतत्परिहरति—**मैवमिति**। न स्वरूपेण प्रतीतिमात्रं विवक्षितम्, अपितु विद्यमानभेदत्वमपि। तथाच स्वस्य स्वस्मात्तदभावान्न भेदग्रहप्रसङ्गः, नाप्यन्योन्याश्रयतेत्यर्थः। तदप्यप्रयोजकमिति शङ्कते—**ननु क्षीरेति**। समानैरभिहारो मिश्रणम्। प्रतिबन्धे सति कार्यानुत्पादो न कारणत्वं विहन्तीति भावः। यच्च विद्यमानभेदस्य स्वरूपेण प्रतीतेः प्रतियोगित्वधर्मित्वप्रयोजकताया दूषणं कैश्चिदुच्यते, दूरस्थवनस्पत्योरपि भेदग्रहप्रसङ्ग इति, तत्राप्युक्तं परिहारमतिदिशति—**एतेनेति**। अत्र च प्रतिबन्धमात्रमतिदेश्यमतिदूरत्वप्रतिबद्धत्वात्तयोः। **अतिदूरादिति**। अतिदूराद्गिरिशिखरवर्तितर्वादौ, अतिसामीप्याल्लोचननिलीनमल्लिबिन्द्वादौ, इन्द्रियघातादन्धादेः, मनोऽनवस्थानात्तीव्रदुःखाद्युदये, अतिसौक्ष्म्यात्परमाण्वादौ, व्यवधानादपवरकान्तरवर्तिषु अभिभवाद्दिवादीपादौ, समानाभिहारान्नीराशये नीरदमुच्यमाननीरेषु यथावद्ग्रहणप्रतिबन्धो भवति। चस्त्वनुक्तसमुच्चयार्थः। तेन दुग्धादिषु दध्यादेरनुद्भवादग्रहोऽपि गृहीतः। तेन नानुपलब्धिमात्राददतीन्द्रियप्रधानाद्यप-

मूल-क्षयकरी अनवस्था ही दोष होती है, प्रकृत में मूल का घात नहीं ( अर्थात् यहाँ मूल है—प्राथमिक भेद प्रतीति, उसकी क्षति नहीं होती )। यदि शङ्का हो कि धर्मपक्ष में भी ( अनुयोगी का जिसमें भेद निश्चित है, उसी में प्रतियोगिता मानी जाती है ? या अनुयोगी का जिसमें भेद निश्चित नहीं है, उसमें भी ? ) अनुयोगी का भेद जिसमें निश्चित है, उसमें प्रतियोगिता मानने पर अन्योऽन्याश्रय दोष होता है—स्तम्भ से कुम्भ का भेद सिद्ध होने पर ही कुम्भ से स्तम्भ का भेद सिद्ध होगा। अनुयोगी का भेद जिसमें निश्चित नहीं, उसमें भी प्रतियोगिता मानने पर अनुयोगी में भी स्वभेद की प्रतियोगिता प्राप्त होगी। तो यह शङ्का उचित नहीं, क्योंकि अनुयोगी का भेद स्वरूपतः जिसमें विद्यमान है, उसमें प्रतियोगिता मानते हैं। प्रतियोगिता में भेद-ज्ञान की अपेक्षा न होने से अन्योऽन्याश्रयता नहीं और स्व में स्व का भेद न होने से एक ही वस्तु में उसका भेद-ग्रह-प्रसङ्ग भी नहीं होता। यदि कहा जाय कि भेद की विद्यमानतामात्र, भेद-ग्रह का प्रयोजक नहीं, दूध और पानी में विद्यमान होने पर भी भेद गृहीत नहीं होता। तो यह कहना युक्त नहीं, क्योंकि वहाँ भेद-ग्रह का प्रतिबन्धक आ गया है—समभिहार ( समान वस्तु में मिल जाना ), अतः भेद-ग्रह नहीं होता। इसीलिए ही दूरस्थ वृक्षों में भेद-ग्रह नहीं होता, क्योंकि वहाँ 'दूरत्व' दोष प्रतिबन्धक है। आचार्य ईश्वर कृष्ण ने भी कहा है—'अति दूर होने से, अति समीप होने से, इन्द्रिय के नष्ट हो जाने से, मन की अनवधानता से, सूक्ष्म होने से, व्यवहित होने से, अभिभूत होने से, समान

'अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।
सौक्ष्म्याद्व्यवधानादभिभवात्समानाभिहाराच्च' ॥ इति ( सा० का० ७ )

किं चैकस्यामेव निर्विकल्पिकायां संविदि भेदस्य भेदिनोश्च युगपत्प्रतिभासे सत्येकं भेदिनं प्रतियोगीकृत्यैतस्मादयं भिन्न इति सविकल्पकबोधोपपत्तौ कुतः परस्पराश्रयो दोषः ? एतेन भेदभेदिनोर्भेदान्तरप्रतीतिमन्तरेण विशेषणविशेष्यभावासंभवाद्भेदस्य विशेषणत्वेन विशेष्यत्वेन वा प्रतीतिनियमादनवस्था मूलक्षयकरी स्यादित्यपि प्रत्युक्तम्, विद्यमानभेदयोः स्वरूपेण स्फुरतोरेवधर्मिप्रतियोगित्ववद्विशेषणविशेष्यभावस्याप्युपपत्तेः । तदेवं प्रत्यक्षप्रमितिगोचरो भेदः ।

अनुमानमपि लिङ्गविशेषात् लिङ्गिविशेषप्रत्यायकत्वाद्भेदे प्रमाणम् । आगमोऽपि शब्दान्तराभ्याससंख्यासंज्ञागुणप्रक्रियानामधेयैः कर्मोपासनादिभेदमेव बोधयति । उपमानमपि प्रत्यक्षदृष्टगवयसादृश्यविशिष्टपरोक्षगोविषयमनेन सदृशी मदीया गौरिति भेदमेव गृह्णाति । अर्थापत्तिरपि 'तिलेभ्य एव तैलं पयस एव दधि' इति व्यवस्थान्यथानुपपत्तिप्रभवा भेदमेवालिङ्गते । योग्यानुपलब्धिरप्यन्योन्याभावलक्षणं भेदं बोधयत्येव । तदेवं भेदग्राहकप्रत्यक्षादिविरोधान्नाद्वैतं प्रतिपाद-

लाप इति सांख्यार्यार्थः । प्रकारान्तरेण परस्पराश्रयं परिहरति—**किं चैकस्यामेवेति** । यदि धर्मिप्रतियोगिसापेक्ष एव सर्वदा भेदः प्रतिभायात्तदा स्यादयं दोषः, न त्वेतदस्ति, निर्विकल्पकसंविदि निरपेक्षप्रतीतिसंभवादित्यर्थः । यच्च कैश्चिदुच्यते—विशेषणतया विशेष्यतया वा सर्वत्र भेदः प्रतीयते, तच्च द्वयं भेदेन प्रतीतस्य । तथाच विशेष्यत्वेन विशेषणत्वेन वा प्राथमिकभेदप्रतीतिर्भेदान्तरप्रतीतिपूर्विका, तदपि भेदान्तरं तथैवेत्यनन्तभेदप्रतीत्यापत्त्या मूलक्षतिकारिण्येवानवस्थेति, तदप्युक्तेन परिहृतमित्याह—**एतेन भेदभेदिनोरिति** । एतेनेत्यस्यैव विवरणम्—**विद्यमानेत्यादि** ।

एवं प्रत्यक्षगम्यत्वं भेदस्योक्त्वाऽनुमानादिरपि भेदं गमयतीत्याह—**अनुमानमपीत्यादिना** । सुरभिधूमेन चन्दनदहनानुमानमितरव्यावृत्तवस्तुनि प्रमाणमित्यर्थः । शब्दान्तराद्यधिकरणान्यनुक्रान्तानि प्रपञ्चमिथ्यात्ववादे । यद्यप्युपासनान्यपि कर्मैव, तथापि मानसत्ववैलक्षण्येन भेदेन निर्दिष्टानि । आदिशब्देन निर्गुणविद्याया इतरेभ्यो भेदसंग्रहः । उक्तलक्षणमेवोपमानं दर्शयति—**अनेन सदृशीति** । अन्योन्याभाव-

के साथ मिल जाने से विद्यमान वस्तु की भी उपलब्धि नहीं हुआ करती ।' दूसरी बात यह है कि एक ही निर्विकल्पक ज्ञान से भेद एवं भेदी ( अनुयोगी, प्रतियोगी ) का एक साथ भान हो जाने पर भेदी को प्रतियोगी बनाकर 'इससे यह भिन्न है'—इस प्रकार सविकल्पक बोध बन जाता है, अन्योऽन्याश्रयता दोष क्यों होगा ? इसीलिए जो लोग शङ्का करते थे कि भेद सदैव वस्तु का विशेषण या विशेष्य होकर ही प्रतीत होता है, विशेषणता और विशेष्यता का निश्चय उन्हीं में होता है, जिनमें भेद का निश्चय हो, अतः भेद-ग्रहपूर्वक ही भेद में विशेषणता या विशेष्यता का निश्चय होगा—भेद-प्रतीति में भेद-प्रतीति की धारा चलने से मूलक्षयकरी अनवस्था आ जाती है। उस शङ्का का भी समाधान हो गया, क्योंकि जिनमें स्वरूपतः भेद विद्यमान है, उनमें अनुयोगिता, प्रतियोगिता के समान ही विशेषणता और विशेष्यता भी बन जायगी । यहाँ तक के ग्रन्थ से यह सिद्ध हुआ कि भेद, प्रत्यक्ष प्रमा का विषय है ।

अनुमान भी लिङ्ग विशेष से लिङ्गि विशेष का बोधक होने के कारण भेद में प्रमाण है । शब्द प्रमाण भी 'शब्दान्तर, अभ्यास, संख्या, संज्ञा, गुण, प्रकरणान्तरादि (द्र० पृ० ६४) के द्वारा कर्म और उपासनादि के भेद का बोधक है । उपमान प्रमाण भी प्रत्यक्षदृष्ट गवय के सादृश्य से विशेषित परोक्ष गौ को विषय करता हुआ 'इसके सदृश हमारी गौ है'—इस प्रकार भेद का ही ग्राहक होता है । अर्थापत्ति भी 'तिलों से ही तैल, दूध से ही दही'—इस प्रकार की व्यवस्था की अन्यथानुपपत्ति से जन्म लेकर भेद का ही आलिङ्गन करती है । अन्योऽन्याभावरूप योग्यानुपलब्धि भी भेद का बोध

यितुमर्हन्ति वेदान्ताः । प्रयोगश्च–घटः घटनिष्ठमिथ्याभेदातिरिक्तभेदाश्रयः दृश्यत्वात् पटवत् ।

अत्राभिदध्महे––सापेक्षत्वात्सावधेश्च तत्त्वेऽद्वैतप्रसङ्गतः ।
एकाभावादसंदेहान्न रूपं वस्तुनो भिदा ॥ १ ॥

न तावत्स्वरूपं भेदः, प्रतियोग्यनपेक्षत्वप्रसङ्गात् । न च प्रादेशमात्रपरिमाणस्य ह्रस्वदीर्घादिव्यवहार इव सविकल्पकव्यवहारे भेदस्यापि प्रतियोगिसापेक्षत्वम्, वैषम्यात् । तथाहि –प्रादेशमात्रपरिमाणं स्वतो न्यूनाधिकपरिमाणाभ्यामेकद्रव्यसमवायविरोधिधर्मद्वयविशिष्टतयोपलम्भे प्रतियोगिनमपेक्षते इत्यस्त्येव तत्र मेयभेदः । प्रकृते तु न तथा, स्वरू-

---

इत्युपलक्षणम्, भूतलादौ घटादिसंसर्गाभावस्यापि बोधकत्वात् । अत्र च साक्षादेव प्रमेयो भेदः अविरन्ति चैतेषां प्रमाणानां लक्षणानि तत्तत्खण्डनसमये । भेदसत्यत्वेऽप्यनुमानं मानमाह—प्रयोगश्चेति । व्याख्यातं चैतत्प्रपञ्चमिथ्यात्ववादे पूर्वपक्षावसरसमये ।

स्वरूपभेदपक्षे दूषणानि श्लोकेन सगृह्णाति—सापेक्षत्वादिति । न रूपं वस्तुनो भिदेत्यनेनैषां हेतूनामन्वयः । सापेक्षप्रतीतित्वाद्भेदस्य, वस्तुनश्च निरपेक्षप्रतीतित्वात् । तथा सावधेः सप्रतियोगिकस्य भेदस्य तत्त्वे वस्तुस्वरूपत्वे सति तद्द्वारा प्रतियोगिनामपि धर्मिस्वरूपत्वादद्वैतप्रसङ्ग इति द्वितीयो हेतुः । तथा विदारणात्मकस्य भेदस्य वस्तुस्वरूपत्वे तस्यापि विदीर्णतयैकाभावात् तन्निमित्तानेकाभावाच्च शून्यतापातादिति तृतीयो हेतुः । तथा स्वरूपत्वे भेदस्य धर्मिणि दृष्टमात्र एव तत्स्वरूपभेदोऽपि, दृष्ट इति संदेहो न भवेत् । उपलक्षणं चैतत् विपर्ययस्यापि । विशेषाग्रहनिबन्धनौ हि तौ तद्ग्रहणे न स्यातामिति चतुर्थो हेतुः । एतेभ्यो हेतुभ्यो न स्वरूपं वस्तुनो भिदा भेद इति श्लोकयोजना । श्लोकं विवृणोति—न तावदित्यादिना । पूर्वपक्ष्याशयमुन्मूलयति—न चेति । वैषम्यमेव विवृणाति—तथाहीति । स्वतो न्यूनपरिमाणेन स्वतोऽधिकपरिमाणेन च सहैकद्रव्ये समवायविरोधि यद्धर्मद्वयं दीर्घत्वह्रस्वत्वात्मकम् अस्य प्रादेशमात्रपरिमाणस्य तद्विशिष्टतया प्रतीतावेव प्रतियोग्यपेक्षा, न स्वरूपमात्रप्रतीताविति न भेदस्योदाहरण

---

कराती है । इस प्रकार भेद-ग्राहक प्रत्यक्षादि प्रमाणो का विरोध उपस्थित हो जाने के कारण वेदान्त वाक्य सकल भेद-शून्य अद्वैत तत्त्व का बोध नही करा सकते । इस विषय मे अनुमान प्रयोग भी है–'घट, घटनिष्ठ मिथ्या भेद से अतिरिक्त भेद का आश्रय होता है, दृश्य होने से, जैसे–पट (द्र० पृ० ६४)

भेद-भञ्जन—'भेद कभी वस्तु का स्वरूप नही हो सकता, क्योकि भेद, प्रतियोग्यादि-सापेक्ष होता है, वस्तु नही । अवधि ( प्रतियोगी ) से युक्त भेद को वस्तु का स्वरूप मानने पर ( प्रतियोगी भी अनुयोगी का स्वरूप हो जाने से ) अद्वैत-प्रसग होता है । ( भेद का स्वभाव देखा जाता है कि वह एक मे नही, अनेक मे ही रहता है, ऐसा भेद यदि वस्तु का स्वरूप बन गया, तब ) कोई वस्तु एक रूप न रह सकेगी । वस्तु-स्वरूप होने से भेद का भी वस्तु के साथ ही ग्रहण हो जाने पर 'एक-अनेक' का सन्देह भी अनुपपन्न हो जायगा ।' भेद को वस्तु-स्वरूप मानने पर वस्तु के समान, भेद भी प्रतियोग्यनपेक्ष हो जायगा । यह जो कहा था कि–भेद सर्वत्र प्रतियोगिसापेक्ष नही होता, अपितु प्रादेशमात्र–परिमाणवाली वस्तु मे ह्रस्व, दीर्घ-व्यवहार के समान सविकल्पक व्यवहार मे ही भेद, प्रतियोगी की अपेक्षा करता है । वह कहना उचित नही, क्योकि दृष्टान्त का दार्ष्टान्त से वैषम्य है—प्रादेशमात्र परिमाण की वस्तु, अपने से न्यून और अपने से अधिक परिमाणो के साथ एक द्रव्य मे न रहने वाले ह्रस्वत्व, दीर्घत्वरूप धर्मो से विशेषित होकर ही अपनी प्रतीति मे प्रतियोगी की अपेक्षा करती है, केवल स्वरूप-प्रतीति मे नही, अतः वहाँ तो मेय-भेद है ही । प्रकृत मे ऐसा नही,

पस्यैव भेदत्वात्। यदि चास्मादय भिन्न इति प्रतियोगिघटिततया प्रतीयमानो भेदो वस्तुन. स्वरूप स्यात्, तदा तस्य सपरिकरस्य भेदस्य स्वरूपेऽन्तर्भावात् प्रतियोगिनोऽपि स्वरूपतया निमज्जानादद्वैतमेव पर्यवस्येत्। अथ प्रतियोगी भेदस्य स्वरूपे नान्तर्भूत , किन्तु तटस्थ एव तन्निरूपकस्ततो नाद्वैतापत्तिरिति, मैवम् , प्रतियोगिनो भेदस्वभावानन्तर्भावेऽपि स्वभावभूतस्य भेदस्य वस्तुस्वभाववदेवान्यानिरूप्यत्वानुपपत्ते । किंच कुम्भ प्रति स्तम्भस्य यत्प्रतियोगित्व तदपि स्तम्भस्य स्वरूपेऽन्तर्भूत चेत्कुम्भस्यापि स्तम्भात्मना पर्यवसानादद्वैतापत्ति.। धर्मत्वे च कुम्भोऽपि स्तम्भधर्मतामनुप्रविशेत्, कुम्भविशेषितस्य प्रतियोगित्वस्य स्तम्भधर्मत्वात्। अथ विशेष्यांशस्य धर्मतायामपि न विशेषणस्य तद्धर्मता, देवदत्तश्चित्रगुरित्यादौ बहुव्रीहिसमासाभिहितस्वामित्वस्य देवदत्तधर्मतायामपि गवा चित्रतायाश्च देवदत्ताद्भिन्नत्वेन धर्मत्वादर्शनादिति,

तदित्यर्थ । सावधेश्चेत्यादि द्वितीय हेतु विवृणोति–यदि चेत्यादिना । घटिततयेति । विशिष्टतयेत्यर्थ. । ननु न प्रतियोगिविशिष्टो भद , किंतु तदुपलक्षितः, तेन भेदस्य धर्मिस्वभावत्वेऽपि न प्रतियोगिनस्तदनन्तर्भूतस्य धर्मिस्वभावतेत्याह–अथ प्रतियोगीति । परिहरति—मैवम्, प्रतियोगिन इति । तदानीमद्वैतप्रसङ्गाभावेऽपि धर्मिवदेव तत्स्वरूपभूतभेदोऽपि न प्रतियोगिनिरूप्य स्यादित्ययमेव दोष स्यादित्यर्थ । तथा स्तम्भस्य यदिद कुम्भ प्रति प्रतियोगित्व नानावधिघटितम् , तदपि स्तम्भस्य स्वरूप धर्मो वा । आद्ये सावधेस्तस्य तत्त्वे स्वभावत्वेऽद्वैतप्रसङ्ग । कुम्भस्यापि प्रतियोगित्वान्तर्भूततया स्तम्भान्तःपातित्वादिति योजनान्तर विवक्षन्नाह—किच कुम्भमिति । द्वितीये दूषणमाह—धर्मत्व इति । ननु कुम्भविशेषितप्रतियोगित्वस्य स्तम्भधर्मत्वेऽपि न विशेषणीभूतकुम्भस्य स्तम्भधर्मता, तथा लोके दर्शनाभावादिति शङ्कते–अथ विशेष्यांशस्येति । चित्रगुरित्यत्र चित्रा गावो यस्येति षष्ठ्या स्वामित्व देवदत्तस्य विशेषणीभूतमभिधीयते, स्वाम्यस्य विशेषण चित्रा गाव , चित्रगवा स्वामीति, तत्र चित्रगवा न देवदत्तविशेषणत्व स्वविशेष्यस्वाम्यस्य तद्विशेषणत्वेऽपि, तद्वदित्यर्थ । देवदत्तादिति स्वामित्वपर धर्मिणो धर्मलक्षणया, भिन्नत्वेनेति च युतसिद्धिपरम्। यस्य भेदमात्रमेवाप्रामाणिकमविद्याविजृम्भितमत एव प्रत्युक्तविशेषणादिव्य-

अपितु स्वरूप ही भेद है । यदि 'अस्मादय भिन्न '—इस प्रकार प्रतियोगि-विशिष्टरूप से प्रतीयमान भेद, अनुयोगी वस्तु का स्वरूप होगा, तब भेद का विशेषण प्रतियोगी भी अनुयोगी के स्वरूप में डूब जायगा, फिर तो अद्वैत में ही पर्यवसान हो जाता है । यदि कहा जाय कि प्रतियोगी, भेद के स्वरूप मे प्रविष्ट नही, तटस्थ रहकर ही भेद का निरूपक है ( अर्थात् प्रतियोग्युपलक्षित भेद ही वस्तु का स्वरूप होता है, प्रतियोगि-विशिष्ट नही ), अत अनुयोगी से प्रतियोगी के अलग रह जाने के कारण अद्वैतापत्ति नही होती । तो यह कहना युक्त नही , क्योकि इस प्रकार प्रतियोगी, भेद के स्वरूप मे प्रविशिष्ट होने से बच जाता है, फिर भी दूसरा दोष यह होता है कि अनुयोगी जब अन्य से निरूपित नही, तब अनुयोगिस्वरूप भेद भी अन्य ( प्रतियोगी ) से निरूपित न हो सकेगा । दूसरी बात यह है कि भेद स्वरूप कुम्भादि ( अनुयोगी ) की प्रतियोगिता जो स्तम्भ मे है, वह स्तम्भ का यदि स्वरूप है, तब तो कुम्भ-विशिष्ट प्रतियोगिता के स्तम्भरूप हो जाने से विशेषणभूत कुम्भ भी स्तम्भ के रूप मे विलीन हो गया, अतः अद्वैतापत्ति होती है । यदि उक्त प्रतियोगिता स्तम्भ का स्वरूप न होकर धर्म है, तब कुम्भ भी स्तम्भ का धर्म बन जायगा , क्योकि कुम्भ-विशेषित प्रतियोगित्व, स्तम्भ का धर्म है । यदि कहा जाय कि प्रतियोगित्वरूप विशेष्य अंश मे स्तम्भ की धर्मता होने पर भी कुम्भरूप विशेषण मे स्तम्भ की धर्मता नही होगी, जैसे कि 'देवदत्त. चित्रगु ' ( चित्र गौ का स्वामी देवदत्त है )—यहाँ बहुब्रीहि समास से अभिहित स्वामित्व, देवदत्त का धर्म होने पर भी स्वामित्व की विशेषणभूत गौ तथा गोनिष्ठ चित्रत्व–दोनो देवदत्त के

सत्यम्, एषा विभीषिका तदा समुन्मिषेद्यदि लोके क्वापि कमपि भेदं परमार्थसत्यमभ्युपगच्छेम। यदा पुनरद्वैतमेव परमार्थमवलम्ब्य समस्तं भेदजातं प्रत्याचिख्यासाम, तदा घटस्य स्तम्भधर्मतायां गवां देवदत्तधर्मतायां वा कं विशेषमवलोकयसि ? येनैवमुपालभसे। दृष्टचरं चैतत् विशिष्टस्य धर्मतायां विशेषणानामपि तद्धर्मत्वं तेषु तेषु बहुषु स्थलेषु। तद्यथा शब्दोऽनित्यो भावत्वे सति कृतकत्वात्, नित्यो ध्वनिधर्मान्यत्वे सति श्रावणत्वात्, अनित्यः सामान्यवत्त्वे सति अस्मदादिबाह्येन्द्रियग्राह्यत्वादित्यादिषु। तदेवं स्तम्भस्य कुम्भधर्मता कुम्भस्यापि स्तम्भधर्मतेति सर्वस्यान्योन्यधर्मतायामशेषवस्तुधर्मकमेकमेव धर्मि पर्यवस्येत्, न चैवमुपलभ्यते। किंच विदारणात्मकभेदस्य भावस्वभावताया न किंचनैकं वस्तु स्यात्। अभेदैकार्थसमवायिन्या एकताया भेदेन विरोधात्। परमाणुरपि नैक इति न तत्समाहार-

वहारोऽपि तादृश इति मतम्, तस्य कथं पक्षविशेष एव व्यभिचारभूमिः स्यात्? इति परिहरति—**सत्यम्, एषेत्यादिना**। किंचादर्शनादिति कोऽर्थः ? किं नियमेन ? किं वा क्वचिदपि ? अन्त्ये व्याप्त्यभावादशक्यप्रसञ्जनमिति, तत्र क्वाचित्कादर्शनमतिप्रसञ्जकम्। प्रथमस्त्वसिद्ध इत्याह—**दृष्टचरं चैतदिति**। अत्र हि भावत्वादि विशेषणं कृतकत्वादे। इतरथा विशेषणविशेष्ययोः सद्द्वयोरभावप्रसङ्गात्। तथा शब्दस्यापि तद्विशेषणम्। तदेवं क्षुद्रोपद्रवं समाधाय, प्रकृतदूषणोपजीवनेन दूषणान्तरमाह—**कुम्भस्यापि स्तम्भधर्मतेत्यादिना**। स्तम्भो धर्मो यस्यासौ कुम्भस्तद्धर्मा तद्भावः स्तम्भधर्मता। अयमर्थः—यदा हि स्तम्भं प्रति प्रतियोगित्वं कुम्भस्य, तदा तस्य कुम्भस्वरूपत्वऽद्वैतापातः। धर्मत्वेऽपि तद्द्वारा स्तम्भोऽपि कुम्भधर्म इत्यन्योऽन्यधर्मत्वं स्यात्तत्श्च यद्घटारूढो यः पटस्तत्पटारूढश्च स एव घट इति घटना स्यात्। एवमेकस्य विश्वप्रतियोगिताया विश्वधर्मकत्वं स्यात्, एवमितरेषामपि स्यात्, अतश्च न धर्मधर्मिभावादिकल्पना, अस्यामनेकधर्मकमेव वस्तु पर्यवस्येदिति। एकाभावादित्येतद्विवृणोति—**किंचेति**। तत्र हेतुः—**अभेदेति**। अभेदेन सहैकस्मिन्नर्थे वर्तत इति तथोक्ता। ननु माभूदेकम्, अनेकमेव समस्तं वस्तु, तथाच बौद्धैः स्वरूपभेदवादिभिरवयविव्यतिरेकेणैव परमाणुपुञ्जेष्वेकस्थूलादिप्रत्ययोऽभ्युपगम्यत इति, तत्राह—**परमाणुरपीति**। अथवा निरवयवपरमाणूनामविदारणात्मकत्वात्तत्समूहरूपानेकात्मकमस्तीत्याशङ्क्य तत्सरूपस्यापि भेदात्मकत्वादुक्तदोषोपपादनमनेन क्रियते। अत्र केचिदद्वैतैकाभावप्रसङ्गदूषणद्वय-

**धर्म नहीं होते। तो यह कहना बहुत उचित नहीं, क्योंकि यह बिभीषिका तब खड़ी हो सकती थी, जब कि लोक मे कही पर भी किसी भी भेद को परमार्थ सत्य हम मानते। जब कि हम एकमात्र अद्वैत को परमार्थ सत्य मानकर समस्त भेद-वर्ग का प्रत्याख्यान करना चाहते है, तब घटनिष्ठ स्तम्भ की धर्मता में या गोनिष्ठ देवदत्त की धर्मता मे किस भेद को देखकर ऐसा उपालम्भ देते है ? विशिष्ट के धर्म होने पर विशेषण मे धर्मता देखी भी बहुत स्थलो पर जाती है। जैसे—"शब्दोऽनित्य भावत्वे सति कृतकत्वात्"—यहाँ कृतकत्व के विशेषण भावत्व मे शब्द की धर्मता, "शब्दो नित्य ध्वनिधर्मान्यत्वे सति श्रावणत्वात्"—यहाँ पर श्रावणत्व के विशेषण ध्वनिधर्मान्यत्व मे शब्द की धर्मता, "शब्दोऽनित्य सामान्यवत्त्वे सति अस्मदादिबाह्येन्द्रियग्राह्यत्वात्"—यहाँ पर सामान्यवत्त्व मे शब्द की धर्मता। इसलिए स्तम्भ मे कुम्भ की धमता और कुम्भ मे भी स्तम्भ की धर्मता—इस प्रकार समस्त पदार्थो के अन्योऽन्य धर्म हो जाने पर निखिल वस्तु रूप धर्मवाला एक ही कोई धर्मी ठहरेगा, किन्तु ऐसा पाया नही जाता। दूसरी बात यह है कि ( विदारणार्थक 'भिद्' धातु से निष्पन्न होने के कारण ) विदारणात्मक भेद की खटाई जिस एक भाव के दूध मे पडेगी, उसे फाडकर अनेक बनाकर ही मानेगी, फिर कोई भी वस्तु एकाई के रूप मे न रहेगी, क्योकि अभेद मात्र की सहचारिणी एकता का भेद के साथ सहज वैर है। परमाणु भी जब एक न रहा, तब एक**

रूपोऽनेकोऽपि स्यात् । भेदस्य च वस्तुस्वभावत्वेऽन्यापेक्षत्वनिरासादेव "अन्यापेक्ष वस्तुस्वरूप भेदो नतु केवलमतो नोक्तदोष" इत्यपि निरस्तम् । यदि च स्वरूप भेदस्तदा धर्मिणि दृष्टे स्वरूप दृष्ट न क्वचिदपि सशयावकाश, तथा विपर्ययस्यापि । भेदस्वभावस्य वस्तुनस्तथैवाव-भासनात्तस्मान्न स्वरूपभेदे प्रत्यक्ष प्रमाणम् ।

तथा धर्मभेदेऽपि—युगपद्ग्रहणायोगादनवस्थाप्रसङ्गत ।
परस्पराश्रयत्वाच्च धर्मभेदेऽपि नाक्षधी ॥२॥

यद्यपि दण्डदेवदत्तौ तुल्योपलम्भयोग्यत्वेन युगपद् गृह्येते, तथापि न तयोर्विशेषणविशेष्य-भावस्तदैव प्रत्येतु युक्त ; विशिष्टप्रत्ययस्य विशेषणविशेष्यस्वरूपप्रत्ययाधीनत्वात्—

'विशेषण विशेष्यं च संबन्ध लौकिकी स्थितिम् ।
गृहीत्वा सकलय्यैतत्तथा प्रत्येति नान्यथा' ॥ (न्या. ली पृ ७०)

---

परिहारायेद वदन्ति—द्विविध वस्तूना स्वरूपम्, स्वारसिकमन्यापेक्ष चेति, तत्रान्यापेक्ष रूप भेदो न स्वार-सिकमिति, तत्राह—**भेदस्येति** । असदेहादिति । हेतु विवृणोति—**यदि चेति** । अयमर्थ'—अस्ति यज्ञदत्ते दृष्टे कदाचिद् दृष्टचरदेवदत्तस्य सोऽय देवदत्तो न वेति सदेह, तत्कस्य हेतो. ? ततो भेदाग्रहात स न स्यात् । स्वरूपभेदवादिन. स्वरूपग्रहे तन्मात्रभेदस्यापि गृहीतत्वात्, भेदर्शनेन च सदेहानवकाशात् । एव स्थाणुर्वा पुरुषा वेत्यादा, तथा विपर्ययोऽपि, सदेहग्रहण विपर्ययस्याप्युपलक्षणमिति ।

एव स्वरूपभेद दूषयित्वा धर्मभेदेऽपि दूषणानि श्लोकेन सगृह्णाति—**युगपदिति** । धर्मभेदेऽपि न प्रत्यक्षा धीः प्रमाणम्, कुत. ? धर्मिप्रतियोगिभेदाना युगपद्ग्रहणायोगात्, दण्ड्यादावपि युगपत्प्रतिपत्ते स्वपरासमतत्वात्, तथानवस्थाप्रसङ्गत., भेदेन प्रतीयमानयोरेव विशेषणविशेष्यभावनियमादनन्तभेद-प्रतीतिं विना प्रथमभेदप्रतीतेरसभवान्मूलक्षयाक्षतेः । तथा धर्मिप्रतियोगिनोरपि पूर्वन्यायेन प्रतीयमान-योरेव धर्मिप्रतियोगित्वप्रतीतिनियमात् भेदस्य च निर्विकल्पके निरपेक्षप्रत्यक्षत्वे स्वभावहानिप्रसङ्गेन पूर्वोक्तपरस्पराश्रयस्यापि विश्रान्तत्वादिति श्लोकार्थ. । आद्य हेतु विवृण्वन्पूर्वोक्त दृष्टान्त विघटयति—**यद्यपीति** । क. खल्वित्य कथयेद्विशेषणादिप्रत्ययानधीना विशिष्टप्रतिपत्तिरिति ? किं भट्टभुजावलम्बी ? कि वा तार्किककरावलम्बी ? प्रथमे भट्टाचार्यवचनविरोधमाह—**विशेषणमिति** । **लौकिकी स्थिति-मिति** । विशेषणविशेष्यत्वयोग्यतामित्यर्थ । तेन च सयोगस्य द्विष्ठत्वाद्दण्डी पुरुष इतिवत्पुरुषी दण्ड

---

का समुच्चयरूप अनेक भी न रहेगा ( द्र० ब्र० सि० पृ० ४८ ) । 'भेद को वस्तु स्वरूप मानने पर भेद से प्रतियोगि-निरपेक्षत्व की आपत्ति होगी'—यह कह देने से ही कुछ लोगो का "अन्यसापेक्ष वस्तुस्वरूप ही भेद माना जाता है, केवल नही, अत अद्वैत-प्रसगादि उक्त दोष नही"—यह कहना खण्डित हो जाता है । यदि वस्तु का स्वरूप ही भेद है, तब धर्मी के साथ ही भेद भी गृहीत हो जाता है, अत कही पर भी सशय को अवकाश न मिलेगा, इसी प्रकार विपर्यय को भी, क्योकि भेद स्वरूप वस्तु अपने ही रूप से प्रतीत होगी । अत अनुयोगीस्वरूप भेद मे प्रत्यक्ष प्रमाण नही हो सकता ।

उसी प्रकार धर्म रूप भेद मे भी—'धर्मी, प्रतियोगी एव भेद का युगपत् ग्रहण न हो सकने, अनवस्थापत्ति तथा अन्योऽन्याश्रयतापत्ति के कारण प्रत्यक्ष प्रमाण नही हो सकता ।' यद्यपि दण्ड एव देवदत्त-दोनो एक काल मे उपलम्भ के योग्य होने से युगपत् गृहीत होते है, तथापि उन दोनो का विशेषण-विशेष्यभाव उसी काल में गृहीत नही हो सकता, क्योकि विशिष्ट की प्रतीति, सदैव विशेषण और विशेष्य की प्रतीति के अधीन हुआ करती है । जैसा कि—'विशेषण, विशेष्य एवं लोक-मर्यादा (योग्यतादि) को जान एवं उनका सकलन करके ही विशिष्ट-प्रतीति कोई व्यक्ति कर सकता है,

इति भट्टमतानुसारिभि स्वीकारात्। तथा तार्किकैरपि—"समवायिनः श्वैत्यात् श्वैत्यबुद्धेः श्वेतबुद्धिस्ते कार्यकारणभूते" इति काणादसूत्रात्। अस्यायमर्थः—पटसमवायिन श्वैत्याच्छौक्ल्यगुणात्कर्मकारणभूतात्तस्मिन्गुणे शौक्ल्यमिति मतिरुपजायते, तस्माच्च श्वैत्यबुद्धेर्हेतोर्गुणविशिष्टे शुक्लमिदमिति बुद्धिरुपजायते, ते च बुद्धी कार्यकारणभूते इति। तथाच सुरभि चन्दनमिति सौरभस्य गुणस्य घ्राणेन्द्रियैकगोचरस्य चन्दनस्य लोचनगोचरस्यैकन्द्रियाविषयत्वात्क्रमेण गृहीतयोरेव विशेषणविशेष्यभावप्रतीतिरित्यनिच्छताप्यभ्युपेयम्, तथाच सर्वत्र विशेषणविशेष्यभावप्रतीतावयमेव न्याय इत्यस्मादिदं भिन्नमिति धर्मिप्रतियोगिज्ञानपुरस्सरमेव तद्विशिष्टभेदज्ञानमेष्टव्यम्, तथाच सति न युगपदुभयग्रहसंभवः। भेदभेदिनोश्च भेदेऽनवस्थापि तदवस्थैव। न चानन्तभेदाभ्युपगमेऽपि मूलक्षतेरभावादनवस्थाऽदोषाय, भेदस्य 'इदमतो भिन्नमयमनयोर्भेद' इति वा विशिष्टत्वेनैव प्रतीतिनियमात्, भेदेनैव च प्रतिपन्नस्य विशेषणत्वात्। ततश्च पूर्वपूर्वभेदप्रतीतिमन्तरेणोत्तरोत्तरभेदप्रतीतेरसंभवात् युगपदनन्त-

---

इत्यपि स्यादिति शङ्का परिहृता। सकलनमेकीकारः, स चैकज्ञानोपारोहः। द्वितीयेऽप्याह—**तथा तार्किकैरपीति**। न केवल परैरङ्गीकरणम्, युक्तिरप्यत्रास्तीत्याह—**तथा च सुरभीति**। अस्तु तर्हि विभिन्नेन्द्रियग्राह्ययोरेवम्, एकेन्द्रियग्राह्येषु का वार्तेति? तत्रापि विमत विशिष्टप्रत्यक्ष विशेषणादिप्रत्ययोत्तरकालीन विशिष्टप्रत्ययत्वात्सुरभिचन्दनमिति प्रत्यक्षवदित्यनुमान विवक्षन्नाह—**तथा चेति**। न च भिन्नेन्द्रियजन्यत्वमुपाधि, व्यतिरेके प्रकृतहेतुव्यतिरेकस्यापाधे.। अस्तु, प्रकृते किं स्यादत आह—**इतीति**। तदेव युगपद्ग्रहणायोगादित्येतदुपपाद्य द्वितीय हेतु विवृणाति—**भेदभेदिनोश्चेति**। पूर्वपक्ष्याशयमनुवदति—**न चानन्तभेदेति**। हेतुमाह—**भेदस्येति**। प्रतीतिनियमादित्युक्तस्यान्वय.। विशेषणादिभावेन हि भेद. प्रतीयते, स च भेदेन प्रतीतस्य, एव द्वितीयो भेद. पूर्वभेदवद्विभिन्नतया प्रतीयमान एव प्रथम भेद प्रति विशेषण भवति, एव तृतीयोऽपीत्यनन्तभेदप्रतीतिप्रसक्तिरित्यर्थः। अस्तु तह्यनन्तभेदप्रतीतिः, तत्राह—**युगपदिति**। क्रमपक्षे विषयान्तरसंचारोच्छेदादिप्रसङ्गापादनार्थश्चकार.। अत्र मानमनोहरकारो नृत्य-

---

अन्यथा नहीं'—इस प्रकार भाट्टानुसारी मानते है। तार्किक भी ऐसा ही मानते हैं, जो कि "समवायिन श्वैत्यात् श्वैत्यबुद्धे श्वैत्यबुद्धिस्ते कार्यकारणभूते" ( वै० सू० ८।१।९ ) कणाद महर्षि के इस सूत्र से सुव्यक्त है। इस सूत्र का अर्थ यह है—पट मे समवेत कारणभूत, श्वैत्य ( ज्ञान क्रिया के कर्मभूत शुक्ल गुण ) से उस गुण का ज्ञान उत्पन्न होता है उस श्वैत्यबुद्धिरूप कारण से शुक्ल गुण-विशिष्ट वस्तु का ( यह शुक्ल है ) ज्ञान होता है, अत विशेषण ज्ञान और विशिष्ट-ज्ञान मे कार्यकारणभाव सम्बन्ध है। इस प्रकार 'सुरभि चन्दनम्'—यहाँ पर सौरभ गुण, घ्राणेन्द्रियमात्र का विषय है और चन्दन, लोचन का ही विषय है, घ्राण का नहीं। एक इन्द्रिय के विषय न होने के कारण क्रमशः गृहीत सुरभि और चन्दन में विशेषणविशेष्यभाव की प्रतीति न चाहते हुए भी माननी होगी। तब तो सब कहीं विशेषणविशेष्यभाव की प्रतीति मे यही न्याय लगेगा। इस प्रकार "अस्माद् इद भिन्नम्"—यहाँ अनुयोगी और प्रतियोगी के ज्ञान के पश्चाद् ही उनसे विशेषित भेद का ज्ञान होगा, एक काल मे उभय-ग्रह सम्भव नही। भेद एवं भेदी ( भेद के अनुयोगी, प्रतियोगी )—दोनों का भेद मानने पर अनवस्था जैसी-की-तैसी है। यदि कहा जाय कि सब भेदो की प्रतीति अनिवार्य तो है नही, अत. मूल-क्षति न होने से अनन्त भेद मान लेने पर भी अनवस्था, दोषाधायिका नहीं होती। तो यह कहना उचित नहीं, क्योंकि 'इदमतो भिन्नम्', 'अनयोर्भेद'—इस प्रकार भेद नियमत विशिष्टरूप मे ही प्रतीत होता है। भिन्नरूप से प्रतीयमान ही विशेषण कहा जाता है। अतः पूर्व-पूर्व भेद-प्रतीति के बिना उत्तरोत्तर भेद की प्रतीति हो ही नही सकती, अनन्त भेदो की

भेदप्रतीतेरयोगाच्च जातैव मूलक्षतिः । अथ विद्यमानभेदस्य स्वरूपेण गृहीतस्य विशेषणतोपपत्तौ भेदाप्रतीति· किं करिष्यतीति ? तन्न, क्षीरनीरयोर्दूरस्थवनस्पत्योश्च तथात्वाप्रतीतेः। न च तत्र दूरत्वादिदोषप्रतिबन्धात्तदग्रह इति वाच्यम्; विद्यमानभेदयोरपि भेदेनाप्रतीतौ विशेषणविशेष्यभावाग्रहे सिद्धे कारणविशेषोपन्यासस्य निष्प्रयोजकत्वात्। नह्युभयवादि-

ति स्म—"नच भेदानवस्था बाधिका, भेदान्तरप्रसक्तौ मूलाभावात्, भेदभेदिनौ भिन्नाविति व्यवहारादर्शनात्। न चैकभेदबलेनान्यभेदानुमानम्, दृष्टान्तभेदाविघातनोत्थाने दोषाभावात्। सोऽय पिण्याकयाचनार्थं गतस्य पाकिनः खारिकातैलदातृत्वाभ्युपगम इव, दृष्टान्तभेदविमर्दे त्वनुत्थानमेव। उपजीव्यस्य प्रबलत्वेन बाधात्, स्वात्मव्याघातकत्वेन जात्युत्तरत्वाच्च। एतेन दृश्यत्वादयो निरस्ता·। नचानिर्वचनीयत्व भेदस्य, प्रमाणाभावात्"इति गायन्। तत्र तावद्भेदानवस्थाया बाधकत्वम्, उक्तरीत्या मूलक्षयकरित्वादित्यवेहि। न च व्यवहारादर्शनात्प्रसञ्जकाभावः, घटो भिन्नो घटस्य भेद इति विशेषणविशेष्यभावेन भेदव्यवहारस्यैव विहृत्तस्य समस्ताधस्तनभेदपद्धतिप्रसञ्जकत्वात्। ननु तर्ह्ययमेवानन्तभेदान्कल्पयन्नारूढमूलः प्रौढो भवेत्, न जानीमः किमारूढमूलतया प्ररूढ·? किंवाऽनुपलब्धिपराहततत्तन्मूलतया निर्मूलल्लूनसस्यवद्विलीयेतेति। यत्त्वेकभेदबलेनान्यभेदानुमान मायावादिमततया आशङ्क्य दृष्टान्ताव्याघातयोर्दूषणमुक्तम्, तल्लोकोत्तरप्रज्ञस्य तवैव शोभते, कः खल्वनुन्मत्तोऽनिर्वचनीयसर्वभेदमायावादिमततयैवमाशङ्केत? अथ योऽय विशेषणविशेष्यभूतभेदव्यवहारो भेदपरम्पराप्रसञ्जक तत्रैवेद दूषणद्वयमास्तामिति चेत्, न; दृष्टान्तभेदानङ्गीकारात्। तर्हि व्याप्तिराहित्य स्वव्याघातकत्व चेति चेत्, न, प्रामाणिकत्वाभावेऽपि विशेषणादिभावस्य भिन्नतया प्रतीतेश्च व्यभिचाराभावात्। यत्र दृष्ट स एव प्रामाणिको भेद इति चेत्, न, प्रामाणिकत्वासिद्धेः। तर्ह्यसाधकमिति चेत्, न, प्रतिबिम्बदेहात्मभाबादीनामिव व्यावहारिकसतोऽपि लौकिकवैदिकव्यवहाराङ्गत्वोपपत्तेः, तत्रापि मुग्धोऽय मिथ्यात्ववादम् व्याचक्षीत। व्याघातश्च यदि शून्यताकारणम्, तन्न, अन्यत्राकरणात्। यद्यनिरूपितरूपतापादनम्, अनुमोदय एव तत्र। एतेन दृश्यत्वादयोऽपि समर्थिता·। नचानिर्वचनीयत्वे प्रमाणाभावः, तल्लक्षणप्रमाणयोरुद्घोषितत्वादनिर्वचनीयवादे। एवं चैतादृशमुत्तरदानं पिण्याकयाचिने खारिकातैलदान वा सकललोकवेदनिन्दितवैशेषिकदर्शनमदिरामत्ताय मरणान्तिकप्रायश्चित्तरूपतीव्रतरतर्कतप्तमदिराधारादान वेत्यात्मनि परिभावयेत्यलम्। पूर्वोक्तानवस्थापरिहारमुद्भाव्य दूषयति—**अथेत्यादिना**। यत्त्वत्रापि तेनोक्त समानाभिहारादिप्रतिबन्धादग्रहणमिति, तदनूद्य दूषयति—**न च तत्रेति**। अयमभिसन्धि·—तत्र तेषा परस्पर भेदो गृहीतः? न वा? यदि गृहीतस्तदा दोषशतैरपि न विपर्ययादि शक्यमुत्पादयितुम्, असाधारणाकारग्रहणेऽपि भ्रमोत्पत्तावतिप्रसङ्गात्। ततो भेद एव न गृहीतस्तदग्रहे चातिदूरत्वादि कारणमिति वक्तव्यम् तथाचास्मदुक्त प्रयोजकमनुसृत्यैव तत्र कारणवर्णनमनुकूलमेवेति। किंच भवदभिमतप्रयोजकस्य प्रयोजकत्व क्व वा दृष्टम्? येनास्य तिबन्धकतेत्याह—**न ह्युभयवादीति**। प्रतिबन्ध-

**एक साथ प्रतीति सम्भव नही, इसलिए अनवस्था मूलक्षयकरी अवश्य होगी। यह जो कहा था कि स्वरूपत गृहीत विद्यमान भेद मे विशेषणता बन जायगी, पूर्व-पूर्व भेद-प्रतीति की कोई आवश्यकता ही नहीं। वह कहना भी युक्त नही, क्योंकि क्षीर-नीर एवं दूरस्थ वृक्षो मे भेद के विद्यमान रहने पर भी उसकी प्रतीति नही होती। यह जो कहा था कि दूरत्वादि दोषो के आ जाने से वहाँ भेद की प्रतीति नही होती। वह कहना भी सगत नही, क्योकि हमने जो नियम बनाया कि भिन्नरूप से प्रतीयमान वस्तु मे ही विशेषणविशेष्यभाव का ग्रहग होता है, दूरस्थ वृक्षो मे भेद के विद्यमान रहने पर भी ग्रहण न होने से वहाँ विशेषणविशेष्यभाव की अप्रतीति का वह नियम सिद्ध हो जाता है, फिर भेदाग्रह के कारण विशेष ( दूरत्वादि ) का उल्लेख निष्प्रयोजक है ( अर्थात् हमारे नियम मे किसी प्रकार का व्यभिचार नही ला सका )। ऐसा कोई उभय-सम्मत स्थल नही दिखाया जा सकता,**

संमृतं तथाविधं स्थलमस्ति, यत्र विद्यमानभेदयोः स्वरूपप्रतिपत्तिमात्रेण विशेषणविशेष्यभावग्रहणम्। एतेन भिन्नतया प्रतिपन्नयोरेव धर्मिप्रतियोगिभाव इतीतरेतराश्रयदोषो वज्रलेपायते। न च निर्विकल्पिकायां संविदि भेदस्य भेदिनोश्च युगपदङ्गुलित्रयवदवभासनादिदमस्माद्भिन्नमिति सविकल्पकव्यवहारोपपत्तेः कथमितरेतराश्रयतेति वाच्यम्, निष्प्रतियोगिकस्य भेदस्य प्रमाणागोचरत्वात्, नित्यं प्रतियोगिघटित एव तस्मिन्प्रमाणप्रसरात्।

कश्चायं धर्मभेदः ? किमन्योऽन्याभावः ? किं वा वैधर्म्यम् ? उत पृथक्त्वम् ? आहोस्विद्भिन्नलक्षणयोगित्वम् ? तत्र तावत्—

नान्योन्याभावरूपोऽयं द्वैताभावप्रसङ्गतः ।
तादात्म्यस्याप्यमानत्वात्प्रतियोग्यनिरूपणात् ॥३॥

---

रहितस्थलेऽपि क्षीरनीरयोः स्वरूपप्रतीतिमात्राद्धर्म्यादिभावादृष्टेर्भेदप्रतीतिपूर्वकत्वे चान्योन्याश्रयता स्यादेवेत्यर्थः। यत्तु धर्मिप्रतियोगिभेदग्राहकयोरितरेतराश्रयपरिहारोऽभिहितः पूर्ववादिना तत्राप्युक्तदूषणमतिदिशन्परस्पराश्रयत्वादिति श्लोकावयवं विवृणोति—**एतेनेति**। तस्यैव विवरणम्—**भिन्नतयेति**। परिहारान्तरमुक्तं दूषयति—**न च निर्विकल्पकायामिति**। निष्प्रतियोगिकभेदसद्भावे प्रमाणमेव नास्तीत्यर्थः। एतेन प्रतियोगित्वेनाप्रतीतावधिकरणत्वेनास्मृतौ च प्रतियोगिस्मृतिरित्यादि बौद्धधिक्कारस्थमुदयनीयसमाधानमपि निरस्तं मन्तव्यम्।

तदेव साधारण्येन धर्मभेददूषणमुक्त्वा विशेषतोऽपि दूषणानि दर्शयितुं विकल्पयति—**कश्चायमिति**। वैधर्म्यं घटत्वपटत्वनित्यत्वादि लक्षणालक्षणसाधारणम्। लक्षणं त्वसाधारणम्। तेन च न द्वितीयचतुर्थसङ्करः। अन्योऽन्याभावभेदे दूषणं श्लोकेन संगृह्णाति—**नान्योन्येति**। अयं भेदोऽन्योऽन्याभावरूपो न भवति, कुतः? सप्रतियोगिकस्यान्योन्याभावस्य धर्मस्य धर्मिस्वभावत्वे विश्वप्रतियोगिकान्योऽन्याभावद्वारा विश्वस्यापि धर्मिभूतवस्तुमात्रत्वाद् द्वैतस्यैवाभावप्रसङ्गतः, धर्मत्वे पूर्वोक्तानवस्था विश्वधर्मवत्ता च घटादेरित्यादि बहिरेव दातव्यम्। किंचान्योन्याभावस्यैवानिरूपणात्तद्रूपोऽपि भेदो दुर्निरूप इति कथम्? तादात्म्यप्रतियोगिको ह्यभावोऽन्योन्याभावः। तच्च सर्वत्र भेदवादिनस्तार्किकस्याप्रामाणिकम्, ततस्तन्निरूप्याभावोऽपि प्रतियोग्यनिरूपणादप्रामाणिक इत्याह—**तादात्म्यस्येति**। अथ तादात्म्यं घटपटयोः प्रमितम्, तर्हि तत एव तन्निषेधरूपोऽन्योन्याभावस्तयोर्न घटते। एवं सर्वत्रेति, पुनरप्यद्वैतापात इति घट्टकुटीप्रभातम्। नचान्यत्र प्रमिततादात्म्यस्यान्यत्र निषेधः, संसर्गाभावत्वप्रसङ्गादित्यपि द्रष्टव्यम्। अस्तु तर्ह्यन्य एवान्योन्याभावप्रतियोगीति, तत्राप्येतदेवावृत्त्या योजनीयम्। प्रतियोग्यनिरूपणादिति श्लोकयोजना। श्लोक

---

**जहाँ विद्यमान भेद का अग्रहण होने पर भी विशेषणविशेष्यभाव का ग्रहण हो जाता हो। इसीलिए (भिन्नरूप से प्रतीयमान पदार्थों में ही विशेषणविशेष्यभाव-ग्रहण का नियम सुरक्षित रहने से ही) भिन्नरूप से निश्चित पदार्थों में ही अनुयोगिप्रतियोगिभाव बनेगा, अतः उक्त अन्योऽन्याश्रयदोष भी वज्रलेप बनकर रह जाता है। यह जो कहा था कि निर्विकल्पक ज्ञान में भेद, अनुयोगी और प्रतियोगी—ये तीनों स्वरूपतः, तीन उँगलियों के समान अवभासित होते हैं, अतः उसके अनन्तर 'इदमस्माद् भिन्नम्'—यह सविकल्पक व्यवहार बन जाता है, अन्योऽन्याश्रयता कैसे ? वह कहना भी उचित नहीं; क्योंकि निष्प्रतियोगिक भेद के सद्भाव में कोई प्रमाण ही नहीं, सदैव प्रतियोगिविशिष्ट भेद ही प्रमाण का विषय होता है। यह धर्मभूत भेद है भी क्या ? क्या अन्योऽन्याभाव है ? या वैधर्म्य ? या पृथक्त्व ? अथवा भिन्न-लक्षण-लक्षित ? (द्र० आत्म० वि० पृ० ५६१) इनमें अन्योऽन्याभाव को भेद नहीं माना जा सकता, क्योंकि द्वैताभाव की आपत्ति होगी और तादात्म्य में कोई प्रमाण न होने से अन्योऽन्याभाव के प्रतियोगी का निरूपण भी नहीं हो सकता।' अर्थात् अन्योऽ-**

अन्योऽन्याभावोऽपि हि यस्माद्भेदस्त प्रतियोगिनमपि धर्मतया स्वस्मिन्नन्तर्भावयेत् । तथाच विश्वप्रतियोगिघटितान्योऽन्याभावस्य वस्तुनो भेदेऽनवस्थाप्रसङ्गात्, वस्तु तावन्मात्रत्वे कथं नाद्वैत पर्यवस्येत् ? किंच तादात्म्यप्रतियोगिकाऽभावोऽन्योऽन्याभाव इति तद्वादिभिरभ्युपेयते, तथाचाभावप्रतियोगिभूतस्तम्भकुम्भयोस्तादात्म्यं यदि न प्रमाणगोचरस्तदा कथ तदभाव. प्रामाणिकः स्यात् ? एव कुम्भस्य विश्वप्रतियोगिक तादात्म्यमादावेव प्रमितमित्यद्वैतसिद्धा-वूर्ध्वमपि तद्विरोधिनोऽन्योऽन्याभावग्रहस्य न समुदय. स्यात्, उपजीव्यविरोधात् । ननु कुम्भ. स्तम्भो न भवतीति स्तम्भप्रतियोगिकोऽभावो य कुम्भमाश्रित सोऽन्योन्याभाव इति कथ-मप्रमितप्रतियोगित्वप्रसक्ति. ? मैवम्, प्रतियोगिभेदाभावादन्योन्याभावससर्गाभावयोर्भेदा-भावप्रसङ्गात् । स्तम्भ कुम्भे नास्ति, कुम्भः स्तभो न भवतीत्युभयत्रापि स्तम्भस्यैव प्रति-

---

विवृणोति—अन्योऽन्याभावोऽपीत्यादिना। अन्योऽन्याभावोऽपि हि भेदो यस्मात्प्रतियोगिनः सकाशादेष्टव्यः तमपि प्रतियोगिन स्वस्मिन्नन्तर्भावयन्कथ न धर्मतया स्वस्य घटधर्मत्वात्तमपि घटधर्मतयैवान्तर्भावयेत् । घटधर्मतामापादयेदित्यर्थः । तथापि द्वैताभाव कथमित्यत आह—तथा चेति । यदुक्तमस्माभिर्बहिरेव दातव्यमिति तत्प्रथममाह—वस्तुनो भेद इति । द्वितीय हेतुं विवृणोति—किंच तादात्म्येति । अभाव निरूपतया प्रतियोगिना विशेषणेनोपलक्षणेन वा भवितव्यम् । उभयथापि तस्याप्रामाणिकत्वे तद्विशिष्टं तदुपलक्षित वाऽप्रामाणिकमेव स्यादित्यर्थः । वादीन्द्रस्तु पक्षधर्मत्वादीना धर्माणामभावत्वमुररीकृत्य प्रति-योगिपर्यनुयोगे प्राह—वस्तुतस्तु न किंचिदिति । तं प्रत्येतावद्वक्तव्य वस्तुतस्तु नाभावत्वमपीति । अनिषे-धात्मकत्वेऽभावत्वव्याघातान्निषेधात्मकत्वे तु निषेध्यप्रतियोगिनमनङ्गीकृत्य न निस्तार इति । प्रतियोग्य निरूपणादित्यस्य द्वितीययोजना दर्शयितु शङ्कामाह—ननु कुम्भ इति । न तादात्म्यप्रतियोगिकोऽन्यो-न्याभाव, किंतु स्तम्भादिप्रमितपदार्थप्रतियोगिक., ततश्च कथमप्रसिद्धप्रतियोगित्वम् । अथवा भवतु तादात्म्यप्रतियोगिकत्वम्, तथापि नोक्तदूषणद्वयसभवः, स्तम्भादिस्वरूपमात्रत्वात्तस्यातिरिक्ततादात्म्ये प्रमाणा-भावादिति शङ्कते—नन्विति । दूषयति—मैवमिति । प्रतियोग्यभेदमेव दर्शयति—स्तम्भ इत्यादिना । अयमभिसन्धिः—स्तम्भ. कुम्भे नास्तीति ससर्गाभावोऽपि स्तम्भप्रतियोगिकः कुम्भाधिकरणक एव । नच ससर्गप्रतियोगिकोऽसौ न स्तम्भप्रतियोगिक इति वाच्यम्, तथासति ससर्गमात्रस्यैव प्रलयप्रसङ्गात् । स्तम्भविशेषितससर्गनिषेधे तु स्तम्भोऽपि प्रतियोगिकोटि टीकृत इति पूर्वोक्तदोषतादवस्थ्यम् । तथाचान्यो-न्याभावोऽपि चेत्स्तम्भप्रतियोगिक., व्यक्तमतिव्याप्तिस्तल्लक्षणस्येति । एतेन तादात्म्य नाम घटस्वरूप-मित्यपि निरस्तम्, घटमात्रोच्छेदप्रसङ्गादेव । नच स्तम्भस्य कुम्भे निषेध., ससर्गाभावत्वापातात् ।

---

न्याभावरूप भेद भी जिस प्रतियोगी से निरूपित है, उसे भी अपने स्वरूप में ही मिला लेगा, तब तो विश्वरूप प्रतियोगी से निरूपित अन्योऽन्याभाव को अनुयोगी वस्तु से भिन्न मानने पर अनवस्था होगी, अत अनुयोगी वस्तु विश्वरूप बनकर अद्वैत रूप से पर्यवसित क्यो न होगी ? दूसरी बात यह है तादात्म्यप्रतियोगिक अभाव को ही अन्योऽन्याभाव माना गया है । अतः इस अभाव का प्रति-योगिभूत, स्तम्भ, कुम्भादि का तादात्म्य, यदि प्रमाण-सिद्ध नही, तब वह अभाव कैसे प्रामाणिक होगा ? एवं घट में जब कि विश्व का तादात्म्य पूर्व ही गृहीत हो गया, तब अद्वैत-सिद्धि हो गई । अब उसका विरोधी अन्योऽन्याभाव, घट से सम्भव ही कैसे होगा ? वहाँ तादात्म्यरूप उपजीव्य बैठा है । यदि कहे कि "कुम्भः स्तम्भो न भवति"—यहाँ पर जो कुम्भ में अन्योऽन्याभाव रहता है, उसका प्रतियोगी है—स्तम्भ, वह तो प्रसिद्ध ही है, अतः अप्रसिद्ध प्रतियोगिकत्व दोष क्यो होगा ? तो यह कहना उचित नही, क्योकि इस प्रकार प्रतियोगी मे भेद न रह जाने से अन्योऽन्याभाव और ससर्गाभाव—दोनो एक ही हो जायेंगे । "स्तम्भ. कुम्भे नास्ति", "कुम्भः स्तम्भो न भवति"—

रित । तस्मादसंभवित्वात्सत्तानाश्रय इत्यलक्षणमेतत् ।

विशेषलक्षणमपि दुर्निरूपम् । तथाहि—'नित्येष्वेव द्रव्येष्वेव वर्तन्त एव ये ते विशेषा' इति न लक्षणम्, यत —

नित्यद्रव्यैकवृत्तित्वमयोगपरिहारत' ।
न लक्षणमतिव्याप्तेस्तत्रात्मत्वमनस्त्वयो ॥१२॥

आत्मत्व मनस्त्वं च नित्यद्रव्येष्वेव वर्तत एवेति तयोरतिव्याप्ति । न नु कालाकाशादिषु नित्यान्तरेष्वसत्वान्न तत्सर्वत्र नित्येषु वर्तते विशेषास्तु नैवम्, वर्तन्त एवेति नियमादिति चेत्, न, प्रतिविशेषमव्याप्ते, सर्वेषां सर्वत्राभावात् । यज्जातीयमेवं स विशेष इति लक्षणार्थं इति चेत्,

---

किंच सत्तायामेवाव्याप्तिः, तस्या सत्ताश्रयत्वात् । नचात्माश्रयान्योन्याश्रयानवस्था', उत्पत्तिज्ञप्त्यप्रतिबन्धकतया प्रमेयत्वादाविव भवन्मते दूषणत्वाभावादिति । विवादाध्यासितमिति गोत्व विवक्षितम् जातिरहितत्वादित्युक्ते साध्याविशिष्टता तदर्थमपरग्रहणम् । नहि द्रव्यत्वादिषु द्रव्यत्वादिकमस्तीति तेऽपि मतमिति भावः । यदि प्रतीतावनादरस्तर्हि गुणादावपि न जातिसिद्धिरुक्तानुमानस्य तत्रापि प्रचारादित्याह—**अन्यथेति** । शिवादित्यमिश्रलक्षणमुपसहरति—**तस्मादिति** ।

कन्दलीकारोक्तलक्षणमनुवदति—**नित्येष्वेवेति** । द्रव्येषु ये वर्तन्ते ते विशेषा इत्युक्तेऽभावसामान्यसमवायेष्वतिव्याप्तिस्तदर्थं द्रव्येष्वेवेत्युक्तम् । तथापि गुणकर्मणोः प्रागभावप्रध्वसयोश्चातिव्याप्तिस्तदर्थं नित्येष्वेवेत्युक्तम् । तथाप्यात्मत्वमनस्त्वयोर्नित्यद्रव्यगतगुणविशेषेषु चातिव्याप्तिरत उक्तं वर्तन्त एवेति । अनेन कदाचिद्वृत्ति. क्वचिद्वृत्तिश्च व्यावर्त्यते । तेन नित्यद्रव्ये कादाचित्कक्काचित्काना ज्ञानादीनामकादाचित्कानामपि काचित्काना मनस्त्वादीना व्यवच्छेद, तेषा कालतो देशतश्चावृत्तेरपि विद्यमानत्वाद्वर्तत एवेत्ययमशो न सभवतीति भावः । तदलक्षणमित्युक्तम्, तत्र दूषण श्लोकेन सग्रह्णाति—**नित्यद्रव्येति** । यदिद वर्तत एवेत्ययोगपरिहारतो नित्यद्रव्यैकवृत्तित्व लक्षणमुक्तम्, तन्न लक्षणम् । कुत: ? त्वन्मते आत्मत्वमनस्त्वयोरतिव्याप्तेरिति श्लोकयोजना । अद्वैतवादिनो मनसा नित्यत्व नास्ति, नाप्यात्मत्वं जातिरित्यत उक्तं तवेति । सग्रह विवृणोति—**आत्मत्वमिति** । पूर्ववादी हृदय शङ्कते—**ननु कालेति** । तर्हि सर्वनित्यद्रव्यवृत्तित्व किमेकैकविशेषलक्षणम् ? कि वा सभूयमानानाम् ? नान्त्यः, अनुगतलक्षणायोगात् । प्रथमे प्राह—**प्रतिविशेषमिति** । नन्वन्त्य एव पक्ष', नचानुगतलक्षणासिद्धिः, अयोगान्ययोगव्यवच्छेदेन नित्यद्रव्यावृत्तित्वानधिकरणत्वे सत्ययोगव्यवच्छेदेन नित्यद्रव्यवृत्तिजातिमत्त्वमिति लक्षणादिति शङ्कते—**यज्जाती-**

---

प्रकृत मे भी लाठी से भगाया नही जा सकता । इस लिए सत्तानाश्रय-यह लक्षण असम्भव है ।

'विशेष' पदार्थ के लक्षण का भी निरूपण कठिन है । "नित्यद्रव्यवृत्तयोऽन्त्या विशेषा."—इस भाष्य के व्याख्यान मे कन्दलीकार ने जो कहा है—"नित्येष्वेव द्रव्येष्वेव वर्तन्त एव ये ते विशेषा"—( न्या. क. पृ १३ ) । वह लक्षण उचित नही । अर्थात् 'वर्तते'—इतना ही कहने से कादाचित्क रहना पाया जाता है, कदाचित् नित्यद्रव्यो से 'विशेष' का अयोग भी हो सकता है । इस अयोग की व्यावृत्ति के लिए कहा गया—'वर्तते एव' । इससे यह सिद्ध हुआ कि सर्व नित्य द्रव्यो मे ही सदा रहनेवाले पदार्थ को विशेष कहते है । यह लक्षण आत्मत्व और मनस्त्व में अतिव्याप्त है, क्योकि आत्मत्व एवं मनस्त्व नित्यद्रव्य मे ही रहते हैं और सदा रहते है । यदि कहा जाय कि काल, आकाशादि मे न रहने के कारण आत्मत्व और मनस्त्व सर्व नित्य द्रव्य-वृत्ति नही, 'विशेष' ऐसे नही होते, उनके लिए यह नियम है कि सब नित्य द्रव्यों में वृत्ति ही हो । तो यह कहना उचित नहीं, क्योकि इस प्रकार का लक्षण प्रत्येक 'विशेष' में अव्याप्त है—सभी विशेष सर्वत्र नहीं रहा करते ( अर्थात् 'विशेष' अनन्त होते है, एक द्रव्य का विशेष दूसरे मे नही रहता, अतः प्रत्येक विशेष

न, विशेषत्वजातेरनङ्गीकरणात्। उपाधेर्विवक्षितत्वाददोष इति चेत्, न, तदुपाधिसिद्धौ तदुपजीविनो लक्षणस्य वैयर्थ्यापातात्, असिद्धौ च लक्षणस्य दुरवधारणत्वात्।

एकद्रव्या स्वभावसन्तो विशेषा इत्यपि न लक्षणम्, एकद्रव्यत्वस्य दुर्निरूपत्वात्। तथाहि-किमिदमेकद्रव्यत्वम्? किमेकत्वसंख्याविशिष्टद्रव्यसमवेतत्वम्? उताद्विष्ठत्वम्? नाद्य, द्रव्यनिष्ठसामान्येष्वतिव्याप्तेः, तान्यपि ह्येकत्वसंख्याविशिष्टद्रव्यसमवेतानि स्वभावसन्ति च, सत्तासामान्यरहितत्वात्। नापि द्वितीय, विकल्पासहत्वात्। तदपि क्वचिद्वृत्तित्वे सत्यन्यावृत्तित्वम्? उताश्रयप्रतियोगिकान्योन्याभाववदवृत्तित्वम्? न प्रथम, प्राचीनदोषानुषङ्गात्, सामान्यान्यपि हि किंचिन्निष्ठत्वे सति तदन्यावृत्तीनि, सर्वत्रावृत्ते.। अत एव न द्वितीय, सर्वावृत्तित्वे-

---

यमिति। अनङ्गीकरणादिति। सामान्यादीना त्रयाणामित्युपक्रम्यासामान्यविशेषवत्त्वमिति प्रशस्तपादैः साधर्म्याभिधानात्, अन्त्यविशेषत्वहानेश्च, जातिमत्त्वे ह्यत्यन्तव्यावृत्तत्व न स्यात्। अत एवाश्रयस्यापि नात्यन्तव्यावर्तकाः स्युः। ननु यज्जातीयमित्यत्र यदुपाधिकमित्युपाधिसामान्य विवक्षितमित्याशङ्क्य तस्यैवाव्याप्त्यतिव्याप्तिरहितस्य लक्षणत्वमस्त्ववश्याश्रयणीयत्वात् कृतं तदुपजीविनानेनेति दूषयति— **न तदुपाधिसिद्धाविति**। एतदेव विपक्षे बाधकतर्केण द्रढयति—**असिद्धौ चेति**।

श्रीवल्लभोदयनयोर्लक्षणमनुवदति—**एकद्रव्या इति**। स्वभावसन्तो विशेषाः इत्युक्ते सामान्यसमवाययोरतिव्याप्तिरत उक्त एकद्रव्या इति। एकमेव द्रव्यम्, आश्रयो येषा नत्ववयविसयोगादिवदनेक ते तथोक्ताः। एकद्रव्या इत्येवोक्ते रूपादिगुणकर्मणोरतिव्याप्तिस्तदर्थं स्वभावसन्त इत्युक्तम्। तदेतदेकद्रव्यानिरुक्त्या दूषयति—**किमिदमित्यादिना**। एकत्वसख्यावति वर्तमानत्वे सति स्वभावसत्त्व द्रव्यगतसामान्येष्वस्तीत्यतिव्याप्तिरित्याह—**द्रव्यनिष्ठेति**। स्वभावसत्त्वे हेतु.—**सत्तासामान्येति**। सामान्यादीना त्रयाणा स्वात्मसत्त्वमिति भावः—अद्विष्ठत्वमिति कोऽर्थः? क्वचिद्वर्तमानत्वे सति क्वचिद्वर्तमानत्व द्विष्ठत्वं तदभावोऽद्विष्ठत्वमिति? किंवा स्वाश्रयान्योऽन्याभाववति वर्तमानत्वं द्विष्ठत्व तदभावोऽद्विष्ठत्वमिति? नाद्य. इत्याह—**न प्रथम इति**। प्राचीनदोषमेवानुषञ्जयति—**सामान्यान्यपि हीति**। सामान्यान्यपि गुणादिषु वर्तमानानि गुणादिष्वेकत्र वृत्तत्वे सति तदन्याभावाद्यवृत्तीनीत्युक्तलक्षणकानीत्यर्थः। अत एवेत्यतिदिष्टं विशदयति—**सर्वावृत्तित्वेनेति**। सामान्यादष्ववृत्तित्वेन सर्ववृत्तित्वाभावादिति भाव। ननु ताद-

---

सर्व नित्य द्रव्यो मे नही रह सकता )। यदि कहना चाहे कि यज्जाति-विशिष्ट पदार्थ सर्व नित्य द्रव्य-वृत्ति होता है, उस जाति वाले पदार्थ को विशेष कहते है—यह लक्षण विवक्षित है। तो यह भी नही कह सकते, क्योकि विशेष मे 'विशेषत्व' जाति नही मानी जाती—यह गत पृ० २२४ पर कहा जा चुका है। जाति के स्थान पर उपाधि का प्रवेश करने पर उक्त दोष तो हट जाता है, किन्तु यह लक्षण ही व्यर्थ हो जाता है, क्योकि 'विशेषत्व' उपाधि मानने पर 'विशेषत्ववत्त्व'—यही लक्षण हो जायगा। 'विशेषत्व' उपाधि के असिद्ध होने पर उपाधि-घटित लक्षण ही नहीं बन सकता।

उदयनाचार्य ने किरणावली ( पृ० २५ पर ) कहा है—"एतेन एकद्रव्या. स्वरूपसन्त इति लक्षणं सूचितम्" ( एकमात्र द्रव्य के आश्रित, सत्ता-रहित पदार्थ विशेष कहा जाता है )। वह लक्षण भी असंगत है, क्योकि 'एकद्रव्यत्व, का निरुपण ही नही हो सकता—एकद्रव्यत्व का क्या अर्थ है? क्या एकत्वसख्या-विशिष्ट द्रव्य मे समवेतत्व? या अद्विष्ठत्व? प्रथम पक्ष मानने पर द्रव्य-वृत्ति जातियो में अतिव्याप्ति होती है, क्योकि वे जातियाँ भी एकत्व-विशिष्ट द्रव्य में वृत्ति और स्वभावतः ही सत् है, उनमे और कोई सत्ता जाति नही मानी जाती। द्वितीय पक्ष मे जिज्ञासा होती है कि 'अद्विष्ठत्व' का क्या अर्थ है? क्वचिद्वृत्तित्व-विशिष्ट अन्यावृत्तित्व? या स्वाश्रय-भिन्नावृत्तित्व? प्रथम पक्ष मानने पर वही जातियो में अतिव्याप्ति दोष होता है, क्योकि गुणगत जातियाँ गुण मे वृत्ति और

नाश्रयप्रतियोगीकान्योन्याभाववद्वृत्तित्वस्यापि सामान्येषु भावात् । स्वाश्रयप्रतियोगिकान्योऽन्याभाववद्वृत्तित्वानधिकरणत्व विवक्षितमिति चेत्, न, स्वशब्देन विशेषविवक्षायामात्माश्रयप्रसङ्गात् । एतदात्मवृत्तित्वे सत्येतदन्यनित्यद्रव्यावृत्तिरेतद्विशेष इति प्रतिव्यक्तिलक्षण विवक्षितमिति चेत्, न, अन्योन्याश्रयत्वात् । नित्यद्रव्याणा भेदाधिगतिहेतवो विशेषा परैरभ्युपगम्यन्ते । ततश्च विशेपसिद्धौ नित्यद्रव्याणा भेदाधिगतिस्तत्सिद्धौ च विशेषाधिगतिरिति कथ नान्योन्याश्रय ? अन्यत एव चेद्भेदाधिगमस्तदा विशेपाधिगमो व्यर्थः स्यात् ।

आत्मत्वमनस्त्वातिरिक्तत्वे स त नित्यमात्रसमवेत. सत्तारहितो विशेष इत्यपि न लक्ष-

---

गवृत्तित्वमात्रमत्र न विवक्षितम्, किंतु स्वाश्रयप्रतियोगिकान्योन्याभाववद्वृत्तित्वानधिकरणत्वम्, न तत्सामान्येष्वस्ति, तेषामनेकवृत्तित्वेनोक्तरूपत्वाभावादिति शङ्कते—**स्वाश्रयेति** । अत्र स्वशब्देन किं प्रकृतविशेषा गृह्यन्ते ? यत्किंचिद्वा ? द्वितीये त्वसभव. । प्रथमे विशेषैरेव विशेषलक्षणादात्माश्रयत्वमित्याह—**न स्वशब्देनेति** । एकैकविशेषस्य सर्वनित्यद्रव्यवृत्तित्वासभवेन यद्दूषणमुक्तम्, तन्निवृत्त्यर्थं प्रतिविशेष पृथक्लक्षण शङ्कते—**एतदिति** । नित्यद्रव्यावृत्तिरेतद्विशेष इत्युक्ते व्याहति, अस्मिन्नप्यवर्तनप्रसङ्गात्तन्निवृत्त्यर्थं एतदन्यनित्यद्रव्यावृत्तीत्युक्तम् । तथाप्येतदात्मन्यतिव्याप्तिस्तदर्थमेतदात्मवृत्तित्वे सतीत्युक्तम् । एतदात्मवृत्तिरित्येवोक्तावात्मत्वादिनार्थान्तरता, तदर्थमेतदन्यनित्यद्रव्यावृत्तिरित्युक्तम् । अत्र सत्ताराहित्यमप्यवगन्तव्यम् । वृत्तिशब्देन समवायस्य च विवक्षा, इतरथा तन्मात्रवृत्त्यन्योन्याभावादौ सुखादौ चातिव्याप्तिप्रसङ्गात् । अन्योऽन्याश्रय विवृणोति—**नित्येति** । तथाहि—अनित्यद्रव्याणामाश्रयविशेषैरेव व्यावृत्तिसिद्धेर्न तेषु विशेषसद्भावे प्रमाणम्, गुणकर्मणोरपि स्वाश्रयविशेषैरेव व्यावृत्तिसिद्धेः, सामान्यमात्राश्रयत्वाच्च, तेषु न विशेषसिद्धौ किंचिदस्ति प्रमाणम्, नित्यानामपि विभिन्नलक्षणाना पार्थिवाप्यपरमाण्वादीना पार्थिवत्वादिनैव व्यावृत्तिरित्यतस्तुल्यलक्षणनित्यद्रव्यव्यावृत्तिहेतवो विशेषा. स्वीक्रियन्ते । एव च सति तादृग्विशेषसिद्धावेतदात्मसिद्धिरेतदात्मज्ञप्तौ च विशेषज्ञप्तिरिति परस्पराश्रयत्वमित्यर्थ. । अथानुमानादिप्रमाणान्तरेणैतदात्मादिरूपनित्यद्रव्यव्यावृत्त्यधिगति., तर्हि विशेषकल्पन मुधा । न च योगिना प्रत्यक्षतया व्यावृत्त्यधिगत्यर्थं तत्कल्पनम् । पृथक्त्वेनैव तदुपपत्तेर्वक्ष्यमाणत्वादित्यभिसन्धिराह—**अन्यत एव चेदिति** । किंचैतदात्मविशिष्टस्यैतल्लक्षणम् ? उपलक्षितस्य वा ? आद्ये विशेषणासिद्धिः । न ह्येतदात्मविशिष्टस्यैतदात्मवृत्तित्व सभवति, अज्ञात आत्माश्रयत्वप्रसङ्गात् । द्वितीये त्वसभव., एतदात्मोपलक्षितस्याप्येतदात्मवृत्तित्वाभावात्, तत्कस्य हेतो ? तदपि ह्येतदुपलक्षितत्वविशिष्ट तदुपलक्षित वा स्यात् । अन्त्येऽनवस्था । आद्ये फलतो विशेषणपक्षान्न विशेष इति ।

शिवादित्यमिश्रोक्तलक्षणमुद्भाव्य दूषयति—**आत्मत्वेति** । सत्तारहितो विशेष इत्युक्ते समवायाभावयोरति-

---

गुण से अन्य विशेषादि मे अवृत्ति है, सर्वत्र नही रहती । इसी लिए द्वितीय पक्ष भी युक्त नही, क्योकि सर्वत्र अवृत्ति होने के कारण स्वाश्रय-भिन्न मे जातियाँ नही रहतीं । यदि 'स्वाश्रय-भिन्न-निरूपितवृत्तित्व की अनधिकरणता' अर्थ माने तब यहाँ 'स्व' शब्द से प्रकृत 'विशेष' का ग्रहण करने पर आत्माश्रयदोष होता है । यदि कहा जाय कि प्रत्येक 'विशेष' का पृथक्-पृथक् लक्षण करेंगे, जैसे इस आत्मा मे वृत्ति होकर जो 'इससे भिन्न नित्य द्रव्य में वृत्ति न हो, वह इस आत्मा का विशेष कहलाता है । तो यह भी नही कह सकते, क्योकि अन्योऽन्याश्रय दोष होता है—नित्य द्रव्यो का भेद-ज्ञान करने के लिए वैशेषिक 'विशेष' पदार्थ मानते है, अतः विशेष की सिद्धि होने पर नित्य द्रव्यो का भेद-ज्ञान और नित्य द्रव्यो का भेद-ज्ञान हो जाने पर विशेष का ज्ञान । नित्य द्रव्यो का भेद-ज्ञान यदि और किसी अनुमानादि प्रमाण से कर लिया जाय, तब 'विशेष' पदार्थ का मानना ही व्यर्थ हो जाता है ।

"आत्मत्व, मनस्त्व से भिन्न, नित्यमात्रसमवेत, सत्ता-रहित पदार्थ को विशेष कहते है"—यह

णम्, परममहत्त्वसामान्येऽतिव्याप्तेः । अस्ति हीदं परममहदिदं परममहदित्यनुवृत्तप्रत्ययवोध्या परममहत्परिमाणेषु परममहत्त्व जाति । न च तत्र व्यञ्जकाभाव, नित्यमहत्परिमाणस्यैव तद्व्यञ्जकत्वात्। तर्हि तेनैव परममहद्व्यवहारोपपत्तौ व्यर्था जातिकल्पनेति च न वाच्यम्, व्यञ्जकमादाय जातिनिरासे गोत्वादेरपि प्रत्याख्यानप्रसङ्गात्। न चैवं परमाणुत्वजातेरभ्युपगमप्रसङ्ग, तत्र पृथिवीत्वादिना परापरभावस्यानिरूपणात्। यदि पृथिवीत्वं परम्, तर्हि परमाणुत्वस्य पृथिवीत्वाव्यभिचारात्सलिलादिपरमाणुषु परमाणुत्वं न स्यात्। अथापरम्, तर्हि परमाणुत्वस्य परत्वे पृथिवीत्वं परमाणुत्व न व्यभिचरेदिति सर्वा पृथिवी परमाणुरेव स्यात्, तेन न परमाणुत्व जाति., न चैवमत्र बाधकमस्तीति परममहत्त्वजातौ भवेदेवातिव्याप्ति । नित्यमात्रसमवेतत्वं च किंचिन्नित्यसमवेतत्वम्? सर्वनित्यसमवेतत्व वा? उभयथापि लक्षणस्याव्याप्ति. । सर्वेषां विशेषाणां एकनिष्ठत्वाभावाच ।

व्याप्तिस्तदर्थं समवेत इत्युक्तम् । तथापि सामान्येतिव्याप्तिस्तदर्थं नित्यमात्रेत्युक्तम्। तथाप्यात्मत्वमनस्त्वयोरतिव्याप्तिरत उक्तमात्मत्वमनस्त्वातिरिक्तत्वे सतीति। सत्तारहित इति द्व्यणुकादिव्यवच्छेद । तदेतदतिव्याप्त्या दूषयति—**परममहत्त्वेति** । ननु परममहत्त्व नाम न सामान्यमस्ति, प्रमाणाभावात्, इति तत्राह—**अस्तीति** । अनुवृत्तप्रत्ययस्यासति बाधके जातिविषयत्वमिति हि त्वदङ्गीकारः, स चात्राप्यस्तीत्यर्थ । परममहत्परिमाण महत्त्वावान्तरजातिमान् महत्परिमाणत्वाद्धस्तवितस्त्यादिपरिमाणवदित्यनुमानादपि तत्सिद्धिरवगन्तव्या। ननु नात्र नियतव्यञ्जकमस्ति, नित्यपरिमाणत्वस्य पारिमाण्डल्यसाधारण्यादिति,तत्राह—**न च तत्रेति**। न नित्यपरिमाणत्व व्यञ्जकमपि तु नित्यमहत्परिमाणत्वमिति भावः । ननु तर्हि तेनैव व्यञ्जकेनानुवृत्तव्यवहारसिद्धावधिकजातिकल्पना मुधेति तत्राह—**तर्हीति** । आभाससमानयोगक्षेमतामाशङ्क्य परिहरति—**न चैवमिति** । तत्र जातिसङ्करप्रसङ्गो बाधक., नेह तथास्ति किंचिदित्याह—**तत्रेति** । परापरभावाभावमेव विवृणोति—**यदीति** । पृथिवीत्वस्य परत्वे तन्न्यूनवृत्तेः परमाणुत्वस्य तद्रहितसलिलपरमाणुषु वृत्तिर्न स्यात्, अस्ति च तदित्यर्थः । परमाणुत्वस्य परत्वे दूषणमाह—**अथापरमिति** । परमाणुत्वस्य परत्वेन तन्न्यूनवृत्तेः पृथिवीत्वस्य तद्रहितद्व्यणुकादिषु वृत्तिर्न स्यादित्यर्थः । समुदायदूषणमुक्त्वाऽवयवानिरूपणादपि दूषयति—**नित्यमात्रेति** । एकनित्यवृत्तित्वम्? सर्वनित्यवृत्तित्व वा विवक्षितम्? आद्ये, सर्वविशेषाव्याप्तिः । सर्वविशे-

लक्षण भी निर्दुष्ट नही, परममहत्त्वरूप जाति मे अतिव्याप्त है । "इदं परममहत्, इदं परममहत्"—इस प्रकार की अनुगत प्रतीति से बोध्य 'परममहत्त्व' जाति परममहत् परिमाणो मे सिद्ध है । परममहत्त्व जाति के व्यञ्जक का भी अभाव नही, परममहत् परिमाणत्व ही उसका व्यञ्जक है । 'तब तो इस व्यञ्जक से ही परममहद्-व्यवहार बन जायगा, जाति की कल्पना ही व्यर्थ है'—यह सन्देह नही करना, क्योकि व्यञ्जक के द्वारा जाति का निरास करने पर गोत्वादि का भी निरास हो जायगा, 'इस प्रकार 'परमाणुत्व' जाति भी माननी पड़ेगी'—यह सन्देह भी अनुचित है, क्योकि परमाणुत्व जाति मानने में पृथिवीत्वादि से परापर भाव का असम्भव प्रतिबन्धक है । अर्थात् पृथिवीत्व को यदि पर (व्यापक) जाति माना जाय, तब व्याप्य परमाणुत्व जाति, पृथिवीत्व की अव्यभिचरित होने से जलादि-परमाणुओ मे न रह सकेगी । यदि पृथिवीत्व को अपर जाति माने, तो परमाणुत्व को पर मानना होगा, फिर तो परमाणुत्व से अव्यभिचरित होने के कारण 'पृथिवीत्व' जाति जलादि-परमाणुओ मे भी रह जायगी, घटादि में नहीं रह सकेगी । अत 'परमाणुत्व' जाति नही मान सकते । किन्तु 'परममहत्त्व' जाति मे कोई प्रतिबन्धक नही, इसलिए परममहत्त्व जाति मे उक्त लक्षण अतिव्याप्त है ही । इसी प्रकार उक्त लक्षण मे नित्यमात्रसमवेतत्व का क्या अर्थ है? किसी एक नित्य मे वृत्तित्व? या सर्वनित्य-वृत्तित्व? दोनो पक्षों मे लक्षण की अव्याप्ति दूर नही होती, क्योकि समस्त 'विशेष' किसी एक ही नित्य द्रव्य मे नही रहते और प्रत्येक विशेष सर्व नित्य द्रव्यों मे नहीं रहता ।

कि चात्र प्रमाणम् ? "समानजातिगुणकर्मकार्याः परमाणवोऽन्योन्यव्यावर्तकधर्मसमवायिन' द्रव्यत्वात् गवादिवत् ।" तथा "सत्ता सामान्यसमवायातिरिक्तभावासंसर्गिणी जातित्वाद्गोत्ववत्" इति लीलावतीकारोन्नीतमनुमानं प्रमाणमिति चेत्, मैवम् . आद्यप्रयोगे पृथ-

षाणा एकनित्यद्रव्यवृत्त्यभावात् । द्वितीये न क्वापि सभव , एकैकविशेषस्य सर्वनित्यद्रव्यावृत्तेरिति खण्डलकार्थ ।एकनित्यद्रव्यवृत्तित्वमपि किमेकत्वनित्यत्वविशिष्टद्रव्यवृत्तित्वम् ? तदुपलक्षितद्रव्यवृत्तित्वं वा ? द्रव्यामत्रवृत्तित्व वा ? आद्ये सख्यानित्यत्वयोरपि विशेषाधारत्वप्रसङ्गादसभवि लक्षणम् । द्वितीयतृतीययोस्तु द्रव्यमात्रवृत्तित्व स्यादुपलक्षणस्य कार्यानन्वयात्। तथाच सर्वद्रव्यसामान्येऽतिव्याप्तिः । तथा सत्ताविशिष्टे तज्ज्ञानसुखादावतिव्याप्ति , तेषामप्युक्तलक्षणत्वात्, सत्ताश्रयत्व तत्रास्तीति चेन्नून बधिर इव भवानाभाति; कथमन्यथा सत्ताविशिष्ट इति विशेषण श्रृण्वत शङ्का स्यात् ? नहि सत्ताविशिष्टेऽपि सत्तास्ति, अशात आत्माश्रयप्रसङ्गादिति । न च नित्यत्वानधिकरणासमवेतत्व तदिति वाच्यम्, नित्यमात्रनिष्ठकार्यप्रतियोगिकप्रागभावप्रध्वसयोर्व्यभिचारात् । न च भावत्वविशेषणम्; पूर्वोक्तजातावतिव्याप्तेः ।

किच किमेतैर्लक्षणैर्लक्ष्यम्, द्रव्यादिपञ्चकम् ? उतातिरिक्तम् ? नाद्य', असिद्धेः । नान्त्यः, तत्र प्रमाणाभावेनासिद्धत्वादित्यभिसधिराह—**किंचात्र प्रमाणमिति** । श्रीवल्लभीयमनुमानद्वय शङ्कते—**समानेति** । अत्र च जातिभिर्गुणै कर्मभिस्तदारब्धकार्यैश्च व्यावर्तकैरर्थान्तरतापरिहाराय तैः समानताग्रहणम् । निरवयवद्रव्यत्वादिभिर्घटादिव्यावर्तकैरर्थान्तरतापरिहारायान्योन्येत्युक्तम् । गवादिषु च गोत्वादिना साध्यप्रसिद्धि' । **तथा सत्तेति** । भावासंसर्गिणीत्युक्ते सामान्यसमवायासंसर्गित्वसाधनेन तत्सिद्धिपर्यवसानार्थान्तरता तथाऽससर्गिणीत्युक्तेऽभावाससर्गित्वपर्यवसायितयार्थान्तरता, तदुभयनिवृत्त्यर्थं सामान्यसमवायातिरिक्तभावाससर्गिणीत्युक्तम् । यस्माच्च भावात्सा व्यावर्त्यते सोऽन्त्यविशेष' । द्रव्यादित्रयाससर्गित्वस्य व्याघातादिति । दूषयति—**मैवमित्यादिना** । अत्र किमयोगिन प्रतिव्यावर्तकधर्मसमवायित्व विवक्षितम् ? योगिन. प्रति वा ? नाद्यः , तेषा परमाणुसाक्षात्काराभावात् । द्वितीये तु योगिनः परमाणुव्यावृत्तिज्ञानमेव कुत' सिद्धम् ? येन व्यावर्तकधर्मापेक्षा । अथ ब्रूयात्समानजातिगुणकर्मकार्याः परमाणवोऽन्योन्यव्यावर्तकसमवायिधर्मविशिष्टबुद्धिविषया द्रव्यत्वाद्घटवदिति, तत्राह—**पृथक्त्वेनेति** । तदाह पातञ्जल[1]. योगिविवेकजज्ञानविषय दर्शयन्पृथक्त्वदूषणावसरे[2]—'तत्रापि देशलक्षणभेदो मूर्तिर्व्यवधिः जातिभेदश्चान्यत्वधीहेतुः' इति । तत्त्वसारटीकाकारोऽपि[3]—'इति सर्वभेदप्रत्ययस्यान्यथासिद्धेर्नान्त्यविशेषकल्पने'ति 'भूतचरेण देहसबन्धेन मुक्तात्मभेदो योगिबुद्धिगम्य उन्नेय.' इति च । इममपि दोष स एव परिजहार—यत आह 'नच पृथक्त्वादिकमेव परमाण्वन्तरात्परमाणोर्व्यावर्तकबुद्धिजनकमस्तु, तस्य परमाण्वन्तरवृत्तिपृथक्त्वादिना सदृशत्वात् । या हि यतो व्यावृत्तिबुद्धि. सा न तत्सदृशधर्मकार्या यथाश्वात्कुञ्जरस्य । तदणोरपि नाण्वन्तराद्व्यावृत्तिस्तत्स-

'विशेष' पदार्थ मे प्रमाण भी क्या है ? लीलावतीकार ने जो दो अनुमान किये हैं—( १ ) "समान जाति, समानगुण, समानकर्म और समान कार्यवाले परमाणु, अन्योन्य-व्यावर्तक धर्म के समवायी है, द्रव्य होने से, जैसे—गौ ।" (न्या० ली० पृ० ६९८) (इस अनुमान से अन्योन्य-व्यावर्तक धर्म जो सिद्ध होगा, वह 'विशेष' पदार्थ है) । एव (२) "सत्ता, सामान्य और समवाय से भिन्न भावपदार्थ मे असमवायिनी है, जाति होने से, जैसे—गोत्व ।' (न्या० ली० पृ० ७०२) (इस अनुमान के द्वारा जिस भाव पदार्थ की असमवायिनी सत्ता सिद्ध होती है, वही विशेष पदार्थ है) । ये दोनो अनुमान युक्त नहीं है, क्योकि प्रथम प्रयोग में 'पृथक्त्व' को लेकर सिद्ध-साधनता है ।

१. पातञ्जलसूत्राणा भाष्यकारोव्यासदेवः ( यो० सू० वि० ५३ सूत्रे ) २ विशेषाणा पृथक्पदार्थत्वदूषणावसरे इत्यर्थ. ३. तत्त्ववैशारदीकार आचार्यवाचस्पतिमिश्रः ।

क्त्वेन सिद्धसाधनत्वात् । नच वाच्यम्—पृथक्त्वस्य पृथक्त्वान्तरसदृशत्वान्न ततो व्यावृत्तत्वबुद्धिसिद्धि , या हि यतो व्यावृत्तिबुद्धि', सा न तत्सदृशधर्मकार्या, यथाश्वात्कुञ्जरस्य, तदणोरपि नाण्वन्तराद्व्यावृत्तबुद्धि. सदृशधर्मकार्या" इति, अय विशेषोऽयं च विशेष , इति विशेषेष्वपि सदृशबुद्धेः स्वीकारात् । द्वितीयोऽपि प्रयोग.—

आश्रयासिद्धिदुष्टत्वादप्रसिद्धविशेषणात् ।
प्रमाणतामश्नुवीत न प्राभाकरभाट्टयोः ॥ १३ ॥

सत्ताजातेरनङ्गीकारात्प्राभाकरं प्रत्याश्रयासिद्धिरुदिता । एव समवायस्य चानङ्गीकाराद्भाट्ट प्रति समवायातिरिक्तभावाससर्गिणीत्यप्रसिद्धविशेषण. पक्ष । विशेषाख्यभावानभ्युपगमेऽपि तदसंसर्गित्वसिद्धेरर्थान्तरता च । किंच सामान्यसमवायातिरिक्तभावशब्देन द्रव्यगुणकर्माण्यभिधीयन्ते ? कि वा विशेषाः ? भावमात्रं वा ? नाद्य., अपसिद्धान्तापातात्, सत्ताया द्रव्यगुणकर्मसु वृत्ते स्वयमङ्गीकृतत्वात् । न द्वितीय., विशेषाणामद्याप्यसिद्धेरप्रसिद्धविशेष-

---

दृशधर्मकार्या' इति । तदेतदनूद्य निराचष्टे—**न च वाच्यमित्यादिना** । **न तत्सदृशेति** । तद्धर्मसदृश धर्मस्तत्सदृशधर्मः । नच वाच्यमित्युक्तम्, तत्र हेतुमाह—**अय विशेषं इति** । एतेन नित्यद्रव्यव्यावृत्तिहेतवोन्त्यविशेषा इत्यपि लक्षण प्रतिक्षिप्तम् । द्वितीयोऽपि प्रयोग इत्यस्य प्रमागता नाश्नुवीतेत्युत्तरश्लोकस्थपदेनान्वयः । तत्र हेतुभूतानि दूषणानि श्लोकेन संगृह्णाति—**आश्रयेति** । आश्रयासिद्ध्यप्रसिद्ध विशेषणतयोर्यथायथं प्राभाकराणा भाट्टाना च सबन्धः । इदमेव दूषणद्वय विवृणोति—**सत्ताजातेरित्यादिना** । सर्वसाधारण चार्थान्तरत्व दूषणमाह—**विशेषाख्येति** । सामान्यसमवायातिरिक्तभावाससर्गित्वं साध्यमानं न नियमेन तत्सत्ता साधयति, तदभावेऽपि तदससर्गित्वोपपत्ते. । नहीदमससर्गित्व नाम विभाग. येन समवायिकारणतया तस्यापि सत्त्वमपेक्षेत । नच तदससर्गित्वस्य तन्निष्ठात्यन्ताभावप्रतियोगित्वस्य धर्म्यपेक्षेति वाच्यम् । अत्यन्तासतोऽपि प्रतियोगित्वधर्मित्वयोरुपपत्तेरिति भावः । भङ्ग्यन्तरेणाप्रसिद्धविशेषणतामाह—**किंचेति** । अपसिद्धान्तापत्तिमेव दर्शयति—**सत्ताया इति** । **अङ्गीकृतत्वादिति** । द्रव्यादीना त्रयाणा सत्तासबन्ध इति भाष्यमतस्तादृशभावात्सत्ताया व्यावृत्तिसाधनमयुक्तमिति भावः । ननु

---

**न्यायलीलावतीकार का जो यह (न्या० ली० पृ० ७०२ पर) कहना है कि पृथक्त्व, पृथक्त्वान्तर के सदृश है, अत. उससे व्यावृत्ताकार ज्ञान उत्पन्न नही हो सकता , क्योंकि जो व्यावृत्ति-बुद्धि, जिस धर्म से उत्पन्न होती है , वह उसके सदृश धर्म से नही हो सकती, जैसे—अश्व से कुञ्जर की बुद्धि । अत. परमाणु की भी परमाण्वन्तर से व्यावृत्ति-बुद्धि पृथक्त्व-जैसे सदृश धर्म से साध्य नही । वह लीलावतीकार का कहना भी असंगत है , क्योंकि विशेष पदार्थ भी तो परस्पर सदृश होते है, फिर वे भी व्यावर्तक कैसे होगे ? द्वितीय अनुमान भी प्राभाकर मत मे आश्रयासिद्धि और भाट्ट मत मे अप्रसिद्धविशेषणता दोष से दूषित होने के कारण प्रमाण नही हो सकता । सत्ता जाति न मानने के कारण प्रभाकर के मत में आश्रयासिद्धि होती है । एवं भाट्ट समवाय नहीं मानते , अतः उनके मतमे समवाय-घटित उक्त साध्य रूप विशेषण ही अप्रसिद्ध हो जाता है । विशेषसञ्ज्ञक भाव पदार्थ न मानने पर भी सत्ता में उसका अससर्गित्व बन जाता है ( किसी वस्तु की कहीं असंसर्गिता दोनो प्रकार से बन जाती है, या तो वस्तु का संसर्ग न हो या कि वस्तु ही न हो) । अत' अर्थान्तरता भी होती है । दूसरी बात यह भी है कि उक्त अनुमान में 'सामान्य, समवाय-भिन्न भाव' शब्द से द्रव्य, गुण, कर्म विवक्षित हैं ? या बिशेष पदार्थ ? या भावमात्र ? प्रथम पक्ष मानने पर अपसिद्धान्त होता है , क्योकि सत्ता का द्रव्य, गुण और कर्म में रहना वैशेषिकों ने स्वयं माना है । द्वितीय पक्ष से अप्रसिद्धविशेषणता होती है , क्योकि विशेष की असिद्धि से विशेष-घटित साध्य प्रसिद्ध कैसे होगा ?**

णत्वात्। नापि तृतीय, विकल्पासहत्वात्। असंसर्गित्वपदेन किमससर्गितामात्रं विवक्षितम्? उत संसर्गित्वात्यन्ताभावाधिकरणत्वम्? नाद्य, सिद्धसाधनत्वात्, अतीतानागतव्यक्तिभिः सत्ताया अप्यसंसर्गित्वस्वीकारात्। नापि द्वितीय, दृष्टान्तस्य साध्यविकलत्वात्, गोत्वस्यापि किंचिद्भावसंसर्गित्वेन तदत्यन्ताभावाधिकरणत्वाभावात्। आकाशं गुणसामान्यव्यतिरिक्तसमवायि द्रव्यत्वाद्घटवदिति मानमनोहरकारोक्तमनुमानान्तरमस्तीति चेत्, मैवम्, प्राभाकरं प्रति शक्त्या सिद्धसाधनत्वात्, तेन शक्तेर्गुणसामान्यव्यतिरिक्ताया वियदाश्रयताश्रयणात्। समवायमनभ्युपगच्छतोर्भाट्टवेदान्तिनोरप्रसिद्धविशेषणत्वात्, वेगवत्त्वोपाध्युपहतत्वाच्च। तस्मान्न विशेषलक्षणमपि साधु।

नापि समवायलक्षणम्। तथाहि—"अयुतसिद्धानामाधार्याधारभूतानामिहप्रत्ययहेतुर्यः संबन्धः स समवाय" इति समवायलक्षणपर परेषा भाष्यम्। अस्य चायमर्थ—युतसिद्धि-

---

न विशेषात्मकभावादससर्गित्व साधयाम, येनाप्रसिद्धविशेषणता, अपित्वविवक्षितविशेषाद्भावमात्रादिति तृतीय पक्ष दूषयति—नापि तृतीय इति। भावाससर्गिण त्वत्रासंसर्गित्व ससर्गित्वाभावमात्रम्? किंवा ससर्गित्वात्यन्ताभावः? इति विकल्प्याद्य दूषयति—नाद्य इति। तामेव विवृणोति—अतीतेति। भावमात्रादससर्गित्वमात्र हि सत्ताया सिसाधयिषितम्, तच्चातीतादिष्वसिद्धमिति न विशेषसिद्धि, सिद्धसाधन चेदमर्थान्तरत्वम्। साध्यवैकल्यमेव दर्शयति—गोत्वस्यापीति। बाधश्च द्रष्टव्यः। किंच सत्ता सामान्यसमवायविशेषातिरिक्तभावाससर्गिणी जातित्वाद् गोत्ववदित्यनुमानसंभवादाभाससमानयोगक्षेमत्वम्, विपक्षे बाधकतर्काभावाच्छङ्किता प्रयोजकता च। मानमनोहरकारीयमनुमान शङ्कते—आकाशमिति। एतच्च तदीयविवादपदाववरणम्। एतच्च विभुद्रव्यमात्रोपलक्षणम्। समवायीत्युक्ते शब्दादिगुणस्य सामान्यस्य च समवायित्वेनार्थान्तरता, तदर्थं गुणसामान्यव्यतिरिक्तेत्युक्तम्। घटे च कर्मणा साध्यसिद्धि। आकाशे च तदभावाद्विशेषसिद्धि। अस्यार्थान्तरत्वमाह—मैवमिति। शक्ति पदार्थान्तरमिति हि गुरूणा मतम्, तत्समवायिप्रयुक्त च दूषणमाह—भाट्टेति। व्याप्यत्वासिद्धिमाह—वेगवत्त्वेति। इदमप्याभाससमानयोगक्षेमम् शक्यतेऽनुमातुम्, आकाश गुणसामान्यविशेषव्यतिरिक्तसमवायि द्रव्यत्वाद्घटवदिति।

य च समवायमवलम्ब्यामुकसमवाय्यमुकसमवायीति निरर्गल जल्पसि, सोऽपि समवायो दुर्निरूप इत्याह—नापि समवायेति। तत्र प्रशस्तपादोक्त लक्षणमनुवदति—तथाह्ययुतसिद्धानामिति। भाष्य व्याचक्षाणः कृत्स्नस्य तस्य लक्षणपरता दर्शयति—अस्य चायमर्थ इति। तत्रायुतसिद्धेः युत-

---

तृतीय पक्ष मे जिज्ञासा होती है कि 'असंसर्गित्व' पद से क्या असंसर्गित्वमात्र विवक्षित है? या संसर्गित्व के अत्यन्ताभाव की अधिकरणता? प्रथम पक्ष में सिद्ध साधनता होती है, क्योंकि अतीत और अनागत व्यक्तियो के साथ सत्ता की असंसर्गिता मानी ही जाती है। द्वितीय पक्ष मे दृष्टान्त, साध्य-विकल हो जाता है, क्योंकि गोत्व मे यत्किञ्चिद्भाव की ( गो-निरूपित ) संसर्गिता रहने से संसर्गित्व का अत्यन्ताभाव नही रह सकता। 'आकाश, गुण और सामान्य से भिन्न पदार्थ का समवायी है, द्रव्य होने से, घट के समान'—मानमनोहरकार का यह अनुमान भी विशेष की सिद्धि नही कर सकता, क्योंकि शक्ति पदार्थ को लेकर प्राभाकर के मत से सिद्ध-साधनता होती है। प्राभाकर अपनी गुण और सामान्य से अतिरिक्त शक्ति को आकाश में समवेत मानते है। समवाय न माननेवाले भाट्टो और वेदान्तियो के लिए अप्रसिद्धविशेषणता है। 'वेगवत्त्व' उपाधि भी है ( घट दृष्टान्त में वेगवत्त्व रहने से साध्य-व्यापक और आकाशरूप पक्ष मे न रहने से साधनाऽव्यापक है )।

समवाय का लक्षण भी नही बनता। प्रशस्तपाद ने अपने भाष्य में समवाय का लक्षण किया है—"अयुतसिद्धानामाधार्याधारभूताना य. सम्बन्ध, इह प्रत्ययहेतुः स समवाय." (वै० भा० पृ०५।)

रुभयोरपि संबन्धिनो परस्परपरिहारेण पृथगाश्रयाश्रयित्वम्, सा ययोर्नास्ति तावयुतसिद्धौ, तयो संबन्ध समवाय, यथा तन्तुपटयो । तत्र यद्यपि तन्तव स्वारम्भकावयवाश्रितास्तथापि पटस्य तन्त्वाश्रितत्वान्न द्वयो. परस्परपरिहारेण पृथगाश्रयाश्रयित्वम्। तेनानित्यानां द्वयो· पृथगाश्रयाश्रयित्व युतसिद्धि, अयुतसिद्धिस्तु तद्विपरीता। नित्यानां तु पृथग्गमनयोगित्वं युतसिद्धिस्तद्विपरीतायुतसिद्धि, यथाकाशद्रव्यत्वयो । तत्रायुतसिद्धयो· सबन्ध इत्येतावति लक्षणे सुखस्य धर्मस्य च कार्यकारणभावसबन्धोऽपि समवाय· स्यात्। आत्मैकाश्रिततया तयोरयुतसिद्धत्वात्तदर्थमाधार्याधारभूतानामिति पदम् । एवमप्याकाशस्याकाशपदस्य च वाच्यवाचकसंबन्ध. समवाय स्यात्तन्निवृत्त्यर्थमिहप्रत्ययहेतुरिति पदम् । न हि तस्मात्संब-

---

सिद्धिज्ञानाधीनत्व तावद्दर्शयति—युतसिद्धिरिति । ननु कथ तन्तुपटयोरयुतसिद्धिः? यावता पटसबन्धि-व्यतिरेकेण तन्तूना स्वावयवाश्रितत्वाभात, तत्राह—तत्र यद्यपीति । उभयो पृथगाश्रयाश्रितत्व युत-सिद्धिः। न चेह तथात्वम्, पटस्य सबन्धितन्तुव्यतिरिक्तानाश्रितत्वादित्यर्थ । फलितमाह—तेनेति। द्वयोरपि सबन्ध्यतिरिक्ताश्रयाश्रयित्वम्, युतसिद्धिस्तद्विपरीता अयुतसिद्धिरित्यर्थ । नन्विवयं चेद्युतसिद्धि-र्गतं तर्हि परमाणूना युतसिद्ध्या, भवितव्य च तथा, इतरथा परमाण्वोः सयोगाभावेन द्व्यणुकादिकार्या-नारम्भप्रसङ्गात्, सदातनभावप्रसङ्गात् द्व्यणुकादे., अयुतसिद्धपरमाणुसबन्धस्य सदातनत्वादित्यत आह—अनित्यानामिति। का तर्हि नित्याना परमाणुमनसामाकाशादिभि· परस्पर च युतसिद्धि ? इति तत्राह—नित्याना त्विति। यथाकाशद्रव्यत्वयोरिति। नहि तत्रान्यतरस्यापि पृथग्गतिमत्त्वमस्ति, यथाकाशपरमाण्वोरिति भाव.। उक्तश्चायं विभागस्तदीयभाष्ये। सा पुनर्द्वयोरन्यतरस्य वा पृथग्गति-मत्त्वम्, इय तु नित्यानाम्, अनित्याना तु युतेष्वाश्रयेषु समवायो युतसिद्धिरिति। इदानी श्रीधराचार्य-रीत्या विशेषणानामुपयोग दर्शयति—तत्रेत्यादिना। ननु कथ सुखधर्मयोरयुतसिद्धिरिति ता दर्शयति—आत्मैकेति। उभयो. परस्परानाश्रयत्वे सति परस्पराश्रयातिरिक्ताश्रयत्व इह युतसिद्धिस्तद्राहित्य चानयो-रस्तीति भावः। इद तु चिन्त्यम्—कथमनयो. परस्पराश्रयातिरिक्तानाश्रययोरयुतसिद्धिरिति ? द्वयो. पृथगाश्रयाश्रयित्वाभावस्यैवायुतसिद्धत्वोपपत्तौ परस्परपरिहारविशेषणवैयर्थ्यात्। न च नित्यरीत्या, अनि-त्यत्वात्। तृतीयविशेषणकृत्यमाह—एवमपीति। अस्त्याकाशतद्वाचकाकाशादिपदयोरयुतसिद्धिराधा-

---

इसका अर्थ यह है—युतसिद्धि नाम है 'दो सम्बन्धियो का परस्पर एक-दूसरे को छोड़ कर पृथक् आश्रय में रहना'। यह जिन सम्बन्धियो मे नही, उन्हे अयुतसिद्ध कहा जाता है। ऐसे सम्बन्धियो के सम्बन्ध का नाम है—समवाय, जैसे-पट और तन्तुओ का। यहाँ यद्यपि तन्तु, पट से भिन्न अपने आरम्भक अवयवो मे ही रहते है (इस प्रकार तन्तुओ मे पृथगाश्रितत्व या युतसिद्धत्व ही रह जाता है)। तथापि पट, तन्तुओ के ही आश्रित होता है, अतः दोनो मे पृथगाश्रयाश्रितत्व नही। फलत अनित्य पदार्थों मे से दोनो का ही पृथगाश्रयाश्रित होना युतसिद्धि और उसके विपरीत होती है—अयुतसिद्धि। नित्य पदार्थों मे पृथक् गमन-योगित्व को युतसिद्ध कहा जाता है और उसके अभाव को अयुतसिद्धि, जैसे—आकाश और द्रव्यत्व मे। यहाँ 'अयुतसिद्ध पदार्थों का सम्बन्ध, समवाय होता है'—इतना ही लक्षण रखने पर सुख और धर्म के परस्पर कार्यकारणभाव सम्बन्ध मे अतिव्याप्ति होती है, क्योकि वे दोनो भी एक ही आत्मा के आश्रित होने से अयुतसिद्ध ही होते है। यह अतिव्याप्ति हटाने के लिए अयुतसिद्ध पदार्थों का विशेषण लगाया—'आधार्याधारभूतत्व'। आधाराधेयभाव न होने से सुख और धर्मादि की व्यावृत्ति तो हो जाती है, किन्तु आकाश तथा 'आकाश' पद के वाच्य-वाचकभाव में अतिव्याप्ति होती है, उसे निवृत्त करने के लिए कहा—'इह प्रत्ययहेतु'। वाच्य-वाचकभाव सम्बन्ध से 'इह इदम्'—यह प्रतीति नहीं होती, केवल आकाश

न्वादिहेदमिति बुद्धिर्जायते, केवलाकाशस्यैव प्रतीते। आधार्याधारभूतानामिहप्रत्ययहेतुरित्येतावति लक्षणे कुण्डबदरसबन्धेऽतिव्याप्तिस्तन्निवृत्त्यर्थमयुतसिद्धानामिति पदम। तेन समस्तमेवेद समवायलक्षणम्, इति कन्दलीकार, तदसत्—

न स्यादयुतसिद्ध्यादि समवायस्य लक्षणम्।
विशेषणविशेष्यत्वसबन्धे व्यभिचारत ॥ १४ ॥

इह भूतले घटाभाव इति विशेषणविशेष्यभावलक्षणेऽपि सबन्धे लक्षणस्यातिव्याप्ति। अस्ति हि तत्रायुतसिद्धिर्भूतलघटाभावयो., भूतलस्य स्वावयवाश्रितत्वेऽप्यभावस्य भूतलातिरिक्ताश्रयाभावात्। अस्ति चाधार्याधारभाव इहप्रत्ययश्च। अथ भावयोरीदृश सबन्ध. समवाय., तथापीह पटे रूपसमवायो रूपसमवायवान्पट इति विशेषणविशेष्यभावे लक्षणस्यातिव्याप्ति, उक्तलक्षणस्य तत्रापि सभवात्। अथ गुणगुणिनो क्रियाकारकयोरवयवावयविनोर्जातिजातिमतोर्विशेषतद्वतोश्च य संबन्ध उक्तरूपः समवाय इति चेत्, न, तेषामेवान्योन्यविशेषणविशेष्यभावेऽ

राधेयभावश्चाकाशविशेषगुणत्वात्तस्येति भावः। इत आरभ्यासिद्धान्तोपक्रम निगदव्याख्यातम्। कन्दलीकार इति। किरणावलीकारपक्षे हि न समस्तमिद भाष्य लक्षणम्, अपि त्वयुतसिद्धाना सम्बन्ध इत्येतावत्। तेन च नित्यः सबन्ध इति लक्षणमुक्त भवति। इहप्रत्ययहेतुरिति च तत्र प्रमाणोपन्यासः। इहप्रत्ययस्य च निर्विषयत्वेनासभवपरिहारायाधाराधेयभूतानामिति विषयनिर्देश इति भाष्ययोजनेति भावः। तदेतद्दूषयति—तदसदिति। अयुतसिद्धि पुरस्कृत्य यदिद लक्षणमुक्त तन्न स्यात्। कुत ? विशेषणविशेष्यत्वसंबन्धे व्यभिचारादिति श्लोकयोजना। उत्तरार्धं विवृणोति—इह भूतल इति। ननु यद्यपि तयोराधाराधेयभाव प्रतीयते, तथापि कथमयुतसिद्धिरिति ? तत्राह—अस्ति हीति। अन्यतरस्य पृथगाश्रयाश्रयित्वाभावे भवत्येवायुतसिद्धिरिति भावः। निगदव्याख्यानेन ग्रन्थेन लक्षणविशेष तत्र वर्तयति—अस्ति चेति। विशेषणान्तर शङ्कते—अथेति। तथापि भावरूपगुणगुण्यादिनिष्ठसमवायसमवायिगतविशेषणविशेष्यभावेऽतिव्याप्तिरित्याह—तथापीति। शङ्कते—अथ गुणगुणिनोरिति। क्रियाकारकयो, कर्मतद्वतोरित्यर्थ। ननु किमनेनाधिकरणमाशङ्क्यते ? यावतात्रैव पूर्वमप्यतिव्याप्तिरुदीरितेति, सत्यम्, दुष्टोऽस्याभिप्राय.। स चाभिप्रायदोषोऽनन्तरमेवाविर्भविष्यति। पञ्चसु हि स्थलेषु समवायसभवस्तदेतेषूक्तविध सबन्धः समवाय, विशेषणविशेष्यभावस्त्वतिरिक्तेष्वपि व्यवहारप्रसवितेति नातिव्याप्तिरिति भाव। तथाप्युक्तातिव्याप्तितादवस्थ्यमिति परिहरति—न, तेषामेवेति। योऽसावभिप्रायदोषः पूर्वमुद्धृतस्तमुद्दिग-

की ही प्रतीति होती है। "आधार्याधारभूतानामिह प्रत्ययहेतु"—इतना ही लक्षण रखने पर कूँडा और उसमें रखे बेरो के संयोग सम्बन्ध मे अतिव्याप्ति होती है, अत सम्बन्धियो का अयुतसिद्धत्व विशेषण दिया। इस प्रकार यह समस्त भाष्य समवाय-लक्षण परक ही है—ऐसा कन्दलीकार श्रीधराचार्य का सिद्धान्त है ( न्या० कं० पृ० १४ )। यह सब अयुक्त है, क्योकि इस अयुतसिद्धिघटित लक्षण की विशेषण-विशेष्यभाव सम्बन्ध मे अतिव्याप्ति होती है। जैसे कि "इह भूतले घटाभाव."—यहाँ भूतल और घटाभाव में अयुतसिद्धि भी है। यद्यपि भूतल, घटाभाव से पृथक् अपने अवयवो के आश्रित है, तथापि घटाभाव का भूतल से पृथक् आश्रय नही (अर्थात् जलादि, दूसरे ही घटाभाव के ही आधार है, भूतल वृत्ति घटाभाव के नही)। इसी प्रकार भूतल और घटाभाव मे आधार्याधारभाव भी है और 'इहप्रत्यय' भी। यदि कहा जाय कि दो भावपदार्थो के उक्त सम्बन्ध को समवाय कहते है, भावाभाव के सम्बन्ध को नहीं। तो भी "इह पटे रूपसमवाय., रूपसमवायवान् पट"—यहाँ पट और रूप-समवाय के विशेषण-विशेष्यभाव सम्बन्ध में भी उक्त लक्षण के घट जाने से अतिव्याप्ति है। यदि कहा जाय कि गुण-गुणी, क्रिया-कारक, अवयव-अवयवी, जाति-जातिमान्, विशेष-विशेषवान् इनके ही उक्त सम्बन्ध को समवाय कहा जाता है। तो ऐसा कहने पर भी उनके पारस्परिक विशे-

तिव्याप्तेः । तत्र समवायस्यैवेहप्रत्ययहेतुत्वं नेतरस्येति चेत्, न, एवमपीहाकाशे शब्द इत्यत्रेहशब्दस्याकाशस्य च वाच्यवाचकसंबन्धे इहप्रत्ययहेतावतिव्याप्तेस्तादवस्थ्यात्। तत्र हि गुणगुणिनोराधार्याधारभूतयोरयुतसिद्धयोरिहप्रत्ययहेतुरिहेतिशब्दाकाशयोरस्ति वाच्यवाचकलक्षणः संबन्धः । किंचाधार्याधारभूतानामिति व्यर्थं विशेषणम् । अयुतसिद्धयोरिहप्रत्ययहेतुः संबन्ध इत्येतावत्यपि लक्षणे भवतामव्याप्त्यतिव्याप्त्यभावात्, अनाधार्याधारभूतयोरिहप्रत्ययस्यैवानुदयात्। अस्तु तर्ह्येतावल्लक्षणमिति चेत्, न, तत्रापि प्रागुक्तवाच्यवाचकसंबन्धेऽतिव्याप्तेः।

भवतु तर्ह्यर्वाचीनमतानुसारेण नित्यः संबन्धः समवाय इति लक्षणमिति चेत्, न, विशेष-

रन्पर्यनुयुङ्क्ते—तत्र समवायस्यैवेति । यद्यपीह पटे रूपमित्यादौ विशेषणविशेष्यभावोऽप्यस्ति, तथापि नासाविहप्रत्ययहेतुः, तत्कस्य हेतोः ? अमुख्यत्वात् । औपचारिकः खल्वयं विशेषणविशेष्यभावः संबन्धः । न च मुख्यसंभवेऽप्यौपचारिकाश्रयणं युक्तम् । न खलु बलवर्मणि क्रौर्यशौर्यशेषविस्तृततरान्तरस्कन्धादिगुणयोगात्सिंहशब्दः प्रवृत्तः सिंहेऽपि तन्निमित्तः प्रयुज्यते, अस्ति हि तदिति, तस्मात्समवाय एव तत्र हेतुरिति । अत्र तावदिदं वक्तव्यम्—कथं विशेषणविशेष्यभावस्यौपचारिकत्वमिति ? नियामकत्वं वा ? संबद्धबुद्धिजनकत्वं वा संबन्धत्वम् ? तच्च सर्वं संयोगादिभ्यो विशेषणविशेष्यभावस्य न विशिष्यते । न च मूलसंबन्धापेक्षत्वादौपचारिकत्वम्, संयोगस्यापि तथात्वप्रसङ्गात् । न च मूलसंबन्धाभावादौपचारिकत्वम्, सर्वत्रासिद्धेः, समवायेऽपि तथाभावप्रसङ्गाच्च । तदेतदपिना सूचयन्दूषणान्तरमाह—एवमपीति । यद्यप्याकाशवाचकपदमात्रवाच्यवाचकभावस्येहप्रत्ययहेतुत्वं नास्ति, तथापीहाकाशे शब्द इत्यत्रेहशब्दस्याकाशस्य च वाच्यवाचकसंबन्धेऽतिव्याप्तिः स्यादित्यर्थः । एतदेव विवृणोति—तत्र हीति । गुणगुणिनोरिति । इहेतिशब्दाकाशयोरित्यर्थः । न च तत्रापि समवाय एवेहप्रत्ययहेतुर्न वाच्यवाचकभाव इति वचनीयम्, तथा सति अगृहीतसंगतिकानामपीहेति पदश्रवणादिहेति बुद्ध्युदयप्रसङ्गात्। अस्ति हि समवाय इति । किंचाधाराधेयभूतानामिति विशेषणं व्यर्थम्, इहप्रत्ययहेतुरित्यनेनैवाधार्याधारभावस्यापि सिद्धत्वादित्याह—किंचेत्यादिना । उत्तरौ चोद्यपरिहारौ विशदौ ।

लक्षणान्तरं शङ्कते—भवत्विति । एतच्चैतद्व्याख्यार्थतयोदयनेन समर्थितं लक्षणम्, तदेव श्रीवल्लभवादिवागीश्वरसर्वदेवानां समतं लक्षणम् । अत्र च संयोगव्यवच्छेदाय नित्यग्रहणम् । आत्मादिव्यवच्छेदाय संबन्धग्रहणम् । ननु न विशेषणविशेष्यभावे लक्षणप्रसक्तिः, तस्य नित्यत्वाभावाद् । घटतद्रूपादिप्रतियो-

षण-विशेष्यभाव सम्बन्ध मे अतिव्याप्ति बनी रहती है। यदि कहा जाय कि 'इह' प्रतीति का हेतु समवाय ही होता है, अन्य विशेषण-विशेष्यभावादि नही। तो भी "इह आकाशे शब्द"—यहाँ पर 'इह' शब्द और आकाश अर्थ के वाच्य-वाचकभाव सम्बन्ध मे अतिव्याप्ति जैसी-की-तैसी ही रहती है, क्योंकि 'इह' शब्द गुण है, आकाश गुणी है, अतः दोनो अयुतसिद्ध भी है। इन अयुतसिद्ध पदार्थों ( 'इह' शब्द और आकाश ) का वाच्य-वाचकभाव सम्बन्ध इह प्रतीति का हेतु भी है। आपके लक्षण में 'आधार्याधारभूतत्व'—विशेषण भी व्यर्थ है, क्योकि 'अयुतसिद्ध पदार्थों के 'इह' प्रत्यय-हेतु सम्बन्ध को समवाय कहते है'—इतने लक्षण की भी कही अतिव्याप्ति या अव्याप्ति नही होती, आधार्याधारभूत्व-रहित सुख और धर्मादि पदार्थों में 'इह'—प्रत्यय की हेतुता ही नही होती, अतः उनकी व्यावृत्ति हो जाती है। 'तब इतना ही लक्षण रखा जाय'—यह भी नही कह सकते, क्योंकि पूर्वोक्त वाच्य-वाचक भाव सम्बन्ध मे अतिव्याप्ति होती है।

सर्वदेवादि नव्य वैशेषिको का "नित्यः सम्बन्धः समवायः"—यह लक्षण भी विशेषण-विशेष्य भाव मे अतिव्याप्त है। यदि कहा जाय कि घट और घट-रूप के अनित्य होने से उनका विशेषण-विशेष्यभाव

णविशेष्यभाव एव व्यभिचारात्। सोऽनित्य प्रतियोगिनोरनित्यत्वादिति चेत्, तथापि नित्य-प्रतियोगिकविशेषणविशेष्यभावे व्यभिचारस्य तुल्यत्वात्, प्रतियोगिनोरनित्यत्वेन संबन्धानित्यत्वापादनस्य समवायेऽपि समानत्वाच्च। भावरूपत्वे सतीति विशेषणादयमदोष इति चेत, न, अजसयोगे व्यभिचारात्। स एव नास्तीति चेत् मैवम्, प्रमाणसिद्धत्वात्—आकाशमात्मना सयुज्यते सयोगित्वाद्धटवत्। न च क्रियावत्त्वमूर्तत्वादिरुपाधि, तद्व्यतिरेकेऽसंयोगित्वस्यैवोपाधित्वात्। किंचाकाशमात्मना सयुज्यत इत्यात्मसंबन्धाधार इति साध्ये क्रियावत्त्वमूर्तत्वयोरुपाधित्वमेव नास्ति, आत्मनि साध्याव्याप्तेः। तस्मादुक्तयुक्त्या न समवायस्य लक्षणसभवः।

गिको ह्यय सबन्ध', स च प्रतियोग्यनित्य इत्यनित्य एवायमिति शङ्कते—सोऽनित्य इति। तत्राय-मेकोऽनेको वा? एकत्वे नित्यवृत्तित्वेनाभिन्नित्यत्वमस्यापि वक्तव्यम्, तथाच तत्रातिव्याप्तिः। अनेकत्वे प्राह—तथापीति। न खलु सर्वत्रानित्ययोरेव विशेषणविशेष्यभाव, नित्यानामप्यात्मतज्जातिप्रभृतीनामात्मत्वजातिमानित्यादौ विशेषणविशेष्यभावदर्शनात्तत्रश्च तत्र न प्रतियोगिद्वारायनित्यत्वमित्यर्थ'। किंचानित्यप्रतियोगिस्थलेऽपि न विशेषणविशेष्यभावस्यानित्यता, समवायेऽपि तथाभावप्रसङ्गादित्याह—प्रतियोगिनोरिति। शिवादित्यमत शङ्कते—भावरूपत्वे सतीति। तथाप्यजसयोगेऽतिव्यापकम्, स हि विभुद्रव्यसयोगत्वान्नान्यतरोभयकर्मभ्या जायते, नापि सयोगज, कारणाकारणसयोगाज्जायमान' खलु कार्याकार्यसयोगः सयोगजसयोगः। न च विभुद्रव्यसयोगस्यैवभावः, तेषामकारणत्वेन तत्सयोगस्य कारणाकारणसंयोगजन्यत्वाभावादतस्तत्रातिव्याप्तिरित्याह—नाजसंयोग इति। नन्वजसयोग एव नास्ति प्रमाणाभावाद्यथाह भाष्यकार—'नाज सयोगोऽस्ति नित्यपारिमाण्डल्यवत्पृथगनभिधानात्' इति। तदेतच्छङ्कते—स एवेति। विभुद्रव्ययोरपि सयोगेऽनुमान मानमाह—आकाशमिति। इदमनुमानमाशङ्क्य मानमनोहरकारो दूषयामास। "तत्र क्रियावत्त्वस्य मूर्तत्वस्य परत्वापरत्वयोर्वोपाधे', आत्माकाशेन न सयुज्यते अमूर्तत्वाद्रूपादिवत्" इति ब्रुवाण.। तत्रोपाधि दूषयति—न चेति। उपाध्यभावसाध्याभावयोरपि व्याप्तिरेष्टव्या, अन्यथा साध्याव्यापकत्वप्रसङ्गात्, सा च नास्ति, सोपाधिकत्वादित्याह—व्यतिरेक इति। रूपादावमूर्तत्वात्मसयोगित्वाभावयोर्व्याप्तावसकोचित्वमुपाधिस्तथा च व्यतिरेकव्याप्तिभङ्गात्साध्योपाध्योरपि व्याप्तिभङ्ग इत्यर्थ.। एतेन मानमनोहरोक्त प्रत्यनुमानमपि निरस्तम्। स्पष्ट च साध्याव्यापक उपाधि।

सबन्ध भी अनित्य ही होता है, तथापि आत्मा और आत्मत्व-आदि नित्य पदार्थो के विशेषण-विशेष्यभाव मे अतिव्याप्ति होती है। सम्बन्धियो के अनित्य होने से सम्बन्ध मे अनित्यता का आरोप तो समवाय मे भी समान ही है (क्योकि उसके सम्बन्धी सर्वत्र नित्य ही नही होते, घट, घट-रूप के समान अनित्य भी होते है)। 'भावरूपत्व' विशेषण देने पर भी नित्य सयोग मे अति-व्याप्ति होती है। 'नित्य सयोग होता ही नही'—ऐसा नही कह सकते, क्योकि "आकाश, आत्मा से सयुक्त होता है, सयोगी होने के कारण, जैसे-घट"—इस अनुमान प्रमाण से सिद्ध है। उक्त अनुमान मे क्रियावत्त्व, मूर्तत्व—आदि उपाधि की आशङ्का नही कर सकते, क्योकि उपाधि मे साध्य-व्यापकता रखने के लिए उपाधि की व्यतिरेकव्याप्ति भी घटानी होगी। किन्तु "जहाँ क्रियावत्त्व नही, वहाँ आत्म संयुक्तत्व भी नहीं"—इस व्यतिरेकव्याप्ति मे असयोगित्व उपाधि है (गुणादि में आत्म-सयुक्तत्व और क्रियावत्त्व—दोनो का अभाव होने से असयोगित्व, आत्म-सयुक्तत्व का व्यापक है। आकाशादि मे क्रियावत्त्व का अभाव रहने पर भी असयोगित्व नही रहता, अत असयोगित्व, क्रियावत्त्वाभाव का अव्यापक है)। दूसरी बात यह भी है कि उक्त अनुमान मे 'आत्म-सयोगित्व' साध्य का अर्थ यदि 'आत्म-सम्बन्धाधारत्व' कर दिया जाय, तब क्रियावत्त्वादि उपाधि भी नही होती, क्योकि आत्मा मे इस साध्य के रहने पर भी क्रियावत्त्व नही, अत. साध्य का व्यापक ही नहीं। इस प्रकार समवाय का लक्षण सम्भव नहीं।

प्रमाणमपि तत्र प्रत्यक्षम् ? अनुमान वा ? नाद्य', तदभवात्। इह तन्तुषु पट इति प्रत्यक्षमस्तीति चेत्, न; विचारासहत्वात्। समवायो ह्याधारबुद्धिं कुर्याद् ? आधेयबुद्धिं वा ? उभयबुद्धिं वा ? सर्वथापि नोपपद्यते। तन्तुपटयोरुभयोरप्याधारबुद्धेराधेयबुद्धेरुभयबुद्धेश्चाविशेषेण प्रसङ्गात्। जातिजातिमन्तौ मिथ सम्बद्धावित्यस्त्येवानुभवान्तरमिहेति चेत्, मैवम्, विकल्पासहत्वात्। तथाहि—अस्मिन्ननुभवे समवायस्तदीयत्वेन वान्यदीयत्वेन वा स्वरूपेण वा प्रथत इति वक्तव्यम् ? नाद्य, तदीयत्वस्य संबन्धान्तरायत्तत्वेनान-

आत्मना सयुज्यते इति कोऽर्थः ? आत्मनिष्ठात्यन्ताभावप्रतियोगित्वानाक्रान्तसयोगाधिकरणमिति। तथाच कथ मूर्तत्वाद्युपाधि समवति ? आत्मन्येव साध्याव्याप्ते। यच्च तेन स्वानुमानेऽद्रव्यत्वमुपाधिमाशङ्क्योक्तमाकाशे तदभावेन साध्याव्याप्तेरिति, तदप्येव साध्यव्याख्याने क्रियमाणे निरवकाशम्, उपाधिवदेव साध्यस्याप्याकाशेऽभावेन साध्यव्याप्तेरीक्ष्यमाणत्वात्। मूर्तत्व च पक्षेतरत्वान्नोपाधिः। तथाहि—परिच्छिन्नपरिमाणवत्त्व मूर्तत्वम्, तत्र परिमाणवत्त्वमित्यनेनैव साध्यव्याप्तिसिद्धौ परिच्छिन्नग्रहण पक्षीकृताकाशतत्तुल्यविभुद्रव्यव्यावृत्त्यर्थमिति कथ न पक्षेतरः ? सोऽयमविदितस्वपरसाध्यसतत्त्वो निर्विषयानेव दूषणाभासानाहोपुरुषिकयैव भाषमाणो 'निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम्' इति न्यायविषयता नातिवतते। नित्यत्वानिरूपणाच्च तद्विशिष्टलक्षणासिद्धि'। तथाहि—तत्किं ध्वसाप्रतियोगित्वम् ? स्वध्वसाप्रतियोगित्व वा ? आद्ये सयोगेऽतिव्याप्तिः, तस्यापि यत्किंचिद्ध्वसाप्रतियोगित्वात्। नेतर', आत्माश्रयात्, प्रतियोगिध्वसादेश्चानिरूपणात्। किंच—

तत्तल्लक्षणवल्लक्ष्ये तत्तल्लक्ष्म न विद्यते। आत्माश्रयादतोऽव्याप्तिस्तेषु स्यात्सर्वलक्ष्मणाम् ॥ १ ॥
नच तेषामलक्ष्यत्व षट्पदार्थातिरेकत.। नचात्यन्तमसत्त्व तद्बुद्धेर्बाधाद्यभावत' ॥ २ ॥
नाभाववर्गनिक्षेप. तेषामप्रतियोगिन.। प्रतियोग्यनिरूप्यस्याभावता नातिसक्तित. ॥ ३ ॥
किंच—'तत्तकालेषु लक्ष्माणि वर्तेरन्वा न वा वद। वर्तेरन् यदि च तत्तत्कालेऽतिव्याप्तिरापतेत् ॥ ४ ॥
न चेत्तदा तदा स्वेषु लक्ष्येष्वव्याप्तिरक्षता। न च तत्समवायित्व तत्तत्तद्धर्मेष्वसभवात् ॥ ५ ॥

नित्यः सबन्ध इति लक्षण किं सप्रतिपन्नसयोगादिसबन्धस्य ? तदतिरिक्तस्य कस्यचिद्वा ? नाद्यः, अपसिद्धान्तापातात्। न द्वितीय', तस्मिन्प्रमाणाभावादित्यभिसधिराह—**प्रमाणमपीति**। ननु किमिति प्रमाणाभाव' ? प्रत्यक्षस्य सत्त्वादिति शङ्कते—**इह तन्तुष्विति**। यथाहि—तन्तुबुद्धेः पट बुद्धेश्च विषयतया हेतुभूतौ तन्तुपटौ प्रतीयेते, तथेहेति बुद्धेर्जनकतया समवायोऽपि प्रतीयते इत्यभिमान' प्रत्यक्षवादिन.। दूषयति—**नेति**। पक्षत्रयेति दूषणमाह—**तन्तुपटयोरिति**। आधारबुद्धिमात्रजनकत्वे इहतन्तुषु पटेषु इत्युभयत्राप्याधारबुद्धि कुर्यात्। द्वितीये तु तन्तव पटे वर्तन्त इत्याधेयबुद्धिमेव कुर्यात्। तृतीये तु तन्तुष्वाधाराधेयबुद्धि पटेऽप्याधाराधेयबुद्धि कुर्यादित्यर्थः। अविशेषेणोभयबुद्धेरिति चान्वय। प्रत्यक्षान्तर शङ्कते—**जातिजातिमन्ताविति**। **तदीयत्वेनेति**। जातिजातिमदधीनत्वेनेत्यर्थ। **स्वरूपेण वेति**। अपराधीनतया वेत्यर्थ.। **नाद्य इति**। तत्सबन्ध विना तदीयत्वानुपपत्ते समवायस्यापि संबन्धान्तर-

**प्रमाण भी उसमें कौन है ? प्रत्यक्ष ? या अनुमान ? (द्र० न्या० ली० पृ० ७०४)। प्रत्यक्ष यदि है तो कौन ? "इह तन्तुषु पट"—यह प्रत्यक्ष तो समवाय मे प्रमाण हो नही सकता, क्योकि समवाय, आधार-बुद्धि का जनक होता है ? या आधेय-बुद्धि का ? या उभय-बुद्धि का ? किसी प्रकार भी बनता नहीं। यदि आधार-बुद्धि का जनक है, तब तन्तु, पट—दोनो मे आधारता की ही प्रतीति होनी चाहिए, इसी प्रकार आधेय-बुद्धि का जनक होने से दोनो मे आधेयता की और उभय-बुद्धि का जनक होने से दोनों मे उभय-प्रतीति होनी चाहिए। "जातिजातिमन्तौ मिथ सम्बद्धौ"—यह दूसरा प्रत्यक्ष भी समवाय में प्रमाण नही हो सकता, क्योकि इस प्रत्यक्ष मे समवाय, जात्यादि सम्बन्धित्व रूप से प्रतीत होता है ? या अन्य-सम्बन्धित्व रूप से ? या स्वतन्त्र रूप से ? प्रथम पक्ष मे सम्बन्धित्व**

वस्थापातात्। न द्वितीय॰, अन्यत्रैव संबन्धबोधप्रसङ्गात्। न तृतीय॰, क्वचिदपि संबन्धप्रत्ययानुपपत्तेः। असत्येव संबन्धे तदीयत्वमनुभवसिद्धमिति चेत्, न, जात्यादेरप्यसत्येव सबन्धे तदीयत्वानुभवप्रसङ्गात्, असत्ख्यातिप्रसंगाच्च। असत्येव संबन्धे संबन्धिभ्यां निरूपणात्तदीयत्वव्यवहारे जातेरपि संबन्धान्तरमन्तरेण व्यक्त्या निरूपणात्तदीयत्वव्यवहारप्रसङ्ग॰। नानुमानमपि, लिङ्गाभावात्। विवादाध्यासित इहप्रत्ययः सबन्धपुर॰सरोऽबाधितेहप्रत्ययत्वादिह कुण्डे बदराणीतिप्रत्ययवदित्यनुमानमस्तीति चेत्, न, विशेषणविशेष्यभावाधाराधेयभावसबन्धादिना सिद्धसाधनत्वात्। विशेषणविशेष्यादेरेव मूलसंबन्धपुरःस-

---

वत्त्वेऽनवस्था स्यादित्यर्थ । अनवस्थापि द्वितीयपक्षे द्रष्टव्या। प्रथमपक्षेऽनवस्थापरिहार शङ्कते—**असत्येव सबन्ध इति**। इह गवि गोत्वमित्यादौ तदायत्वेनैव समवाय॰ प्रतिभाति। न च तावता सबन्धवत्त्वम्, अप्रतातः। न च सबन्धाभावे तदायत्वबुद्ध्याभावः, जातिव्यक्तिसमवायबुद्धीनामेव स्वभाववशात्तदायत्वव्यवहारजनकत्वादिति भावः। एव तर्हि समवायोऽपि न सिद्ध्यति, तत्तत्स्थलेऽपि सबन्धिबुद्धिभिरेव जात्यादीना तदीयत्वबुद्धिसभवादिति दूषयति—**न जात्यादेरपीति**। दूषणान्तरमाह—**असत्ख्यातीति**। यदि हि सबन्धव्यतिरेकेण तदीयत्व प्रतीयते, तदा सबन्धाभावे एव तत्सबन्धित्वप्रतीतिरित्युक्त स्यात्, ततोऽन्यत्र सदन्यत्र प्रतीयत इत्यन्यथाख्यातित्यागः असत्ख्यातिस्वीकारश्च स्यात्। न चान्यत्र सतः समवायस्य तत्र प्रतीति॰, अन्यत्रापि तदभावस्यापादितत्वादिति भाव॰। विषयाभावे जायमानशुक्तिरतससर्गप्रत्ययवद्भ्रान्तित्वं वा असत्ख्यातित्वम्। ननु समवायस्य समवायिभ्या यदिद निरूप्यत्व तत्कृतेय तदीयत्वख्यातिस्तेन नासत्ख्यातिप्रसङ्गः, निरूप्यनिरूपकभावस्यैव तदालम्बनत्वादिति, तत्राह—**असत्येवेति**। तदेव प्रत्यक्ष दूषयित्वाऽनुमान दूषयति—**नानुमानमिति**। अनुमान शङ्कते—**विवादेति**। इह पटे रूपसमवाय इत्यादाहप्रत्यये बाधपरिहाराय विवादाध्यासितग्रहणम्। जात्यादिप्रतियोगीत्यर्थः। इह शङ्खे पीतमित्यादिप्रत्ययेषु व्यभिचारपरिहारायाबाधितग्रहणम्। जात्यादिप्रतियोगीत्यर्थ। इह शङ्खे पीतमित्यादिप्रत्ययेषु व्यभिचारपरिहारायाबाधितग्रहणम्। असबद्धपदार्थप्रत्ययव्यवच्छेदाय इति विशेषणम्। तथा च कुण्डबदरादिवज्जातिषु सयोगासभवात्समवायसिद्धिरित्यर्थ॰। नेद समवायसाधकम्, जात्यादेर्विशेषणविशेष्यभावादिसाधकतयाप्यर्थान्तरत्वादिति परिहरति—**न, विशेषणेति**। नन्विहप्रत्ययस्य सबन्धपुरस्सरत्वमनुमिन्वतामयमभिप्राय॰—यत्तत्रत्यविशेष्यभावस्य मूलभूतः सेत्स्यतीति शङ्कते—**विशेषणविशेष्यादेरिति**। तत्किमिदानीं जात्यादिगोचरो विशेषणविशेष्यभाव॰ सबन्धान्तर-

---

**का भान सम्बन्धान्तर के अधीन होने के कारण अनवस्था होती है। द्वितीय पक्ष में जात्यादि से अन्यत्र ही सम्बन्ध का भान होना चाहिए। तृतीय पक्ष ( समवाय को स्वतन्त्र ) मानने पर अनुयोगी मे या प्रतियोगी मे—कही पर भी समवाय के सम्बन्ध का भान नही होगा। यदि कहा जाय कि सम्बन्धान्तर की अपेक्षा के बिना ही समवाय में जात्यादि-सम्बन्धित्व का भान हो जायगा, प्रथम पक्ष मे अनवस्था क्यो होगी ? तो यह नहीं कह सकते, क्योंकि यदि बिना सम्बन्ध के ही सम्बन्धित्व का भान होगा, तब तो समवाय के बिना ही जाति और जातिमान् में परस्पर सम्बन्धित्व का भान हो जायगा और असत्ख्याति की भी आपत्ति होगी ( अर्थात् असत्समवायादि की प्रतीति माननी पडेगी, जैसा कि बौद्ध मानते है )। समवाय का अपने सम्बन्धियो से कोई सम्बन्ध न रहने पर भी समवाय में सम्बन्धि-निरूपितत्व मान लेने पर समवाय सम्बन्ध के बिना ही जाति में भी व्यक्ति-निरुपितत्व भी माना जा सकेगा। कोई लिङ्ग न होने से समवाय मे अनुमान प्रमाण भी नही हो सकता। "विवादास्पद इह प्रत्यय ( इह घटे घटत्वम्—यह ज्ञान ), सम्बन्ध-पूर्वक होता है, अबाधित इहप्रत्यय होने के कारण, 'इह कुण्डे बदरम्'—इस प्रतीति के समान"—इस अनुमान में विशेष्य-विशेषणभावादि को लेकर सिद्ध-साधनता है। यदि कहा जाय कि विशेषण-विशेष्यभाव में भी मूल**

रत्वं सिषाधयिषितमिति न सिद्धसाधनत्वमिति चेत्, न, इह भूतले घटाभाव इत्यस्मिन्नेव विशेषणविशेष्यभावप्रत्ययेऽनैकान्त्यात्।

यच्च लीलावतीकारेणानुमानमुक्तम्—"जात्यादिगोचरो विशिष्टव्यवहार' संबन्धनियतो भावमात्रविषयाबाधितविशिष्टव्यवहारत्वात्सघट भूतलमिति व्यवहारवत्, सामानाधिकरण्यज्ञानमबाधितसंबन्धज्ञानपुर.सरमबाधितसामानाधिकरण्यज्ञानत्वाद्दण्डकुण्डले देवदत्त-संसृष्टे इति ज्ञानवत्" इति, तदप्ययुक्तम्; प्रागुक्तनीत्या सिद्धसाधनत्वात्। अथ विशेषण-विशेष्यभावादे: संबन्धत्वमेव नास्ति, अद्विष्ठत्वात्, द्विष्ठत्वे चोभयत्रापि विशेषणबुद्धेर्विशेष्य-

पूर्वक. विशेषणविशेष्यभावत्वाद्दण्ड्यादिष्विवेत्यनुमिनोषि? तथाचानैकान्तिकत्वम्। इह भूतले घटा-भावः, इह पटे रूपसमवाय." इत्यादिविशेषणविशेष्यभावस्य सबन्धान्तरपूर्वकत्वाभावादिति दूषयति—नेति। अत्र च शङ्कायामपि विषयवाचकपद विषयिप्रत्ययस्य लक्षकम्, प्रत्ययशब्दो वा परिहारे प्रमाद-लिखितः, अतो विषयस्य लक्षकत्वे "तत्प्रत्ययेनैकान्तिकत्वाभिधानमयुक्तम्" इति नाशङ्कितव्यम्।

अत्र लीलावतीकारः पूर्वपक्षावसरे स्वयमेवैतानि दूषणानि उद्गीर्य सिद्धान्तेऽनुमिमाय। तदनुवदति—यच्च लीलावतीकारणेति। अघटं भूतलमित्यादिषु बाधपरिहारार्थं जात्यादिगोचर इत्युक्तम्। अबाधि-तविशिष्टव्यवहारत्वादित्युक्ते अघटं भूतलमिति विशिष्टव्यवहारेऽनैकान्तिकत्वम्, तदर्थं भावमात्रेत्युक्तम्। भावमात्रविषये विशिष्टव्यवहारत्वादित्युक्ते पीतः शङ्ख इत्यादिव्यवहारेऽनैकान्तिकता, तदर्थमबाधितेत्युक्तम्। इमौ घटपटावित्यादिव्यवहारव्यावर्तनाय विशिष्टपदम्। सघटं भूतलमित्यत्र संयोगमादाय साध्यसिद्धिः। अनुमानान्तरमपि तदीयमुद्भावयति—सामानाधिकरण्यज्ञानमिति। अबाधितसामानाधिकरण्यज्ञानं पक्षः। इतरथा भ्रान्तिस्थले बाधासिद्ध्योः प्रसङ्गात्। रूप समवेतमिद रजतमित्यादिस्थलेष्विवारोपितसब-न्धज्ञानेनार्थान्तरतानिवृत्त्यर्थमबाधितग्रहणम्। तादृशस्थलेष्वनैकान्तिकतानिवृत्त्यर्थं च हेतावबाधितग्रह-णम्। 'घटः पटः' इत्यादिज्ञानव्यवच्छेदाय सामानाधिकरण्यपदम्। इद समवायस्य प्रत्यक्षत्वसाधनाय प्रत्युक्तम्; "न्यायनये तु प्रत्यक्ष एव समवायः" इत्युपक्रम्य नैयायिकमतेन समवायप्रत्यक्षतोपन्यासात्। तदेव दूषयति—तदप्ययुक्तमिति। प्रागुक्तनीतिर्विशेषणविशेष्यभावः सबन्ध'। ननु विशेषणविशेष्यभा-वादेः सबन्धत्वमेव नास्ति, तत्कुतस्तेनार्थान्तरतति शङ्कते—अथेति। नन्वद्विष्ठत्वमेव कुतः? तत्राह—द्विष्ठ-

सम्बन्ध का अनुमान कर लिया जायगा—"विशेषणविशेष्यभावप्रत्यय. सम्बन्धपुरस्सर', विशेषण-विशेष्यभावप्रत्ययत्वाद् दण्डिपुरुष इति प्रत्ययवत्।" तो ऐसा नहीं कह सकते, क्योंकि इस अनुमान का हेतु "इह भूतले घटाभाव"—इस प्रतीति से व्यभिचरित है।

लीलावतीकार ने जो (न्या० ली० पृ० ७०८ पर) अनुमान किया है—'जातिविषयक (इह गवि गोत्वम्—आदि) विशिष्ट व्यवहार, सम्बन्ध-नियत होता है, भावमात्रविषयक, अबाधित, विशिष्ट व्यवहार होने के कारण, जैसे—'सघटं भूतलम्' व्यवहार'। न्याय-मत से समवाय में प्रत्यक्षता-सम्पादन करने के लिए लीलावतीकार ने ही (न्या० ली० पृ० ७१८) एक दूसरा अनुमान सूचित किया है—"गौरयम्—आदि गोत्व और पुरोवर्तित्व का अवगाही सामानाधिकरण्य के ज्ञान, अबाधित सम्बन्ध-ज्ञान से जन्य होता है, अबाधित सामानाधिकरण्य-ज्ञान होने के कारण, जैसे—'दण्डकुण्डले देवदत्तसंसृष्टे'—यह ज्ञान।" इन अनुमानों में भी वही विशेषण-विशेष्यभावादि सम्बन्धों को लेकर सिद्ध-साधनता दोष है। यदि शङ्का हो कि सम्बन्ध वही होता है, जो अपने दोनों सम्बन्धियो में रहे, किन्तु विशेषण-विशेष्यभाव अपने दोनो सम्बन्धियो में नहीं रहता, अपितु विशेषण में केवल विशेषणभाव और विशेष्य में केवल विशेष्यभाव ही रहता है। यदि दोनों (विशेषणता और विशेष्यता) दोनों सम्बन्धियों में माने जायँ, तब तो दोनों में समानरूप से विशेषणता और विशेष्यता—

बुद्धेश्चाविशेषेण जननप्रसङ्गात्, एवमाधाराधेयभावोऽपि, ततो न सिद्धसाधनतेति चेत्, मैवम्, द्विष्ठत्वेऽपि कुण्डे बदराणीति प्रतिनियताधाराधेयभावबुद्धिजनकसंयोगवत्, तन्तुषु पट इति प्रतिनियतप्रतीतिजनकसमवायवच्च बुद्धिवैचित्र्यजननोपपत्तेः, प्रतिवादिनाङ्गीकृतस्य वाद्यनङ्गीकारमात्रेण सिद्धसाधनतायाः परिहर्तुमशक्यत्वात्। किंचेदमबाधितत्वं सर्वानुमानेषु विवक्षितम्? किं प्रत्यक्षेणाबाधितत्वम्? उत युक्त्या? किं वा व्यवहारे बाधराहित्यम्? नाद्य; नील नभः प्रादेशिक सवितेत्यादिविशिष्टव्यवहारे व्यभिचारात्। नापि द्वितीय',

---

त्वे चेति। विशेषणविशेष्यत्वनियमो न स्यादित्यर्थ। इममेव न्यायमाधाराधेयभावेऽप्याह—एवमिति। तत्रापि बदरादेराधारत्व कुण्डादेराधेयत्व च प्रतीयेत इत्यर्थः। दूषयति—मैवमिति। यथा हि कुण्डबदरसंयोगस्य द्विष्ठत्वाविशेषेऽपि कुण्ड एवाधारबुद्धिं करोतीति ब्रूषे, नतु बदरेषु, बदरेष्वेवाधेयबुद्धिम्, नतु कुण्डे, तत्कस्य हेतोः? स्वभावविशेषादेव। एवमाधाराधेयभावादेरपीत्यर्थः। स्यान्मतम्—न संयोगित्वमात्रात्कुण्डादेराधाराधेयभावः, किं तर्हि? बदरपतनप्रतिबन्धकत्व कुण्डस्य तदाधारत्वम्, बदराणा च तत्प्रतिबद्धगुरुत्वाधिकरणत्व तदाधेयत्वम्। तच्च द्वय प्रतिनियतमेवेति वैषम्यमिति, तत्राह—तन्तुषु पट इतीति। न हि तत्रावयविगुरुत्वमवयवैः प्रतिबध्यते। नित्यप्रतिबन्धप्रसङ्गेनावयविनो नियमेन पतनाभावप्रसङ्गात्, रूपाद्याधारत्वाभावप्रसङ्गाच्च। न हि तेषा पतनमस्ति यत्प्रतिबन्धकतया तदाधारत्वं स्यात्। नचौपचारिकत्वम्, मुख्ये बाधाभावात्, वैपरीत्यस्यापि सुवचत्वाच्च। तस्मात्तन्तुषु पट इत्यत्रोभयोः समवायाश्रयत्वाविशेषेऽपि समवाये स्वभावविशेषादेव तन्तुष्विहबुद्धिः पटे चाधेयबुद्धिरित्यङ्गीकार्यम्, सच स्वभावविशेषोऽत्रापि समान। अथ तत्र समवायस्यैकत्वेऽपि व्यञ्जकशक्तिवैचित्र्यात्प्रतिनियम., यथोक्त भाष्यकृता समवायैकत्वेन द्रव्यत्वगुणकर्मसङ्कराशङ्काया' परिहारमुपसंहरता—'यथा कुण्डदध्नो. संयोगैकत्वेपि भवत्याश्रयाश्रयिभावनियम., तथा द्रव्यत्वादीना समवायैकत्वेऽपि व्यङ्ग्यव्यञ्जकशक्तिभेदादाधाराधेयत्वनियम इति मतम्, तर्हि इहाप्याधाराधेयभावस्यैकत्वेऽपि व्यञ्जकशक्तिवैचित्र्याद्वैचित्र्यव्यवहार' इति समं समाधानमन्यत्राभिनिवेशादिति भावः। किंच प्रतिवादिना स्वसिद्धान्तानुरोधेनाधाराधेयादिसम्बन्धेष्वर्थान्तरत्वेऽभिहिते न वैशेषिकेण स्वानङ्गीकारमात्रात्तन्‍उक्यपरिहारम्, तस्य स्वसिद्धान्तात्प्रच्यावनाभावादित्याह—प्रतिवादीति। एवमर्थान्तरतामुक्त्वानुमानत्रयहेतुष्वबाधितेति विशेषणप्रयुक्तदूषणान्याह—किंचेदमिति। नाद्य इति। प्रत्यक्षेणाबाधितविशिष्टव्यवहारत्व नील नभ इत्यादिष्वस्ति, नहि तत्र प्रत्यक्षेण वैपरीत्यमनुभूयते, तदयोग्यत्वात्तेषाम्, अथापि न साध्यमस्ति, नैल्यादेर्वियदादेश्च सम्बन्धासंभवादित्यर्थः। युक्तिबाधविरहितत्वमबाधितत्वं प्रकृतेप्यसिद्धमिति सप्रपञ्च दर्शयति—नापि द्वितीय इत्यादिना। यदि समवाय स्वतन्त्रस्तदा स्वतन्त्रयोः संयोगव्यतिरिक्तसम्बन्धाभावादद्रव्यत्वेन तस्याप्यसंभवात्सम्बन्धिभ्यामसम्बद्ध इति वक्तव्यम्। असम्बद्धस्य च न तद्घटकत्व-

---

दोनों की प्रतीति होनी चाहिए। यही दोष आधाराधेयभाव मे भी है, अत सिद्ध-साधनता क्यों होगी? तो यह शङ्का युक्त नही, क्योंकि जैसे संयोग द्विष्ठ होने पर भी कुण्ड में आधारतामात्र और बदर में आधेयतामात्र की प्रतीति उत्पन्न करता है, एवं जैसे समवाय द्विष्ठ होने पर भी तन्तुओं में आधारतामात्र और पट में आधेयतामात्र का प्रत्यायक होता है, ठीक वैसे ही अपने स्वभावविशेष के कारण द्विष्ठ विशेषणविशेष्यभाव भी कहीं विशेष्यतामात्र और कहीं विशेषणतामात्र की बुद्धि को जन्म देता है (द्र० वै० भा० पृ० १०३)। प्रतिवादी जिस बात को मानता है, वादी के न माननेमात्र से सिद्ध-साधनता का परिहार नही कर सकते। उक्त दोनों अनुमानों से 'अबाधितत्व' का क्या अर्थ है? क्या प्रत्यक्षाबाधितत्व? या युक्त्यबाधितत्व? या व्यवहार से बाध-रहितत्व? प्रथम पक्ष मानने पर "नील नभ"—आदि विशिष्ट व्यवहार से व्यभिचार होता है, क्योकि वहाँ 'सम्बन्धपूर्वकत्व' साध्य न रहने पर भी प्रत्यक्षाबाधितत्व-घटित हेतु रह जाता है। द्वितीय पक्ष भी उचित नही, क्योकि

युक्तिबाधविरहस्यात्राप्यसिद्धेः । तथाहि—समवायः स्वतन्त्रः ? परतन्त्रो वा ? नाद्यः, समवायिभ्यामसंबन्धे पदार्थान्तरवत्तद्घटकत्वाभावप्रसङ्गात् । नापि द्वितीयः, संबन्धिभ्यां सबन्धे संबन्धान्तरसापेक्षत्वेनानवस्थाप्रसङ्गात् । अथ समवायः सबन्धिभ्यां संबन्धे संबन्धान्तरं नापेक्षते, तस्य संबन्धिसबन्धनपरत्वात्, नहि तस्मिन्सति संबन्धिनावसंबद्धौ भवतोऽतो नानवस्थेति चेत्, न, सयोगस्याप्युक्तनीत्या सबन्धान्तरानपेक्षत्वप्रसङ्गात् । नापि तृतीयः, नीलं नभ इत्यादावपि व्यवहारे बाधाभावेन व्यभिचारस्य तादवस्थ्यात् ।

घटस्तद्वृत्त्यनित्यान्यभावसबन्धवानयम् ।
संबन्धित्वादितिस्याच्चेन्नाभावे व्यभिचारतः ॥१५॥

अयं घटः एतद्घटनिष्ठानित्यत्वानधिकरणभावरूपसबन्धवान्सबन्धित्वात्पटवदिति चेत्, मैवम्, अभावे हेतोर्व्यभिचारात्, तस्यापि विशेषणविशेष्यभावसबन्धेन संबन्धित्वाङ्गीकारात् । अथ

---

मतिप्रसङ्गादित्याह—**नाद्यः, समवायिभ्यामिति** । परतन्त्रपक्षे दूषणमाह—**नापि द्वितीय इति** । पराधीनं हि परतन्त्रं नाम, नचासबद्धस्य तदधीनता, अतिप्रसङ्गात् । तथाचानवस्थेति भावः । ननु सबन्धिभ्यां सबद्धोऽपि समवायो न सबन्धान्तरेण, येनानवस्था स्यात्, अपि तु सबन्धात्मकतया, स्वभावादेव । यथाहुर्भाष्यकाराः—'यथा द्रव्यगुणकर्मणां सदात्मकस्य स्वभावस्य नान्यः सत्तायोगोऽस्ति, एवमविभागिना वृत्त्यात्मकस्य समवायस्य नान्या वृत्तिरस्ति' इति । तदेतच्छङ्कते—**अथेति** । सबन्धिनोर्यत्सबन्धनं घटनं तत्परत्वात्तत्स्वरूपत्वादित्यर्थः । एतदेव विवृणोति—**नहि तस्मिन्निति** । अयमत्र ग्रथितोऽर्थः—समवायः सबन्धान्तरेण सबद्धः सबन्धित्वाद्घटवदिति सिद्धान्तिनोऽभिमतम् । तत्र चासबन्धत्वमुपाधिरिति पूर्वपक्षिणोभिप्रेतम्, तत्र सिद्धान्ती सयोगे साध्याव्यापकतामाह—**न संयोगस्यापीति** । न चासमवायत्वमुपाधिः, पक्षेतरत्वात् । नचातेजस्त्वन्यायः, सप्रतिपन्नबाधकाभावादिति । व्यवहारे बाधाभावोऽबाध्यत्वमिति तृतीयपक्षे व्यभिचारमाह—**नापि तृतीय इत्यादिना** । एतेन "विवादाध्यासितं नित्यसबन्धेन संबद्धं द्रव्यत्वादाकाशवत्" इति मानमनोहरकारोक्तमपि निरस्तम्, विशेषणविशेष्यभावेनार्थान्तरत्वादिति ।

अनुमानान्तरमुद्भावयति श्लोकेन—**घट इत्यादिना** । सगृहीतमनुमानं विवृणोति—**अयं घट इति** । एतद्घटनिष्ठश्चानित्यत्वानधिकरणश्च भावरूपश्च यः सबन्धस्तदधिकरणमिति योजना । विशेषणविशेष्यादिरूपाभावात्मकसबन्धेनार्थान्तरतानिवृत्त्यै भावग्रहणम् । भावरूपसबन्धवानित्युक्ते सयोगेनार्थान्तरता, तदर्थमनित्यत्वानधिकरणमित्युक्तम् । तथाचाप्रसिद्धविशेषणता, तन्निवृत्त्यर्थं एतद्घटनिष्ठेत्युक्तम् । घटान्तरसयोगे साध्यप्रसिद्धिः, तस्या नित्यत्वाधिकरणत्वेपि एतद्घटनिष्ठत्वे सत्यनित्यत्वानधिकरणत्वमस्त्येव, एतद्घटनिष्ठत्वानधिकरणत्वात् । गुणादयश्च पक्षतुल्या इति न व्यभिचाराशङ्कावकाशः । नाभावे व्यभिचारतः इत्यशं व्याचष्टे—**अभाव इति** । नहि तस्य भावरूपसबन्धाधिकरणत्वसभवः, अभावस्य भावाधिकरण-

---

युक्तिरूप बाध रहितत्व प्रकृत समवाय-घटित व्यवहार में भी सिद्ध नहीं । समवाय स्वतन्त्र है ? या परतन्त्र ? यदि स्वतन्त्र है तब तटस्थ पदार्थान्तर के समान ही वह तन्तु, पटादि का घटक ( योजक या वैशिष्ट्यापादक ) न हो सकेगा । द्वितीय ( स्वतन्त्र ) पक्ष मे समवाय अपने सम्बन्धियो से सम्बन्ध स्थापित करने के लिए सम्बन्धान्तर की यदि अपेक्षा करता है, तब अनवस्था होगी और यदि सम्बन्धान्तर की अपेक्षा न करके ही सम्बन्धियो मे वैशिष्ट्यापादक है, तब उसी प्रकार संयोग भी सम्बन्धान्तर (समवाय) की अपेक्षा के बिना ही अपने सम्बन्धियों का योजक हो जायगा । तृतीय (व्यवहार में बाध-रहितत्व) पक्ष मानने पर भी "नीलं नभ "—आदि व्यवहार में व्यभिचार जैसा-का-तैसा है ।

"यह घट, एतद्घट-निष्ठ, अनित्य-भिन्न, भावरूप सम्बन्धवाला है, सम्बन्धी होने के कारण, पट के समान"—इस अनुमान का हेतु भी अभाव में व्यभिचरित है, क्योकि अभाव मे उक्त साध्य

भावत्वादिति हेतु , तथापि समवाये व्यभिचारात् । द्रव्यत्वादिति प्रयोगेऽपि संयोगनित्यतापादकतयार्थान्तरत्वप्रसङ्ग । न चानित्यस्य घटादेर्नित्यसंबन्धाधिकरणत्वानुपपत्ति. , समवायाधारत्ववत्तदुपपत्ते । अतो यथा समवायस्य स्वभावसामर्थ्यादेवात्मनि परत्र च सबद्धव्यवहारहेतुत्वम्, एव गुणगुण्यादेरपि स्वभावसमर्थ्यादेव संबद्धव्यवहारहेतुत्वोपपत्तेर्न कल्पनागौर-

त्वात् । अथ च विशेषणविशेष्यभावेन तत्र सबद्धत्वमस्तीत्यर्थ. । अभावे हेतोर्वृत्तिमेव दर्शयति—तस्यापीति । हेत्वन्तर शङ्कते—अथेति । तथापि समवायेऽनैकान्तिकता, अद्रव्यत्वेनासयोगित्वादनवस्थाभयाच्च न समवायवत्त्वम्, अथ च भावत्व समवायस्यास्तीत्यर्थ । अस्तु तर्हि द्रव्यत्वादिति हेतुस्तथा च न व्यभिचारोपद्रवस्तत्राह—द्रव्यत्वादितीति । इद हि भावरूपे नित्ये कस्मिश्चित्सबन्धे विश्राम्यतीति, तथाच सयोगनित्यतयापि सार्थक्यादर्थान्तरमित्यर्थ. । ननु कथमर्थान्तरता, यावता सयोगस्य नित्यतैव न सभवति ? तन्नित्यत्वेऽनित्यघटादिनिष्ठत्वानुपपत्तेः । अथ कथमनुपपत्तिः ? घटाद्यभावदशायामनाधारस्य स्थित्यनुपपत्तेः, असमवेतस्य च गुणत्वानुपपत्ति. कदाचिदसमवेततया स्थितस्य युतसिद्धतया कदाचिदप्यसमवायादिति, तत्राह—न चानित्यस्येति । तत्किमियं राजाज्ञा ? नेत्याह—समवायेति । अयमभिसन्धिः—षण्णामपि पदार्थानामित्युपक्रम्याश्रितत्व चान्यत्र नित्यद्रव्येभ्य इति भाष्यकारैर्भाषणात्समवायस्याश्रितत्व वक्तव्यम्, तत्रानित्यघटादिविगमे यः परिहार. स चात्रापि भविष्यति । अथ तत्र समावस्यैकत्वात्कतिपयनित्यपदार्थद्वयाश्रिततया नाश्रितस्वभावताव्याघात. । सयोगस्यैक्यं केन वार्यते ? अथ तत्र घटसयोगः पटसयोग इति बुद्धिभेदात्सयोगभेद , समवायेऽपि दीयता दृष्टिः । "अस्ति रूपसमवाय. गोत्वसमवायः" इति बुद्धिभेद' । अथ घटासमवेतसयोगस्य घटगुणत्वानुपपत्ति', युतसिद्धतया च समवायानुपपत्तिरिति नूनं बधिर इव भवाल्लक्ष्यते, कथमपरथा समवायमेव निराकुर्वन्तं प्रत्यननुरूपाणि ईदृशानि च वचनानि जल्पसि ? किंच—

असंसिद्धस्य रूपादे. समवायो न सिद्ध्यति । समिद्धस्यापि रूपादे. समवायो न सिद्ध्यति ॥

अलब्धात्मकस्य रूपादे. सबन्धित्वाभावाल्लब्धात्मकस्य सबन्धो वक्तव्यस्तथाचोग्रुलगुडवृत्तान्तापात इति, तस्मात्साधूक्तम्—समवायाधारत्ववत्तदुपपत्तेरिति । तत्कि समवायनाममात्र एवायुष्मत. प्रद्वेषः ? न त्वर्थे ? यावता भवतापि भावरूपनित्यसबन्धः सयोगो नाम स्वीकृत इति । तदिद भिक्षुकपादप्रसारण पूर्ववादिन. परिहरन्नुपसहरति—अतो यथेति । नास्माभिस्तादृशः सयोगः स्वीक्रियते, कथ तर्हि न गुणादीनामनन्यत्वापत्तिस्तत्सबन्धव्यवहारस्य वा न निर्विषयता ? तत्तत्स्वभाववशादेवतयोरुपपत्तिरित्यवेहि । तथासति धर्मधर्मिभावस्यैवोद्धारप्रसङ्ग इति चेन्नोच्चैर्भणितव्यम्, यदि कोऽप्यभ्यर्णमाकर्णयेन्महदेतदद्वैतवादिभ्याऽस्मभ्य मर्मोद्घाटितं स्यादिति, अवश्य च समवाय स्वीकृत्यापि स्वभाववाद एवालम्बनं तदवश्यापेक्षणीयस्वभाव एव सर्वत्राश्रीयता किमनवस्थाकल्पनागोरवलौहगन्धाघायिनाऽप्रामाणिकेन समवाय-

के न रहने पर भी विशेषण विशेष्यभाव सम्बन्ध के द्वारा सम्बन्धित्व ( प्रकृत हेतु ) रह जाता है । यदि 'भावत्व' हेतु बनाया जाय, तब भी समवाय में व्यभिचार होता है, ( क्योकि अनवस्था के भय से वहाँ समवायादि सम्बन्धान्तर मानना सम्भव नही और भावत्व हेतु वहाँ पर भी रहता है )। यदि 'द्रव्यत्व' हेतु बनाया जाय, तब भी सयोगरूप सम्बन्ध मे नित्यतामात्र का आपादन हो सकेगा, अतः अर्थान्तरता होती है । अनित्य घटादि मे नित्य सम्बन्ध की आधारता अनुपपन्न नही, क्योकि समवायरूप नित्य सम्बन्ध की अधिकरणता के ही समान दूसरे भी नित्य सम्बन्ध की अधिकरणता बन जायगी । अत जैसे अपने स्वभाव-विशेष से समवाय सर्वत्र सम्बद्ध-व्यवहार का हेतु होता है, वैसे ही गुण-गुणी-आदि भी अपने स्वभाव सामर्थ्य से ही सम्बद्ध-व्यवहार के हेतु बन जायँगे, अत ऐसा समवाय मानने की आवश्यकता क्या ? जिसके मानने मे व्यर्थ का कल्पना-गौरव

वानवस्थादुःस्थसमवायस्वीकारावकाशः। तदेवं लक्षणासम्भवात्प्रमाणाभावाच्च न समवायस्य द्रव्यादिभ्यो भेदसिद्धिः। अतो न क्वापि लक्षणभेदाद्भेदसिद्धिरिति सिद्धम्।

---

कल्पनादुर्व्यसनेनेत्यर्थः। समवायदूषणमुपसंहरति—**तदेवमिति**। भिन्नलक्षणयुक्तत्वं भेद इति पक्षदूषणमुपसंहरति—**अतो न क्वापि लक्षणभेदादिति**। किंच लक्षणानामेव तावदनुगतलक्षणमस्ति ? न वा ? न यदि, तदा तेषामितरव्यावृत्ततया ज्ञानं न स्यात्, तदन्तरेणापि वा तथा ज्ञाने पदार्थेष्वपि तथैव स्यादिति लक्षणक्षतिः। अथास्ति किंचिदनुगतं लक्षणलक्षणम् ? किं तत् ? सजातीयविजातीयव्यावर्तकत्वमिति चेन्न, सामान्यादिलक्षणेष्वव्याप्तेः। नहि ते जातिमन्तः, येन तत्सजातीयमन्यत्तैर्लक्षणैर्व्यवच्छेद्यं स्यात्। किंचैवं द्रव्यादीनामपि लक्षणं न स्यात्, सामान्याद्यव्यवच्छेदकत्वात्। नहि सामान्यादयः सजातीयतया विजातीयतया वा व्यवच्छेदमर्हन्ति, जातिरहितत्वादेव, प्रमेयाभिधेयादिलक्षणेषु चाव्याप्तिः। नहि तत्र किंचिद्व्यवच्छेद्यमस्ति, तस्य प्रमितौ प्रमेयतयाऽव्यवच्छेद्यत्वादप्रमितौ च किं व्यवच्छेद्यं स्यात्? एवमभिधेयत्वेऽपि। किंचेदं साजात्यमभिमतं व्यवच्छेद्यस्य ? किं लक्ष्यमात्रवृत्तिजात्या ? किं यया कयाचन ? नाद्यः, लक्ष्यस्यापि व्यवच्छेदापातात्। न द्वितीयः, विजातीयपदवैयर्थ्यात्। अन्ततः सत्तयापि जातिमता साजात्यात्। विजातीयव्यावर्तकमिति चेन्न, सामान्यादिलक्षणेष्वव्याप्तेः। नहि ते जातिमन्तः, जातिरहितानां च वैजात्यस्याप्यभावात्। जातिशब्दस्योपाधिपरत्वेऽप्येते दोषा दुरुद्धराः। एतेन लक्ष्यलक्षणमपि प्रत्युक्तम्, तस्याप्युक्तदूषणलङ्घनाजङ्घालत्वात्। न च सामान्यादीनामपि सामान्यवत्ता, अनवस्थानात्। नचेदृगनवस्थादीनामदूषणत्वम्, अवैषम्यात्, अदर्शननियमसाम्यात्। एवमुपाधावुपाधिस्वीकारेऽपि, तत्तल्लक्षणानिरुक्तेश्च जातिलक्षणं च खण्डितम्, खण्डयिष्यते च जातिः। तेन जातिद्वारोपाधिद्वारा वा वादीन्द्रादिभिरुत्प्रेक्ष्यमाणलक्षणान्यपि क्षुण्णानि मन्तव्यानि। अपि च—

वादीन्द्रस्येष्टदा तावन्महाविद्या पुलोमजा। सा च सव्यभिचारादिदोषैस्सदूषितात्मना ॥१॥
तामेव दूषयन्नेष तत्पादे निपतन्नपि। कथंकारं मदोन्मत्तः श्रद्धेयवचनो भवेत् ॥२॥
पक्षतद्भिन्नवृत्तित्वाद्युपज्ञाभिश्च रीतिभिः। आप्ता साधकतासीमा एताः पारिप्लवावहाः ॥३॥
नोपादेया महाविद्यामुद्रिता जातु जातयः। तत्त्वं चापि स्वीययत्नाज्जिगीषयिषुभिर्बुधैः ॥४॥
शक्यते च सर्वप्रकारविप्लवो महाविद्याभिः। साधयितुं ग्रन्थगौरवभयान्न प्रपञ्चयते सः ॥५॥
तस्मात्—'लक्ष्यलक्षणभावोयमलक्ष्योऽभिन्नवस्तुनि। त्वद्युक्त्यैवान्वितमनिर्वाच्याविद्याविजृम्भितम् ॥६॥

इति षट्पदार्थमतखण्डनया परिशुद्धचिद्घनसुखैकनिधिः।
प्रतिषिद्धभेद इह यः परमः प्रतिपादितस्तमभिनौमि भवम् ॥७॥

ननु वैधर्म्यभेदनिरसनेनैव लक्षणभङ्गवादिनामपि भेदहेतुर्विभञ्जित एव, सामर्थ्यासामर्थ्ययोरपि वैधर्म्यरूपत्वात्, अतो मुधैवायं क्षणभङ्गवादावतार इति, उच्यते—न तावत्सुगतमते वैधर्म्यरूपो भेदः, स्वरूपभेदवादित्वात्तथागतानाम्। नापि सामर्थ्यासामर्थ्ययोर्धर्मरूपत्वम्, यतस्तयोः सत्त्वासत्त्वात्मकतया स्वरूपत्वम्, अतः स्वरूपभेदस्यैवायं विशेषो भङ्ग्यन्तरेण निराक्रियते। अथवा प्रत्यक्षतो भेदाधिगतिं निराकृत्यानुमानिकभेदाधिगतिविध्वंसोऽनेन क्रियते, तत्र क्षणभङ्गवादिनो वावदति 'एकस्वभावत्वायोगात्सामर्थ्यस्य च स्वभावत्वात्समर्थस्वभावस्यासमर्थस्वभावत्वमयुक्तम्, स्वभावहानिप्रसङ्गात्, अत एकत्वेन भवद्भिरभिमन्यमानमपि भिन्नमेव। यदा च समर्थक्षणादसमर्थक्षणमेव प्रत्यभिज्ञायमानमपि भिद्यते, तदा किमु वक्तव्यमप्रत्यभिज्ञायमानतया अप्रतीयमानैक्यानां घटपटप्रभृतीनां भेद इति ? तदेतदाह—

---

**और अनवस्थादि दोष होते हैं। इस प्रकार लक्षण और प्रमाण के न होने से द्रव्यादि से भिन्न समवाय सिद्ध नहीं होता। इस लिए कहीं भी लक्षण-भेद से भेद सिद्ध नहीं होता—यह सिद्ध हो गया।**

अन्ये मन्यन्ते—मा भूल्लक्षणभेदाद्भेद, तथापि सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गाद्बीजादीनां भेद सिद्ध्यति। तथाहि—यदि कुसूलनिहितं बीज तदानीमङ्कुरजनने समर्थम्, तर्हि तदैवाङ्कुर जनयेत्, यद्यदा यज्जननसमर्थं तत्तदैव तत्करोति यथा सामग्री, न च कुर्वदुपलभ्यते, तस्मादसमर्थम्, सहकारिसमवधाने च समर्थमिति, सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्ग.। न च समर्थस्यापि सहकारिसमवधानाभावादजनकत्वमिति संदिग्धव्यतिरेकिता, जनकस्वभावत्वे तस्य सहकारिसमवधानाभावेऽपि स्वभावविरोधादेवाजनक-

---

अन्ये मन्यन्त इति। धर्मनिर्देशश्चाय परकीयरीत्या। स्यादेतत्, यदि विरुद्धधर्मसंसर्गः स्यात्स्यात्तदा बीजक्षणाना भेदः. स तु कुतः? यावता समर्थमेव कुसूलनिहितमपि बीजमङ्कुरजनन इति, तत्राह—यदि कुसूलनिहितमिति। तत्र जनकत्वेन सामर्थ्यस्य व्याप्तिं दर्शयन्व्यापकजनकत्वनिवृत्त्या व्याप्यसामर्थ्यनिवृत्तिमनुमिनोति—यद्यदेत्यादिना। कुसूलनिहित बीजसमर्थमङ्कुरोत्पादे, तदानी तदजनकत्वात्तदेव तदेव यथा पदार्थान्तरमिति पररीत्या च प्रयोग, स्वकीयरीत्या तु यद्यन्न जनयति तत्तत्रासमर्थं यथा पदार्थान्तरम्, न जनयति चेद कुसूलनिहित बीजमिति स्वभावहेतुः। तदेवं प्रसङ्गतद्विपर्ययाभ्यामसामर्थ्यमुपपादितम्, इदानी क्षणान्तरस्थस्य सामर्थ्यं दर्शयति विरुद्धधर्माध्याससिद्धये—सहकारीति। तत्रापि यदि सहकारिसमवेत बीजंसमर्थमङ्कुरजनने स्यान्न जनयेदिति प्रसङ्ग यन्नजनयेत्तत्तत्र समर्थ यथा सामग्री, जनयति चेदमिति विपर्यय। धर्मद्वयप्रतिपादनमुपसहरति—इति सामर्थ्येति। ननु तदानी तदजनकत्वादिति हेतुरनैकान्तिको विपक्षाद्व्यावृत्तेः सदिग्धत्वात्। यदि हि समर्थस्याजनकत्वमसभव्येवेति निर्णीयेत, तर्ह्येव विपक्षव्यतिरेकनिर्णयः, न च तदस्ति, समर्थस्यापि सहकारिमेलनाभावादजनकत्वसभवात्। तस्मात्सदिग्धविपक्षव्यतिरेकित्वात्सदिग्धानैकान्तिकमेव। यथाहुः—

'यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते। विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम्' इति ॥

तत्राह—न च समर्थस्यापीति। तत्र वक्तव्य किं बीजस्य जनकत्वं स्वभावः? उत जनकत्वमजनकत्वम् आहोस्विदजनकत्वमेवेति? तत्र प्रथम दूषयति—जनकस्वभावत्व इति। स्वभावविरोधादेवेति।

---

पूर्व पक्ष—बौद्धों का कहना है कि लक्षण-भेद से वस्तु-भेद सिद्ध न होने पर भी सामर्थ्य-असामर्थ्यरूप विरुद्ध धर्मों के सम्बन्ध से बीजादि का भेद सिद्ध होता है (द्र० आत्म० वि० पृ० ४३)। जैसे कि धान्यागार में रखा बीज यदि अङ्कुर-जनन का सामर्थ्य रखता है, तब वहीं पर उसे अङ्कुर पैदा कर देना चाहिए, क्योंकि जो जिस समय जिसके जनन का सामर्थ्य रखता है, वह उसी समय उस कार्य को जन्म दिया करता है, जैसे—खेत, पानी–आदि सामग्री। किन्तु धान्यागारस्थ बीज, अङ्कुर पैदा नहीं करता, अत असमर्थ है, खेत, पानी—आदि सहकारी सामग्री की सहायता पाकर वही अङ्कुर-जनन में समर्थ हो जाता है—यही है सामर्थ्य असामर्थ्यरूप विरुद्ध धर्मों का बीज में सम्बन्ध। यदि कहा जाय कि धान्यागारस्थ बीज यद्यपि समर्थ है, फिर भी सहायक सामग्री का समागम न होने से अङ्कुर उत्पन्न नहीं कर सकता, अत उक्त 'अजनकत्व' हेतु अपने साध्य (असामर्थ्य) के अभावाधिकरण में रह जाने से व्यभिचारी है (यद्यपि वहाँ असामर्थ्याभाव का निश्चय नहीं, तथापि सन्देह होने से ही सन्दिग्ध व्यभिचारी है) तो यह कहना उचित नहीं, क्योंकि समर्थ बीज का जनकत्व यदि स्वभाव है, तो फिर सहकारी के अभाव-काल में भी स्वभाव-विरुद्ध अजनकता उसमें कैसे बनेगी? (तत्त्वसंग्रह-कार ने कहा है—

"कार्याणि हि विलम्बन्ते कारणासन्निधानत।
समर्थहेतुसद्भावे क्षेपस्तेषा हि किं कृत॥" (तत्त्व० श्लो० ३९५)

अत कहना होगा कि धान्यागारस्थ बीज में सामर्थ्य का अभाव ही है, वह विपक्ष नहीं)।

त्वानुपपत्तेः। सहकारिसमवधाने जनकमजनकं चान्यदेति स्वभाव इति चेत्, मैवम्, एकस्यानेकस्वभावतानुपपत्तेः। किञ्च यदि सहकारिसमवधानमपि स्वभावान्तर्भूतम्, तदा तदपि तदैव संपद्येत, स्वभावस्यानपायात्। अथाजनकत्वं स्वभावः, तदा न कदाचिदप्यङ्कुरं जनयेत्। अथ सहकारिसमवधानानन्तरभाविन कार्यात्समनन्तरपूर्वक्षणवर्तित्व स्वभाव; तर्हि कुसूलनिहितावस्थायामपि बीजस्य यथावर्णितस्वभावो भवेत्, तत्स्वभावस्य तदानीमभावे स्वभावपरित्यागप्रसङ्गात्। अथ सहकारिसमवधानं न स्वभावः, तर्हि तत्कारणस्योपकरोति ? न वा ? न चेद्, अनपेक्षणीयत्वम्। उपकरोति चेत्, उपकारो वस्तुनो भिन्नः ? न वा ? भिन्नत्वे प्राप्ताप्राप्तविवेकेन स एव कार्यजनक इति न स्थिरस्य कारणता।

स्वभावभूतेन जनकत्वेन विरोधादजनकत्वानुपपत्तिरित्यर्थः। द्वितीय शङ्कते—**सहकारीति**। दूषयति—**मैवमेकस्येति**। स्वोहि भावः स्वभावः। असाधारण इति यावत्। तथाचोभयस्वभावत्वे किं युगपदुभय स्वभावभूतम्? पर्यायेण वा? नाद्यः भवद्भिरेव सहकारिसमवधानासमवधानावस्थतया व्यवस्थापनात्, नित्य कार्यसत्त्वासत्त्वयोः प्रसङ्गाच्च। द्वितीये तु नोभयोरपि स्वभावता, तस्योभयत्रानुगच्छतोपि तयोरननुगमनेन भेदावसायादिति भावः। यदि च सहकारिसमवधानासमवधानव्यवस्थया जनकत्वाजनकत्वयोरन्यैकत्र व्यवस्थाभिप्रेयते, सापि न संभवतीत्याह—**किञ्चेति**। तथाच—तदसमवधानाभावात्तत्प्रयुक्ताजनकत्वमपि तस्य नास्तीति जनकैकस्वभावत्व स्यात्, तथा च पूर्वोक्तमेव दूषणमिति भावः। सहकारिसमवधानस्याप्यस्वभावत्वपक्षमुत्तरत्राशङ्क्य निराकरिष्यति। अजनकत्वमेव स्वभाव इति तृतीय पक्षं शङ्कते—**अथाजनकत्वमिति**। ननु नात्यन्त जनकत्वमजनकत्व वास्य स्वभावः, किं तर्हि? सहकारिसमवधाने सति यत्कार्यं भवति तस्मादनन्तरपूर्वक्षणवर्तित्वं स्वभावः, तेन न सहकारिसमवधानाभावेऽपि जनकत्वम्, नापि सहकारिसमवधानेऽप्यजनकत्वमित्याह—**अथ सहकारीति**। दूषयति—**तर्हीति**। एवविध स्वभावः कुसूलनिहितावस्थायामप्यस्य विद्यते इति तदापि कार्यजन्मप्रसङ्ग इत्यर्थः। विपक्षे बाधकमाह—**तत्स्वभावस्येति**। यत्तदाशङ्क्य निराकरीष्यतीत्युक्तम्, तदाह—**अथेति**। ननु यद्यनुपकारिण्यपेक्षानुपपन्ना, तद्युपकुर्वन्त्येव सहकारिणः कारणस्येति शङ्किते परिहरति—**उपकारो वस्तुन इति**। उपकारस्य वस्तुनो भिन्नत्वे वस्तुनः कारणत्व न स्यात्, अन्वयव्यतिरेकाभ्या तस्यैव कारणत्वादिति परिहरति—**भिन्नत्व इति**।

यदि कहा जाय, समर्थ बीज के दोनो ( जनकता और अजनकता ) स्वभाव मानेंगे, सहकारि-समागम के समय जनकता और उसके विरह-समय अजनकता। तो यह भी नहीं कह सकते क्योंकि एक ही वस्तु के अनेक स्वभाव नहीं हो सकते। और स्वभाव-प्रयोजक सहकारि-समवधान भी यदि बीज के स्वभाव में प्रविष्ट हो जाता है, तब सहकारी का कभी विरह नहीं होना चाहिए ( शान्तरक्षित ने यही कहा है—"तत्सम्बद्धस्वभावस्य भावे तेषामपि स्थितेः"—तत्त्व० श्लो० ४१२ )। बीज का यदि अजनकत्व स्वभाव है, तब तो कभी भी अङ्कुर-जनकता नहीं आनी चाहिए। यदि कहा जाय कि सहकारि-समवधान के अनन्तर होनेवाले अङ्कुररूप कार्य के प्रति अव्यवहित पूर्व रहना—यह बीज का स्वभाव मानेंगे, तब तो धान्यागारस्थ बीज का भी यही स्वभाव रहेगा, अन्यथा स्वभाव-परित्याग-प्रसङ्ग होगा। सहकारि-समवधान यदि बीज-स्वभाव के अन्तर्गत नहीं, तब कारण का उपकार करता है ? या नहीं ? यदि नहीं, तब तो सहकारी की अपेक्षा ही क्यों होगी ? यदि उपकार करता है, तब बताइए वह उपकार वस्तु ( बीज ) से भिन्न है ? या नहीं ? यदि भिन्न है, तब तो धान्यागारस्थ बीज के प्राप्त होने पर भी सहकारी की प्राप्ति न होने के कारण अङ्कुर नहीं होता, अतः अङ्कुर की जनकता सहकारी में ही माननी होगी, बीज में कारणता न बनेगी। जैसा कि शान्तरक्षित ने कहा है—

"तस्मिन् सति हि कार्याणामुत्पादस्तदभावतः।
अनुत्पादात् स एवैव हेतुत्वेन व्यवस्थितः॥" (तत्त्व० श्लो० ४००)

अभिन्नत्वे तु पूर्वावस्थस्य वस्तुनः सांप्रतमुपकाराभिन्नतयोत्पत्त्यसंभवाद्वस्त्वन्तरोत्पत्तेः क्षणिकस्यैव कारणताप्रसङ्गः। उपकारस्य वस्तुतन्मात्रत्वे च सहकारिसमवधानात्पूर्वमपि तद्भावात्तदापि कार्यजननम्, सहकारिसमवधानवैयर्थ्यं च प्रसज्येत। अथोपकारो वस्तुनस्तत्वान्यत्वाभ्यामनिर्वचनीयः; तदा तस्यैव कारणत्वमिति न वस्तुनः कारणता। न च वस्तुनोऽप्यन्वयव्यतिरेकित्वात्कारणता; केवलव्यतिरेकाभावात्— सत्युपकारे वस्त्वभावापराधेन कार्याभावानुपलम्भात्। तदेवं सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गाज्जनकाजनकयोर्भेद-

द्वितीये दूषणमाह—**अभिन्नत्व इति**। अत्र वक्तव्यं किं वस्तुन उपकारादभेदः ? उपकारस्य वा वस्तुनोऽभेदः ? प्रथमे प्राह—**पूर्वावस्थस्येति**। उपकारः खल्विदानीमुत्पद्यते पूर्वसिद्धस्य च वस्तुनस्तदभेदे तस्यैव पुनरुत्पत्तिः प्रसज्येत, तच्चायुक्तम्, द्विरुत्पत्त्यभावात्, अतोऽन्यस्यैवोत्पत्तिर्वक्तव्या, तथाच कथं कथं न क्षणिकस्य कारणतापत्तिः ? इत्यर्थः। द्वितीये दूषणमाह—**उपकारस्येति**। वस्तुनः पूर्वमेव विद्यमानत्वात्तदभिन्नोपकारोऽपि पूर्वमेव विद्यत इति तदापि कार्योत्पत्तिप्रसङ्ग इत्यर्थः। दूषणान्तरमाह—**सहकारिसमवाधानेति**। वस्तुस्वभावस्य तस्य तत्पूर्वमपि भावादिति भावः। भेदाभेदप्रयुक्तदूषणपरिजिहीर्षोरनिर्वाच्यमतमुद्भावयति—**अथेति**। दूषयति—**तदेति**। यथा भेदेनानिर्वचनीयत्वम्, तथाऽभेदेनापीति न वस्तुस्वरूपत्वमुपकारस्य। तथाच क्षणिकस्य कारणत्वं दुरपवादम्, वस्तुनश्चाकारणतापत्तिरतिरिच्यत इति न भिन्नपक्षात्फलतो भेद इति भावः। ननु किमिति वस्तुनोऽकारणता, यावतान्वयव्यतिरेकाभ्यां तस्यापि कारणत्वमवसीयते इतरथोपकारस्यापि तन्न स्यादिति ? तत्राह—**न च वस्तुनोपीति**। हेतुमाह—**केवलेति**। तदेव विवृणोति—**सत्युपकार इति**। यथा हि बीजे विद्यमानेऽप्युपकाराभावादनुत्पत्तिमभ्युपैषि, न तथोपकारे विद्यमानेऽपि वस्तुनोऽभावादनुत्पत्तिः शक्यनिदर्शना, अभेदवादिनो व्याघातात्, भेदवादेऽप्युपकार्याभावे उपकारस्यैवासंभवात्, अनिर्वचनीयेऽपि भेदपक्षप्रयुक्तदूषणानुषङ्गादिति भावः। तदित्थं बाधकपद्धतिभिः संदिग्धव्यतिरेकितानिरसनेनाजनकत्वादसामर्थ्यानुमानमप्रत्यूहमिति स्थितम्, तथा च—विरुद्धधर्माध्यासः सिद्ध इत्याह—**तदेवमिति**। एवमुपपादितप्रकारेण यदा विरुद्धधर्मसंसर्गः सिद्धस्तदा तस्मादेव हेतोर्भेदसिद्धिरपि भवतीति योजना। सहकारिभिराधीयमाने बीजस्यातिशये बीजमुत्पादकम्, अन्यथा तदभावे तदुदयापत्तेः। बीजं चातिशयमादधानं सहकारिणोऽपेक्षते, अन्यथा सर्वदोपकारवृत्तावङ्कुरस्यापि सर्वदोत्पत्तिप्रसङ्गात्। तस्मात्तमतिशयार्थमपि सहकारिभिरपेक्ष्यमाणैः सहकारिभिरतिशयान्तरमाधेयं बीजे, तस्मिन्नप्युपकारे पूर्वन्यायेन बीजं सहकारिसापेक्षं जनकमित्युपकारजनकोपकारजननार्थमपेक्ष्यमाणैः सहका-

उपकार को बीज से अभिन्न मानने पर पूर्व का निष्पन्न बीज इस समय के उपकार से अभिन्न होकर पुनः उत्पन्न हो न सकेगा, नूतन वस्तु की ही उत्पत्ति माननी होगी, तब तो क्षणिक वस्तु में ही कारणता आ जाती है। यदि कहा जाय कि वस्तु, उपकार से अभिन्न नहीं, अपितु उपकार ही वस्तु से अभिन्न होता है, तब भी सहकारी-समवधान से पहले वस्तु रहती है, अतः वस्तु-स्वभावापन्न उपकार भी वहाँ मानना होगा, तब वहाँ अङ्कुर का जन्म प्राप्त होगा और सहकारि-समवधान भी व्यर्थ हो जायगा। यदि कहा जाय कि उपकार वस्तु से भिन्न भी नहीं और अभिन्न भी नहीं, अपितु अनिर्वचनीय है, तब भी वही कारण होगा, वस्तु में कारणता नहीं रहेगी। अन्वय-व्यतिरेक के आधार पर भी वस्तु में कारणता सिद्ध नहीं होती, क्योंकि अन्वय ( वस्तुसत्त्वे कार्यसत्त्वम् ) होने पर भी केवल वस्तु के साथ व्यतिरेक ( वस्त्वभावे कार्याभावः ) नहीं, क्योंकि उपकार के रहने पर वस्तु के न होने मात्र से कार्य का अभाव नहीं देखा जाता। इस प्रकार सामर्थ्य और असामर्थ्यरूप विरुद्ध धर्मों के सम्बन्ध से जनक और अजनक में भेद सिद्ध होता है शान्तरक्षित ने कहा है—

"निःशेषाणि च कार्याणि सकृत् कृत्वा निवर्तते।
सामर्थ्यात्मा स चेदर्थः सिद्धाऽस्य क्षणभङ्गिता॥"

सिद्धिः । प्रयोगश्च—कुसूलस्थं बीजं सहकारिमध्यमध्यासीनाद्भिन्नं विरुद्धधर्मसंसृष्टत्वाद्दहन-तुहिनवत् । तथा—कुसूलस्थ बीजमङ्कुरजनकबीजाद्भिन्नं कार्याव्यवहितातीतक्षणातिरिक्तक्षण-संबन्धित्वाद्घटवत् । एतामेव व्याप्तिमुपजीव्य यत्सत्तत्क्षणिकमित्यनुमानेन क्षणिकतामाचक्षते क्षणभङ्गवादिनः । नच 'य एवाहं रूपमद्राक्षं स एवाहमिदानीं स्पर्शमनुभवामि' इति 'स

रिभिरुपकारान्तर बीजे जनयितव्यमिति तत्तदतिशयार्थमपेक्ष्यमाणसहकारिष्वपाद्यबीजेष्वप्यतिशयानवस्थेति । यद्वा बीजवर्तिनि सहकारिभिरतिशये क्रियमाणे बीजमपि सहकारिभिरपेक्षणीयमिति बीजेन सहकारिष्वति-शय आधेयः । एव बीजेन सहकारिष्वतिशय आधीयमाने सहकारिणोऽपेक्षणीया इति तैर्बीजे पूर्वमतिश-यान्यतरमाधेयम्, तस्मिन्नप्यतिशये सहकारिभिर्बीजस्य क्रियमाणे बीजमपेक्षणीयमिति बीजेन पूर्वं सहकारि-ष्वतिशयान्तरमाधेयमित्यनवस्थितिः । उपकारः कार्यार्थमपेक्ष्यमाणो बीजनिरपेक्षः कार्यं जनयति ? बीजसा-पेक्षो वा ? आद्ये बीजादेरहेतुतापातः । द्वितीये तु बीजादिनापेक्ष्यमाणेनोपकारेणातिशय आधेय. । एवमा-हितोऽप्यतिशयः कार्यार्थं बीजादीनपेक्षत इति बीजादीना तत्राप्यतिशयान्तरमाधेयमित्यप्यनवस्थितिरित्यपि ज्ञेय वादीन्द्रस्थम् । ननु किमनेन प्रमाणं भेदसिद्धावुक्त भवति ? तत्राह—प्रयोगश्चेति । बीजमात्रस्य सह-कारिमध्यनिष्ठबीजाद्भेदसाधनेऽर्थान्तरता । यत्किंचिद्बीजस्य ततो भेदसाधनेनाप्युपपत्तेः । बाधासिद्धिश्च, तत एव तस्य भेदप्रसङ्गात् । हेतोरसिद्धिश्च, तत उक्तम्—कुसूलस्थमिति । तथा यत.कुतश्चिद्भेदसाधने बीज-मात्राद्भेदसाधने चार्थान्तरता, तदर्थं सहकारिमध्यमध्यासीनादिति विशेषणम् । बीजादिति चाध्याहर्तव्यम् । अत्र च तदेवेदमिति परेषा प्रत्यभिज्ञास्पदस्य भेदसाधनान्न क्षुद्रोपद्रवः । यदि कश्चित्पत्तदोरन्वयस्य दृष्टान्त-दार्ष्टान्तिकयोर्वैकृता मन्वानो न परितुष्येत् त प्रत्येवमनुमातव्यम्—विप्रतिपन्नबीज सहकारिमध्यमध्यासी-नाद्भिन्न तदङ्कुर प्रत्यसमर्थत्वात्सप्रतिपन्नवदिति । अनुमानान्तरमाह—तथेति । अत्राप्यङ्कुरजनकबीजाद्भि-न्नत्वेनाभिन्नत्वेन विप्रतिपन्नं बीज पक्ष । कार्यापेक्षयाऽव्यवहितातीतक्षणातिरिक्तो यः क्षणस्तत्सबन्धित्वादि-त्यर्थः । अङ्कुरजनकबीजे स्वान्योन्याभावरहिते व्यभिचारवारणायातीतपदम् । तस्यापि कार्याव्यवहितोत्तरक्ष-णातिरिक्तकार्योत्पत्तिपूर्वक्षणसबन्धित्वात् । जनकबीजे व्यभिचारनिरासार्थमसिद्धिपरिहारार्थं चातिरिक्तपदम् । ननु क्षणिकत्वसिद्धावेतत्स्यात्, यद् अजनकावस्थातो जनकावस्थ भिन्नमिति, स्थितिपक्षे तदनुपपत्तेः, नच क्षणिकत्वे मानमस्तीति, तत्राह—एतामेवेति । यदा हि अर्थक्रियाकारित्वाकारित्वयोः सामर्थ्यासामर्थ्या-भ्या व्याप्तिः, सामर्थ्यासामर्थ्ययोश्च धर्मिभेदेन, तदार्थक्रियाकारित्वात्मक सत्त्व समर्थक्षणस्य क्षणिकता साधयति, क्षणान्तरसत्त्वे तस्यैवासमर्थत्वप्रसङ्गात्, असमर्थस्य चानर्थक्रियाकारित्वात्, अनर्थक्रियाकारि-णश्चार्थक्रियाकारित्व व्याहतमिति सत्त्वक्षणिकत्वयोः प्रतिबन्धसिद्धिः, स्थिरस्य च क्रमाक्रमाभ्यामर्थक्रिया-कारित्वाऽकारित्वानुपपत्तेर्विपक्षव्यतिरेकसिद्धिरिति भावः । ननु प्रत्यभिज्ञाप्रत्यक्षेणात्मानात्मपदार्थजातस्य स्थैर्यमवसीयत, ततस्तदपबाधितविषय कालात्ययापदिष्टमिदमनुमानमिति, यत्राह—नच य एवाहमिति । अत्र किं ज्ञानद्वयमिदम् ? एकमेव वाभिप्रेयते ? द्वित्वपक्षे ततः स्थैर्याशासन षण्ढमुद्राह्य मुग्धयाषित

इसी अर्थ का साधक अनुमान-प्रयोग भी है—"धान्यागारस्थ बीज, सहकारि-सम्पन्न बीज से भिन्न है, विरुद्ध धर्म युक्त होने के कारण, जैसे—अग्नि और बरफ।" एवं "धान्यागारस्थ बीज, अङ्कुर-जनक बीज से भिन्न होता है, कार्याव्यवहित पूर्वक्षण से अतिरिक्त क्षण का सम्बन्धी होने के कारण, जैसे घटादि।" इसी व्याप्ति का सहारा लेकर "यत् सत्, तत् क्षणिकम्"—इस प्रकार अनु-मान से क्षण-भङ्ग-वादी क्षणिकता सिद्ध किया करते हैं। जैसा कि शान्तरक्षित ने कहा है—

"तथाहि सन्तो ये नाम ते सर्वे क्षणभङ्गिन ।
तद्यथासंस्कृता भावास्तथासिद्धा अनन्तरम् ॥" (तत्त्व० श्लो० ३९२)

"य एवाहं रूपमद्राक्षं स एवाहमिदानीं स्पर्शमनुभवामि' एवं "स एवायं घटः"—आदि प्रत्य-

एवायं घट ' इत्यादिप्रत्यभिज्ञाविरोध', सामग्रीभेदात्पारोक्ष्यापारोक्ष्यलक्षणविरुद्धधर्मसंसर्गाच्च प्रत्यभिज्ञानस्यैकत्वानुपपत्ते । तथाहि—सा मे माता स मे पितेत्यादाविन्द्रियनिरपेक्षस्य संस्कारस्य स्मरणकारणत्वादयं घट इत्यादिप्रत्यक्षज्ञानेष्विन्द्रियस्य संस्कारनिरपेक्षस्य कारणतावगमादुभयोः संभूय कारणतानुपपत्ति । स इत्ययमिति च पारोक्ष्यापारोक्ष्यविरुद्धधर्मससर्गस्य स्फुटमुपलम्भाच्च । ज्ञानभेदात्प्रत्यभिज्ञाया' प्रत्यक्षत्वाभावान्न प्रकृतानुमानस्य प्रत्यक्षविरोध , तस्माद्विरुद्धधर्मसंसर्गाद्वस्तूना भेदसिद्धिरिति ।

अत्रोच्यते—सिद्धे भेदे विरोधे च धर्मयोर्धर्मिभेदधी ।
तयोर्नाद्यापि संसिद्धिर्धर्मिभेदस्तदा कुत' ? ॥ १६ ॥

अशेषभेदानपाकुर्वतोऽद्वैतवादिनो यदा भेदमात्रमेव नास्ति, तदा कुतो धर्मयोर्भेद' ? कुतस्तरा विरोध ? कुतस्तमां च तदधीनो धर्मिभेदाध्यवसाय ? अन्यतो वा भेदविरोधयोः

---

पुत्रप्रार्थनमिव । तदा हि स एवाह स एवायमिति वालुकावद्विशकलितयोरैक्यानवगाहित्वात् । द्वितीयस्त्वसिद्ध इत्याह—**सामग्रीत्यादिना** । स इत्यशे सस्कारादिरेव सामग्री, अयमशे च सप्रयोगादिरिति, तथा स इत्यशे पारोक्ष्यमयमित्यशे चापारोक्ष्यमिति सामग्रीभेदाद्विरुद्धधर्माध्यासाच्च न प्रत्यभिज्ञानमेकमित्यर्थः । ननु सस्कारसप्रयोगयो सभूयैकसामग्रीत्वात्कथ सामग्रीभेद इति ? तत्राह—**तथाहीत्यादिना** । अन्यत्र पृथक्कार्यजनकतयावधृतस्वभावयोरत्रापि विभिन्नकार्यजनकत्वमेवेत्यर्थ । विरुद्धधर्माध्यासे तु विप्रतिपत्तिशङ्कैव नास्तीत्याह—**स इति** । फलितमाह—**ज्ञानभेदादित्यादिना** । **प्रत्यक्षत्वाभावादिति** । समस्तस्येति शेष । पूर्वपक्षमुपसहरति—**तस्मादिति** ।

विरुद्धधर्माध्यासाद्वस्तुभेदसाधनेऽन्योन्याश्रय श्लोकेन संगृह्णाति सिद्धान्ती—**सिद्धे भेद इति** । धर्मयोर्जनकत्वाजनकत्वाद्यात्मकयो परस्पर भेदे सिद्धे सति विरोधसिद्धिः, अभिन्नस्य विरोधाभावात्, तयोः सिद्धे विरोधे तदाश्रयतया धर्मिणोः कुसूलनिहितसहकारिसमेतबीजयोर्भेदबुद्धिः स्यात् । यदा च तयोर्भेद एव न सिद्धस्तदा विरोधस्य तद्द्वारकधर्मिभेदस्य च कुत. सिद्धि' ? परस्पराश्रयादित्यर्थः । श्लोक विवृणोति—**अशेषेत्यादिना** । अद्वैतवादिन इति पदच्छेद । ननु कथमन्योन्याश्रयता ? यावता प्रत्यक्षेण धर्मयोर्भेद. सिद्ध्यति, ततश्च विरोधसिद्धिस्ततश्च धर्मिभेदसिद्धिरित्यत आह—**अन्यत इति** । तत्र वक्तव्यं

---

भिज्ञा का विरोध भी क्षणिकत्वानुमान में नही , क्योकि सामग्री के भेद से एवं परोक्षत्व और अपरोक्षत्व रूप विरुद्ध धर्मों के सम्बन्ध से प्रत्यभिज्ञा ज्ञान, भिन्न-भिन्न दो ज्ञानों का समूह है, एक ज्ञान नही । जसे कि "सा मे माता", "स मे पिता"—आदि स्थलो पर इन्द्रिय-निरपेक्ष केवल संस्कार, स्मरण का कारण है और "अयं घट."—आदि प्रत्यक्ष ज्ञान का संस्कार-निरपेक्ष इन्द्रियमात्र कारण है । दोनो ( सस्कार और इन्द्रिय ) कभी मिलकर किसी के कारण बन नहीं सकते । इसी प्रकार "स "—इस अंश में परोक्षता और "अयम्"—इस अश में प्रत्यक्षता होने से विरुद्ध धर्मों का सम्बन्ध भी है। "स." और "अयम्"—दोनो ज्ञान जब भिन्न-भिन्न हो गये, तब प्रत्यभिज्ञा ज्ञान कोई एक प्रत्यक्ष ज्ञान न रहा, जिसका विरोध प्रकृत अनुमान में होता । ( शान्तरक्षित ने भी "क्षणभङ्गिषु भावेषु प्रत्यभिज्ञा च दुर्घटा"—इस शङ्का का समाधान किया है—"कर्तृत्वादिव्यवस्था तु सतानैक्यविवक्षया" ) इस लिए विरुद्ध धर्मो के सम्बन्ध से वस्तु का भेद ही सिद्ध होता है ।

उत्तर पक्ष—जनकत्व और अजनकत्व धर्मो मे भेद और विरोध सिद्ध होने पर ही धर्मी (बीज) में भिन्नता का निश्चय किया जा सकता था, किन्तु भेद और विरोध की सिद्धि ही नही होती, अतः धर्मी को अनेक कैसे कहा जा सकता है ? निखिल भेदों का निराकरण करनेवाले अद्वैत-वादी की दृष्टि में भेदमात्र ही सिद्ध नहीं, तब धर्मों का भेद कैसे ? फिर विरोध क्यो ? और विरोध का सहारा

सिद्धौ तत एव धर्मिभेदसिद्धिः, कृतमनुमानेनाजागलस्तनायमानेन विरुद्धधर्माध्यासेन। कश्चाय धर्मयोर्विरोध, येन विरुद्धधर्मसंसर्गित्वेन भेदोऽभिधीयते ? किं सहानवस्थायित्वम् ? वध्यघातकभावो वा ? भावाभावरूपत्वं वा ? तदत्यन्ताभावसमानाधिकरणत्वं वा ? प्रथमे किमेकस्मिन्काले सहानवस्थायित्वम् ? उतैकस्मिन्नधिकरणे ? नाद्य, एकस्मिन्नपि क्षणे धर्मिभेदेन जनकत्वाजनकत्वयो. सहावस्थानात्। नेतर., एकजनकस्याप्यन्याजनकत्वेन जनकत्वाजनकत्वयोरेकस्मिन्नधिकरणे सहभावात्। एककार्यप्रतियोगिजनकत्वाजनकत्वयोरेकत्र

कीदृश तद्भेदग्राहिप्रत्यक्षमभिमतम ? किं निर्विकल्पकम् ? सविकल्पक वेति ? न तावत्सविकल्पकम्, तस्य प्रामाण्याभावाद्भवन्मते। नापि निर्विकल्पकम्, तस्य वस्तुमात्रग्राहितया स्वलक्षणातिरिक्तविकल्पागोचरत्वात्। यथाहु. 'कल्पनापोढमभ्रान्त प्रत्यक्ष'मिति। भेदस्यापि स्वलक्षणमात्रत्वे स्वरूपभेदविमर्दनप्रस्तावोक्तदोषानध्यस्यामः। एतेनेदमप्यपास्तम् यथाहुस्तथागता.—'वर्तमान परिच्छिन्ददवर्तमानताव्यावृत्तिमपि परिच्छिनत्ति'इति। अवर्तमानताव्यावृत्तेर्वर्तमानतायाश्च धर्मत्वे प्रत्यक्षागोचरत्वात्, स्वरूपत्वे चैकस्योभयस्वभावत्वायोगात्। नच वर्तमानतैवावर्तमानताव्यावृत्तिः, भावाभावयोरैक्यायोगात्। यथाहात्मतत्त्वविवेककृत्—

'विधिरात्मास्य भावस्य निषेधस्तु ततः परः। सोपि चात्मेति क प्रेक्ष. शृण्वन्नपि न लज्जते ?' इति ॥

भूतभविष्यतोश्चावर्तमानत्वात् तद्व्यावृत्तेरप्युभयविधाया. एकरूपवर्तमानतात्मकत्वायोगात्, भविष्यतश्चावर्तमानभूतव्यावृत्तत्वेऽपि वर्तमानत्वाभावात्, भूतस्य चाभविष्यदवर्तमानव्यावृत्तत्वेऽपि वर्तमानत्वाभावात्, वर्तमानतावगाहिताया उत्पन्नावगाहितारूपतया उत्पन्नबुद्धेरवर्तमानव्यावृत्त्यवगाहितया पुनरुत्पत्त्यभावात्, जन्ममात्रव्यापारत्वाच्च बुद्धे'। तस्मान्न प्रत्यक्ष भेदावभासनायालम्। अनुमान त्वनन्तरमेव निराकरिष्यते। तदेतादृशी दर्शनस्थिति.। आचार्यस्तु—भवतु वा यत्किंचित्प्रमाणम्, तथापि तत एव धर्मिभेदस्यापि सिद्धेर्मुधा धर्मभेदोपन्यास इति प्रौढिमारूढ' प्राह—**अन्यतो वेति**। पूर्वं भेदासिद्धया विरोधासिद्धिरुक्ता। अधुना धर्मिभेदापादनकोविदः कोऽपि विरोधो दु साध्य इत्यभिप्रेत्याह—**कश्चायमित्यादिना**। जनकत्वात्यन्ताभाववति धर्मिण्यजनकत्वस्य वृत्तिरिति चतुर्थविकल्पार्थः। किं सहानवस्थायित्वमिति प्रथमे पक्षे यदिदमवस्थानस्य साहित्य निषिध्यमानं तत्किं देशत' ? कालतो वा ? इति विकल्पयति—**प्रथम इति**। **एकस्मिन्नपि क्षण इति**। एकक्षणे सहानवस्थायित्वरूपो विरोधो जनकत्वाजनकत्वयोरसिद्ध.। एकस्मिन्नपि क्षणे बीजवीरणयोरङ्कुर प्रति जनकत्वाजनकत्वयोर्वर्तमानत्वादित्यर्थ। द्वितीयेऽपि विरोधोऽसिद्धः। एकस्मिन्नपि धर्मिणि जनकत्वाजनकत्वयोः कार्यभेदापेक्षया वर्तमानत्वादित्याह—**नेतर इत्यादिना**। नन्वेकधर्मित्ववदेकविषयत्वमप्यपेक्षितम्, तादृशश्च विरोधो जनकत्वाजनकत्वयोरस्त्येवेति शङ्कते—**एककार्येति**। ईदृशश्च विरोधो न क्वापि सप्रतिपन्न', स्थायित्वादिनामेकस्यैक प्रत्येव कालभेदेन जनकत्वा-

लेकर धर्मि-भेद क्योकर सिद्ध होगा ? यदि कहा जाय कि अन्यत' ( प्रत्यक्षादि प्रमाण से ) ही धर्मो में भेद और विरोध सिद्ध होगा, तो उसी से धर्मी मे भी भेद सिद्ध हो जायगा, व्यर्थ है यह विरुद्धधर्मसंसर्गित्वहेतुक अनुमान। यहाँ धर्मि-विरोधापादक धर्मो का यह विरोध भी क्या है ? क्या (१) सहानवस्थायित्व ? या (२) वध्य-घातकभाव ? या (३) भावाभावरूपत्व ? या (४) परस्पर—अत्यन्ताभाव के अधिकरण मे रहना ? प्रथम ( सहानवस्थायित्व ) भी एक काल मे ? या एक अधिकरण में ? एक काल में सहानवस्थायित्व जनकत्व और अजनकत्व मे सम्भव नही, क्योकि भिन्न-धर्म्यवच्छेदेन एक ही क्षण मे जनकत्व और अजनकत्व—दोनो साथ ही रह सकते है। एक अधिकरण मे भी जनकत्व और अजनकत्व—दोनो एक साथ रह सकते है, क्योकि एक ही धर्मी किसी के प्रति जनक और किसी के प्रति अजनक देखा जाता है। यदि कहा जाय कि एक ही कार्य के जनकत्व और अजनकत्व का एक अधिकरण में न रहना ही विरोध पदार्थ है। तो यह भी नही कह

धर्मिणि सहानवस्थायित्वमिति चेत्, न; स्थायिवादिनं प्रत्यसिद्धेः। क्षणभङ्गवादिनोऽपि तत्कार्यजनकस्यैकस्य क्षणान्तरे तदजनकत्वेन तयोरेकत्रैव वस्तुनि साहित्यात्। नापि द्वितीय, वध्यघातकभावस्य युगपदेकधर्मिनिष्ठयोरेव धर्मयो' सभवेनाश्रयभेदासाधकत्वात्। नापि तृतीय, कार्यभेदं प्रति जनकत्वाजनकत्वयोर्भावाभावरूपयोरेकस्मिन्नपि भावात्, एककार्यप्रतियोगिजनकत्वाजनकत्वयोरेकस्मिन्वस्तुनि क्षणभेदेन भावाच्च। नापि चतुर्थः, स्थायिवादिनं प्रत्यसिद्धेः।

किंच सहकारिसमवधाने यः कार्यमुत्पादयति, स भावः सहकारिविरहकाले तत्र समर्थ ?

---

जनकत्वयो सर्वत्रैवाङ्गीकारादित्याह—न, स्थायिवादिनमिति। क्षणभङ्गवादिन प्रत्यसिद्धिमाह—क्षणभङ्गेति। यदिदमिदानीतनाङ्कुरजननसमर्थं बीज तत्कालान्तरे त जनयेत्? न वा? यदि जनयेत्सिद्धान्तमनुसन्धत्स्व। ननु क्षणान्तरे तदेव नास्ति कथ तस्य जनकत्वम्? मास्तु, स्वक्षण एव त किमिति न जनयेत्? स्वानन्तरक्षणवर्तिन प्रत्येव समर्थं तदिति चेत्, एव तर्ह्यसमर्थं तत्तत्रेति वचनीयम्। तथाच तस्यैव बीजस्य त त्कालीनमङ्कुर प्रति जनकत्वमन्यकालीन तमेव प्रत्यजनकत्वमिति तादृशमपि सहावस्थानं त्वयैवानुमतमित्यर्थः। वध्यघातकभावपक्ष निषेधति—नापि द्वितीय इति। अजातस्य भिन्नाधिकरणस्य वा घातकत्वाभावादेकाधिकरणे वर्तमानयोरेव वध्यघातकभावो वक्तव्य, तदिहेदृशो विरोधोऽनयो• सभवति ? न वा ? इति ताव्दास्ता विचारः। सभवऽपि नाधिकरणभेदक, प्रत्युत तदैक्यापादक इत्यर्थः। भावाभावरूपो विरोध इति तृतीय पक्ष निषेधति—नापि तृतीय इति। ननु विषयभेदेन वर्तमानयोर्जनकत्वाजनकत्वयोर्भावाभावरूपत्वेपि न विरोध, परस्परनिषेधरूपत्वाभावात्। नहि पटाभावो घटश्च परस्पर विरुध्येते, अस्ति भावाभावरूपतेति, तस्मादेकविषययोरनयोर्विरोध इति, तत्राह—एककार्येति। कृतोपपादन चेदमनन्तरमेव। जनकत्वाजनकत्वयो परस्परात्यन्ताभावसामानाधिकरण्य विरोध इति चतुर्थं पक्ष निषेधति—नापि चतुर्थ इति। यस्य हि स्थायिवादिनो जनकत्वमजनकत्व चैकत्र वर्तेत इति नियमस्त प्रति कथ तयोः परस्परात्यन्ताभावसमानाधिकरणत्व सिद्धवदुदाह्रियेतेत्यर्थः।

तदेव स्वपक्षे विरुद्धधर्माध्यास परिहृत्य परपक्ष एव तमामञ्जयति–किंचेति। ननु न सहकारिविरहकालीनकार्य प्रत्यसमर्थ तत्, कि तर्हि ? सहकारिवियोगसमये तदेव नास्ति, ततो न विरूद्धधर्माध्यास इति शङ्कते—सहकारीति। तर्हि सहकारिविरहसमये येनासद्रूपेण भवति तत्कारणम्, तत् सहकारिसमवधानसमयेपि विद्यते ? नवा ? प्रथमे सद्रूपावस्थायामप्यसत्त्व स्यात्। द्वितीये तु पूर्वसिद्धस्य वस्तुनः

---

सकते, क्योकि स्थायिवादी एक ही वस्तु मे काल-भेद से जनकत्व और अजनकत्व दोनो मानते है। क्षण-भङ्ग-वादी को भी यह मानना पडता है कि एक क्षण मे किसी कार्य का जनक पदार्थ ही अन्य क्षण मे उस कार्य का अजनक होता है। द्वितीय ( वध्य-घातकभाव ) तो युगपत् एक धमि-वृत्ति दो धर्मों मे ही सम्भव होने के कारण धर्मि-भेद का साधक नही हो सकता। तृतीय ( भावाभावरूपत्व ) पक्ष भी युक्त नही, क्योकि भिन्न-भिन्न कार्यो का जनकत्वाजनकत्वरूप भावाभाव एक ही धर्मी मे सहवर्ती देखा जाता है, एक ही कार्य का जनकत्वाजनकत्वरूप भावाभाव भी एक ही वस्तु मे क्षण-भेद से रह जाता है। चतुर्थ ( परस्पर-अत्यन्ताभाव के अधिकरण मे रहना ) पक्ष भी उचित नही, क्योकि स्थायि-वादी के मत से जनकत्व और अजनकत्व—दोनो परस्पर-अत्यन्ताभाव के अधिकरण में नही, अपितु समानाधिकरण ही माने जाते है।

लीलावतीकार ने ( न्या० ली० पृ० ३२१ पर ) कहा है कि जो वस्तु सहकारि-सन्निधान के समय कार्य उत्पन्न करती है, वह सहकारि-विरह-काल मे उस कार्य के लिए समर्थ होती है ? या

न वा ? समर्थश्चेत् ? तदापि जनयेत्, न चेत् ? तदेव वस्तु शक्तमशक्तं चेति दुर्निवारो विरोधः । सहकारिविरहकाले सोऽसन् नत्वसमर्थ इति चेत्, न, सहकारिविरहकाले येयमसद्रूपता सा सहकारिसन्निधानकालेऽपि विद्यते ? न वा ? विद्यते चेत्, स्वकाल एवासत्त्वप्रसङ्गः । न चेत् ? न तर्हि सहकारिविरहकाले तदसद्रूपम्, असद्रूपाभावेऽप्यस्य भावात् । अथैकमेव वस्तु सहकारिभावाभावयोः सदसद्व्यवहारयोग्यम्, तथैव तर्हि स्थिरमपि शक्ताशक्तव्यवहारयोग्यमिति तुल्यम् ; न चासामर्थ्यं विहायान्यदसत्त्वमस्ति । अथैकस्मिन्नेव वस्तुनि सहकारिसमवाधानानन्तरं कार्यजननस्वभावता तद्विरहे चासमर्थस्वभावतेत्युभयमप्यविरुद्धम्, तुल्यमिदमस्मन्मतेऽपि । तथापि सहकारिसमवधाने यत्समर्थरूपं तदेव चेत्प्रागप्यस्ति पूर्वमपि कार्य-

---

पश्चाद्भाव्यसत्त्वं न स्वभावः, असत्त्वावस्थाया पूर्वमपि वस्तुनो विद्यमानत्वादिति परिहरति—नेत्यादिना । ननु यद्यपि तदेकम्, तथाप्युभयव्यवहारालम्बनं भवति सहकारिसमवधानासमवधाननिबन्धनत्वेन, विरोधाभावादिति शङ्कते—अथैकमेवेति । स एव तर्हि न्यायः सामर्थ्यासामर्थ्ययोरपीत्याह—तर्हीति । स्यादेतत्यदि च सत्त्वासत्त्वयोर्निदर्शनेन सामर्थ्यासामर्थ्ययोराश्रयणं भवति, तर्हि सहकारिविरहकालेऽसत्त्वम् । तथाच क्षणिकतैवेति गतं स्थैर्याशयेति, तत्राह—न चासामर्थ्यं विहायेति । यदिदं सहकारिविरहकालेऽसत्त्वम्, तद्भवन्नये तावदसामर्थ्यरूपम्, अर्थक्रियासामर्थ्यस्य सत्त्वाभ्युपगमात्, तथाचैतादृशासत्त्वमेतादृगक्षणिकत्वं च नास्मभ्यमपि द्रुह्यतीति भावः । अथ वा सहकारिविरहकाले यदिदमसत्त्वम्, तदेवासामर्थ्यम्, ततश्चासदेव तन्नासमर्थमित्युक्तमुक्तमित्याह—न चासामर्थ्यमित्यादिना । सामर्थ्यम् हि सत्त्वमङ्गीक्रियते, ततश्चासत्त्वमप्यसामर्थ्यमेवेत्यर्थः । शङ्कते—अथैकस्मिन्निति । इयं च निरुद्धगतिसौगतशङ्का । अहो मामकभाग्योद्गमसमयोऽयं यदायुष्मतैवास्मत्समीहितं स्वीकृतमित्यभिप्रेत्याह—तुल्यमिदमिति । यद्यपीदमावयोः समानम्, तथापि स्थिरपक्षेऽनुपपत्त्यन्तरमस्तीति शङ्कते—तथापीति । स्थैर्यवादिना सहकारिसमवधाने सामर्थ्यमेतत् रूपं प्रागपि वर्तत इति वचनीयम्, तथाच प्रागपि कार्यप्रसवप्रसङ्ग इत्यर्थः । अस्य मिथो विरोधेन तर्काभासतां दर्शयितुम् प्रतिप्रसङ्गमाह—न सहकारीति । अङ्कुरक्षणोत्पादकमपि बीजक्षणं सहकारिविरहे तस्मिन्नेवासमर्थमिति वक्तव्यम्, अन्यथा तद्विरहेपि जनकत्वप्रसङ्गात्, तस्माद्यदसमर्थम् तदेव समर्थमपि, तथाच तस्मादुत्पत्तावसामर्थ्याद्युत्पत्तिप्रसङ्ग इत्यर्थः । अजननप्रसङ्ग इति वा पदच्छेदः । एवं सहकारिसमवधानासमवधानयोः सामर्थ्यासामर्थ्यम् चाविरुद्धमिति प्रौढिमारूढेणोक्तम् । वस्तुतस्तु समर्थमेव, समर्थमपि सहकारिवैकल्ये न जनक-

---

नही ? यदि समर्थ है, तब वह कार्य क्यो नही करती ? यदि नही, तब वही वस्तु समर्थ भी है और असमर्थ भी—इस प्रकार का विरोध होता है । यदि कहा जाय कि 'सहकारि-विरह-काल मे वह वस्तु असमर्थ होती है'—यह बात नही, अपितु वह रहती ही नही । तो यह कहना भी उचित नही, क्योकि सहकारि-विरह-काल मे जो यह पूर्व की वस्तु की असद्रूपता है, वह सहकारि-सन्निधान काल में विद्यमान होती है ? या नही ? यदि है, तब वस्तु अपने काल मे ही असद् हो जायगी । यदि नहीं, तब सहकारि-विरह-काल में वह असद्रूप न होगी, क्योकि असद्रूप के अभाव-काल मे भी वह वस्तु रहती है । यदि कहा जाय कि एक ही वस्तु सहकारी के सन्निधानासन्निधान से सद्-असद्-व्यवहार के योग्य होती है, तब एकही स्थिर वस्तु समर्थ-असमर्थ-व्यवहार के योग्य क्यो न होगी ? असामर्थ्य का नाम ही तो असत्त्व है । यदि एक ही वस्तु मे सहकारि-सन्निधान के अनन्तर कार्य-जनन-स्वभावता और सहकारि-विरह-काल मे असमर्थ-स्वभावता—इस प्रकार दोनो का रहना विरुद्ध नही, तो यह हमारे पक्ष मे भी समान ही है । "तथापि सहकारिसन्निधानकालीन वस्तु मे जो सामर्थ्य है, यदि वही पहले भी है तो पहले ही कार्य का जन्म होना चाहिए"—यह शङ्का

प्रसवप्रसङ्ग इति चेत्, न; यत्तव कार्येऽसमर्थं रूपं तदेव चेत्सहकारिसमवधानेऽपि ततोऽजननप्रसङ्ग इति तुल्यत्वात्। न च सहकारिणा स्वभावेऽन्तर्भाव', येन गलेपादुकान्यायेन तेषामपि तदैव समुदय' स्यात्किंतु भवन्मते समर्थक्षणोत्पादकानां क्षितिपवनपाथस्तेजसामिव सहकारितैव। न च सहकारिकृतोपकारस्य भेदाभेदविकल्पानुपपत्ति', वस्तुनस्तत्त्वान्यत्वाभ्यामनिर्वचनीयत्वात्, लोकसिद्धकारणताया अप्रत्याख्येयत्वात्। न च केवलव्यतिरेकाभाव, उपकारवस्तुनोर्भेदानभ्युपगमात्, उपकारकारणताया एव वस्तुकारणताभ्युपगमात्। प्रयोगस्तु धर्मयोर्विरोधनिरासेनैव निरस्त। अनैकान्तिकश्च, सहकारिमध्यमध्यासीनस्य विरुद्धधर्मसंसृष्टत्वे-

---

मिति स्थितिः। यत्तु समर्थस्यापि सहकारिसाकल्य एव जनकत्वमित्युक्तमयुक्तम्, सहकारिणा स्वभावान्तर्भावे यावत्कारणभावित्वेन सर्वदा कार्योत्पत्तिप्रसङ्गादिति पूर्वपक्षिणोक्तम्, तदनङ्गीकारपरास्तमित्याह—**न च सहकारिणामिति**। यथाहि सौगतानां मते क्षित्यादिचतुर्विधधातूनां समर्थबीजक्षणोत्पादकत्वमेव न समर्थक्षणस्वभावान्तर्भावः। एवमस्मन्मतेऽपि सहकारित्वमेव न स्वरूपत्वम्। इयांस्तु विशेषः—भवन्मते तज्जनकत्वमस्मन्मते तदुपकारकत्वमित्यर्थः। यच्चापकारकत्वपक्षेपि तेनोक्तम्, तदनूद्य निराचष्टे—**न च सहकारिकृतेति**। अनुपपत्तिरुपकारस्येति शेषः। नन्वनिर्वचनीयोपकारस्य कारणत्वे कारणस्य कारणत्व न स्यादित्युक्तमेव, तत्राह—**लोकसिद्धकारणताया इति**। कारणस्येति शेषः। नन्वत्रापयुक्त केवलव्यतिरेको नास्तीति, तत्राह—**न च केवलेति**। कैवल्यं चेदमनौपाधिकत्वमितरथानुपयोगात्, केवलस्य वस्तुमात्रस्येति वा, यदि कारणादुपकारस्य भेदः स्यात्स्यात्तदा कारणस्यापि पृथक्केवलव्यतिरेकप्रार्थनम्, नत्वेतदस्ति, भेदेनाप्यनिर्वचनीयत्वादित्यर्थः। ननु तथाप्यनुमाने किं दूषणमिति? तत्राह—**प्रयोगस्त्विति**। पूर्वोक्तप्रकारेण विरोधानिरूपणे क्वचिदसिद्धिः क्वचिद्विरुद्धत्वं क्वचिदनैकान्तिकत्वमित्यर्थः। अविवक्षितविशेषेऽपि विरोधेऽनैकान्तिकतामाह—**अनैकान्तिकश्चेति**। तद्धि सहकारिमध्यमध्यासीन कालान्तरीयमङ्कुरम् न जनयति, जनयति च तात्कालिकमिति विरुद्धधर्माध्यासवत्। अथ च स्वयं स्वस्मान्न भिद्यते इति तत्रानैकान्तिकत्वमित्यर्थ'। सहानवस्थायित्ववध्यघातकत्वभावाभावविरोधेषु यथायथमसिद्ध्यादयो ज्ञेयाः। यद्वा कुसूलनिहितसहकारिसमवहितबीजयोः परस्परविरुद्धधर्मससृष्टत्वस्याविशिष्टत्वात्सत्यपि विरुद्धधर्मससर्गे सहकारिसमवहितस्य स्वप्रतियोगिकभेदानधिकरणत्वादनैकान्तिकत्वमित्याह—**अनेकान्ति-**

---

नहीं कर सकते, क्योंकि आप ( सौगत ) के मत से सहकारि-विरह-काल मे जो वस्तु का असामर्थ्य है, यदि वही सहकारि-सन्निधान-काल मे है, तब वहाँ भी कार्य की अनुत्पत्ति ही रहेगी। सहकारी सामग्री का वस्तु के स्वरूप मे अन्तर्भाव हम नही मानते, जिससे कि विवश होकर यह मानना पड़े कि सहकारी कारणों का उदय ( समवधान ) भी पहले से ही है। किन्तु आपके मत से समर्थ क्षण के उत्पादक खेत, जल, तेज और वायु में सहकारितामात्र मानते है। सहकारि-जन्य उपकार के विषय मे जो विकल्प किये थे कि वह वस्तु से भिन्न है ? या अभिन्न ? वे भी अनुचित हैं, क्योंकि हम उपकार को अनिर्वचनीय मानते है। वस्तु में भी लोक-प्रसिद्ध कारणता का अपलाप नहीं किया जा सकता। यह जो कहा था कि केवल वस्तु के साथ व्यतिरेक ( वस्त्वभावे कार्याभाव ) न होने से वस्तु मे कारणता नही रहेगी। वह कहना भी सगत नही, क्योकि हम अनिर्वचनीय-वादी है, उपकार का वस्तु से भेद भी नहीं मानते, अतः उपकार-निष्ठ कारणता ही वस्तु की कारणता है, उसके लिए पृथक् अन्वय-व्यतिरेक घटाने की कोई आवश्यकता नही। यह जो अनुमान-प्रयोग किया था ( कुसूलस्थं बीजं सहकारिमध्यमध्यासीनाद्भिन्नं विरुद्धधर्मससृष्टत्वात् )। वह भी धर्मो के विरोध का निरास कर देने से निरस्त हो जाता है। 'विरुद्धधर्म-ससृष्टत्व' हेतु व्यभिचारी भी है, क्योकि क्षेत्रस्थ बीज मे साध्य के न रहने पर भी रहता है। द्वितीय अनुमान का 'कार्याव्यवहित-

ऽपि स्वतो भेदाभावात्। कार्याव्यवहितातीतक्षणातिरिक्तक्षणसंबन्धित्वादित्यपि हेतुः स्थायिवादिनो मते तस्यैव तथाविधक्षणसबन्धित्वात्तस्मिन्नेवानैकान्त.। तदेवं प्रसङ्गतद्विपर्ययोरपास्तत्वात्क्षणिकत्वानुमानं दूरोत्सारितम्।

किंचेदं क्षणिकत्वम्? किं क्षणसंबन्धित्वम? क्षणान्तरासंबन्धित्वे सति क्षणसंबन्धित्वं वा? क्षणान्तरमात्रासंबन्धित्वे सति क्षणसंबन्धित्वं वा? उत्पत्तिक्षणे सत्त्वं वा? स्वोत्पत्तिक्षणे सत्त्वं वा? स्वोत्पत्तिक्षणमात्रसत्त्व वा? एकक्षणावस्थायित्व वा? अनेकक्षणानवस्थायित्वविशेषितं वा? न तावत्प्रथम; सिद्धसाधनत्वात्, अनेकक्षणावस्थायिनोऽपि घटादे क्षणसंबन्धित्वात्। न द्वितीय.; अर्थान्तरत्वात्, क्षणान्तरासबन्धित्वेप्यनेकक्षणसबन्धित्वाविरोधात्। घटादीनामनेकक्षणसबन्धिनामपि स्वप्रध्वंसादिक्षणासबन्धित्वस्याभ्युपगमात्। न तृतीय., व्याघातात्, तत्संबन्धिक्षणस्यापि क्षणविशेषत्वेन क्षणान्तरत्वे सति क्षणान्तरमात्रासबन्धाभावात्। न चतुर्थ; सिद्धसाधनत्वात्, अनेकक्षणसंबन्धेप्युत्पत्ति-

कश्चेति। द्वितीयानुमानेऽप्यन्यतरानैकान्तिकमाह—**कार्याव्यवहितेत्यादिना**। यत्सत्तत्क्षणिकमित्यनुमानेऽप्युक्त दूषणमतिदिशति—**तदेवमिति**। यदि सहकारिसहित नाङ्कु तद्विरहकालीनबीजान्न भिद्येतार्थक्रियाकारित्वरूपसत्त्व न स्यादिति प्रसङ्ग, तच्चेद तस्माद्भिद्यते इति तद्विपर्ययः, तयो स्थायिन्यपि जनकत्वसमर्थनेन निरासात्सत्त्वहेतुक क्षणिकत्वानुमानमपि निरस्तमित्यर्थः।

साध्यनिष्ठक्षणिकत्वस्याप्रसिद्धविशेषणत्वसिद्धसाधनत्वयोरन्यतरापात इति दिदर्शयिषुर्विकल्पयति—**किंचेत्यादिना**। क्षणान्तरासबन्धित्वमात्रत्वे सति क्षणसबन्धित्व द्वितीय पक्षः। तृतीयस्तु क्षणान्तरसबन्धित्वात्यन्ताभावाधिकरणत्वे सति क्षणसबन्धित्वमिति विशेषः। सिद्धसाधनतामेव विवृणोति—**अनेकक्षणेति**। न केवल क्षणान्तरेण केनचिदसबन्धोऽनेकक्षणसबन्धेन न विरुध्यत इति सभावनामात्रम्, किं तर्ह्यपगतश्चानित्येषु पदार्थेषु स्थायिवादिभिरित्याह—**घटादिनामिति**। व्याघातमेव दर्शयति—**तत्संबन्धीति**। क्षणान्तरत्वाक्रान्त यत्तत्संबन्धात्यन्ताभाववत्त्वे सति क्षणसंबन्धित्वमिति हि तृतीयः पक्षः,

पूर्वक्षण-भिन्नक्षण-सम्बन्धित्व' हेतु भी व्यभिचारी है, क्योकि स्थायी-वादी के मत से कुसूलस्थ वीज ही अङ्कुर-जनक माना जाता है, अत उसमे साध्य न रहने पर भी हेतु रहता है। इस प्रकार प्रसङ्ग और विपर्यय ( कुसूलस्थ बीज यद्यङ्कुरसमर्थं स्यात्, अङ्कुर कुर्यादित्येक प्रसंग। न च करोति, तस्मान्न समर्थमित्येको विपर्यय.। क्षेत्रपतितं बीज यद्यसमर्थं स्यात्, न कुर्यादित्यपर. प्रसंग। करोति च तस्मान्नासमर्थमित्यपरो विपर्यय'--आत्म० वि० शां० पृ० ३४ ) का निरास हो जाने से क्षणिकत्वानुमान भी निरस्त हो गया।

क्षणिकत्व भी क्या है? क्या (१) क्षण-सम्बन्धित्व? या (२) क्षणान्तरासम्बन्धित्व-विशिष्ट क्षण-सम्बन्धित्व? या (३) क्षणान्तरमात्रासम्बन्धित्व-विशिष्ट क्षण-सम्बन्धित्व? या (४) उत्पत्तिक्षण-सत्त्व? या (५) स्वोत्पत्तिक्षण-सत्त्व? या (६) स्वोत्पत्तिक्षणमात्र-सत्त्व? या (७) एकक्षणावस्थायित्व? या (८) अनेकक्षणानवस्थायित्व-विशिष्ट एकक्षणावस्थायित्व? प्रथम पक्ष मे सिद्ध साधन दोष है, क्योकि अनेकक्षणस्थायी घट भी क्षण-सम्बन्धी होता ही है। द्वितीय पक्ष में अर्थान्तरतादोष है, क्योकि क्षणान्तरासम्बन्धित्व होने पर भी अनेकक्षण-सम्बन्धित्व का कोई विरोध नहीं—अनेकक्षण-सम्बन्धी घटादि अपने ध्वंस-क्षण के असम्बन्धी माने ही जाते है। तृतीय पक्ष में पारस्परिक विरोध है, क्योकि वस्तु जिस क्षण से सम्बद्ध है, वह क्षण भी दूसरे क्षण की अपेक्षा से क्षणान्तर कहला सकता है, अतः क्षणान्तर से सम्बद्ध वस्तु मे क्षणान्तरमात्रासम्बन्धित्व कैसे रहेगा? चतुर्थ ( उत्पत्तिक्षणे सत्त्वम् ) पक्ष में सिद्ध-साधनता है, क्योकि अनेकक्षण-सम्बन्धी स्थिर वस्तु में भी उत्पत्तिक्षण-

क्षणसंबन्धाविरोधात्। अत एव न पञ्चम'। नापि षष्ठः, स्वशब्देनाङ्कुराद्येकैकविवक्षायां तदुत्पत्तिक्षणमात्रसत्त्वस्य घटादिष्वभावेन क्षणिकत्वाभावप्रसङ्गात्। सर्वविवक्षायां तु लक्षणासम्भवित्वम्, एकैकस्य सर्वोत्पत्तिक्षणसत्त्वासंभवेन तन्मात्रसत्त्वासंभवात्। नापि सप्तम', अनेकक्षणसत्त्ववादिभिष्येकक्षणावस्थायित्वाङ्गीकारात्। नाप्यष्टम, प्रध्वंसाद्यनेकक्षणानवस्थायित्वस्यैकक्षणावस्थायिनि स्थायिन्यपि सम्भवात्। उत्पत्तिक्षणानन्तरक्षणवर्तिध्वंसप्रतियोगित्व क्षणिकत्वमित्यपि न, स्थिराणामपि यस्य कस्यचिदुत्पत्त्यनन्तरक्षणवर्तिध्वसप्रतियोगित्वोपपत्ते। एतेन स्वोत्पत्त्यनन्तरक्षणवर्तिध्वसप्रतियोगित्वमपि निरस्तम्, स्वशब्दखण्डनस्य पूर्ववदत्रापि तुल्यत्वात्। अथास्य घटस्यैतद्घटोत्पत्त्यव्यवहितानन्तरक्षणवर्तिध्वसप्रतियोगित्व

---

तच्च व्याहतम्। येन हि क्षणेन सवध्यते सोऽपि यत्किंचित्क्षणापेक्षया क्षणान्तरमेव। तथाच तेनाप्यसम्बन्धः सम्बन्धश्चेत्यापातात् व्याघातः स्यादित्यर्थ'। **अत एवेति**। यत एवानेकक्षणसतोऽप्युत्पत्तिक्षणसत्त्वसम्भव, अत एव स्वोत्पत्तिक्षणसत्त्वमपि सम्भवतीति सिद्धसाधनमित्यर्थ.। **नापि षष्ठ इति**। स्वोत्पत्तीत्यत्र स्वशब्देन किं प्रतिनियत. कश्चिदभिधीयत ? सर्वे वा पदार्था. ? आद्येऽव्याप्ति.। सर्वपदार्थानामेकपदार्थोत्पत्तिक्षणसत्त्वाभावेन तेषु क्षणिकेषु लक्षणाभावादित्यर्थः। द्वितीयेऽसम्भवमाह—**सर्वेति**। सप्तमपक्षेऽपि सिद्धसाधनतामाह—**नापि सप्तम इति**। **नाप्यष्टम इति**। उत्पत्तिक्षणावस्थायित्वेन तावदेकक्षणावस्थायित्वमस्ति प्रध्वमक्षणमारभ्योत्तरानेकक्षणानवस्थायित्वं चास्तीति स्थायित्वेप्युपपत्तेरर्थान्तरत्वमित्यर्थः। लक्षणान्तर दूषयति—**उत्पत्तिक्षणेति**। उत्पत्तिक्षणसमनन्तरक्षणवर्तिध्वसप्रतियोगित्व स्थायिनि न सम्भवतीत्यभिमानः। अत्र किमुत्पत्तिक्षणशब्देन यथाश्रुतोऽर्थो विवक्षित' ? स्वोत्पत्तिक्षणो वा ? आद्ये प्राह—**स्थिराणामपीति**। स्थिरस्यापि हि यो ध्वसक्षणस्तत्पूर्वक्षणापि यस्यकस्यचिदुत्पत्तिक्षणो भवतीत्यर्थान्तरमित्यर्थ.। द्वितीय दूषयति—**एतेनेति**। तत्रापि स्वशब्देन किं ध्वसप्रतियोगी विवक्षित. ? किं वा प्रतिनियतः कश्चित् ? आद्येऽनन्तरदोषानुषङ्गः। द्वितीये तु षष्ठपक्षोक्ताव्याप्तिरित्याह—**स्वशब्देति**। ननु न समस्तक्षणिकेषु अनुगतमिदमाचक्ष्महे लक्षणम्, येनैवमव्याप्तिः स्यात्किंतु प्रतिविशेष पृथगेवेत्यभिप्रेत्य शङ्कते—**अथेति**। अनन्तरत्व चात्रोत्तरत्व विवक्षितम्, तस्य स्थैर्येऽप्युपपद्यमानतया अर्थान्तर-

---

सत्त्व के रहने में क्यो विरोध होगा ? इसीलिए पञ्चम (स्वोत्पत्तिक्षण-सत्त्व) पक्ष भी निरस्त हो जाता है। षष्ठ ( स्वोत्पत्तिक्षणमात्रसत्त्वम् ) पक्ष मे 'स्व' शब्द से कोई एक अङ्कुरादि लेने पर उसके उत्पत्तिक्षणमात्र में सत्त्व न होने से घटादि में क्षणिकत्व न रह सकेगा। यदि 'स्व' शब्द से समस्त वस्तुओं का ग्रहण करेंगे, तब प्रत्येक वस्तु में सर्वोत्पत्तिक्षण-सत्त्व न रहने से असम्भव हो जायगा। सप्तम ( एकक्षणावस्थायित्वम् ) पक्ष में सिद्ध-साधनता होती है, क्योंकि अनेकक्षणावस्थायी वस्तु में स्थिर-वादी भी एकक्षणावस्थायित्व मानते हे। अष्टम ( अनेकक्षणानवस्थायित्वे सत्येकक्षणावस्थायित्वम् ) पक्ष मे भी सिद्ध-साधनता है, क्योकि घटादि स्थिर पदार्थ भी उत्पत्त्यादि एकक्षणावस्थायी हैं और ध्वस से लेकर उत्तर-उत्तर अनेक क्षणों में अनवस्थायी भी हैं। "उत्पत्ति क्षण के अनन्तर क्षण मे वृत्ति ध्वस की प्रतियोगिता ही क्षणिकता है"—यह लक्षण भी स्थिर वस्तु में घट जाता है, क्योकि घटादि की उत्पत्ति के अनन्तर क्षण में होनेवाले पटादि-ध्वस की प्रतियोगिता अनेक क्षणावस्थायी पटादि में रह सकती है। 'स्व' शब्द एक वस्तुपरक है या सर्ववस्तुपरक—आदि विकल्पों के द्वारा 'स्व' शब्द का निराकरण कर देने से ही "स्वोत्पत्त्यनन्तरक्षणवर्तिध्वसप्रतियोगित्वम्"—यह लक्षण भी निराकृत हो जाता है। यदि कहा जाय कि "घटोत्पत्ति के अनन्तर क्षण मे उत्पन्न ध्वस की जो घट-निष्ठ प्रतियोगिता है, वही घटगत क्षणिकता है"—इस प्रकार व्यक्तिशः क्षणिकत्व का लक्षण करना चाहिए। तो यह कहना भी उचित नहीं, क्योंकि इस प्रकार का क्षणिकत्व, ('यत् सत्,

क्षणिकत्वमेव प्रतिव्यक्ति क्षणिकत्वलक्षणमूहनीयमिति चेत्, मैवम्, एवंविधक्षणिकत्वसाधने सत्त्वसाधनस्यानैकान्तिकत्वापातात्, न ह्यतीतानागतानां च सतामेतदुत्पत्त्यव्यवहितानन्तरक्षणवर्तिध्वंसप्रतियोगित्वमस्ति, तत्तध्वसानामेतद्घटोत्पत्त्यनन्तरक्षणेऽनुत्पन्नत्वात्। एतेनोत्पत्तिक्षणध्वसासमानकालीनत्व क्षणिकत्वमित्यपि निरस्तम्, यत्किचिदुत्पत्तिक्षणध्वसासमानकालीनत्वस्य स्थायिष्वपि भावात्, स्वशब्देन विशेषणेऽपि पूर्वोक्तदोपानुषङ्गात्, प्रतिव्यक्तिलक्षणे च सत्त्वसाधनस्यानैकान्तिकत्वात्। घटत्वात्पटत्वादित्यादिप्रयोगसाधनाभ्यूहने चानागतघटपटादिष्वनैकान्तिकता तदवस्थैव। सर्वश्चायमुदितो हेतुकलाप पूर्वोदितप्रत्यभिज्ञाप्रत्यक्षविरोधितया कालात्ययापदिष्टः। यत्पुनरुक्त सामग्रीभेदाद्विरुद्धधर्मसंसर्गाच्च प्रत्यभिज्ञाज्ञानस्यैकत्वानुपपत्तिरिति, तदयुक्तम्, सम्प्रयोगसंस्कारयो संभूयसामग्रीत्वात्। न चान्यत्र सम्प्रयोगसंस्कारयो प्रत्येकमन्योन्यनिरपेक्षयो. कारणत्वादेकज्ञानकारणतानुपपत्ति, यस्मात्—

---

तापरिहारायाव्यवहितग्रहणम्। तत्कि यत्सत्तत्क्षणिकमित्यत्र सत्त्वहेतुना एतादृश क्षणिकत्व मिसाधयिषितम्? तथाचानैकान्तिकत्वम्। गणरात्रान्तरितपदार्थाना चेतद्घटोत्पत्त्यव्यवहितोत्तरक्षणवर्तिध्वसप्रतियोगित्वलक्षणक्षणिकत्वाभावेन विपक्षत्वात्सत्त्वहेतोश्च तत्रवर्तमानत्वादित्याह—**एवंविधेत्यादिना**। साध्यविकलश्च दृष्टान्त इति च द्रष्टव्यम्। अथ किमिति तत्र नास्ति? तत्राह—**तत्तद्ध्वंसानामिति**। उक्त दूषण लक्षणान्तरेऽप्यतिदिशति—**एतेनेति**। उत्पत्तिक्षणस्य य· प्रध्वसस्तेनासमानकालीनत्व यदुत्पद्यमानस्य तत्क्षणिकत्वम्, स्थिरस्य ह्यनेकक्षणावस्थायिनो नोत्पत्तिक्षणप्रध्वसासमानकालीनत्वम्, तेन नार्थान्तरत्वमित्यर्थ'। असम्भवपरिहारार्थं चोत्पत्तिपदम्। एतेनेत्येतद्विवृणोति—**यत्किंचिदित्यादिना**। पूर्वोक्तदोपोऽव्याप्तिः। अथ विशेषलक्षणमिद विवक्ष्यते, तदा पूर्वोक्तमनुमानदूषण स्यादित्याह—**प्रतिव्यक्तीति**। ननु विशेपलक्षणविवक्षाया न सत्त्वादिति हेतुरभिधित्सित:, किंतु घटत्वात्पटत्वादित्यादिव्यावृत्तधर्मा, अतो नानैकान्तिकता, तत्राह—**घटत्वादिति**। तथाप्यनागतेषु घटेष्वभिप्रेतसाध्यरहितेष्वनैकान्तिकता। एवं पटत्वादेरपीत्यर्थ.। एतद्घटत्वादित्यादिहेतुविवक्षाया व्याप्त्यसिद्धिरित्यपि द्रष्टव्यम्। एव साध्यप्रयुक्तदूषणान्युक्त्वा बाधमप्याह—**सर्वश्चायमित्यादिना**। ननु कथ संस्कारसम्प्रयोगयोः संभूयसामग्रीत्वम्? यावतान्यत्र निरपेक्षयोर्दृष्टयोरत्रापि तयो साहित्याभावो वर्णित इति, तत्राह—**नचान्यत्रेति**। किमन्यत्र निरपेक्षकारणत्वेनात्रापि नैरपेक्ष्यमनुमि-

---

तत् क्षणिकम्'—व्याप्ति के द्वारा) 'सत्त्व' हेतु से सिद्ध करने पर व्यभिचार दोष होता है—अतीत और अनागत पदार्थों में घटोत्पत्ति के अनन्तर क्षण में उत्पन्न ध्वंस की प्रतियोगिता (प्रकृत साध्य) न रहने पर भी सत्त्व रह जाता है। यह सम्भव नहीं कि घटोत्पत्ति के अनन्तर क्षण में सभी अतीतादि पदार्थों के ध्वस उत्पन्न हो जाएँ। इसी से 'उत्पत्तिक्षण के ध्वंस की असमानकालीनता ही क्षणिकत्व है'—यह लक्षण भी खण्डित हो जाता है, क्योंकि किसी घटादि की उत्पत्ति के ध्वस की असमानकालीनता, पटादि स्थिर पदार्थों में भी बन सकती है। 'स्व' शब्द-घटित लक्षण करने पर वही पूर्वोक्त (स्वत्वानिरूपणत्व) दोष होगा। व्यक्तिश लक्षण करने पर भी वही 'सत्त्व' साधन में अनैकान्तिकता एवं 'सत्त्वात्' के स्थान पर 'घटत्वात्' 'पटत्वात्'—आदि साधनों की कल्पना करने पर भी घट, पटादि में अनैकान्तिकता होती है। क्षणिकत्व-साधक पूर्वोक्त सभी हेतु, प्रत्यभिज्ञा प्रत्यक्ष से बाधित है। यह जो कहा था कि संस्कारादि सामग्री और परोक्षत्वादि विरुद्ध धर्मों के सम्बन्ध से प्रत्यभिज्ञा ज्ञान में अनेकता सिद्ध होती है। वह कहना अयुक्त है, क्योंकि इन्द्रिय-सन्निकर्ष और संस्कार—दोनों मिलकर एक ज्ञान के जनक हैं। 'अन्यत्र सर्वत्र संयोग और संस्कार परस्पर-निरपेक्ष होकर भिन्न-भिन्न ज्ञान के जनक होते हैं, अत दोनों एक ज्ञान के कारण नहीं बन सकते'—यह शङ्का उचित नहीं, क्योंकि अन्यत्र निरपेक्ष कारण भी कहीं-कहीं मिलकर एक कार्य

अन्यत्र लिङ्गेन्द्रिययोरन्योन्यनिरपेक्षयो.।
दृष्ट सम्भूयकारित्वं विशिष्टानुमिति प्रति ॥ १७ ॥

श्रूयमाणस्य स्मर्यमाणस्य वा लिंगस्याक्षनिरपेक्षस्यानुमानज्ञानहेतुत्वं दृष्टम्, दृष्टं चेन्द्रियस्यानपेक्षस्यापरोक्षज्ञानकरणत्वम्, तथापि सम्भूयोभाभ्यामय पवतो वह्निमानित्येकमनुमानज्ञानं जायमानमुपलभामहे। नह्यन्तरेणेन्द्रियसंप्रयोगमयमिति पुरोवर्त्याकारोपलम्भसंभव। न च विरुद्धधर्मससर्गाद्भेद; अस्मिन्नेवानुमानवेदने वह्निमानिति चायमिति च पारोक्ष्यापारोक्ष्य विरुद्धधर्मसंसर्गोपलब्धेः। तदेव प्रत्यभिज्ञाज्ञानस्यैकत्वेन प्रामाण्यसंभवात्तद्विरुद्ध न भेदानुमान कालात्ययापदिष्ट न भेदप्रत्यायनायालम्।

---

सितम्? तद्ध्यनैकान्तिकम्, लिङ्गस्य श्रूयमाणतया स्मर्यमाणतया वा क्वचिदिन्द्रियनिरपेक्षतयानुमित्युत्पादकस्येन्द्रियस्य च घटादौ लिङ्गनिरपेक्षतयाऽपरोक्षज्ञानजनकस्यायमग्निमान्पर्वत इत्यनुमित्युत्पत्तौ सम्भूयकारित्वदर्शनादित्याह—**अन्यत्रेति**। इममेव श्लोक विवृणोति—**श्रूयमाणस्येत्यादिना**। ननु किमित्यनुमितावपि तयोः साहित्यमिति, तत्राह—**नह्यन्तरेणेति**। यद्यप्यय पर्वतो वह्निमानिति प्रतिज्ञात्मकोऽवयवो नानुमन्यते गोतमगोत्रिभिः, तथापीदृश ज्ञान प्रत्यात्मवेदनीयमभ्यनुज्ञायत इति न निदर्शने विप्रतिपत्ति। यत्तु पारोक्ष्यापारोक्ष्यलक्षणविरुद्धधर्माध्यासाद्भेद इति, तत्राह—**न च विरुद्धेति**। एतेन विषयभेदाद्भेदोन्नयनमपि निरस्तम्। अय पर्वतो वह्निमानित्यत्रैव व्यभिचारात्, कथ चात्र पारोक्ष्यमधिगतम्? नहि तदित्युल्लेखमात्रात्, पारोक्ष्यापारोक्ष्ययोरप्यग्निमान्पर्वत. सोऽग्निमान्पर्वत इति ज्ञानयोस्तदन्वयानन्वयदर्शनात्। न च प्रत्यभिज्ञात्वादेव ज्वालाप्रत्यभिज्ञावदप्रामाण्यानुमानम्, विरुद्धधर्मससृष्टविषयत्वोपाधिहतत्वात्, अत्र च तदभावस्य निवेदितत्वात्, तथापि चाप्रामाण्ये सर्वत्रैकान्तात् क्वचिदेकक्षणस्याप्यसिद्धे क्षणिकस्यापि क्षयरागप्रसङ्गात्। प्रत्यभिज्ञाबाधमनुमानस्य समर्थितमुपसहरति—**तदेवमिति**। एतेन विज्ञानक्षणिकत्वानुमानमपि प्रत्युक्त वेदितव्यम्, विनष्टाविनष्टत्वलक्षणविरुद्धधर्मससर्गस्योपाधेर्विषयतया असिद्धेः, नीलपीतादेश्च विज्ञानबहिर्भावात्। अस्तु तर्हि प्रत्यक्षम्, न स्वतः परतो वा, असिद्धेः। किं विज्ञानस्य स्वयमेवोत्पत्तिनाशौ सिद्ध्यतः? ज्ञानान्तरेण वा? न तावदन्त्यः, अपसिद्धान्तात्तद्विज्ञानस्योत्पत्तिविनाशौ गृह्णत्तद्विज्ञानमपि गृह्णीयादपरथा किमीयाविमावित्यावेदयेत्। नच विज्ञानस्य विज्ञानान्तरग्राह्यत्व स्वप्रकाशदर्शने शोभनम्। स्वग्राहक विज्ञान स्वोत्पत्तिविनाशावप्यवगाहत इति चेत्, तत्किं स्वसमये? स्वाभावसमये वा? न तावदन्त्य., असम्भवादतिप्रसङ्गाच्च। किं नाम न शक्यसाधनमसता ज्ञानेन? नापि प्रथमः, सवित्समये तदुत्पत्तेरतीतत्वात् निधनस्य चानागतत्वादयोगिप्रत्यक्षस्य चातीताद्यगोचरत्वात्। कथ च तदिन्द्रियसन्निकर्षाजन्यस्य तत्प्रत्यक्षत्वम्? न हि ज्ञानोत्पत्ते प्राक् तद्ध्वसोऽस्ति, येन तदिन्द्रियसन्निकर्षादुत्पद्येत। अस्तु तर्हि योगिप्रत्यक्षम्, तस्य च त्रैकाल्यगोचरत्वात्, यदाह कीर्तिर्न्यायबिन्दौ प्रत्यक्षचातुर्विध्य वदन्—'तदनुभूतार्थभावनाप्रकर्षपर्यन्तज योगिज्ञान चेति, तेन न कोऽपि

---

पैदा करते देखे जाते हैं। जैसे कि यद्यपि श्रूयमाण या स्मर्यमाण लिंग, इन्द्रिय-निरपेक्ष होकर अनुमिति ज्ञान का हेतु देखा जाता है, एव यह भी देखा जाता है कि इन्द्रिय-सयोग भी लिग निरपेक्ष होकर घटादि-प्रत्यक्ष की उत्पत्ति करता है। तथापि दोनो मिलकर "पर्वतो वह्निमान्"—यह एक ही अनुमिति ज्ञान उत्पन्न करते हैं। इन्द्रिय सन्निकर्ष के बिना "अयम्"—इस प्रकार पुरोवर्त्याकार ज्ञान नही हो सकता। विरुद्ध धर्मों के ससर्गरूप हेतु से भेद का अनुमान हो भी नही सकता क्योकि इसी एक अनुमिति ज्ञान मे "वह्निमान्"—इस अंश मे परोक्षत्व और "अयम्"—इस अंश मे अपरोक्षत्वरूप विरुद्ध धर्मों का संसर्ग उपलब्ध होने से व्यभिचारी है। इस प्रकार प्रत्यभिज्ञा ज्ञान एक होने से प्रमाण ही है, अत· इस बाध से बाधित होकर हेतु, भेद का अनुमापक नही हो सकता।

कथ च व्याप्यव्यापकभावभेदोपलम्भाधीनात्मलाभमनुमानमसिद्धे भेदे भेद गोचरयेत् ? आगमोऽप्यभिधानाभिधेयभेदावगमपुर सरस्तस्मिन्नेवासिद्धे कथ तत्र प्रमाण्यमश्नुवीत ? शब्दान्तरादिकमपि सिद्धशब्दादिभेदोपजीवनेन प्रवर्तमानं तदसिद्धौ कथ कर्मोपासनादिभेदभावेदयेत् ? न हि भेदासिद्धौ यजतिददातिजुहोत्यर्थानां भेद सिद्ध्यति, येन 'धात्वर्थभेदे सर्वत्र विज्ञेयं भावनान्तरम्'–इति वार्तिककारोक्तो भावनाभेद सिद्ध्येत् । उपमानमपि मानान्तरा-

---

कलङ्कलेप.' इति, तदपि चार्तम् । तथाहि–कि तदीयनीलादिसंवेदनानामुत्पत्तिविनाशविषयत्वम् ? उत्पत्तिविनाशमात्रविषयस्य वा कस्यचित् ? नाद्य , नीलादिसंवेदनाना तत्तन्मात्रविषयत्वेन स्वोत्पत्त्यनगोचरत्वात् । अथान्या सवित् ? सापि कि स्वोत्पत्त्यादिविषयिणी ? परोत्पत्त्यादिविषयिण्यपि वा ? नान्त्यः , परबुद्धीना तदविषयत्वात्, विषयत्वे चापराद्धान्तात् । अथ सा स्वोदयान्येव विषयीकरोतीति योगिज्ञाननिदर्शनेन चेतरास्वनुमीयत इति मतम् । अस्तु तर्हि तदीयतादृशसंविदि प्रमाणपर्यनुयोग. । ननु यो यदभिनिविशमानोऽभ्यस्यति, स तस्य परा काष्ठा प्राप्नोति, चित्रकार इव शिल्पकर्माभ्यासी । अभ्यस्यति च कश्चिदवहितो ध्यानमित्यनुमानं प्रमाणम् , न , नष्टपुत्रादिशोकवशेनातिभावयत: कूटसाक्षात्कारस्यापि दर्शनात् । अभ्यस्यति च कश्चिदिति च शपथसाध्यम् । अस्तु तर्हि बुद्धिनिबद्धागमवशात्तादृशसर्वज्ञ इति सिद्धिः, स एव तर्हि सर्वज्ञः केन सिद्ध' ? ननु सोपि तदीयागमादेव, अहो दुर्भगोऽसि यत्तावकगोत्रधुराधुरैर्मारजिल्लोकजिदित्यादीन्युदारगुणग्रामनामान्युपार्जितानि, त्वया तु साप्रत मन्दाक्षजिदिति नाम निर्लज्जेनोपार्जितम् , कथमपरथा तत्प्रणीतागममेव तत्सिद्धावभिदधासि ? परस्पराश्रयादपि न बिभेषि ? तदित्थम्–

स्वतस्तावन्न विज्ञते' सिद्ध्येतामुदयव्ययौ । परतोऽपि न विज्ञते. सिद्ध्येतामुदयव्ययौ ॥

तदेव विरुद्धधर्मसंसर्गाद्भेदानुमान निरस्तम् , इदानी भेदशङ्कितानुमानजातस्य साधरण दूषणमाह—**कथंचेत्यादिना** । व्याप्यव्यापकयोर्यो भेदोपलम्भः, तमुपजीव्य प्रवतमान कथ भेदमात्रे प्रमाणं स्यात् ? अन्योन्याश्रयादित्यर्थः । इममेव दोषमागमेऽप्याह—**आगमोऽपीति** । **तस्मिन्निति** । अभिधानाभिधेययोर्भेद इत्यर्थः । यत्तु शब्दान्तरादि भेदसाधकमित्युक्तम्, तत्परिहरति—**शब्दान्तरादीति** । एतेषा चोदाहरणानि मिथ्यात्ववादे दर्शितानि । तत्र च शब्दान्तरेण धातुभेदन धात्वर्थभेदात्तदुपरक्तभावनाभेदाधिगतिश्च, शब्दादिभेदोऽद्याप्यसिद्धस्तत. कथ तदुपजीविन. समस्तभेदसाधकत्वम् ? इत्यर्थ. । उपलक्षणं चैतदभ्यासादेरपि, तेषामपि हि पुन श्रुतिसङ्ख्याविशेषसंज्ञान्तरगुणान्तरासन्निधिविशेषरूपाणामभ्याससङ्ख्यासंज्ञाङ्गप्रकरणान्तराणा भेदोपजीवनेनैव प्रवर्तमानाना तदसिद्धावप्रवृत्ते. । उपमानेऽप्युक्तन्यायमतिदिशति—उप-

---

भेद-ज्ञान-जनक अनुमान, अपने व्याप्य और व्यापक के भेद-ज्ञान के सहारे जन्म लेकर असिद्ध भेद की सिद्धि कैसे करेगा ? ( अर्थात् भेद की सिद्धि होने पर उक्त अनुमान की प्रवृत्ति और अनुमान की प्रवृत्ति से भेद की सिद्धि—इस प्रकार अन्योन्याश्रयता होती है ) । भेद के सिद्ध न होने पर अपने अभिधान और अभिधेय के भेद-ज्ञान से उत्पन्न होनेवाला शब्द प्रमाण भी कैसे भेद सिद्ध करेगा ? क्योकि शब्दान्तर, अभ्यासादि ( गत पृ० ६५ पर कथित ) प्रमाण भी सिद्ध शब्दादि-भेद के सहारे ही प्रवृत्त होते हैं, भेद की सिद्धि न होने पर प्रवृत्त ही न हो सकेंगे, फिर उपासनादि का भेद कैसे सिद्ध करेंगे ? भेद-सिद्धि के बिना 'यजति', 'ददाति', 'जुहोति'–आदि धात्वर्थ का भेद सिद्ध नही होता, जिसके बिना भावना का भेद सिद्ध नही हो सकता । जैसा कि कुमारिलभट्ट ने कहा है–

"धात्वर्थभेदे सर्वत्र विज्ञेयं भावनान्तरम् ।
उत्पत्त्यैकानुरक्ता हि नान्येनाप्यनुरज्यते ॥" (तं वा. २।२।१)

( अर्थात् भावना स्वरूपत एक होने पर भी उत्पत्ति वाक्यगत धात्वर्थ विशेष से विशेषित होकर भिन्न हो जाया करती है ) । उपमान भी प्रमाणान्तर से प्रमित गो, गवयादि दो पदार्थो के सादृश्य

वसितगोगवयादिवस्तुद्वयावच्छिन्नसादृश्यगोचरत्वात्, तदसिद्धौ न वस्तु भेदावभासनाय प्रभवति। तिलेभ्य एव तैलम् पयस एव दधीत्यर्थक्रियान्यथानुपपत्तिप्रभवत्वादर्थापत्तिरपि नान्तरेण तिलादिकारणभेदावभासं व्यवस्थासिद्धिरित्यन्योन्यसंश्रयान्न कारणभेदावभासे प्रामाण्यं भजते। अभावोऽपि नेदमिह, नेदमिदमिति धर्मिप्रतियोगिभेदाधीनसिद्धिर्न वस्तुभेदं साधयत्यन्योन्याश्रयात्।

अपि च—मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात्।
तच्चाध्यक्षादिमानेषु गीर्वाणैरपि दुर्भणम् ॥ १८ ॥

प्रत्यक्षादिप्रमाणाधीना तत्प्रमेयव्यवस्थिति., प्रमाणानि च लक्षणाधीनाधिगमानि, लक्षणं च दुर्निरूपणम्। तथाहि–तत्र न तावदिन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारीत्यक्षपादोदित

---

**मानमपीति**। मानान्तरावसित यद् गोगवयादिवस्तुद्वय तदवच्छिन्नसादृश्यगोचरत्वातस्य च वस्तुद्वयस्यासिद्धावुपमानमपि न समस्तभेदावभासनाय प्रभवतीति योजना। अर्थापत्तेरपि भेदेऽप्रामाण्यमाह—**तिलेभ्य एवेत्यादिना**। अर्थापत्तिरपि न कारणभेदावभासे प्रामाण्य भजते, कुतस्तिलेभ्य एव तैलं पयस एव दधीति तैलदधिलक्षणार्थक्रियाया व्यवस्था नियति, तदन्यथानुपपत्तिप्रभवत्वात्। भवतु, तावतापि किमायातमित्यत आह—**नान्तरेणेति**। तिलेभ्य एव दुग्धेभ्य एवेत्यत्र यदि तिलदुग्धयोर्भेदो न प्रतीत., तत. किं कुत्र व्यवस्थाप्येत? प्रत्युताव्यवस्थैव, तस्मात्तयोर्भेदसिद्धावेव व्यवस्थासिद्धिर्व्यवस्थान्यथानुपपत्तिलक्षणार्थापत्त्या च कारणयोर्भेदसिद्धिरभिप्रेतेत्यन्योन्याश्रयादिति योजना। न चाभावप्रमाणगम्योस्तु भेद, तस्य च परस्परव्यावृत्तिरूपभेदे सम्भवति प्रवृत्तिरिति, तत्राह—**अभावोऽपीति**। संसर्गाभावेऽन्योन्याभावे वा प्रवर्तमानोऽभावो धर्मिप्रतियोगिभेदज्ञानाधीनप्रवृत्तिस्ततश्च भेदसिद्धावन्योन्याश्रयतेत्यर्थः।

निर्भग्नः क्षणभङ्ग एष विषमो बद्धोतिदुर्बुद्धिभिर्बौद्धैर्विभ्रमविभ्रमालयमहामायाविमूढान्तरै।
य विध्वस्तसमस्तभावविकृति व्याकीर्णमायाक्रय लब्ध्वाऽविक्रियबोधमोदजलधि स्थाणु स्थिर तं भजे ॥

प्रत्यक्षादिप्रमाणाना भेदविषयत्वाभावाद्भेदस्य च दुर्निरूपत्वान्नाद्वैतप्रतिपादकागमाना तैर्विरोध इत्यधस्तादभ्यधायि, इदानी यै. प्रमाणैर्विरोध ब्रूषे, तान्येव दुर्निरूपाणि, कैर्विरोध स्यात्? इत्याह—**अपि च मानाधीनेति**। **तच्चेति**। तच्च लक्षणमध्यक्षादिषु देवैरपि वक्तुम् न शक्यत इत्यर्थ.। अनेन प्रमाणादिषोडशपदार्थव्युत्पादनरूपन्यायदर्शनविरोधोऽपास्यते। वैशेषिकदर्शनविरोधो हि षट्पदार्थनिर्मथनेन पुरो निवारित। श्लोक विवृणोति—**प्रत्यक्षादीति**। यद्यपि प्रमाणसामान्यलक्षणखण्डनानन्तरं तद्विशेषप्रत्यक्षादेः खण्डन युक्तम्, तथापि प्रत्यक्षलक्षणखण्डनप्रसङ्गेन तदपि खण्डयिष्यत इति लाघवमभिप्रेत्य न्यायसूत्रोक्त प्रत्यक्षलक्षण दूषयति—**तत्रेति**। तेषु प्रमाणेषु मध्य इत्यर्थ। यद्यपीन्द्रियार्थसन्निकर्षोत्पन्नमव्यपदेश्यमव्यभिचारि व्यवसायात्मक प्रत्यक्षमिति सूत्रम्, तथापीयानेवांशो लक्षणोपयोगी। अव्यप-

---

को विषय करता है, भेद की सिद्धि न होने पर वस्तु-भेद सिद्ध नही कर सकता। 'तिलो से ही तैल', 'दुग्ध से ही दधि' होता है—इस प्रकार की व्यवस्था की न्यथानुपपत्तिरूप अर्थापत्ति भी तिल और दुग्ध रूप कारण के भेद-ज्ञान के बिना प्रवृत्त नही हो सकती। अनुपलब्धि प्रमाण भी 'नेदमिह', 'नेदमिदम्'—इस प्रकार अनुयोगी और प्रतियोगी के भेद-ज्ञान पर निर्भर है, अतः अन्योन्याश्रयता दोष के कारण वह वस्तु-भेद का साधक नहीं हो सकता।

न्याय दर्शन-प्रदर्शित प्रमाण-प्रमेय पदार्थों मे प्रत्यक्षादि प्रमाणो के अधीन प्रमेय की व्यवस्था होती है और प्रमाणो की व्यवस्था उनके लक्षणो पर निर्भर है। किन्तु लक्षण का निरूपण सम्भव नहीं। जैसे कि प्रत्यक्ष का लक्षण अक्षपाद ने किया है—"इन्द्रियार्थसन्निकर्षोत्पन्न ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" ( न्या० द० १।१।४ )। यह लक्षण युक्त नही प्रतीत होता,

प्रत्यक्षलक्षणं घटते। अव्यभिचारित्वस्य दुरधिगमत्वात्। तदव्यभिचारित्वं किमदुष्टसामग्रीजन्यत्वेन ज्ञायते ? कि वा बाधरहितत्वेन ? आहोस्वित्प्रवृत्तिसामर्थ्येन ? उतान्येन केनचित् ? न प्रथमं, अप्रत्यक्षसामग्रीनिष्ठदोषाभावस्याध्यक्षेणाध्यवसातुमशक्यत्वात्। नापि ज्ञानाख्यलिङ्गेन, ज्ञानमात्रेणादुष्टसामग्रीजन्यत्वसाधने विभ्रमज्ञानेष्वनैकान्तिकत्वात्। नाप्यव्यभिचरितज्ञानेन तदवगमः, परस्पराश्रयत्वात्, अदुष्टकरणजन्यत्वेन ज्ञानस्याव्यभिचरितत्वसिद्धिरव्यभिचरितत्वज्ञानाच्चादुष्टकरणजन्यत्वसिद्धिरिति। नापि द्वितीयः, विकल्पासहत्वात्। किं सर्वपुरुषबाधरहितत्वम् ? उत प्रतिपत्तुः ? नाद्यः, सर्वपुरुषबाधरहितत्वस्यासर्वज्ञाविज्ञेयत्वात्। न द्वितीयः, प्रतिपत्तुर्देशान्तरगमननिधनादिना बाधानुदये तदीयमरुमरीचिकाविभ्रमाणाम-

देश्यपदस्य निर्विकल्पकप्रत्यक्षभेदसूचकत्वात्। व्यवसायात्मकपदस्य रूपं रस इत्यादिप्रत्यक्षज्ञानस्य शब्दानुवेधेन शाब्दत्वशङ्कानिवर्तनेन सविकल्पकप्रत्यक्षप्रामाण्यसमर्थनार्थत्वात्, इति हृदि निधायैतावदुदाहृतम्। तत्र चाव्यभिचारीति शुक्तिरजतज्ञानादिव्यवच्छेदः। सुखादिव्यावृत्त्यै ज्ञानपदम्। अनुमानादिव्यावृत्त्यर्थमाद्यं विशेषणम्। एकदेशस्य दुर्ज्ञानत्वादसिद्धिं लक्षणस्याह—**अव्यभिचारित्वस्येति**। अत्र प्रत्यक्षतोऽनुमानतो वाऽइदमधिगम्यते ? इत्यग्रे विकल्प्य दूषयिष्यते, इदानीं तूभयानुगुणतज्ज्ञापकत्वेनाभिमतान्धर्मान्विकल्प्य दूषयति—**तदव्यभिचारित्वमित्यादिना**। ननु कथं प्रत्यक्षपक्षे धर्माणामानुगुण्यमिति चेत्, रजतत्वोपदेशस्यैव तत्प्रत्यक्षसाचिव्यमित्यवेहि। प्रवृत्तेश्चेष्टायाः फलेन तोयादिना अव्यभिचारस्तत्प्राप्तिनियमः प्रवृत्तिसामर्थ्यम्, अदुष्टसामग्रीजन्यत्वेनेति प्रथमपक्षे यदिदमदुष्टसामग्रीजन्यत्वं तत्किं प्रत्यक्षेण ज्ञायते ? उतानुमानेन ? आद्ये प्राह—**अप्रत्यक्षेति**। कार्यैकगम्यसामग्र्या दोषाणां च प्रत्यक्षत्वाभावात् तन्निष्ठदोषाभावोऽप्यप्रत्यक्षः, अतस्तज्जन्यत्वमपि ज्ञानगतमप्रत्यक्षमिति भावः। द्वितीयेऽपि किं ज्ञानत्वलिङ्गेन तदनुमीयते ? किंवाऽव्यभिचारिज्ञानत्वेन ? नाद्य इत्याह—**नापीति**। तत्र हेतुः—**ज्ञानमात्रेणेति**। भावप्रधानो निर्देशः। द्वितीयं दूषयति—**नाप्यव्यभिचरितेति**। परस्पराश्रयमेव विवृणोति—**अदुष्टेति**। बाधरहितत्वेनाव्यभिचारित्वावगम इति द्वितीयं पक्षं दूषयति—**नापीति**। **उत प्रतिपत्तुरिति**। यो हि येन प्रत्यक्षेणार्थं प्रतिपद्यते तत्र तस्य बाधाभावाद्वेत्यर्थः। **प्रतिपत्तुर्देशान्तरेति**। यदा हि मरुमरीचिकाविभ्रमोदयानन्तरं प्रतिपत्तुर्देशान्तरगमनं देहव्यापत्तिर्वा भवति, तत्र तस्य न बाधोदय इति तद्भ्रमाणामव्यभिचारित्वं स्यादित्यर्थः। आदिग्रहणेन स्वस्थस्यैव जिज्ञासाद्यभावो गृह्यते। प्रवृत्तिसामर्थ्येनेति तृतीय

क्योंकि यहाँ अव्यभिचारित्व का ज्ञान सम्भव नहीं। अव्यभिचारित्व का ज्ञान क्या (१) निर्दुष्ट सामग्री-जन्यत्व से होगा ? या (२) बाध-रहितत्व से ? या (३) प्रवृत्ति-साफल्य से ? या (४) और किसी हेतु से ? ( जयराशिभट्ट ने भी इन्ही चार विकल्पो के द्वारा अव्यभिचारित्व का ऐसा ही खण्डन किया है—द्र० तत्त्वोप० पृ० २ )। (१) प्रथम ( निर्दुष्टसामग्री-जन्यत्व ) पक्ष मे ( जिज्ञासा होती है कि प्रत्यक्ष की सामग्री मे अदुष्टता का ज्ञान किस प्रमाण से होगा ? प्रत्यक्ष से ? या ज्ञानत्वरूप लिंग से ? ) इन्द्रियादि अतीन्द्रिय सामग्री मे दोषाभाव का प्रत्यक्ष तो सम्भव नही। ज्ञानत्वरूप लिंग से अदुष्टसामग्री-जन्यत्व का अनुमान ( इदं ज्ञानम्, अदुष्ट-सामग्रीजन्यम्, ज्ञानत्वात् ) नहीं कर सकते, क्योकि दुष्टसामग्री-जन्य भ्रमज्ञान मे भी रहने से 'ज्ञानत्व' हेतु व्यभिचारी है। अव्यभिचारिज्ञानत्व से अदुष्टसामग्री-जन्यत्व का अनुमान करने पर अन्योन्याश्रयता होती है—अदुष्टकरण जन्यत्व से ज्ञान मे अव्यभिचारित्व की सिद्धि और अव्यभिचारित्व-ज्ञान से अदुष्टकरण-जन्यत्व की सिद्धि होगी। (२) द्वितीय ( बाध-रहितत्व ) पक्ष से भी जिज्ञासा होती है कि 'सर्वपुरुषो की दृष्टि से बाध-रहितत्व' विवक्षित है ? या केवल ज्ञाता पुरुष की दृष्टि से ? सर्वपुरुष-बाध-रहित्व का ज्ञान किसी असर्वज्ञ को तो हो नही सकता। ज्ञाता पुरुष की दृष्टि से बाध-रहितत्व, व्यभिचारी ज्ञान मे भी रह

प्यर्थाव्यभिचारित्वप्रसङ्गात् । नापि तृतीय', तस्याप्यनिरुक्ते । तथाहि—प्रवृत्तिर्नाम पुंस समीहा, चेष्टा, तस्या. फलेनोदकादिनाभिसंबन्ध' प्रवृत्तिसामर्थ्यम्, तेनोदकादिविज्ञानस्यार्थाव्यभिचारित्वमवगम्यत इति स्थिति. । तच्चेदं प्रवृत्तिसामर्थ्यं लिङ्गत्वादवगत सदव्यभिचारित्व बोधयतीति वाच्यम् । तथा सति किं ज्ञानमात्रावगतं सत्तदव्यभिचारिता विज्ञानस्यावगमयेद् ? उताव्यभिचारिज्ञानावगतम् ? नाद्य , भ्रान्तिस्वप्नादिज्ञानेनानैकान्त्यात् । नापि द्वितीय , परम्पराश्रयत्वात् । किंचायमन्वयव्यतिरेकी हेतु ? केवलव्यतिरेकी वा ? नाद्य , सर्वज्ञानानामव्यभिचारित्वे विप्रतिपन्नं प्रति सपक्षासंभवात् । अस्तु तर्हि द्वितीय , तथाचार्यवाचस्पतेस्तात्पर्यटीकाया प्रयोग.—'विवादाध्यासित ज्ञानमर्थाव्यभिचारि समर्थप्रवृत्तिजनकत्वात्, यदि पुनरेव नाभविष्यन्न समर्था प्रवृत्तिमकरिष्यद्यथा प्रमाणाभास ' इति, मैवम् , हेतोर्विरुद्धत्वात् । दृश्यते हि मणिप्रभायां मणिबुद्ध्या प्रवर्तमानस्य मणिप्राप्तेः प्रवृत्तिसामर्थ्यम् , न

पक्ष दूषयति—**नापि तृतीय इति** । पूर्ववाद्यभिमत प्रवृत्तिसामर्थ्य तदनिरुक्ति दर्शयितु विवेचयति—**प्रवृत्तिर्नामित्यादिना** । समीहेत्यस्यैव विवरणम्—**चेष्टेति** । भवत्विद प्रवृत्तिसामर्थ्य ततः किम् ? तत्राह—**तच्चेदमिति** । **लिङ्गत्वादिति** । व्याप्तत्वपक्षधर्मतया ज्ञात हि लिङ्ग भवति, इतरथाऽसिद्धत्वप्रसङ्गादित्यर्थ । तच्च प्रवृत्तिसामर्थ्यं किं ज्ञानत्वलिङ्गेनावगतं सत्साध्य बोधयति ? किं वा अव्यभिचारिज्ञानत्वेनावगतम् ? इति विकल्प्याद्येऽनैकान्तिकतामाह—**भ्रान्तीति** । अत्र च प्रवृत्तिसामर्थ्यं समर्थप्रवृत्तिजनकत्वमभिमतमितरथा वैयधिकरण्य स्यात् । पूर्व प्रवृत्तिसामर्थ्यलक्षणो हेतुर्दर्शित इत्युक्तम्, इदानी भवतु सुज्ञानत्वम्, तथापि कीदृशो हेतु. ? इति विकल्पयति—**किंचायमिति** । चः किंचार्थ. । पञ्चरूप. खल्वन्वयव्यतिरेकी । अत्र च सपक्षे सत्त्वलक्षण द्वितीय नास्तीत्यभिप्रेत्याह—**सर्वज्ञानानामिति** । न च तदनुभवाभावे संदेहाभावः, विपर्यासादपि प्रत्यवस्थानसंभवात् । न च सोऽपि, अन्यत्र सत एवानिर्वचनीयवादात् । न च सर्ववादविधिनिषेधप्रसङ्गः, उक्तवक्ष्यमाणसमाधानत्वात्, एतेनोदयनोद्गारोऽपि चिकित्सित । केवलव्यतिरेकिपक्षं शङ्कते—**अस्तु तर्हीति** । तात्पर्यटीका न्यायवार्तिकटीका । उदाहृतश्चाय ग्रन्थः स्वतःप्रामाण्यवादे । भ्रान्तिव्यावृत्त्यै समर्थपदम् । तदेतद्दूषयति—**मैवमिति** । विरुद्धत्व दर्शयति—**दृश्यते**

जाता है , जैसे कि मरु-मरीचि मे जल का ज्ञान करके कोई ज्ञाता देशान्तर चला गया या मर गया , तब उस ज्ञान मे भी अव्यभिचारित्व रहना चाहिए । (३) तृतीय ( प्रवृत्ति-सामर्थ्य ) का भी निवचन नहीं हो सकता , क्योकि प्रवृत्ति नाम है पुरुष की समीहा या चेष्टा का । उस प्रवृत्ति का जलादिरूप फल के साथ सम्बन्ध होना ही प्रवृत्ति—सामर्थ्य है, इससे जलादि-ज्ञान मे अव्यभिचारित्व का ज्ञान होता है । प्रवृत्ति-सामर्थ्य लिग होने के कारण स्वय ज्ञात होकर ही अव्यभिचारित्व का गमक हो सकेगा । यहाँ जिज्ञासा होती है कि उसका ज्ञानमात्र, अव्यभिचारित्व का अनुमापक माना जाता है ? या अव्यभिचारिज्ञान ? प्रथम पक्ष मानने पर पूर्ववत् भ्रान्ति ज्ञानादि मे व्यभिचार और द्वितीय पक्ष मे अन्योन्याश्रयता होगी । प्रवृत्ति-सामर्थ्यरूप हेतु का ज्ञान किसी प्रकार मान भी लिया जाय, तब भी यह हेतु अन्वयव्यतिरेकी माना जायगा ? या केवलव्यतिरेकी ? प्रथम पक्ष युक्त नही , क्योकि जिस व्यक्ति की दृष्टि से किसी भी ज्ञान मे अव्यभिचारित्व का निश्चय नही, उसके लिए अन्वय-दृष्टान्त ( सपक्ष ) ही सम्भव नही । यदि कहा जाय कि द्वितीय ( केवलव्यतिरेकी ) पक्ष निर्दुष्ट है जैसा कि वाचस्पति मिश्र ने तात्पर्य टीका ( पृ० ५ ) मे कहा है—"विवादास्पद ज्ञान, अर्थाव्यभिचारी है, समर्थ प्रवृत्ति-जनक होने से, यदि अव्यभिचारी न होता तो समर्थ प्रवृत्ति नही करा सकता था, जैसे—प्रमाणाभास ।" तो यह नही कह सकते , क्योकि उक्त हेतु, विरुद्ध (साध्यासमानाधिकरण) है—देखा जाता है कि मणि-प्रभा में मणि का भ्रम होता है, उससे भी प्रवृत्त होकर मणि की प्राप्ति

चाव्यभिचारित्वम्। उक्तं हि—

"मणिप्रदीपप्रभयो मणिबुद्ध्याभिधावतो ।
मिथ्याज्ञानाविशेषेपि विशेषोऽर्थक्रियां प्रति"॥ इति (प्रमा०वा०३।५७)।

कश्चायं फलाभिसंबन्ध ? ज्ञानप्रतिभासितार्थस्य प्राप्ति ? उत तज्जातीयस्य ? नाद्य., वृषभमहिषपरिवर्तनादिना क्रियाविभागन्यायेन विज्ञानावभासितसलिलावयविनो विनाशेन ज्ञानस्य फलाभिसबन्धाभावप्रसङ्गात्। न द्वितीय., ग्रहतारादिविज्ञाने तस्य तज्जातीयस्य वा प्राप्त्यभावात्। नापि चतुर्थं, अन्यदप्यनुमानान्तरम् ? उत प्रत्यक्षम् ? नाद्य', लिङ्गस्याव्यभिचरितत्वलक्षणसाध्येन व्याप्तिग्रहणदशायामेवाव्यभिचारस्य गृहीतत्वे पुनरनुमानानुपयो-

हीति। या हि मणिप्रभाया मणिबुद्धि., सा तावदर्थव्यभिचारिणी, अयथार्थत्वात्। न च मणिप्रभैव मणिः। अथ च समर्थप्रवृत्तिजनकत्वमस्ति, मणिप्रापकत्वादित्यर्थः। अत्र सौगतवार्तिकसमतिं दर्शयति—उक्त हीति। यदि हि मणिप्रभाया प्रदीपप्रभाया च मणिबुद्ध्या पुरुषावभिधावतस्तदा तयोरुभयोरपि विज्ञाने एव, तथाप्यर्थक्रिया प्रति विशेषोस्ति, मणिप्रभाया मणिबुद्धेर्मणिप्रापकत्वात्, इतरत्र तदभावादित्यर्थः।

प्रवृत्तिसामर्थ्यस्य हेतुविशेषान्तर्भावो दुर्निरूप इत्युक्तम्. इदानीं प्रवृत्तिसामर्थ्यमेव सर्वज्ञानानुगतमशक्यनिरूणमित्याह—कश्चायमिति। वृषभमहिषेति। अयमर्थ:—वैशेषिकादिमते विज्ञानप्रतिभासितार्थप्रापकत्व फलाभिसबन्धरूपप्रवृत्तिसामर्थ्यमित्ययुक्तम्, अव्यापकत्वात्। यदा हि दूरतरे सरसि य. सलिल दृष्ट्वा तत्पिपासया सर्पति, तदा समसमयमेव यदि महिषेण वृषभेण वा तदम्भ. क्षोभित भवेत्तस्तदम्भोवयव्यारम्भकावयवेषु क्रियोत्पद्यते, ततश्च पूर्वतनद्रव्यारम्भकसयोगविघातकविभागोत्पत्तिस्ततश्च सयोगनाशस्तदनु च तदारब्धावयविनाश', उत्तरसंयोगोत्पत्त्या चावयव्यन्तरोत्पत्तिरिति तेषा दर्शनम्, ततश्च पूर्वज्ञात' सलिलावयवी विलीन एव, पीयमानश्चान्य एवेति पूर्वज्ञानजनितप्रवृत्तेः फलाभिसबन्धो न स्यात्, अस्ति च तत्, इतरथा व्यभिचारितयाऽप्रामाण्यप्रसङ्गादिति। विज्ञानप्रतिभासितार्थसजातीयार्थप्रापकत्व फलाव्यभिचार इत्यप्ययुक्तम्। ग्रहतारकादिविज्ञानस्य सजातीयस्य वा विजातीयस्य वा ग्रहादे. प्रापकत्वाभावेनाव्यापकत्वादित्याह—ग्रहेति। पक्षद्वयेऽप्युपेक्षाज्ञानस्य प्रामाण्य न स्यादित्यपि द्रष्टव्यम्। अन्येनेति पक्ष निषेधति—नापीति। यत्तदवोचाम—प्रत्यक्षमनुमान वेति विकल्प्य दूषयिष्यतीति, तदाह—अन्यदपीति। येन हि लिङ्गेनाव्यभिचारित्वमनुमीयते तस्य तेन व्याप्तिर्गृहीता ? न वा ? आद्ये प्राह—लिङ्गस्येति। नहि ज्ञानविशेषेऽव्यभिचारित्व विप्रतिपन्नम्, येनाग्निमत्वादिवदन्यत्र प्रसिद्ध-

हो जाने से प्रवृत्ति सफल ही होती है। धर्मकीर्ति ने भी कहा है—'एक पुरुष मणि की प्रभा को मणि समझ कर मणि लेने दौडता है और दूसरा पुरुष प्रदीप की प्रभा को मणि समझ, मणि उठाने दौड़ता है—दोनों को मिथ्या ज्ञान समान होने पर भी फल मे विशेषता देखी जाती है कि एक को मणि मिलती है, दूसरे को नही।'

फलाभिसम्बन्ध भी क्या है ? ज्ञान-प्रतिभासित पदार्थ की प्राप्ति ? या तज्जातीय पदार्थ की प्राप्ति ? प्रथम पक्ष उचित नही, क्योंकि कोई प्यासा व्यक्ति दूर से जल देखकर चलता है। इतने मे किसी जल-जन्तु ने अपनी पूँछ फटकार दी, फिर क्या था ? वैशेषिको के जलीय-परमाणुओ मे क्रिया, क्रिया से विभाग, विभाग से आरम्भक सयोग नाश, जिससे पूर्व का देखा हुआ जल ( अवयवी ) नष्ट हो जाता है। उस प्यासे के पहुँचने तक द्व्यणुकादि-क्रम से नये अवयवी जल का जन्म हो जाता है, उसे जल मिला, किन्तु जो दूर से दीखा था वह नही, अतः ज्ञान-प्रतिभासित जल की प्राप्ति न होने से उसकी प्रवृत्ति मे फलाभिसम्बन्ध ( सफलता ) नही होनी चाहिए। तज्जातीय पदार्थ की प्राप्ति भी सर्वत्र नही होती, जैसे कि सूर्य, चन्द्र, नक्षत्र—आदि के ज्ञान में न तो सूर्यादि की ही प्राप्ति होती है और न तज्जातीय की ही। (४) चतुर्थ ( अन्य किसी प्रमाण से ) पक्ष मे भी

गात्, अगृहीतत्वे वानुमानस्याप्रवृत्तेः । न द्वितीयः, ज्ञानग्राहकेणैव मानसप्रत्यक्षेण तस्यार्थाव्यभिचारित्वग्रहणेऽभ्यासदशायामिवानभ्यासदशायामपि संशयानुदयप्रसङ्गात् ।

किंचेदमव्यभिचारित्वं नाम विज्ञानस्य ? किं प्रमात्वापरपर्याया जातिः ? उतोपाधिः ? न तावज्जातिः, जातिसङ्करप्रसङ्गात् । तथाहि-सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इति वदद्भिरिदं रजतमिति विभ्रमज्ञानमिदमंशे प्रमाणमप्रमाणं च रजतांशेऽभ्युपगम्यते परीक्षकैः, तथाच—

"अन्योऽन्यपरिहारेण भिन्नव्यक्तिनिवेशिनोः ।
सामान्ययोः समावेशो जातिसङ्कर उच्यते ॥"

इत्युक्तन्यायेन स्मृतौ प्रमात्वपरिहारेणैवाप्रमात्वस्य वृत्तेरप्रमात्वपरिहारेण च प्रत्यक्षादौ प्रमात्ववृत्तेरेकस्यां विभ्रमव्यक्तावुभयसमावेशे कथं न जातिसङ्करः स्यात् ? उपाधिश्चाबाधितत्वाविसंवादित्वादिः प्रागुक्तप्रकारेणैवापाकरणीयः, अस्तु वा यथाकथंचिदविचारितरमणी-

मेवान्यत्रानुमीयेत, अपि त्वव्यभिचारित्वमात्र इति भावः । द्वितीये प्राह—**अगृहीतत्व इति** । प्रत्यक्षपक्षं दूषयति—**न द्वितीय इति** । प्रत्यक्षत्वे ज्ञानप्रतीतिसमसमयमेव तस्यापि निर्णीतत्वादनभ्यासदशायामव्यभिचारित्वे संशयो न स्यादित्यर्थः ।

तदित्थमव्यभिचारित्वस्य ज्ञापकाभावादसिद्धिरभिहिता, इदानीमव्यभिचारित्वमेव दुर्निरूपमित्याह—**किंचेदमिति** । प्रमात्वमित्यपरः पर्यायो यस्याः सा तथोक्ता । प्रमात्वमितिनामिकेति यावत् । प्रमात्वरूपमव्यभिचारित्वं न जातिः । इदं रजतमित्यादिभ्रमेषु धर्म्यंशेऽव्यभिचारित्वरूपप्रामाण्याङ्गीकारादितरांशे चाप्रामाण्याङ्गीकारात् । उभयोश्च परस्परव्यभिचारिणोरेकत्र वृत्तौ जातिसङ्करादित्याह—**न तावज्जातिरित्यादिना** । जातिसङ्करस्वरूपमेव वृद्धवचनेन द्रढयति—**अन्योऽन्यपरिहारेणेति** । नच स्वतःप्रामाण्यवादोक्तः परिहारः इदमंशे तद्व्यवहारस्यौपाधिकत्वेऽन्यत्रापि तत एव तद्व्यवहारोपपत्तौ जातिसद्भावे प्रमाणाभावात् । न च गोत्वाद्युच्छेदप्रसङ्गः, इष्टत्वात् । नचाप्रमात्वमुपाधिः, प्रमात्वं च जातिरिति वक्तुं युक्तम्, वैपरीत्यस्यापि संभवात् । उपाधिपक्षं दूषयति—**उपाधिश्चेति । प्रागुक्तप्रकारेणेति** । अबाधितत्वं किं सर्वस्य ? किं वा प्रतिपत्तुः ? एवमविसंवादित्वमपि किं सर्वेषाम् ? उत प्रतिपत्तुः ? इति विकल्प्योक्तदूषणेनेत्यर्थः । एवमवयवशो दूषणमुक्त्वा समुदितेऽपि दूषणं वक्तुमुपक्रमते—**अस्तु वेति** । अनीश्वरप्रत्यक्ष-

'अन्य' पद से अनुमानान्तर विवक्षित है ? या प्रत्यक्ष ? यदि अनुमान विवक्षित है, तो उसके हेतु का अव्यभिचारित्वरूप साध्य के साथ व्याप्ति दर्शन पहले हुआ है ? या नहीं ? यदि हुआ है, तब व्याप्ति-दर्शन-काल में अव्यभिचारित्व का निश्चय हो जाने से अनुमान प्रयोग व्यर्थ है और यदि नहीं हुआ, तब तो अनुमान भी कैसे होगा ? 'प्रत्यक्ष' प्रमाण से बाह्य प्रत्यक्ष का असम्भव दिखाया जा चुका है, अतः मानस प्रत्यक्ष ही लेना होगा । यदि मानस प्रत्यक्ष से ही ज्ञान के साथ-साथ अव्यभिचारित्व का ग्रहण हो जाता है, तब अनभ्यासदशापन्न ज्ञान में व्यभिचारित्व अव्यभिचारित्व का संशय नहीं होना चाहिए ।

ज्ञानगत अव्यभिचारित्व का स्वरूप भी क्या है ? प्रमात्व संज्ञक जाति ? या उपाधि ? साङ्कर्य के भय से जाति नहीं मान सकते—सभी भ्रमज्ञान भी धर्मी ( शुक्त्यादि ) अंश में प्रमा ही होते हैं, प्रकार ( रजतत्वादि ) अंश में अप्रमा होते हैं—ऐसा जो विद्वान् मानते हैं, वे 'इदं रजतम्'—इस एक ही ज्ञान में प्रमात्व और अप्रमात्व—दोनों मानते हैं । साङ्कर्य का लक्षण है कि 'परस्पर एक दूसरे को छोड़ कर भिन्न-भिन्न व्यक्तियों में रहनेवाले दो धर्मों का एकत्र समावेश ।' प्रकृत में प्रमात्व को छोड़कर अप्रमात्व स्मृति में रहता है, एवं अप्रमात्व को छोड़कर प्रमात्व, प्रत्यक्षादि में और दोनों का समावेश एक भ्रम व्यक्ति में हो जाता है, अतः जाति-सङ्कर क्यों न होगा ? अबाधितत्व, अविसंवादित्व-आदि उपाधियों का पूर्वोक्त रीति से ( सर्व पुरुषों की दृष्टि से अबाधितत्व ? या

यमव्यभिचारित्वम्, तथापीश्वरज्ञानेऽव्याप्तिः। तस्य नित्यत्वादेवेन्द्रियसन्निकर्षाजन्यत्वात्। जन्यप्रत्यक्षलक्षणमिति चेत्, तथाप्यनुमितावतिव्याप्तिः, मनोलक्षणेन्द्रियस्यात्मलक्षणेनार्थेन सन्निकर्षादनुमितेर्जायमानत्वात्। संयुक्तेऽर्थ इति विशेषणान्नातिव्याप्तिरिति चेत्, न, युक्तावस्थायामुपजायमानपरमाणुविषययोगिप्रत्यक्षेऽव्याप्तेः। अयोगिप्रत्यक्षलक्षणमिति चेत्, न, प्रत्यभिज्ञाने तत्तांशेऽव्याप्तेः। तत्रापि संयुक्तविशेषणतालक्षण सन्निकर्षोऽस्तीति चेत्, मैवम्; अयमग्निमान्पर्वत इत्यनुमानेऽतिव्याप्तेः, तत्रापि संयुक्तविशेषणतालक्षणसन्निकर्षस्य तत्तांश इव सद्भावात्। लिङ्गाद्यजन्यत्वे सतीति विशेषणाददोष इति चेत्, न, इन्द्रियार्थसन्निकर्षपदवैयर्थ्यप्रसङ्गात्। तेनाप्यतद्व्यावृत्तिमुखेन लिङ्गाद्यजन्यत्वमेवोच्यत इति चेत्, न, यत्कि-

लक्षणमिदमतो नाव्याप्तिरिति शङ्कते—**जन्येति**। अनुमितावपीन्द्रियार्थसन्निकर्षोत्पन्नत्व दर्शयन्नतिव्याप्तिमेव विवृणोति—**मनोलक्षणेति**। उपलक्षण चैतत्स्मृत्यादेरपि। नन्विन्द्रियार्थसन्निकर्षोत्पन्न संयुक्तेऽर्थे प्रत्यक्षमिति लक्षण विवक्षितम्, नचैवमनुमानम्, अतो नातिव्याप्तिरिति शङ्कते—**संयुक्तेऽर्थ इतीति**। एतदुक्तं भवति—इन्द्रियार्थेत्यादिविशेषणयुक्त सयुक्तार्थावभासक प्रत्यक्षमिति। तर्हि योगिप्रत्यक्षविशेषेऽव्याप्तिरित्याह—**न, युक्तावस्थायामिति**। आत्ममन सन्निकर्षमात्रादशेषार्थग्रहणमिति भवतामभ्युपगमः। युक्त च। नहि तदा परमाण्वादीन्द्रियसयुक्तम्, बहिरिन्द्रियाव्यापारान्मनश्च बहिः स्वातन्त्र्याभावादिति भावः। तर्हि अयोगिप्रत्यक्षस्यैवेद लक्षणमस्त्विति शङ्कते—**अयोगीति**। तर्ह्ययोगिप्रत्यक्षेप्यव्याप्तिरित्याह—**न; प्रत्यभिज्ञान इति**। ननु कथमव्याप्तिः, यावता तत्तायामपीदानीं चक्षुषा सयुक्तदेवदत्तविशेषणतया पारपर्येणेन्द्रियसन्निकर्षोऽस्तीति शङ्कते—**तत्रापीति**। तर्हि प्रत्यक्षधर्मिकानुमानेष्वतिव्याप्तिरित्याह—**मैवमिति**। ननु लिङ्गाद्यजन्यत्वे सत्युक्तविधसन्निकर्षजन्यत्व तल्लक्षणम्, तथा च नानुमितावतिव्याप्तिरित्याशङ्क्य तर्हि लिङ्गाद्यजन्यत्वे सति प्रमितित्वमित्येतावदेवास्तु प्रत्यक्षलक्षणम्, व्यभिचाराभावात्, वृथेतरदिति परिहरति—**नेन्द्रियार्थेति**। नन्विन्द्रियार्थसन्निकर्षोत्पन्नमित्यत्र लिङ्गाद्यजन्यत्व विवक्षितमतो न वैयर्थ्यम्। यदि हि लिङ्गाद्यजन्यत्वमिन्द्रियार्थसन्निकर्षजन्यत्व चोभयं विवक्ष्येत, स्यात्तदा वैयर्थ्यम्, नत्वेवमिति शङ्कते—**तेनापीति**। तर्ह्यसिद्धिरेव लक्षणस्य, चक्षुरादेरपि यत्किंचित्प्रति लिङ्गत्वेन सर्वप्रत्यक्षाणा लिङ्गजन्यत्वा-

किसी एक की दृष्टि से—इन विकल्पो के द्वारा) निराकरण कर देना चाहिए। यदि किसी प्रकार अव्यभिचारित्व का कोई आपात-रमणीय स्वरूप मान भी ले, तब भी ईश्वर-ज्ञान मे अव्याप्ति बनी रहती है, क्योकि ईश्वर-ज्ञान नित्य होने से इन्द्रिय-सन्निकर्ष-जन्य नही होता। यदि उक्त लक्षण, जन्य प्रत्यक्ष का ही माना जाय, तब भी अनुमिति मे अतिव्याप्ति होती है, क्योकि अनुमिति भी मन इन्द्रिय और आत्मरूप अर्थ के सन्निकर्ष से जन्य होती है। यदि कहा जाय कि प्रत्यक्ष-विषय अर्थ के साथ जिस इन्द्रिय का सन्निकर्ष होने पर जो ज्ञान होता है उसे उस इन्द्रिय से सन्निकृष्ट विषय का प्रत्यक्ष कहा जाता है, वह्निविषयक अनुमिति वह्नि के साथ इन्द्रिय के सन्निकर्ष से जन्य नही होती। तो यह कहने पर युक्तयोगी के इन्द्रिय-सन्निकर्ष के बिना ही परमाणु—आदि विषयक प्रत्यक्ष मे अव्याप्ति होती है। उक्त लक्षण को अयोगि-प्रत्यक्ष का लक्षण मानने पर भी प्रत्यभिज्ञा के तत्ताश मे अव्याप्ति होती है। यदि कहा जाय कि 'तत्ता' के साथ भी 'इन्द्रिय-सयुक्त-विशेषणता' सन्निकर्ष होता है, तब तो "अग्निमान् पर्वत"—इस अनुमिति में अतिव्याप्ति होगी, क्योकि अग्नि के साथ भी तत्ताश के समान ही 'सयुक्त-विशेषणता' सन्निकर्ष विद्यमान है। 'लिंगाद्यजन्यत्वे सति' यह विशेषण लगाने पर इन्द्रियार्थ-सन्निकर्ष' पद व्यर्थ हो जाता है। यदि कहा जाय कि इन्द्रियार्थ-सन्निकर्षजन्य मे लिंगादि-जन्यत्व की व्यावृत्ति करने के लिए ही लिगाद्यजन्यत्व कहा जाता है, तब असम्भव दोष हो जाता है, क्योकि किसी-न-किसी की अपेक्षा से इन्द्रिय और सन्निकर्षादि

चिदपेक्षया सर्वस्यापि लिङ्गत्वसंभवेन लक्षणस्यासंभवित्वप्रसङ्गात्। पारोक्ष्यानधिकरणप्रमा प्रत्यक्षफलं तत्करणं च प्रत्यक्षप्रमाणमिति सूत्रेण सूत्रितं लक्षणमिति चेत्, न; प्रमात्वपरोक्षत्वयोर्दुर्निरूप्यत्वेन तदधीननिरूपणस्यापि लक्षणस्य दुर्निरूपत्वात्। न च प्रमात्वस्य जातित्वेन निरुक्तिः, भ्रमज्ञाने जातिसङ्करस्योक्तत्वात्। न तत्रेदमंशादिप्रत्यये प्रमात्वं जातिः, किंतूपाधिनिबन्धनः प्रमाव्यवहार इति चेत्, न; सर्वप्रमाव्यवहारस्यापि तथात्वोपपत्तौ जातेरपलापापत्तेः। न चैवं गोत्वापलापप्रसङ्गः, जातिमन्तरेणोपाधिमात्रनिबन्धनतया गोव्यवहारस्य क्वचिदप्यनङ्गीकारात्। मृद्गवादौ गोव्यवहारो न जातिनिबन्धनो नाप्युपाधिनिबन्धनः किंत्वौपचारिक इति न किंचिद् दुष्यति।

न च प्रमात्वजातेर्व्यञ्जकमस्ति। तथाहि—तत्किमबाधितानुभूतित्वम्? किं वा यथार्थानु-

---

दित्याह—न यत्किंचिदिति। तल्लिङ्गाजन्यत्वे सति तदिन्द्रियसन्निकर्षजन्यत्वस्य लक्षणत्वविवक्षाया तच्छब्दाथाननुगत्यसंभवेन लक्षणस्याव्याप्तिरित्यपि द्रष्टव्यम्। फलद्वारा लक्षणं शङ्कते—पारोक्ष्येति। अनुमित्यादिव्यावृत्तये पारोक्ष्यानधिकरणेत्युक्तम्। भ्रान्तिविशेषव्यवच्छेदाय प्रमाणग्रहणम्, इन्द्रियेत्यादिविशेषणेन पारोक्ष्यानधिकरणत्वसूचनादव्यभिचारितया भ्रमादिव्युदासेन प्रमाऽलाभात्प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रे करणस्य च प्रक्रान्तत्वादिदं लभ्यत इति भावः। भ्रमज्ञान इति। तत्र हीदमंशज्ञाने प्रमात्वमितरत्राप्रमात्वमिति जातिसङ्कर उक्त इत्यर्थः। ननु न तत्र प्रमात्वं जातिरस्ति, येन जातिसङ्करः स्याद्व्यवहारस्तूपाधिनिबन्धन इति शङ्कते— न तत्रेति। आदिग्रहणेन पीतः शङ्खः उष्णं जलमित्यादौ पीतोष्णतादिप्रत्यया गृह्यन्ते। संसर्गमात्रप्रत्यये हि तत्राप्रमात्वम्, तर्हि तेनैवोपाधिना सर्वत्र प्रमाव्यवहारोऽस्त्वनुगतनिमित्तलाभात्, अलं जातिकल्पनया अर्धजरतीयदुष्येति परिहरति—नेति। ननु कथं क्वचिदपि गोत्वव्यवहारस्योपाधिनिबन्धनताऽभावः? यावता मृदादिविनिर्मितगवादौ गोत्वव्यवहारस्यौपाधिकत्वात्, तत्र जातेरभावादिति, तत्राह—मृद्गवादाविति। न तावन्मृद्गवादौ गवादिबुद्धिरस्ति, शब्दप्रयोगस्तु परम्, नच सोऽपि जातिमुपाधिं वावलम्ब्य, किन्तूपचारात्। नहि सिंहशब्दो बलवर्मणि उपचारात्प्रयुक्त इति उपाधिनिबन्धनो जातिनिबन्धनो वा भवति, किन्त्विमेदमंशादौ पुनर्मुख्यत्वं प्रमाव्यवहारस्य स्वीक्रियत इति विशेष इति भावः।

जातिसङ्करान्न प्रमात्वं जातिरित्युक्तम्, इदानीं व्यञ्जकाभावाच्च न प्रमात्वं जातिरित्याह—न चेति।

---

सभी लिंग ही हो सकते है, किसी भी प्रत्यक्ष ज्ञान से लिंग-जन्यत्व की व्यावृत्तिसम्भव नहीं। (यदि कहा जाय कि "प्रत्यक्षानुमानोपमानशब्दा प्रमाणानि" ( न्या० द० १।१।३ ) सूत्र में 'प्रमाण' शब्द का अर्थ है–प्रमा का करण। परोक्षत्वानधिकरण प्रमा, प्रत्यक्ष फल है, उसके करण का नाम प्रत्यक्ष प्रमाण—इस प्रकार का सूत्र-सूचित लक्षण मानेंगे। तो यह भी नहीं कह सकते, क्योंकि प्रमात्व और परोक्षत्व का निरूपण हो नहीं सकता, अतः प्रमात्वादि-निरूपण के द्वारा निरूपणीय लक्षण कैसे सम्भव होगा? प्रमात्व को जाति मानने पर भ्रमज्ञान में जाति-साङ्कर्य कहा जा चुका है। यदि कहा जाय कि 'इदं रजतम्' में इदम्—इस ज्ञान में प्रमात्व जाति नहीं मानते, अपितु उपाधि के अधीन प्रमा-व्यवहार हो जाता है। तो ऐसे ही समस्त प्रमा व्यवहार निभ जायगा, जाति का मानना ही व्यर्थ होता है। किंतु इसी प्रकार गोत्वादि का अपलाप नहीं किया जा सकता, क्योंकि 'गोत्व' जाति को छोडकर उपाधिमात्र के अधीन गो-व्यवहार कहीं भी नहीं माना जाता। मिट्टी की गौ में गो व्यवहार, न तो जाति-निबन्धन होता है और न उपाधि-निबन्धन, अपितु (माणवक में 'सिंह' शब्द के समान) औपचारिक है, अतः कोई दोष नहीं।

'प्रमात्व' जाति का व्यञ्जक भी कोई नहीं। यदि है, तो क्या (१) बाध-रहित अनुभूतित्व?

भूतित्वम्? आहोस्विदव्यभिचार्यनुभूतित्वम्? अविसंवाद्यनुभूतित्वं वा? संशयविपर्ययव्यतिरिक्तस्मृतित्वानधिकरणज्ञानत्व वा? एतद्घटज्ञानवृत्तित्वे सत्येतद्धूमजन्यवह्निज्ञानवृत्तिसंशयावृत्तिजातिमत्त्व वा। न प्रथम, इदानी बाधविरहस्यातिप्रसञ्जकत्वात्। कालान्तरे बाधविरहस्य दुरवधारणत्वात्, सर्वपुरुषाबाधस्य पुरस्तादेव निरस्तत्वात्। न द्वितीय, यथार्थत्वानिरुक्ते, तत्किमर्थसत्तामात्रविषयत्वम्? उत यावत्प्रतीयमानार्थसत्त्वम्? आहोस्विदबाधितार्थवत्त्वम्? न तावदर्थसत्तामात्रविषयत्वम्, भ्रमस्यापि प्रमात्वप्रसङ्गात्। नापि यावत्प्रतीयमानार्थसत्त्वम, प्रत्यभिज्ञायामतीतानागतानुमानेषु वैधज्ञाने च तदभावेन तेषामप्रमात्वापनात्।

---

पक्षचतुष्टयेऽनुभूतिग्रहण स्मृतिव्यावृत्त्यर्थम्। विपर्ययादिव्यावृत्त्यर्थम् च विशेषणान्तरम्। संशयाद्विपर्ययाच्च व्यतिरिक्तत्वे सति स्मृतित्वस्याप्यनधिकरण यज्ज्ञान तत्त्वमिति पञ्चम पक्ष। **एतद्घटज्ञानेति**। एतच्च घटज्ञानं चेति प्रत्यक्षज्ञानविशेषो विवक्षितः। एतच्च धूमजन्यवह्निज्ञान चेत्यत्राप्यनुमानज्ञानविशेषः। तयोर्वर्तमानत्वे सति संशयावृत्तिर्या जाति प्रमात्व तदधिकरणत्व प्रमात्वव्यञ्जकमित्यर्थ। अत्र च घटज्ञानवृत्तिजातिमत्त्वमित्युक्ते अनुमेयघटज्ञानवृत्त्यनुमितित्वजातिमत्त्वमनुमितित्वव्यञ्जकमादायार्थान्तरता, तदर्थमेतद्घटज्ञानवृत्तीत्युक्तम्। तथापि प्रत्यक्षत्वजातिमत्त्वम् प्रत्यक्षत्वव्यञ्जकमादायार्थान्तरता, तदर्थम् धूमजन्यज्ञानवृत्तीत्युक्तम्। तथापि प्रत्यक्षधूमज्ञाने पूर्वोक्तार्थान्तरता, तदर्थम् धूमजन्यवह्निज्ञानेत्युक्तम्। तथापि तथाविधस्मृतौ प्रसक्तिः, तदर्थमेतदित्युक्तम्। तथापि गुणत्वादिमत्त्वमादायार्थान्तरता, तदर्थम् धूमजन्यवह्निज्ञानेत्युम्। तथापि तथाविधस्मृतो प्रसक्तिस्तदर्थमेतदित्युक्तम्। तथापि गुणत्वादिमत्त्वमादायार्थान्तरता, तदर्थम् संशयावृत्तीत्युक्तम्। संशयावृत्तित्वे सति परोक्षाऽपरोक्षानुभववृत्तिजातिमत्त्वमिति लक्षणार्थ। तत्र प्रथमपक्षमबाधितत्वानिरुक्त्या दूषयति—**न प्रथम इति**। **अतिप्रसञ्जकत्वादिति**। विपर्ययादावपीदानी बाधविरहसंभवेन प्रमात्वव्यञ्जकत्वप्रसङ्गादित्यथः। **पुरस्तादेव निरस्तत्वादिति**। असर्वज्ञाविज्ञेयत्वादित्यर्थः। वादीन्द्रस्तु बाधितत्वात्यन्ताभावोऽबाधितत्वमित्याह। तस्य व्यर्थप्रमाणबाधानिरुक्त्या निरासः। अथाबाधितमबाधितमित्यनुवृत्तबुद्ध्या जातिरुपाधिर्वाऽबाधितत्वम् न, बुद्धिमात्रादसिद्धेः। अबाधितत्वे च चक्रकम्। **भ्रमस्यापीति**। भ्रमज्ञानेऽपीदमंशस्यार्थस्य विद्यमानत्वात्तत्रापि व्यञ्जकसत्तया व्यङ्ग्यप्रमात्वप्रसङ्गादित्यर्थ। द्वितीय दूषयति—**नापीति**। प्रत्यभिज्ञाया तत्ताविशिष्टोऽर्थ. प्रत्यभिज्ञोदसमये नास्त्यतीतत्वात्, तथातीतानागतार्थविषयानुमानेऽपि तदानीमर्थो नास्ति। तथा विधिवाक्यजन्यज्ञानेपि साध्यार्थविषयत्वात्तदानीमर्थो नास्तीति तेषामव्यञ्जकतयाऽप्रामाण्यप्रसङ्गादव्याप्तिरित्यर्थ। द्वितीयतृतीयौ

---

**या (२) यथार्थानुभूतित्व? या (३) अर्थाविनाभूतानुभूतित्व? या (४) विसंवाद रहित अनुभूतित्व? या (५) संशय, विपर्यय, स्मृति-भिन्न ज्ञानत्व? या (६) यत्किञ्चित् घट-प्रत्यक्ष और वह्न्यनुमिति मे वृत्ति, संशयावृत्ति जातिमत्त्व? (१) प्रथम (अबाधितानुभूतित्वम्—द्र० ख० पृ० ३४२) पक्ष युक्त नहीं, क्योकि वहाँ (एतत्कालीन बाध-विरह विवक्षित है? या कालान्तरीण बाध-विरह?) एतत्कालीन बाध-विरह तो एतत्कालीन विपर्यय मे भी है, अत उसमे अतिप्रसक्ति (प्रमात्वापत्ति) होगी। कालान्तरीण बाध-विरह का निश्चय करना ही कठिन है। सर्व पुरुषो की दृष्टि से बाध-विरह का निरास पहले ही किया जा चुका है। (२) द्वितीय (यथार्थानुभूतित्वम्—द्र० खं० पृ० ३९७) व्यञ्जक के घटक 'यथार्थत्व' का निर्वचन क्या किया जायगा? अर्थ-विद्यमानता मात्र-विषयकत्व? या प्रतीयमानार्थसत्त्व? या अबाधितार्थकत्व? अर्थ-सत्तामात्र-विषयकत्व तो भ्रम मे अतिव्याप्त है (क्योकि भ्रम का विषय अधिष्ठान, विद्यमान ही होता है)। 'यावत्प्रतीयमानार्थसत्त्व', प्रत्यभिज्ञा मे, अतीतादि-विषयक अनुमान मे एव विधि-जन्य ज्ञान मे नही (प्रत्यभिज्ञा का तत्ता-विशिष्ट अर्थ, अनुमान का अतीत अर्थ और विधिजन्य ज्ञान का स्वर्गादि अर्थ उस समय विद्यमान नही) अत. उनमे**

अबाधितार्थवत्त्व तु पुरस्तादेवापहस्तितम् , नापि तृतीय , ज्ञानार्थयोर्विभिन्नदेशकालयोर्धूमाग्न्योरिवाविनाभावाभावात् । चतुर्थेऽपि पक्षे ज्ञानान्तरेण तथैवोल्लिख्यमानत्वम् ? विपरीततया वाऽनुल्लिख्यमानत्वमविसंवादित्वम् ? नाद्य , रजतं रजतमिति धारावाहिकविभ्रमेष्वपि भावात् । न द्वितीय , असंजातबाधस्यापि भ्रमस्य प्रमात्वापातात् । नापि पञ्चम. , संशयविपर्ययव्यतिरिक्तस्मृतित्वानधिकरणज्ञानत्वस्य विभ्रमेऽपि धर्म्यंशे भावात् । अन्यथा "सर्वं ज्ञानं धर्मिण्यभ्रान्त प्रकारे तु विपर्यय " इत्यभ्युपगमपरित्यागप्रसङ्गात् । संशयविपर्ययस्मृतीनामनिरुक्तेश्च तदतिरिक्तत्वमपि दुर्भणम् ।

तत्र किमनवधारणज्ञान संशय ? विरुद्धोभयकोटिसंस्पर्शिज्ञानं वा ? अनिर्धारितत्वविशेषित वा ? जिज्ञासाजनक मिथ्याज्ञानं वा ? विपर्ययेतरमिथ्याज्ञानं वा ? संशयत्वजातियोगि

---

दूषयति—**अबाधितार्थवत्त्व त्विति** । अव्यभिचार्यनुभूतित्वमिति तृतीय पक्ष दूषयति—**नापि तृतीय: इति** । कि यत्रार्थस्तत्र ज्ञानमिति देशतोऽव्यभिचारित्व विवक्षितम् ? कि वा यदार्थस्तदा ज्ञानमिति कालत ? नोभयमपीत्याह—**ज्ञानार्थयोरिति**—यद्यपि सुखादिषु देशतोऽविनाभावो वर्तमानेषु च कालत' सभवति, तथापि न सर्वप्रमितीनामेवभाव इति तास्वव्याप्तिरित्यर्थ. । अविसंवाद्यनुभूतित्वमिति चतुर्थेऽपि पक्षेऽविसंवादित्व विकल्प्य दूषयति—**चतुर्थेपीति** । कि संवादाभावो विसंवादित्वम् ? तदभावोऽविसंवादित्वम् ? इति प्रथमविकल्पाभिप्राय: । द्वितीये तु विपरीतसंवादो विसंवादस्तदभावोऽविसंवादित्वमिति । तत्र प्रथम दूषयति—**नाद्य इति** । अस्ति हि इद रजतमिति धारावाहिकविभ्रमे ज्ञानान्तरेण पूर्वज्ञानप्रतीतार्थस्य तथेत्युल्लेख इत्यतिव्याप्तिरित्यर्थः । द्वितीये देशान्तरगमनादिनानुत्पन्नबाधे भ्रमेऽतिव्याप्तिरित्याह—**न द्वितीय इति** । पञ्चमपक्षेऽप्यतिव्याप्तिः , सर्वभ्रमाणामधिष्ठानांशे त्वदुक्तलक्षणवत्त्वेन प्रमात्वप्रसङ्गात् । न चेष्टापत्ति· , जातिशङ्करोक्तेरित्यभिप्रेत्याह—**नापि पञ्चम इति** । किंच संशयादेरपि दुर्निरूपत्वात्तद्व्यतिरिक्तत्वमप्रसिद्धमित्यसिद्धिर्लक्षणस्येत्यभिप्रेत्याह—**संशयेति** ।

तत्र संशयलक्षणानि सभवन्ति विकल्पयति—**तत्र किमित्यादिना** । निश्चयव्यावृत्त्यर्थमाद्य पदम् । अवधारणाभावव्यावृत्त्यै ज्ञानपदम् । घटपटौ स्थाणुरेवत्यादिव्यावृत्त्यै विरुद्धोभयग्रहणम् । **अनिर्धारितत्व-**

---

प्रमात्व न रह सकेगा । अबाधितार्थत्व का निराकरण हो ही चुका है । (३) तृतीय ( अव्यभिचार्यनुभूतित्वम्—द्र० ख० पृ० ४२७ ) पक्ष असम्भव-ग्रस्त है ; क्योकि ज्ञान और अर्थ का देश-काल भिन्न-भिन्न है, अत. उनमे धूम और अग्नि के समान अविनाभाव सम्भव नही । (४) चतुर्थ ( अविसंवाद्यनुभूतित्वम्—द्र० खं० पृ० ४३० ) पक्ष मे अविसंवादित्व का क्या अर्थ है ? ज्ञानान्तर-समर्थित-विषयकत्व ? या असंजातबाधकत्व ? प्रथम पक्ष युक्त नही , क्योकि 'इद रजतम्'—इस भ्रम ज्ञान का विषय भी 'इदं रजतम्'–इस द्वितीय ज्ञान से समर्थित है । द्वितीय पक्ष भी उचित नही , क्योकि जिस भ्रम का बाध किसी कारण उत्पन्न नहीं हुआ, उसमे प्रमात्वापत्ति होती है । (५) पञ्चम ( संशयविपर्ययातिरिक्तस्मृतित्वानधिकरणज्ञानत्वम्—द्र० ख० पृ० ४४३ ) भ्रम के धर्मी अंश में भी विद्यमान है । यदि न माना जाय, तब "सभी ज्ञान धर्मी अंश मे अभ्रान्त होते है, प्रकारांश मे ही विपर्ययता होती है"—यह सिद्धान्त भंग हो जायगा । संशय विपर्यय और स्मृति का निरूपण भी नही हो सकता, इस लिए भी संशयाद्यतिरिक्तत्व-घटित पञ्चम पक्ष दुर्निर्वच है ।

इनमे संशय क्या है ? क्या (१) अनवधारण ज्ञान ? या (२) विरुद्ध उभय कोटि संस्पर्शी ज्ञान ? या (३) अनिर्धारितत्व-विशेषित विरुद्ध उभय कोटि संस्पर्शी ज्ञान ? या (४) जिज्ञासा-जनक मिथ्या ज्ञान ? या (५) विपर्यय-भिन्न मिथ्या ज्ञान ? या (६) संशयत्व जाति-विशिष्ट ज्ञान ? किसी प्रकार

वा ? सर्वथापि न निरूपणपथमवतरति ।

अनिरुक्तेरवधृतेरतिव्याप्तेर्द्वयोरपि ।
अव्याप्तेर्विभ्रमाभेदाज्जातिसाङ्कर्यसक्तितः ॥ १९ ॥

नाद्यः, अवधारणानिरुक्तावनवधृतत्वस्याप्यनिरूपणात् । तथाहि—किं ज्ञानमात्रमवधारणम् ? उत एकाकारप्रतिनियतम् ? आहोस्वित्संशयविरोधिज्ञानं वा ? संशयविरोधिप्रमाणज्ञानं वा ? आद्ये व्याघातः, ज्ञानं भवति चेत्युक्तत्वात् । द्वितीये चित्रः पटश्चैत्रो मैत्रश्चेत्यादिप्रमाणज्ञानानामपि संशयत्वापातः, एकाकारप्रतिनियमाभावात् । नापि तृतीयचतुर्थौ; संशयानिरुक्तौ तद्विरोधस्यानिरुक्तेः । किं चैवं सति संशयविरोधिज्ञानादन्यज्ज्ञानं संशय इत्यापतेत् । तथा-चानुत्पन्नसंशयस्य संशयाविरोधिता, जायमानप्रमाणज्ञानमपि संशयः स्यात् । नापि द्वितीयः, भेदाभेदशीतोष्णादिविषयप्रमाणज्ञानानां विरुद्धोभयकोटिसंस्पर्शिनां संशयत्वप्रसङ्गात् ।

---

विशेषितमिति । अनिर्धारितोभयकोटिसंस्पर्शि ज्ञानमित्यर्थः । मिथ्याज्ञानमित्युक्ते विपर्ययेति प्रसङ्गस्तदर्थं जिज्ञासाजनकेत्युक्तम् । तावत्युक्ते तर्केऽपि प्रसक्तिः, तदर्थं मिथ्याज्ञानमिति । सर्वथापि दुर्निरूपणमित्युक्तम् । तत्र यथासम्भवं दूषणानि श्लोकेन संगृह्णाति—अनिरुक्तेरित्यादिना । प्रथमे पक्षेऽवधृतेरनिरुक्त्या अनवधृतेरप्यनिरुक्तेरसिद्धिः, तथा द्वितीयतृतीययोरतिव्याप्तिः, चतुर्थे चाव्याप्तेः, पञ्चमे विभ्रमाभेदात्, षष्ठेऽपि जातिसङ्करप्रसक्तिरिति योजना । संगृहीतानि दूषणानि विवृणोति—नाद्य इत्यादिना । अवधारणानिरुक्त्याऽनवधारणानिरुक्तिं दर्शयितुमवधारणलक्षणानि विकल्पयति—किं ज्ञानमात्रमित्यादिना । ज्ञानमात्रमवधारणमिति पक्षे ज्ञानत्वानधिकरणं ज्ञानमनवधारणज्ञानं स्यात्, तथाचानवधारणज्ञानं संशय इति वदतो न्यायभूषणकारस्य वदनसरोरुहं व्याहतिहिमाहतमित्याह—आद्ये व्याघात इति । नहि चित्रः पट इत्यादिज्ञानानामेकाकारप्रतिनियमस्ततोऽनवधारणज्ञानतापत्त्या संशयलक्षणमति व्यापकमिति द्वितीयं पक्षं दूषयति—द्वितीय इति । संशयविरोधिज्ञानत्वं तथाविधप्रमाणत्वं वेति यदिदमवधारणस्य लक्षणद्वयम्, तत्संशयानिरुक्त्या न सिद्ध्यति, आत्माश्रयप्रसङ्गादित्याह—नापि तृतीयेत्यादिना । किंच यदि संशयविरोधज्ञानमवधारणज्ञानम्, तदा संशयविरोधिज्ञानादन्यज्ज्ञानं संशय इति लक्षणं स्यात्तथा चानुत्पन्नसंशयस्योत्पद्यमानं निर्णयज्ञानमपि संशयः स्यात्तस्य सर्वसंशयाविरोधित्वादित्याह—किंचेति । तदेवमनिरुक्तेरवधृतेरित्ययमंशो विवृतः । एतेन च 'कोटिद्वयानवधारणज्ञानं संशयः'

---

से भी निरूपण नहीं हो सकता, क्योंकि 'अवधारण का निरूपण न हो सकने के कारण अनवधारण का भी निरूपण नहीं हो सकता, द्वितीय और तृतीय लक्षण अतिव्याप्त है, चतुर्थ अव्याप्त, पञ्चम भ्रम में अतिव्याप्त और षष्ठ में जाति-साङ्कर्य-प्रसक्ति होती है।' अर्थात् (१) प्रथम लक्षण-घटक अवधारण का क्या स्वरूप है ? ज्ञानमात्र ? या एकाकारता-नियत ज्ञान ? या संशय-विरोधी ज्ञान ? या संशय-विरोधी प्रमाणज्ञान ? प्रथम पक्षोक्त ज्ञानमात्र को अवधारण मानने पर अनवधारणज्ञान का अर्थ होता है—अज्ञान रूपज्ञान—इस प्रकार वदतोव्याघात है, जो अज्ञान है, वह ज्ञान कैसे होगा ? एकाकारता-नियत ज्ञान यदि अवधारणज्ञान माना जाय, तब "चित्रः पटः" "चैत्रो मैत्रश्च"—आदि प्रमाणज्ञानों को अनवधारण या संशय कहना होगा, क्योंकि वे एकाकार नहीं । संशय का निर्वचन न हो सकने से ( तृतीय और चतुर्थ ) संशय-विरोधी ज्ञान का भी निरूपण नहीं हो सकता । दूसरी बात यह भी है कि इस प्रकार संशय-विरोधी ज्ञान से अन्य ज्ञान को संशय कहना होगा, फिर तो जिस पुरुष को संशय नहीं हुआ, उसका प्रमाणज्ञान संशय का विरोधी न होने से संशय कहा जाने लगेगा । (२) द्वितीय ( विरुद्धोभयकोटिसंस्पर्शि ज्ञानम् ) पक्ष मानने पर भेदाभेद, शीतोष्ण आदि विरुद्ध कोटिद्वयविषयक प्रमाण ज्ञानों में संशयत्व की आपत्ति होगी । (३) तृतीय ( अनिर्धारितत्व-

नापि तृतीयः, निर्धारणानिरुक्तावनिर्धारितत्वस्यैवानिरुक्तेः। अनिर्धारितत्वशब्देन कोटिद्वयस्याव्यवस्थितत्वं विवक्षितमिति चेत्, तदेव विविच्यताम्। किमव्यवस्थितत्वं कोटिद्वयस्य स्वरूपम्? उत धर्मः? न प्रथमः; कोटिद्वयस्वरूपनिश्चयस्यापि संशयत्वापत्तेः। नापि द्वितीयः, तादृग्धर्मविशिष्टकोटिद्वयग्राहिज्ञानविषयप्रमाया अपि संशयत्वापातात्। नापि चतुर्थः, अजिज्ञासोरपि स्थाण्वादौ संशयदर्शनेन लक्षणस्याव्यापित्वात्। नापि पञ्चमः, विकल्पासहत्वात्। तथाहि—संशयस्य विपर्यासाद्विषयविशेषेण? कारणविशेषेण? जातिविशेषेण वा भेदः स्यात्? नाद्यः, विषयविशेषानिरुक्तेः। तथाहि—न तावदुभयविधिर्विषयः, एतौ स्थाणुपुरुषाविति समुच्चयनिश्चयस्यापि संशयत्वापातात्। नाप्युभयनिषेधः; न स्थाणुर्न पुरुष इति प्रत्ययप्रसक्तेः।

---

इति लीलावतीकारलक्षणमपि निरस्तम्। अतिव्याप्तेर्द्वयोरपीत्येतद्यथाक्रमं विवृणोति—**नापीत्यादिना**। **निर्धारणेति**। निर्धारणविषयो हि निर्धारितं नाम, तद्विरीतं चानिर्धारितं, निर्धारणं चावधारणापरपर्यायम्, तस्य च दुर्निरूपत्वमनन्तरमेव निवेदितमिति तदुपजीविलक्षणमपि दुर्निरूपमित्यर्थः। ननु कोटिद्वयाव्यवस्थितत्वमनिर्धारितत्वम्, तेन न पूर्वोक्तान्योयाश्रयत्वमिति शङ्कते—**अनिर्धारितेति**। यदि हि कोटिद्वयस्वरूपमव्यवस्थितत्वम्, तदा स्थाणुरेवायं पुरुष एवायमिति कोटिद्वयनिश्चयस्यापि संशयत्वापत्तेरतिव्याप्तिरित्याह—**कोटिद्वयेति**। अव्यवस्थितत्वं कोटिद्वयधर्मः, इति द्वितीये पक्षे दूषणमाह—**तादृग्धर्मेति**। अव्यवस्थितत्वविशिष्टकोटिद्वयग्राहि यज्ज्ञानं तद्विषयप्रमाणमपि परपरयाऽव्यवस्थितकोटिविषयज्ञानमित्यतिव्याप्तिरित्यर्थः। यदि च पुरुषत्वादिवदव्यवस्थितत्वमपि पारमार्थिको धर्मः, तदा तद्विशिष्टकोटिद्वयप्रमाणेऽप्यतिव्याप्तिः। आरोपितत्वे तद्विपर्ययेऽपि प्रसक्तिरित्यपि द्रष्टव्यम्, एतेन साक्षादिति विशेषणमपि निरस्तम्। अव्याप्तेरित्येतदपि विवृणोति—**अजिज्ञासोरिति**। नहि सर्वत्र संशयानन्तरं जिज्ञासोदेति, अपेक्षाया अपि संभवादिति भावः। विभ्रमाभेदादित्येतद्विवृणोति—**नापि पञ्चम इत्यादिना**। विषयविशेषनिमित्तः संशयस्य विपर्ययाद्विशेष इति पक्षं दूषयति—**नाद्य इति**। तत्र संशयस्य किमुभयविधिर्विषयः यथा स्थाणुश्च पुरुषश्चेति? किंवोभयनिषेधः? किं वान्यतरनिषेधः? उतोभयविधिनिषेधौ? नाद्य इत्याह—**न तावदिति**। द्वितीयेऽसिद्धिमाह—**न स्थाणुरिति**। **तदितरेति**। यदि ह्यन्यतरनिषेधः स्यात्तदान्यतरस्यावधारणं पर्यवस्येत्, तथाच संशयत्वव्याघातः। चतुर्थेऽप्यसिद्धिमाह—

---

विशेषितम्) में तो निर्धारण (अवधारण) का निर्वचन न हो सकने के कारण अनिर्धारितत्व का भी निर्वचन नहीं हो सकता। यदि कहें कि 'अनिर्धारित' शब्द से कोटि-द्वय का अव्यवस्थितत्व विवक्षित है। तब उसी का ही विवेचन कीजिए—क्या अव्यवस्थितत्व, कोटि-द्वय का स्वरूप है? या धर्म? स्वरूप मानने पर कोटि-द्वयस्वरूप निश्चय को भी संशय मानना पड़ेगा। धर्म मानने पर अव्यवस्थित्वरूप धर्म-विशिष्ट कोटि-द्वय के ग्राहक ज्ञान की अनुव्यवसायप्रमा में भी संशयत्व प्राप्त होगा (क्योंकि अनुव्यवसाय भी अपने विषयभूत व्यवसाय के विषय 'अव्यवस्थितत्व-विशिष्ट कोटि द्वय को भी विषय करता है)। (४) चतुर्थ (जिज्ञासाजनक मिथ्याज्ञानम्) लक्षण जिज्ञासा के अजनक संशय में अव्याप्त है। (५) पञ्चम (विपर्ययेतरमिथ्याज्ञानम्) भी युक्त नहीं, क्योंकि यहाँ पर संशय का विपर्यय से भेद, विषय-विशेष के द्वारा होता है? या कारण-विशेष के द्वारा? या जाति-विशेष के द्वारा? (द्र० ख० पृ० १२४७)। विषय-विशेष का निरूपण हो नहीं सकता, क्योंकि संशय का विषय (क्या उभय-विधि मानेंगे? या उभय-निषेध? या अन्यतर-निषेध? या उभय-विधि-निषेध?—द्र० न्या० ली० पृ० ४०९) उभय-विधि मानने पर "एतौ स्थाणुपुरुषौ"—इस समुच्चयविषयक निश्चय में संशयत्वापत्ति होगी। उभय-निषेध विषय मानने पर संशय में "न स्थाणुर्न पुरुषः"—यह प्रतीति होनी चाहिए। अन्यतर-निषेध मानने पर, उससे अन्य में निश्चय की प्राप्ति

नाप्यन्यतरनिषेध', तदितरावधारणापत्तेः। नाप्युभयविधिनिषेधौ, स्थाणुर्भवति न भवति पुरुषो भवति न भवतीत्युभयविधिनिषेधावधारणप्रसङ्गात्। नित्योऽनित्यो वेत्यत्रैकतरनिषेधस्यान्यतरविधिरूपतयोभयविधिनिषेधयोरसंभवाच्च। न द्वितीय, कारणविशेषानिरुक्तेः। स हि सामग्री वा? तदेकदेशो वा? नाद्य, अतीन्द्रियत्वेन तस्याः प्रत्यक्षत्वायोगात्। लिङ्गाभावे नानुमानतोऽप्यसिद्धेः। न च संशयज्ञानं लिङ्गम्, तस्येदानीमेव निरूप्यमाणत्वात्। नापि द्वितीय, प्रत्यक्षस्य तदेकदेशस्य साधारणधर्मदर्शनादेः स्वविषयतयानुव्यवसायप्रत्यक्षजनकत्वेनातिव्यापकत्वात्, अप्रत्यक्षस्य च तदेकदेशस्य सामग्रीनिरासेन निरस्तत्वात्। नापि तृतीय', जातिसङ्करापत्तेः। अयं स्थाणुः पुरुषो वेत्यत्र धर्म्यंशे तस्यैव ज्ञानस्य निश्चितत्वम्, विशेषांशे विकल्पनाशे च संशयत्वमित्येकस्यैव ज्ञानस्य विरुद्धजातिद्वयलिङ्गिन' प्रसङ्गात्। एतेन षष्ठोऽपि पक्षो निरस्तः। तस्मान्न संशयलक्षणनिरुक्तिः।

---

स्थाणुरिति। तथाप्युभयविधिनिषेधयोरवधारणतया संशयत्वव्याघात इत्यर्थः। न केवल व्याघातोऽसम्भवश्चेत्याह—**नित्य इति**। नित्यत्वानित्यत्वयो परस्परप्रतिक्षेपरूपत्वादेकतरविधावेकतरनिषेध उभयविधानुभयनिषेधश्च न सम्भवति, उभयविधानातिरिक्तोभयनिषेधाभावादित्यर्थः। एव विषयविशेषाद्विशेष निराकृत्य कारणविशेषाद्विशेष इति पक्ष निराचष्टे—**न द्वितीय इति**। कारणशब्देन किं सामग्री विवक्ष्यते? सामग्र्येकदेशो वा? आद्ये प्रत्यक्षतस्तज्ज्ञानम्? अनुमानतो वा? नोभयथापीत्याह—**स हीत्यादिना**। ननु किमिति लिङ्गाभाव.? यावता कार्यात्संशयज्ञानात्सामग्र्याः शक्यमनुमानमिति, तत्राह—**न च संशयेति**। सामग्र्येकदेशः कारणमिति पक्षेऽपि किं प्रत्यक्षगम्यस्तदेकदेशः? तदगम्यो वा? नाद्य इत्याह—**प्रत्यक्षस्येति**। तदा हि तादृशकारणजनितं ज्ञानं संशय इति पर्यवस्येत्। तथा चातिव्याप्तिः। तस्य साधारणधर्मदर्शनादेः स्वविषयानुव्यवसाय प्रत्यपि जनकत्वात्। तस्य च प्रत्यक्षप्रमितित्वेन संशयत्वाभावादित्यर्थः। आदिशब्देन च विशेषस्मरणविशेषादर्शने गृह्येते। **सामग्रीनिरासेनेति**। न प्रत्यक्षतस्तत्सिद्धिः नाप्यनुमानतः, लिङ्गाभावात्। नच संशय एव लिङ्गम्, अद्याप्यनिरूपणादित्यर्थः। जातिविशेषाद्विशेष इति पक्ष दूषयति—**नापि तृतीय इति**। जातिसङ्करमेव विवृणोति—**अयं स्थाणुरिति**। संशयत्वजातियोगी संशय इति षष्ठेऽपि पक्षे सङ्करप्रसङ्गमातिदिशति—**एतेनेति**।

---

होगी। उभय-विधि-निषेध मानने पर संशय का यह आकार होना चाहिए—'स्थाणुर्भवति, न भवति, पुरुषो भवति, न भवति।'' ''नित्योऽनित्यो वा''—इस संशय में अव्याप्ति भी होगी, क्योंकि यहाँ एकतर का निषेध अन्यतर का विधिरूप हो जाने से न तो यहाँ उभय की विधि है ओर न उभय का निषेध। द्वितीय (कारण-विशेष—द्र० ख० पृ० १२५२) का निर्वचन भी सम्भव नहीं, क्योंकि 'कारण-विशेष' पद से पूर्ण सामग्री विवक्षित है? या उसका एक देश? इन्द्रियादिघटित सामग्री अतीन्द्रिय है, अतः उसका प्रत्यक्ष से ग्रहण नहीं हो सकता, कोई लिंग न होने से अनुमान भी नहीं हो सकता। संशय-ज्ञान भी लिंग नहीं हो सकता, क्योंकि अभी तक उसका निरूपण ही नहीं हो सका है। द्वितीय (एक देश) पक्ष में यदि प्रत्यक्ष-गम्य (दृश्य) एक देश विवक्षित है, तब उच्चैस्तरत्वादि साधारण धर्म-दर्शनादि की अनुव्यवसायप्रमा में संशयत्वापत्ति होगी, क्योंकि वह भी संशय के कारण (साधारण धर्म-दर्शनादि) से जन्य है। अप्रत्यक्ष (अदृश्य) एक देश का निराकरण तो वैसे ही हो जाता है, जैसे सामग्री का निराकरण किया जा चुका है अर्थात् उसका अनुमापक कोई लिंग नहीं। तृतीय (जाति-विशेष) में जाति-साङ्कर्य दोष होता है, क्योंकि ''अयं स्थाणुः पुरुषो वा''—इस एक ही ज्ञान में धर्मि अंश में निश्चयत्व, धर्मांश तथा (वाक्यार्थ) विकल्प अंश में संशयत्व मानना पड़ेगा। इसी दोष से (६) षष्ठ (संशयत्वजातियोगित्व) लक्षण भी खण्डित हो जाता है। इस लिए संशय-लक्षण का निर्वचन नहीं हो सकता।

वत्त्वस्य प्रतीतावपि वह्निमत्त्वप्रतीतिर्न स्यात्, व्याप्तेरगृहीतत्वादित्यलमतिप्रसङ्गेन। कश्चाय-मविनाभाव.? किं साधनसद्भावेन साध्यसद्भाव? किं वा साध्याभावेन साधनाभाव.? उतोभयम्? नाद्य, केवलव्यतिरेकिणि तदभावात्, पक्षादन्यत्रापि भावे केवलव्यतिरे-कित्वव्याकोपात्। नापि द्वितीय, केवलान्वयिन्यभावात्। न तृतीय', अन्वयव्यतिरेकिणि तद्भावेऽपीतरयोस्तदभावात्।

एतेन स्वाभाविक' सबन्धो व्याप्तिरिति द्वितीय. कल्पोऽपि परास्त', तत्रापि जातिव्य-क्त्यादिविकल्पानां दूषणाना तुल्यत्वात्, स्वाभाविकशब्दार्थानिरुक्तेश्च। स्वाभाविकशब्देन किं संबन्धिस्वभावजन्यत्वं विवक्ष्यते? यद्वा तत्स्वभावाश्रितत्वम्? अथवा तत्स्वभावप्रयु-क्तत्वम्? आहोस्वित्तद् व्याप्यत्वम्? किं वा तदनतिरिक्तत्वम्? नाद्यः, एकार्थसमवायेन

---

एवोभयो सहभावनिश्चय.? अन्यत्र वा? नाद्य, तत्र साध्यानिर्णयात्। द्वितीये प्राह—**पक्षादन्यत्रेति**। **केवलान्वयिनीति**। अविद्यमानविपक्षत्वादित्यर्थ। **इतरयोरिति**। केवलान्वयिकेवलव्यतिरेकिणोरित्यर्थ'।

एवमविनाभावो व्याप्तिरिति प्रथम पक्ष दूषयित्वा द्वितायेऽपि तदेवातिदिशति—**एतेनेति**। तस्यैव विवरणम्—**तत्रापीति**। स्वाभाविकोऽपि हि सबन्धः कयो? इति विवेचनीयमिति भावः। उम्बेकस्तु—'सबन्धो व्याप्तिरिष्टात्र लिङ्गधर्मस्य लिङ्गिन.' इत्यत्र लिङ्गधर्मस्येति दर्शनाद्व्याप्यैकधर्मो व्यापकनिरूप्यो व्याप्तिर्न पुनरुभयनिष्ठेत्यब्रवीत्। अत्र किं निर्देशमात्र प्रमाणम्? अन्यद्वा? नाद्य., नहि घटेन पटस्य सबन्ध इति निर्देशात्पटैकनिष्ठ एवाय न घटनिष्ठ इति शक्याङ्गीकारम्। नाप्यन्यत्, प्रत्युत सबन्धत्वसिद्धि-रेवोभयनिष्ठता गमयेत्। भवतु वा यथातथा, तथाप्युक्तदोषान्न निर्मोक्षः। तत्रापि हि किं धूमव्यक्ति-निष्ठा? किं धूमत्वजातिनिष्ठा? किमग्निव्यक्तिनिरूप्या? इत्याद्युक्तविकल्पानामप्रतिबद्धप्रसरत्वादिति। एव साधारण दूषणमुक्त्वाऽस्मिन्पक्षेऽसाधारणदूषणमाह—**स्वाभाविकेति**। स्वभावशब्दस्य असाधारणभावमात्र-वाचकत्वात्प्रस्तुतसबन्धद्वारोत्थापितसबन्धिनो. स्वभावे विश्रान्तिस्तथाच तदुपरितनतद्धितप्रत्ययेन तज्जन्य-त्वादिष्वन्यतमो वक्तव्यः, सबन्धमात्रविधानेऽपि विशेषपर्यवसितत्वादिति विकल्पयति—**स्वाभाविक-शब्देनेत्यादिना**। नच जन्यत्वेन प्रयुक्तत्वस्य पौनरुक्त्यम्। अजन्यजनकयोरप्यनित्यत्वकृतकत्वयो. प्रयुक्तदर्शनादित्यवगन्तव्यम्। **तदनतिरिक्तत्वमिति**। स्वार्थ एव विहितोऽय प्रत्यय इत्यर्थः। **नाद्य इति**। विप्रतिपन्न रूपवद्रसवत्त्वादित्यत्र ह्येकार्थसमवाय एव व्याप्तिरूप' सबन्धः, नच तत्र लक्षणमस्ति,

---

पूर्णतया व्याप्ति का ग्रहण नही हुआ। यह अविनाभाव भी क्या है? साधन के होने से साध्य का होना? या साध्य के बिना साधन का न होना? अथवा दोनो? प्रथम पक्ष युक्त नहीं, क्योकि केवलव्यतिरेकी हेतु मे "यत्र साधनम्, तत्र साध्यम्"—इस प्रकार की अन्वयव्याप्ति होती ही नही, यदि पक्ष से अन्यत्र कही हेतु का सद्भाव माना जाय, तब केवलव्यतिरेकिता भग हो जाती है। द्वितीय पक्ष व्यतिरेकव्याप्ति का स्वरूप है, जो कि केवलान्वयी मे नही होता। तृतीय पक्ष अन्वयव्यतिरेक व्याप्ति का स्वरूप है, जो कि अन्वयव्यतिरेकी मे रहने पर भी केवलान्वयी और केवलव्यतिरेकी मे नही।

(२) द्वितीय ( स्वाभाविक' सम्बन्धः ) लक्षण में भी जाति-व्यक्ति-आदि विकल्पो को लेकर वही दोष-राशि समान है, एव स्वाभाविक शब्दार्थ का निर्वचन भी नही हो सकता है। 'स्वभाव' शब्द से क्या (१) सम्बन्धि स्वभाव-जन्यत्व विवक्षित है? या (२) सम्बन्धिस्वभावाश्रितत्व? या (३) सम्बन्धिस्वभाव-प्रयुक्तत्व? या (४) सम्बन्धिस्वभाव-व्याप्यत्व? या (५) सम्बन्धिस्वभाव से अनतिरिक्तत्व? ( द्र० ख० पृ० ६९६ )। प्रथम पक्ष युक्त नही, क्योकि रूप से रस का अनुमान

रसाद्रूपानुमाने तत्सबन्धस्य समवायस्याजन्यत्वेनाव्याप्ते, व्यभिचारिणोर्घटपटयोः सयोगेऽतिव्याप्तेश्च। तस्य तद्रूपत्वेऽपि व्याप्तिरूपत्वाभावात्। नापि द्वितीय, घटपटयोः संयोगे सयोगिस्वभावाश्रिते व्यभिचारात्। नापि तृतीय, प्रयुक्तत्वशब्देन जन्यत्वविवक्षायामाद्यपक्षोक्तदूषणप्रसङ्गात्, तद्व्याप्तत्वविवक्षायां तु व्याप्तेर्व्याप्यनिरुक्तेरात्माश्रय। अत एव न चतुर्थ.। किच सबन्धस्य व्याप्यत्वे सबन्धिनोस्तद्व्यापकत्वेनाभिमतयोः क्वचित्तदधिकदेशकालावस्थानसंभवेन सबन्ध विनाप्यवस्थानोपपत्तौ व्यभिचारात्तदेकतरदर्शनेनान्यतरानुमान न स्यात्। नापि पञ्चम, भूतलघटाभावयोर्विशेषणविशेष्यभावलक्षणसबन्धेऽतिव्याप्ते। तस्य परैस्तदतिरिक्तत्वानङ्गीकारात्। समवायतद्वतो संबन्धे च। रसाद्रूपानुमानादावेकार्थ-

---

तस्याजन्यत्वादित्यर्थः। घटपटसयोगस्य लक्षणवत्तामलक्ष्यता चाह—तस्येति। सबन्धिस्वभावाश्रित सबन्धो व्याप्तिरिति द्वितीयपक्षेऽपि घटपटसयोगेऽतिव्याप्तिमाह—नापि द्वितीय इति। नचाव्यभिचारिसबन्धिस्वभावाश्रितत्वेन सबन्धो विशेषणीयः। अव्यभिचारस्यैव तथासति व्याप्तित्वसभवेन तदितरवैयर्थ्यात्, अव्यभिचारस्य निरसिष्यमाणत्वाच्च। ननु तत्प्रयुक्तत्व नाम न तज्जन्यत्वम्, येन पूर्वोक्ताव्याप्त्यतिव्याप्तिदोषौ स्याताम्, किंतु सबन्धिस्वभावव्याप्तत्वम्, गुणवत्त्वप्रयुक्तत्वमिव द्रव्यत्वस्येति, तत्राह—तद्व्याप्तत्वेति। इममेवात्माश्रय चतुर्थेऽप्यतिदिशति—अत एवेति। यदि च सबन्धिभ्या व्याप्तः सबन्धः, तदा सबन्धिनोर्व्यापकयोरधिकवृत्तितापि सभाव्यत इति सबन्ध विनापि सबन्धिनोरवस्थान स्यात्, तथा चान्यतरदर्शनादन्यतरानुमान न स्यात्, तत्सबन्ध विनापि तयो स्थितिसभवादित्यसिद्धिर्लक्षणस्येत्यभिसन्धिराह—किंचेत्यादिना। नच समव्याप्तितया व्याप्यत्वविवक्षायामदोष., रूपरसयोरेकार्थसमवायलक्षणव्याप्तौ तदभावात्, समवायस्य नित्यत्वेन द्रव्यादिपञ्चकवृत्तित्वेन च कालतो देशतो वा रूपरसाधिकवृत्तित्वात्। सबन्धिस्वरूपानतिरिक्तत्वमिति पञ्चमपक्षेऽप्यतिव्याप्तिमाह—भूतलेति। नच तस्य व्याप्तित्वम्, भूतलघटाभावयोर्व्यभिचरितत्वादिति भावः। तस्य च स्वभावानतिरिक्तत्वे पराङ्गीकारमाह—तस्य परैरिति। नचाभावान्तर्भावः, निष्प्रतियोगिकत्वात्, अभावत्वसमानाधिकरणत्वादभाव इति वादीन्द्रमतेऽपि तद्व्यञ्जकतया सप्रतियोगिकत्व मन्तव्यम्, अभाव इति बुद्धेश्चात्रासिद्धत्वादिति भावः। अतिव्याप्त्युदाहरणान्तरमाह—समवायेति। तयोरपि स्वभाव एव सबन्धः। नच तयोर्व्याप्तिः, भूतलादौ घटसयोगे तत्समवायाभावात्समवायेऽपि रूपादौ घटाभावादिति भाव.। अव्याप्ति चाह—रसादिति।

---

करने मे एकार्थसमवाय ही व्याप्तिरूप सम्बन्ध है, उसमे सम्बन्धिस्वभाव-जन्यत्व न होने से अव्याप्ति और घट पट—जैसे व्यभिचारी पदार्थों के संयोगरूप सम्बन्ध मे अतिव्याप्ति होती है, क्योकि यह संयोग, 'सम्बन्धिस्वरूप से जन्य' होने पर भी व्याप्ति नही माना जाता। द्वितीय भी संयोगिस्वरूप घट पट के आश्रित संयोग सम्बन्ध मे ही अतिव्याप्त होता है। तृतीय लक्षण मे 'प्रयुक्तत्व' शब्द से 'जन्यत्व' विवक्षित होने पर उक्त दोष ( सयोग में अतिव्याप्ति ) होता है और 'व्याप्यत्व' विवक्षित होने पर व्याप्ति-निरूपण में व्याप्ति की अपेक्षा होने से आत्माश्रय दोष है। इसी लिए चतुर्थ लक्षण भी उचित नहीं। दूसरी बात यह भी है कि सम्बन्ध को व्याप्य माना जाय, तब उसके व्यापक होगे सम्बन्धी, व्यापक का स्वभाव है कि व्याप्य की अपेक्षा अधिक देश काल में रहना, अतः बिना सम्बन्ध के भी सम्बन्धियों की स्थिति सम्भावित होती है, फिर सम्बन्ध-रहित एक पदार्थ को देखकर दूसरे का अनुमान कैसे होगा ? पञ्चम लक्षण भी भूतल और घटाभाव के विशेषणता-विशेष सम्बन्ध मे अतिव्याप्त है, क्योंकि उसे तार्किकादि सम्बन्धि-स्वभाव से अतिरिक्त नही मानते। समवाय और समवायाश्रय के स्वरूप सम्बन्ध में भी अतिव्याप्ति है, क्योंकि वह सम्बन्धि स्वरूप से अतिरिक्त नही माना जाता एवं रस से रूप के अनुमान मे अपेक्षित एकार्थसमवाय मे अव्याप्ति भी है, क्योंकि वह सम्बन्धि

समवायेऽव्याप्तेः, तस्य सबन्धिस्वरूपातिरिक्तस्यापि व्याप्तित्वात् ।

अतोऽनौपाधिक संबन्धो व्याप्तिरिति तृतीय कल्पो न युक्त', तत्रापि सबन्धिनोर्दु-र्निरूपत्वात्, इतरेतराश्रयप्रसङ्गाच्च । उपाधिर्हि साधनाव्यापकत्वे सति साध्यव्यापकः, एव च व्याप्तिसिद्धावुपाधिसिद्धिस्तत्सिद्धौ च तद्रहितसंबन्धस्य व्याप्तित्वसिद्धिरिति कथ नान्योन्याश्रयत्वम् ? अथ मत साध्यव्यापकत्वं नामोपाधेरदृष्टव्यभिचारसाध्यत्वम्, नतु वस्तुतो व्यापकत्वम्, तस्मान्नेतरेतराश्रयत्वमिति मैवम्, व्यभिचरितसाध्यस्यापि वस्तुगत्या-पाततोऽदृष्टव्यभिचारसाध्यत्वापत्तेस्तस्याप्युपाधित्वप्रसङ्गात् । साध्यव्यभिचारदर्शनविषय-त्वात्यन्ताभाववत्त्व विवक्षितमिति चेत्, न, तस्य दुरवधारणत्वात् । नहि देशान्तरे कालान्तरे पुरुषान्तरे वा तयोर्व्यभिचारदर्शनं न भविष्यतीत्येवेति शक्यं विज्ञातुमसर्वज्ञेन । कि च व्याप्तिग्रहणसमयेऽग्निमत्त्वादेर्निश्चितत्वेन साध्यत्वाभावात्साध्यव्यापक उपाधिरिति

---

तत्र लक्षणाभाव दर्शयति—**तस्येति** । एव स्वाभाविकः सबन्धो व्याप्तिरिति द्वितीयः पक्षो निरस्तः ।

तृतीय दूषयति—**अनौपाधिक इति** । **तत्रापीति** । अनौपाधिकः सबन्धो हि सबन्धिनिष्ठ., तथाच कि व्यक्त्योरित्यादिसबन्धिविकल्पदूषणानि समानानीत्यर्थः । दूषणान्तरमाह—**इतरेतरेति** । अत्र ह्यनौ-पाधिकत्वज्ञान व्याप्तेरुपाधिज्ञानाधीनमुपाधिज्ञान च व्याप्तिज्ञानाधीनमितितरेतराश्रय विवृणोति—**उपाधि-र्हीति** । **व्याप्तिसिद्धाविति** । अव्यापकत्व व्यापकत्व च व्याप्तिज्ञानाधीनज्ञान, तत्प्रतियोगित्वादित्यर्थः । ननूपाधेः साध्यव्यापकत्व नाम नाग्निमत्त्वादीनामिव व्याप्तिप्रतियोगि किंचिद्रूपम्, कि नाम? साध्येनादृष्ट-व्यभिचारित्वम्, तथा च नान्योन्याश्रयतेति शङ्कते—**अथ मतमिति** । अदृष्टव्यभिचार साध्य येनोपाधिना स उपाधिस्तथा, अत्र किमदृष्टव्यभिचारसाध्यत्व व्यभिचारदर्शनविषयत्वाभावमात्रम् ? कि वा व्यभिचार-दर्शनविषयत्वात्यन्ताभाववत्त्वम् ? नाद्यः, वस्तुत साध्यव्यभिचारिण्यपि तददर्शनसभवेनोपाध्याभासे गततयातिव्यापकत्वादित्याह—**मैवम्** । **व्यभिचरितेति** । द्वितीय शङ्कते—**साध्येति** । एवविधसाध्य-व्यापकत्व क्वापि न सभवति दुरवधारणत्वादित्याह—**न तस्येति** । किंच साध्यव्यापक इत्यत्र किमिद साध्यत्वम् विवक्षितम् ? कि सिसाधयिषितत्वम् ? कि वा व्यापकत्वम् ? नाद्य', उपाधेरग्निमत्त्व प्रति व्याप-कत्वनिश्चयसमये महानसादावग्निमत्त्वादेः सिद्धत्वेन साध्यत्वाभावादित्याह—**किं चेति** । द्वितीय शङ्कते—

---

स्वरूप से अतिरिक्त और व्याप्ति-लक्षण का लक्ष्य भी माना गया है ।

(३) तृतीय ( अनौपाधिक सम्बन्धो व्याप्ति ) कल्प भी युक्त नहीं, क्योंकि यहाँ सम्बन्धी के विषय में जाति-व्यक्ति के विकल्प उठाये जा सकते हैं, अत सम्बन्धि-निरुपण यहाँ भी सम्भव नहीं और अन्योन्याश्रय दोष भी है, क्योंकि उपाधि नाम है—'साधनाव्यकत्व-विशिष्ट साध्य-व्यापक' धर्म का, इस प्रकार व्याप्ति सिद्ध होने पर उपाधि की सिद्धि और उपाधि की सिद्धि होने पर उपाधि-रहित व्याप्ति की सिद्धि होगी । यदि कहा जाय कि 'साध्यव्यापकत्व' से केवल इतना ही विवक्षित है कि 'उपाधि के साथ साध्य का व्यभिचार नहीं देखा गया है', न कि उपाधि में साध्य व्याप्ति-निरूपकत्व, अत अन्योन्याश्रयता नहीं । तो ऐसा नहीं कह सकते, क्योंकि इस प्रकार तो जिस धर्म के वस्तुत व्यभिचारी साध्य से भी आपातत' व्यभिचारदर्शन सम्भावित है, वह धर्म भी उपाधि हो जायगा । यदि कहे कि जिस धर्म के साथ साध्य-व्यभिचार का दर्शन कभी भी कहीं भी सम्भा-वित नहीं, उस धर्म को उपाधि मानेंगे । तो ऐसा किसी भी धर्म के विषय मे निश्चय नहीं किया जा सकता कि उसके साथ साध्य का व्यभिचार देशान्तर, कालान्तर या पुरुषान्तर मे नहीं देखा जाता । दूसरी बात यह भी है कि व्याप्ति-ग्रहण-समय अग्निमत्त्वादि, निश्चित ( सिद्ध ) हो जाने से

निर्धारयितुमशक्यम्। व्यापकत्वमिह साध्यशब्देन विवक्षितमिति चेत्, न, व्याप्त्यनवगमे व्यापकत्वानिरुक्ते।

एतेन साध्यवन्निष्ठात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वं साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वमित्याधुनिकानां वक्रनयोऽपि निराकृतः, साध्यसाधनयोरनिरुक्तेरेव। तद्रूपेण संभावितत्वमुभयत्रापि विवक्षितमिति चेत्, मैवम्, तद्रूपस्यानिरुक्तौ तद्रूपेण संभावितत्वस्यापि दुर्भणत्वात्।

---

**व्यापकत्वमिति।** धूमवत्त्वादि प्रति यदि व्यापकत्वमग्नित्वादेस्तदेव तस्य साध्यत्वं विवक्षितमित्यर्थः। तत्र लक्षणवाक्यस्येदृशोऽर्थः पर्यवस्यति। व्याप्याव्यापको व्यापकव्यापक उपाधिरिति। तथाच व्याप्तिज्ञाने उपाधिज्ञानम् उपाधिज्ञाने च व्याप्तिज्ञानमिति स एव दुरात्मा परम्पराश्रयः पुनरागत इत्यभिसन्धिराह—**न व्याप्त्यनवगम इति।**

यत्त्वत्र शिवादित्यमिश्रेण परिहारोऽभिहितः परस्पराश्रयस्य, तत्राप्युक्तं दूषणमतिदिशति—**एतेनेति।** साध्यवद्यत्स्थलं तन्निष्ठात्यन्ताभावस्तदप्रतियोगित्वं तत्र वर्तमानत्वं साध्यव्यापकत्वम्, तथा साधनवद्यत्तन्निष्ठात्यन्ताभावप्रतियोगित्वं तत्रावर्तमानत्वं साधनाव्यापकत्वमिति योजना। अस्यापि साध्यसाधनगर्भत्वात् न तत्प्रयुक्तपूर्वोक्तदोषः शक्यपरिहार इत्याह—**साध्यसाधनेति।** एतेन 'साध्यकृत्स्नसहचारिणि साधनैकदेशावृत्तित्वमुपाधित्व'मिति लीलावतीकारलक्षणमपि निरस्तम्, साध्यसाधनशब्दार्थानिरुक्तेरेव। ननु यद्यपि व्याप्तिनिर्णयदशायां साध्यत्वं साधनत्वं च नास्ति, तथापि तद्रूपेण संभावितत्वं विवक्षितम्, तच्च तदानीमप्यस्त्येवेति शङ्कते—**तद्रूपेणेति।** विद्यमानस्य खलु संभावना प्रमितिर्वा, नच व्याप्तिग्रहणदशायां साध्यत्वमप्यस्तीति केनाकारेण संभावनापि स्यात्, नापि व्यापकतया, परस्पराश्रयत्वादित्यर्थः। अथ वा सर्वोपसंहारवद्व्याप्तिग्रहणसमय एव धूमवत्त्वाग्निमत्त्वयोः सर्वत्र सिद्धत्वेन साध्यसाधनभावस्य दुर्निरूपतया संभावनायाः सुतरामसिद्धेरित्यर्थः। किंच साध्यसाधनशब्दाभ्यामविशेषेण साध्यसाधनविवक्षा? तद्विशेषविवक्षा वा? नाद्यः, साधनस्यापि यत्किंचित्प्रति साध्यतया तद्व्यापकत्वे साधनाव्यापकत्वव्याकोपात्, तथा साध्यस्यापि यत्किंचित्प्रति साधनतया तदव्यापकतया साध्यव्यापकत्वव्याकोपात्। नापि द्वितीयः, तथा सति धूमवत्त्वाव्यापकोऽग्निमत्त्वव्यापक उपाधिरित्युक्तं स्यात्, तथा च नानुगतलक्षणसिद्धिः। नच विशेषलक्षणत्वाददोषः, सामान्यलक्षणासिद्धौ तदसिद्धेः। नचात्यन्ताभावप्रतियोगिधर्मत्वं सामान्यलक्षणम्, व्यर्थविशेषणत्वात्। नच प्रमेयत्वादिव्यवच्छेदार्थमत्यन्ताभावप्रतियोगित्वविशेषणम्, तस्याप्यत्यन्ताभावप्रतियोगित्वात्, अन्ततः स्वस्मिन्नेवाभावात्, आत्माश्रयप्रसङ्गात्। नचोत्पन्निज्ञप्तिप्रतिबन्धकस्यैव तस्य दूषणता, सङ्कोचे प्रमाणाभावात्, नियतानुपलब्धेरुभयत्र समानत्वात्। नच केवलान्वयिताभङ्गप्रसङ्गः, इष्टत्वात्, केवलान्वयिनि प्रमाणाभावात्। नहि प्रमेयत्वादीनां सकलवस्तुनिष्ठत्वे प्रत्यक्षप्रमाणमस्ति, अस्मदादेरसकलवेदितृत्वात्, सर्ववेत्तुश्च तद्विषयप्रमाणेऽस्मदादीनां प्रमाणाभावात्। नाप्यनुमानम्, अप्रसिद्धविशेषणतादिदोषग्रासात्। सकलवस्तुनिष्ठत्वं प्रमेयत्वादिनिष्ठमित्यादेश्चाश्रयासिद्धत्वात्। सकलवस्तूनि प्रमे-

---

साध्य नहीं रहे, अतः उपाधि में साध्य-व्यापकत्व का निश्चय करना भी सम्भव नहीं। 'साध्य' शब्द से व्यापक की भी यहाँ विवक्षा नहीं कर सकते, क्योंकि व्याप्ति का ज्ञान न होने पर व्यापकत्व का निर्वचन ही नहीं हो सकता।

इसी प्रकार "साध्यवन्निष्ठात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम्, साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम्"—यह नूतन वक्र न्याय भी निराकृत हो जाता है, क्योंकि यहाँ साध्य और साधन का निरूपण ही नहीं हो सकता। 'साध्यत्वेन सम्भावित को साध्य और साधनत्वेन सम्भावित को साधन मानेंगे'—यह भी कहना सम्भव नहीं, क्योंकि साध्यत्व और साधनत्व का निरूपण न हो सकने के कारण उस-उस रूप से सम्भावितत्व का भी निरूपण नहीं हो सकता।

भवतु नाम या काचन व्याप्ति , तस्या व्याप्तेरनुमितेश्च व्याप्तिरेष्टव्येत्यात्माश्रय । सत्यामेव व्याप्तावनुमितिभावादसत्यामभावात् । किंच तद्व्याप्तिग्राहकं प्रमाणम् ?

न प्रत्यक्षमशक्यत्वान्नानुमाप्यनवस्थितेः ।
नागमस्तद्दते भावान्नोपमाऽतत्प्रमेयत ॥२५॥
नार्थापत्तिरनन्यत्वादनुमाफललोपनात् ।
नाभावो दुर्निरूपत्वान्न तर्कस्तर्कबाधनात् ॥२६॥

न तावत्प्रत्यक्षं व्याप्तिग्राहकम् , सर्वव्यक्तिनिष्ठस्यान्वयस्य व्यतिरेकस्य वा सर्वव्यक्तीनामग्रहे ग्रहीतुमशक्यत्वात्, तद्ग्रहे वाऽनुमानस्य वैयर्थ्यात् । नाप्यनुमानम्, अनवस्थानात्—

यत्वाधार इत्यादेश्चासिद्धिर्दृष्टान्ताभावग्रस्तत्वात् । किंच धूमानुमाने तत्साधनाव्यापकस्तत्साध्यव्यापकश्च कश्चिदुपाधि प्रमित. ? न वा ? आद्येऽनुमानभङ्ग. । द्वितीये प्रतियोग्यप्रमित्या निरुपाधिकसम्बन्धरूपव्याप्त्यसिद्धिः । यावन्त एतत्साधनाव्यापकास्तावन्त एतत्साध्य प्रत्यप्यव्यापका यावन्तश्चैतत्साध्यव्यापकास्तावन्त एतत्साधन प्रत्यपि व्यापका इति साधिते भवत्युपाधेरुद्धार इतिचेत् , एतावतापि परिश्रमेण किं प्रतियोगिप्रमितिरापादिता ? नवा ? इत्यात्मनि परिभावयेत्यलमतिकलकलेन । विध्वसिते च निश्चितोपाधौ शङ्कितोपाधिरिदानी ध्वस्यत एवेति मन्तव्यम् । क्वचिदप्यनिश्चितस्य सशयायोगात् ।

एव व्याप्तिलक्षण दूषयित्वात्माश्रयादितर्कबाधादपि व्याप्तेरनुमित्यङ्गत्वासिद्धिमाह—**भवतु नामेति** । व्याप्तेरनुमितेश्च व्याप्तिरस्ति ? न वा ? यदि न, तदा तामन्तरेणाप्यनुमितिरुदियात् । अथास्ति तदा सैव व्याप्तिस्तत्र वर्तते तदात्माश्रय इष्टौ चायम् , अथान्या तत्रान्योन्याश्रयचक्रकानवस्थाश्चेति भाव. । एष्टव्या च व्याप्तिरित्याह—**सत्यामिति** । नच व्याप्तौ प्रमाणमपि किंचन निरूपयितु शक्यमित्याह—**किंचेति** । सभवत्प्रमाणानि श्लोकाभ्या निरस्यति—**न , प्रत्यक्षमित्यादिना** । सर्वव्यक्तिनिष्ठव्याप्तेरसर्वज्ञेन ग्रहीतुमशक्यत्वान्न प्रत्यक्षतस्तदधिगम. । नाप्यनुमानम् , अन्यान्याश्रयात् । अथान्यैवानुमानगता व्याप्तिस्तर्हि तत्राप्यनुमानान्तरमेव तद्व्याप्तावपीत्यनवस्था स्यात् । नाप्यागम , आगमव्यापारव्यतिरेकेणापि पामरपशुशकुन्तादीनामनुमित्युदयात् । नाप्युपमानम् , तस्य सादृश्यविषयतया सज्ञासज्ञिसबन्धविषयतया चैतादृशाना तत्प्रमेयत्वाभावात् । नाप्यर्थापत्ति. , अनुमानानन्यत्वात् । अथ परमतन पार्थक्यम् , तथैवानुमानफलस्याग्निमत्त्वस्यापि सिद्धिः , शक्नाति ह्यग्निव्यतिरेकेण धूमोऽनुपपद्यमानस्त कल्पयितुमित्यनुमानफललोपः स्यात् । नाप्यभावः , यस्य कस्यचिद्वा सर्वेषा वा योग्यानुपलब्धेर्वा अनुपलब्धिमात्राद्वा दुर्निरूपत्वात् । नापि तर्क. , तस्य व्याप्तिमूलत्वेऽनवस्थालक्षणतर्कबाधनात् , अतन्मूलत्वे तर्काभासतया तर्कबाधनात् । भावपरो निर्देश इति श्लोकार्थः । संग्रहं विवृणोति—**न तावदित्यादिना** । अनवस्था-

अस्तु, व्याप्ति कोई भी रहे, उसकी अपनी अनुमिति के साथ व्याप्ति माननी होगी, अत. आत्माश्रय दोष होता है । इन दोनो मे व्याप्ति नही मानेगे—ऐसा नही कह सकते , क्योकि व्याप्ति के रहने से ही अनुमिति होती है और न रहने से नही होती । व्याप्ति-ग्राहक प्रमाण भी कौन है ? प्रत्यक्ष सम्भव नही । अनुमान मानने पर अनवस्था होगी । आगम भी नही , क्योकि उसके बिना भी अनुमिति होती है । उपमान का तो अनुमिति विषय ही नही । अर्थापत्ति तो अनुमान से अभिन्न ही है । यदि अर्थापत्ति को भिन्न मानें, तब अनुमान मानना निष्फल हो जाता है । अभाव प्रमाण का निरूपण ही नहीं हो सकता । तर्क भी व्याप्ति ग्राहक नही , क्योंकि उसमें तर्क ही बाधक है ( द्र० खं० पृ० ६६७ ) । अर्थात् प्रत्यक्ष से निखिल व्यक्तियों का जब तक ग्रहण न हो, तब तक उनमें अन्वय-व्यतिरेक का प्रत्यक्ष हो नही सकता । यदि प्रत्यक्ष से निखिल व्यक्तियों का ग्रहण मान लेते है, तब पर्वत-वृत्ति अग्नि का भी ग्रहण हो जाने से अनुमान व्यर्थ हो जाता है । अनुमान से भी व्याप्ति-

अन्तरेण व्याप्तिग्रहमनुमानानुदये तत्तद्व्याप्तिग्राहकानुमानपरम्पराया दुर्वारत्वात्। नाप्यागम, वेदाप्तवचनाकर्णनविधुराणामपि व्याप्तिदृष्टिदृष्टे.। नाप्युपमानम्, तस्य सादृश्यमात्रविषयतया व्याप्तिज्ञप्तावजागरूकत्वात्। नाप्यर्थापत्ति, तस्या अनुमानानतिरेकात्। अतिरेकेऽपि तयानुमानावसेयार्थाधिगतेरनुमानस्यानुदयप्रसङ्गात्। तथा हि—व्यापकव्यतिरेकेण व्याप्यस्यानुपपत्तिरिहार्थापत्तिरभिमता, तथा च तयैवानुपपत्त्या लिङ्गिनोऽधिगतौ कृतमनुमानेन। नाप्यभाव, एवं हि स प्रमाणयितव्य.—यदि वह्निधर्मिव्यतिरेकेण धूम स्यात्तदा तथोपलम्भ स्यात्तदभावान्नाय तद्व्यतिरेकेणेति। तच्च न। तथा हि—किं सर्वेषां व्यभिचारानुपलम्भ ? किं वा स्वस्यैवानुपलम्भ ? उत योग्यानुपलम्भ ? नाद्य, सर्वानुपलम्भस्य निश्चेतुमशक्यतया सशयानिवृत्ते। न द्वितीय, व्यभिचारात्। नहि नगरगतेन स्वेनानुपलब्धमित्येतावतारण्यकोपलब्धगवयादेरपलापसभव। नापि तृतीय। सार्वत्रिकयोग्यानुपलब्धेरसंभवात्। उक्तं च लीलावतीकारेण—

"सर्वादृष्टेश्च सदेहात्स्वादृष्टेर्व्यभिचारत।
योग्यादृष्टेरसत्त्वाच्च प्रतिबन्धो न सिध्यति॥" इति (न्या० ली० पृ० २५२)

---

मेव विवृणोति—अन्तरेणेति। वेदाप्तवचनेति विभागो मीमांसकमतेन। अजागरूकत्वात्। अप्रबुद्धत्वादित्यर्थ.। अभावस्यात्रासम्भव दर्शयितु तत्प्रवृत्तिप्रकार दर्शयति—एव हीति। तथेति। वह्निरहिततयेत्यर्थ। तद्व्यतिरेकेणेति। वर्तत इति शेषः। स्वस्येति। प्रतिपत्तुरित्यर्थ.। स्वानुपलम्भपक्षेऽप्यनुपलम्भमात्रात्? उत योग्यानुपलम्भादित्याह—उतेति। व्यभिचारादिति। स्वानुपलम्भमात्रस्यार्थाभावेन नियमाभावादित्यर्थः। व्यभिचारमेवाह—न हीति। योग्यानुपलब्धिपक्ष दूषयति—नापीति। उक्त चेति।

---

ग्रहण सम्भव नही, क्योंकि व्याप्ति-ग्रह के बिना अनुमान का उदय ही नही हो सकता। अनुमानापेक्षित व्याप्ति का ग्रहण द्वितीय अनुमान से और द्वितीयानुमानापेक्षित व्याप्ति का ग्रहण तृतीय अनुमान से—इस प्रकार मानने पर अनवस्था हो जाती है। व्याप्ति-ग्रहण मे आगम प्रमाण भी नही हो सकता, क्योकि वैदिक और लौकिक शब्द सुने बिना भी व्याप्ति-दर्शन देखा जाता है। उपमान प्रमाण भी नही, क्योकि वह तो सादृश्यमात्र को विषय करता है, व्याप्ति पर उससे कुछ भी प्रकाश नही पडता। अर्थापत्ति भी नही, क्योकि वह स्वयं अनुमान से अभिन्न है, भिन्न मानने पर उसीसे अनुमेयार्थ का निश्चय हो जायगा, अनुमान का मानना ही व्यर्थ हो जाता है, क्योकि व्यापक के बिना व्याप्य की अनुपपत्तिरूप ही यहाँ अर्थापत्ति माननी होगी, उसी से ही वह्निरूप लिङ्गी का निश्चय हो जाने पर अनुमान क्या करेगा? अनुपलब्धि प्रमाण भी नही, क्योकि इस प्रकार ही अनुपलब्धि को प्रमाण बनाना होगा कि "वह्नि का धर्म धूम यदि वह्निरूप धर्मी के बिना होता, तब वह्नि से व्यभिचरित होकर भी कहीं उपलब्ध होता, किन्तु नही होता, अत यह धूम वह्नि के बिना नहीं रहता।" यहाँ जिज्ञासा होती है कि धूम और अग्नि का व्यभिचारानुपलम्भ सर्व पुरुषो का अपेक्षित है? या केवल ज्ञाता का? या ज्ञाता का योग्यानुपलम्भ? प्रथम पक्ष उचित नही, क्योकि सर्व पुरुषो के व्यभिचारानुपलम्भ का निश्चय ही नही हो सकता, अत. संशय बना ही रहेगा। द्वितीय पक्ष मानने मे व्यभिचार दोष है, क्योकि किसी व्यक्ति को किसी वस्तु का अनुपलम्भ होने पर भी उस वस्तु का सर्वथा अभाव नही होता। जैसे नगरस्थ व्यक्ति गवय को नही देखता, एतावता वन मे भी उसका अभाव नही होता, (इसी प्रकार किसी व्यक्ति को यदि धूम और अग्नि के व्यभिचार का अनुपलम्भ है, एतावता उनमे व्यभिचाराभाव का निश्चय नही किया जा सकता)। तृतीय पक्ष भी उचित नही, क्योकि सर्व देश कालगत अनुपलम्भ सम्भव नही। लीलावतीकार ने

नापि विपक्षबाधकतर्कात्। तर्कस्य व्याप्तिमूलत्वेनानवस्थानात्, अतन्मूलत्वे च मूलशैथिल्येन तर्काभासत्वात्। अथ मतम्, यदि धूमोऽग्निं व्यभिचरेदकारणः सन्नित्यः स्यात्, न स्यादेव वा, न तु कदाचित्स्यात्। नच विनापि कारणं कार्यं शङ्कितु शक्यम्, व्याघातात्—तदेव हि कार्यं यत्कारणाधीनस्वात्मलाभम्, अत कार्यं च कारणरहितं चेति व्याघातः। तदेव चाशङ्कितव्यं यस्मिन्नाशङ्क्यमाने क्रियाव्याघातादयोऽपि नावतरन्तीति, मैवम्, अस्यापि तर्कस्य व्याप्तिमूलत्वेन तदसिद्धावसिद्धेः। तथाहि—यत्कार्यं तत्कारणपूर्वकमिति व्याप्तौ सिद्धायां यदकारणं तन्नित्यं स्यादिति प्रसङ्गप्रसरात्, सैवाद्यापि न सिद्धा। सर्वकार्यकारण-व्यक्तिग्रहणस्याशक्यत्वात्, कतिपयव्यक्तिग्रहणे चादृष्टवज्रस्य पार्थिवत्वलोहलेख्यत्वयोरिव

उपाधिविधूननेन प्रतिबन्धसिद्धिमीश्वरानुमाने समर्थयता "कार्यमात्रस्य कारणमात्रेणापि सम्बन्धः उपाधि-विधूननेन" इत्युक्त्वा विपक्षबाधात्तत्र व्याप्तिसिद्धिमाशङ्क्य व्याप्त्यसिद्धावुक्तायां सहेतुकत्वकादाचित्कत्व-योर्व्यभिचारानुपलम्भाद्व्याप्तिसिद्धिमाशङ्किता परिहरतीति शेषः। अन्तिमपक्षं निराकरोति—**नापीति**। यदि व्याप्तिमूलस्तर्कस्तदा तद्व्याप्तावपि तर्कान्तरमेषितव्यमित्यनवस्था। इतरथा प्रशिथिलमूलत्वमित्यर्थः। तत्र यथा तर्कानवस्था नावतरति तथा कुसुमाञ्जलावुदयनेन बाधकस्तर्कोऽभिहितस्तमुद्भावयति—**अथ मतमिति**। यन्नदकारणकं तन्सदेकरूपमसदेकरूपं वा। आकाशवत्तत्कुसुमवच्च। तदिह यदि धूमाग्निं व्यभिचरेदकारणतया नित्यसत्त्वासत्त्वयोरन्यतरत्वप्रसक्तिरित्यर्थः। उक्तं हि—

'नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षया। नियामकाद्धि भावानां कादाचित्कत्वसम्भवः।' ॥ १ ॥ इति ॥

नन्वकारणकस्यापि सदातनत्वेन व्यभिचारशङ्कायां किमुत्तरमिति, तत्राह—**न च विनेति**। व्याहतिमेव दर्शयति—**तदेव हीति**। यो व्याघातादपि न बिभेति, तं प्रत्याह—**तदेव चेति**। यदि हि कारणं विना कार्योत्पादस्तदा परप्रत्ययोत्पादनार्थम् सामग्रीप्रयोगो व्याहतः। सेयमत्र क्रियाव्याहतिः। आदि-शब्दान्मूकोऽहमिति वचनव्याहतिः स्वभावव्याहतिश्च सगृह्यते। उक्तं च तेनैव—

'शङ्का चेदनुमास्त्येव नो चेच्छङ्का ततस्तराम्।
व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥' इति ( न्या० कु० ३।७ )।

एवमपि पूर्वोक्तदोषो दुष्परिहर इत्याह—**मैवमिति**। ननु किमिति कार्यस्य कारणेन व्याप्तिरसिद्धेति, तत्राह—**सर्वकार्येति**। ननु कतिपयव्यक्तिग्रहणेऽपि किमिति व्याप्त्यसिद्धिः, तत्राह—**कतिपयेति**।

कहा है—'सर्व पुरुषों को व्यभिचारानुपलब्धि होती है—यह सन्देहास्पद है, केवल ज्ञाता की अनुपलब्धि में व्यभिचार होने से व्यभिचाराभाव की अनुमापकता नहीं। योग्यानुपलब्धि तो है नहीं, अतः व्याप्ति सिद्ध नहीं होती।' विपक्ष-बाधक तर्क भी व्याप्ति-ग्राहक नहीं, क्योंकि वह तर्क यदि व्याप्ति-मूलक है, तब तो अनवस्था, यदि नहीं, तब मूलशैथिल्य होने से तर्काभास है। यदि तर्क का स्वरूप यह रखा जाय कि "यदि धूम अग्नि का व्यभिचारी होगा, तब या तो कारण-रहित होने से नित्य होगा या नहीं ही होगा, न कि कदाचित् होगा ( द्र० ता० टी० पृ० १६०, १६१ )। बिना कारण के कार्य की आशङ्का कभी होती नहीं, क्योंकि व्याघात होगा—उसी को कार्य कहा जाता है, जो कारण के अधीन अपना स्वरूप-लाभ करता है, अतः कार्य भी हो और कारण-रहित भी—यह व्याहत है। वही आशङ्का करनी चाहिए कि जिससे क्रिया-व्याघात न हो (द्र०न्या० कु० ३।७)। तो यह तर्क भी उचित नहीं, क्योंकि यह तर्क भी व्याप्तिमूलक है, व्याप्ति की सिद्धि न होने पर सिद्ध कैसे होगा? अर्थात् 'जो कार्य होता है, वह कारण-पूर्वक होता है'—इस व्याप्ति के सिद्ध होने पर ही 'जो अकारण होता है, वह नित्य होता है'—यह प्रसङ्ग दिया जा सकता है, किन्तु वह व्याप्ति ही अभी तक सिद्ध नहीं हुई है, क्योंकि सभी कार्य और कारण व्यक्तियों का ग्रहण सम्भव नहीं। कतिपय व्यक्तियों का ग्रहण होने पर वैसे ही व्याप्ति का निश्चय नहीं होता, जैसे कि जिस व्यक्ति ने वज्रमणि

व्याप्तेरनिश्चयात्। नन्वेवंभूतोपि व्यभिचारो यत्र न दृश्यते, कतिपयव्यक्तिषु सहभाव प्रदृश्यते, न चोपाधिर्निरूप्यते, तत्र व्याप्तिर्निश्चीयते, तत्रैवंसति, "अन्यत्र व्याप्तिग्रहणमन्यत्र चानुमितिरिति। एव च षण्डकमुद्वाह्य मुग्धाया पुत्रप्रार्थनमिव" इति वाचस्पतेरुपालम्भोऽप्यनवकाश, व्याप्ते सर्वत्रैकत्वात्तस्याश्च कतिपयव्यक्तिषु गृहीतत्वात्। गृहीतव्याप्तिकलिङ्गसामर्थ्यादेव संदिग्धसाध्यधर्मिणि व्यापकस्यापि प्रतीति सिद्धेति चेत्, मैवम्, व्यभिचारादर्शनस्योपाध्यनिरूपणस्य च दुर्निरूपत्वात्, सर्वादृष्टेश्च सदेहादिति न्यायस्योभयत्रापि तुल्यत्वात्। उपाधेश्च व्याप्तिनिरूपणमन्तरेण दुर्निरूपत्वस्य दर्शितत्वात्। किंच विनापि

तथाहि—विमत लोहलेख्य पार्थिवत्वादित्यत्र स्तम्भादिकतिपयव्यक्तौ व्यभिचारादर्शनेपि न व्याप्तिनिश्चय। प्रशिथिलावयवारब्धत्वोपाधिहतत्वात्। ननु तत्र वज्रमणौ व्यभिचारदर्शनादेव व्याप्त्यनिश्चयः, न पुन सर्वव्यक्त्यपरिज्ञानात्, नचेह तथा व्यभिचारदर्शनमिति, तत्राह—**अदृष्टवज्रस्येति**। येन हि हीरमणिन दृष्टस्तेन यो व्याप्त्यनध्यवसाय. स सर्वव्यक्त्यदर्शननिमित्तः। अध्यवसाये च भ्रान्तिमात्रत्वादित्यर्थः। कतिपयव्यक्तिग्रहणेपि व्याप्तिग्रहणोपाय नवीनमतावलम्बनेन शङ्कते—**नन्वेवमिति**। तत्किं हिंसात्वानर्थसाधनत्वयोरपि व्याप्तिरस्तु, अस्ति ह्यत्र रूपद्वयमिति, तत्राह—**न चोपाधिरिति**। स्यादेतत्कतिपयव्यक्तिषु व्याप्तिग्रहणेऽनुमेयस्थले व्याप्तेरग्रहादन्यत्र व्याप्तिरन्यत्रानुमानमिति स्यात्, तथा च गृहीतापि यथावृत्ति व्याप्तिरनुमित्यसमर्थेति वाचस्पत्युक्तोपालम्भप्रसङ्ग इति, तत्राह—**तत्रैव सतीति**। पण्डकः पण्ड. तत्र षण्डकः पुत्रासमर्थः समर्थश्च न वृत्तस्तद्वदित्येतावत्यय दृष्टान्त तत्तु योगभाष्यकृदभिप्रायेण। ननु तथापि कथमन्यत्र व्याप्तिग्रहणमन्यत्रानुमानमिति, तत्राह—**गृहीतेति**। स्यादेव यदि व्यभिचारो न दृश्यत उपाधिश्च न दृश्यते इत्ययमर्थ सिद्ध्यति, स एव दुःसाध्य इति परिहरति—**मैवमिति**। **उभयत्रापीति**। व्यभिचारवदुपाधावपि सर्वादर्शन यस्य कस्यचिद्धेत्वादेस्तुल्यत्वादित्यर्थ.। उपाधावविकमस्याह—**उपाधेरिति**। एव व्याप्त्यसिद्ध्या तर्काप्रवृत्तिमुक्त्वा धूमस्याग्निव्यभिचारशङ्कायामकारणकत्वापत्त्या व्याघातोऽप्यापादयितु न शक्यत अन्यस्मादप्युत्पत्तिसम्भवेन विरोधासिद्धेरित्याह—**किंचेति**। स्यादतत् यद्यन्यस्मादपि धूमोत्पत्तिस्तर्हि परिदृश्यमानधूमानामेकावान्तरजातीयता न स्यात्। कार्यैकजात्यस्य कारणैकजातिनियमात्, अन्यथा तदैकजात्यस्याकास्मिकत्वप्रसङ्गात्। अत एव हि तृणारणिमणिभ्योऽप्युत्पन्नमानदहनेष्ववान्तरजातिभेदकल्पनमिति, तदेतदुद्भावयति—**अथ मन्यस इति**। नियम एवायमसिद्ध

(हीरा) नही देखा उसे पार्थिवत्व और लोह-लेख्यत्व की व्याप्ति का निश्चय नही होता। यदि कहा जाय कि पार्थिवत्व और लोह-लेख्यत्व का तो स्तम्भ कुम्भादि कतिपय व्यक्तियो मे व्यभिचार देखा जाता है, अत वहाँ व्याप्ति का निश्चय नही। किन्तु जिन धर्मों का कतिपय व्यक्तियो मे व्यभिचार नहीं देखा जाता, सहचार ही देखा जाता है और किसी प्रकार की उपाधि भी प्रतीत नही होती, उन धर्मों मे व्याप्ति का निश्चय क्यों नहीं होगा ? ऐसा मानने से वाचस्पति ने जो उपालम्भ दिया है कि "व्याप्ति का ग्रहण हुआ—महानसीय धूम मे और पर्वतीय धूम से, अनुमिति की कामना करनी वैसी ही है, जैसे कि किसी स्त्री का नपुसक से विवाह करके उससे पुत्रोत्पत्ति की प्रार्थना"। वह उपालम्भ भी दूर हो जाता है, क्योकि व्याप्ति सर्वत्र एक ही है, वह कतिपय वह्नि धूम व्यक्तियो मे ही गृहीत हो जाती है, उसी व्याप्ति से विशिष्ट पर्वतीय धूमरूप लिग के सामर्थ्य से पर्वतरूप पक्ष मे व्यापक वह्नि की अनुमिति हो जाती है। तो यह कहना युक्तियुक्त नही, क्योकि व्यभिचारादर्शन और उपाधि का निरूपण सम्भव नही। दोनो में न्यायलीलावतीकार कथित "सर्वादृष्टेश्च सन्देहात्"—यह न्याय समान ही है। उपाधि का निरूपण भी व्याप्ति-निरूपण के बिना सम्भव नही—यह दिखाया जा चुका है। दूसरी बात यह भी है कि यदि 'वह्नि के बिना भी धूम किसी और हेतु से

धूमध्वज धूमोऽन्यस्मादपि हेतोर्भविष्यतीति शङ्कायां. क प्रतीकार ? अथ मन्यसे विभिन्नसामग्रीजन्यत्वे धूमस्यैकजातीयताप्रतीतिर्न स्यादिति, मैवम्, इन्द्रियलिङ्गादिजन्यविज्ञानस्येव तृणारणिमणिप्रभवस्याऽऽशुशुक्षणेरिव चैकजातीयतोपपत्ते । तस्मान्न व्याप्तिलक्षणं नापि तद्ग्राहकं प्रमाणमस्तीति सिद्धम् ।

पक्षधर्मत्वमपि दुर्निरूपम् । तथा हि—कोयं पक्षो, यद्धर्मता पक्षधर्मता ? संदिग्धसाध्यधर्मा धर्मीति चेत्, कि वादिप्रतिवादिनो' संदेह ? कि वा मध्यस्थानम् ? नाद्यः, निश्चितौ हि वादं कुरुत इति स्वीकारात्। नापि द्वितीय', तेषामपि दर्शनद्वयतत्त्ववेदिना सदेहानुपपत्ते, किंचान्तरेणापि संशयं धूमदर्शनमात्रादग्निमनुमिमानस्य संदेहविशेषितधर्मिणि हेतोरवृत्ते पक्षधर्मत्वाभावादनुमानानुदयप्रसङ्ग' । एतेन ज्ञापनीयधर्मविशिष्टो

इति परिहरति—मैवमिति । अस्ति तावत्सर्वज्ञानेषु ज्ञानैकजात्यम्, नचात्रानुगतमनतिप्रसङ्गि कारण शक्य निरूपयितुम् । इन्द्रियादीना व्यावृत्तत्वात्, आत्ममनः सन्निकर्षस्य च सुखादिसाधारण्यात् । ततस्तत्र यथाकारणैकजात्याभावेपि कार्यैकजात्यम्, एव तृणाद्युत्पन्नाग्नेरपि । यथा च तत्रावान्तरजातिभेदकल्पनाऽयुक्ता, तथाग्रे वक्ष्यते । तदिहाप्यनुगतकारणव्यतिरेकेण व्यावृत्तेभ्य एव कारणेभ्यः स्वभावव्रशात्सजातीयधूमाः समुत्पद्यन्तामिति भाव. । ननु तद्धर्मिप्रयाज्येषु धूमेष्वितरेभ्यो व्यावृत्तः कश्चिद्विशेषो दृश्येतेनि चेन्न ; तददर्शनस्य प्रतियोगिधूमादृश्यतयाप्युपपत्तेरिति शङ्काया निरङ्कुशत्वादिति, व्याप्तिखण्डनमुपसंहरति—तस्मादिति ।

इदानी पक्षधर्मतालक्षणलिङ्गावयव खण्डयति—पक्षधर्मत्वमपीति । अनवसरता निराचष्टे—यद्धर्मतेति । सदिग्धसाध्यधर्मा पक्ष इत्युक्ते विशेषणीभूतसाध्यधर्मस्यापि पक्षता स्यान्नचैतद्युक्तम्, साध्यस्य पक्षनिष्ठत्वाभावप्रसङ्गात्, आत्माश्रयात्, हेतोर्वैयधिकरण्यापाताच्च । अतस्तद्धर्मित्वमात्रस्य पक्षत्वदर्शनाय धर्मीति विशेषणम् । अत्र यदिद सदिग्धत्व साध्यस्य तत्क प्रतीति विकल्प्य दूषयति—किं वादीत्यादिना । किच संदेह. किमुपलक्षणम ? विशेषणं वा ? आद्य कदाचित्सदिग्धे प्रत्यक्षेण निर्णीतेऽपि प्रवर्तमानानुमानस्य न सिद्धसाधनता स्यात्, तदापि पक्षत्वापातात् । द्वितीये त्वनुमित्यनन्तरमप्रवृत्तिः स्यात् । धर्मिनाशवद्विशेषणनाशेन पक्षस्य नष्टत्वात् । स्वार्थानुमानेऽव्याप्ति चाह—किचेति एतेनेत्येतद्विवृणोति—

हो जायगा"—यह शङ्का की जाय, तो इसका क्या प्रतीकार होगा ? यदि कहा जाय कि विभिन्न सामग्री से जन्य होने पर धूम में एकजातीयता नहीं रहेगी। तो यह कहना युक्त नहीं, क्योंकि इन्द्रिय और लिंगादि से जन्य ज्ञान में एवं तृण, अरणि और मणि से जन्य वह्नि में जैसे एकजातीयता रहती है, वैसे ही प्रकृत में भी एकजातीयता क्यों न होगी ? अतः न तो कोई व्याप्ति का लक्षण ही बनता है और न कोई व्याप्ति का ग्राहक प्रमाण ही सिद्ध होता है।

पक्षधर्मता का भी निरूपण सम्भव नहीं। यहाँ जिज्ञासा होती है कि यह पक्ष क्या है, जिसकी धर्मता को पक्षधर्मता कहा करते है ? ( द्र० खं० पृ० ७२७ ) यदि कहें कि 'सन्दिग्ध है साध्यरूप धर्म जिसमे ऐसे धर्मी का नाम पक्ष है।' तो यहाँ सन्देह किसका लिया जायगा ? वादी-प्रतिवादी का ? या मध्यस्थ पुरुषो का ? प्रथम पक्ष उचित नहीं, क्योंकि वाचस्पति ने मान रखा है कि सन्देह-रहित वादी-प्रतिवादी ही वाद करते है। द्वितीय पक्ष भी उचित नहीं, क्योंकि मध्यस्थ, वे ही बनाये जाते है, जो वादी-प्रतिवादी दोनो के दर्शनो से सुपरिचित होते है, उन्हें भी सन्देह नहीं होता। दूसरी बात यह भी है कि संशय के बिना भी धूम-दर्शनमात्र से जो व्यक्ति अग्नि का अनुमान कर रहा है, उसे सन्देह-विशिष्ट धर्मी में हेतु की वृत्तिता का ज्ञान न होने से अनुमिति नहीं होनी चाहिए। इससे 'प्रज्ञापनीय धर्म-विशिष्ट धर्मी का नाम पक्ष है'—यह लक्षण भी निरस्त हो जाता है,

धर्मी पक्ष इति प्रत्युक्तम्, स्वार्थानुमाने प्रज्ञापनाभावात्। प्रमित्सितधर्मविशिष्ट पक्ष इत्यपि न; अप्रमित्सतोऽप्यनिष्टविषयेऽनुमानोदयदर्शनात्। साध्यधर्मविशिष्ट' पक्ष इत्यपि न, साध्यपदेन संदिग्धत्वप्रज्ञापनीयत्वप्रमित्सितत्वाद्यन्यतमविवक्षायामुक्तदोषानुषङ्गात्। अप्रमितत्व साध्यत्वमिति चेत्, न, प्रमाणसम्प्लववादिनो नैयायिकस्य प्रमितेऽप्यनुमानप्रवृत्ते, अनुमितेऽप्यनुमानप्रवृत्तेश्च। न च तत्रापि तत्तत्कालविशिष्टतयाऽधिगति., कालानुमाने तदभावात्।

अस्तु वा य' कश्चित्पक्षस्तथापि तद्धर्मता दुरधिगमा। तथाहि—पक्षाश्रितत्वं पक्षधर्मत्व चेत्, तथा सति प्रमयत्वहेतौ तन्न स्यात्, प्रमेयत्वस्य प्रमाविषयत्वलक्षणस्य ज्ञान-

---

स्वार्थेति। प्रज्ञापनमित्यत्र शिचा यदिद प्रयोजककर्तृत्वमभिधीयते न तत्स्वार्थानुमानेऽस्ति। तत्र पर प्रति बोधनाभावादित्यर्थ'। तर्हि प्रमित्सितधर्मविशिष्ट इत्येवास्तु, तस्य स्वार्थानुमानेपि भावादिति, तत्राह—प्रमित्सितेति। तथाप्यव्याप्ति। प्रमातुमनिच्छतोपि दुर्गन्धादीलिङ्गककुणपाद्यनुमानगतपक्षाव्याप्तेरित्यर्थः। सर्वज्ञीय लक्षणमुद्राव्य दूषयति—साध्येति। अत्रापि साध्यपदेन पूर्वोक्तार्थविवक्षाया पूर्वोक्तदूषणानषङ्ग एवेत्यर्थः। अर्थान्तर शङ्कते—अप्रमितत्वमिति। एतदव्यापकमित्याह—प्रमाणेति। यस्य ह्येकस्मिन्नपि प्रमेये बहूनि प्रमाणानि वर्तन्त इति मतम्, तस्य प्रमितेऽप्यनुमानमिष्टमेव। यथाहु'—

'आगमेनानुमानेन ध्यानात्प्रत्यक्षणेन च।
त्रिधात्मनि प्रमाणाना सप्लवः स्वार्थ इष्यते ॥' इति ( ख० पृ० ६४२ )

ततस्तत्राव्याप्तिरित्यर्थ'। ननु तत्रापि तत्तत्कालविशिष्ट एवानुमीयत इत्यप्रमितमेव तदिति, तत्राह—नचेति। यदा हि कालो बहुभिरनुमानैरनुमीयते, नच तत्रैतदस्ति, काले कालवैशिष्ट्यस्यैवाभावादित्यव्याप्तिरित्याह—कालेति।

एव पक्ष दूषयित्वा पक्षधर्मता दूषयति—अस्तु वेति। प्रमेयत्व नाम प्रमाविषयत्वम्, विषयविषयिभावश्च स्वभावानतिरिक्त इति प्रमातो विषयतश्च प्रमेयत्व नातिरिक्त तथा चादृष्टादि कस्यचित्प्रत्यक्ष प्रमेयत्वादित्यस्य हेतोरपक्षधर्मता स्यात्। आत्मव्यतिरिक्तस्यार्थजातस्य प्रमाश्रयत्वानुपपत्तेरर्थस्यापि स्वाश्रयत्वानुपपत्तेः। अतः पक्षाश्रितत्व पक्षधर्मत्वमित्यव्यापकमित्याह—प्रमेयत्वेति। ननु प्रमेयत्व नाम प्रमाव्य-

---

क्योकि स्वार्थानुमान मे शब्द-प्रयोग के द्वारा साध्य का प्रज्ञापन नही होता। 'प्रमित्सित धर्म-विशिष्ट, पक्ष कहलाता है'—यह लक्षण भी युक्त नही, क्योकि जिस व्यक्ति का किसी अनिष्ट विषय की प्रमित्सा ( प्रमा ज्ञान की इच्छा ) नही, उसे भी उस विषय की अनुमिति होती है। भासर्वज्ञ ने जो ( न्या० सा० पृ० ६ पर ) लक्षण किया है 'साध्यरूप धर्म से विशिष्ट को पक्ष कहते है"। वह भी युक्त नही, क्योकि 'साध्य' पद से सन्दिग्धत्व, प्रज्ञापनीयत्व और प्रमित्सितत्व—इनमे से किसी एक की विवक्षा करने पर उक्त दोष आ जाते है। अप्रमितत्व की विवक्षा भी उचित नही, क्योकि प्रमाण-सम्प्लव-वादी (एक ही प्रमेय मे कई प्रमाणो की प्रवृत्ति मानने वाले—द्र० न्या० वा० पृ०४) नैयायिक मानते है कि प्रमित मे भी अनुमान की प्रवृत्ति होती है, अनुमित मे भी अनुमान की प्रवृत्ति होती है। 'तत्तत्काल-विशिष्ट साध्य अप्रमित ही है'—यह भी नही कह सकते, क्योकि कालविषयक अनुमान में अन्यकाल का वैशिष्ट्य सम्भव नहीं।

यदि मान भी ले कोई पक्ष, तब भी पक्षधर्मता का अधिगम सुगम नही। यदि कहें कि 'पक्षाश्रितत्व' का नाम पक्षधर्मता है, तब तो प्रमेयत्व हेतु मे वह न होगी, क्योकि प्रमेयत्व क्या है? प्रमा-विषयता, विषयता है—प्रमा और प्रमेय का स्वरूप सम्बन्धविशेष, अत' प्रमा और प्रमेय से भिन्न न होने के कारण प्रमेयत्व मे किसी पक्ष की आश्रयता कैसे रहेगी? ( द्र० खं० पृ० ७३३ )

ज्ञेयानतिरिक्तत्वाभ्युपगमेन तदाश्रितत्वायोगात् । प्रमान्योन्याभाववत्त्वं प्रमेयत्व ततस्तस्य ज्ञानज्ञेयाश्रितत्वमुपपन्नमिति चेत्, न, अन्योन्याभावस्यैकत्वे तस्य तद्वृत्तौ प्रमेयत्वहेतुना कस्यचित्प्रत्यक्षत्वानुमानं न स्यात्, तस्यैवान्योन्याभाववत्त्वाभावात्। अनेकत्वे चान्योन्याभावानां सर्वान्योन्याभाववत्त्व प्रमेयशब्दप्रवृत्तिनिमित्तम् ? उतान्यतमवत्त्वम् ? नाद्यः, सर्वग्रहणासंभवात्। न द्वितीय , अन्यतमशब्देन निर्धारितैकविशेषोक्तौ तदितरप्रमेयशब्दप्रवृत्त्ययोगात्। एकं निमित्तमन्तरेण बहुष्वेकशब्दप्रवृत्तौ गोत्वादेरपलापप्रसङ्गात्। व्याप्तिबलेन प्रवृत्ताया व्यापकसामान्यविषयायाः प्रतीतेर्विशेषपर्यवसानाय व्याप्यस्य सामर्थ्यं पक्षधर्मतेति चेत्, मैवम्, विकल्पासहत्वात्। किं प्रथमं सामान्यमात्रालम्बना

तिरिक्तत्वम् , तेन नोक्तदोषः । नच प्रमायामव्याप्ति , तस्या अपि यत्किंचित्प्रमाव्यतिरिक्तत्वादिति शङ्कते—**प्रमान्योन्येति** । तत्र किमेक एव प्रमान्योन्याभाव ? किं वानेकः ? आद्ये प्राह—**अन्योन्येति** । तदापि हि प्रमान्योन्याभावे प्रमेयत्व न वर्तेत, स्वस्मिन्स्ववृत्त्यभावात् , अभिमता च स्ववृत्तिरायुष्मतः, इतरथाऽभावप्रत्यक्षताया विप्रतिपन्न मीमासक प्रति प्रत्यक्षता कथ भवता साधनीया ? सर्वग वा कथ समर्थ्यते ? ततोऽव्याप्तिरिति भावः । अनेकत्वे दूषणमाह—**अनेकत्व इति** । **सर्वग्रहणेति** । तदा हि प्रमेयत्वादिति कोर्थः ? सर्वप्रमान्योन्याभाववत्त्वादिति , न चैतदसर्वज्ञेन शक्यग्रहणमित्यर्थः । किञ्च यदेका प्रमा पक्षीकृत्य प्रमेयत्वेन नित्यानुमेयस्वप्रकाशवादिनं प्रति प्रत्यक्षत्व साध्यते, तदा तस्या न सर्वे प्रमान्योन्याभावा सन्ति, स्वान्योन्याभावाभावादित्यव्याप्ति । अन्यतमपक्षं दूषयति—**न द्वितीय इति** । तदा किमन्यतमशब्देन नियत कश्चिदभिधीयते ? अनियतो वा ? नियतपक्षे तदितरान्योन्याभावाना प्रमेयशब्दार्थत्वाभावात्तद्वता प्रमेयत्वं न स्यात् । नच स एव सर्वत्र प्रवर्ततामिति वाच्यम् । स्वस्मिन्स्वप्रतियोगिनि च वृत्त्यभावादित्यभिसधिराह—**अन्यतमशब्देनेति** । अथानियमेन कदाचित्कश्चित्प्रवृत्तिनिमित्तम्, तत्राह—**एकमिति** । दूषणान्तर चेदम् । न चान्योन्याभाववत्त्वमनुगत जातिरिति युक्तिमत् । उपाधित्वेपि तत्र प्रमेयत्वावृत्तिप्रसङ्ग । स्ववृत्त्यभावात् , उपाध्यन्तरस्वीकारे चाननुगतिरित्यपि द्रष्टव्यम् । लक्षणान्तर शङ्कते—**व्याप्तिबलेनेति** । द्विविध हि हेतोः सामर्थ्यम् , एक व्याप्तिबलेन बोधकत्वम् । यथा हि यद्धूमवत्तदग्निमदिति सामान्येनाग्निमत्त्वप्रतीतिजनकत्वम्, तत्कस्य हेतो ? विशेषाणा व्यभिचारित्वेनानन्त्येन च व्याप्तेरशक्यग्रहत्वात् । अपर तु तामेव प्रतीतिं पर्वताग्निमत्त्वलक्षणविशेषे पर्यवसाययितुमनुगुणम्, निर्विशेष न सामान्य मिति न्यायात् , तच्चेह पक्षधर्मत्व विवक्षितमित्यर्थः । दूषयति—**मैवमिति** । किं पक्षधर्मतया सामान्य-

यदि कहें कि प्रमाऽन्योन्याभाववत्त्व को प्रमेयत्व मानेंगे, अत उसमें प्रमा और प्रमेय की आश्रयता बन जायगी । तो यह भी नहीं कह सकते , क्योंकि अन्योन्याभाव यदि एक ही है, तब अन्योन्याभाव में अन्योन्याभाव के न रहने से प्रमेयत्व हेतु के द्वारा किसी भी प्रमाऽन्योन्याभाव में प्रत्यक्षता का अनुमान न हो सकेगा , क्योंकि अन्योन्याभावरूप प्रमेयत्व वहाँ है ही नहीं । अन्योन्याभाव यदि अनेक माने जायँ, तब सर्व अन्योन्याभावों की आश्रयता को 'प्रमेयत्व' शब्द से कहेंगे ? या किसी एक अन्योन्याभाव की आश्रयता को ? प्रथम पक्ष का तो किसी असर्वज्ञ के लिए ग्रहण सम्भव नहीं । द्वितीय पक्ष में भी जिस एक निर्धारित अन्योऽन्याभाव की आश्रयता को प्रमेयत्व माना जाता है, उससे अतिरिक्त अन्योन्याभाव के आश्रय में 'प्रमेय' शब्द कैसे प्रवृत्त होगा ? सर्वानुगत निमित्त के बिना ही बहुत पदार्थों में एक शब्द की प्रवृत्ति मान लेने पर गोत्वादि जातियों का अपलाप हो जायगा । "व्याप्ति-सामर्थ्य-जन्य जो सामान्यत व्यापक विषयक प्रतीति है, उसे विशेषत व्यापकविषयक बनानेवाले व्याप्यगत सामर्थ्य का नाम पक्षधर्मता है" ( खं० पृ० ७३४ )—यह लक्षण भी

प्रतीतिर्या सा सामर्थ्यात्पश्चाद्विशेषमवगाहत इति ब्रूषे ? किं वा विशेषविषयप्रतीतिरनन्तरं जायत इति ? नाद्य , प्रतीतेर्विरम्यव्यापारापत्तेः । न द्वितीय , प्रमाणान्तरप्रसङ्गात् । किंच पक्षधर्मता चेद्विशेषप्रत्यायिका, केवलव्यतिरेकी तर्हि निरवकाश स्यात् , शब्द. कचिदाश्रितो गुणत्वादित्यादिसामान्यतोदृष्टानुमानेषु हेतोः पक्षधर्मताबलादेवाष्टद्रव्यातिरिक्तद्रव्याश्रितत्वस्यापि सिद्धे । बाधकान्तराधीनमेव तदितराष्टद्रव्याश्रितत्वनिरसनमित्युभयवादिसंप्रतिपन्नतया तदितराश्रितत्वनिरासेऽपि केवलव्यतिरेकिणो निरवकाशत्वात् ।

---

विषयिण्येव प्रतीतिः पश्चाद्विशेषविषयिण्यपि क्रियते ? उत विशेषविषयिण्येव प्रतीतिरुत्पाद्यते ? इति विकल्पाद्ये दूषणमाह—प्रतीतेरिति । शब्दबुद्धिकर्मणा विरम्यव्यापाराभावाज्जातस्य पुनर्जन्माभावाच्चेति भाव' । यदि विशेषविषय बुद्ध्यन्तरमुत्पाद्यते, तर्हि प्रमाणान्तरमेव । तद्व्यापकसामान्यप्रतीत्यनुपपत्ते , प्रतीतिव्यापकसामान्यानुपपत्तेर्वार्थापत्तित्वादित्यनुमितित्वक्षतिरित्याह—न द्वितीय इति । पक्षधर्मताया विशेषप्रत्यायकत्वे बाधकान्तरमाह—किंचेति । यत्र हि सामान्यतोदृष्टेन सामान्यत. साध्यसिद्धौ केवलव्यतिरेकिणा विशेषसमर्पणम् । यथा तावच्छब्दः क्वचिदाश्रितो गुणत्वादिति किंचिदाश्रितत्वे सिद्धे केवलव्यतिरेकिणाष्टद्रव्यातिरिक्तद्रव्याश्रितत्व साध्यते, तन्न स्यात् । सामान्यतोदृष्टहेतो' पक्षधर्मताबलादेव विशेषस्यापि सिद्धेरित्यर्थ. । ननु यद्यप्यष्टद्रव्यव्यतिरिक्तद्रव्याश्रितत्वमिति सामान्यतोऽनुमानेनैव सिद्ध्यति, तथापि नानर्थकत्व केवलव्यतिरेकिणः, आकाशव्यतिरिक्ताष्टद्रव्याश्रितत्वनिरसनार्थत्वात्तस्येति, तत्राह—बाधकान्तरेति । न तत्रापि केवलव्यतिरेकिण. कश्चिदुपयोगः । श्रोत्र विशेषगुणग्राहकमिन्द्रियत्वाच्चक्षुरादिवदिति विशेषगुणत्वे सिद्धे शब्दो न दिक्कालमनोगुण प्रत्यक्षत्वाद्विशेषगुणत्वाच्च रूपादिवत् , नापि स्पर्शवद्विशेषगुण' प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वात् । अयावद्द्रव्यभावित्वादाश्रयादन्यत्रोपलम्भेश्च । नचात्मगुण. , बाह्येन्द्रियवेद्यत्वादित्यादिबाधकान्तरनिबन्धनत्वात्तस्येत्यर्थ. । पक्षधर्मताखण्डनेन महाविद्याजीवनमपि खण्डितं वदितव्यम् । केवलान्वयिनि व्यापके प्रवर्तमानो हेतु पक्षे व्यापकप्रतीत्यपर्यवसानबलादन्वयव्यतिरेकि साध्यविशेष वाद्यभिमत साधयन्हि महाविद्येत्युच्यते । तथा च व्यापकप्रतीत्यपर्यवसानानिरुक्तौ तासामप्यनिरुक्तेः , दग्धसार चेद वादीन्द्रदावानलेन महाविद्याविपिनमिति नास्माभिस्तद्भस्मीभावाय सरभ्यते । तथा

पक्षधर्मत्वसामर्थ्यात्सवज्ञेश्वरसाधकम् । ईश्वरानुमितीना च ज्वरभारातुर वपु ॥

---

युक्त नहीं , क्योंकि क्या 'पहले जो सामान्य व्यापक विषयक प्रतीति होती है, वही पश्चात् उक्त सामर्थ्य से विशेष व्यापक को विषय करती है'—यह कहना चाहते है ? या विशेषविषयक प्रतीति दूसरी ही उत्पन्न होती है ? प्रथम पक्ष उचित नहीं , क्योंकि यह नियम है कि शब्द, बुद्धि और कर्म के ठहर-ठहर कर कई व्यापार नहीं माने जाते, अत वही प्रतीति पहले सामान्य का पश्चात् विशेष का प्रकाश करे—यह सम्भव नहीं । ( द्वितीय पक्ष भी युक्त नहीं , क्योंकि वह द्वितीय ज्ञान तो प्रमाणान्तर हो जायगा ) । दूसरी बात यह भी है कि यदि पक्षधर्मता ही विशेष विषय की समर्पिका मानी जाय, तब तो केवलव्यतिरेकी प्रयोग व्यर्थ हो जायगा , क्योंकि सामान्यतोदृष्ट अनुमान से सामान्य साध्य की सिद्धि करके केवलव्यतिरेकी से विशेष विषय में पर्यवसान किया जाता है, किन्तु "शब्द किसी के आश्रित है, गुण होने से"—इस सामान्यतोदृष्ट अनुमान से ही शब्द में अष्टद्रव्यातिरिक्त द्रव्यरूप विशेष वस्तु की आश्रयता पक्षधर्मता के बल से सिद्ध हो जाती है, केवलव्यतिरेकी की आवश्यकता नहीं रह जाती । ( यदि कहा जाय कि केवलव्यतिरेकी फिर भी व्यर्थ नहीं होगा, किन्तु आकाशातिरिक्त अष्टद्रव्य की आश्रयता के निषेध से उसका उपयोग होगा । तो यह भी नहीं कह सकते , क्योंकि ) आकाशातिरिक्त पृथिवी-आदि की आश्रयता का निषेध बाधकान्तर से ही वादी-प्रतिवादी मानते है, वहाँ भी उसका कोई उपयोग सिद्ध न होगा ।

तदेव न व्याप्तिर्नापि पक्षधर्मता शक्यनिरूपणेति व्याप्तिपक्षधर्मतावल्लिङ्गं तत्परामर्शोऽनुमानमिति लक्षणं न सिद्ध्यतीति सिद्धम्। शाब्दव्युत्पत्तिशून्यस्य स्मृतिकरणिका प्रमितिरनुमितिस्तत्करणमनुमानमित्यपि न लक्षणम्, व्युत्पन्नस्यनुमितौ तत्करणे चाव्याप्तेः। तादृशप्रमितिवृत्तिप्रमात्वावान्तरजात्यधिकरणज्ञानमनुमितिस्तत्करणमनुमानमिति चेत्, न, प्रमात्वजातेः पुरस्तादेव निरस्तत्वात्। एतेन—

"अनुमेयेन संबद्धं प्रसिद्धं च तदन्विते।
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्॥" ( वै० भा० पृ० १०० )

'अनुमानं त्रिरूपाल्लिङ्गतोऽर्थदृक्'। "ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरे बुद्धि" इत्ये-

---

व्याप्तिपक्षधर्मताखण्डनस्य प्रकृतोपयोगं दर्शयितुमुपसंहरति—तदेवमिति। तर्करीत्यानुमानलक्षणान्तरं शङ्कते—शाब्देति। अनुमितिकरणमनुमानम्, का पुनरनुमितिरित्यतस्तल्लक्षणमाह—शाब्दव्युत्पत्तीति। प्रत्यक्षव्यवच्छेदाय स्मृतिकरणिकेत्युक्तम्। शाब्दप्रमितेरपि पदार्थस्मृतिकरणत्वमस्तीति तद्व्यवच्छेदाय शाब्दव्युत्पत्तिशून्यस्येत्युक्तम्। उभयोरप्यव्याप्तिमाह—व्युत्पन्नस्येति। शाब्दव्युत्पत्तिमत इत्यर्थः। व्युत्पन्नगतयोरपि संग्रहार्थम् विशेषं शङ्कते—तादृशेति। पूर्वोक्तप्रमितिवर्तिनी प्रमात्वावान्तरजातिरनुमितित्वं तद्योगिज्ञानमनुमितिः, अस्ति चेद् व्युत्पन्नानुमितावपीत्यर्थः। अत्र च प्रत्यक्षभ्रमसंशयव्यवच्छेदाय प्रमात्वावान्तरजातिग्रहणम्, प्रत्यक्षागमादिव्यवच्छेदाय तादृशप्रमितीत्युक्तम्, प्रमात्वजातेरित्युपलक्षणमनुमितित्वस्यापीति। तर्ह्यनुमितित्वं तावन्न जातिः, अयमग्निमान्पर्वत इति ज्ञाने अयमंशे प्रत्यक्षत्वेन सङ्करप्रसङ्गात्। नाप्युपाधिः, उद्भावितोपाधीनां निरसनादिति वर्णितानुमानलक्षणखण्डनं प्रशस्तपाददिङ्नागशबरस्वामिसमतलक्षणेष्वतिदिशति—एतेनेत्यादिना। अनुमेयेन पक्षे सर्वस्मिन्सम्बद्धं पक्षधर्मतावदित्यर्थः। तदन्विते अनुमेयधर्मवति पदार्थान्तरे सर्वस्मिन्नेकदेशे वा प्रसिद्धम्। सपक्षे सदिति यावत्। चकारस्तु पक्षधर्मत्वेनेदं रूपं समुच्चिनोति। तथा तदभावे साध्याभाववति नास्त्येव। सर्वथा व्यावृत्तं विपक्षाद्व्यावृत्तमित्यर्थः। अत्रापि च पक्षधर्मतयैतत्समुच्चिनोति, न तु सपक्षे सत्त्वेन, केवलव्यतिरेक्यभावापातात्। एवं पूर्वोऽपि, केवलान्वयिलाभात्। एवंविधं यल्लिङ्गं तदनुमापकमिति काश्यपः कणादोऽब्रवीदित्युत्तरश्लोकस्थेनान्वयः।

"विपरीतमतो यत्स्यादेकेन द्वितयेन वा।
विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपोऽब्रवीत्॥" ( वै० भा० पृ० १०० )

इति ह्युत्तरश्लोकः। तथा त्रिरूपात्पक्षधर्मतादिरूपत्रयवतः। समासस्तु बहुव्रीहिः। यदर्थदृगर्थदर्शनं तदनुमा-

---

इस प्रकार न तो व्याप्ति का ही निरूपण हो सका और न पक्षधर्मता का ही। व्याप्ति और पक्षधर्मता के आश्रय को लिंग कहते हैं और उस लिंग के परामर्श का नाम अनुमान है—यह लक्ष सिद्ध नहीं हो सका। शब्द-शक्तिग्रह-शून्य व्यक्ति की स्मृतिरूपकरण से जन्य प्रमा का नाम अनुमिति और उसके करण को अनुमान कहते हैं—यह लक्षण भी युक्त नहीं, क्योंकि यह लक्षण शब्द-शक्तिग्रह वाले पुरुष की अनुमिति और उसके करण में अव्याप्त है। यदि कहा जाय अव्युत्पन्न व्यक्ति की तादृश प्रमा में वृत्ति प्रमात्व-व्याप्य जाति के आश्रय को अनुमिति और उसके करण को अनुमान कहेंगे। तो यह कहना भी संगत नहीं, क्योंकि प्रमात्व जाति का पहले ही निरास किया जा चुका है। इन्हीं दोषों के कारण जो लक्षण प्रशस्तपाद ने किया है—अनुमेय धर्म के साथ पक्ष में जो रहता हो, जो अनुमेयधर्म से अन्वित सपक्ष में प्रसिद्ध हो और जो अनुमेय धर्म-शून्य धर्मी ( विपक्ष ) में न रहता हो, वह लिंग अनुमापक होता है।" जो लक्षण दिङ्नाग ने किया है—"पक्षसत्त्व, सपक्षसत्त्व, विपक्षासत्त्व—इन तीन रूपों से युक्त लिंग के द्वारा जो अर्थ-दर्शन है, उसे अनुमान कहते

वमादीनि वैशेषिकवैभाषिकजैमिनीयलक्षणान्यपि प्रत्युक्तानि, पक्षधर्मत्वसपक्षसत्त्वव्याप्यव्यापकसंबन्धानां पुरैव निरस्तत्वात्। तदेवं नानुमानलक्षणमपि निर्वोढुं शक्यमिति सिद्धम्।

एतेन परार्थानुमानमपि प्रत्युक्तम्, स्वार्थानुमानमुपजीव्य तत्प्रवृत्तेः। तथाहि–प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपपञ्चावयवात्मकं तत्। तत्र तावत्पक्षवचनं प्रतिज्ञा इत्यलक्षणम्।

पूर्वोदितेन न्यायेन पक्षस्यैवानिरूपणे।
कथं तद्वचनं वाच्यं प्रतिज्ञेति विपश्चिता ॥२७॥

किं पक्षप्रतिपादकं वचनमात्रं प्रतिज्ञा? प्रतिपिपादयिषया वा तद्वचनम्? उत हेत्वाकाङ्क्षाजनकम्? किं वा साध्यधर्मविशिष्टधर्मिप्रतिपादकम्? तदेव हेत्वाकाङ्क्षाजनकत्वविशिष्टम्? निगमनान्यत्वविशिष्टं वा? नाद्य, अयं पक्ष इत्यादेरपि वचनस्य प्रतिज्ञात्वप्रसङ्गात्, पक्ष-

नमिति वैभाषिकाणां सूत्रकृतो दिङ्नागस्य सूत्रम्। तथा ज्ञातसम्बन्धस्य ज्ञाताविनाभावस्य पुंस एकदेशदर्शनाद्धूमविशिष्टाशदर्शनादेकदेशान्तरे अग्निविशिष्टांशे बुद्धिरनुमानम्, एकस्यैव खलु पर्वतस्यैकदेशदर्शनेनैकदेशोऽनुमीयते। तथा चाहुर्वार्तिककृतः—

'स एव चोभयात्मायं गम्यो गमक एव च। असिद्धेनैकदेशेन गम्यः सिद्धेन बोधकः'। इति। यद्यपि
'प्रमाता ज्ञातसंबन्धः एकदेशश्यथवोच्यते। कर्मधारयपक्षे वा संबन्धिन्येकदेशता ॥
द्वयं वा ज्ञातसंबन्धमुपलब्धं परस्परम्। तस्यैकदेशशब्दाभ्यामुच्येते समुदायिनौ ॥'

इति वार्तिककारैर्बहुविधं भाष्यं योजितम्। तथापि विस्तरभयादेकैव रीतिरत्र प्रदर्शिता। एतेनेत्यतिदिष्टांश विशदयति—**पक्षेति**। अत्र हि त्रैरूप्यमुखेनान्ये लक्षणे प्रवृत्ते तृतीयमपि व्याप्तिपुरस्कारेण, ज्ञातसंबन्ध इत्यत्र व्याप्तेर्विवक्षितत्वात्। तच्च रूपं पक्षधर्मता व्याप्तिश्चेति द्वयं पुरस्तादेव खण्डितम्। पक्षधर्मत्वखण्डनन्यायेन सपक्षविपक्षयोस्तत्र सदसत्त्वयोश्च खण्डितप्रायत्वादिति भावः।

यद्यप्यनुमानमात्रखण्डनेन परार्थानुमानमपि खण्डितमेव, तथाप्यधिकदूषणविवक्षया अखण्डितवदतिदिशति—**एतेनेति**। स्वार्थानुमानोपजीवनं दर्शयितुं परार्थानुमानं दर्शयति—**तथा हीति**। परोपदेशापेक्षमनुमानं तदित्यर्थः। तत्रोपजीवनदर्शनपूर्वकं दूषणमतिदिशन्प्रतिज्ञां खण्डयति श्लोकेन—**पूर्वेति**। तद्वचनं पक्षवचनम्, प्रतिज्ञेति विपश्चिता कथं वाच्यं न कथमपीत्यर्थः। इदानीमधिकदूषणं दर्शयितुं प्रतिज्ञालक्षणानि विकल्पयति—**किं पक्षेत्यादिना**। निगमनव्यवच्छेदाय द्वितीयतृतीययोर्विशेषणद्वयम्। अयं

है।" और जो लक्षण शबर स्वामी ने किया है—"व्याप्तिरूप सम्बन्ध-दर्शी पुरुष को धूम-विशिष्ट पर्वतरूप एकदेश के दर्शन से वह्नि-विशिष्ट पर्वतरूप एक देशान्तर का जो ज्ञान होता है, उसे ही अनुमान कहते है।"—इस प्रकार के वैशेषिक, वैभाषिक और मीमासको के लक्षण भी खण्डित हो जाते हैं, क्योकि पक्षसत्त्व, सपक्षसत्त्व और व्याप्य-व्यापक सम्बन्ध का पहले ही निरास हो चुका है। इस प्रकार अनुमान का कोई भी लक्षण टिकता नही—यह सिद्ध हो गया।

इसी प्रकार परार्थानुमान भी खण्डित हो जाता है, क्योकि स्वार्थानुमान का अवलम्बन लेकर वह प्रवृत्त होता है—प्रतिज्ञा, हेतु, उदाहरण, उपनय और निगमन—इन पॉच अवयवो का समुदाय ही परार्थानुमान कहलाता है। यहॉ "पक्षवचनम् प्रतिज्ञा"—यह प्रतिज्ञा का लक्षण युक्त नहीं, क्योकि पूर्वोक्त रीति से जब पक्ष का ही निरूपण नहीं हो सकता, तब 'पक्ष-वचन'—यह प्रतिज्ञा का लक्षण कोई विद्वान कैसे कर सकता है? प्रतिज्ञा का क्या लक्षण किया जा सकता है? क्या (१) पक्ष-प्रतिपादक वचनमात्र? या (२) प्रतिपादन की इच्छा से पक्ष-वचन? या (३) हेत्वाकाक्षा का जनक पक्ष-वचन? या (४) साध्यरूप धर्म-विशिष्ट धर्मी का प्रतिपादक वचन? या (५) हेत्वाकाक्षा-जनक, साध्यरूप धर्म-विशिष्ट धर्मी-प्रतिपादक वचन? या (६) निगमनान्य, साध्यरूप धर्म-विशिष्ट धर्मी-प्रतिपादक वचन? प्रथम लक्षण "अयं पक्षः"—आदि वाक्यों एवं पक्ष के लक्षण वाक्य मे

लक्षणवचनस्यापि तत्त्वप्रसक्तेश्च। अत एव न द्वितीय , प्रतिपादनेच्छया पक्षवचनत्वस्य तत्रापि भावात्। न तृतीय , कस्मादय पक्ष इत्यादेरपि तत्त्वप्रसङ्गात्। नापि चतुर्थ , निगमनस्यापि तद्भावप्रसङ्गात्। नापि पञ्चम , कस्मादयं साध्यधर्मवानिति वचनस्यापि तथात्वापातात्। अप्रश्नरूपं तथाभूतवचन विवक्षितमिति चेत, न, आक्षेपवचनस्यापि प्रश्न मन्वान प्रति तद्रूपत्वात, लक्षणवचनेऽपि व्यभिचाराच्च। नापि षष्ठ , परस्पराश्रयप्रसङ्गात्—उपनयानन्तर प्रतिज्ञावचन निगमनम , सहेतुकं प्रतिज्ञावचनमिति वा लक्षणम्, तथा च प्रतिज्ञासिद्धौ निगमनसिद्धिस्तत्सिद्धौ च तदन्यत्वविशेषितप्रतिज्ञासिद्धिरिति कथ न परम्पराश्रय ? तस्मान्न प्रतिज्ञालक्षणनिरुक्तिः। नापि हेतो । तथा हि—कि लिङ्गवचन हेतु ? उत तृतीयापञ्चम्योरन्यतरविभक्त्यन्तम् ? साधनत्वख्यापकं लिङ्गवचनं वा ? नाद्य, अस्ति लिङ्गमय धूम इत्यादेरपि वचनस्य हेतुत्वप्रसङ्गात्। नापि द्वितीय , अन्यतरश-

---

पक्ष इत्यादेरपीति। इदमपि वचन पक्षप्रतिपादकमित्यर्थः। पक्षस्य यल्लक्षणवचनं तस्मिन्नप्यतिव्याप्तिरित्याह—पक्षलक्षणेति। अत एवेत्यस्यैव विवरणम्-प्रतिपादनेति। कस्मादिति। तदपि हेत्वाकाङ्क्षाजनकमित्यर्थः। निगमनस्यापीति। तत्रापि तस्मादयमग्निमानिति साध्यविशिष्टधर्मिप्रतिपादनमस्तीत्यर्थ। ननु यद्यपि कस्मादय साध्यवानिति वचनस्य हेत्वाकाङ्क्षाजनकत्वे सति साध्यविशिष्टधर्मिप्रतिपादकत्वमस्ति, तथापि प्रश्नरूपमिदम्, अप्रश्नरूपमप्यपेक्षित लक्षणेऽतो नास्त्यतिव्याप्तिरिति शङ्कते-अप्रश्नरूप मिति। तथाप्याक्षेपवचनेतिऽतिव्याप्तिरित्याह—न, आक्षेपेति। ननु तस्य कथ हेत्वाकाङ्क्षाजनकत्वमिति, तत्राह—प्रश्नं मन्वान प्रतीति। नचाभ्रान्त प्रतीति विशेषणीयम्। भ्रान्त प्रति प्रयुज्यमानप्रतिज्ञायामव्याप्तेः। लक्षणवचन इति। तत्रापि हेत्वाकाङ्क्षास्ति, लक्षणवचनमात्रादर्थासिद्धेरित्यर्थः। निगमनान्यत्वविशिष्टमिति पक्ष दूषयति—नापि षष्ठ इति। परस्पराश्रयमेवाह—उपनयानन्तरमिति। द्वितीयमप्यवयव खण्डयति-नापि हेतोरिति। लिङ्गवचन हेतुरिति लक्षणवचनस्य लिङ्गमस्तीत्यादिवचनेऽतिव्याप्तिमुक्त्वा द्वितीये दूषणमाह—अन्यतरशब्देनेति। साधनत्वख्यापक लिङ्गवचनमिति भासर्वज्ञाभिमततृतीयलक्षणे साधनशब्देन हेतुर्विवक्ष्यते तृतीयापञ्चम्योरन्यतरान्तार्थत्व वा ? लिङ्गत्व वा ? आद्ये दूषण-

---

अतिव्याप्त है। अत एव द्वितीय भी युक्त नही , क्योकि प्रतिपादन की इच्छा से पक्ष-वाचकत्व उक्त वाक्यो मे भी है। तृतीय लक्षण "कस्मादय पक्षः ?" आदि हेत्वाकाक्षा-जनक वाक्यो में अतिव्याप्त है। चतुर्थ लक्षण, निगमन मे अतिव्याप्त है। पञ्चम लक्षण भी कस्मादयं साध्यवर्मवान् ?–आदि वाक्यो मे अतिव्याप्त है। यदि इस लक्षण का 'अ-प्रश्नरूपत्व' विशेषण लगायें, फिर भी आक्षेप ( पक्ष-निराकरण परक ) वाक्यो मे अतिव्याप्ति होती है , क्योकि उसे प्रश्न वाक्य समझने वाले के लिए वह वाक्य हेत्वाकाक्षा का जनक भी है। पक्ष के लक्षण वाक्य मे भी अतिव्याप्ति है। षष्ठ लक्षण मे अन्योन्याश्रयता दोष है , क्योकि निगमन का लक्षण किया जाता है—'उपनयोत्तर प्रतिज्ञा-वचन' या 'हेतु-घटित प्रतिज्ञा-वचन'। इस प्रकार प्रतिज्ञा सिद्ध होने पर निगमन की सिद्धि और उसकी सिद्धि होने पर निगमनान्यत्व-विशेषित प्रतिज्ञा की सिद्धि होगी। इसलिए प्रतिज्ञा के लक्षण का निर्वचन नही हो सकता। हेतु का लक्षण भी नही हो सकता , क्योकि हेतु क्या है ? (१) लिंग-वचन ? या तृतीया और पञ्चमी–अन्यतर विभक्त्यन्त लिग-वचन ? या (३) साधनत्व-ख्यापक लिंग-वचन ? प्रथम लक्षण "अस्ति लिगम्, अय धूम."—आदि वाक्यो मे अतिव्याप्त है। द्वितीय लक्षण भी युक्त नही , क्योकि अन्यतर शब्द से तृतीया लेने पर पञ्चम्यन्त मे और पञ्चमी लेने पर तृतीयान्त मे लक्षण अव्याप्त होता है। तृतीय लक्षण मे 'साधन' शब्द को हेतु-वाचक मानने पर आत्माश्रय, तृतीया-पञ्चमी—अन्यतर विभक्त्यन्त का वाचक मानने पर उक्ताव्याप्ति दोष और लिग-वाचक मानने

ब्देनैकस्य द्वयोर्वाभिधाने तल्लक्षणस्याव्याप्ते । न तृतीयः; साधनशब्देन हेतुविवक्षाया-मात्माश्रयात्, तृतीयापञ्चम्योरन्यतरान्तार्थाभिधाने पूर्वोक्तदोषापत्तेः, लिङ्गविवक्षाया त्वेत-ल्लिङ्गमस्ति वास्य लिङ्गमित्यादेरपि वचनस्य तथात्वापातात् । नाप्युदाहरणलक्षणम् , दृष्टान्ता-निरुक्तौ तद्वचनमुदाहरणमिति वक्तुमयुक्तत्वात् । तथाहि—किं लौकिकपरीक्षकाणां यत्र बुद्धिसाम्यं स दृष्टान्त ? किं वा निश्चितसाध्यसाधनवान् ? नाद्यः स्वर्गापूर्वदेवतादीना लौकिकासमतानामपि दृष्टान्तत्वात् । नापि द्वितीय , निश्चितसाध्यसाधनाभाववतो वैध-र्म्यदृष्टान्तत्वाभावप्रसङ्गात् । साध्यसाधनशब्दाभ्या तदभावयोरपि संग्रहाददोष इति चेत्, न, निश्चितत्वानिरुक्तेः । तथा हि—किं वादिनो निश्चय. ? उत प्रतिवादिन ? किं वा सर्वे-षाम् ? नाद्य , साध्यधर्मिणोपि दृष्टान्तत्वप्रसङ्गात, वादिनस्तत्र निश्चयसद्भावात् । न द्वितीयः, विकल्पासहत्वात् । किं निश्चयमात्रम् ? किं वानुमितिकालविशेषितो निश्चय. ? आद्ये, कालान्तरे निश्चितसाध्यसाधनवतोऽपि कालान्तरेऽन्यथाभूतस्य दृष्टान्तत्वप्रसङ्गात् । न द्वितीय', कालस्य निश्चितसाध्यसाधनवतोऽपि दृष्टान्तत्वाभावप्रसङ्गात्काले कालविशेषि-

माह—साधनेति । द्वितीये प्राह—तृतीयेति । तृतीये प्राह—लिङ्गेति । तृतीयम' नववद खण्डयति—नाप्युदाहरणलक्षणमिति । तत्र सम्यग्दृष्टान्ताभिधानमुदाहरणमिति भूषणप्रभृतयो व्याचख्युरे, तत्र दृष्टा-न्तानिरुक्तो तद्वचनमपि दुरुक्तीति दृष्टान्तलक्षण विकल्प्य दूषयति—किं लौकिकेत्यादिना । निश्चतेति । निश्चिते साध्यसाधने यस्मिन्स दृष्टान्त इत्यर्थः । ननु साध्यसाधनशब्देन व्याप्यव्यापकावभिप्रेतौ, तथा च भाववदभावावपि व्याप्यव्यापकभूताविति वैधर्म्यदृष्टान्तोपि सगृहीत इति शङ्कते—साध्येति । शक्यमत्र विवक्षितु भावविवक्षाया वैधर्म्योदाहरणाव्याप्ति., अभावविवक्षाया साधर्म्योदाहरणाव्याप्तिरुभयविवक्षायामु-भयाव्याप्तिरिति, तथाप्यतिस्फुटमिदमिति दूषणान्तरमाह—निश्चितत्वेति । वाद्यपेक्षया निश्चितसाध्यसाध-नत्वं न दृष्टान्तः, पक्षस्यापि दृष्टान्तत्वप्रसङ्गात् । 'निश्चितौ हि वाद कुरुत' इति न्यायेन वादिनस्तत्रापि निश्चितसाध्यवत्त्वादित्याह—नाद्य । साध्यधर्मिणोऽपीति । प्रतिवाद्यपेक्षया निश्चितसाध्यवत्त्वमिति द्विती-यपक्षे किं यदाकदाचिन्निश्चितसाध्यवत्त्वम् ? उत कालविशेषकथासमयादो ? इति विकल्प्य प्रथम दूषयति—कालान्तर इति । तथासति कथाप्रवृत्तिसमये विप्रतिपन्नसाध्यस्यापि दृष्टान्तता स्यात् , यदाकदाचित्-त्रापि निश्चयसम्भवादित्यर्थः । द्वितीये तु कालस्य दृष्टान्तत्व न स्यात् । नहि काल कालविशेषे निश्चित-साध्य , कालस्य कालान्तराभावादित्याह—न द्वितीय इति । सर्वनिश्चयपक्षमसम्भवेन दूषयित्वा पक्षान्तर

पर "एतत् लिंगमस्ति" या "अस्य लिंगम्"—आदि वाक्यों में भी अतिव्याप्ति होती है । उदाहरण का लक्षण भी सम्भव नहीं । दृष्टान्त का निर्वचन न हो सकने के कारण "दृष्टान्त-वचनमुदाहरणम्"—यह लक्षण नहीं किया जा सकता , क्योंकि दृष्टान्त का लक्षण क्या है ? "लौकिक और परीक्षक, दोनों को जो सम्मत हो, वह दृष्टान्त है ? अथवा 'निश्चित साध्य और साधन का आश्रय ?' प्रथम लक्षण युक्त नहीं , क्योंकि लौकिक पुरुष से असम्मत स्वर्ग, अपूर्व, देवतादि भी दृष्टान्त बनाये जाते हैं । द्वितीय लक्षण निश्चित साध्य साधन के अभावाधिकरणरूप वैधर्म्य दृष्टान्त में अव्याप्त होता है । साध्य साधन शब्द से उनके अभाव का भी सग्रह कर लेने पर उक्त अव्याप्ति का निरास तो हो जाता है, किन्तु 'निश्चितत्व' का निर्वचन सम्भव नहीं होता, अर्थात् क्या वादी का निश्चय अपेक्षित है ? या प्रतिवादी का ? या सभी का ? प्रथम पक्ष मानने पर पक्ष को भी दृष्टान्त मानना होगा , क्योंकि वादी को वहाँ साध्य का निश्चय है ही । द्वितीय पक्ष में क्या निश्चयमात्र अपेक्षित है ? या अनुमिति-कालीन निश्चय ? प्रथम कल्प मानने पर उस पक्ष को भी दृष्टान्त मानना पड़ेगा, जहाँ प्रतिवादी को कालान्तर में साध्य का निश्चय था किन्तु अनुमिति के समय सन्देह है । द्वितीय कल्प लेने पर काल को

तन्निश्चयस्याभावात्। नापि तृतीयः, सर्वनिर्णयस्यासर्वज्ञेन निश्चेतुमशक्यत्वात्। यो यदा निश्चितसाध्यसाधनवान्स तदा दृष्टान्त इत्ययुक्तम्, यदा तदेति कालाभिधाने काले तदभावात्, यत्तच्छब्देन चानुगतरूपस्य तद्वतो वाभिधाने तयोरेव प्रत्येकमदृष्टान्तत्वापातात्। एवं दृष्टान्तानिरुक्तौ तत्प्रतिपादकं वचनमुदाहरणमित्ययुक्तम्। नाप्युपनयलक्षणम्। तथा हि—किं दृष्टान्तानन्तरं हेतुवचनमुपनयः ? किंवा दृष्टान्ते प्रसिद्धाविनाभावस्य साधनस्य दृष्टान्तोपमानेन पक्षे व्याप्तिख्यापकं वचनम् ? व्याप्तस्य पक्षधर्मताप्रतिपादकं वा ? नाद्यः, दृष्टान्तवचनानन्तरं धूमवत्त्वादित्यपि वचनस्योपनयत्वप्रसङ्गात्। नापि द्वितीयः, दृष्टान्तवैधर्म्येण न तथा चायमधूमवानित्यादिवचनस्यानुपनयत्वप्रसङ्गात्। उपमानशब्देन च साधर्म्यवैधर्म्ययोरुभयोर्विवक्षितत्वेऽन्यतरवचनस्यानुपनयत्वप्रसङ्गः। दृष्टान्ताविनाभावलक्षणयोः पुरस्तान्निरस्तत्वाच्च। नापि तृतीयः, व्याप्तो धूमः पक्षेऽस्तीति वचनस्यापि तथात्वप्रसङ्गात्, व्याप्तिपक्षधर्मतयोश्च पुरैव निरासात्। नापि निगमनलक्षणम्। तत्किमुपनयानन्तरं प्रति-

---

शङ्कते—**यो यदेति**। यो यदेत्यादिलक्षणे यदातदेत्यंशं दूषयित्वा यः स इत्यंशं दूषयति—**यत्तच्छब्देनेति**। अत्र किं यत्तच्छब्देन प्रत्येकं व्यावृत्ताः साध्यसाधनवन्तोऽभिधीयन्ते ? किंवा कौचिदनुगतौ धर्मौ तयोश्च दृष्टान्तत्वमिति विवक्ष्यते ? उत रूपवतः कस्यचित् ? आद्येऽनुगतलक्षणाभावः। द्वितीये रूपिणस्तृतीये रूपयोर्दृष्टान्तत्वं न स्यादित्यर्थः। दृष्टान्तखण्डनस्योदाहरणखण्डनशेषतामाह—**एवमिति**। चतुर्थमवयवं खण्डयति—**नापीति**। **दृष्टान्तोपमानेनेति**। तथा चायमिति महानसाद्युपमानेनेत्यर्थः। **नापि द्वितीय इति**। द्विविधो ह्युपनयः, साधर्म्यवैधर्म्यभेदात्, तथा चायं धूमवानिति साधर्म्योपनयः, न तथायमधूमवानिति वैधर्म्योपनयः। तत्र वैधर्म्योपनये दृष्टान्तोपमानं नास्तीत्यव्याप्तिरित्यर्थः। अथोपमानशब्देन वैधर्म्यमपि विवक्षितम्, तदैकैकाव्याप्तिरित्याह—**उपमानशब्देनेति**। दूषणान्तरमाह—**दृष्टान्तेति**। **व्याप्तो धूम इति**। व्याप्तस्य पक्षधर्मता तदपि वचनं प्रतिपादयेदित्यर्थः। दूषणान्तरमाह—**व्याप्तीति**। पञ्चमावयवं खण्डयति—**नापीत्यादिना**। **अग्निमान्पर्वत इत्येतावदिति**। तस्मादित्येतदंशविधुर-

---

कभी दृष्टान्त नहीं बनाया जा सकेगा, क्योंकि काल में कालान्तर विशेषण होता नहीं। तृतीय ( सर्वेषाम् ) कल्प में तो असर्वज्ञ के लिए सर्व निर्णय का निश्चय करना सम्भव नहीं। "जो जिस समय निश्चित साध्य साधनवाला होता है, वह उस समय दृष्टान्त होता है"—यह लक्षण भी युक्त नहीं, क्योंकि यदा-तदा शब्दों से काल का अभिधान मानने पर काल में अव्याप्ति होती है। एवं लक्षण-घटक यत्-तत् शब्दों से साध्य और साधन—उभय के आश्रय में कोई अनुगत धर्म का अभिधान मानने पर, अनुगत धर्मवाले में और अनुगत धर्मवाले का अभिधान मानने पर अनुगत धर्म में अव्याप्ति होगी। इस प्रकार दृष्टान्त का निर्वचन न होने से "तत्प्रतिपादकं वचनमुदाहरणम्"—यह सिद्ध नहीं हो सकता। उपनय का लक्षण भी नहीं हो सकता—क्या (१) दृष्टान्त के अनन्तर हेतु-वचन का नाम उपनय है ? या (२) दृष्टान्त में जिसकी व्याप्ति का निश्चय हुआ है, ऐसे साधन की दृष्टान्त के उपमान से पक्ष में व्याप्ति का प्रतिपादक वचन ? या (३) व्याप्य की पक्ष-धर्मता का प्रतिपादक वचन ? प्रथम लक्षण दृष्टान्त-प्रयोग के अनन्तर केवल "धूमवत्त्वात्"—इस वचन में अतिव्याप्त है। द्वितीय लक्षण वैधर्म्य दृष्टान्त के अनन्तर भावी वैधर्म्य उपनय में अव्याप्त है। 'उपमान' शब्द से साधर्म्य और वैधर्म्य—उभय की विवक्षा होने पर प्रत्येक में लक्षण अव्याप्त होगा। दृष्टान्त और अविनाभाव का खण्डन पहले ही हो गया है, इसलिए भी यह दृष्टान्तादि-सापेक्ष उपनय-लक्षण नहीं बन सकता। तृतीय लक्षण "व्याप्तो धूमः पक्षेऽस्ति"—आदि वाक्यों में अतिव्याप्त है। तथा व्याप्ति एवं पक्ष-धर्मता का निराकरण भी पहले हो गया है। निगमन का लक्षण भी नहीं हो

ज्ञावचनम् ? उत सहेतुकं प्रतिज्ञावचनम् ? नाद्य', उपनयानन्तरमग्निमान्पर्वत इत्येताव-द्वचनस्यापि निगमनत्वप्रसङ्गात् । नापि द्वितीयः, व्युत्क्रमोदितस्यापि तथात्वापातात्, प्रति-ज्ञाहेत्वोश्च पुरैव निरासात् । किंच—

अनुमानाङ्गयो' सिद्धेर्व्याप्तिपक्षगतत्वयो ।
उदाहृतेरुपनयात् पञ्चावयवता मुधा ॥२८॥

पञ्चावयववाक्यमपि न प्रयोजनवदवश्यमिति पश्याम । साधनानुपयुक्तवचनस्याधि-कनिग्रहत्वात् । तथाहि—वादिप्रतिवादिनो पक्षप्रतिपक्षसमयबन्धस्वीकारसमनन्तरं प्रति-वादिन' किमत्र प्रमाणमिति प्रमाणे एव जिज्ञासा । यावदङ्गविशिष्टं च प्रमाणं तावदेव वक्तव्यम्, अङ्गं च द्वयमेव—व्याप्ति', पक्षधर्मता चेति, तच्चोभयमुदाहरणोपनयाभ्यामेवा-भिहितमिति किमपरमवशिष्यते, यदर्थमुपाददीत ? ननु पक्षधर्मत्व सपक्षसत्त्वं विपक्षाद्व्या-

तयेत्यर्थः । व्युत्क्रमेति । यदा हि उपनयानन्तरमग्निमानय तस्मादिति व्युत्क्रमेणोच्यते, तत्रापि प्रसक्ति । नच तदपि निगमनमेव, विपर्यस्तवचनतया अप्राप्तकालत्वप्रङ्गादित्यर्थः । दूषणान्तरमाह—प्रतिज्ञेति ।

तदेव दण्डकसूत्रस्थावयवाना लक्षणानि खण्डितानि, इदानी यत्तेषा पञ्चत्व तैराद्रियते "स एव परमो न्यायो यद्विप्रतिपन्न प्रति पञ्चावयवं वाक्यम्" इति वदद्भि । सोऽप्ययुक्तः, प्रमाणाभावात्तत्प्रयोजनस्य च द्वाभ्यामेव शक्यसपादनत्वादित्याह—किं चेत्यादिना । व्याप्तिपक्षधर्मत्वयोरनुमानाङ्गयोरुदाहृतेरुदाहरणात्, उपनयाच्च सिद्धे । पञ्चावयवता, त्रित्वस्यापीदमुपलक्षणम् । मुधा वृथेति श्लोकयोजना । एतदेव विवृ-णोति—पञ्चेति । न केवलमनुपयोगः, निग्रहस्थान च स्यात् । हेतूदाहरणाभ्यामधिकमधिकमिति हि सूत्रम् । हेतूदाहरणग्रहणस्य चोपलक्षणत्वादुपयुक्तापुनरुक्तकृतकार्याभिधानमिति सूत्रार्थ' सपद्यते, इतरथा निग्रहान्तरमकरप्रसङ्गात् । तदिह द्वाभ्या सिद्धस्यैवान्येभ्योपि साधनेऽधिक प्रसज्यत इत्याह—अधिक निग्रहत्वादिति । एतदेवाकाङ्क्षाक्रमेणोपयुक्ताङ्गजात विवेचयन्विशदयति—तथाहीत्यादिना । समयबन्धो नाम अपशब्दो वर्जनीयः एतावन्ति च निग्रहस्थानानि उद्भावनीयानीत्यादिरूपः । एतेनेत्यप्यपास्तम् यदाह लीलावतीकारः—अत्यन्त बुभुत्सितसाध्यप्रतिपादनोपयोगित्वादित्यादि, भङ्गीसहस्रेणापि साधना-नुपयुक्तवचनस्याधिकनिग्रहताया दुष्परिहरत्वादिति । यच्च न्यायवाचस्पतावुक्तम्—'अनित्य शब्द बुभुत्समानाय इत्यादि, तदप्येतेनैव परिहृतम् । पक्षप्रतिपक्षपरिग्रहबलेनैव प्रतिज्ञार्थस्य बुभुत्सितस्य लब्धत्वादिति । अधिको-पयोगं निगमनस्य दर्शयति पूर्ववादी—नन्वित्यादिना । पक्षे व्याप्यवर्तन पक्षधर्मत्वम्, सप्रतिपन्नसाध्य-

सकता—उपनय के अनन्तर प्रतिज्ञा-वचन का नाम उपनय है ? या सहेतुक प्रतिज्ञा-वचन का ? प्रथम लक्षण उपनय के अनन्तर प्रयुक्त केवल "अग्निमान् पर्वतः" इस वाक्य में भी अतिव्याप्त है । द्वितीय लक्षण व्युत्क्रम (विपरीत क्रम से) प्रयुक्त "अग्निमानय तस्मात्"—इस वाक्य मे अतिव्याप्त है । इस लक्षण के घटक प्रतिज्ञा और हेतु का निरास पहले ही हो चुका है, इसलिए यह सगत नही ।

दूसरा बहुत बडा दोष नैयायिक-सम्मत न्याय में यह है—जब कि अनुमान के अंगभूत व्याप्ति और पक्षधर्मता की सिद्धि उदाहरण तथा उपनय—दो वाक्यो से ही हो जाती है, तब पञ्चावयव मानना व्यर्थ है । अर्थात् पञ्चावयव का प्रयोग आवश्यक नही । साधन वाक्य से अधिक अनुपयुक्त वचन का प्रयोग करना अधिकनामक निग्रहस्थान माना जाता है । प्रकृत में वादी और प्रतिवादी के अपना-अपना पक्ष-परिग्रह एव आवश्यक नियम-बन्धनो के कर लेने पर प्रतिवादी "किमत्र प्रमाणम्—इस प्रकार प्रमाणविषयक जिज्ञासा करता है । तब वादी को आवश्यक अङ्ग-विशिष्ट प्रमाण कहना चाहिए । अनुमान प्रमाण के दो ही अंग होते हैं—व्याप्ति और पक्षधर्मता । वे दोनो उदाहरण और उपनय से ही सिद्ध हो जाते है, अन्य शेष ही क्या रह जाता है, जिसके लिए अन्य अवयवो का उपादान किया जाय ? यदि शङ्का की जाय कि पक्षधर्मत्व, सपक्षसत्त्व, विपक्षव्यावृत्तत्व, अबाधितत्व और असत्प्रति-

वृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति पञ्चरूपाणि हेतोरवश्य वक्तव्यानि, अन्यथाऽसिद्धविरुद्धानैकान्तिकानध्यवसितकालात्ययापदिष्टप्रकरणसमानामनिरासे हेतोरसाधकत्वप्रसङ्गात्। तत्र यद्यपि व्याप्तिपक्षधर्मताप्रदर्शनेन रूपत्रयोपपादनादसिद्धविरुद्धानैकान्तिकानि परिहृतानि, तथापि बाधितविषयत्वसत्प्रतिपक्षत्वयोरवशिष्टयोरनिरासे कालात्ययापदिष्टप्रकरणसमयोर्हेत्वाभासयो. परिहाराय निगमनमपेक्षणीयमेव, स च तस्मादयमग्निमानेव न पुनस्तस्मादन्यस्माद्वानग्निमानपीति निगमनेनावद्योत्यत इति चेत्, मैवम्, पूर्वमेव हि सिद्धत्वादसंभवित्वाच्च। तथाहि—साधनसद्भावे साध्यसद्भावनियमलक्षणान्वयव्याप्तेः साध्याभावे साधनाभावलक्षणव्यतिरेकव्याप्तेश्चोदाहरणेनैव प्रदर्शितत्वेन कालात्ययापदिष्टस्यानैका-

---

स्थल सपक्षस्तत्र सर्वस्मिन्नेकदेशे वा हेतोर्वृत्ति सपक्षे सत्त्वम्। साध्यात्यन्ताभाववान्विपक्षः ततः सर्वस्माद्व्यावर्तन विवक्षाद्व्यावृत्तिः, तथाऽबाधितविषयत्व विषयशब्देन हेतोर्विषय साध्यमभिधीयते, तस्मिन्मानान्तरेणाबाधिते प्रवर्तमानत्वम्, तथा सन्विद्यमानः प्रतिपक्षो यस्यासौ सत्प्रतिपक्षस्तद्रहितत्वमित्येतानि पञ्चरूपाणि हेतौ वक्तव्यानीत्यर्थ.। किमिय राजाज्ञा ? नेत्याह—अन्यथेति–तथाहि—पक्षधर्मत्वाभावेऽनिश्चितपक्षवृत्तिरूपासिद्धिप्रसक्तिः, सपक्षे सत्त्वाभावे पक्षविपक्षयोरेव वर्तमानत्वरूपविरुद्धत्वप्रसक्तिः, विपक्षाद्व्यावृत्त्यभावे पक्षत्रयवृत्तित्वलक्षणसाधारणानैकान्तिकता स्यात्, एवमितरयोरप्यभावे प्रकरणसमतातीतकालत्वयोः प्रसक्तिरित्यर्थः। ननूदाहरणोपनयाभ्या व्याप्तिपक्षधर्मत्वयोरुपपादनादपि भवत्येवासिद्ध्यादीना निरासः, व्याप्तत्वपक्षधर्मत्वाभ्यामप्रतीतस्यैवासिद्ध्यादिमत्त्वाद्, व्याप्तिनिर्णयेन च विरुद्धत्वादीना निरासादिति तत्राह—तत्र यद्यपीति। तत्रोभयविधोदाहरणेनोभयविधव्याप्तेर्दर्शनाद् द्वितीयतृतीयरूपयोः सिद्धिरुपनयेन च पक्षधर्मतासिद्धिरिति विभागः। अनैकान्तिकग्रहणमनध्यवसितस्याप्युपलक्षणम्। तस्याप्यव्यभिचारविरहरूपत्वात्, सपक्षवृत्तिविपक्षव्यावृत्तिनिर्णयेन च तस्याप्यभावादिति। ननु निगमनवचनादपि कथ तयोर्निरासः? तत्राह—स चेति। तस्मादग्निमानेवेति हि निगमनरूपम्, तत्र सिद्धे सत्यारम्भो निर्णयार्थ इति न्यायेन तस्मादेवाग्निमान्नान्यस्मादिति सिद्धसाधनताव्युदासस्तस्मादयमग्निमानेवेति न पुनरन्यस्मादनग्निमानपीति द्विविधापि सत्प्रतिपक्षो निरस्तः। द्विविधो हि सत्प्रतिपक्षः, स्वात्मना परात्मना चेति। आद्यो यथाऽनित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात्। एव नित्यः शब्द इत्यत्रापि। द्वितीयस्तु नित्य मनो निरवयवद्रव्यत्वादाकाशवत्, अनित्य मनो मूर्तत्वाद्घटवदिति। इदमेव विरुद्धव्यभिचारीत्यभिधीयते। तथाग्निमानेवेत्यनग्निमत्त्वनिषेधाद्बाधोपि विध्वस्त इत्यवश्यमपेक्षणीय निगमनमित्यर्थः। एव समर्थित निगमनोपयोग दूषयति—मैवमिति। अन्यतः सिद्धि विवृणोति—तथाहीत्यादिना। ननु यदि कालात्ययापदिष्टस्या-

---

पक्षितत्व—इन पाँच रूपो का हेतु में होना अनिवार्य है, अन्यथा (उक्त रूपो के अभाव से क्रमशः) असिद्धि, विरोध, अनैकान्तिकत्व, सन्दिग्धत्व, बाधितत्व—इन हेतु दोषो का निराकरण न होने के कारण हेतु में असाधकत्व की आपत्ति होती है। अत व्याप्ति और पक्षधमता के दिखा देने से पक्षधर्मत्व, सपक्षसत्त्व और विपक्षासत्त्व—इन तीन रूपों का उपपादन हो जाने से असिद्धि, विरोध और अनैकान्तिकत्व का परिहार तो हो जाता है, किन्तु शेष बाधितत्व और सत्प्रतिपक्षितत्व का निराकरण न होने के कारण बाध और सत्प्रतिपक्षरूप हेत्वाभासो की प्राप्ति होती है, अत. उनका परिहार करने के लिए निगमन की परम आवश्यकता है। उन दोनों का परिहार "तस्मादेव, अग्निमानेव", इस प्रकार के निगमनगत नियमो से सूचित होता है। तो यह शङ्का युक्त नही, क्योंकि निगमन के बिना ही उक्त दोषो का निराकरण हो जाता है और अबाधितत्व का निरूपण भी सम्भव नही। अर्थात् साधन के सद्भाव में साध्य-सद्भाव का नियम (अन्वयव्याप्ति) और साध्याभाव के होनेपर साधनाभाव क. नियम (व्यतिरेकव्याप्ति) उदाहरण वाक्य से प्रदर्शित हो जाने के कारण अनैकान्तिकान्तर्गत बाध का परिहार हो ही

न्तिकेऽन्तर्भूतस्य कृत एव परिहारः। बाधिते पक्षे वर्तमानो हेतुर्हि कालात्ययापदिष्टः, बाधश्च पक्षनिष्ठसाध्याभावनिश्चय एवेति निश्चितसाध्याभाववद्वृत्तिः कथमनैकान्तिको न स्यात्? ननु साध्याभावनिश्चयो बाधः, स च पृथग्दूषणम् अनैकान्तात्। निश्चिते साध्याभावे तद्वति वर्तमानोऽनैकान्तिकः, ततश्च पुरःस्फूर्तिकबाधेनैवोपहतो हेतुः, कथमनैकान्तिकेन पुनरुपहन्येत? नहि मृतो मार्यत इति चेत्, हन्तैवं बाधवदेव विपक्षग्राहकप्रमाणमपि पृथक् दूषणं स्यात्। प्रमिते विपक्षे तदुपजीविनस्तद्वृत्तेरनैकान्तिकत्वाङ्गीकारात्। व्याप्तिपक्षधर्मताप्रहारेणैव च

नैकान्तिकेऽन्तर्भावः स्यात्तदा तन्निरसने निरासः, स एव तु कथमिति? तत्राह—**बाधित इति**। सद्धेतुनिरासाय बाधितग्रहणम्। ततः किमिति, तत्राह—**बाधश्चेति**। पक्षत्रयवृत्तित्वान्नैकान्तिकः, यथा नित्यः शब्दः प्रमेयत्वादिति। तदिहाग्निरनुष्णः पदार्थत्वादित्यत्र प्रत्यक्षसिद्धोष्णिमतया विपक्षतामापन्नेऽग्नौ पक्षे सपक्षे च घटादिषु वर्तमानः कथमनैकान्तिकानन्तर्भूतः स्यात्? कथतरा तन्निवर्तकोदाहरणेन न निवृत्तिः? कथतमा च न तन्निवर्तकतया निगमनस्य सार्थक्यम्? इति भावः। बाधस्यानैकान्तिकाद्बहिर्भावमाह पूर्ववादी—**नन्विति**। बाधिते पक्षे वर्तमानो हेतुः कालात्ययापदिष्टः, तथाच बाधमुपजीव्य तद्विपक्षत्वनिर्णयानन्तरमनैकान्तिकत्वप्रतीतिः। तथाचोपजीव्यमेव निग्रहस्थानम्, प्रथमोद्भाव्यत्वात्। न चरमोद्भाव्यम्। इतरथा निग्रहस्थानानां सङ्करापत्तेरित्यर्थः। तदेतदतिप्रङ्गेन दूषयति—**हन्तैवमिति**। तत्साध्याभावज्ञापनं नाम विपक्षत्वज्ञापनमेव, तथाच बाधोपि दूषणमिति, किमुक्तं भवति? विपक्षग्राहकं प्रमाणमपि भवति दूषणमिति, तथाच प्रसिद्धानैकान्तिकस्थले विपक्षग्राहकं प्रमाणमेव किमिति निग्रहस्थानं न स्यात्? अस्ति हि तस्यापि केनोपजीव्यत्वमिति भावः। ननु यद्यपि बाधे विपक्षत्वज्ञानमप्यस्ति, तथापि न तेनाकारेण दूषणत्वम्, येनातिप्रसक्तिः स्यात्, किंत्वनुमितिस्थले तदभावबोधकतया, तदेव ह्यनुमानप्रयोजनं यदनुमित्सार्थसिद्धिस्तथा च तामेवापहरतो नाङ्गवैकल्यान्तर्भावेण दूषणत्वमपि तु शिरश्छेदनमिव स्वातन्त्र्येणेति, तत्राह—**व्याप्तिपक्षधर्मतेति**। अय भावः—न तावद्बाधसहस्रेणापि स्वभावव्याप्तिकाविनाभाववति हेतौ जीवति साध्यमपहर्तुं शक्यम्। स्वभावव्याप्त्यपहारे पदार्थत्वादिति हेतोरेवापहारप्रसङ्गात्। तस्मादनेन बाधेनापि निरुपाधिकसम्बन्धाभाव एव बोधनीयः। एतमर्थमभिप्रेत्याहुः—'बाधेन चापाधिरुन्नीयते तथा चेति न कश्चिदन्यद्विशेषः' इति। तथाच व्याप्त्यपहारेण दूषणत्वान्नानैकान्तिकाद्भेदः। न चासिद्धावन्तर्भावः। व्याप्त्यपहारिलिङ्गत्वाभावात्तस्य, व्याप्त्यपहाररूपा ह्यसौ येयमसिद्धिः। उक्तं च लीलावतीकारेण—'सर्वोपसंहारप्रवृत्तबाह्याभ्यन्तरनियमस्यानुमानसहायत्वात्तद्देशप्रवृत्तेर्विपरीतपरिच्छेदस्य बाधस्य व्यभिचारत्वात्स च व्यभिचारो बहिरन्तश्चेति सर्व्यभिचारदेहान्तर्भूतत्वादिति। अथवा—'प्रतिज्ञादोषमेवाहुः केचित् प्रत्यक्षबाधनम्' इति वार्तिककारमतेन प्रतिज्ञादोषतैवास्यास्तु, नानैकान्तिकतेत्याशङ्क्य तथाप्यपक्षधर्मतयास्यासिद्धावेवान्तर्भावः, न पृथग्दूषणतेत्याह—**व्याप्तीति**। एवमनङ्गीकारे चातिप्रसक्तिमाह—**अन्यथेति**।

जाता है। बाधित पक्ष में रहनेवाला हेतु ही तो कालात्ययापदिष्ट ( बाधित ) कहलाता है, पक्ष-निष्ठ साध्याभाव का निश्चय ही बाध माना जाता है। इसलिए निश्चितसाध्याभाव के अधिकरण मे वृत्ति हेतु अनैकान्तिक ही तो हुआ। यदि कहा जाय कि साध्याभाव-निश्चयरूप बाध, अनैकान्तिक से भिन्न ही दोष है। यह जो कहा गया कि बाधित पक्ष मे वृत्ति हेतु अनैकान्तिक कहा जाता है—वहाँ बाध दोष तो प्राथमिक है, उसकी पहले ही प्रवृत्ति हो जायगी, उसीसे जब हेतु, उपहत हो गया, तब वहाँ अनैकान्तिक क्या करेगा? मरे को मारने से क्या लाभ? तो इस प्रकार बाध के ही समान विपक्ष-ग्राहक प्रमाण को भी पृथक् दोष मानना पड़ेगा, क्योंकि अनैकान्तिक तो प्रमाणित विपक्ष मे ही माना जाता है, अतः अनैकान्तिक से पूर्वभावी विपक्ष-ग्राहक प्रमाण भी होता है। व्याप्ति और पक्षधर्मता के नाश के द्वारा ही बाधादि मे भी दूषणता होती है, नही तो सिद्ध-साधनता को भी

सर्वदूषणजातस्य दूषणता, अन्यथा सिद्धसाधनताया अपि पृथग्दूषणत्वप्रसङ्गात्। सा हि सिद्धस्य साध्यत्वाभावेन पक्षत्वप्रच्युत्या दूषणमुपेयते, तथा बाधोऽपीति। अबाधितविषयत्वस्य दुर्निरूपत्वाच्च। पक्षे विषयापहारलक्षणबाधस्य प्रमितौ तदभावस्य वक्तुमशक्यत्वात्, अप्रमितौ चाप्रमितप्रतियोगितया तदभावस्यासिद्धेः। तदुक्तमभियुक्तैः—

'बाधश्च पक्षे विषयापहारो यद्यस्ति नाबाधितताऽत्र सिद्धा।
नोचेदसिद्धप्रतियोगिकत्वादेतस्य सिद्धिर्न कथंचन स्यात्॥' इति।

सत्प्रतिपक्षप्रकरणसमावप्यसंभविनावेव, निरुपाधेस्त्वनुमानद्वयस्यैकत्रासंभवित्वात्, संभवे वा वस्तुनो द्वैरूप्यापत्तेः। प्रकरणसमेऽपि वस्तुनो द्वैरूप्यापत्तिरेव, पक्षविपक्षयोर्व्याप्तिग्राहकप्रमाणसद्भावात्। अन्यतरग्राहकप्रमाणाभावे च तत एव व्याप्तिभङ्गात्। किंच नित्यः शब्दोऽनित्यः शब्दो वा, पक्षयोरन्यतरत्वात्सपक्षवदित्येवंरूपोऽसाविष्यते, तत्र चार्थभेदान्न पक्षप्रतिपक्षयोरेकरूपो हेतुः। नित्यत्वप्रतिज्ञाया नित्यस्यानित्यत्वप्रतिज्ञायामनित्यस्य सपक्षशब्दे-

---

तस्यापि पक्षत्वप्रच्यावकत्वसाम्यादित्याह—**सा हीति**। अतस्तस्य यथातथाविधस्याप्याश्रयासिद्धिलक्षणासिद्धावेवान्तर्भावः, एवमस्याप्यनैकान्तिकान्तर्भावः। इयांस्तु विशेषः—तस्य पक्षमात्रापहारकत्वादसिद्धयन्तर्भावः, अस्य व्याप्त्यपहारकत्वादनैकान्तिकान्तर्भाव इति। असंभवित्वाच्चेत्येतद्विवृणोति—**अबाधितेति**। प्रतियोगिप्रमितावप्रमितौ च नेदं संभवतीत्यर्थः। एतदेव वृद्धवचनेन द्रढयति—**तदुक्तमिति**। असत्प्रतिपक्षत्वस्यापि दुर्निरूपतां दर्शयितुं प्रतियोगिनो दुर्निरूपतामाह—**सत्प्रतिपक्षेति**। स्वात्मना सत्प्रतिपक्षः प्रकरणसम इति विवक्षितस्तत्र हि नित्यत्वानित्यत्वग्राहकमनुमानद्वयं निरुपाधिकम्? सोपाधिकं वा? आद्ये आह—**निरुपाधेरिति**। कथमिति न संभवति? तत्राह—**संभवे वेति**। स्वाभाविकसंबन्धव्यापकापहारे हेतौ स्वभावपरित्यागप्रसङ्गात्। तदेवं मनो नित्यमनित्यं च स्यात्, न चैतत्संभवति, धर्म्येव भिद्येतेत्यर्थः। प्रकरणसमे उभयत्र व्याप्तिरस्ति? न वा? प्रथमे पूर्वोक्तदूषणमतिदिशति—**प्रकरणसमेऽपीति**। उत्तरस्मिन्दूषणमाह—**अन्यतरेति**। एतेन सत्प्रतिपक्षे द्वितीयविकल्पोऽपि निरस्तः। एतेन हेत्वाभासान्तरान्तर्भावोऽपि वेदितव्यः। यच्च प्रकरणसमस्य लक्षणं तैरुच्यते, स्वपरपक्षसिद्धौ त्रिरूपो हेतुरेकः प्रकरणसम इति, तदप्यसिद्धमित्याह—**किंचेति**। अर्थभेदमेव दर्शयति—**नित्यत्वेति**। नित्यः शब्दः पक्षसपक्षयोरन्यतरत्वादित्यत्र हि शब्दनित्यान्यतरत्वादिति हेत्वर्थः। तथाऽनित्यः शब्दः पक्षसपक्षयोरन्यतरत्वादित्यत्र शब्दानित्यान्यतरत्वादित्यर्थः। तथाच नोभयत्रानुगतः कश्चिदेको हेतुरस्तीत्यसिद्धिर्लक्षणस्ये-

---

पृथक् दोष मानना पड़ेगा। सिद्ध-साधनता में पक्षत्व-निवृत्ति के द्वारा ही दूषणता जैसे मानी जाती है, वैसे ही बाध में भी। अबाधितत्व का निरूपण भी सम्भव नहीं, क्योंकि पक्ष में साध्याभावरूप बाध का प्रमा ज्ञान यदि है, तब उसका अभाव वहाँ कैसे रहेगा? और यदि प्रमा ज्ञान नहीं, तब भी अप्रमितप्रतियोगिक अभाव कैसे सिद्ध होगा? वृद्ध आचार्यों का कहना है कि 'विषयापहारस्वरूप बाध यदि पक्ष में है, तब वहाँ अबाधितत्व सिद्ध नहीं हो सकता। यदि पक्ष में बाध नहीं, तब भी अप्रसिद्धप्रतियोगिक हो जाने के कारण इस (अबाधितत्व) की सिद्धि नहीं हो सकती।' सत्प्रतिपक्ष और प्रकरणसम भी असम्भावित ही हैं, क्योंकि उपाधि-रहित दो विरुद्ध अनुमान एकत्र सम्भव नहीं, यदि सम्भव हो जायँ, तब पक्ष में दो विरुद्ध आकार सिद्ध होंगे। प्रकरणसम में भी एक ही वस्तु में द्विरूपतापत्ति दोष है, क्योंकि साध्य तथा साध्याभाव की व्याप्ति के ग्राहक दो प्रमाण विद्यमान हैं। यदि किसी पक्ष का ग्राहक प्रमाण नहीं, तब उसीसे व्याप्ति भङ्ग हो जायगी। दूसरी बात यह भी है कि प्रकरणसम का स्वरूप माना जाता है—"शब्दो नित्यः पक्षसपक्षान्यतरत्वात्, सपक्षवत्, शब्दोऽनित्यः पक्षसपक्षान्यतरत्वात् सपक्षवत्"। यहाँ दोनों पक्षों में एकरूपता भी नहीं, क्योंकि नित्यत्व-

नाभिधानात्। शब्दसाम्यमात्रेण च हेतोरेकरूपत्वे गोशब्दवाच्यत्वाद्वागादीनामपि विषाणित्वानुमा प्रसज्येत। तदेवं व्याप्तिपक्षधर्मताभ्यामेव सकलहेत्वाभासनिरासे नावयवान्तरकृत्यमस्तीति पश्यामः, तेन पञ्चावयववाक्यं परार्थानुमानमिति प्रत्युक्तम्।

उपमानलक्षणमपि दुर्घटम्। तथाहि—नगरानुभूतचरगोपिण्डस्य वनमुपेयुषः साक्षाद्गवयमीक्षमाणस्यानेन सदृशी मदीया गौरिति प्रत्यक्षदृष्टगवयसादृश्यविशिष्टासन्निकृष्टगोपिण्डग्रहणमुपमानमिति मीमांसकाः। नचेदं स्मरणम्, पुरा गोपिण्डमात्रानुभवेऽपि प्रतियोगिगवयाद्यनवगतत्वेन तत्सादृश्यविशिष्टतयाननुभवात्। नाप्यनुमानम्, तद्व्याप्तलिङ्गाभावात्।

---

त्यर्थः। ननु पक्षत्वसपक्षत्वे कौचन धर्मौ, तद्विकरणे च पक्षसपक्षौ, तयोरन्यतरत्वं च हेतुः, अन्यतरत्वं च तदुभयान्योन्याभावानधिकरणत्वम्, तथाच कथमननुगतिः? तत्राह—**शब्दसाम्यमात्रेण चेति**। अय भावः—न तावदेवंविधौ भावाभावयोरन्तर्भूतौ शक्यनिरूपणौ सकलभाववृत्तित्वेन षट्पदार्थबहिर्भावेन भावानन्तर्भावात्, निष्प्रतियोगिकत्वेनानिषेधात्मकत्वाच्चाभावानन्तर्भावात्, निष्प्रतियोगिकमभावमिच्छतो दत्तचरमुत्तरम्। अन्यतरत्वनिरुक्तिश्च खण्डितचरी। नच तद्धर्मसिद्धावपि तस्य हेतुता, अनित्यत्वप्रतिज्ञायामाकाशादावपि तद्भावेनानैकान्त्यात्। एवमितरत्रापीति। तस्मात्तत्तद्वस्तुविशेषवाचका एवैते शब्दा इति मन्तव्यम्। तथाचात्र यद्यनुगतिः स्यात्, परं शब्दमात्रेणैव सा चातिप्रसङ्गिनी। पशुत्वेन शशादीनामपि विषाणित्वानुमानापातात्, गोत्वेन च वागादीनामपीति नैरर्थक्यसमर्थनमुपसंहरति—**तदेवमिति**। अत्र च पक्षखण्डनेन च साध्यखण्डनेन चोपाधिखण्डनेन च व्याप्तिखण्डनेन चासिद्धविरुद्धानैकान्तिकप्रकरणसमाः खण्डिताः। बाधखण्डनेन च कालातीतः खण्डित इति वेदितव्यम्। अवयवखण्डनस्यानुमानखण्डनोपयोगमाह—**तेन पञ्चेति**।

क्रमप्राप्तमुपमानं खण्डयति—**उपमानलक्षणमपीति**। तत्र सदृशदर्शनादसन्निकृष्टार्थज्ञानमुपमानमिति मीमांसकानामुपमानलक्षणम्, तत्सोपपादनमनुवदति—**तथा हीत्यादिना**। उपेयुषः प्राप्तस्येत्यर्थः। **प्रत्यक्षदृष्टेति**। प्रत्यक्षदृष्टो यो गवयस्तत्सादृश्यविशिष्टतयाऽसन्निकृष्टस्य प्रमाणान्तरेणानधिगतस्य नगरगतगोपिण्डस्य ग्रहणमिति योजना। अत्र च गवयगतगोसादृश्यज्ञानस्य प्रतियोगिगोपिण्डज्ञानसापेक्षत्वादुक्तमनुभूतचरगोपिण्डस्येति। युगपत्प्रत्यक्षावगतगोगवयस्थलव्यवच्छेदायासन्निकृष्टपदम्। ननु नगर एव यदा गोपिण्डोऽनुभूयते, तदा गवयसादृश्यविशिष्टतयाऽनुभूत एव सः, गवयसादृश्यस्य गोगतस्येन्द्रियसन्निकृष्टतयाऽनुभवितुं शक्यत्वात्, अतोऽरण्यस्थस्य तत्र स्मृतिरेव परमुदेति, न प्रमितिरिति, न तत्करणं किंचित्प्रमाणमतिरिक्तमस्ति, तत्राह—**न चेदमिति**। यद्यपि सादृश्यमस्ति गोपिण्डे, तथापि प्रतियोगिज्ञानाधीनतया प्रतियोग्यनवगमेन पूर्वं नानुभूयते, तेन न स्मृतिरित्यर्थः। अथानुमानमेवेदं किं न स्यादित्यत्राह—**नाप्यनुमानमिति**। न तावत्सा गौरनेन सदृशी अस्य तत्सदृशत्वादिति शक्यानुमानम्, तस्य व्यधि-

---

प्रतिज्ञा में नित्य पदार्थ सपक्ष है और अनित्यत्व-प्रतिज्ञा में अनित्य पदार्थ। फिर भी शब्दसाम्यमात्र से दोनों हेतु यदि एकरूप माने जाते हैं, तब गो शब्द-वाच्यत्व हेतु से वाणी-आदि में विषाणित्व का अनुमान होने लगेगा। इस प्रकार व्याप्ति और पक्षधर्मता से ही समस्त हेत्वाभासों का निरास हो जाता है, अन्य अवयव व्यर्थ हैं, अतः "पञ्चावयववाक्य परार्थानुमानम्"—यह खण्डित हो गया।

उपमान लक्षण भी दुर्घट है। मीमांसकों का कहना है कि नगर में गो-पिण्ड का अनुभव करनेवाला व्यक्ति वन में साक्षात् गवय को देख कर ऐसा अनुभव करता है कि 'इस (गवय) के सदृश हमारी गौ है'—इस प्रकार सन्निकृष्ट गवय के सादृश्य से युक्त असन्निकृष्ट गोपिण्ड का ग्रहण ही उपमान है। इसे स्मरण नहीं कहा जा सकता, क्योंकि पूर्व केवल गो-पिण्ड का अनुभव होने पर भी गवय अनुभूत न होने से गवयप्रतियोगिक सादृश्य-विशिष्ट गौ का अनुभव नहीं था, अतः उसका स्मरण कैसे होगा? उसे अनुमान भी नहीं मान सकते, क्योंकि व्याप्ति तथा लिंग से निरपेक्ष वह अनुभव

नापि शाब्दम्, अन्तरेणापि शब्दव्यवहारमुपपत्तेः। मैवम्,

भूयोऽवयवसामान्य सादृश्य यच्च गोगतम् ।
विज्ञातमविकल्पेन प्रत्यभिज्ञायते यत ॥२९॥

न तावत्तौतान्तिकमते सादृश्यमस्ति पदार्थान्तरम्, किंतु भूयोवयवसामान्ययोग एव। तदुक्तम्—

"सादृश्यस्य च वस्तुत्व न शक्यमपबाधितुम् ।
भूयोवयवसामान्ययोगो जात्यन्तरस्य तत् ॥" इति (श्लो०वा०उप० १८)

तच्च बुद्ध्यनारूढेऽपि प्रतियोगिनि गोत्ववन्निर्विकल्पकेनाकलितं पुनर्गवयस्य प्रतियोगिनो दर्शने परामृश्यते सविकल्पकेन, तत्किमपरमवशिष्यते यत्रोपमानमिष्येत ? ननु निर्विकल्पकेनापि न सादृश्यमनुभूत सविकल्पकवत्तस्यापि तदाकलने प्रतियोगिसापेक्षत्वादिति चेत्, न; हस्त-

---

करणत्वात्। नापि गोत्वात्सप्रतिपन्नवदित्यनुमानम्, गवान्तरे गवयग्रहणव्यतिरेकेण सादृश्याग्रहणादिति भावः। **अन्तरेणापीति**। न ह्यरण्यगतदशायामस्ति कश्चिदुपदेष्टेत्यर्थः। एव समर्थितमुपमान दूषयति—**मैवमिति**। भूयोवयवाना यानि सामान्यानि खुरत्वकणत्वादीनि, तानि गोगवयावयवेषु वर्तमानानि गोगवययोः सादृश्य द्रव्यादिचतुष्टयतत्त्ववादिना भाट्टस्य तादृशसादृश्यमाश्रयग्रहणेन योग्यतया च पूर्वमेव गवि गृहीतम्, इयांस्तु विशेषः—पूर्वमनेन सदृशीति प्रतियोगिवैशिष्ट्यव्यतिरेकेण निर्विकल्पकमनुभूतम्, इदानीं तु सविकल्पतया प्रत्यभिज्ञा जायते यतोऽतो न पृथक्प्रमाणमिति श्लोकयोजना। श्लोकं विवृणोति—**न तावदित्यादिना**। तौतान्तिकाः कौमारिलाः। प्राभाकरमते हि सादृश्य द्रव्याद्व्यतिरिक्तमिति तौतान्तिकग्रहणम्। **पदार्थान्तरमिति**। सामान्यपदार्थादतिरिक्तमित्यर्थः। अत्रैव वार्तिकसमतिमाह—**तदुक्तमिति**। गवयात्सकाशाज्जात्यन्तरस्य गोपदार्थस्य गवयगतभूयोवयवसामान्यैर्योगः सादृश्यमतस्तस्य वस्तुत्वमपबाधितुमशक्य भाट्टमतानुसारिभिरिति योजना। ततः किमिति तत्राह—**तच्चेति**। तदुक्त तत्त्वकौमुदीकारेण—"नह्यन्यद्गवि सादृश्यमन्यच्च गवये, भूयः सामान्ययोगो जात्यन्तरवर्ती जात्यन्तरे सादृश्यमुच्यते, सामान्ययोगश्चैकः, स चेद्गवये प्रत्यक्षो गव्यपि तथेति नोपमानस्य प्रमेयान्तरमस्ति" इति। ननु यद्यपि भावरूपत्वान्निर्विकल्पकवेद्यत्वमस्ति, तथापि सप्रतियोगिक एव निर्विकल्पकेनापि गृह्यते, प्रतियोगिसापेक्षस्य निर्विकल्पके सविकल्पके वा स्वभावापरित्यागात्, नच प्रतियोगी पूर्वमुपलब्धः, तेन निर्विकल्पकेनाप्यननुभूतमेवेति शङ्कते—**नन्विति**। यथा हस्तवितस्त्यादिरस्मादय दीर्घ इति व्यवहारे प्रतियोगिसापेक्षग्रहणेपि न स्वरूपमात्रग्रहणे प्रतियोगिनमपेक्षते, एवमत्रापीति परिहरति—**न हस्तेति**।

---

होता है। शब्द भी नहीं कह सकते, क्योंकि शब्द-व्यवहार के बिना ही वह अनुभव होता है। यह मीमांसकों का कहना संगत नहीं, क्योंकि भूयोऽवयवसामान्य का ही नाम सादृश्य है, वह गोरूप आश्रय में पूर्व ही गृहीत है। हाँ, पहले उसका निर्विकल्पक ज्ञानमात्र था और अब गवयरूप प्रतियोगी के गृहीत होने से उसी का सविकल्पकरूप प्रत्यभिज्ञा ज्ञान हो रहा है। भाट्ट-मत में सादृश्य पदार्थान्तर नहीं, अपितु भूयोऽवयव-सामान्य-योग ही है, स्वयं भट्टपाद ने कहा है—सादृश्य में वस्तुत्व का बाध नहीं किया जा सकता, गवयरूप विजातीय वस्तु के भूयोऽवयव-सामान्य का योग ही सादृश्य कहा जाता है।' वह सादृश्य अपने गवयरूप प्रतियोगी का भान न होने पर भी गोत्व के समान ही निर्विकल्पक ज्ञान से गृहीत होता है, पश्चात् गवयरूप प्रतियोगी का दर्शन होने पर सविकल्पक का विषय होता है। इस प्रकार सादृश्य तो प्रत्यक्ष से ही गृहीत हो गया, अब और क्या अप्रकाशित प्रमेय रह गया, जिसका प्रकाश करने के लिए उपमान प्रमाण माना जाय। यदि कहा जाय कि जैसे सविकल्पक केवल सादृश्य को विषय नहीं करता, अपितु प्रतियोगि-सापेक्ष सादृश्य को ही। वैसे ही निर्विकल्पक भी शुद्ध सादृश्य को विषय नहीं कर सकता। तो यह कहना सगत

वितस्त्यादिवत्कर्णखुरादिसामान्यस्य स्वरूपावधारणे प्रतियोगिनिरपेक्षत्वात् । अन्यथा भेदस्यापि निर्विकल्पकेनाकलनाभिनिवेशो भवतां प्रलीयेत ।

ये तु प्रतिजानते—सादृश्यं नाम पदार्थान्तरम्, तद्धि न द्रव्यम्, गुणवृत्तित्वात्, अत एव न गुणोऽपि, नापि कर्म, नापि सामान्यादित्रयम्, तत्रापि वृत्ते । नापि शक्ति, शक्तेरप्रत्यक्षत्वात्, प्रत्यक्षत्वाच्च सादृश्यस्य । नापि संख्या, संख्यावृत्तित्वात्, इदमेकत्वमेकत्वान्तरसदृशमिद च द्वित्व द्वित्वान्तरसदृशमिति तत्रापि व्यवहारात् । तच्च सविकल्पकैकवेद्यम्, इदमनेन सदृशमिति प्रतियोगिघटितस्यैव व्यवहारनियमदर्शनादिति, मैवम्, विकल्पासहत्वात् । तत्किं स्पर्शवत्? उत न? आद्ये, द्रव्यत्वम् । द्वितीये, एकवृत्तित्वे गुणकर्मविशेषाणामन्यतमत्वम् । अनेकवृत्तित्वे तु सामान्यसमवाययोरन्यतरत्वापत्तिः । एतेन पदार्थान्त-

अतश्चैतदङ्गीकर्तव्यमितरथा भेदस्यापि सप्रतियोगिकतया निर्विकल्पकवेद्यत्वाभावप्रसङ्गात् । स्वीकृत च तत् "निर्विकल्पकबोधेपि द्व्यात्मकस्यापि वस्तुनः ग्रहणम्" इति वदद्भिरित्यभिसधायाह—**अन्यथा भेदस्यापीति** ।

एव भाट्टपक्षे दूषणमुक्त्वा प्राभाकरमतमुत्थापयति दूषयितुम्—**ये तु प्रतिजानत इत्यादिना** । द्रव्यगुणकर्मसामान्यविशेषसमवायशक्तिसख्याऽपूर्वसादृश्यात्मका हि पदार्थास्तै' परिगणितास्तत्र सादृश्यस्य पदार्थान्तरत्वं परिशेषतः साधयामास शालिकनाथः प्रमाणपारायणे—'विषयोऽस्य वित्तिसिद्धो भिन्नो द्रव्यादिभावेभ्यः' इत्यादिना, तदनुवदति—**तद्धीति** । **गुणवृत्तित्वादिति** । केतकीगन्धसदृश सर्पगन्ध इत्यादावित्यर्थः । **अत एव** गुणवृत्तित्वादेव । अगुणा हि गुणा इत्यर्थः । नापि कर्म गुणवृत्तित्वात्कर्मवृत्तित्वाच्चेति द्रष्टव्यम् । **तत्रापीति** । सामान्यादिष्वपीत्यर्थः । अस्तु तर्हि शक्त्यन्तर्भाव., तत्राह—**नापि शक्तिरिति** । संख्यावृत्तितामेव दर्शयति—**इदमेकत्वमिति** । अपूर्वत्वं तु चोदनालक्षणत्वाभावादतिदूरनिरस्तमिति भावः । ननु भवतु पदार्थान्तर तथापि पूर्वमेव गृहीतत्वात्प्रत्यभिज्ञान्तर्भावे किमुक्तमुत्तरमिति ? तत्राह—**तच्च सविकल्पकेति** । तत्र, परस्परविरोधे हि न प्रकारान्तरस्थितिरिति न्यायेन षट्स्वेव सादृश्यमन्तर्भावयन्पदार्थान्तरता दूषयति—**मैवमित्यादिना** । अत्र तावदाश्रिततया प्रतीतर्न नित्यद्रव्यमिति स्थिते विकल्पयति—**तत्किं स्पर्शवदित्यादिना** । **द्रव्यत्वमिति** । गुणादीना निर्गुणत्वादित्यर्थः । स्पर्शरहितत्वेऽपि किमेकवृत्ति ? किं वानेकवृत्ति ? प्रथमे प्राह—**गुणकर्मेति** । यद्यपि सयोगादेरनेकवृत्तित्वमस्ति, तथाप्येकवृत्तिगुणाद्यन्यतमादावतिव्याप्तेर्न व्यभिचार इति भावः । द्वितीये दूषणमाह—**अनेकेति** । एतच्च

नहीं, क्योंकि जिस प्रकार हस्तादि परिमाण की वस्तु के ( दीर्घत्वादि व्यवहार में प्रतियोगी की अपेक्षा होने पर भी ) स्वरूपावधारण में प्रतियोगी की अपेक्षा नहीं होती, उसी प्रकार कर्णत्व खुरत्वादि सामान्य के स्वरूपावधारण में प्रतियोगी की अपेक्षा नहीं। अन्यथा निर्विकल्पक बोध से भेद का ग्रहण सम्भव न हो सकेगा, जैसा कि आपने माना है—

निर्विकल्पकबोधेऽपि द्व्यात्मकस्यापि वस्तुन ।
ग्रहण लक्षणाख्येयं ज्ञात्रा शुद्धं तु गृह्यते ॥ (श्लो०वा० प्रत्यक्ष० ११८)

प्राभाकर का यह जो मत है कि सादृश्य, पदार्थान्तर है, क्योंकि गुण में वृत्ति होने के कारण वह द्रव्य नहीं हो सकता। अत एव गुण भी नहीं, कर्म भी नहीं एवं न सामान्य, विशेष और समवाय स्वरूप ही है, क्योंकि उनमें भी वृत्ति है। सादृश्य को शक्ति स्वरूप भी नहीं कह सकते, क्योंकि शक्ति अप्रत्यक्ष है और सादृश्य प्रत्यक्ष है। सख्यास्वरूप भी नहीं, क्योंकि "यह एकत्व दूसरे एकत्व के सदृश है", "यह द्वित्व दूसरे द्वित्व के सदृश है"—इस प्रकार सख्या में भी सादृश्य का व्यवहार होता है। वह मत भी ठीक नहीं, क्योंकि वह सादृश्य, स्पर्श-युक्त है ? या नहीं ? यदि है, तब तो द्रव्य के अन्तर्गत होता है। यदि नहीं, तब एक-वृत्ति है ? या अनेक वृत्ति ? एक-वृत्ति होने पर गुण, कर्म या विशेष होगा और अनेक-वृत्ति मानने पर सामान्य तथा समवाय—इनमें कोई एक

रत्वं सख्याया अपि प्रत्याख्येयम्। यत्पुन' षट्पदार्थान्तर्भावे सामान्यादिवृत्तित्व न स्यादिति, तत्र ब्रूम —किमिदं प्रसङ्गमात्रम्? उत विपर्ययपर्यवसायितया प्रमाणमेव? नाद्य', तर्कमात्रस्यासाधकत्वात्। न द्वितीय, सामान्यमेव सादृश्यमिति वादिनं प्रति सामान्यवृत्तित्वस्यासिद्धे। ननु गवयत्वमिव गोत्वमित्यनुभवादेव सादृश्यस्य सामान्यवृत्तिता सिद्धेति चेत्, किमनुभवादेव सिद्धिः? उताबाधितात्? नाद्य., गगननीलिमादेरपि सिद्धिप्रसङ्गात्। न द्वितीय', प्रतिवादिनं प्रत्यबाधासिद्धे। किच यत्र सौवर्णकर्णाभरणया सौवर्णकर्णाभरणा सदृशीत्युपमीयते, तत्र द्रव्यं सादृश्यम्, नच तद्गुणवृत्ति। तथा रस पनसशर्करयो. सादृश्यम्, तस्य च द्रव्यवृत्तित्वेन गुणवृत्तित्वादित्यसिद्धो हेतु'। यत्र च हंसगमनेन हंसगमनमुपमीयते तत्र कर्मैव सादृश्यमिति तत्रापि हेतोरसिद्धिः। किच दृश्ये प्रतियोगिनि

---

नित्यत्वे, अनित्यत्वे तु द्वित्वादिगुणविशेषत्वापत्तिरपि द्रष्टव्या। नन्वरगर्शवत्त्वे सत्येकवृत्तित्वमनेकवृत्तित्व च न गुणादिपञ्चकव्याप्तम्, सख्याया व्यभिचारादित्यत्राह—**एतेनेति**। एवं षट्स्वेवान्तर्भावमुक्त्वा यत्तेनानन्तर्भावे कारणमुक्त तद्दूषयति—**यत्पुनरिति**। **न द्वितीय इति**। विप्रतिपन्न सामान्याद्यनन्तर्भूत सामान्यादिवृत्तित्वादित हि विपर्ययपर्यवसायि प्रमाणं, तत्र चासिद्धो हेतुः। सामान्यवादिनानङ्गीकारादित्यर्थ.। वृत्तिमनुभवेन साधयति पूर्ववादी—**ननु गवयत्वमिवेति**। किं प्रतीतिमात्र वृत्तिसाधकम्? अबाधितप्रतीतिर्वा? नाद्यः। अतिप्रसङ्गादिति दूषयित्वा द्वितीय दूषयति—**प्रतिवादिनं प्रतीति**। एव सामान्याद्यनन्तर्भावे हेतुमुद्धृत्य द्रव्यादित्रयानन्तर्भावे हेतु गुणवृत्तित्वमप्यसिद्धयति—**किंचेत्यादिना**। **हंसगमनेति**। 'हसीव सा गच्छति चारुहासिनी'इत्यादौ हसगमनेन हेतुना हसगमना हसीत्युपमीयते यत्रेत्यर्थः। हसगमनेन पुरुषेणेत्यन्ये। द्रव्यगुणकर्मणामेव तत्र तत्र सादृश्यव्यवहारहेतुत्वात्तेषा च द्रव्यवृत्तित्वेन गुणवृत्तित्वासिद्धिरिति खण्डलकार्थः। किंचास्तित्वव्यवहारहेतौ प्राभाकराणामस्तित्वेऽप्यय प्रसङ्ग. समानः, तस्य भवदभिमतसर्वपदार्थवृत्तित्वात्। अथेतरान्तर्भूतस्यैव तस्य तथा व्यवहारहेतुत्वम्, तत्सादृश्येपि समानमित्यपि द्रष्टव्यम्। इदानीमभावप्रतिबन्द्या वस्तुत्वमेव सादृश्यस्य नास्त्यतोपि पदार्थान्तरत्व दूरापेतमित्याह—**किंचेति**।

---

का स्वरूप मानना पडेगा। इससे सख्या मे भी पदार्थान्तरत्व का खण्डन हो जाता है। यह जो कहा था कि द्रव्यादि छह पदार्थो के अन्तर्गत मानने पर सादृश्य सामान्यादि में वृत्ति न रह सकेगा। वहाँ प्रश्न उठता है कि वह कहना केवल प्रसङ्गरूप तर्कमात्र है? या विपर्य-पर्यवसायी ( सादृश्य यदि छह पदार्थो के अन्तर्गत होगा, तब सामान्यादि मे वृत्ति नही हो सकेगा। किन्तु सामान्यादि मे वृत्ति होता है, अत. द्रव्यादि के अन्तर्गत नही—इस प्रकार द्रव्याद्यन्तर्भाव-विपर्यय-साधक ) अनुमान प्रमाण? प्रथम पक्ष युक्त नही, क्योकि प्रमाण-विरहित केवल तर्क साधक नही माना जाता। द्वितीय पक्ष भी उचित नहीं, क्योकि सादृश्य को सामान्यस्वरूप माननेवाले वादी के प्रति ( सादृश्य द्रव्यादि छह के अन्तर्गत नही, सामान्यादि में वृत्ति होने से—इस अनुमान का ) सामान्यादि वृत्तित्व हेतु ही असिद्ध है। यदि कहें कि "गवयत्व के सदृश गोत्व है'—इस अनुभव के आधार पर ही सादृश्य मे सामान्य-वृत्तिता सिद्ध होती है। तो यह अनुभव मात्र से सिद्ध करना चाहते है? या अबाधित अनुभव से? प्रथम पक्ष मानने पर गगन मे नीलिमा की भी सिद्धि माननी पड़ेगी।

द्वितीय पक्ष भी युक्त नहीं, क्योकि प्रतिवादी के प्रति उक्त अनुभव में अबाधितत्व ही सिद्ध नही। दूसरी बात यह भी है कि जहाँ "सौवर्णकर्णाभरणा सदृशी"—इस प्रकार स्वर्णमय कर्णाभरण-भूषिता युवती से किसी की उपमा दी जाय, वहाँ आभरणात्मक द्रव्य ही सादृश्य पदार्थ होता है, वह गुण मे वृति नही होता। उसी प्रकार 'शक्कर के सदृश ( पके कटहल का ) कोआ'—यहाँ रस-स्वरूप सादृश्य है, वह द्रव्य-वृत्ति होने पर भी गुण-वृत्ति नही। जहाँ हंस के समान गमन वाले पुरुष से वैसे ही व्यक्ति की उपमा की जाय, वहाँ गमनरूप क्रिया ही सादृश्य का स्वरूप है, वह

धर्मिस्वरूपग्रहणमेवाभावव्यवहारनिदानमिच्छन्कि नेच्छसि अधिगतविषयस्य गोस्वरूपावधारणमेव सादृश्यव्यवहारकारणमिति ? भवतु वा यत्किंचित्सादृश्यम्, तथापि गोपिण्डस्य तद्विशिष्टताप्रतीतिरनुमानमेव किं न स्यात् ? सा गौर्गवयसदृशी गोत्वात् गवयेन सहोपलभ्यमानगवान्तरवदिति प्रयोगोपपत्तेः । गवयोपलम्भसहकालमप्रमीयमाणगवान्तरस्य गवयसदृशी गौरित्यवगतिरूपमिति चेत्, मैवम्, अर्थापत्तेरेव तत्रापि प्रामाण्योपपत्तेः । गवयनिष्ठगोसादृश्यस्य परिदृश्यमानस्य गोगवयसादृश्यव्यतिरेकेणानुपपत्तेः । न च गवयनिष्ठ गोसादृश्यमप्रत्यक्षमप्रत्यक्षत्वात्प्रतियोगिनो गोरिति वाच्यम् । स्मर्यमाणेऽपि प्रतियोगिनि धर्मिग्रहणादेव सादृश्यस्य भेदवत्प्रत्यक्षत्वोपपत्तेः । सादृश्यज्ञानकरणमुपमानमित्यभ्युपगच्छता च सादृश्यप्रतीतेरवश्याभ्युपेयत्वात् । तथाचार्थापत्त्यैव तत्प्रतीत्युपपत्तेः कृतमुपमानेन, अन्यथा

---

विषयो गवय । इदानीं सादृश्यमुपेक्ष्य तत्प्रमितिकरणस्य प्रमाणान्तरत्वं दूषयति—**भवतु वेति** । इदं च पूर्वोक्तप्रत्यभिज्ञानान्तर्भावमङ्गीकृत्याधिकमभिधीयते, न त्वव्याप्तिमभिप्रेत्य । ननु नास्त्यत्र लिङ्गमित्युक्तम्, तत्राह—**सा गौरिति** । गवयसन्निधावुपलब्धगोपिण्डे प्रत्यक्षेण शक्या गोत्वस्य गवयसादृश्येन व्याप्तिर्ग्रहीतुमिति भाव॰ । तथाप्यनुपलब्धगोपिण्ड प्रत्युपमानोपयोग शङ्कते—**गवयोपलम्भेति** । अप्रमीयमाणगवान्तरस्य । पुरुषस्येति शेषः । अर्थापत्तिमेव सविकल्पिका दर्शयति—**गवयनिष्ठेति** । स्यादेतत्, यदि गवयनिष्ठगोसादृश्य प्रत्यक्षेण गृहीते ततस्तदन्यथानुपपत्त्या शक्य गोगत गवयसादृश्य ज्ञातुम्, नत्वेतदस्ति, तस्यापि प्रतियोगिगोसापेक्षग्रहणतया तद्व्यतिरेकेण ग्रहणमेवाशक्यमिति तत्राह—**न च गवयनिष्ठमिति** । माभूत्प्रतियोगिनस्तदानीं ग्रहणम्, गृहगृहीतगोः स्मरणसहायमिन्द्रियमेव सप्रयुक्तसादृश्यप्रत्यक्षकरणे समर्थम्, यथा प्रत्यभिज्ञाया यथा वाऽसन्निहितप्रतियोगिके सन्निहितभेद इत्यर्थः । यदि च तत्र धर्मिणो गृहीतत्वात्तद्गतभेदस्य सप्रयुक्तत्वाच्च युज्यते ग्रहणमिति मति , तदत्रापि समानमिति भाव । अथ सादृश्यमेव प्रत्यक्षायोग्यमिति ब्रूयात्त प्रत्याह—**सादृश्यज्ञानेति** । एवमनुपपन्नदर्शन समर्थयित्वार्थापत्तिमुपसहरति—**तथा चेति** । अवश्य चैवमङ्गीकर्तव्यम्, इतरथाऽतिप्रसङ्गादित्याह—**अन्यथेत्या-**

---

भी जात्यादि में वृत्ति नहीं, अत. स्वरूपासिद्धि है । जब कि प्रतियोगी के योग्य होने पर अनुयोगिस्वरूप का ग्रहणमात्र अभाव-व्यवहार का कारण मानते है, तब गवयरूप विषय (प्रतियोगी) का जिसे ज्ञान है, उसके लिए गोस्वरूपमात्र का ग्रहण सादृश्य-व्यवहार का कारण क्यो नही मानते ? (अत गवय ग्रहण से पूर्व ही गौ मे सादृश्य का ग्रहण हो जाता है) ।

अस्तु, सादृश्य कुछ भी रहे , तथापि सादृश्य-विशिष्ट गो-पिण्ड की प्रतीति को अनुमिति मान लेने मे क्या क्षति है ? "वह गौ, गवय के सदृश है, गौ होने के कारण, जैसे—गवय-सन्निकृष्ट गौ"—यह अनुमान प्रयोग बन जाता है । यदि शङ्का हो कि जिस व्यक्ति ने गवय के पास गौ देखी है, वह व्यक्ति उस गो को दृष्टान्त बनाकर दूसरी गौ मे सादृश्य की अनुमिति कर लेगा, किन्तु जिसने गवय के साथ गौ का प्रत्यक्ष कभी नही किया, उसके लिए तो गोगत सादृश्य-ज्ञान उपमिति ही मानना होगा । तो यह शङ्का उचित नहीं, क्योकि वहाँ अनुमिति न होने पर भी अर्थापत्ति से उस सादृश्य का ज्ञान हो जायगा, क्यो कि गवय-निष्ठ गौ का प्रत्यक्ष भूत सादृश्य, गो-निष्ठ गवय-सादृश्य के बिना अनुपपन्न है । यदि कहा जाय कि गोरूप प्रतियोगी की अप्रत्यक्षता से गवय निष्ठ गोसादृश्य भी प्रत्यक्ष नहीं । तो यह कहना उचित नही, क्योंकि प्रतियोगी का स्मरण होने पर भी अनुयोगी के ग्रहणमात्र से भेद के समान ही सादृश्य का प्रत्यक्ष क्यों न होगा ? सादृश्य-ज्ञान-करणक को उपमान माननेवाले के लिए सादृश्य-प्रतीति अवश्य माननी होगी । इस प्रकार अर्थापत्ति से ही सादृश्य की प्रतीति बन जाती है, उपमान मानने की आवश्यकता नहीं । नही तो सादृश्य-प्रतीति के

वैधर्म्यप्रतीतेरपि प्रमाणान्तरत्वप्रसङ्ग । तथाहि—यत्र परोक्षादपरोक्षे भवति वैधर्म्यावगतिस्तस्मादयमन्यथेति, भवति एतस्मादन्यथा स इत्यपि मति, सापि प्रमाणान्तरं स्यात्। सार्थापत्तिरिति चेत्, प्रकृतेऽपि समानम्। यथोदितमुदयनेन—

"साधर्म्यमिव वैधर्म्यं मानमेव प्रसज्यते।
अर्थापत्तिरसौ व्यक्तमिति चेत्प्रकृते न किम्॥ इति (न्या० कु० ३।९)

तदास्तां मीमांसकाभिमतोपमानापाकरणप्रपञ्च, नैयायिकोदीरितमुपमानमपि दुर्निरूपम्। अनवगतसंगतिसंज्ञासमभिव्याहृतवाक्यार्थप्रमितिरुपमितिस्तत्करणमुपमानमिति ते वर्णयन्ति। तथाहि—नागरिकस्य यादृशो गौस्तादृशो गवय इति श्रुतातिदेशवचस कानने वस्तुतो गोसदृश गवयमालोकयतो नूनमयमसौ गवयपदाभिधेयो य पुरानेन गोसदृशो

---

दिना। अतिप्रसक्तिमेव विवृणोति—तथाहीति। यदाहि परोक्षात्क्रमेलकादेः सकाशादपरोक्षहस्त्यादावनतिदीर्घाऽवक्रकन्धुरग्रीवामसपृष्ठस्थविपुलशरीरस्थूलपादादि वैधर्म्यम् ज्ञान भवति, तदा सन्निहितहस्त्यादे सकाशादसन्निहितकरभादावपि वक्रातिदीर्घकुशग्रीवाविकटपृष्ठकृशशरीरदीर्घपादादिवैधर्म्यप्रतीतिर्भवति, तत्करणमप्यपरं प्रमाण स्यादित्यर्थः। अत्र च शङ्क्ष्यमाणार्थापत्त्युपयोगितयाऽपरोक्ष इत्युक्तम्। एव प्रतिबन्दी गृहीत्वा परिहारसाम्य वक्तुम् तन्मुखेन तमुद्भावयति—सेति। उदयनेन कुसुमाञ्जलावुक्त चैतदित्याह—यथोदितमिति। अत्र साधर्म्यवैधर्म्यशब्दाभ्या तज्ज्ञापकप्रमाणे विवक्ष्येते।

एव मीमांसकाभिमतमुपमान दूषयित्वा नैयायिकाभिमतमुपमान फलविवेचनपूर्वकं दर्शयति दूषयितुम्—अनवगतेति। अनवगता सगति स्वार्थेन वाच्यवाचकभावो यस्या गवय इति सज्ञाया: सा तथोक्ता तया समभिव्याहृत सहोच्चारित यद्वाक्य यथा गौस्तथा गवय इति तस्य योऽर्थस्तत्प्रतिपाद्यो गवयशब्दार्थस्तत्प्रमितिस्तस्य तच्छब्दवाच्यताप्रमितिरुपमिति। यच्च तादृश प्रमितिकरण तत्सज्ञास्मरणसहाय गोसादृश्यलक्षणार्थस्य संज्ञिन्यनुसंधानात्मक तदुपमानमित्यर्थ। अत्र च शाब्दप्रमितव्यवच्छेदार्थमनवगतेत्यादिविशेषणम्। प्रत्यक्षानुमितिव्यावृत्त्यै वाक्यार्थग्रहणम्। इममेवार्थम् विवृणोति—तथाहीत्यादिना। श्रुतातिदेशवचस इति। आरण्यकसकाशाद्यथा गौस्तथा गवय इति वाक्य श्रुतवान् इत्यर्थः। अत्र चालोकयत इत्यन्तेन करणशरीरमुक्तम्। शेषेण च फलकथनम्। ननु यथा गोस्तथा गवय

---

समान वैधर्म्य-प्रतीति को भी एक भिन्न प्रमा और उसके करण को पृथक् प्रमाण मानना होगा। अर्थात् जहाँ "तस्मादयमन्यथा"–इस प्रकार परोक्ष वस्तु के वैधर्म्य का ज्ञान प्रत्यक्ष वस्तु मे होता है, वहाँ "एतस्मादन्यथा स"—यह ज्ञान होता है। उसे भी प्रमान्तर मानना होगा। यह यदि अर्थापत्ति है, तब प्रकृत मे भी वही होगी, जैसा कि उदयनाचार्यने कहा है—"इस प्रकार साधर्म्य (सादृश्य) ग्राहक प्रमाण के समान ही वैधर्म्य ग्राहक प्रमाण भी पृथक् मानना होगा, यदि यह अर्थापत्ति है, तो प्रकृत में वह क्यों न होगी ?"

मीमांसक-सम्मत उपमान के समान ही नैयायिक-सम्मत उपमान का भी निरूपण सम्भव नही। 'गृहीतशक्ति गवयपद से घटित वाक्य के अर्थज्ञान को उपमिति और उसके कारण को वे उपमान मानते है। उनका कहना है—"यादृशी गौ. तादृशो गवय"—इस अतिदेशवाक्य को सुनकर कोई नागरिक वन मे पहुँच कर वस्तुत गोसदृश गवय को देखता है, देखते ही यह बोध होता है कि यही गवय पद का वाच्य है, जिसके लिए पहले मुझे उस वृद्ध ने कहा था कि 'गौ के समान गवय होता है'। इस प्रकार जो प्रमाबोध उत्पन्न होता है वह शब्द-जन्य नही, यदि माने तो गवय देखने से पूर्व भी वह होना चाहिए। यद्यपि उस आप्त-वाक्य से सामान्यत अर्थ-बोध हो जाता है, तथापि "गवय पदाभिधेय यह व्यक्ति है"—इस प्रकार विशेष बोध नही होता। अन्यथा "जो-जो

गवय इत्युपदिष्ट इति प्रमितिरुपजायते। नचेदमागमजा, अपरिदृष्टगवयस्यापि प्रसङ्गात्। भवत्येवाप्तवचनात्सामान्यतस्तन्निश्चय इति चेत्, मैवम्, सामान्यतः प्रतीतावपि व्यक्तिविशेषस्य तत्पदाभिधेयत्वाप्रतीतेः। अन्यथा यो यो धूमवानसावसावग्निमानित्याप्तवचनाधिगताविनाभावस्य पर्वते वह्निप्रतीतिरागमजैव स्यात्। अस्तु तर्हि प्रत्यक्षेणैव गवयशब्दवाच्यत्वाधिगतिरिति चेत् मैवम्, अश्रुतातिदेशवाक्यस्यापि प्रसङ्गात्। उपदेशसंस्कारसध्रीचीनं प्रत्यक्षमेव रत्नतत्त्वस्येव तदवगतिहेतुरिति चेत् न, वाच्यत्वस्य प्रत्यक्षानवगाह्यत्वात्। नहि प्रत्यक्षेऽपि घटे घटशब्दवाच्यता प्रत्यक्षा, येन प्रकृतेऽपि तथा स्यात्। नाप्यनुमानतस्तदधिगतिः, गोसादृश्यस्य गव्यपि सम्भवेन विपक्षवृत्तित्वात्। नार्थापत्तिः, अनुमानाव्यतिरेकादिति चेत्, मैवम्, अनुमानतस्तथात्वप्रतीत्युपपत्तेः। तथाहि—

इत्यारण्यकवचनादिय प्रमितिरुपपद्यतेऽतो न प्रमाणान्तरमिति, तत्राह—**न चेयमिति**। नेयं वचनजनिता। तथा सति नगरगतस्यैव एवोत्पत्तिप्रसङ्गादित्यर्थः। ननु नायमनिष्टप्रसङ्गः, यो गोसदृशोऽसौ गवयशब्दार्थ इति सामान्येन वाक्यार्थप्रत्ययस्य तथाप्युपपद्यमानत्वादिति शङ्कते—**भवत्येवेति**। न सामान्यप्रतीतिर्व्यवहारोपयोगिनी, विशेषनिष्ठत्वात्तस्य, अतो व्यक्तिविशेषस्य शब्दवाच्यत्वमेव बुभुत्सितम्, तत्प्रतीतिश्च न वाक्यजन्याऽतः करणान्तरनिबन्धनैवेति परिहरति—**मैवमिति**। ननु यद्यपि तदा नोपपद्यते, तथापि श्रुतवाक्यसामर्थ्यादेव पश्चादुत्पद्यमानत्वादागमजन्यैवेति, तत्राह—**अन्यथेति**। अथवा सामान्यनिश्चायकादेव विशेषनिश्चयसम्भवेनोपमानवैयर्थ्याशङ्कायामिदमुत्तरम्। स्यादेतत्सम्प्रयुक्तगवयनिष्ठं गवयशब्दवाच्यत्वं तद्गतसामान्यादिवत्प्रत्यक्षेण किमिति न गृह्यते ? इति शङ्कित्वा परिहरति—**मैवमश्रुतेति**। अतिदेशवाक्योपदेशसहकृतप्रत्यक्षजन्यत्वं शङ्कते—**उपदेशेति**। विषम उपन्यासः। रत्नतत्त्वं ह्यवयवविशेषो वा रूपविशेषो वा सामान्यविशेषो वा तच्चिह्नं प्रत्यक्षयोग्यम्, इह तु न वाच्यवाचकभावस्य प्रत्यक्षता, घटादावदर्शनात्, वृद्धव्यवहारलक्षणानुमानैकावमेयत्वात्तस्येत्यभिसन्धाय परिहरति—**न वाच्यत्वस्येति**। अस्तु तर्हि घटादिगतवाच्यत्ववदत्राप्यनुमानगम्यत्वमिति, तत्राह—**नाप्यनुमानेति**। अयमभिसन्धिः—न तावत्'माणवक समिधमाहर' इति वाक्यश्रवणसमनन्तरमेव मध्यमवृद्धमाणवकसमिदाहरणप्रवृत्तिवदेतच्छ्रवणसमनन्तरमस्ति काचित्प्रवृत्तिर्येन मार्गेण गवादिशब्दानामिवानुमानादस्यापि गवये सङ्गतिर्गृह्येत। तत्कस्य हेतोः ? अप्रवर्तकत्वात्, तदिहैतावदवशिष्यते, विमतः पुरोवर्तिपिण्डो गवयशब्दवाच्यः गोसदृशत्वान्न यदेवं न तदेवं यथा करभादीति व्यतिरेक्यनुमानादधिगतिरिति। तच्च न सम्भवति, गवान्तरेऽपि गवयशब्दावाच्ये गोसदृशत्वहेतोर्वर्तनेन विरुद्धत्वादिति। **अनुमानाव्यतिरेकादिति**। तन्निरसनेन निरासादिति भावः।

एवं समर्थितं नैयायिकोपमानलक्षणं दूषयति—**मैवम्, अनुमानत इति**। अनुमानमेव श्लोकेन सङ्ग्र-

धूमवान् है, वह-वह अग्निमान् है"—इस वाक्य की सहायता से उत्पन्न पर्वतीय वह्नि की प्रतीति भी शब्द-जन्य ही हो जायगी। गवय शब्द-वाच्यत्व की प्रतीति यदि प्रत्यक्ष मानी जाय, तब "गोसदृशो गवयः"—यह वाक्य जिसने नहीं सुना, उसे भी वह प्रतीति हो जानी चाहिए। यदि कहा जाय कि अतिदेश वाक्य-प्रयुक्त संस्कार-सहित प्रत्यक्ष से ग्राह्य रत्न तत्त्व के समान वाच्यत्व को मानेंगे। तो यह कहना भी उचित नहीं, क्योंकि वाच्यत्व में प्रत्यक्ष की योग्यता नहीं होती। जैसे घट के प्रत्यक्ष होने पर भी घटगत वाच्यता का प्रत्यक्ष नहीं होता, वैसे ही प्रकृत में भी। अनुमान से भी वह वाच्यत्व-ज्ञान नहीं हो सकता, क्योंकि गौ का सादृश्य गौ में भी सम्भव है, अतः ('गवयः गवयपदवाच्यः गोसदृशत्वात्'–इस अनुमान का हेतु गोसदृशत्व) गोरूप विपक्ष में रह जाने से व्यभिचारी है। अर्थापत्ति से भी वाच्यत्व-ग्रह नहीं हो सकता, क्योंकि अर्थापत्ति अनुमान से भिन्न नहीं।

यह नैयायिकों का कहना युक्त नहीं, क्योंकि अनुमान से ही वह वाच्यत्व-ग्रह हो सकता है—

वाचको गवयस्याय तत्र वृत्त्यन्तरेऽसति ।
वृद्धै प्रयुज्यमानत्वाद्गोत्वे गौरिति गीरिव ॥३८॥

यो यत्रासति वृत्त्यन्तरे वृद्धै प्रयुज्यते स तस्य वाचक , यथा गोशब्दो गोत्वस्य, प्रयुज्यते चायमसति वृत्त्यन्तरे गवयशब्द पुरोवर्तिनि, तस्मात्तस्य वाचक इत्यनुमानादेव संबन्धाधिगतिसिद्धे । न च विशेषणासिद्धो हेतु , शङ्क्यमानगोसादृश्यस्य गवयशब्दप्रवृत्तिनिमित्तत्वानुपपत्ते , अप्रतीतगनामारण्यकानां गोसादृश्यानधिगतौ गवय इति व्यवहाराभावप्रसङ्गात् । गवयत्वस्यापि निमित्तत्वाददोष इति चेत्, मैवम् , अप्रतीतगोपदार्थस्य गवयत्व निमित्तम्, प्रतीतगोस्तु तत्सादृश्यं निमित्तमित्युभयत्र शक्तिकल्पनायां गौरवप्रसङ्गात् । गोविशेषितसादृश्यस्य गवयशब्दप्रवृत्तिनिमित्तत्वे गवि तत्सादृश्ये च शक्ति कल्पनीयेत्यपि

---

व्याति—**वाचक इति । तत्र वृत्त्यन्तरेऽसतीति** । गोसदृशपदार्थे लक्षणागुणवृत्त्योरसभवे सति तत्र प्रयुज्यमानत्वादित्यर्थ । निमित्तान्तरेण वृत्त्यन्तरम् , इद च गङ्गाया घोषः प्रतिवसतीति सिहो बलवर्मेत्यादिषु लक्षणागुणवृत्तिभ्यामेवावाच्येष्वपि तीरादिषु प्रयुज्यमानगङ्गादिपदैर्व्यभिचारपरिहाराय विशेषणम् । सग्रहं विवृणोति—**यो यत्रेति** । ननु विशेषणासिद्धो हेतुः, असति वृत्त्यन्तरे इत्यस्य दुर्ज्ञानत्वादिति, तत्राह—**न च विशेषणेति** । अत्र तावल्लक्षणावृत्तिर्न शङ्कामप्यधिरोहति, तदा हि गोसादृश्यवाचकस्य सतो गवयत्वे तदविनाभूते लक्षणया प्रयोग इति शङ्कितव्यम् , तच्च न सभवति, अदृष्टगोपदार्थानामरण्यैकनिवासिना गोसादृश्यानधिगमे गवयपदाप्रयोगप्रसङ्गादित्यर्थः । द्वितीययोजनाया तु सुगमम् । ननु किमित्यप्रयोगः, यावता गवयत्वमपि प्रवृत्तिनिमित्तम्, तच्च तैरप्यधिगतमिति शङ्कते—**गवयत्वस्यापीति** । अत्र किमुभय मिलित्वा निमित्तम् ? कि वा प्रत्येकम् ? नाद्यः , पूर्वोक्तदोषानतिवृत्तेः । द्वितीये त्वन्यायश्चानेकार्थ इति मीमासकमुद्राभङ्गः , कल्पनागौरव च बाधके स्यातामित्याह—**मैवमित्यादिना** । गौरवान्तर चाह—**गोविशेषितेति** । न सादृश्यमात्र गवयशब्दार्थत्वेन शङ्क्यतेऽपितु गोसादृश्यम्, तथाच विशेषणस्यापि निमित्तत्वप्रसक्तिरिति भाव । किंचोपमान पृथक्प्रमाणमिच्छतोऽपि गवयत्वमेव प्रवृत्तिनिमित्तम , न गोसादृश्यम् , इतरथा शाब्दत्वप्रसङ्गात् । यथाहोदयनः—

---

'गवय शब्द गवय का वाचक होता है, क्योकि वहाँ गयव शब्द की लक्षणा या गौणी वृत्ति न होने पर वहाँ वृद्धजनो से प्रयुक्त होने के कारण, जैसे गोत्व अर्थ मे गोशब्द' (जाति-शक्ति वादी गोशब्द का वाच्य गोत्व मानते है) । अन्यवृत्ति ( लक्षणा, गौणी ) न होने पर जो शब्द जिस अर्थ मे वृद्धो से प्रयुक्त होता है, वह उसका वाचक होता है, जैसे गोशब्द गोत्व का । यदि कहा जाय कि उक्त हेतु का विशेषण ( असति वृत्त्यन्तरे ) असिद्ध है क्योकि गौणी—आदि वृत्ति की सम्भावना भी वहाँ हो सकती है । तो यह कहना युक्त नही, क्योंकि सन्दिग्ध गो-सादृश्य कभी गवय पद का प्रवृत्ति-निमित्त नही हो सकता, ( गवय शब्द की गवयत्व मे लक्षणा मानने के लिए गो सादृश्य मे शक्ति माननी होगी, तभी तो "अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते"—तं० वा० १।४।१२ ) के अनुसार गो सादृश्य से अविनाभूत गवयत्व मे लक्षणा मान सकेंगे, फिर तो ) जिन वनवासियो ने गोपदार्थ नही देखा, गो-सादृश्य का ज्ञान न होने से वे गवय शब्द का गवय मे व्यवहार न कर सकेंगे । यदि कहा जाय कि गवयत्व भी गवय पद का प्रवृत्ति-निमित्त है, अत. गोदर्शन जिन्हे नही हुआ वे भी गवय शब्द का व्यवहार क्यो न कर लेगे ? तो यह कहना उचित नही, क्योकि गोपदार्थ से अनभिज्ञ व्यक्तियो के लिए गवयत्व और गोपदार्थाभिज्ञ व्यक्तियो के लिए गो-सादृश्य, गवय शब्द का प्रवृत्ति-निमित्त—इस प्रकार उभयत्र शक्ति-कल्पना मे महान् गौरव होगा । गो-विशिष्ट सादृश्य मे शक्ति मानने पर गोरूप विशेषण और सादृश्याख्य विशेष्य—दोनो मे शक्ति माननी होगी—

गौरवं स्यात्। अन्यथोपमानस्य मानान्तरत्वेऽपि गवयशब्दस्य गोसादृश्यस्य निमित्तताशङ्काया दुष्परिहरत्वात्, गवयत्वं निमित्तीकृत्य गवयशब्दोऽत्र प्रवृत्त इत्युपमानादपि निर्धारणा न सिद्ध्येत्। किंचानवगतसंगतित्वविशेषणं व्यर्थम्, अभ्युपगतप्रमाणसंप्लववादिनः प्रत्यक्षाधिगतेऽपि पुनः प्रत्यक्षवदनुमितेऽप्यनुमानवच्चोपमितेऽपि पुनरुपमानप्रवृत्त्युपपत्तेः। अपि च 'इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति' इत्यत्राप्रसिद्धमधुकरपदार्थस्य प्रसिद्धेतरपदार्थस्य च प्रसिद्धपदसमभिव्याहारान्मधुकरशब्दार्थप्रतीतिवद्गवयशब्दार्थप्रतीतिः किं न स्यात्? न च सर्वत्र समभिव्याहारादधिगतिरुपमितिः, तत्करणस्य सादृश्यज्ञानस्य तत्राभावात्। असत्यपि च सादृश्यज्ञाने संज्ञासंज्ञिसंबन्धप्रतिपत्तिरेवोपमितिरित्याधुनिकमतानुप्रवेशे सूत्रवार्तिकप्रसिद्धसिद्धान्तविरुद्धाभ्युपगमो वज्रलेपायते। तथा च भगवदक्षपादप्रणीतं सूत्रम्—'प्रसि-

साद‍ृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः।
समयो दुर्ग्रहः पूर्वं शब्देनानुमयापि वा॥' इति॥ ( न्या० कु० ३।११ )

टीकाकृतापि 'किंतु गवयत्वं निमित्तीकृत्य पिण्डे प्रवर्तत इति परमार्थः' इति। तत्र तवाप्येता युक्तयः शरणमिति न त्वां प्रति विशेषणासिद्धिरित्याह—**अन्यथोपमानस्येत्यादिना**। एतेन—
"संबन्धस्य परिच्छेदं संज्ञायाः संज्ञिना सह। प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः॥" (न्या० कु० ३।१०)
इत्युदयनीयः प्रयासोऽपहस्तितः। तदुक्तं तत्त्वकौमुदीकृता—'यो हि शब्दो यत्र वृद्धैः प्रयुज्यते सोऽसति वृत्त्यन्तरे तस्य वाचकः, यथा गोशब्दो गोत्वस्य, प्रयुज्यते चैष गवयशब्दो गोसदृशे इति तस्यैव वाचकः इति ज्ञानमनुमानमेवेति। अव्याप्तिं चाह—**किंचानवगतेति**। प्रमाणसंप्लववादिनोऽनुमितेऽनुमानप्रवृत्तिवदुपमितेऽप्युपमानप्रवृत्तिसंभवात्तस्मिंश्चानवगत इति विशेषणाभावादव्याप्तिरित्यर्थः। किंचेदमनवगतसंगतिसंज्ञासमभिव्याहृतवाक्यमभिमतम्? किं सादृश्यबोधकम्? किं वा वैसादृश्यबोधकमपि? किं वा व्युत्पत्त्योपाधिकधर्ममात्रबोधकम्? नाद्यः, वैसादृश्यप्रतीतिकरणकेऽव्याप्तेः। अथ द्वितीयस्तत्राह—**अपि चेह प्रभिन्नेति**। विवृतोऽयमर्थः कार्यवादे, संभवति मधुपानकर्तरि भृङ्गे मधुकरपदव्युत्पत्तिवद्गोसादृश्यवति गवयपदव्युत्पत्तिः, कल्पनालाघववादिना च मधुकरत्ववद्गवयत्वस्य प्रवृत्तिनिमित्तता चातोऽतिव्याप्तिरिति भावः। तृतीयं दूषयति—**न च सर्वत्रेति**। ननु केनोक्तं सादृश्यज्ञानमुपमितिरिति? यावता संज्ञासंज्ञिसंबन्धप्रमितिरुपमितिस्तत्करणं चोपमानमिति नवीनैरुन्नीयते। आह ह्युदयनः—'संबन्धस्य परिच्छेदम्' इति। टीकाकारोऽपि 'साधर्म्यग्रहणं च धर्ममात्रोपलक्षणमिति करभसंज्ञाप्रतीतिफलमप्युपमानमेवेति नाव्याप्तिः' इति तत्राह—**असत्यपीति**। सूत्रं दर्शयति—**तथा चेति**। प्रसिद्धेन गवा गवयस्य साधर्म्यात्साध्यस्य

---

यह भी गौरव कम नहीं। इस गौरव की परवाह न करके उपमान को प्रमाणान्तर मानने पर गवय शब्द का प्रवृत्ति-निमित्त गो सादृश्य है - यह शङ्का बनी रहेगी, फिर तो गवयत्व को ही निमित्त मानकर गवय शब्द वहाँ प्रवृत्त हुआ है—यह उपमान से भी निश्चय न हो सकेगा। आप के उपमान-लक्षण में प्रविष्ट अनवगतसंगतित्व विशेषण भी निरर्थक है, क्योंकि आप के प्रमाण-सम्प्लव वाद में जैसे प्रत्यक्षाधिगत वस्तु में प्रत्यक्ष की वृत्ति, अनुमित में भी अनुमान की प्रवृत्ति मानी जाती है, वैसे तो उपमित में उपमान की प्रवृत्ति बन जायगी। दूसरी बात यह भी है कि जैसे "इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति'—यहाँ प्रसिद्ध पद के सहयोग से अप्रसिद्ध मधुकर शब्द का अर्थ-बोध हो जाता है, वैसे ही गवय पदार्थ का ज्ञान क्यों न हो जायगा? 'प्रसिद्ध पद के सहयोग से जहाँ-जहाँ बोध होता है, वहाँ सर्वत्र उपमिति ही होती है'—ऐसा नहीं कह सकते, क्योंकि उपमिति-करण सादृश्य-ज्ञान न होने से मधुकरादि पदार्थों का ज्ञान उपमिति नहीं कहा जा सकता। सादृश्य-ज्ञान न होने पर भी संज्ञा-संज्ञि-संबन्ध-प्रतीति, उपमिति ही है—इस प्रकार आधुनिकों के मत में सूत्र, वार्तिक-प्रसिद्ध सिद्धान्त का विरोध आ जाता है। भगवान् अक्षपाद का सूत्र है—

त्रितय शब्दार्थं इति चेत्, न, जातिशब्दार्थत्वदोषाणामुपाधिष्वपि तुल्यत्वात्। नच त्रितयस्य मिलितस्यैकैकस्य वा शब्दार्थत्वप्रयोजकता, व्यभिचारित्वात्, अन्यतमत्वस्य च खण्डितत्वात्। एतेन व्यक्तेरपि शब्दार्थता प्रत्याख्याता, आनन्त्यव्यभिचारयोस्तत्रापि तुल्यत्वात्। विशिष्टस्यापि व्यावृत्तत्वाविशेषाद्व्यक्तेरिव तस्यापि शब्दार्थता निरसनीया। अथ जातिवैशिष्ट्य सर्वत्रानुगतमेव शब्दार्थ., तदापि जाते शब्दार्थतायामुक्तं दूषणं न प्रत्युद्धियेत। किंच वाच्यत्वमर्थस्य धर्मो, वाचकत्वं च पदस्य, तथा च प्रतिवस्तुनियते वाच्यत्वे वाचकत्वे च संबन्धवाचोयुक्ति कुतस्त्या? एतेन साङ्केतिक शब्दार्थयो सवन्ध इत्यपि परास्तम्, सङ्केतस्यापि जातौ व्यक्तौ विशिष्टे वाभिहितन्यायेन दुर्ग्रहत्वात्। तस्माच्छास्त्र शब्दविज्ञानादसन्निकृष्टेऽर्थे बुद्धिरिति लक्षणमलक्षणम्।

---

शब्दार्थताया जातिवदुपहितेषु व्यक्तिष्विव प्रवृत्त्यसभवादेस्तुल्यत्वादित्याह—**न जातीति**। किंच त्रितयमपि किं मिलित शब्दार्थः? कि वैकैकम्? नाद्य', प्रत्येकस्थले तदभावात्। द्वितीयोऽसिद्ध', एकैकस्थले तदितरयोरभावादेव। अथान्यतम शब्दार्थ स्यात्, न, अन्यतमस्य त्रितयातिरिक्ततया दुर्वचत्वस्याधस्तात्क्रियासमभिहारेणोदाहृतत्वादित्याह—**अन्यतमत्वस्य चेति**। तदेवं जाति शब्दार्थ इति प्रथम पक्षः प्रतिक्षिप्तः। द्वितीयं दूषयति—**एतेनेति**। लक्षणादिपक्षोक्तदोषविशेषमतिदिश्यमान विशदयति—**आनन्त्येति**। जातिविशेषिता व्यक्ति शब्दार्थ इति तृतीयपक्षेपि व्यक्तिपक्षोक्तदूषणमतिदिशति—**विशिष्टस्यापीति**। ननु न जातिविशिष्टा व्यक्ति. शब्दार्थ., येनानन्त्यादिदोष. स्यात्किंतु सर्वविशिष्टेष्वनुगतं यज्जातिवैशिष्ट्य तदेव शब्दार्थ इति, तदपि न, तस्यापि जातिवदेवानुगतत्वाद्व्यावृत्तेषुप्रवृत्त्यभावादेस्तादवस्थ्यादित्याह—**अथ जातीत्यादिना**। यस्तु वाच्यवाचकत्वमेव सबन्ध इत्युद्भाव्य दूषित. पक्षः, तत्रैव सिंहावलोकितेन दूषणान्तरमाह—**किंचेति**। सबन्धिद्वयवर्त्येको हि सबन्धो नाम, न चैतत्तथेतीद सबन्ध एव न भवेदित्यर्थः। अत्र नैयायिकाः प्राहु—'साकेतिक. शब्दार्थयो. सबन्ध.' इति। तदपि—**एतेनेति**। अतिदिश्यमानमेवाह—**संकेतस्यापीति**। एव मीमासकाना शाब्दप्रमाणलक्षणे दूषणमुपसंहरति—**तस्मादिति**।

---

जाति, व्यक्ति और उपाधि—तीनों में भी शक्ति मान लेंगे—यह भी नहीं कह सकते, क्योकि जाति-शक्ति-पक्षोक्त दोष उपाधि मे भी तुल्य ही है। तीनो भी मिलितरूप से शक्य होगे? या प्रत्येक? मिलित शक्य होने पर प्रत्येक मे शब्द-प्रयोग न होगा और प्रत्येक को शक्य मानने पर उससे अतिरिक्त मे शक्ति न बनेगी। अन्यतमत्वपक्ष का तो खण्डन हो ही चुका है। इससे व्यक्ति मे भी शब्दार्थत्व का खण्डन हो जाता है, क्योकि वहाँ पर भी लक्षणा-पक्ष वाले आनन्त्य, व्यभिचार दोष समान ही है। जाति-विशिष्ट व्यक्तियाँ भी व्यक्ति के समान ही परस्पर व्यावृत्त (अनन्त) है, अत व्यक्ति के समान ही उनमे भी शब्दार्थत्व नही बन सकता। यदि कहा जाय कि सभी व्यक्तियो मे अनुगत जाति-वैशिष्ट्य को शक्य मानेगे, तो वहाँ भी जाति-शक्ति-पक्षोक्त दोषो का उद्धार नही हो सकता। दूसरी बात यह भी है कि वाच्यत्व तो अर्थ का धर्म है और वाचकत्व, शब्द का। सम्बन्ध होता है द्विष्ठ, किन्तु वाच्यत्व और वाचकत्व—दोनो अपने-अपने आधारमात्र मे रहनेवाले है, इन्हे सम्बन्ध कैसे माना जा सकता है? इससे 'शब्द और अर्थ का साकेतिक सम्बन्ध है'—यह मत भी खण्डित हो जाता है, क्योकि सकेत भी जाति मे है? या व्यक्ति में? या विशिष्ट मे? इस प्रकार उक्त दोषो के कारण सकेत-ग्रह भी सम्भव नहीं। इस लिए "शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्"—यह लक्षण अलक्षण ही सिद्ध हुआ।

तथाप्तवाक्यं शब्दप्रमाणमिति नैयायिकानामपि ।
आप्तोदीरितवाक्येषु मालतीमाधवादिषु ।
व्यभिचारान्न तद्युक्तमाप्तत्वस्यानिरुक्तित ॥३२॥

स्वकपोलकल्पितमालतीमाधवादिक्येषु प्रामाण्याभावादतिव्याप्ति । नहि पुराप्त एव सन्नाटक-नाटिकादिप्रबन्धविरचनमात्रेणानाप्तो भवति भवभूति । उक्त चैतदुम्बेकेन—'यदाप्तोऽपि कस्मैचिदुपदिशति, न त्वयाननुभूतार्थविषय वाक्य प्रयोक्तव्यम्, यथाङ्गुल्यग्रे हस्तियूथशत-मास्ते, इति तत्राथव्यभिचार स्फुट " इति । कश्चायमाप्तो नाम ? यथादृष्टार्थवादीति चेत्, न; भ्रान्तवाक्येऽपि प्रसङ्गात्, प्रमाणदृष्ट इति विशेषणेऽपि, प्रमाणदृष्टस्य प्रमादादिनान्यथा-कथनेऽपि प्रसङ्गात् । प्रमाणेन यथादृष्टं तथावादीति चेत्, मैवम्, एकदेशे तथाभूतवादित्वे-प्यशान्तरेऽन्यथाभूतवादिन्यपि प्रसङ्गात् । यावत्प्रमाणदृष्टं तावत एव वक्ताप्त इति चेत्, न, अज्ञातसदिग्धानुवादादिवाक्यप्रयोक्तुरनाप्तत्वप्रसङ्गात् । अथ निर्दोष आप्त इति चेत्, मैवम्,

नैयायिकसमतमपि लक्षण दूषयति—तथेति । लक्षणमलक्षणमित्यनुषज्यते । अस्यातिव्याप्तिमसिद्धि च श्लोकेनाह—आप्तेति । अनैकान्तिकता विवृणोति—स्वकपोलेति । नन्वौत्प्रेक्षिकार्थे वचासि नाप्त-वाक्यान्यतो नातिव्याप्तिरिति, तत्राह—नहि पुरेति । नाटकादिकाव्ययोगान्ता नाटकविशेषा । भव-भूतिरुम्बेकः । एतदेव ग्रन्थान्तरस्थेन तद्वचनेन समतयति—उक्त चैतदिति । तत्र ह्यननुभूतार्थवाक्य-स्योदाहरणत्वेन उच्यमानमग्यङ्गुल्यग्रादिवाक्यमाप्तोक्तवाक्यमेवइत्यतिव्याप्तिरित्यर्थ । आप्तत्वस्यानिरुक्तित इत्येतद्विवृणाति—कश्चायमिति । भ्रान्तवाक्य इति । सोपि हि यथा स्वेन दृष्ट तथैव वक्तीत्यर्थ. । ननु प्रमाणदृष्टार्थवक्ताप्ता नाम, ततो भ्रान्ते नातिव्याप्तिरिति, तत्राह—प्रमाणदृष्टेति । ननु न प्रमाण-दृष्टस्य वदनमात्र विवक्षित येनान्यथावदनमादायाव्याप्तिः स्यात्किन्तु यथा दृष्ट तथैव वदनमिति शङ्कते—प्रमाणेनेति । अत्र कि प्रमाणदृष्टस्य तथावदनमात्र विवक्षितम् ? तिरिक्तावदनमपि वा ? आद्ये प्राह—मैवम्, एकदेशेति । द्वितीय शङ्कते—यावदिति । तर्ह्यव्याप्तिरित्याह—अज्ञातेति । नहि तेषा प्रमाण-दृष्टत्वम्, व्याघातादित्यर्थ । किमिद निर्दोषत्व कि सर्वविषये ? कि वा क्वचिद्दोषराहित्यम् ? आद्येऽव्याप्ति-माह—मैवम्, आप्तानामिति । क्वचिद्रागादिदोषवतोन्यत्र यथार्थवदनमप्याप्तवाक्य न स्यादित्यव्याप्तिरिति भाव । द्वितीये त्वतिव्याप्तियत्क्वचिद्दोषरहितस्यान्यथावदनेपि प्रसङ्गात् । ननु यत्र यो दोषरहित. स

उसी प्रकार "आप्तवाक्य शब्दप्रमाणम्"—नैयायिकों का लक्षण भी आप्तोचरित मालतीमाध-वादि वाक्यों में अतिव्याप्त होने से युक्त नहीं। और आप्तत्व का निर्वचन भी सम्भव नहीं। स्वकपोल-कल्पित मालतीमाधवादि वाक्यों में प्रामाण्य न होने पर भी उक्त लक्षण वहाँ जाता है, अत अति-व्याप्त है। यह हो नहीं सकता कि पहले भवभूति आप्त रहे हों और नाटक नाटिकादि के रचना से अनाप्त हो जाये। उम्बेक भट्ट ने कहा भी है—'आप्त व्यक्ति भी किसी को जो यह उपदेश करता है कि आपको कभी अननुभूतार्थक वाक्य का प्रयोग नहीं करना चाहिए, जैसे उँगली की नोक पर हाथियों के झुण्ड के झुण्ड बैठे हैं।' वहाँ अस्पष्ट अतिव्याप्ति है। यह आप्त भी क्या है ? यदि कहें कि यथादृष्टार्थ-वादी को आप्त कहते हैं, तो भ्रान्त पुरुष भी जैसा देखता है, वैसा ही कहता है, अत वाक्य अतिप्रसग होगा। यदि प्रमाण-दृष्ट-यह विशेषण लगायें, तब भी प्रमाण-दृष्ट वस्तु के अन्यथाकथन में अतिप्रसंग होता है। यदि कहा जाय प्रमाण से जैसा देखा, वैसा ही कहने वाला आप्त है। फिर भी जहाँ वाक्य के एक भाग में तथाभूतवादित्व होने पर भी भागान्तर में अन्यथा-भूतवादित्व है, वहाँ भी अतिप्रसग होगा। यदि कहा जाय कि जितना अंश प्रमाण-दृष्ट है, उतने अंश का वक्ता पुरुष आप्त कहलाता है, तब अज्ञात, सन्दिग्ध, अनुवादादि वाक्यों का प्रयोक्ता अनाप्त

आप्तानामपि क्वचिद्रागादिदोषसंभवात्। यत्र विषये यो निर्दोष स तत्राप्त इति चेत्, न, यत्तच्छब्दयोर्विशेषविषयत्वेनासाधारण्यादव्याप्ते । तस्मादाप्तवाक्यमागम इत्यप्यलक्षणम्। यथार्थवाक्यं शब्दप्रमाणमित्यपि न, यथार्थत्वस्य प्रमितिखण्डनावसर एव खण्डितत्वात्। एतेन 'समयबलेन सम्यक्परोक्षानुभवसाधन शब्द' इति भूषणस्यापि लक्षणमपास्तम्, ऊर्ध्वीकृततर्जन्या दशसख्यानुमाने शङ्खध्वनौ चानुविधेयपुरुषाभिप्रायानुमापके व्यभिचारात्, समयसम्यक्त्वयोश्च पूर्वमेव निरासात्। तदेव शब्दलक्षणमपि दुर्भणमिति सिद्धम्।

तथार्थापत्तिलक्षणमपि। अन्यथानुपपन्नदर्शनादुपपादके बुद्धिरर्थापत्ति । यथा जीवतो देवदत्तस्य गृहान्तरभावमलोक्य वहिरवस्थानज्ञानम्। नन्विदमनुमानमेवास्तु, देवदत्तो बहि-

तत्राप्तो नान्यत्रेति शङ्किते परिहरति—यत्तच्छब्दयोरिति। साधारणविषयत्वे च पूर्वोक्तातिव्याप्तिरित्यपि द्रष्टव्यम्। यथार्थत्वस्येति। प्रमात्वव्यञ्जकखण्डनसमय इत्यर्थ.। भासर्वज्ञोक्तलक्षणमुद्भाव्य दूषणमतिदिशति—एतेनेति। अनुमानादिव्यावृत्त्यर्थं समयग्रहणम्। प्रत्यक्षव्यावृत्त्यै परोक्षग्रहणम्। संशयादिव्यावृत्त्यै सम्यग्ग्रहणम्, स्मृतिव्यावृत्त्यर्थमनुभवग्रहणम्। यत्र हि वणिजा समयबलेनोर्ध्वीकृता तर्जन्यङ्गुलि र्दशसख्यामनुमापयति, तत्रानुमाने त्वदुक्तलक्षणमतिपतेदित्यर्थ.। अतिव्याप्त्यन्तरमाह—शङ्खध्वनौ चेति। अनुविधेयः प्रभुः। तत्रापि हि प्रभोः सेनोद्योगपरावृत्त्याद्यभिप्राय समयबलेन शङ्खध्वनिः सैनिकानामनुमापयतीत्यर्थ.। एवमधिक दर्शयित्वातिदिष्टांश विशदयति—समयेति।

तदित्थ प्रत्यक्षानुमानोपमानशब्दा. प्रमाणानाक्षपादसूत्रपरिगणनाक्रमेण प्रमाणचतुष्टय खण्डितम्। इदानी भाट्टप्राभाकराभिमतामर्थापत्ति खण्डयति—तथेति। दुर्भणमित्यनुवर्तते। तत्र तावदर्थापत्तिलक्षण दर्शयति दूषणाय—अन्यथेति। प्रत्यक्षादिव्यवच्छेदार्थमनुपपन्नदर्शनादित्युक्तम्। अनुपपद्यमानविषयनिर्विकल्पकदर्शनात्। यत्सविकल्पक तत्सदृश स्मरण वा भवति तद्व्यवच्छेदार्थमुपपादक इत्युक्तम्। तत्र द्विविधार्थापत्ति.-दृष्टार्थापत्ति, श्रुतार्थापत्तिश्चेति। तत्र प्रथमामुदाहरति-यथा जीवत इति। अत्र हि जीवतो देवदत्तस्य बहिरवस्थान विनानुपपद्यमानगृहाभावदर्शनात्तदुपपादकबहिरवस्थानज्ञानमर्थापत्तिरित्यर्थः। तत्रैव वैशेषिकादेरनुमानान्तर्भाववादिनो मतमाशङ्क्य मीमांसक पार्थक्य समर्थयते—नन्वित्यादिना।

ही हो जायगा। "निर्दोष आप्त"—यह लक्षण भी युक्त नहीं, क्योंकि आप्त व्यक्तियो मे भी अन्य-विषयक रागादि दोष संभावित है। यदि कहा जाय कि जिस विषय मे जो निर्दोष है, वह उस विषय मे आप्त है, तब तो 'यत्-तत्' शब्द—घटित लक्षण व्यक्ति विशेष मे ही रह जायगा, सर्व-व्यापक न होगा। इसलिए आप्त-वाक्य आगमप्रमाण है—यह लक्षण भी अलक्षण ही रहा। "यथा-र्थवाक्यं शब्दप्रमाणम्"—यह लक्षण भी निर्दुष्ट नही, क्योंकि यथार्थत्व का प्रमिति-खन्डन के अवसर पर खण्डन कर दिया गया है। इसी से भूषणकार ने जो लक्षण किया है—"समयबलेन सम्यक्परोक्षानुभवसाधनमागम" (न्या० सार० पृ० २९)। वह लक्षण भी खण्डित हो जाता है, क्योंकि कुछ लोग सकेत कर लेते है कि जब तर्जनी उँगली ऊपर उठाई जाय, तो उसका अर्थ समझ लिया जाय—दश सख्या। इसी प्रकार सेनाध्यक्ष अपनी साकेतिक शखध्वनि के द्वारा अपना अभिप्राय सैनिको पर व्यक्त किया करता है, वहाँ सर्वत्र उक्त लक्षण अतिव्याप्त है। समय और सम्यक्त्वका निराकरण तो पहले ही हो चुका है। इस प्रकार शब्दप्रमाण का लक्षण न हो सका।

उसी प्रकार अर्थापत्ति का लक्षण भी नही बनता। अन्यथानुपपन्न पदार्थ को देखकर उपपादक की कल्पना का नाम अर्थापत्ति है। जैसे कि जीवित देवदत्त का घर मे अभाव देखकर बाहर होने का ज्ञान। यदि कहा जाय कि यह ज्ञान अनुमान ही है—'देवदत्त बाहर है, जीवित होने पर भी घर न होने के कारण, जैसे कि सम्मत व्यक्ति।' तो यह नही कह सकते, क्योंकि देवदत्तप्रतियोगिक अभाव गृह

रस्ति, जीवनवत्त्वे सति गृहेऽभवात्, संप्रतिपन्नवदिति चेत्, मैवम्, देवदत्तप्रतियोगिकाभावस्य गृहाधिकरणतया देवदत्तधर्मत्वाभावात्। गृहनिष्ठाभावप्रतियोगित्वं हेत्वर्थ इति चेत्, मैवम्, यदा जीवन्नस्ति क्वचिद्देवदत्त इत्याप्तवाक्यादनिर्धारितदेशविशेषनिष्ठतया देवदत्तसत्तावगता ग्रामाद्बहिरवस्थितेनैव चैत्रेण, स च तदागत्य गृहान्तस्तदभावमालोक्य बहिःसत्त्वमनुमिमीत इति वाच्यम्, तच्चानुपपन्नम्, साधारणदेशमात्रावस्थानविषयस्यागमस्यार्थापत्त्या यावन्न बहिर्देशसत्ताविषयत्वं परिकल्प्यते, तावदागमापबाधितविषयतयानुमानस्यानुत्थानात्। कल्पिते तु बहिर्देशविषयत्वेऽनुमानात्प्रागेवार्थापत्तिर्लब्धप्रमेयेति कृतमनुमानेनेति भाट्टा प्रतिपेदिरे, तदिदमसुन्दरम्।

---

अस्ति हि मैत्रस्य जीवनवत्त्वेपि गृहेऽभावस्य बहिरवस्थानस्य च परस्पर व्याप्तिरिति भाव.। मीमासकः परिहरति—**मैवमिति**। अत्र जीवनवत्त्वे सति गृहेऽभावादिति कोर्थ ? किं गृहनिष्ठाभावाधिकरणत्वादिति ? किं वा गृहनिष्ठाभावप्रतियोगित्वादिति ? आद्येऽसिद्धि। नहि गृहाधिकरणश्चैत्रप्रतियोगिकोऽभावश्चैत्रे वर्तत इति सभवति अतोऽपक्षधर्मत्वादसिद्धो हेतुरित्यर्थ। देवदत्तग्रहणं चैत्रोपलक्षणम्। द्वितीय शङ्कते—**गृहनिष्ठेति**। दूषयति—**मैवमिति**। अत्रानुमानाप्रवृत्ति दर्शयितु भूमिका परिशोधयति—**यदा जीवन्निति**। यः खल्वनुमाता चैत्रः तेनैव चैत्रेण यदा ग्रामाद्बहिरेव जीवन्नस्ति क्वचिद्देवदत्त इत्याप्तवचनादनिर्धारितदेशविशेषनिष्ठतया देवदत्तोवगतो भवति, पुनश्च स एव चैत्रो ग्राम प्रविश्य गृहमागत्य गृहान्तश्च तस्य जीवतोऽभावमवलोक्य बहिःसत्तामनुमिमीत इति वक्तव्यम्। इतरथा आप्तवाक्याज्जीवनमात्रानधिगमे जीवनवत्त्वे सतीति विशेषणासिद्धिप्रसङ्गात्, गृहाभावमात्रस्य बहिर्भावेनाविनाभावाभावाच्च। प्रत्यक्षस्य च साधारण्येनाप्रवृत्तेरनुमानस्य च लिङ्गाभावात्, अत्राप्तवाक्येन सामान्येन जीवनमवगत्य पश्चादनुमिमीत इति वक्तव्यमिति योजना। भवत्वेवमेतावताऽनुमानाभावे किमायातमिति ? तत्राह—**तच्चेति**। यत्खल्वाप्तवाक्यं सामान्येन स्थितिमवबोधयति, तस्य किं गृहाद्बहिर्विषयताया कॢप्तायामनुमानमिदं प्रवर्तते ? अकॢप्ताया वा ? न तावदकॢप्तायाम्, तदा ह्यागमस्य गृहेपि स्थितिबाधकत्वसभवेन तद्विरुद्धबहिरवस्थानानुमानस्य कालात्ययापदिष्टत्वादित्यर्थः। अथ कॢप्तायाम्, तत्राह—**कल्पिते त्विति**। गृहेऽभावावेदकप्रमाणस्य सामान्येन स्थितिबाधकागमस्य च योय विरोधस्तयानुपपत्त्यागमस्य बहिर्भावविषयत्वकल्पना ह्यर्थापत्तिर्नाम, तत्प्रवृत्तौ चानुमान निष्फलमित्यनुमानाप्रवृत्तिरर्थापत्तेश्च पार्थक्यमिति भाट्टाना समर्थनप्रकार इत्यर्थ.। अत्र सिद्धान्ती दूषयितुमुपक्रमते—**तदिदमित्यादिना**। आगमबाधपरिहारार्थमर्थापत्तिरपेक्षणीयेति हि तेनाभिहितम्, तत्रार्थापत्तिप्रवृत्तिव्यतिरेकेणैवागमबाध परिहरन्ननुमानप्रवृत्ति दर्शयति

---

मे रहता है, देवदत्तरूप पक्ष में नहीं, अतः उक्त अनुमान में स्वरूपासिद्धि है। गृहानुयोगिकाभावप्रतियोगित्व को भी हेतु नहीं बना सकते, क्योंकि अनुमाता चैत्र ग्राम के बाहर ही किसी आप्त के मुख से यह सुनता है कि "जीवन्नस्ति क्वचिद् देवदत्त", इससे वहीं ज्ञान कर लेता है कि देवदत्त कहीं ( अनिश्चित देश मे ) है। अब चैत्र ग्राम मे आकर देवदत्त का घर देखता है, देवदत्त को वहाँ न पाकर उसकी बहिःसत्ता का अनुमान कर लेता है—यही कहना होगा। वह अनुमान बन नहीं सकता, क्योंकि सामान्यतः कहीं देवदत्त की सत्ता बताने वाला आप्त-वाक्य बाह्यदेश मे देवदत्त की सत्ता को विषय करता है—यह जब तक अर्थापत्ति के बल पर कल्पना न कर ली जाय, तब तक अनुमान प्रवृत्त ही नहीं हो सकता, क्योंकि वह आप्त वाक्य सामान्यतः सत्त्व-बोधन करता है, अत गृहगत सत्त्व भी उसका विषय हो सकता है, यदि देवदत्त मे गृहसत्त्व होगा, तब बहिःसत्त्व का उसमें अनुमान बाधित हो जाता है। अर्थापत्ति से बाह्य सत्त्व की कल्पना कर लेने पर अनुमान से पूर्व ही अनुमेय सिद्ध हो गया, अनुमान व्यर्थ है—इस प्रकार भाट्टगण अर्थापत्ति का समर्थन किया

आगमस्य बहिर्देशविषयत्वस्य कल्पनात् ।
प्रागेव देवदत्तस्य गृहेऽभावो मितो न वा ॥३३॥
आद्येऽनुमानं तेनैव निष्प्रत्यूहं प्रवर्तताम् ।
द्वितीये कल्पकाभावादर्थापत्त्युदयः कुतः ॥३४॥

भाट्टानामप्याप्तवाक्यस्य बहिर्देशविषयत्वकल्पनात्प्रागेव देवदत्तस्याभावः प्रमितः ? अप्रमितो वा ? प्रमितत्वे तत एवानुमानोदयादलमर्थापत्तिप्रकल्पनाद्व्यसनेन। द्वितीये तु कल्पकाभावात् कुतोऽर्थापत्तेरुदयः ? इयांस्तु विशेषः—प्रत्यक्षाभाववादिनो मते प्रत्यक्षस्यागमाद्बलीयस्त्वादागममवगणय्यापि प्रत्यक्षाधिगतगृहाभावलिङ्गेन भवति बहिर्देवदत्तसत्त्वानुमानम्। अभावप्रमाणाधिगम्यत्वे पुनरभावस्यागमाद् दुर्बलतया तद्विरोधिगृहाभावस्यैव प्रमातुमशक्यतया नार्थापत्तिः प्रसरति, सदुपलम्भकप्रमाणप्रत्यस्तमय एवाभावप्रमाणप्रवृत्त्यङ्गीकारात्। यथाहुः—

"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥" इति। ( श्लो० वा० अ० १ )

---

श्लोकद्वयेन—**आगमस्येति** । सामान्येन प्रवृत्तागमस्य बहिर्विषयत्वकल्पनात्प्रागेव गृहाभावः केनचित्प्रमाणेन प्रमितः ? न वा ? यदि प्रमितः, तर्हि तेनैवागमस्य निरुद्धत्वादनुमानं निर्विघ्नं प्रवर्ततां किमर्थापत्त्या ? अथ न प्रमितो गृहाभावः, तर्हि कयानुपपत्त्यागमस्य बहिर्विषयत्वं कल्प्यते ? इत्यनुमानवदर्थापत्तेरप्यनुदय एवेति श्लोकयोजना। श्लोकौ विवृणोति—**भाट्टानामित्यादिना** । गुडजिह्विकया चेदमनुमानस्यार्थापत्तिसमानयोगक्षेमत्वमुक्तम्, वस्तुतस्तु भवदर्थापत्त्युदयात्तार्किकानुमानोदयस्याधिक्यमस्तीत्याह—**इयांस्त्विति** । प्रत्यक्षतः खलु गृहाभावस्तार्किकमतेऽधिगम्यते, दृश्याभावत्वात्, प्रत्यक्षसिद्धं सदनुमानमागमं तृणाय मत्त्वैव प्रवर्तते आदित्यवर्णाद्यागममिव परमात्मन्यरूपत्वानुमानम्, भवता त्वागमाद्दुर्बलमेव गृहाभावग्राहिप्रमाणमित्यर्थापत्तेरुदय एव विचारणीय इत्यर्थः। तदुक्तं तत्त्वकौमुद्याम्—'प्रमाणेन निश्चितस्य गृहेऽसत्त्वस्य पाक्षिकतया सांशयिकेन गृहसत्त्वेन प्रतिक्षेपायोगादिति। 'तस्माद्गृहाभावेन सिद्धेन बहिर्भावोऽनुमीयत इति युक्तमिति' च। योग्यानुपलब्धेरागमादिदौर्बल्ये हेतुमाह—**सदुपलम्भकेति**। सतो भावस्योपलम्भकानि यानि प्रमाणानि तेषां प्रत्यस्तमयेऽनुदय एवाभावप्रमाणप्रवृत्तेरङ्गीकारात्, इतरथा सघटे भूतले निर्मीलितलोचनस्याभावनिर्णयप्रसङ्गादिति भावः। अत्र च वार्तिकसम्मतिमाह—**यथाहुरिति**। वस्तुसत्त्वं वस्तुतत्त्वम्। भावरूपतेति यावत्। तदवबोधार्थमित्यर्थः। भङ्ग्यन्तरेणाप्यनुमानताम-

---

**करते है, यह भी सुन्दर नहीं, क्योंकि यहाँ जिज्ञासा होती है कि अर्थापत्ति के द्वारा आप्त वाक्य में बहिःसत्त्व-विषयकता की कल्पना से पूर्व देवदत्त का गृहाभाव प्रमित हुआ ? कि नहीं ? यदि प्रमित है, तब आप्त-वाक्य गृह-सत्त्व का बोधक नहीं हो सकता, अतः अनुमान निर्बाध प्रवृत्त हो सकेगा। यदि गृहाभाव प्रमित नहीं, तब कल्पक के न होने से अर्थापत्ति का उदय ही कैसे होगा ? वस्तुस्थिति तो यह है कि जो वादी अभाव को प्रत्यक्ष मानता है, उसके मत में शब्दप्रमाण से बलवत्तर होने के कारण प्रत्यक्ष आप्त-वाक्य की कुछ भी परवाह न करके गृहाभाव को पहले ही सिद्ध कर देगा, उससे देवदत्त की बाह्यसत्ता का अनुमान हो जायगा। जो लोग अभाव को अनुपलब्धिप्रमाण का विषय मानते है, उनके मत में शब्दप्रमाण से दुर्बल होने के कारण अनुपलब्धिप्रमाण उससे विरुद्ध गृहाभाव को सिद्ध ही नहीं कर सकता, फिर अर्थापत्ति का उदय ही कैसे होगा ? क्योंकि भावपदार्थ के उपलम्भक प्रमाणों के न होने पर ही अनुपलब्धि की प्रवृत्ति मानी गई है, जैसा कि मिश्रपाद ने कहा है–जहाँ पर भावोपलम्भक पाँचों (प्रत्यक्ष, अनुमान, उपमान, शब्द और अर्थापत्ति) प्रमाण प्रवृत्त न हों, वहीं पर ही अनुपलब्धि प्रमाण की प्रवृत्ति होती है। दूसरी बात यह भी है कि**

किच यद्यस्य कल्पकमिष्यते, तत्तेनाविनाभूतमिष्यते ? न वा ? आद्ये भङ्ग्यन्तरेण भवताप्यनुमानमेवाभिहितमिति, न प्रमाणान्तरावकाशः। द्वितीयेऽप्यनियतमेव यत्किञ्चित्कल्पयेदिति नार्थापत्तिप्रमेयसिद्धि । अनुपपद्यमानस्योपपादकासत्त्वे विरोधो गमक इति नानुमानमिति चेत्, मैवम्, अनुपलब्धेरप्यनुपलभ्यमानसत्त्वे विरोध एवाभावगमक इत्यभावमानापह्नवप्रसङ्गात्। धूमोऽपि धूमध्वजस्यासत्त्वे विरोधादेव तद्गमक इत्यनुमानविलयापत्तेश्च। यत्र कार्यकरणभावं विनाऽविनाभावादेव गमकत्व रसरूपादौ तत्र भवत्वे ानुमानं लब्धावकाशमिति चेत्, न, तत्रापि रूपासत्त्वे रसस्य विरोधादेव गमकत्वोपपत्ते ।

कश्चायं विरोध ? (१) कि प्रमाणयो ? (२) उत प्रमाणत्वेनाभिमतयो ? (३) अनिर्णीतप्रामाण्याप्रामाण्ययोर्वा ? (४) सामान्यप्रवृत्तप्रमाणेन विशेषप्रवृत्तप्रमाणार्थबाधसंशयो वा ? (५) तर्कयोरेव वा ?

---

र्थापत्तेरनुदय च विकल्पपूर्वकमाह—किंचेति। कल्पकमिति। गृहाभावादित्यर्थ । तेनेति। कल्प्येन वहिर्भावेनेत्यर्थ'। स्यान्मतम्, कल्पकस्य कल्प्येन या व्याप्ति सानुमित्युपादिका। यस्तु कल्पकस्य कल्प्यासत्त्वे विरोधः, सोऽर्थापत्तिजनक इति कारणभेदादनयोर्भेद । स एव च विरोधोऽत्र गमक इति नानुमितित्वमिति शङ्कते—अनुपपद्यमानस्येति। तदेतदनिष्टान्तरापत्त्या दूषयति—मैवमिति। एवं सत्यनुपलब्धिलक्षणषष्ठप्रमाणमर्थापत्तिरेव स्यात्, शक्यते हि तत्राप्यनुपलब्धेरनुपलभ्यमानघटसत्त्वे सति यो विरोध, स एव गमक इति वक्तुमित्यर्थ। अनुमानापह्नवश्च स्यादित्याह—धूमोऽपीति। अनुमानस्यासाधारण विषय दर्शयन्ननन्तरदोष परिहरति पूर्ववादी—यत्रेति। कारणाभावे हि कार्यस्य विरोध। नच रसरूपादावकार्यकारणभूते स इत्यभिमानः पूर्ववादिनः। तत्रापि विरोध सभावयन्नुक्तदूषण सस्मारयति सिद्धान्ती—नेति।

एवमुपपादकोपपाद्ययोर्विरोधोऽर्थापत्तिरित्यत्र प्रमाणान्तरेष्वपि भावादतिव्याप्तिरुक्ता। इदानी विरोधानिरूपणादसिद्धिरेवेति दर्शयिष्यन्विरोध विकल्पयति कश्चायमिति । सामान्यप्रवृत्तेति। सामा-

---

वाह्यसत्त्व का जो आप कल्पक मानते है, उस कल्पक का वाह्यसत्त्व से अविनाभाव मानते है ? या नही ? यदि मानते है, तब तो आपने प्रकारान्तर से अनुमान ही मान लिया, फिर वहाँ प्रमाणान्तर के लिए अवकाश ही कहाँ रहा ? यदि आप अविनाभाव नही मानते, तब वह नियमत वहि सत्त्व की कल्पना नही कर सकता, अतः अर्थापत्ति का प्रमेय सिद्ध नही होता। यदि कहा जाय कि गृहाभाव-निष्ठ अविनाभाव को वहिर्भाव का गमक मानने पर अवश्य अनुमान का स्वरूप आ जाता, किन्तु हम अनुपपद्यमान ( गृहाभाव ) का उपपादक ( वहिर्भाव ) के न होने पर जो विरोध उपस्थित होता है, उसे ही वहिर्भाव का गमक मानते है। तो यह कहना भी युक्त नही, क्योकि इस प्रकार तो अनुपलब्धि भी अर्थापत्ति के अन्तर्गत माननी पडेगी—अनुपलब्धि का भी अनुपलभ्यमान ( घटादि ) की सत्ता मानने पर विरोध होता है, उसी को ही अभाव का गमक माना जा सकता है। धूम का भी वह्नि के न रहने पर विरोध होता है, अत' वहाँ भी विरोध ही वह्नि का गमक हो सकता है, इस प्रकार अनुमान भी समाप्त हो जाता है। 'जहाँ कार्यकारणभाव के बिना, अविनाभाव के आधार पर गमकता मानी जाती है, जैसे रूप का गमक-रस होता है, वहाँ के लिए अनुमान को मानना ही पड़ेगा'—यह भी कहना उचित नही, क्योकि वहाँ भी रूप के न होने पर रस का विरोध होता है, वही गमक हो जायगा।

यह विरोध भी क्या वस्तु है ? क्या (१) दो प्रमाणो का विरोध ? या (२) प्रमाणत्वेन अभिमत पदार्थों का ? या (३) प्रामाण्याप्रामाण्य का जिनमे निर्णय नही हुआ, उनका ? या (४) सामान्यरूप से प्रवृत्त शब्द प्रमाण से, विशेष-प्रवृत्त अनुपलब्धि-प्रमाण के विषय (गृहाभाव) का बाध होता है ?

तदसिद्धिरतिव्याप्तिः सक्तिः सप्रतिसाधने ।
असंभवोऽतर्कता च दोषास्तेषां क्रमादमी ॥३५॥

न तावदाद्यः, उभयोः प्रमाण्ये विरोधस्य विरोधे वा प्रमाण्यस्यैवासंभवादसिद्धेः, अन्यथा वस्तुनो द्वैरूप्यापत्तेः । नापि द्वितीयः, अभिमतशब्देन भ्रमाभिधाने ज्ञानमात्रविवक्षायां वा भ्रमज्ञानयोः प्रमाणत्वेन गृहीतयोर्विरोधाद्विभिन्नविषयत्वकल्पनाया अप्यर्थापत्तित्वप्रसङ्गात् । नापि तृतीयः, वायुर्बाह्यकरणाप्रत्यक्षः अरूपिद्रव्यत्वात् कालादिवत्, वायुः प्रत्यक्षः उपलभ्यमानस्पर्शाधिष्ठानत्वात् घटादिवदित्यनिर्णीतप्रामाण्याप्रामाण्ययोरनुमानयोर्विरोधेऽप्यर्थापत्तेरुदयप्रसङ्गात् । नापि चतुर्थः, असंभवात् । नहि यद्यत्र विशेषतः प्रमितं तस्य तत्रापि तद्विपरीतप्रमाणविषयत्वसंशयः । न खलु स्थाणुरयमिति निश्चयेऽपि स्थाणुर्वा पुरुषो वेति

न्येन प्रवृत्तं यत्प्रमाणं जीवन्देवदत्तः क्वचिदस्तीति तेन विशेषे प्रवृत्तं यत्प्रमाणं गृहाभावग्राहि तदर्थस्य गृहाभावस्य बाधोऽस्ति ? नवा ? इति योऽयं संशयः स चेत्यर्थः । एवं विकल्प्य श्लोकेन संगृह्णाति दूषणानि—**तदसिद्धिरिति** । प्रमाणयोर्विरोध एवासिद्धः, अन्यतरस्याप्रमाणत्वात् । इतरथा वस्तुन एव द्वैरूप्यापत्तेरित्यर्थः । द्वितीये दूषणमाह—**अतिव्याप्तिरिति** । प्रमाणत्वेनाभिमतिर्नाम किं प्रमाणत्वेन भ्रान्तिः ? किं वा ज्ञानमात्रम् ? उभयथार्थापत्त्याभासे गमनादतिव्याप्तिरित्यर्थः । तृतीये दूषणमाह—**सक्तिः सप्रतिसाधने इति** । सप्रतिसाधनेऽप्यनिर्णीयमानप्रामाण्याप्रामाण्ययोरुभयोर्विरोधेऽर्थापत्तेरुदयप्रसक्तिः, ततश्चातिव्याप्तिरित्यर्थः । चतुर्थे प्राह—**असंभव इति** । नहि यद्यत्र विशेषतः प्रमितं तस्य तत्रैव विपरीतप्रमाणविषयत्वसंशयः संभवति, स्थाणुत्वनिर्णयेऽपि पुरुषत्वसंग्राहकप्रमाणप्रवृत्तिसंशयापातादित्यर्थः । पञ्चमे दूषणमाह—**अतर्कता चेति** । मिथो विरोधेन तर्काभासतापातादित्यर्थः । एवमेते दोषास्तेषां पक्षाणां क्रमाद् द्रष्टव्या इति श्लोकयोजना । संग्रहं विवृणोति—**न तावदित्यादिना** । विरोधस्यासिद्धेरित्युपरितनेनान्वयः । अनुव्यवसायद्वारा मानसप्रत्यक्षत्वं संभवति तथेश्वरप्रत्यक्षत्वमेव सर्वस्येत्यप्रसिद्धविशेषणता स्यादिति बाह्यकरणग्रहणम् । रूपादिव्यावृत्त्यर्थं द्रव्यग्रहणम् । घटादिव्यवच्छेदार्थमरूपिग्रहणम् । द्वितीयेऽप्यस्मदादिबाह्यकरणप्रत्यक्षत्वं साध्यम् । परमाण्वादिव्यभिचारवारणायोपलभ्यमानपदम्, तदुक्तं न्यायकुसुमाञ्जलौ—

अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः ।
न मानयोर्विरोधोऽस्ति प्रसिद्धे चाप्यसौ समः ॥' इति ॥ (न्या० कु० ३।१९)

या नहीं ?—इस प्रकार का संशय ही विरोध है ? या दो तर्कों का विरोध ? (द्र० ख० पृ० ७८४) । इन पाचों पक्षों में (१) असिद्धि, (२) अतिव्याप्ति, (३) सत्प्रतिपक्ष में अतिप्रसक्ति, (४) असम्भव, (५) अतर्कतापत्ति—ये क्रमशः दोष हैं । अर्थात् प्रथम ( दो प्रमाणों का विरोध ) पक्ष में यदि दोनों प्रमाण हैं, तब उनमें विरोध ही सम्भव नहीं और यदि विरोध है, तब उनमें प्रामाण्य ही सिद्ध नहीं हो सकता, अन्यथा एक ही वस्तु में दो विरुद्ध आकार मानने पड़ेंगे । द्वितीय पक्ष में अभिमत शब्द से भ्रम या ज्ञानमात्र का अभिधान मानने पर प्रमाणरूप से गृह्यमाण भ्रमों या ज्ञानों में विरोध के कारण विभिन्न विषयत्व की कल्पना को भी अर्थापत्ति मानना होगा । तृतीय पक्ष में भी अर्थापत्ति की अनवसर-प्रक्ति है—"वायु बाह्येन्द्रिय-प्रत्यक्ष नहीं, अरूपी द्रव्य होने से, जैसे—काल", "वायु प्रत्यक्ष है, प्रत्यक्षस्पर्श का आधार होने से, जैसे—घटादि ।" यहाँ दोनों अनुमानों में प्रामाण्याप्रामाण्य का निर्णय नहीं, इनके विरोध से भी अर्थापत्ति का उदय होना चाहिए । चतुर्थ पक्ष में तो असम्भव है ; क्योंकि जो वस्तु जहाँ विशेषणरूप से प्रमित है, उसमें वहाँ विपरीत प्रमाण की विषयता का संशय नहीं हो सकता । यह कभी नहीं देखा गया कि स्थाणु का निश्चय हो जाने पर भी स्थाणु-पुरुष का

संशेरते जना' । नापि पञ्चमः, मिथोविरोधेन तर्कयोरेवाभासत्वात् । किंचोपपादकेन येन विनानुपपद्यमानत्वं तत्प्रमितम् ? न वा ? प्रथमे गृहीतग्राहिकार्थापत्तिर्न प्रमा स्यात् । द्वितीये तु विशेषणासिद्धे तद्विशेषितानुपपद्यमानार्थाप्रतीतौ कल्पकाभावान्नार्थापत्तिरुदयमासादयेत् इत्यलमतिविस्तरेण ।

अभावाख्य प्रमाणमपि दुर्निरूपम् । एव हि वर्णयन्ति—योग्यानुपलब्धिकरणकमर्थाभावज्ञानमभाव, यथेह भूतले घटो नास्तीति ज्ञानम् । न चेदं प्रत्यक्षम्, इन्द्रियसंनिकर्षाजन्य-

प्रकारान्तरेणार्थापत्ति दूषयति—किंचोपपादकेति । येन हि देवदत्तबहिर्भावेन गृहाभावो नोपपद्यते स किं प्रमित ? न वा ? आद्येऽर्थापत्तिवैयर्थ्यमित्याह—प्रथम इति । द्वितीये प्राह—द्वितीये त्वित्यादिना । अन्यथानुपपत्तिदर्शनं हि कल्पकम् । अन्यथेति च कोर्थ. । बहिर्भावव्यतिरेकेणेति । तथाच बहिर्भावेऽज्ञाते तद्विशेषित तदन्तरेणानुपपद्यमानत्वमपि न ज्ञातमिति कल्पकाभावादनुदय एवार्थापत्तेरित्यर्थः । तदुक्त श्रीहर्षकविभि'—'यतान्यत्वं तदसिद्धेरग्रे तदसिद्धे'रिति । एतेन श्रुतार्थापत्तिरपि प्रत्याख्याता वेदितव्या । अनुपपद्यमानवाक्यैकदेशदर्शनेन वाक्यैकदेशकल्पन हि सा । तथाहि—पीनो देवदत्तो दिवा न भुक्ते इति वाक्यैकदेशश्रवणाद्रात्रौ भुङ्क्ते इति वाक्यैकदेशकल्पनम्, न चैषा प्रयुज्यते । पूर्वोक्तन्यायेनानुमानताया दुष्परिहरत्वात् । किञ्च नात्र वाक्यस्यानुपपत्ति । नन्वस्त्येवानुपपत्तिः । शाब्दी ह्याकाङ्क्षा शब्देनैव पूरणीया । नहि पचतीति पद प्रत्यक्षौदनेन निराकाङ्क्षमपि त्वोदनपदात्, इह पीनो देवदत्तो दिवा न भुङ्क्त इति वाक्यस्याकाङ्क्षा रात्रौ भुङ्क्त इत्यनेनैव पूरणीयेति, न तस्य वाक्यस्य सपूर्णक्रियाकारकतया निराकाङ्क्षत्वेन दृष्टान्तवैषम्यात् । अथ पीनो न भुङ्क्त इत्यभोजनेन नान्वेति, भोजनकार्यत्वात्पीनताया इति मतम् हन्त तर्हि नेयमाकाङ्क्षा, अपितु योग्यताविरहः। नच सोऽयस्ति त्रैकाल्यभोजननिषेधे हि स भवेत् । नह्यभुक्त्वा क्षणमपि पीनस्तिष्ठति इति । न चात्र तथा निषेधः, दिवा न भुङ्क्त इति विशेषनिषेधात् । यदि तु विशिष्टकार्यदर्शनाद्रात्रिभोजनानुमानमनुमन्यामहेतरा तदा तु रात्रिभोजनवाक्यकल्पनावकाशः । तदेतदखिलमितिना सूचयन्नुपसहरति—इत्यलमतिविस्तरेणेति ।

इदानी भाट्टाभिमताभावप्रमाण दूषयति—अभावाख्यमिति । तदभिमत लक्षण तावद्दर्शयति—एवं हीति । विषयविषयाविनाभूतव्यतिरिक्तोपलब्धिकारणसंपत्तिर्योग्यता तत्सपत्तौ सत्या योयमर्थोपलब्ध्यभावस्तत्करणकं पदार्थाभावज्ञान तदभावप्रमाणम् । भाट्टवेदान्तिनोर्हि ज्ञानमेव मुख्य प्रमाणम् । प्राकट्यसवेदनयोश्च फलत्वमक्षादा त्वोपचारिक प्रमाणव्यवहारस्तेनाभावज्ञान प्रमाणमित्यर्थ. । शाब्दानुमानिकाभावज्ञानव्यवच्छेदायानुपलब्धिकरणकमित्युक्तम् । अयोग्यस्यानुपलब्धिमात्रादभावमात्रव्यवच्छेदार्थं योग्यपदम् । उदाहरति—यथेति । नन्वज्ञातकरणजत्वात्प्रत्यक्षमेतदिति, तत्राह—न चेदं प्रत्यक्षमिति । ननु सयुक्त-

सशय होता हो । पञ्चम पक्ष भी युक्त नही, क्योकि परस्पर विरोधी तर्कों मे तर्कत्व ही नहीं रहता, तर्काभासता आ जाती है । यह भी एक प्रश्न उठता है कि जिस ( बहिर्भावरूप ) उपपादक के बिना ( गृहाभाव ) मे अनुपपन्नता ह, वह प्रमित है ? या नही ? यदि प्रमित है, तब गृहीत-ग्राही होने से अर्थापत्ति प्रमा कैसे होगी ? यदि प्रमित नही, तब बहिर्भावरूप विशेषण की असिद्धि हो जाने से बहिर्भाव-विशेषित ( बहिर्भाव के बिना ) अनुपपद्यमानत्व अर्थ की प्रतीति न होने पर कल्पक का अभाव हो जाने के कारण अर्थापत्ति का उदय ही न होगा ।

अभावसज्ञक ( अनुपलब्धि ) प्रमाण का भी निरूपण सम्भव नही । इसका निरूपण इस प्रकार किया करते हैं—योग्यानुपलब्धिरूप करण से अर्थाभाव का ज्ञान अभावप्रमाण कहा जाता है, जैसे-

त्वात्। नह्यभावेनेन्द्रियसन्निकर्षः संयोग समवायो वा संभवति, तयोर्भावधर्मत्वात्। नापि विशेषणविशेष्यभाव, तस्यापि मूलसबन्धगर्भतया तन्निवृत्तौ निवृत्ते। अन्तरेणापि मूलसंबन्धं विशेषणविशेष्यभावाङ्गीकारेऽपि तस्य प्रत्यक्षाङ्गताया पुरैव निरासात्। नचेदमनुमानादावन्तर्भवति, चक्षुरादिवदनुपलब्धेरज्ञायमानाया एव करणत्वात्। अन्यथानुपलब्धेरप्यनुपलब्ध्यन्तरोपलभ्यमानतायामनवस्थानादिति।

तदयुक्तम्—　केवलानुपलम्भस्य व्यभिचारनिवारिणी।
　　　　　　योग्यता चेत्कुतो न स्यादनुमानमभावधी ॥३६॥

अनुपलम्भमात्रस्य सुषुप्त्यादावभावज्ञानाजनकतया तद्व्यभिचारवारणाय योग्यानुपलब्धिरिति

---

विशेषणतालक्षणसनिकर्षात्प्रत्यक्षमेतदिति तार्किकास्तत्कथ पृथक्प्रमाणमिति? तत्राह—नह्यभावेत्यादिना। नन्वस्त्येव विशेषणविशेष्यभावसबन्ध इति, तत्राह—नापि विशेषणेति। सबद्धयोर्हि दण्डदेवदत्तयोः पटशौक्ल्ययोर्वा विशेषणविशेष्यभावो दृष्ट इति भावः। ननु मूलसबन्ध विनैव निर्घट भूतलमित्यभावभूतलयोर्विशेषणविशेष्यभावो भवद्भिरेवाङ्गीकृत इति, तत्राह—अन्तरेणापीति। पुरैवेति। प्रत्यक्षधर्मिकानुमानमात्रप्रविलयप्रसङ्गापत्तेर्बहुश उक्तत्वादित्यर्थः। नचासबद्धस्यापि प्रत्यक्षत्वे को दोष इति वाच्यम्, अतिप्रसङ्गस्यैव दोषत्वात्। नच तत्परिहारिका दृश्यानुपलब्धिर्भविष्यतीति वाच्यम्। तथासति तावन्मात्रस्यैव करणत्वेनेन्द्रियवैयर्थ्यात्। नचान्धस्यापि शुक्ले पटे काष्र्ण्याभावप्रमितिप्रसङ्ग., प्रतियोगिग्राहकेन्द्रियेणैवाश्रयग्रहणस्यापेक्षत्वात्। नच व्योम्नि स्पर्शाभावाग्रहणप्रसङ्गः, प्रमाणान्तरनिबन्धनत्वात्तद्ग्रहणस्य। अत एव स्मर्यमाणदेवदत्तकुण्डलादौ देवदत्ताभावग्रहणेपि नानुपपत्तिरिति। अस्तु तर्ह्यनुमान एवास्यान्तर्भावस्तथा च सौगतैरनुपलब्धिलक्षण लिङ्गान्तर स्वीक्रियत इति, तत्राह—न चेदमिति। ज्ञायमानकरण ह्यनुमानम्, इय तु न तथेत्यर्थ.। अथ किमिति ज्ञायमानतयैव करण न भवेत्तत्राह—अन्यथेति। अयमर्थः—अनुपलब्धेरभावत्वेन प्रत्यक्षत्वनिरासात्तद्विशेषमानसप्रत्यक्षत्व दूरोत्सारितम्। नित्यानुमेयत्वाच्च ज्ञानस्य न दृश्यप्रतियोगिकत्वमत एव 'ज्ञानविकल्पानामभ्यात्म भावाभावसवेदनात्' इति सूत्रमप्यनवकाशम्, तस्मादनुपलब्धिरेवानुपलब्धिसवेदनेपि शरणम्। तथाच तत्र तत्रापि तथेत्यनवस्था स्यादिति।

एव समर्थितमभावप्रमाणं दूषयति सिद्धान्ती—तदयुक्तमिति। अस्य तावदनुमानान्तर्भाव श्लोकेन दर्शयति—केवलेति। अत्र तावदनुपलम्भमात्रस्याभावबोधने सुषुप्त्यादौ व्यभिचारात्तन्निवारणाय योग्यतालक्षणविशेषणं प्रक्षिप्यते भवद्भि', तथाच धूमादिवदव्यभिचारेणाभावबोधकत्वात्तज्जन्याभावधीरनुमानं कुतो न स्यात्किंतु स्यादेवेति योजना। एतदेव विवृणाति—अनुपलम्भेति। नन्वव्यभिचारेऽज्ञातकरणत्वा-

---

इन्द्रिय-सन्निकर्ष के बिना ही उत्पन्न हुआ है। अभाव के साथ इन्द्रिय का सयोग या समवाय नही हो सकता, क्योकि वे दोनो सम्बन्ध भावपदार्थों मे ही होते है। विशेषण व विशेष्यभाव भी नहीं बन सकता, क्योकि वह भी (सयुक्त विशेषणतादिरूप से) मौलिक संयोगादि सम्बन्ध से घटित ही होता है, संयोगादि के न होने से वह भी नहीं हो सकता। सयोगादि सम्बन्धनिरपेक्ष विशेषण-विशेष्यभावरूप सम्बन्ध मे प्रत्यक्ष-अंगता का निराकरण पूर्व ही किया जा चुका है। वह अभाव ज्ञान, अनुमान के अन्तर्गत भी नही हो सकता; क्योकि लिंग सदैव ज्ञायमान होकर करण होता है, किन्तु अज्ञायमान अनुपलब्धि को ही नेत्रादि के समान करण माना जाता है। नही तो अनुपलब्धि भी अनुपलब्ध्यन्तर से ही ज्ञायमान होगी—इस प्रकार अनवस्था आ जाती है।

यह निरूपण युक्त नहीं, क्योकि केवल अनुपलम्भ अभाव-ज्ञान का व्यभिचारी है, व्यभिचार-वारक विशेषण है—योग्यत्व, इस प्रकार अव्यभिचरित हेतु से उत्पन्न होने के कारण अभाव का ज्ञान अनुमान क्यो न होगा? अर्थात् सुषुप्त्यादि में केवल अनुपलम्भ रहने पर भी अभाव-ज्ञान नहीं,

विशेष्येतेति चेत्, तर्हि योग्यानुपलब्धेर्धूमादिवदव्यभिचारितयाऽभावज्ञानजनकत्वोपपत्तौ कुत प्रमाणान्तरता ? न चाज्ञायमानतया करणत्वेनानुमानाद्बहिर्भाव, अन्यथानवस्थाप्रसङ्गादिति वाच्यम्, स्वत सिद्धसाक्षिप्रसादादेवोपलब्धिवदनुपलब्धेरपि सिद्धावनवस्थादुस्थताऽभावात् ? अन्यथानवस्थायास्तवापि दुरुत्तरत्वात्। तथाहि–अनुपलब्धे' सर्वथानवगतत्वे तत्करणत्वस्य दुरधिगमत्वात्तदधिगतिरवश्याश्रयणीया। सापि चेदनुपलम्भान्तरात्सिद्ध्येत्तदपि तथैवेति कथ नानवस्था ? एव तत्र तत्र प्रमाणानुपन्यासे तत्तदनुपलम्भसत्ताया एवासिद्धि·। प्रपञ्चितं चैतत्पुरस्तात्।

भवतु वा भिन्ने वानुपलब्धिरनुमानात्तथापि नाभाव प्रमितिकरणम्, विकल्पासहत्वात्। तथाहि—किमुपलब्धे' प्रागभावोनुपलब्धि ? उत प्रध्वस ? किं वान्योन्याभाव ? अत्यन्ताभावो वा ? नाद्य', दृष्टनष्टे घटे उपलब्धिप्रागभावाभावेऽप्यभावप्रमितिदृष्टे । नापि द्वितीयः, प्रागभावात्यन्ताभावप्रमित्यनुत्पत्तिप्रसङ्गात् । प्रतियोग्युपलब्धेरसंजातत्वादेव तत्प्रतियोगिक-

---

न्नानुमानमित्युक्तमिति, तत्राह—नचेति । स्यादय दोषो भवन्नये, अस्मन्मते तु स्वप्रकाशसाक्षिवेद्यत्वाद्वृत्तिरूपज्ञानतदभावयोर्नाज्ञातकरणत्वम्, नाप्यनवस्थेत्याह—स्वत.सिद्धेति । ननु तादृक्साक्षिचैतन्ये सिद्धे सत्यय परिहारो भागी तदेव डुलीक्षीरसदृशम्, प्रमाणाभावादिति तत्राह—अन्यथेति । सर्वथाऽज्ञायमानानुपलब्धेः प्रमितिकरणत्वमपि दुर्भणमिति कदाचिदपि ज्ञप्तिरवश्याश्रयणीया, तथाच त्वदुदीरितानवस्था कृत्या त्वय्येव प्रतिकृत्या स्यादिति साक्षिणैव तवापि रक्षा विधातव्येति खण्डलकार्थः । वक्ष्यते च साक्षिसिद्धौ प्रमाणगणश्चतुर्थपरिच्छेदे । पुरस्तादिति । ईदृश्यनवस्था स्वप्रकाशवादादौ प्रपञ्चिततरेत्यर्थ. ।

एव प्रौढवादेनानुमानान्तर्भाव उक्तः, इदानी भवतु वानन्तर्भावस्तथापि नैतस्य प्रमाणत्व प्रमाणाघात सहते इति प्रामाणिकप्रपञ्चरुचीन्भाट्टान्प्रत्याह—भवतु वेत्यादिना । उपलब्धिप्रागभावलक्षणानुपलब्धेर्नाभावप्रमितिनियतिः, तदभावेपि घटोपलब्धिप्रध्वससमयेऽभावप्रमितिदर्शनादित्याह—नाद्य इति । उपलब्धिप्रध्वसोऽभावप्रमितिकरणमिति पक्ष दूषयति—नापि द्वितीय इति । कारणनिष्ठः कार्यससर्गाभावो हि प्रागभाव', नच तत्प्रमितिसमये प्रतियोग्युपलब्धिप्रध्वसोऽस्ति, उपलब्धेरसजातत्वात् । प्रमितिर्ह्यत्र-

---

अतः केवल अनुपलम्भ व्यभिचारी है । व्यभिचार हटाने के लिए कहा जाता है—योग्यानुपलब्धि । योग्यानुपलब्धि, धूमादि के समान ही अव्यभिचारी होकर अभाव-ज्ञान का जनक होता है, अतः अनुमान प्रमाण से भिन्न अनुपलब्धि प्रमाण के मानने की क्या आवश्यकता ? यह जो कहा था कि अनवस्था के भय से ज्ञायमान अनुपलब्धि को अभाव-ज्ञान का हेतु न मानकर, अज्ञायमान को ही हेतु मानना होगा, अत अनुमान से इसका वैलक्षण्य हो जाता है । वह कहना अयुक्त है, क्योकि हमारे यहाँ अनवस्था का भय नही—स्वत.सिद्ध साक्षी से ही अनुपलब्धि ( उपलब्धिरूप वृत्ति-ज्ञान का अभाव ) प्रकाशित होती है, साक्षी का प्रकाश करने के लिए प्रकाशान्तर की अपेक्षा नही होती । अन्यथा उक्त अनवस्था आपके मत मे भी अनिवार्य होगी, क्योकि सर्वथा अज्ञात होने पर अनुपलब्धि मे कारणता ही सिद्ध न होगी । उसका ज्ञान अवश्य मानना होगा, वह ज्ञान भी यदि अन्य अनुपलब्धि से सिद्ध होगा, तब वही अनवस्था होगी । इसी प्रकार उत्तरोत्तर जिस अनुपलब्धि मे प्रमाण न दिया गया, वह ही असिद्ध होकर अपने पूर्व परिवार को असिद्ध बना डालेगी । इस प्रकार की अनवस्था कई बार दिखाई जा चुकी है ।

अस्तु, मान लेते है अनुपलब्धि को अनुमान से भिन्न, तथापि उसमे प्रमिति-करणता सम्भव नहीं, क्योकि अनुपलब्धि क्या है ? क्या उपलब्धि का प्रागभाव ? या ध्वस ? या अन्योन्याभाव ? या अत्यन्ताभाव ? प्रथम पक्ष मानने पर जहाँ दृष्ट ( उपलब्धि ) घट नष्ट हो गया, वहाँ उपलब्धि-प्रागभाव न रहने के कारण अभाव-प्रमा नही होनी चाहिए । द्वितीय ( उपलब्धि-ध्वस ) पक्ष मानने

प्रध्वंसाभावात्। नापि तृतीय', सत्यपि घटोपलम्भे तदभावप्रतीतिप्रसङ्गात्। नापि चतुर्थ', दृष्टनष्टाद्यभावे प्रमित्यनुदयापत्ते। एतेनोपलम्भससर्गाभाव करणमित्यपि निरस्तम्, तत्रापि प्रागभावादिविकल्पानामप्रतिबद्धप्रसरत्वात्, अन्यतमत्वखण्डनस्य पूर्वमेव कृतत्वात्। नचानुपलब्धे. करणत्वम्, अवान्तरव्यापारानिरूपणात्। नच प्रतियोगिस्मरणमधिकरणग्रहणं वा तद्व्यापार, तयोर्भावविषययोरनुपलम्भाजन्यत्वात्। तज्जन्यस्तज्जन्यजनको व्यापार इति हि तद्विद। केवलानुपलम्भस्य तदजनकत्वेऽपि योग्यता विशिष्टस्यास्त्येव तज्जनकता, तत्तदवि-

---

प्रतियोग्युपलब्धिरभिप्रेता। नच तादृशप्रतियोगिप्रमितिरस्ति, नित्यमविद्यमानार्थत्वादिति भाव। एवमत्यन्ताभावेपि। उपलब्ध्यन्योन्याभावपक्ष दूषयति—**नापीति**। नहि घटोपलब्धिरेव घट इति घटोपलब्धिसमयेपि तदन्योन्याभावस्य सत्त्वात् घटाभावप्रमिति' स्यादित्यर्थ। उपलब्ध्यत्यन्ताभावपक्षे दूषणमाह—**दृष्टेति**। दृष्ट सन्नष्टो यो घटस्तदभावस्य प्रमितिर्न स्यात्। घटोपलब्धेर्जातत्वेन तदत्यन्ताभावाभावादित्यर्थः। आदिशब्दादनुत्पन्नग्रहणम्। ननूपलब्धिससर्गाभावोनुपलब्धिरभावप्रमितिकरणम्, तेन न पूर्वोक्तदोष', प्रागभावादिव्यभिचारेपि ससर्गाभावस्याव्यभिचारादिति, तत्राह—**एतेनेति**। अतिदश विशदयति—**तत्रापीति**। किं ससर्गप्रागभाव ? किं वा तत्प्रध्वसः ? इति विकल्पजालस्य तुल्यत्वादित्यर्थ। अस्तु तर्हि प्रागभावाद्यन्यतम इति, तत्राह—**अन्यतमत्वेति**। एवमनुपलब्ध्यनवधारणान्न सा अभावप्रमितिकरणमित्युक्तम्। इदानी भवतु या काचिदनुपलब्धिस्तथापि तस्याः करणत्व न भवति, तल्लक्षणरहितत्वादित्याह—**न चेत्यादिना**। व्यापारवद्धि कारण कारक तद्विशेषश्च करणमतो व्यापाराऽभावेनुपलब्धे करणत्व न स्यादिति भावः। ननु किमिति व्यापाराभाव., यावता प्रतियोगिस्मरणमधिकरणग्रहण वा व्यापारोस्त्विति, तत्राह—**नचेति**। ननु यद्यपि भावविषययोरधिकरणग्रहणप्रतियोगिस्मरणयो. स्वविषयजन्यतया सस्कारजन्यतया चानुपलब्ध्यजन्यत्वम्, तथापि तद्व्यापारत्व कि न स्यादित्यत आह—**तज्जन्य इति**। तेन करणेन जन्यत्वे सति तत्करणजन्यक्रियाजनका य. असा तद्व्यापार इत्यर्थ.। ननु मास्माभिरनुपलम्भमात्रस्य करणत्वमभिप्रेयत, येन तद्व्यापारश्चिन्त्येतापितु योग्यतावतोनुपलम्भस्य, तादृशस्य चान्तर्भूतभूतलादिरूपत्वेन तज्जन्याधिकरणग्रहणादिव्यापारकत्वादस्त्येव करणत्वमिति शङ्कत—**केवलेति**। योग्यतया

---

**घर प्रागभाव और अत्यन्ताभाव की प्रमा न हो सकेगी, क्योकि जिस घट का प्रागभाव है, उसकी उपलब्धि हुई नही, अत उस उपलब्धि का ध्वस भी नहीं, बिना उसके प्रागभाव-प्रमा कैसे होगी ? इसी प्रकार गगन-कुसुम की उपलब्धि न होने से उस उपलब्धि का ध्वस भी नहीं, अत गगन कुसुम के अत्यन्ताभाव की प्रमा कैसे होगी। तृतीय ( उपलब्धि का अन्योन्याभाव ) पक्ष भी युक्त नहीं, क्योकि घट की उपलब्धि के समय भी उस उपलब्धि का घटादि में अन्योन्याभाव रहने से घटाभाव की प्रमा होने लगेगी। चतुर्थ ( उपलब्धि का अत्यन्ताभाव ) पक्ष मानने पर दृष्ट घट के नष्ट हो जाने पर उसके अभाव की प्रमा उत्पन्न नही हो सकेगी ( क्योकि वहाँ घट की उपलब्धि हो चुकी, अत उसका अत्यन्ताभाव हो नही सकता )। इससे "उपलब्धि का ससर्गाभाव अभाव-प्रमा का कारण है"—यह मत भी निरस्त हो जाता है, क्योकि यहाँ भी प्रागभावादि के विकल्प अबाधगति से अग्रसर होते है। अन्यतमत्व पक्ष का खण्डन पहले ही हो चुका है। अनुपलब्धि मे करणता बन भी नही सकती, क्योकि इसका अवान्तर व्यापार कोई नही। अधिकरण-ग्रहण या प्रतियोगि-स्मरण को भी व्यापार नही माना जा सकता, क्योकि वे दोनो भावविषयक है, अतः अनुपलब्धि से जन्य नही हो सकते और व्यापार वही होता है, जो करण से जन्य और करण-जन्य का जनक हो। यदि शङ्का की जाय कि केवल अनुपलब्धि अधिकरण-ग्रहणादि का जनक न होने पर योग्यता-विशिष्ट अनु-**

नाभूतेतरप्रमाकरणसाकल्यं हि योग्यतेत्यङ्गीकारादिति चेत्, तर्हि भावप्रमितीनामिन्द्रियादिसहकृतभावानुपलम्भकारणजन्यतया तासु तासु प्रमास्वसाधारणकरणत्वप्रवादः प्रत्यस्तमियात्। कश्चायमनुपलम्भ, किं प्रमाभाव ? किं वा ज्ञानमात्राभावः ? नाद्य ; इदं रजतमिति रजतारोपस्थले रजताभावप्रमित्यजनके रजतप्रमाभावेऽतिव्याप्तेः । अन्यथा रजतारोप एव न स्यात्। नापि द्वितीयः, शङ्खधवलिमप्रतिसंधानवत पीत इति भ्रमानुदयप्रसङ्गात्।

अपि च यत्राभाव एव लक्षणतो दुर्निरूप, कुतस्तत्रेदं प्रमाणमिदं प्रमेयमिति विचाराव-

व्यापारवत्ता दर्शयन् तत्स्वरूपमाह—तत्तदविनाभूतेति। तस्माद्विषयात्तदविनाभूताद्विषयसन्निकर्षादेश्चेतरद्यत्प्रतियोगिप्रमितिकरण तत्साकल्यं योग्यता, तथा च तत्तज्ज्ञानान्यवान्तरव्यापाररूपाणि भविष्यन्तीत्यभिप्राय.। तदेतदतिप्रसक्त्या दूषयति—तर्हीति। अस्ति हि घटप्रत्यक्षात्पूर्वक्षणेऽनुपलम्भः। अस्ति च प्रतियोगिप्रमापकमिन्द्रियादिसाकल्यम्। नच विषयसत्ताऽपराधीयात् भावप्रमिति प्रत्यनुगुणत्वादिति सर्वत्र तत्तदिन्द्रियादिसहितानुपलब्धिरेव करणम्। तथाचेन्द्रियादेः करणत्वप्रसिद्धिर्विरुध्येतेत्यर्थः। एवमनुपलब्धेः करणत्वं न सम्भवतीत्युक्तमिदानीमनुपलब्धिरित्यत्र नञा समस्यमानोपलम्भशब्देन प्रमितिर्वा ज्ञानमात्रं वाभिधीयते, उभयथाप्यनुपपत्तिरिति दूषयति—कश्चायमिति। इदं रजतमिति। अस्ति हि तत्र प्रतियोगिरजतप्रमित्यभावः। अस्ति च योग्यता, इन्द्रियादेर्विद्यमानत्वादितरथाधिष्ठानस्याप्यग्रहणप्रसङ्गात्। अथ च न रजताभावप्रमित्युदय इत्यतिव्याप्तिरित्यर्थः। अथ कथमभावप्रमित्यनुदयस्तत्राह—अन्यथेति। नह्यारोप्याभावप्रमितावपि तत्रारोप सम्भवति। अतिप्रसङ्गादिति भावः। द्वितीयेप्यतिव्याप्तिमाह—शङ्खधवलिमेति। यदाहि कश्चिद्धवलः शङ्ख इति चेतसा शङ्खधवलिमानमनुसदधाति, तदापि पीतपित्तोपहतनयनतया पीतः शङ्ख इति भ्राम्यति, तत्र धवलिमानुसधानसमये पीतज्ञान नासीत्। ज्ञानद्वययोगपद्याभावात्। ततश्च योग्यतोपेतपीतोपलम्भाभावस्तदानीमस्ति, नास्ति च पीतशङ्खाभावप्रमित्युत्पत्तिः। उत्तरक्षणे भ्रमदर्शनात्। अतस्तावकलक्षण तत्रातिव्याप्तमित्यर्थः।

इदानीमेतत्प्रसङ्गादभावमात्रस्यैवानिरूपितता दर्शयितुमुपक्रमते—अपिचेत्यादिना। अभाव इत्यत्र नञस्तदन्यत्वतदभावत्वतद्विरोधित्वाथाभिप्रायेण विकल्पत्रयोत्थानम्। इतरे तु षडपि पक्षा वैकल्पिकाः।

पलब्धि अवश्य जनक है, क्योकि घटादिप्रतियोगी और उससे अविनाभूत इन्द्रिय-सन्निकर्ष को छोड़कर इतर भूतलादि निखिल सामग्री का नाम योग्यता है ( अत योग्यता-प्रविष्ट भूतलादि से जन्य होने पर भूतलादि अधिकरण का ग्रहण योग्यताविशिष्ट अनुपलब्धि से भी जन्य माना जा सकता है )। तो यह शङ्का युक्त न होगी, क्योकि इस प्रकार तो भावविषयक प्रमाज्ञान भी इन्द्रियादिरूप योग्यता-विशिष्ट भावानुपलब्धि ( जो कि प्रतियोगि-प्रत्यक्ष के पूर्व विद्यमान है ) से जन्य माने जा सकते है, इन्द्रिय, लिंगादि मे प्रमा-करणत्व-व्यवहार समाप्त हो जायगा। यह अनुपलम्भ भी क्या है ? क्या प्रमाभाव ? या ज्ञानमात्र का अभाव ? प्रथम पक्ष युक्त नही, क्योकि "इदं रजतम्—इस प्रकार रजतारोप स्थल पर रजताभाव-प्रमिति के अजनक रजतविषयक प्रमा के अभाव में अतिव्याप्ति ह ती है, अन्यथा ( यदि रजत-प्रमा की उत्पत्ति मान ली जाय, तब ) रजत का आरोप ही न हो सकेगा। द्वितीय ( ज्ञानमात्र का अभाव ) पक्ष मानने पर जिसे शंखगत श्वेतता का स्मरण ज्ञान है, उसे "पीतः शखः"—इस प्रकार का भ्रम नही होना चाहिए ( क्योकि श्वेतता-स्मरण समय पीतता ज्ञान नही हो सकता, अत उस समय योग्यता-विशिष्ट पीतत्वानुपलब्धि के होने से पीतत्वाभाव का निश्चय हो जायगा, फिर वहाँ पीतत्व-भ्रम कैसे होगा ?

दूसरी बात यह भी है कि जहाँ अभाव के लक्षण का ही निरूपण नही हो सकता, वहाँ 'यह प्रमाण है, यह प्रमेय है'—इस प्रकार का विचार ही कैसे उठेगा ? जिज्ञासा होती है—अभाव क्या

तार ? तथाहि—कोयमभाव ? (१) भावादन्यो वा ? (२) भावत्वानधिकरणं वा ? (३) भावविरोधी वा ? (४) भावेन स्वभावप्रत्यासन्नो वा ? (५) नास्तीति प्रत्ययविषयो वा ? (६) प्रतियोगिसापेक्षनिरूपणो वा ? (७) अस्तीति बुद्धेरविषयो वा ? (८) निर्विकल्पकबुद्धेरविषयो वा ? (९) भावलक्षणरहितो वा ? नाद्य, भावस्यापि भावादन्यत्वेनातिव्याप्तेः। न द्वितीय ; अनधिकरणपदेनाधिकरणत्वाभावविवक्षायामात्माश्रयत्वात्। न तृतीय, किञ्चिद्भावविरोधस्य भावेऽपि सद्भावादतिव्याप्तेः, सर्वभावविरोधित्वस्याभावेऽप्यभावेनासंभवित्वात्। न खलु घटाभाव सर्वभावविरोधी, सति घटाभावे विश्वाभावप्रसङ्गात्। विरोधिशब्देन च तादात्म्यासहिष्णुत्वविवक्षाया भावेष्वपि भावात्। नापि चतुर्थ , समवायादावपि भावात्। नापि पञ्चम , इह भूतले घटो नास्तीति घटभूतलयोरपि विशिष्टाभावबुद्धिविषयत्वात्, अनुगताकारानिरूपणाच्च। नापि षष्ठ , ह्रस्वदैर्घ्यादिष्वपि भावात्। न सप्तम. ; घटस्याभावोस्तीत्यभावस्याप्यस्तिप्रत्ययविषयत्वेनासंभवित्वात्। नाप्यष्टमः, ब्राह्मणत्वादिष्वपि भावात्।

---

**स्वभावप्रत्यासन्न इति**। नहि भूतलघटाभावयोरन्यः सम्बन्धः प्रत्यासत्तिः, सम्बन्धान्तराभावादित्यर्थ.। **न द्वितीय इति**। भावत्वानधिकरणत्व नाम किं तदधिकरणत्वाभाव.? किंवा तदधिकरणत्वान्यत्वम्? द्वितीये भावेष्वतिव्याप्ति.। नहि भावत्वाधिकरणत्वमेव भाव.। प्रथमे प्राह—**अनधिकरणेति**। एतेन समवायान्यत्वे सत्यसमवाय्यभाव इति मानमनोहरलक्षणमपि निरस्तम्। असमवायित्वविवचने एव यथोक्तदूषणप्रचारादिति। **भावेपीति**। गोत्वाश्वत्वादावित्यर्थ । अभावस्य सर्वभावविरोधित्वाभावमेव विवृणाति—**न खल्विति**। किंचिद् भावविरोधित्व किं भावघातकत्वम्? किं वा भावासहस्थायित्वम्? किं वा भावतादात्म्यराहित्यम्? त्रिधापि भावेष्वतिव्याप्तिरित्यभिसंधिराह—**विरोधिशब्देन चेति**। **समवायेति**। नहि समवायस्य समवायिभ्या स्वभावव्यतिरेकेण प्रत्यासत्त्यन्तरमस्ति, अनवस्थादिदोषात्। आदिशब्देन च प्रमेयत्वादि गृह्यते। **इह भूतल इति**। एक हीद ज्ञान भूतलघटघटताभावग्राहीति तयोरप्येतत्प्रत्ययविषत्वादतिव्याप्तिरित्यर्थ.। किंच प्रतीतिविषयत्व नाम प्रतीतिश्च विषयश्च, तौ परस्पर व्यावृत्ताविति अनुगतलक्षणाभावादव्याप्तिरित्याह—**अनुगतेति**। निर्विकल्पकबुद्ध्यविषयत्वमिति पक्ष दूषयति—**नाप्यष्टम**

---

है ? क्या (१) भावअन्य या (२) भावत्वानधिकरण ? या (३) भाव-विरोधी ? या (४) भाव के साथ स्वरुप सम्बन्ध से सम्बद्ध ? या (५) नास्ति—इस प्रकार की प्रतीति का विषय ? या (६) प्रतियोगिसापेक्ष निरूपणीय ? या (७) 'अस्ति'—इस प्रतीति का अविषय ? या (८) निर्विकल्पक बुद्धि का अविषय ? या (९) भाव-लक्षण-रहित ? प्रथम ( भावादन्यत्वम् ) लक्षण भाव मे अतिव्याप्त है, क्योकि भाव भी भावान्तर से अन्य होता है। द्वितीय ( भावत्वानधिकरणत्वम् ) मे अनधिकरण-पद से अधिकरणत्वाभाव की विवक्षा में आत्माश्रय होता है। तृतीय ( भावविरोधित्वम् ) लक्षण भी भाव मे अतिव्याप्त है, क्योकि यत्किञ्चित् भाव-विरोधित्व भाव मे भी होता है। सर्वभाव-विरोधित्व तो अभाव में भी नहीं होता, नही तो एक घटाभाव के होने पर विश्व का अभाव हो जायगा। 'विरोधी' शब्द से तादात्म्याभाव की विवक्षा करने पर भी भाव में अतिव्याप्ति रहती है, क्योकि घट में पट का तादात्म्य नही होता। चतुर्थ ( भावेन स्वभावप्रत्यासन्नत्वम् ) लक्षण समवाय मे अतिव्याप्त है। पञ्चम ( नास्तिप्रतीतिविषयत्वम् ) लक्षण घट भूतलादि भाव में अतिव्याप्त है, क्योकि "इह भूतले घटो नास्ति"- इस प्रतीति की विषयता उनमें भी है ( प्रतीतिविषयत्व का अनुगत आकार भी नही हो सकता। षष्ठ ( प्रतियोगिसापेक्षनिरूपणत्वम् ) लक्षण ह्रस्वत्वादि मे अतिव्याप्त है ; सप्तम ( अस्तिप्रतीत्यविषयत्वम् ) लक्षण असम्भव है, क्योंकि "घटाभावोऽस्ति"—इस प्रकार

"संस्थानेन घटत्वादि ब्राह्मणत्वादि जन्मत ।
क्वचिदाचारतश्चापि सम्यग्राजानुपालितात् ॥ (श्लो० वा० वन० २९)
तैलाद्घृतं विलीन च गन्धेन च रसेन च ।" (श्लो० वा० वन० २७)

इत्यादिन्यायेन तेषामपि सविकल्पकमात्रविषयत्वात् । न च नवम , राहित्यशब्देनाप्यभावाभिधानादात्माश्रयत्वापत्ते । किंच किंचिद्भावलक्षणरहितत्वे ऽ भावेष्वपि प्रसङ्ग , सर्वभावलक्षणरहितत्वशब्देन च सर्वभावलक्षणत्वानधिकरणत्वविवक्षायामेकैकस्यापि भावस्य तत्त्वादतिव्याप्ति । सर्वभावलक्षणाभावाधिकरणत्वाभिधाने च तेष्वेव लक्षणाभावेष्वव्याप्ति. । तेषां स्वाधिकरणत्वाभावात् । तेष्वभावान्तराभ्युपगमे चाननुगमप्रसङ्ग ।

किंचेद भावत्व यदनधिकरणत्वमभाव ? (१) किमस्तीतिप्रत्ययविषयत्वम् ? ( २ ) नास्ती-

---

इति । ब्राह्मणत्वादीनामपि न निर्विकल्पकबुद्धिविषयत्वम् , व्यञ्जकविशेषप्रतीत्यभावे तेषामप्रतीतेरतोतिव्याप्तिरित्यर्थ. । एतदेव भट्टवार्तिकेन द्रढयति—**संस्थानेनेति** । सस्थान कम्बुग्रीवादिलक्षण तत्सहकृतमिन्द्रियं च घटत्वादेर्ग्राहकमित्यर्थः । जन्मत , अविप्लुतब्रह्मचर्यो ब्राह्मणः स्यादित्यादिविशेषणात् , क्वचिच्च युधिष्ठिरप्रभृतिसम्यग्राजानुपालिताटाचारात् , विलीनं घृत गन्धेन च रसेन च तैलाद्भेदेन ज्ञायत इति शेष. । भावलक्षणरहितो वेति पक्ष दूषयति—**न च नवम इति** । अन्यत्वाभिधाने च भावेऽपि भावादतिव्याप्तिरित्यपि द्रष्टव्यम् । भावलक्षणशब्देन सर्वभावलक्षणमभिधीयते ? किञ्चिल्लक्षण वा ? द्वितीये प्राह—**किंच किंचिद्भावेति** । प्रथमेति भावाना यानि सर्वाणि लक्षणानि तदनधिकरणत्व विवक्षितम् ? भावलक्षणाना ये सवऽभावास्तदधिकरणत्वं वा ? आद्ये प्राह—**सर्वभावेति** । सर्वभावलक्षणत्वमिति च बहुव्रीहिः । सर्वभावलक्षणवत्त्वमिति यावत् । एकैकभावस्य सर्वभावलक्षणवत्त्वाभावादतिव्याप्तिरभावलक्षणस्येत्यर्थः । द्वितीये दूषणमाह—**सर्वेति** । भावलक्षणाना ये सर्वेऽभावास्तदधिकरणमित्यभिधाने च तत्तल्लक्षणाभावेष्वव्याप्तिः , नहि तत्तदभावाना सर्वाभावाधिकरणत्वम् , स्वाधिकरणत्वाभावदित्यर्थ. । अथ चैकैकभावलक्षणाभावा अपि बहवोऽतस्तत्तल्लक्षणाभावान्तराधिकरणत्वात्तदभावानामप्यस्त्येव सर्वाभावाधिकरणत्वमिति मतम् , तथापि न सर्वाभावाधिकरणत्वम् , स्वाधिकरणत्वाभावादेव । अथ तत्तदभावविशेषाधिकरणत्वं लक्षण तर्हि तेषामेव विशेषाणा स्वाधिकरणत्वाभावेनैकैकविशेषाधिकरणत्वविवक्षायामितरेषु लक्षणाननुगति । एवमितरविशेषविवक्षायामपीत्यव्याप्तिरित्याह—**अभ्युपगम इति** ।

किंच भावलक्षणानामेव दुर्निरूपत्वात्तदधीननिरूपणाभावापि दुर्निरूप इति हृदि निधाय भावलक्षण-

---

अस्ति-प्रतीति की विषयता ही अभाव मे है । अष्टम (निर्विकल्पबुद्ध्यविषयत्वम्) लक्षण ब्राह्मणत्वादि में अतिव्याप्त है , ब्राह्मणत्वादि भी निर्विकल्प बुद्धि के विषय नही, कुमारिल मिश्र ने कहा है कि कम्बुग्रीवादिमत्त्वरूप सस्थान विशेष से घटत्वादि का निश्चय होता है, ब्राह्मणत्वादि का माता-पिता के ज्ञान से, कही राजानुपालित आचार से निश्चय होता है । एव पिघले हुए घी को सूँघने और खाने से निश्चय किया जाता है कि यह तैल नही घी है ।' इस प्रकार ब्राह्मणत्वादि, सविकल्पक ज्ञान के ही विषय सिद्ध होते है । नवम ( भावलक्षणरहितत्वम् ) लक्षण मे 'रहितत्व' शब्द से अभाव का अभिधान होने से आत्माश्रय दोष है । यत्किञ्चित् भाव-लक्षण-रहितत्व भाव मे भी अतिव्याप्त है, 'सर्वभाव-लक्षण रहितत्व' शब्द से सर्वभावो के सर्व लक्षणों के अनधिकरणत्व की विवक्षा करने पर प्रत्येक भाव मे अतिव्याप्ति है और सर्व भाव-लक्षणों के सर्व अभावाधिकरण व की विवक्षा करने पर उन लक्षणाभावो में ही अव्याप्ति होती है , क्योकि स्वाधिकरणता न रहने से उनमे सर्वाभाव की अधिकरणता नहीं रहती । उनमे भी अन्य लक्षणाभाव मानने पर अननुगम की प्रसक्ति होगी ।

यह भावत्व भी क्या है जिसकी अनधिकरणता अभाव का लक्षण है ? क्या (१) अस्ति—इस

तिप्रत्ययाविषयत्वं वा ? ( ३ ) प्रतियोग्यनपेक्षनिरूपणत्व वा ? ( ४ ) निर्विकल्पबुद्धिबोध्यत्वं वा ? ( ५ ) षड्लक्षणलक्षितत्व वा ? ( ६ ) षड्लक्षणान्यतमलक्षणलक्षितत्व वा ? नाद्य , घटस्याभावोऽस्तीत्यस्तिप्रत्ययविषयत्वेनाभावेऽतिव्याप्ते । न द्वितीय , भूतले घटो नास्तीति प्रत्ययविषयस्यापि घटादेर्भावत्वात् । न तृतीय , प्रतियोग्यपेक्षनिरूपणे ह्रस्वदीर्घत्वादावव्याप्ते । न चतुर्थ , निर्विकल्पबुद्धे प्रागूर्ध्वमपि घटादेर्भावात् । तदत्यन्ताभावानधिकरणत्वे चात्यन्ताभावे एवातिव्याप्ति । तत्राप्यत्यन्ताभावान्तराभ्युपगमे लक्षणस्याननुगम । न पञ्चम , षड्लक्षणलक्षितत्वस्य प्रत्येक द्रव्यादिष्वभावेनाव्याप्ते । न षष्ठ , अन्यतमत्वस्य प्रागेव निरस्तत्वात् ।

कश्चाय प्रागभाव ? विनाश्यभाव इति चेत् , न , विनाशिशब्देनोत्पत्तिमदभाववत्त्वाभिधाने लक्षणस्यासभवित्वात् । नहि प्रागभावस्य घटव्यतिरेकेणोत्पत्तिमानन्योऽभावो निवृ-

---

मपि खण्डयति—**कि चेदमिति** । **यदनधिकरणत्वमिति** । यल्लक्षणानधिकरणत्वमित्यर्थ , अस्यैवानन्तर प्रकृतत्वात् । **षड्लक्षणेति** । द्रव्यादीना षण्णा यानि लक्षणानि तैर्लक्षितत्व चेत्यर्थ. । नास्तीति प्रत्ययाविषयत्वमिति द्वितीयपक्षेऽव्याप्तिमाह—**भूतले घट इति** । ननु निर्विकल्पकबुद्धिविषयत्व नाम तद्विषयत्वात्यन्ताभावानधिकरणत्व विवक्षितम् , तेन न प्रागूर्ध्वप्रयुक्ताव्याप्तिरिति, तत्राह—**तदत्यन्तेति** । योऽयमत्यन्ताभावो लक्षणत्वेनाभिहितस्तस्मिन्नेव स्वानधिकरणेऽतिव्याप्तिरित्यर्थ । उत्तरो ग्रन्थोऽनन्तरमेव कृतोत्पाद । **न पञ्चम इति** । षण्णा यानि लक्षणानि न तैरेकैकलक्षितत्वमित्यव्याप्तिरित्यर्थ । अस्तु तर्हि षष्ठ , तथा च शिवादित्यमिश्रेणोक्तमिति, तत्राह—**न षष्ठ इति** । एव भावलक्षणानिरूपणादपि तन्मुखेनाभावनिरूपण न सभवति, प्रकारान्तरेण निरूपण पुरस्तादेव निरस्तम् ।

एवमभावमात्रलक्षण खण्डयित्वा तद्विशेषलक्षणमपि खण्डयति—**कश्चायमिति** । प्रध्वसेऽतिव्याप्तिपरिहाराय विनाशिग्रहणम् । घटादिनिवर्तनायाभावग्रहणम् । अत्र कि विनाशिशब्देन विनष्टो घट इत्यादिष्विवोत्पत्तिमदभाववत्त्वमभिधीयते ? किं वाऽभाववत्त्वम् ? चरमे प्रध्वसादावतिव्याप्ति. , तस्याप्यभावप्रतियोगित्वात् । आद्यस्त्वसभवीत्याह—**विनाशिशब्देनेति** । प्रागभावस्य निवृत्तिरित्यन्वय । अत्र कि प्रत्यक्षात् घटव्यतिरेकेणाभावनिवृत्ति. स्वीक्रियते ? उपपत्तिबलाद्वा ? नाद्य इत्याह—**अनुपलम्भादिति** । तदुक्त तात्पर्यटीकायामाचार्यवाचस्पतिना—"नो खल्वभावाभावो नाम कश्चिदन्यो भावान्नापि भावाभावो-

---

प्रतीति का विषयत्व ? या (२) नास्ति—इस प्रतीति का अविषयत्व ? या (३) प्रतियोगी की अपेक्षा के बिना ही निरूपणीयत्व ? या (४) निर्विकल्पक बुद्धि-बोध्यत्व ? या (५) छह लक्षणो से लक्षितत्व ? या छह लक्षणो मे से अन्यतम लक्षण-लक्षितत्व ? प्रथम ( अस्तिप्रतीतिविषयत्वम् ) लक्षण घटाभाव मे अतिव्याप्त है । द्वितीय ( नास्तिप्रतीत्यविषयत्वम् ) लक्षण घटादि मे अव्याप्त है , क्योकि "भूतले घटो नास्ति"—इस प्रतीति की विषयता ही घटादि मे है । तृतीय ( प्रतियोग्यनपेक्षनिरूपणत्वम् ) लक्षण ह्रस्वत्वादि मे अव्याप्त है । चतुर्थ ( निर्विकल्पकबुद्धिबोध्यत्वम् ) लक्षण भी घटादि में अव्याप्त है , क्योकि निर्विकल्प बुद्धि के पूर्व और पश्चात् भी घटादि है । निर्विकल्पक बुद्धि-बोध्यत्व के अत्यन्ताभाव की अनधिकरणता अर्थ करने पर अत्यन्ताभाव मे ही अतिव्याप्ति होती है । वहाँ भी अन्य अत्यन्ताभाव मानने पर लक्षण मे अननुगम दोष होता है । पञ्चम ( षड्लक्षणलक्षितत्वम् ) लक्षण प्रत्येक द्रव्यादि मे न होने से अव्याप्त है । षष्ठ ( षड्लक्षणान्यतमलक्षणलक्षितत्वम् ) लक्षण भी सम्भव नही , क्योकि अन्यतमत्व का निराकरण हो चुका है ।

यह प्रागभाव क्या वस्तु है ? यदि कहे विनाशी अभाव का नाम प्रागभाव है , तो यहाँ 'विनाशी' शब्द का जन्याभाववत्त्व अर्थ करने पर लक्षण असम्भवी हो जाता है , क्योकि प्रागभाव का अभाव ( निवृत्ति ) घटादि प्रतियोगी से भिन्न कोई अनुभव मे नहीं आता, प्रागभाव का अभाव तो

प्रागेव निरस्तत्वात् । अत्यन्ताभावानामनेकत्वेऽपि सर्वप्रयत्नात्यन्ताभावानधिकरणत्वं लक्षणम् ? उत यत्किंचित्प्रयत्नात्यन्ताभावानधिकरणत्वम् ? न प्रथमः, लक्षणस्यासंभवित्वात् । स्वप्रयत्नात्यन्ताभावानधिकरणत्वेऽपि चेतनान्तरप्रयत्नात्यन्ताभावाधिकरणत्वात् । न चरमः; प्राचीनदोषानुषङ्गात् । किंचैकदेशवृत्तीनां संयोगविभागशब्दात्मविशेषगुणानामव्याप्यवृत्तित्वं नाम स्वात्यन्ताभावसमानाधिकरणत्वमित्युपगच्छतां कथमात्मनः प्रयत्नात्यन्ताभावानधिकरणत्वं संभवेत्? प्रयत्नात्यन्ताभावस्यापि तत्रैव वृत्तेः । न च स्वतन्त्रः कर्तेत्यपि युक्तम्, स्वातन्त्र्यानिरुक्तेः । तथाहि—किं कारकान्तरनिरपेक्षतया फलजनकत्वं स्वातन्त्र्यम् ? किं वा कारकाप्रयोज्यत्वे सति तत्प्रयोक्तृत्वम् ? नाद्यः, असंभवात्, न हि करणादिनिरपेक्षस्य कर्तुः फलसाधकता दृष्टचरी । न द्वितीयः, सेश्वरवादे सर्वचेतनानामीश्वरप्रयोज्यत्वात् । अनीश्वरवादेऽपि राजादिप्रेरितभृत्यादेरकर्तृत्वापत्तेः । न च तत्र शरीरादेरेव प्रेर्यत्वम्, नात्मन इति

---

भावान्तरवत्त्वान्नातिव्याप्तिरिति, तत्राह—अत्यन्ताभावानामिति । असंभवित्वमेव दर्शयति—स्वप्रयत्नेति । नह्येकस्यैव सर्वपुरुषप्रयत्नाः संभवन्ति, सर्वसर्वशक्तित्वप्रसङ्गादित्यर्थः । प्राचीनेति । यत्किंचित्प्रयत्नात्यन्ताभावानधिकरणत्वमेकैकप्रयत्नात्यन्ताभावेष्वेवास्ति, स्वस्वाधिकरणत्वाभावादतोऽतिव्याप्तिस्तदवस्थेत्यर्थः । किंच त्वद्दर्शनपराहतं चेदं कर्तृलक्षणमित्याह—किंचेति । यदिदं संयोगादीनामव्याप्यवृत्तित्वं भवद्भिराद्रियते, तन्नांशवृत्तित्वम्, निरंशत्वादात्मादीनाम्, सांशेऽप्यप्रत्यक्षतापत्तेः । तस्मात्तत्रैव वृत्तस्तत्रैवावृत्तिरिति, स्वात्यन्ताभावसमानाधिकरणत्वमेवाव्याप्यवृत्तित्वमिति मन्तव्यम् । तथा चात्मैव प्रयत्नात्यन्ताभावाधिकरणमिति तदनधिकरणत्वलक्षणं कर्तृत्वमसंभव्येवेति खण्डलकार्थः । प्रसङ्गात्कर्तृत्वलक्षणान्तरमपि दूषयति—न चेति । तत्प्रयोक्तृत्वं कारकप्रयोक्तृत्वमित्यर्थः । कुठारादिकारकप्रयोक्तरि हस्तादावतिव्याप्तिवारणाय कारकाप्रयोज्यत्वविशेषणम् । असंभवमेव विवृणोति—न हि करणादीति । द्वितीयेऽपि तार्किकमतेऽस्मदादिकर्तृष्वव्याप्तिरित्याह—सेश्वरेति । तेष्वव्याप्तिरिति शेषः । अथानीश्वरवादिनः प्रति किं दूषणमिति ? तत्राह—अनीश्वरेति । तत्रापि भृत्यादिषु कर्तृष्वव्याप्तिरित्यर्थः । ननु तत्र कर्तुरात्मनो न प्रेर्यत्वमुभयत्र, किं तर्हि शरीरस्यैवातो नाव्याप्तिरिति, तत्राह—न च तत्रेति । न तावदीश्वरादिः शरीरमात्रं प्रेरयति, तस्यासमर्थत्वात्तत्र । ततश्चेतनविशिष्टं शरीरं प्रेरयतीति वक्तव्यम्, तथा च विशेषणीभूतचेतनस्यापि प्रेर्यत्वमस्त्येवेत्यर्थः । जीवस्य निष्क्रियत्वेनेश्वरस्य तत्प्रेरकत्वं कथं स्यादिति? तत्राह—

---

प्रयत्नात्यन्ताभावों का अनधिकरणत्व विवक्षित है ? या किसी एक प्रयत्नात्यन्ताभाव का अनधिकरणत्व ? प्रथम पक्ष मानने पर असम्भव है, क्योंकि प्रत्येक कर्त्ता, अपने प्रयत्न के अत्यन्ताभाव का अनधिकरण होने पर भी चेतनान्तर के प्रयत्न के अत्यन्ताभाव का अधिकरण ही होता है । द्वितीय पक्ष में तो वही प्रयत्नात्यन्ताभाव में अतिव्याप्ति दोष बना रहता है । दूसरी बात यह भी है कि जो लोग संयोग, विभाग, शब्द और आत्मा के विशेष गुणों को अव्याप्यवृत्ति अर्थात् स्वात्यन्ताभाव समानाधिकरण मानते हैं, उनके मत में आत्मा, प्रयत्न के अत्यन्ताभाव का अनधिकरण कैसे होगा ? प्रयत्नात्यन्ताभाव भी तो वहाँ रहता है । "स्वतन्त्रः कर्त्ता"—यह वैयाकरणों का निर्वचन भी असंगत है; क्योंकि 'स्वातन्त्र्य' का क्या अर्थ है ? क्या कारकान्तर-निरपेक्ष फल-जनकत्व ? या कारकों से अप्रयोज्य होकर कारकों का प्रयोक्तृत्व ? प्रथम कल्प में असम्भव है, क्योंकि करणादि से निरपेक्ष होकर कर्त्ता किसी फल का साधन कैसे कर सकता है ? द्वितीय पक्ष मानने पर ईश्वरवाद में सभी जीवों में ईश्वर-प्रयोज्यत्व रहने के कारण अव्याप्ति और अनीश्वरवाद में भी राजादि की प्रयोज्यता रहने से भृत्यादि में अकर्तृत्वापत्ति होती है । 'ईश्वरादि की प्रयोज्यता शरीर में रहती है चेतन में नहीं—यह नहीं कह सकते; क्योंकि केवल शरीर में प्रयोज्यत्व नहीं रह सकता, चेतन-विशिष्ट शरीर

वाच्यम्; चेतनविशिष्टस्य शरीरस्य प्रेर्यतया चेतनस्यापि प्रेर्यत्वात्। प्रेरकत्वं च तदनुकूलप्रयत्नाधारत्वम्, तच्चेश्वरे जीवविषयमस्त्येव। न चेश्वरव्यतिरिक्तकारकाप्रयोज्यत्वम्, अनीश्वरवादे विशेषणवैयर्थ्यात्, भृत्यादेस्तु पूर्वोक्तन्यायेनाकर्तृत्वप्रसङ्गाच्च। प्रमात्वानिरुक्तेरेव तद्विशेषितसार्वत्रिकत्वानिरुक्तिः। तज्जन्यस्तज्जन्यजनको व्यापार इत्यपि न; तच्छब्देन सर्वस्य कारणस्याभिधाने लक्षणस्यासंभवित्वात्। न ह्येको व्यापारः सर्वकारणजन्यः, सर्वकारणजन्यजनको वा। कारणविशेषाभिधाने तु लक्षणस्याननुगमः। तदेवं प्रत्यक्षादिप्रमाणानां दुर्निरूपत्वाज्जगत्कारणब्रह्मात्मतत्त्वप्रतिपत्तिपराणां वेदान्तवचसां न तद्विरोधगन्धोऽपीति सिद्धम्।

ननु तथापि न ब्रह्मणो जगत्कारणत्वम्, परमाणूनामेव जगत्समवायिकारणत्वात्।

प्रेरकत्वं चेति। भृत्यशरीरप्रेरणानुकूलभृत्यप्रयत्नजननानुकूलप्रयत्नवत्त्वं राज्ञो भृत्यप्रेरकत्वं यथा लोके तथा जीवप्रयत्नजननानुकूलं चेत् प्रयत्नवत्त्वमीश्वरेऽप्यस्तीति जीवप्रेरकत्वमीश्वरस्य संभवतीति भावः। अस्ति च साक्षादेव प्रेरकत्वमित्याह—तदनुकूलेति। ईश्वरनरेश्वरादेरपि तत्तज्जीवानुगुणप्रयत्नाधारत्वादस्ति तद्रूपं प्रेरकत्वमित्यर्थः। एतेन निष्क्रियस्य जीवस्य कथमीश्वरप्रेर्यत्वमिति प्रत्युक्तम्। ननु तर्हीश्वरव्यतिरिक्ताकारकाप्रयोज्यत्वं स्वातन्त्र्यं विवक्षितम्, तथा च नाव्याप्तिरिति, तत्राह—न चेश्वरेति। ईश्वरप्रयोज्यत्वसंग्रहार्थं हीदं विशेषणम्, न च तदनीश्वरवादिनां मीमांसकानामस्ति यदर्थं विशेषणमित्याह—अनीश्वरेति। भवतु तं प्रति दूषणम्, मां प्रति किं दूषणमिति? तत्राह—भृत्यादेस्त्विति। यच्च प्रमासार्वत्रिकत्वनिर्वचनं कृतम् तदपि दूषयति—प्रमात्वानिरुक्तेरिति। व्यापारलक्षणमपि दूषयति—तज्जन्य इति। अत्र किं तच्छब्देन कारककारणमात्रमभिधीयते? तद्विशेषो वा? नाद्यः, असंभवादित्याह—तच्छब्देति। असंभवं विवृणोति—न ह्येक इति। द्वितीये प्राह—कारणविशेषेति। तच्छब्देन कारणविशेषाभिधाने कारणान्तरव्यापाराणां तज्जन्यत्वाभावात्तज्जन्यजनकत्वाभावाच्चाव्याप्तिः स्यादिति भावः। एवं सामान्यतो विशेषतश्च प्रमाणानां दुर्निरूपताप्रतिपादनस्याविरोधोपयोगमाह—तदेवमिति। अत्र चेश्वरो द्रव्योपादानवृत्तिद्रव्यत्वावान्तरजातिमानश्रावणविशेषगुणवत्त्वात्तन्त्वादिवदिति तार्किकं प्रति तथा विप्रतिपन्नं कार्यद्रव्यमात्मोपादानकम् उपादानवत्त्वादात्मघटसङ्गवत्। न च विमतमात्मानुपादानकं द्रव्यत्वादात्मवदिति सत्प्रतिपक्षता, अनुपादानकत्वस्यैव तत्रोपाधित्वात्। न च समवायिगतविशेषगुणस्य कार्ये समानजातीयारम्भनियमोऽपि, चित्रपटारम्भकनीलपीततन्तुषु तदभावादित्यादितर्कैस्तदनुगृहीतागमाच्च ब्रह्मणो जगत्कारणत्वमवगन्तव्यम्।

जगत्कारणं ब्रह्मात्मतत्त्वमित्युक्तमसहमानाः परमाणुकारणवादिनो वैशेषिकनैयायिकादयः प्रत्यवतिष्ठन्ते—ननु तथापीति। तत्किं परमाणूनामेव जगत्कारणत्वम्? तथा च गतमीश्वरस्य निमित्तकारणत्वेनेत्यपरा-

से ही प्रयोज्यता माननी होगी, फिर तो विशेषणभूत चेतन मे भी प्रयोज्यता अनिवार्य है। निष्क्रिय ईश्वर मे प्रयोजकता नही बन सकती—यह बात भी नही, क्योकि जीव-प्रेरणानुकूल प्रयत्न का आधारत्व ही प्रयोजकत्व है, वह ईश्वर मे है ही। कारक का ईश्वर भिन्नत्व विशेषण लगा नही सकते, क्योकि अनीश्वरवाद मे विशेषण व्यर्थ है। इस विशेषण के रखने पर भी ईश्वर से भिन्न राजादि की प्रयोज्यता रहने पर भृत्यादि मे अव्याप्ति बनी रहती है। प्रमात्व का निर्वचन न हो सकने के कारण प्रमात्व-विशेषित सार्वत्रिकत्व का भी निर्वचन नही हो सकता। व्यापार का जो यह लक्षण किया "तज्जन्यस्तज्जन्यजनको व्यापार"। वहाँ 'तत्' शब्द से समग्र कारणो का अभिधान होने पर लक्षण असम्भवी हो जाता है, क्योकि कोई एक व्यापार न तो समग्र कारणो से जन्य होता और न समग्र कारणो से जन्य का जनक ही होता है। 'तत्' शब्द से कारणविशेष का अभिधान मानने पर अनुगत लक्षण नही बन सकता। इस प्रकार प्रत्यक्षादि प्रमाणो का निरूपण न हो सकने के कारण जगत् के कारणभूत ब्रह्म से आत्मरूपत्व के प्रतिपादक वेदान्त वाक्य सर्वथा विरोध-शून्य है।

**आरम्भवादोत्थापन**—तथापि ब्रह्म जगत् का कारण नही हो सकता, परमाणु ही जगत् के सम-

ननु परमाणव एव न सन्ति, प्रमाणविधुरत्वात्। न तावदणुपरिमाणतारतम्यं क्वचिद्विश्रान्तम् परिमाणतारतम्यत्वात् महत्परिमाणतारतम्यवदित्यनुमान मानम् , अणुपरिमाणशब्देनाणुनिष्ठपरिमाणविवक्षाया त्वदभिमताणूनामेवासिद्धौ तत्परिमाणस्य तत्तारतम्यस्य वाऽप्रसिद्धत्वादाश्रयासिद्धेः, तेषु परिमाणतारतम्यानङ्गीकाराच्च। महत्त्वापकर्षतारतम्यस्य च क्वचिद्विश्रान्तिसाधने त्रसरेणुष्वेव तद्विश्रान्तिसिद्धे सिद्धसाधनत्वात्।

"जालान्तरगते भानौ योऽणीयो दृश्यते रजः।
परं तत्परमाणूनां परिमाणं प्रचक्षते॥"

इति ब्रह्माण्डपुराणे दर्शनादिति चेत्, मैवम्; त्रसरेणु' सावयवश्चाक्षुषद्रव्यत्वान्महत्त्वे सति क्रियावत्त्वाद्वा घटवदिति सावयवत्वानुमाने महत्त्वापकर्षस्य तत्र विश्रान्त्यनुपपत्ते'।

द्धान्तस्तत्राह—समवायिकारणत्वादिति। उपादानत्वमेव हि भवता ब्रह्मणः सिषाधयिषितम्, इतरस्यास्माभिरप्यङ्गीकारात्। नच तच्छक्यसाधनम्, परमाणूनामेव तत्त्वादित्यर्थः। ननु लोकसिद्धं वा परमाणुकारणत्वमादाय ब्रह्मकारणत्वं निराक्रियते? वादिसिद्ध वा? नाद्यः, तत्र विप्रतिपत्त्यभावप्रसङ्गात्। न द्वितीयः, तत्र कस्यचिदपि प्रमाणस्यासभावितत्वात्। वादिनामपि प्रामाणिकतया सभाविते हि भ्रान्तिर्भवति, इतरथातिप्रसङ्गादित्याक्षिपति—नन्विति। न सन्तीति। पृथ्वीत्वादेरनित्यवृत्तित्वमूर्तनित्यवृत्तित्वादेरसभवित्वात्। प्रामाण्याभावादिति। तन्नित्यवृत्तित्वज्ञानस्य भ्रान्तत्वादित्यर्थः। किं माणुगतपरिमाणतारतम्यमत्र पक्षः? किं वा महत्त्वस्य यदिदमाकाशाद्यपेक्षयापकर्षतारतम्य तद्वा? नाद्य इत्याह—अण्विति। त्वदभिमताणूनामिति। परमाणूना द्व्यणुकाना चेत्यर्थः। न केवलं पर प्रति, त्वा प्रत्यप्याश्रयासिद्धिः। नह्यणुषु तारतम्य परिमाणस्यास्ति, नापि द्व्यणुकपरमाणुपरिमाणयोः। नित्यत्वमात्र हि पारिमाण्डल्यस्य परमाणुपरिमाणस्य द्व्यणुकपरिमाणाद्विशेष इत्यभिप्रेत्याह—तेष्विति। द्वितीय शङ्कते—महत्त्वेति। ननु कथ त्रसरेणुभिरथान्तरता यतस्ततोऽप्यपकृष्टमहत्त्वस्य क्वचित्सभावनाया विरोधाभावादिति चेत्, न, पुराणवचनविरोधादित्याह—जालेति। जाल वातायनम्। भानुः किरणः। तत्र हि परमाणूना पर परिमाणं प्रचक्षत इति दर्शनान्न ततोपकृष्टमेतदस्तीति भावः। अत्र तार्किकः सिद्धसाधनता परिहरन् महत्त्वापकर्षतारतम्यमेव पूर्वानुमानपक्षतया परिगृह्णाति—मैवमिति। रूपादावनैकान्त्यपरिहाराय द्रव्यग्रहणम्। आत्मादावनैकान्तिकतानिवृत्त्यै चाक्षुषग्रहणम्। परमाणवो विभुद्रव्याणि च द्वितीये हेतुगतविशेषणाभ्या व्यवच्छिद्यन्ते। एव त्रसरेणुसावयवत्वानुमाने तदवयवाना ततोऽप्यणुतराणा सभवान्न त्रसरेणुषु

वायिकारण होते है। यदि शङ्का हो कि परमाणु-सद्भाव में कोई प्रमाण ही नहीं। अणुपरिमाण का का तारतम्य कहीं-न-कहीं समाप्त होता है, परिमाण तारतम्य होने से, महत्परिमाण-तारतम्य के समान"—यह अनुमान भी प्रमाण नही हो सकता, क्योकि 'अणुपरिमाण' शब्द से अणुनिष्ठ परिमाण की विवक्षा होने पर आपके परमाणुओ की सिद्धि न होने के कारण परमाणुगत परिमाण या उसके तारतम्य की असिद्धि होने से आश्रयासिद्धि दोष है ( द्र० न्या० ली० पृ० २६३ ) एवं अणुओ मे परिमाण का तारतम्य भी नही माना जाता। महत्त्व परिमाण के अपकर्ष-तारतम्य की 'क्वचिद्विश्रान्ति' सिद्ध करने पर त्रसरेणु से ही विश्रान्ति सिद्ध होने के कारण सिद्ध साधन दोष है। जैसा कि ब्रह्माण्ड पुराण मे देखा जाता है—वातायनगत ( रोशनदान से आनेवाली ) किरणो के प्रकाश मे जो रज कण त्रसरेणु देखे जाते है वे ही अन्तिम अणुमान के कण कहे जाते है।" अत. त्रसरेणुओं से नीचे परमाणुओ तक जाने की कोई आवश्यकता ही नही। तो यह शङ्का युक्त नही, क्योकि त्रसरेणु सावयव होते है, चाक्षुष द्रव्य होने के कारण अथवा मूर्तत्व युक्त सक्रिय होने के कारण, घट के समान"—इस अनुमान के द्वारा उन त्रसरेणुओ के भी अवयव सिद्ध होते है, वहाँ महत्त्व परिमाण के अपकर्ष का

पृथिवीत्वं नित्यवृत्ति घटवृत्तिजातित्वे सति पटवृत्तिजातित्वात्सत्तावत्। अयं घट एतदतिरिक्तानित्यमूर्तातिरिक्तमूर्तान्य' प्रमेयत्वात्पटवदिति प्रयोगसंभवाच्च। न च निरवयवयोः संयोगाभावादसमवायिकारणभावे कथं कार्यद्रव्यारम्भकत्वमिति वाच्यम्, परमाण्वसिद्धौ तत्प-

तद्विश्रान्तिः। यद्यपीद द्व्यणुके चरितार्थम्, तथापि महदारम्भकत्वेन तन्तुवत्तेषामपि सावयवत्वानुमानात्तदवयवभूतपरमाणुसिद्धिरिति भावः। इदानीं साक्षात्परमाणुसाधक सर्वदेवीयमनुमानमाह—**पृथिवीत्वमिति**। जातित्वे सतीत्युक्ते सयोगत्वकर्मत्वादावनैकान्तस्तन्निवृत्त्यर्थं घटवृत्तीत्युक्तम्। तथाऽपि घटत्वेऽनैकान्तिकस्तदर्थं पटग्रहणम्। पटत्वेऽनैकान्तिकतानिवृत्त्यर्थं घटग्रहणम्। महाविद्यानुमानमप्याह—**अयं घट इति**। एतद्घटातिरिक्तत्वे सति यदनित्य मूर्तं तत्त्वानधिकरण यन्मूर्तं ततोऽन्यः। मूर्तान्य इत्युक्ते पटान्यत्वेनार्थान्तरता, तदर्थं मूर्तातिरिक्तमूर्तान्य इत्युक्तम्। तथा च व्याहतिर्मूर्तत्वानधिकरणत्वमूर्तत्वयोर्व्याघातात्। ततश्च ततोऽन्यत्वसाधनेऽप्रसिद्धविशेषणता। अतिरिक्तपदेनानधिकरणत्वस्य विवक्षितत्वात्। इतरथार्थान्तरताया दुष्परिहरत्वात्तदर्थमनित्यमूर्तातिरिक्तेत्युक्तम्। तथाप्यप्रसिद्धविशेषणता, परमाणुसिद्धिव्यतिरेकेणानित्यमूर्तत्वानधिकरणमूर्तस्यासिद्धेः। तत्परिहारायैतदतिरिक्तपदम्। अनित्यमूर्तत्वानधिकरणमूर्तस्याप्रसिद्धत्वेप्येतदतिरिक्तत्वे सत्यनित्यमूर्तत्वानधिकरणस्यैतस्य घटस्य प्रसिद्धत्वात्तदन्यत्वस्य च पटादौ प्रसिद्धेः। तेन नाप्रसिद्धविशेषणतासाध्यवैकल्ये, पक्षे त्वेतदतिरिक्तानित्यमूर्तत्वानधिकरणत्वमेतदतिरिक्तत्वानधिकरणत्वाद्वा? अनित्यमूर्तत्वानधिकरणत्वाद्वा? आद्ये तादृशमूर्तादन्यत्वमस्य व्याहतम्, तादृशमूर्तस्य तत्त्वेन स्वस्यैव स्वस्मादन्यत्वाभावात्। द्वितीयेऽप्यनित्यमूर्तत्वानधिकरणमूर्तत्व मूर्तत्वानधिकरणत्वान्न सभवति, व्याघातादेव। ततोऽनित्यत्वानधिकरण मूर्तं परमाणुमादाय तदन्यत्वमस्य सिद्ध्यतीति परमाणुसिद्धिः। नित्यमूर्तः परमाणुरिति तल्लक्षणादित्यर्थः। स्यादेतन्निरवयवास्तावत्परमाणवोऽभ्युपगम्यन्ते। तथा ह्यन्त्यावयविनमारभ्यानुभूयमानोऽयमवयवावयविविभागो यतः परावर्तते स हि परमाणुरिति। अन्यथा सुमेरुसर्षपयोरनन्तावयवतया समानपरिमाणत्वप्रसङ्गात्? नच निरवयवयो. सयोगोऽस्ति? अव्याप्यवृत्तित्वात्तस्य। निरवयवे च यदि वर्तेत, कि तत्र व्याप्नुयात्। यदि च न व्याप्नुयात्क्व वर्तेत? विमतसयोगि निरवयवत्वात्, रूपादिवदिति प्रयोगाच्च। तस्मादङ्गीकृतेष्वपि परमाणुषु तेषा परस्परसयोगाभावात्तदसमवायिकारणकद्व्यणुकादिप्रक्रमेण जगत्समवायिकारणत्वाभावान्न तद्ग्राहिप्रमाणविरोधो वेदान्तानाम्। तथा चैकैकैव परमाणुभिरसयुक्तैर्द्व्यणुकाद्यारम्भः, तथा सति तदुत्पन्नकार्यस्य विनाशहेत्वभावान्नित्यता स्यात्, असमवायिकारणनाशात्समवायिनाशाद्वा खलु द्रव्यनाशः। तत्र सयोगलक्षणासमवाय्यनङ्गीकारेऽणूना च नित्यत्वात् द्व्यणुकादेर्नाशो न स्यात्। नित्यत्वे चान्त्यावयविपर्यन्ते नित्यतापत्त्या घटविनाशो नोपलभ्येतेति। तत्राह—**न चेति**। निरवयवपरमाण्वनङ्गीकारेऽङ्गीकारे वा सयोगित्वमप्रत्याख्येयमित्याह—**परमाण्विति**। एव बाधकं परिहृत्य

तारतम्य समाप्त नहीं हो सकता। परमाणुओं की सिद्धि से—"पृथिवीत्व नित्य-वृत्ति होता है, घट-वृत्ति जाति होकर पट-वृत्ति जाति होने से, जैसे—सत्ता" (लक्षणावली पृ० ३, तथा प्रमा० मं० पृ० १) एव "यह घट, एतदतिरिक्तत्व-विशिष्ट अनित्यमूर्त से भिन्न मूत से अन्य है, प्रमेय होने से, जैसे घट"—आदि प्रयोग सम्भव हैं। [ एतद् घट से अनिरिक्त अनित्य मूर्त है—पटादि, उनसे अतिरिक्त होता है—पक्षभूत एतद् घट, उससे अन्य है—पट। अत. दृष्टान्त मे साध्य प्रसिद्ध है। दृष्टान्त मे एतद् घटातिरिक्तत्व के प्रभाव से ही साध्य प्रसिद्ध हो सका, किन्तु पक्षभूत एतद् घट मे एतद् घटातिरिक्तत्व नही. अत. साध्य का सामञ्जस्य करने के लिए नित्य मूर्त द्रव्य मानना होगा, तभी एतदतिरिक्त अनित्य मूर्तरूप पट से अतिरिक्त हुआ वह नित्य मूर्त और उससे अतिरिक्त होगा पक्ष ]। 'परमाणु निरवयव है, निरवयव का संयोग होता नही, सयोगरूप असमवायिकारण के बिना कार्यद्रव्य का आरम्भ कसे होगा?'—यह सन्दह नही करना चाहिए, क्योकि यदि आप निरवयव परमाणु नही मानते, तब

क्षीकारेणासयोगित्वस्य साधयितुमशक्यत्वात्, सिद्धौ च धर्मिग्राहकप्रमाणबाधात्, द्रव्यत्वेन घटादिवत्संयोगित्वानुमानाच्च। न च सावयवत्वमुपाधिः, अर्थत॰ पक्षेतरत्वात्। कार्यद्रव्यत्वं वा समवेतत्वे सति द्रव्यत्वं वा सावयवत्वम्। तथा च द्रव्यत्वेनैव साध्यव्याप्तौ सिद्धायां कार्यपदस्य समवेतपदस्य च जन्यत्वेन सकर्तृकत्वानुमाने शरीरिजन्यत्वोपाधौ शरीरिपदस्येव साधनाव्यापकत्वमात्रप्रयोजनस्योपादाने कथं न पक्षेतरता? साध्यव्याप्तौ सत्यां साधनाव्याप्त्यर्थं यत्र विशेषणमुपादीयते, स पक्षेतर इति तल्लक्षणात्। न च द्वितीयसंयोगासंभवात्प्रथिमानुपपत्तिर्दोष, द्व्यणुके प्रथिमाभावसाधने दोषाभावात्, तस्याणुत्वात्।

---

तत्सयोगित्वे प्रमाणमाह—द्रव्यत्वेनेति। एतेन पूर्वानुमानस्याद्रव्यत्वमुपाधिरित्युक्तम्। ननु सावयवत्वप्रयुक्त घटादौ सयोगित्वमिति व्याप्यत्वासिद्धो हेतुरिति, तत्राह—न चेति। सावयवत्वमेव विवेचयन्नर्थतः पक्षेतरता दर्शयति—कार्येति। आकाशादिर्गुणादिश्चोभयत्र विशेषणद्वयव्यावर्त्यम्। तदयमर्थः—यथा-ह्यङ्कुरादि सकर्तृक कार्यत्वाद्घटादिवदित्यत्र शरीरिजन्यत्वस्योपाधित्वोद्भावने जन्यत्वमात्रस्य घटादौ साध्य व्याप्तौ सिद्धाया शरीरिग्रहण पक्षीकृताङ्कुरादौ साधनव्याप्तिपरिहारार्थमिति पक्षेतरत्वम्, एव द्रव्यत्वमात्रस्यैव सयोगित्वव्याप्तौ सिद्धाया कार्यत्व समवेतत्व वा विशेषण पक्षीकृतपरमाणुपु साधनव्याप्तिपरिहारार्थमत पक्षेतरत्वमिति। ननु पक्षमात्रव्यावर्तकः पक्षेतरो नाम, न पुनरित्थभूत इति, तत्राह—साध्यव्याप्ताविति। ननु निरशस्य सयोगे सत्येकपरमाणुना सयुक्ते परमाणौ परमाण्वन्तरसयोगो न स्यात्, सयुक्तप्रदेशातिरिक्तप्रदेशान्तराभावात्, तावन्मात्र एव च द्वितीयसयोगे तदारब्धकार्ये प्रथिमा न स्यादिति, तत्राह—न चेति। तत्र तदारब्धकार्यशब्देन द्व्यणुक वा? त्र्यणुक वा विवक्ष्यते? किं वा चतुरणुकमिति? प्रथमे त्विष्टापत्तिरित्याह—द्व्यणुक इति। द्वितीये प्राह—त्र्यणुक इति। कारणबहुत्वाद्वा कारणमहत्त्वाद्वा प्रचयविशेषाद्वा महत्त्वमुत्पद्यते, तत्र कारणमहत्त्वप्रचययोरभावेऽपि कारणबहुत्वात् त्र्यणुके महत्त्वमुत्पद्यते। नहि द्व्यणुकाभ्या त्र्यणुकोत्पत्तिर्येन तदारब्धे महत्त्व न स्यादपि तु बहुभिर्द्व्यणुकैरिति

---

असंयोगित्व की सिद्धि किससे करेंगे और यदि मानते हैं, तब परमाणुरूप धर्मी के ग्राहक प्रमाण से उसके असत्त्वानुमान का बाध होता है। 'द्रव्यत्व' हेतु से घटादि दृष्टान्त के द्वारा परमाणुओं में सयोगित्व का अनुमान भी होता है ( परमाणव सयोगवन्त, द्रव्यत्वाद् घटवत् )। इस अनुमान में सावयवत्व ( घट में साध्य-व्यापक और पक्ष में साधनाव्यापक होने से ) उपाधि है—ऐसा नहीं-कह सकते, क्योंकि सावयवत्व फलत॰ पक्षेतरत्वरूप है, जिसे उपाधि नहीं माना जाता। अर्थात् सावयवत्व का अर्थ होता है—कार्यत्व-विशिष्ट द्रव्यत्व या समवेत्व विशिष्ट द्रव्यत्व। यहाँ केवल द्रव्यत्व में ही साध्य की व्यापकता सिद्ध हो जाती है, कार्यत्व और समवेतत्व विशेषण वैसे ही केवल पक्ष में साधन-व्यापकत्व का वरण करने के लिए रखे गये हैं, जैसे कि जन्यत्व हेतु से सकर्तृकत्व के अनुमान ( क्षित्यादिकं सकर्तृकं जन्यत्वाद् घटवत् ) में लगाई गई शरीरिजन्यत्व उपाधि में शारीरिन्व विशेषण। इसलिए कार्यद्रव्यत्वादि को पक्षेतरत्व क्यों नहीं कहा जा सकता? क्योंकि केवल विशेष्य धर्म में साध्य-व्याप्ति के सिद्ध हो जाने पर, पक्ष में साधन-व्यापकत्व हटाने के लिए जहाँ विशेषण लगाया जाता है, उसे ही पक्षेतर कहा जाता है। यदि कहें कि निरवयव परमाणु का संयोग एकही परमाणु से हो सकेगा, दूसरे परमाणु से नहीं, अत उससे उत्पन्न कार्यद्रव्य में प्रथिमा ( महत्व ) की अनुपपत्ति होती है। तो क्या द्व्यणुकरूप कार्य में महत्व की अनुपपत्ति होगी? या त्र्यणुक में? द्व्यणुक तो अणु परिमाणवाला ही होता है, अतः वहाँ महत्वानुपपत्ति इष्ट ही है और त्र्यणुक में महत्व की उत्पत्ति कारणगत बहुत्व संख्या से हो जाती है, ( उसके लिए परमाणु में अनन्त सयोगों की अपेक्षा ही नहीं होती )। त्र्यणुक के कारण होते हैं—द्व्यणुक, द्व्यणुक सावयव हैं, अतः इनमें

त्र्यणुके तु कारणबहुत्वादेव महत्त्वोपपत्तिः, द्व्यणुकानां सावयवत्वेन संयोगोपपत्तिश्च ।

न चावयविन एवाभावात्तदारम्भानुपपत्तिः; एकस्थूलनीलावभासो बाह्ये प्रमा प्रमात्वाद्रूपदर्शनवदित्यवयविसिद्धेः। न चार्थान्तरता; विकल्पासहत्वात्। तथाहि—किं परमाणुसमूहालम्बनत्वमभिप्रेतम्? उतावयवसंहतिगोचरत्वम्? नाद्यः, परमाणूनामतीन्द्रियाणामस्मदादिप्रत्यक्षगोचरताऽयोगात्। नापि द्वितीय, अवयवानामनेकत्वादेक इतिप्रत्ययगोचरत्वासंभवात्। समुदायस्यैकत्वाददोष इति चेत्, न, तस्यावस्तुत्वाद्, वस्तुत्वे च तस्यैवावयवित्वात्, संज्ञामात्रे विवादः स्यात्। यत्प्रकाशते तज्ज्ञानं यथा ज्ञानम्, प्रकाशते च विवादाध्यासितमित्यनुमानात्सर्वस्य विज्ञानमात्रत्वसिद्धौ साध्यविकलो दृष्टान्त इति चेत्, न; उभयवादिसंप्रतिपन्नस्य धर्मिणोऽभ्युपगमेऽपसिद्धान्तापत्तेः, अनभ्युपगमे चाश्रयासिद्धिः ।

---

भावः। यच्च द्वितीयसयोगाभाव उक्तः, सोपि द्व्यणुकेषु नास्तीत्याह—**द्व्यणुकानामिति**।

नन्वस्तु सयोगाद्युपपत्तिः परमाणूनाम्, तथापि न तदारभ्यं किञ्चित्, नहि परमाणुसङ्घातव्यतिरेकेणावयवी नाम कश्चिदास्ते युक्तियुक्तः, तस्मात्सन्तु नाम परमाणवः, तथाप्यारम्भकल्पनानुपपत्तिरिति, तत्राह—**न चावयवीति**। अवयविसद्भावे विज्ञानवादिनं प्रत्युक्तं मानमनोहरीयमनुमानमाह—**एकेति**। एकमिति स्थूलमिति नीलमिति च योऽयमवभासो बाह्ये विज्ञानाद्बहिर्भूते प्रमेत्यर्थः। सौगतनये विज्ञानस्य स्वग्राहकतयाऽर्थान्तरतानिवृत्त्यै बाह्यग्रहणम्। ननु भवतु बाह्यप्रमात्वम्, तथाप्यवयविसिद्धिः कुतः? यतो बहिरपि परमाणूनेव वा तन्त्वाद्यवयवान्वाऽवलम्बतामियं बुद्धिरिति, तत्राह—**न चार्थान्तरतेत्यादिना**। **परमाणूनामिति**। प्रत्यक्षः खल्वयं प्रत्ययः स्थूलाद्याकारः। नच परमाणूनां प्रत्यक्षयोग्यत्वम्, सूक्ष्मत्वाच्च न स्थूलप्रत्ययविषयत्वमिति न तैरर्थान्तरतेत्यर्थः। अवयवसमूहालम्बनत्वं दूषयति—**नापि द्वितीय इति**। ननु नावयवमात्रं विषयः, किंतु तत्समुदायः, स चैक इति शङ्कते—**समुदायस्येति**। **अवस्तुत्वादिति**। यस्य ह्यवयव्येवानिष्टः, स कथं समुदायिव्यतिरिक्तं वस्तुभूतं समुदायमङ्गीकुर्यादित्यर्थः। एवमर्थान्तरताया परिहृताया विज्ञानवादी दृष्टान्तस्य साध्यवैकल्यं शङ्कते—**यत्प्रकाशते इति**। प्रकाशमानत्वं ज्ञानस्वभावत्वेन रूपादिज्ञानेषु व्याप्तम्, तद्रूपादिरपि प्रकाशमानो विज्ञानस्वभाव एवेति ज्ञानस्वभावत्वावगते रूपज्ञानस्यापि बाह्यविषयत्वमसिद्धमित्यर्थः। अत्र हि प्रकाशते रूपमिति पक्षीकृतं रूपमुभयाभिमतमनभिमतं वेति विकल्प्य दूषयति—**नेति**। ज्ञानातिरिक्तरूपाद्यभ्युपगमेऽपसिद्धान्त इत्यर्थः। आभाससमान-

---

अनेक सयोग बन भी जाते हैं।

'अवयवी ही निष्प्रमाण है, उसका आरम्भ कैसे बनेगा?—यह सन्देह नहीं कर सकते, क्योंकि अवयवी की सिद्धि मे अनुमान प्रमाण है—'यह घट एक, स्थूल तथा नील,—यह प्रतीति बाह्य वस्तु मे प्रमा है, प्रमा होने से, जैसे—रूप-दर्शन। इस अनुमान मे अर्थान्तरता दोष नही दिया जा सकता, क्योकि अर्थान्तरता-वादी के मत से उक्त प्रतीति परमाणु-समूह को विषय करती है? या अवयव-समूह को? प्रथम पक्ष उचित नही, क्योकि परमाणु अतीन्द्रिय होते है, उनका प्रत्यक्ष सर्वसाधारण को नही हो सकता। द्वितीय पक्ष मानने पर पटादि में एकत्व की प्रतीति नही होगी, क्योकि अवयव अनेक हैं। 'अवयवों का समुदाय तो एक है, अत एकत्व की प्रतीति बन जायगी'—यह नहीं कह सकते, क्योकि समुदाय कोई पृथक् वस्तु नही। यदि है, तब वही अवयवी है, नाम मात्र मे विवाद रह जाता है। यदि कहा जाय कि "जो-जो वस्तु प्रकाशित होती है, वह सब ज्ञानरूप है, जैसे—ज्ञान, विवादास्पद (रूपादि) भी प्रकाशित होता है, अतः वह भी ज्ञानस्वरूप ही है"—इस अनुमान से समस्त प्रपञ्च ज्ञानरूप ही सिद्ध हो जाता है, तब उक्त दृष्टान्त साध्य-विकल हो गया (रूपज्ञान भी विज्ञान-भिन्न किसी रूप को विषय न कर सका)। तो यह कहना युक्त नही, क्योंकि इस अनुमान में विवादास्पद पद से उभय-सम्मत (रूपादि) धर्मी को ग्रहण करने पर विज्ञान-

यत्प्रकाशते तदुभयवादिसिद्धैकविज्ञानमात्रम् , प्रकाशते च विवादाध्यासितमिति ज्ञानाद्वैत-प्रसञ्जकतयाऽऽभाससमानयोगक्षेमत्वाच्च । न च कम्पाकम्पावृतत्वानावृतत्वरक्तत्वारक्तत्वल-क्षणविरुद्धधर्मसंसर्गात्तदाश्रयस्यैकत्वानुपपत्तिः , अवयवानां कम्पे तदावरणे तद्रक्तत्वे चाव-

योगक्षेमता चाह—यत्प्रकाशत इति । अस्ति ह्यत्राप्येकस्मिन्विज्ञाने तन्मात्रत्वप्रकाशमानत्वयोर्व्याप्ति-रित्यर्थः । ननु तथापि तर्कविरुद्धत्वाच्छङ्कितोपाधित्वमनुमानस्य, तथा हि—वृक्षे कासुचिच्छाखासु कम्प-मानासु तदंशेऽवयवी कम्पते, अपरास्वकम्पमानासु तदंशे न कम्पते, नचैतदेकस्मिन्वृक्षावयविनि घटते । नहि सम्भवति तदेव कम्पते न कम्पते चेति । तथा घटादिष्वप्यर्धमाव्रियते नार्धम् , तथा पटादावप्यर्ध-रक्तमरक्तमर्धं दृश्यते । नचैतदेकस्मिन्सम्भवति, विरोधात् , तस्मान्नास्त्येवावयवीति, तत्राह—न च कम्पेति । अवयवेभ्यो विभिन्नस्तावदवयवी । नच तस्मिन्विरुद्धधर्मसंसर्गः , भागनिष्ठत्वात् कम्पादीनां विरुद्धधर्माणाम् , अवयवी तु यथानुभवं कम्पत एव वा, आवृत एव वा, विपरीतमेव वा, न पुनरुभया-धिकरणमित्यर्थः । स्यादेतत् , यद्यवयवचलनादावप्यवयवी न चलनादिमान् तर्हि घटचलनेऽप्यचलित-

वादी के लिए अपसिद्धान्त और उसे न मानने पर आश्रयासिद्धि होती है । एवं विज्ञानरूपता-साधक अनु-मान में "जो प्रकाशित होता है, वह उभय-सम्मत एक विज्ञानरूप ही है, विवादास्पद भी प्रकाशित होता है"—इस प्रकार के एकज्ञान-प्रसञ्जक अनुमानाभास की समानता भी है । विज्ञानवादी ज्ञान अनेक मानते हैं, उनके लिए यह ज्ञान में एकत्व-साधन जैसे अनुमानाभास है, वैसे ही ज्ञानरूपता-साधन भी ) । यह जो बौद्धगण कहा करते हैं कि कम्प-अकम्प, आवृतत्व-अनावृतत्व, रक्तत्व-अरक्तत्व-रूप विरुद्ध धर्मों के संसर्ग से यह सिद्ध होता है कि आश्रय एक नहीं [ अर्थात् अनेक अवयवों में यदि एक अवयवी मान लिया जाय, तब एक अवयव में कम्पन होने से, पूरे अवयवी में कम्पन होना चाहिए, इसी प्रकार उसके दूसरे अवयव में कम्पन नहीं, अतः पूरे अवयवी में अकम्पन होना चाहिए ( द्र० तत्त्वोप० पृ० ९७ ) किन्तु केवल एक हस्त में कम्पन होने से पूरे शरीर में कम्पन नहीं पाया जाता, अतः शरीर एक अवयवी नहीं । धर्मकीर्ति ने कहा है—

पाण्यादिकम्पे सर्वस्य कम्पप्राप्तेर्विरोधिनः ।
एकत्र कर्मणोऽयोगात् स्यात्पृथक्सिद्धिरन्यथा ।। ( प्र० वा० २।८५ )

एक अवयव में एक पूरा अवयवी रहता है, तब उस अवयव को आवृत कर देने से पूरा अवयवी ढक जाना चाहिए ( द्र० तत्त्वोप० पृ० ९६ ) । शान्तरक्षित कैसी मीठी हँसी करते हैं—

स्थूलस्यैकस्वभावत्वे मक्षिकापादमात्रतः ।
पिधाने विहितः सर्वमासज्येताविभागतः ।। ( तत्त्व० सं० ५९३ )

इसी प्रकार वस्त्र का एक कोना रंग देने से पूरा वस्त्र रंग जाना चाहिए (द्र० तत्त्वोप० पृ० ९५) शान्तरक्षित और धर्मकीर्ति दोनों विद्वान् यही कहते हैं—

रक्ते भागे एकस्मिन् सर्वं रज्येत रक्तवत् ।
विरुद्धधर्मभावे वा नानात्वमनुषज्यते ।। ( तत्त्व० सं० ५९४ )
एकस्य चावृतौ सर्वस्यावृतिः स्यादनावृतौ ।
दृश्येत रक्ते चैकस्मिन् रागोऽरक्तस्य वा गतिः ।। ( प्र० वा० २।८६ )

इसलिए अवयवी कभी एक सिद्ध नहीं हो सकता ] । बौद्धों का यह कहना नितान्त असंगत है, क्योंकि अवयवों से अवयवी को भिन्न माना जाता है, अतः अवयव में कम्पन, आवरण और रक्तत्व होने से पूरे अवयवी में न तो कम्पनादि की प्राप्ति होती है और न अवय में अकम्पनादि होने से अवयवी में अकम्पनादि की । कम्पनादि भिन्न अवयव में है और अकम्पनादि भिन्न अवय में, दोनों

यविनोऽतद्रूपत्वेनैकस्य विरुद्धधर्मसंसर्गासिद्धेः। न चावयवावयविनोश्चलाचलयोर्युतसिद्धिप्रसङ्गः, विकल्पासहत्वात्। ( १ ) किं भेदो युतसिद्धिः? ( २ ) किं वा पृथगाश्रयाश्रितत्वम्? ( ३ ) पृथक्क्रियावत्त्वं वा? ( ४ ) परस्परसंयोगविभागवत्त्वं वा? न प्रथमः, अवयवावयविनोर्भेदाभ्युपगमेन सिद्धसाधनत्वात्। अत एव न द्वितीयः, अवयविनोऽवयवाश्रयत्वेऽप्यवयवानां स्वारम्भकावयवाश्रितत्वात्। न तृतीयः, पृथक्क्रियावत्त्वस्योभयोरिष्टत्वात्, एकद्रव्यं कर्मेति सूत्राच्च। न चतुर्थः, चलाचलयोरपि घटहिमाचलयोः परस्परसंयोगविभागानधिकरणत्वात्। अवयवावरणेऽवयविनोऽनावरणे पूर्ववत्कृत्स्नप्रतीतिः स्यादिति चेत्, सत्यम्, कृत्स्नः प्रतीयत एव तस्यैकत्वात्। तथात्वे द्विहस्तत्वादि किमिति न प्रतीयत इति चेत्,

पटवद्युतसिद्धतावयवावयविनोः प्राप्नोति, तथा च न समवाय इति, तत्राह—**न चावयवेति**। विरुद्धधर्मवत्त्वेऽपि न युतसिद्धिरिति विकल्पपूर्वकमाह—**विकल्पासहत्वादित्यादिना**। अत एवेत्यतिदिष्टं सिद्धसाधनत्वं विवृणोति—**अवयविन इति**। पृथक्क्रियावत्त्वं युतसिद्धत्वमिति तृतीयपक्षेऽपि सिद्धसाधनतामाह—**पृथक्क्रियावत्त्वेति**। अवयवेऽन्यत्कर्म अवयविन्यप्यन्यदेवेत्यत्र वैशेषिकसूत्रमपि प्रमाणयति—**एकद्रव्यमिति**। एकमेव द्रव्यं समवायिकारणं यस्य कर्मणस्तदेकद्रव्यं न पुनः संयोगादिवदनेकवृत्तीत्युक्तम्। परस्परसंयोगविभागवत्त्वं युतसिद्धिरिति चतुर्थं पक्षं दूषयति—**न चतुर्थ इति**। तत्र हि चलाचलत्त्वेन संयोगविभागवत्त्वमापादनीयम्, नचैतच्छक्यापादनम्, व्याप्तेरभावेन प्रशिथिलमूलत्वादिति भावः। यत्त्वावृतत्वानावृतत्वविरुद्धधर्मसंसर्गो नास्ति अवयवावरणेऽप्यवयविनोऽनावृतत्वानुभवादित्युक्तम्, अवयवाना कम्पेऽपीत्यत्र, तत्र बाधकं शङ्कते—**अवयवेति**। केयं कात्स्न्येन प्रतीतिः? किमवयविस्वरूपस्यानवशेषेण प्रतीतिः? किं वा हस्तवितस्त्यादिमत्तया प्रतीतिः? आद्यामिष्टापत्त्या दूषयति—**सत्यमिति**। एकः खल्ववयवी न पुनरवयववदनेकः, स चेत्प्रतीयते, प्रतीत एव कात्स्न्र्येनेति नायमनिष्टप्रसङ्ग इत्यर्थः। द्वितीयां शङ्कते—**तथात्व इति**। सहकारिवैकल्यादिति परिहरति—**तदुचितेति**। अवयव्युत्पादका एव येऽवयवास्तेषामिन्द्रियेण यः सन्निकर्षः सोऽप्येतस्यैकहस्तादेः प्रतीतावुचितो हेतुस्तस्याभावादित्यर्थः। यस्तु रक्तत्वारक्तत्वलक्षण-

एकत्र है ही नहीं, कि उसमे अनेकता प्राप्त हो ( द्र० न्या० ली० पृ० १२७ )। 'यदि अवयव के कम्पित होने पर भी अवयवी अकम्पित ही रहता है, तब अवयव और अवयवी मे युतसिद्धि सिद्ध हो जायगी'—यह भी सन्देह युक्त नही, क्योकि यहाँ युतसिद्धि से क्या विवक्षित है? (१) भेद? या (२) पृथक् आश्रय के आश्रितत्व? या (३) पृथक् क्रियावत्त्व? या (४) परस्परसंयोगविभागवत्त्व? प्रथम (भेद) पक्ष तो अवयव और अवयवी मे माना ही जाता है। द्वितीय भी माना ही जाता है कि अवयवी, अवयव के आश्रित है और अवयव अपने आरम्भक अवयवो के आश्रित है। तृतीय पक्ष मे भी सिद्ध-साधनता है, क्योकि अवयव मे पृथक् और अवयवी मे पृथक् कर्म मानते है, जैसा कि महर्षि कणाद ने ( वै० सू० १।१।१७ मे ) कहा है कि कर्म एक द्रव्य के ही आश्रित रहता है। चतुर्थ पक्ष भी युक्त नही, क्योकि इस पक्ष मे चलाचलत्व रूप धर्म से परस्परसंयोगविभागवत्त्वरूप युतसिद्धि का आपादन करने के लिए यह व्याप्ति माननी होगी—"यत्र यत्र चलाचलत्वम्, तत्र तत्र संयोगविभागवत्त्वम्"। किन्तु यह व्याप्ति सम्भव नही, इसका घट और हिमाचल में व्यभिचार है, वहाँ चलाचलत्व के रहने पर भी उनका परस्पर न तो संयोग होता है और न विभाग। 'अवयव के आवृत होने पर भी यदि अवयवी आवृत नही होता, तब पहले जैसा पूरा अनावृत ही दिखना चाहिए'—यह सन्देह भी समुचित नही, क्योकि एक अवयव के आवृत हो जाने पर भी अवयवी अनावृत ही रहता है, हाँ! आवृत अवयव के साथ इन्द्रिय-सन्निकर्ष न रहने के कारण पूर्ण अवयवी प्रतीत न हो, यह दूसरी बात है। रक्तत्व-अरक्तत्व का जो विरोध दिया, वह भी युक्त नही, क्योकि ( पूरा वस्त्र वस्तुतः

तदुचितावयवसन्निकर्षस्य तत्प्रतीतिहेतोरभावात्। रक्तत्वं तु महारजनादेरेव द्रव्यान्तरस्य नाप्यवयवानामिति दूरनिरस्तो विरुद्धधर्मसंसर्ग'। तथापि तत्संयोगाद्रक्तिमप्रतीतिः सर्वत्र किं न स्यादिति चेत्, न, संयोगस्याव्याप्यवृत्तित्वात्।

नन्ववयवेषु वर्तमानोऽवयवी किं वा कात्स्न्र्येन वर्तते ? उतैकदेशेन ? नाद्य', शृङ्गेणापि स्तनकार्यकरणप्रसङ्गात्, अवयविन. कार्येणान्वयात्, युगपदनेकत्र वृत्तावनेकवृत्तिरूपादिवदनेकत्वप्रसङ्गाच्च। नापि द्वितीयः, आरम्भकावयवव्यतिरिक्तैकदेशाभावात्, भावे वानन्तावयवतया मेरुसर्षपयोस्तुल्यपरिमाणतापत्ते, अवयवावयविनोर्दूरविप्रकर्षप्रसङ्गाच्चेति चेत्,

विरुद्धधर्मसंसर्ग उक्तस्त परिहरति—**रक्तत्वं त्विति**। यद्धि पाकादिवशाद् दृढतर पटेन संयुक्त कुसुम्भादिद्रव्यान्तरम्, तद्धर्म एव रक्तत्वादि., न पटधर्म, नापि तन्तुधर्मः, पर तत्संयोगात्पटस्थरक्तताप्रतीतिरित्यरक्तैकस्वभावत्वात्पटस्य दूरनिरस्तो विरुद्धधर्मसंसर्ग इत्यर्थ.। स्यादेतत्—भवतु हरिद्रादिसंयोगात्पटे रक्तप्रतीतिस्तथापि किमिति न सर्वात्मना पटे रक्तिमप्रतीतिः ? एक. खल्ववयवी तेन संयुक्त इति, तस्माद्रक्तप्रतीतिविषयत्वतद्रहितत्वलक्षण एवाय विरुद्धधर्मसंसर्गोऽस्त्विति शङ्कते—**तथापीति**। परिहरति—**नेति**। यद्यप्येक. एवावयवी तथापि द्रव्यान्तरसंयोगस्तस्मिन्न सर्वस्मिन्वर्ततेऽपि त्वव्याप्यवृत्तिर्यावति च स वर्तते भवत्येव रक्तप्रतीतिरियमप्यस्तीत्यर्थः।

एवं विरुद्धधर्मसंसर्गे परिहृतेऽपि वृत्तिविकल्पानुपपत्त्याशङ्कितोपाधिता शङ्कते—**नन्वित्यादिना**। ननु किमिति शृङ्गेण स्तनकार्यप्रसक्तिः, नच शृङ्गस्य स्तनत्वमस्तीति ? तत्राह—**अवयविन इति**। अन्वयो जनकतया सबन्धित्वम्। अत्रैव दूषणान्तरमाह—**युगपदिति**। क्रमेणानेकत्र वर्तमानदेवदत्तादिव्यवच्छेदाय युगपद्ग्रहणम्, यदि हि प्रत्यवयव परिसमाप्य वर्तते, तदा प्रतिद्रव्य परिसमाप्य वृत्तिरूपादिवदनेकत्वमपि स्यादित्यर्थः। ननु किमित्यारम्भकव्यतिरेकेण वृत्त्यर्थमप्यवयवा न स्युः, कोशावयवेषु वर्तमानासेः कोशावयवव्यतिरिक्तावयवत्वदर्शनादिति, तत्राह—**भावे चेति**। तदा हि तेष्ववयवेषु तद्वृत्त्यर्थमवयवान्तराणि कल्पेरन्, एव तेषु तेष्वपीत्यनन्तावयवाः स्युरपरथान्तिमावयवेषूक्तदोषापातात्। तथा च सुमेरुसर्षपयोरनन्तावयवत्व समानमिति परिमाणसाम्यमपि स्यादविश्रान्ततारतम्यपरिमाणाधिकरणेषु परिमाणवैषम्यस्यावयववैषम्यनिमित्तताव्याप्तेरित्यर्थ। अत्रैव दूषणान्तरमाह—**अवयवेति**। प्रथमावयवावयविनोर्मध्येऽनन्तावय-

श्वेत ही है, हाँ! उसके जिस कोने मे रक्त द्रव्य का लेप कर दिया गया, वहाँ वस्त्र मे रक्तत्व प्रतीत होने लगता है ) वह रक्तत्व न तो पट मे है और न तन्तुओ मे, किन्तु द्रव्यान्तर ( गेरू ) मे है। 'तथापि उस गेरू के सयोग से पूरे वस्त्र मे रक्तत्व प्रतीति क्यो नही होता ? इस प्रश्न का उत्तर यह है कि सयोग अव्याप्यवृत्ति होता है ( अर्थात् गेरू का सयोग जिस कोने में है, वही होगा, सर्वत्र नही, अतः सर्वत्र क्यों प्रतीत होगा ? जहाँ सर्वत्र होता है, वहाँ पूरा वस्त्र ही रक्त प्रतीत होता ही है )।

बौद्धो का जो यह आक्षेप है कि प्रत्येक अवयव मे समस्त अवयवी रहता है ? या उसका एक देश ? ( द्र० तत्त्वोप० पृ० ९४ )। प्रथम पक्ष मानने पर यह भी मानना होगा कि पूरी गौ अपने सीग मे रहती है, तब तो सीग से दूध निकलना चाहिए। दूसरी बात यह भी है कि यदि पूरी गौ सीग मे है, पूँछ मे भी है, कान मे भी है, तब तो जितने अवयव है, उतनी ही गौओ की प्रतीति होनी चाहिए। द्वितीय पक्ष भी उचित नही, क्योकि आरम्भक अवयवो को छोड़ कर और कोई एक देश होता ही नही। यदि माने, तो अनन्त अवयव सुमेरु पर्वत मे और अनन्त ही सरसों के दाने मे, अत. दोनो एक समान हो जायँगे। दूसरी बात यह भी हो जायगी कि प्रथम अवयव और अवयवी के बीच मे अनन्त अवयवो का व्यवधान पड़ जायगा। जैसा कि शान्तरक्षित ने कहा है—

"यद्वा सर्वात्मना वृत्तावनेकत्वं प्रसज्यते।
एकदेशेन चानिष्टा नैको वा न क्वचिच्च स ॥" ( तत्त्व० सं० ६१२ )

मैवम् , विकल्पस्यानवसरदु:स्थत्वात् । नह्येकस्मिन्नेवावयविनि समस्तोऽसमस्तो वेति विकल्प कल्पते, बहूनां हि समस्तताऽसमस्तता वा संभवेत् । किंचाय वृत्तिविकल्प स्वसिद्धां व्याप्तिमवलम्ब्योत्तिष्ठति ? उत परसिद्धाम् ? नाद्य, सौगते सर्वस्य क्षणिकत्वेनाश्रयाश्रयिभावानभ्युपगमात् । वेदान्तिभिरपि कार्यस्य कारणे कल्पितत्वमभ्युपगच्छद्भिर्वृत्तेरनभ्युपगमात् । नापि द्वितीयः, तेनाप्यनङ्गीकारात् । यद्वर्तते तत्संयोगेन समवायेन वा वर्तते इति परोऽङ्गीकरोति, न तु कार्त्स्न्यैकदेशाभ्याम् । अस्तु वा कार्त्स्न्येन वृत्तिस्तथापि न शृङ्गेण स्तनकार्यकरणप्रसङ्ग, तत्तदवयवविशिष्टस्यैवावयविनस्तत्तत्कार्यप्रसवसमर्थत्वात् । सर्वश्चाय प्रसङ्गहेतुराश्रयासिद्धः, अवयविनोऽनङ्गीकारात्, अङ्गीकारे वा धर्मिग्राहकप्रमाणबाध । परसिद्धेन परस्यानिष्टापादनमिति चेत्, न, परस्यापि प्रमाणत सिद्धावसिद्धौ च पूर्वोक्तदोषद्वयान-

---

वव्यवधानादित्यर्थः । एव वृत्तिविकल्पदोष परिहरति—मैवमिति । एकस्मिन्ननुपपत्तिमेव व्यतिरेकनियमेन दर्शयति—बहूनामिति । किंच यद्यत्र वर्तते तत्कार्त्स्न्येनैकदेशेन वेति कि सौगतसमये नियतिः ? किंवा वेदान्तदर्शने ? आहो मद्दर्शनेनैव प्रसज्यते ? न सर्वथापीत्याह—किंचायमित्यादिना । ननु सौगतवेदान्तिदर्शनयोर्वृत्त्यनङ्गीकारादेव युक्तस्तत्प्रयुक्तनियमेऽयानादरः कर्तुम्, भवता तु वृत्तिमङ्गीकुर्वता काचिन्नियतिरङ्गीकरणीयैवेति, तत्राह—यद्वर्तत इति । सबन्धे एव नियतिर्न कार्त्स्न्यादावित्यर्थः । ननु किमिति न प्रसङ्गः, यावताऽवयविन एव कार्यकरत्वादापतत्येवेति, तत्राह—तत्तदवयवेति । यथा ह्यवयविनोऽन्वयव्यतिरेकौ तथा तत्तदवयवोपेततयापीत्यर्थः । किंच यद्येकदेशेन वर्तेत, यदि वा कार्त्स्न्येन, यदि वावयवेभ्योऽतिरिच्येत, तर्हीदमिदं स्यादिति यदिद प्रसञ्जन तत्राश्रयभूतः कश्चिदवयवी स्वीकृतः ? न वा ? उभयथाप्यनुपपत्तिरित्याह—सर्वश्चायमिति । प्रसङ्गहेतु. प्रसञ्जको हेतुरित्यर्थः । अनङ्गीकारेप्याश्रयासिद्धिपरिहार शङ्कते—परेति । परस्यापि कि प्रमाणत सिद्ध त्वया धर्मीक्रियते ? उत प्रतीतिमात्रसिद्धम् ? आद्ये धर्मिग्राहकप्रमाणबाध, नहि परप्रमाणमप्रमाण भवति, वस्तुनोऽन्यथाभावात् । द्वितीये त्वाश्रयासिद्धिरिति परिहरति—न परस्यापीति । ननु किमित्याश्रयासिद्धिर्धर्मिग्राहकप्रमाणबाधो वा ? यावता कल्पितः

---

यह बौद्धो का आक्षेप अकाण्ड ताण्डवमात्र है, क्योकि समस्त और एक देश का विकल्प वहाँ उठा करता है, जहाँ पदार्थ बहुत हो, अवयवी एक ही तो है, अत. उसके विषय मे यह विकल्प उठ ही नही सकता। दूसरी बात यह भी है कि आपने यह जो ( कार्त्स्न्येन वर्तते ? एकदेशेन वा ? ) वृत्ति-विकल्प किया, वह स्वमत-सिद्ध व्याप्ति के आधार पर ? या वेदान्त-मत सिद्ध व्याप्ति के सहारे? या परमत-सिद्ध व्याप्ति को दृष्टि में रखकर ? प्रथम पक्ष युक्त नही, क्योंकि सुगतानुयायी वृत्तिता मानते ही नही, उनके यहाँ सब कुछ क्षणिक स्वलक्षणमात्र है, आश्रयाश्रयिभाव होता ही नही। वेदान्त-मत मे भी कार्य, कारण में कल्पित है, वास्तविक वृत्तिता नही मानी जाती। हमारे (ताकिको के) मतमे जो जहाँ रहता है, वह वहाँ संयाग वा समवाय सम्बन्ध से रहा करता है—यही माना जाता है, न कि समस्त या एक देश से। यदि मान भी ले कि समस्त अवयवी अपने अवयव मे रहता है, तथापि सींग से दूध नही निकाला जा सकता, क्योंकि भिन्न-भिन्न अवयव-विशिष्ट अवयवी में ही व्यवस्थित रूप से भिन्न-भिन्न कार्योत्पादन का सामर्थ्य होता है। आपके उक्त जितने भी प्रसञ्जक ( अवयवी मे अनिष्टापादक ) हेतु है, वे सभी आश्रयासिद्ध है, क्योकि आश्रयभूत अवयवी आप नही मानते है। यदि मान ले, तब उस धर्मी के ग्राहक प्रमाण से ही आपके सभी साधनो का बाध हो जाता है। यदि कहें कि परमत-सिद्ध पदार्थ मे हम उसके अनिष्ट का आपादन कर रहे है; तब भी प्रमाण से परमत-सिद्ध पदार्थ को आप धर्मी बनाते है ? या प्रतीतिमात्र-सिद्ध पदार्थ को ? दोनो पक्षो में उक्त बाध और आश्रयासिद्धि दोष होते है। यदि कहे कि बौद्ध-मत मे भी

तिवृत्ते । अस्त्येवेतरस्यापि कल्पनाकल्पितो धर्मीति चेत्, न, कल्पनाया सर्वत्राव्याहत-प्रसरतयाऽऽश्रयासिद्ध्यादिदोषप्रमोषप्रसङ्गात् । तदेवं परमाणूनामेव द्व्यणुकादिक्रमेण निश्चितनिखिलजगत्कारणतोपपत्तौ न ब्रह्मणस्तत्कारणत्वकल्पनावकाश इति ।

अत्रोच्यते— अर्थान्तरत्वादाद्यस्य परस्योपाधिमत्त्वतः ।
अन्त्यस्याभासतुल्यत्वात्प्रतिसाधनरोधनात् ॥१८॥

यत्तावन्महत्त्वापकर्षतरतमभावस्य क्वचिद्विश्रान्तिसाधनम्, तदर्थान्तरम्, त्रसरेणुष्वेव तस्य विश्रान्तेः । न च चाक्षुषद्रव्यत्वात् महत्त्वे सति क्रियावत्त्वाद्वा तेषामपि सावयवत्वानुमानात्तत्र विश्रान्त्यनुपपत्तिः, आद्यस्य योगिचक्षुर्गोचरेषु परमाणुष्वनैकान्तिकत्वात् । नचास्मदादीति विशेषणोपादानाददोषः, परमाणूनामिदानीमेव साधनीयतया तद्व्यावृत्त्यर्थं विशेषणस्य वैयर्थ्यात् । द्वितीयेऽपि महत्त्वे सतीति विशेषणस्य परमाण्वसिद्धौ वैयर्थ्यात् । यत्तु

कश्चिदवयवी ममाप्यस्त्येवेति शङ्कित्वा अतिप्रसक्त्या परिहरति—**न कल्पनाया इति** । उपपादितोऽयमर्थो मिथ्यात्ववादे । पूर्वपक्षमुपसंहरति—**तदेवमिति** ।

तत्र तावत्परमाणुसाधकतया शङ्कितानुमानेषु दूषणानि श्लोकेन सगृह्णाति—**अर्थान्तरत्वादिति** । अणुपरिमाणतारम्यमित्यनुमाने त्र्यणुकैरर्थान्तरता । यत्तु पृथिवीत्वस्य नित्यवृत्तित्वानुमानम्, तत्राह—**परस्येति** । यत्तु महाविद्यानुमानमुक्तं तत्राभाससमानयोगक्षेमता सत्प्रतिपक्षता चाह—**अन्त्यस्येति** । सग्रह विवृणोति—**यत्तावदित्यादिना** । कश्चाय तरतमभावः ? न तावत्संख्यापरिमाणे, तयोर्निर्गुणे परिमाणेऽसंभवात् । नापि जातिः, महत्त्वाणुत्वाभ्या परापरभावाभावात् । अभावत्व त्वेतादृशाना पुरैव निवारितम् । ततश्चाश्रयासिद्धिरपि दुरुद्धरा । यत्तु त्र्यणुकानामपि सावयवत्वानुमानद्वारार्थान्तरत्व परिहृतम्, तत्राह—**न चेति** । अत्र किं चाक्षुषत्वमात्र विवक्षितम् ? किंवाऽयोगिचाक्षुषत्वम् ? आद्ये भवतामनैकान्तिकता स्यादित्याह—**आद्यस्येति** । परमाणुष्वित्युपलक्षणं कालादीनामपि । द्वितीयं दूषयति—**नचेति** । अत्र तावद्भाट्टाना कालाकाशदिशामप्यस्मदादिचाक्षुषत्वात्तद्व्यावृत्त्यर्थं न स्यात्तस्माद्योगिनामेव प्रत्यक्षपरमाणुव्यावृत्त्यर्थमिद विशेषण तथा च वैयर्थ्यम् । योग्यनङ्गीकारादपि भाट्टान्प्रति वैयर्थ्यमित्यर्थः । द्वितीय सावयवत्वसाधक दूषयति—**द्वितीयेति** । निरवयवपरमाणुषु क्रियावत्त्वेनैकान्तिकतापरिहारार्थम्, महत्त्वे सतीति विशेषणम् । तथाच वैयर्थ्यमित्यर्थः । भवतु वा सावयवत्वम्, तथापि कथमर्थान्तरताऽभावः ? नहि द्व्यणुकादौ महत्त्वापकर्षविश्रामसंभवः, तत्र महत्त्वस्यैवाभावात् । परस्योपाधिमत्त्वत इत्येतद्विवृणोति—**यत्त्विति** ।

कल्पना-सिद्ध धर्मी है ही, तब तो कल्पना-कोश में क्या कमी है ? अवयवों से अन्यत्र भी अवयवी की कल्पना करके भी आश्रयासिद्धि-आदि दोष हटाये ही जा सकते हैं । इस प्रकार यह ही सिद्ध होता है कि परमाणुओं में ही द्व्यणुकादि के क्रम से जगत्-सर्जन का सामर्थ्य निहित है, ब्रह्म में जगत्-कारणता की कल्पना के लिए कोई अवकाश नहीं ।

आरम्भवाद-विमर्दन—उक्त परमाणु-साधक तीनों अनुमानों के विषय में हमारा कहना यह है कि प्रथम में अर्थान्तरता, द्वितीय में सोपाधिकता और अन्तिम साधन में आभास की समानता और सत्प्रतिपक्षितता दोष है । अर्थात् जो महत्त्वपरिमाण के अपकर्ष-तारतम्य की कहीं विश्रान्ति का साधन किया गया, उसमें अर्थान्तरता यह है कि त्रसरेणु में ही विश्रान्ति मान लेने से काम चल जाता है । यह जो 'चाक्षुष द्रव्यत्व' या 'महत्त्व-विशिष्ट सक्रियत्व' हेतु से त्रसरेणुओं में सावयवत्व का अनुमान किया था, वहाँ प्रथम हेतु योगी के चक्षुर्गम्य परमाणुओं में व्यभिचारी है ( क्योंकि परमाणुओं में सावयवत्व साध्य के न रहने पर भी योगी का चाक्षुषत्व रह जाता है ) । अस्मदादि-विशेषण लगाकर जो यह दोष हटाया था, वहाँ परमाणुओं की व्यावृत्ति के लिए ही वह विशेषण लगाया जाता है और परमाणु अभी सिद्ध ही नहीं, अतः वह ( अस्मदादि ) विशेषण व्यर्थ है ।

पृथिवीत्वस्य नित्यवृत्तित्वानुमानम्, तत्र पृथिवीव्यतिरिक्ताधेयत्वमुपाधि', सत्ताया अपि नित्यवृत्तित्वानङ्गीकारात् साध्यविकलश्च दृष्टान्त' । अयं घट एतदतिरिक्तानित्यमूर्तातिरिक्तमूर्तान्य इत्यनुमानमाभाससमानम्, अय घट एतदतिरिक्तानित्यसावयवातिरिक्तसावयवान्यो मेयत्वादित्यपि प्रयोगस्य सुवचत्वात् । पृथिवीत्वमनित्यमात्रवृत्ति पृथिवीमात्रवृत्तित्वात् घटत्ववदिति प्रतिप्रयोगसंभवाच्च । नच पृथिवीनिष्ठात्यन्ताभावाप्रतियोगिजात्यन्यत्वमुपाधि, व्यति-

---

सत्ताया नित्यवृत्तित्वेपि पृथिवीत्वरहितवृत्तित्वमुपाधिः । नच पक्षेतरता, आकाशादेर्विपक्षस्य व्यावर्त्यस्य सत्त्वात् । वेदान्तिमते साध्यवैकल्य चाह—**सत्ताया इति** । आकाशादिप्रपञ्चस्य नित्यत्वाभावात्सत्तायाः कल्पितत्वात्, आत्मनश्च सद्रूपतया तत्र सत्तावृत्त्यभावादित्यर्थः । अन्त्यस्यैतद्विवृणोति—**अयं घट इत्यादिना** । अत्र ह्येतदतिरिक्तानित्यसावयवातिरिक्तः सावयवोऽयमेव वा घटोऽनित्यत्वानधिकरणसावयवो वा कश्चित् ? प्रथमेऽन्यत्वमेव तदघटस्य व्याहतमिति ततोऽनित्यत्वानधिकरणस्य सावयवस्य कस्यचिदप्यन्यस्य सिद्धिप्रसङ्गः इत्यर्थः । नचानित्यद्रव्यस्यैव सावयवत्व स्यादनित्यसावयवत्वानधिकरणसावयवान्यत्वानुमान व्याघातादेव नोदेतीति वाच्यम्, मूर्तस्याप्यनित्यताव्याप्त्या त्वदनुमानेपि व्याघातसाम्यात् । परिच्छिन्नापरिमाणमात्रमेव मूर्तत्वमित्युक्ते द्रव्यत्वे सति द्रव्यसमवेतत्वमेव सावयवत्व न पुनरनित्यत्वगन्ध इत्यपि वक्तुम् शक्यमिति भाव. ॥ १ ॥ तथाय घट एतद्धटत्वे सति एतदतिरिक्तानित्यमूर्तत्वानधिकरणमूर्तान्यो न भवति मेयत्वात्पटवदिति प्रकरणसमता ॥ २ ॥ तथा त्वद्धेतुः स्वस्वेतरवृत्तित्वानधिकरणसमस्तहेतुदोषाधिकरणनिष्ठधर्मवान् मेयत्वात् ॥३॥ तथा नित्यत्व स्वस्वेतरवृत्तित्वानधिकरणमूर्तनिष्ठत्वरहितनिष्ठाधर्माधिकरण मेयत्वात् ॥४॥ तथा निरवयवत्व स्वस्वेतरवृत्तित्वानधिकरणमूर्तनिष्ठत्वरहितनिष्ठधर्माधिकरण मेयत्वात् ॥५॥ इत्यादिमहाविद्याभिरेवार्थत सत्प्रतिपक्षता केन वार्यते ? तथापि यस्य कस्यचिदुपाधितामुद्भाव्य तत्साध्यसमत्वादिविप्रतिपत्तावप्येतयेव रीत्या समर्थनीयम्, तथा हेत्वादिकमपि पक्षीकृत्य वैपरीत्यमनुमानव्यम्, परमाण्वनङ्गीकारेप्येवमनुमानसभव इष्यते, तथा रीत्यन्तरैरपि । नचैतेषा तर्कविद्याविराधादिदोष शक्यशङ्कः, विमतान्यनुमानानि स्वस्वेतरवृत्तित्वानधिकरणसकलदूषणरहितनिष्ठधर्माधिकरणानि मेयत्वात् ॥६॥ इत्यपि शक्यप्रयोगत्वात् । नच मयाप्येव वैपरीत्यमनुमातु शक्यमिति वचनीयम्, ततापि वक्तु शक्यत्वात् । एव हि महाविद्याकोविदाः प्राहुः, श्रमादुपरमेपि न दोष इति । ननु तथापि महाविद्या-प्रामाण्य सिद्धमेवेति चेत्, अप्रामाण्यमपि सिद्धमेव । तदित्थम्—

स्वपक्षपरपक्षाणामेषा पारिप्लवावहा । आरादेव परित्याज्या महाविद्याभिसारिका ॥ १ ॥

सत्प्रतिसाधनता विवृणोति—**पृथिवीत्वमिति** । एतच्चोभयारप्यनुमानयो' समानम् । **न च पृथिवीनि-**

---

द्वितीय (पृथिवीत्व मे नित्य-वृत्तित्व का) जो अनुमान किया था (पृथिवीत्व नित्यवृत्ति घटवृत्तिजातित्वे सति पटवृत्तिजातित्वात् सत्तावत्) । वहाँ 'पृथिवी भिन्न-वृत्तित्व' उपाधि है ( सत्तारूप दृष्टान्त् मे पृथिवी-भिन्न जलादि-वृत्तित्व रहने से साध्य व्यापक है एव पृथिवीत्व में साधन के रहने पर भी पृथिवी-भिन्न-वृत्ति नही, अत साधनाव्यापक है ) । वेदान्त-मत में नित्य वस्तु, एक ब्रह्म ही है, उसमे सत्ता रहती नही, अतः उक्त अनुमान में साध्य-विकलता भी है । यह जो महाविद्या प्रयोग किया था—( अयं घट एतदतिरिक्तानित्यमूर्तातिरिक्तमूर्तान्य प्रमेयत्वात् पटवत् ) । वह अनुमान भी "यह घट, एतदतिरिक्त अनित्य सावय से भिन्न जो सावय, उससे भिन्न है, प्रमेय होने से"—इस अनुमानाभास के ही समान है ( अर्थात् जैसे एतद् घट से अतिरिक्त सावयव होता है–पटादि, उससे अतिरिक्त सावयव है—एतद् घट, उससे अन्य यह नही, अतः यह अनुमान आभास है, वैसे ही प्रकृत मे भी ) । उक्त अनुमान का सत्प्रतिपक्ष भी है—"पृथिवीत्व, अनित्यमात्र मे वृत्ति है, पृथिवीमात्र-वृत्ति होने से, जैसे—घटत्व ।" यदि कहें कि यहाँ 'पृथिवी-निष्ठ अत्यन्ताभावाप्रतियोगि

रेकव्याप्त्यसिद्धेः साध्याव्यापकत्वात्, सत्ताद्रव्यत्वयोरपि नित्यवृत्तित्वासंप्रतिपत्तेः । न च निरवयवेषु सप्रयोगसंभवः, येनासमवायिकारणसंपत्त्या द्रव्यारम्भः संभाव्येत । परमाणुपक्षीकारासंभवेऽपि संयोगित्वं सावयवमात्रवृत्ति संयोगिमात्रवृत्तित्वात् घटत्ववदिति संप्रयोगोपपत्तेः । न च द्रव्यत्वेन सयोगित्वानुमानम्, उभयवादिसिद्धस्य धर्मिणोऽभावात् । न च संयोगित्वं निरवयववृत्ति संयोगिनिष्ठात्यन्ताभावाप्रतियोगित्वान्मेयत्ववदिति सप्रतिसाधनता; संयोगिव्यापिनि सावयवत्वधर्मे परस्यानैकान्त्यात् । न च द्वितीयसंयोगानुपपत्ति-

---

ष्ठेति । सकलपृथिवीनिष्ठा या जातयः पृथिवीनिष्ठात्यन्ताभावाप्रतियोगिजातयः तदन्यत्वमुपाधिरिति नच वचनीयमित्यर्थः । कुत इत्यत आह—व्यतिरेकेति । यत्र हि पृथिवीनिष्ठात्यन्ताभावाप्रतियोगिजातित्वं तत्र नित्यवृत्तित्वमिति व्यतिरेकव्याप्तिः कुत्र गृह्यते ? न तावत्सत्ताद्रव्यत्वयोः, अद्वैतवादिनस्तयोरपि नित्यवृत्तित्वासप्रतिपत्तेः । अतः साध्याव्यापकत्वादनुपाधिरित्यर्थः । यत्तु निरवयवस्यापि परमाणोः संयोगसमर्थनं कृतं तद्दूषयति—नचेति । ननु परमाणुसयोगाक्षेपस्य जगत्कारणत्वाभावे क उपयोग ? इति, तत्राह—येनेति । अवयवसयोग खल्ववयव्युत्पत्तावसमवायिकारणम्, स हि लघुप्रत्यासन्नः, तदिह परमाणूना तदभावे कारणत्रयाभावाद्व्यैतैव द्व्यणुकाद्यारम्भ इत्यर्थः । परमाणुव्यक्तिमात्रपक्षीकरणमाशङ्क्य पूर्ववादिना यद्दूषणमुक्तं तदनङ्गीकारपरास्तमिति वदन् भङ्ग्यन्तरेणानुमानमारचयति—परमाण्विति । नच द्रव्यत्वेनानैकान्तिकता, तस्यापि पक्षतुल्यत्वात् । प्रतिप्रयोगमाशङ्क्य दूषयति—न च द्रव्यत्वेनेति । ननु किमित्युभयसिद्धधर्म्यभावः, त्वद्रीत्या सयोगित्वमेव पक्षीकृत्य शक्यप्रयोगत्वादिति, तत्राह—नच संयोगित्वमिति । सयोगिनिष्ठघटत्वादिव्यावर्तनायात्यन्ताभावपदम् । यस्य हि सावयवमेव संयोगीति मत तन्मते सावयवत्वेऽनैकान्तिकमित्यर्थः । किंच संयोगत्व गुणादिवृत्ति सयोगिनिष्ठात्यन्ताभावाप्रतियोगित्वान्मेयत्वादिवदिति शक्यानुमानत्वादाभाससमानयोगक्षेमत्वम् । यच्च द्वितीयसयोगाभावो न दोषाय प्रथिमानुपपत्तेरदूषणत्वादित्युक्तम्, तत्राह—न चेति । माभूत्प्रथिमानुपपत्तिर्दोषः, द्वितीयसयोगानुपपत्ति-

---

जाति-भिन्नत्व' उपाधि है ( पटादिरूप पृथिवी मे वृत्ति है—घटत्वादि का अत्यन्ताभाव, उसकी अप्रतियोगिभूत जाति है—पृथिवीत्व, सत्तादि, उससे भिन्न है—घटत्व । अतः दृष्टान्त में साध्यव्यापक है–उक्त धर्म, किन्तु पक्षभूत पृथिवीत्व जाति में न रहने से साधन का अव्यापक है ) । तो यह नहीं कह सकते, क्योकि इसमें साध्य की व्यतिरेक व्याप्ति न रहने के कारण यह साध्य का व्यापक नहीं । ( अर्थात् जहाँ पृथिवी-निष्ठ अत्यन्ताभावाप्रतियोगित्व-विशिष्ट जातित्व है, वहाँ नित्यवृत्तित्व है—इस प्रकार की व्यतिरेक व्याप्ति का निश्चय कहाँ करेगे ? सत्ता, द्रव्यत्वादि मे भी नही कर सकते, क्योंकि ) वेदान्त-सिद्धान्त में सत्ता और द्रव्यत्वादि जातियाँ नित्य ( ब्रह्म ) में वृति नहीं मानी गई है । निरवयव परमाणुओ मे संयोग भी सम्भव नहीं, जिससे कि असमवायिकारण का लाभ होता और कार्य द्रव्य का आरम्भ सम्भव हो जाता । यह जो कहा था कि परमाणु जब तक सिद्ध नही होते, तब तक उन्हें पक्ष बनाकर असंयोगित्व का अनुमान नहीं कर सकते । वह आपका कहना ठीक है । क्योकि हम ऐसा प्रयोग करेंगे—"सयोगित्व सावयवमात्र मे वृत्ति होता है, सयोगिमात्र-वृत्ति होने से, जैसे–घटत्व ।" हाँ, आप 'द्रव्यत्व' हेतु से सयोगित्व का अनुमान नहीं कर सकते, क्योकि उभय मत से सिद्ध धर्मी ( परमाणु ) है ही नही । "सयोगित्व निरवयव द्रव्य मे वृत्ति है, सयोगि-निष्ठ अत्यन्ताभाव का अप्रतियोगी होने से, मेय के समान"—यह सत्प्रतिपक्ष प्रयोग नही कर सकते, क्योंकि सयोगि-वृत्ति सावयवत्व मे निरवयव-वृत्तित्व रूप साध्य के न रहने पर भी हेतु माना जाता है, अतः अनैकान्तिक है । निरवयव परमाणुओ मे द्वितीय सयोग की अनुपपत्ति का जो दोष दिया गया था, उसका भी प्रतीकार नही हो सकता । द्वितीय संयोग के बिना

दोषः, पार्थिवाप्यपरमाण्वोः संयुक्तयोः सजातीयाण्वन्तरसंयोगात् द्व्यणुकोत्पत्तौ द्वितीयसंयोगस्यावश्याभ्युपेयत्वात्, कारणाकारणसंयोगेन कार्याकार्यसंयोगस्येष्टत्वाच्च।

न चावयवी कश्चित्संभवति, यः परमाणुभिरारभ्यते। न चैकस्थूलनीलावभासो बाह्ये प्रमेत्यनुमानात्तत्सिद्धिः, यादृगवयवानामवयव्यारम्भकताभ्युपेयते, तेषामेवैकस्थूलनीलावभासगोचरत्वोपपत्तेरर्थान्तरत्वात्। न चानेकेषामेकप्रत्ययविषयत्वानुपपत्तिः; एकप्रावरणाद्यर्थक्रियाहेतुत्वोपाधौ बहूनामपि तन्तूनामेकप्रत्ययत्वोपपत्तेः। दृश्यते हि बहूनामपि वर्णानामेकार्थप्रतिपत्तिहेतुत्वोपाधावेकं पदमिति बुद्धिगोचरता। कम्पाकम्पावरणानावरणरक्तारक्तत्वलक्षणविरुद्धधर्मसंसर्गादवयविन एकत्वानुपपत्तेश्च। न चावयवाना तथात्वेऽप्यवयविनो-

रेव दोषः, अपसिद्धान्तापत्तेरित्याह—पार्थिवाप्येति। यदा हि पार्थिवपरमाणोराप्यपरमाणौ संयोगो जायते, तदनन्तरं च पार्थिवस्यान्येन पार्थिवेन आप्यस्याप्यन्येनाप्येन संयोगो जायते, तदा पार्थिवाभ्यां पार्थिवद्व्यणुकम् आप्याभ्यां चाप्यद्व्यणुकमिति द्वयं युगपदारभ्यत इति भवता समयः, ततश्च पार्थिवाप्यपरमाण्वोः प्रथमं संयोगः, संयुक्तयोरेव पुनः सजातीयाणुभ्यां संयोगनिष्पत्तिरिति तदनुपपत्तिर्दोषायैवेत्यर्थः। अथेयमपि प्रक्रिया मा भूत्कि नश्छिन्नमिति? तत्राह—कारणेति। अयमर्थः-संयोगजसंयोगप्रकरणे ह्येकस्माद् द्वाभ्यां बहुभ्यश्चैकस्य संयोगस्योत्पत्तिमुक्त्वा पुनरेकस्मात्संयोगाद् द्वयोः संयोगोत्पत्तावित्थमुदाहृतं भवद्भाष्यकृता—'यदा पार्थिवाप्यो' रित्यारभ्योक्तप्रकारेण द्व्यणुकयोरुत्पत्तिमुक्त्वा ततो 'यस्मिन्नेव काले द्व्यणुकयोः कारणगुणक्रमेण रूपाद्युत्पत्तिरतस्मिन्नेव काले इतरेतरकारणगतात्संयोगादितरेतरकार्याकार्यगतौ संयोगौ युगपदुत्पन्नेते' इत्यन्तेन। उपपत्तिरपि तैरेवोक्ता—'किं कारणम्? कारणसंयोगिना हि कार्यमवश्यं संयुज्यते इति हि न्यायः।' इति। तस्मात्त्वयोदिता द्वितीयसंयोगानुपपत्तिरनिष्टापत्तिरेवेति।

यच्चावयविसाधनं पूर्ववादिना कृतम् तदपि दूषयितुं क्रमते—न चावयवीत्यादिना। यच्च मानमनोहरीयमनुमानम्, तत्र बाह्यविषयत्वेऽप्यवयवैरर्थान्तरतामाह—न चैकस्थूलनीलेत्यादिना। नन्ववयवानामनेकत्वादेकबुद्धिविषयत्वानुपपत्तिरिति, तत्राह—न चानेकेषामिति। यथा हि बहूनामपि वर्णानां बहूनामपि पदानामेकपदार्थादिबुद्धिजनकत्वोपाधावेकं पदमेकं वाक्यमिति बुद्धिविषयत्वम्, न पुनस्तादृशः कश्चिद्वर्णाद्यतिरिक्तोऽर्थः, तथेहाप्येकार्थक्रियोपाधौ बहूनामेव तन्तूनामेकबुद्धिविषयत्वं किमिति न संभवतीत्यर्थः। न च परमाणूनामप्रत्यक्षत्वात्प्रत्यक्षबुद्ध्यविषयत्वमिति वाच्यम्, तादृशपरमाणूनामेवासिद्धेः। विरुद्धधर्मसंसर्गलक्षणतर्कविरोधमपि समर्थयते—कम्पेति। पूर्वोक्तं पूर्वपक्षाशयं निराचष्टे—न चावयवानामिति। ननु

आपका काम चल नहीं सकता; क्योंकि जहाँ पार्थिव और जलीय परमाणु परस्पर संयुक्त हैं, उसी अवस्था में पार्थिव परमाणु का पार्थिव परमाणु से और जलीय परमाणु का जलीय परमाणु से संयोग होकर युगपत् पार्थिव और जलीय दोनों द्व्यणुक उत्पन्न होते हैं, वहाँ द्वितीय संयोग मानना ही होगा, आपके मत में कारण और अकारण के संयोग से कार्य और अकार्य का संयोग माना जाता है।

अवयवी भी कोई प्रमाणित नहीं होता, जिसका परमाणुओं से आरम्भ(उत्पाद)किया जाता। यह जो अनुमान किया था "घट, एक स्थूल तथा नील है—यह प्रमा बाह्य वस्तु को विषय करती है"। वह भी युक्त नहीं; क्योंकि जिन अवयवों को आप आरम्भक मानते हैं, उन्हीं में एकत्व, स्थूलत्वादि की प्रतीति बन जाने से अर्थान्तरता होती है। अनेक अवयवों में एकत्वप्रतीति अनुपपन्न है—यह बात भी नहीं, क्योंकि सभी तन्तु, आच्छादनरूप एक प्रयोजन का निष्पादन करते हैं, अतः उन बहुत तन्तुओं में भी एकत्व-प्रतीति वैसे ही बन जायगी, जैसे कि बहुत वर्णों में एक गोत्वादि रूप अर्थ-प्रत्यायकत्व रहने के कारण एकपदत्व की प्रतीति होती है। कम्पाकम्प, आवरणानावरण, रक्तत्वारक्तत्वरूप विरुद्ध धर्मों का संसर्ग होने से अवयवी में एकत्व नहीं बन सकता। यह जो कहा

घाताच्च। जीवानां तु न सा कल्प्या, अहमज्ञ इत्यनुभवसिद्धत्वादिति चेत्, न, अविद्याकल्पितोऽहमज्ञ इत्यनुभवाभावात्। नन्वहमिति प्रतीतिं कल्पिततामविद्याश्रयस्य बोधयति, अहंकृते कल्पनामयत्वात्। सुषुप्ततुरीयादौ च सत्यपि चिदात्मनि तदभावात्। अहं ब्रह्मास्मीति सामानाधिकरण्यस्य योऽयं स्थाणुरसौ पुमानितिवद्बाधपरत्वात्। अहंशब्दस्य तत्र लक्षणया शोधितत्वंपदार्थविषयत्वाभ्युपगमाच्च अत कल्पिताश्रयमज्ञानं प्रतीतित एव सिद्धमिति-चेत्, न, प्रविलीनाहंकारेऽप्यात्मनि सुषुप्तादावज्ञानस्य सद्भावाभ्युपगमादन्यथा सुषुप्तिप्रलययोर्मुक्तिप्रसङ्गात्। तस्मादविद्याधीनो जीवविभागस्तदधीना चाऽविद्येति दुर्वारा परस्पराश्रयता। न च बीजाङ्कुरसन्तानयोरिव जीवाविद्ययोरनादित्वेन तत्परिहार, दृष्टान्तवैषम्यात्। तत्र हि बीजाङ्कुरव्यक्तीनामन्योन्यकार्यकारणभावात्, तत्सन्तानयो. परस्पराधीनत्वव्यपदेश, इह तु जीवाविद्याव्यक्त्योरेकत्वात् कार्यकारणभावाभावाच्च कथं तथा व्यपदेश स्यात्?

---

वानाह—जीवानामिति। ननु यद्यप्यहमज्ञ इत्यत्राविद्याकल्पिताऽऽश्रयत्व न केनाप्युल्लिख्यते तथाप्यज्ञ इति प्रतीतिबलादज्ञानाश्रयस्याविद्याकल्पिततास्तीति शङ्कते—नन्वहमित्यादिना। अहंकृतेरिति। अहमिति कृतिः करणमहमाकारेण परिणामो यस्मिन् यस्याहंकारस्य वेत्यर्थ.। अयावदात्मभावित्वाच्च कल्पित इत्याह—सुषुप्तेति। तुरीय मोक्षावस्था। नन्वह ब्रह्मास्मीति वाक्येन ब्रह्मसामानाधिकरण्यमहंकारस्योच्यते नच कल्पितस्य वस्तुभूतेनैक्य सभवतीति कथ कल्पितत्वमहंकारस्येति तत्राह—अहमिति। अन्यतरबाधायामपि भ्रान्तिस्थलेषु सामानाधिकरण्य दृश्यत इत्यर्थ.। ननु न तावदिद वाक्य बाधमात्रपरम्, ऐक्योपदेशपरत्वात् ऐक्यसाक्षात्कारेण ह्यविद्यानिवृत्तिरिति। सत्यम्, शोधितत्वपदार्थस्य ब्रह्मैक्योपदेशपर नत्वहंकारस्य। कथ तर्ह्यहंशब्दस्य तत्र प्रवृत्तिस्तत्राह—अहंशब्दस्येति। स्यादेव यद्यहंकारविशिष्टाश्रितमज्ञानमिति ते मतं स्यात्। नत्वेव सुषुप्तिप्रलययोरप्यस्ति दण्डायमानमज्ञानमिति हि ते मतम्, नच तदाहंकारोऽस्ति। विकारस्य तदा प्रविलयात्तदभावे कथ कल्पिताश्रयत्वमज्ञानस्येति दूषयति पूर्ववादी—न प्रविलीनेति। मण्डनवाचस्पतिमिश्राभिमतपरिहार दूषयति—न चेति। वैषम्यमेवाह—तत्र हीति।

---

नहीं, क्योंकि वहाँ "अहमज्ञ"—इस प्रकार के अनुभव से ही सिद्ध है। तो यह नहीं कह सकते, क्योंकि "मै अविद्या से कल्पित अज्ञ हूँ"—यह अनुभव नहीं होता। यदि शङ्का हो कि "अहम्"—यह प्रतीति बताती है कि अविद्या का आश्रय कल्पित है, क्योंकि अहङ्कार कल्पनामय ही माना जाता है। सुषुप्ति और तुरीय ( मोक्ष ) अवस्था मे चेतन के रहने पर भी "अहम्" यह प्रतीति नहीं होती। "अहं ब्रह्मास्मि"—इस प्रकार सामानाधिकरण्य प्रतीति से अहङ्कार मे अकल्पितत्व सिद्ध नहीं होता, अपि तु "योऽयं स्थाणुरसौ पुमान्"—इस प्रकार अन्यतर के बाध में भी सामानाधिकरण्य का व्यवहार हो जाता है। वहाँ 'अह' शब्द की प्रवृत्ति लक्षणा के द्वारा शोधित त्वपदार्थ मे मानी जाती है। अत. 'अहम्'—इस प्रतीति से यही सिद्ध होता है कि कल्पित आश्रय मे अज्ञान है। तो यह शङ्का उचित नहीं, क्योंकि सुषुप्ति आदि मे अहङ्कार के प्रलीन हो जाने पर भी अज्ञान का सद्भाव माना जाता है, अन्यथा सुषुप्ति और प्रलय भी मुक्तिरूप हो जायँगे। इस लिए अविद्या की अपेक्षा से जीव-विभाग और जीव के आश्रित अविद्या—यह अन्योन्याश्रय दोष दुर्वार है। यह जो मण्डन मिश्र ने बीजाङ्कुर-परम्परा का दृष्टान्त देकर किसी के मत से अन्योन्याश्रय दोष का परिहार किया है—"अन्ये तु अनादित्वादुभयोरविद्याजीवविभागयोर्बीजाङ्कुरसन्तानयोरिव नेतरेतराश्रयत्वम्" ( ब्र० सि० पृ० १० )। वह भी युक्त नहीं, क्योंकि दृष्टान्त-दार्ष्टान्त का वैषम्य है (ब्र० न्या० म० पृ० ३१२)। अर्थात् दृष्टान्त मे बीज और अङ्कुर व्यक्तियो का परस्पर कार्य-कारणभाव होने के कारण उनकी सन्ततियो मे परस्पराधीनता का व्यवहार हो सकता है, किन्तु प्रकृत में जीव और अविद्या व्यक्तियों में अभेद होने से कार्य-कारणभाव नहीं है, तब उनमे परस्पराधीनता का व्यवहार कैसे होगा? यदि

नन्वात्मनि गुणवत्त्वद्रव्यत्वयोरिवानादित्वेऽपि प्रयोज्यप्रयोजकभावो जीवाविद्ययो. किं न स्यादिति चेत्, तर्ह्यविद्यावत्त्वजीवत्वयोश्चिन्मात्रं किमधिकरणम्? उताविद्याविशिष्टम्? आद्ये ब्रह्मण्येवाविद्येति प्राचीनदोषानुषङ्ग । द्वितीये पुनरविद्यावत्येवाविद्येत्यात्माश्रय । ब्रह्मवज्जीवस्यानादित्वे च न ब्रह्मप्रतिबिम्बता ।

अथ ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया च विमुच्यत इत्युच्येत, तदा तस्यैकत्वान्न विद्वदविद्वद्गुरुशिष्यबन्धमोक्षादिव्यवस्था स्यु' । तथा हि—यदि नोत्पन्ना विद्या कस्तदा गुरुरात्मान्तराभावाद् । यद्युत्पन्ना कस्तदा शिष्य ? सर्वभेदप्रविलयात् । मायाविनिर्मितौ गुरुशिष्यौ स्त एवेति चेत्, न, उत्पन्नविद्यस्य मायानुपपत्ते. । शिष्याविद्याविनिर्मितो गुरुरिति चेत, न, अविद्यानिर्मितस्य जडत्वेन विद्यावत्त्वानुपपत्ते. । दृश्यत एवाविद्यानिर्मितस्य गुरुत्वं स्वप्न इति चेत्, तर्हि शिष्याविद्याविनिर्मितस्य गुरुत्वे तस्य तस्यापि शिष्यस्य स्वीय-

नहि साक्षात्सन्तानयोरन्यान्यस्मादुत्पत्ति', अनादित्वात् । ततो व्यक्तिद्वारा व्यक्तीनामप्यनेकतया नान्योन्यमुत्पत्तिः । नहि यतो बीजाद्योऽङ्कुरो जायते तदेव बीज तस्मादङ्कुरात्, अपित्वङ्कुरान्तरात्, नचेह तथा । नहि प्रतिदिनमन्येऽन्ये जीवा. नाप्यविद्या, तस्मादस्त्येव वैषम्यमित्यर्थः । यद्यप्यनादित्वादेकत्वाच्च नान्योन्यमुत्पत्तिर्जीवाविद्ययोर्नाप्यन्योन्यज्ञप्तिः, एकस्य स्वप्रकाशत्वात्, अपरस्य साक्षिवेद्यत्वात् । तथाप्यन्योन्यनियम्यत्व घटत इति दृष्टान्तमवष्टभ्य शङ्कते—नन्वात्मनीति । तर्हि यथा गुणवत्त्वद्रव्यत्वयोरेक आत्माधिकरणम्, तथाऽत्राप्येकमधिकरण वक्तव्य तत्किं चिन्मात्रम्? किं वा अविद्याविशिष्टम्? इति विकल्प्य दूषयति—तर्हीत्यादिना । दूषणान्तर चाह—ब्रह्मवदिति ।

इष्टसिद्धिकारमतमुद्भावयति—अथेति । गुर्वादिविभागाभावमेव प्रपञ्चयति—तथा हीत्यादिना । यद्यप्युत्पन्नविद्यतया गुरोर्माया नास्ति तथापि शिष्यस्याविद्यास्ति, अनुत्पन्नविद्यत्वात्तदविद्याविजृम्भित एव तद्गुरुः । नच कल्पितस्योपदेष्टृत्वानुपपत्ति, स्वाप्नवदुपपत्तेरिति शङ्कते—शिष्याविद्येति । एव शिष्या-

कहा जाय कि अनादि होनेपर भी जीव और अविद्या मे गुणवत्त्व और द्रव्यत्व के समान ही प्रयोज्य-प्रयोजकभाव क्यो न बनेगा ? तो वहाँ जिज्ञासा होती है कि अविद्यावत्त्व और जीवत्व का आश्रय क्या चेतनमात्र है ? या अविद्या-विशिष्ट चेतन ? प्रथम पक्ष में तो ब्रह्म ही अविद्या का आश्रय मानना होगा, जो कि पूर्वोक्त असम्भव दोष से युक्त है । द्वितीय पक्ष मे अविद्य-विशिष्ट ही अविद्या का आश्रय मानने से आत्माश्रय दोष होता है । जीव के अनादि होने से केवल अन्योन्याश्रयता ही नही, अपि तु ब्रह्म के समान ही जीव में भी प्रतिबिम्बता नही बनेगी ( द्र० न्या० म० पृ० ३१२ ) ।

इष्ट सिद्धिकार ने ( इष्ट० ६।१, ३ में ) कहा है—

"ब्रह्मैवाविद्ययैकं चेद्बध्यते मुच्यते धिया ।
एकमुक्तौ जगन्मुक्तिर्न मुक्तान्यव्यवस्थिति ॥
तेषा भेदाच्च मूढान्यबद्धमुक्तव्यवस्थिति. ।
गुरुशिष्यौ च ते न स्तां न ज्ञौ नाज्ञौ च तौ यत ॥"

अर्थात् यदि एक ही ब्रह्म, अपनी अविद्या से बद्ध और अपनी विद्या से मुक्त होता है, तब विद्वान् अविद्वान्, गुरु-शिष्य तथा बन्ध-मोक्ष की व्यवस्था नही हो सकती । आशय यह है कि यदि विद्या उत्पन्न नही हुई, तब गुरु कौन होगा ? क्योकि आत्मान्तर है ही नही । यदि विद्या उत्पन्न हो गई है, तब शिष्य कौन रहेगा ? जब कि सर्व भेद ही समाप्त हो गया है । 'माया-निर्मित गुरु-शिष्य होंगे'—यह नहीं कह सकते , क्योकि जिसमे विद्या उत्पन्न हो गई है, उसमे माया कैसे रहेगी ? 'शिष्य की अविद्या से निर्मित गुरु मानेंगे'—यह भी नही कह सकते , क्योकि अविद्या-निर्मित जड़ होने के कारण विद्यावान् नही बन सकता । 'स्वप्न मे शिष्य की अविद्या से निर्मित गुरु

स्वीयशिष्यं प्रति गुरुत्वेन तत्तदविद्याविनिर्मितत्वान्न कोऽपि परमार्थः परमात्मतया निरूपित. स्यात्। यच्चाहु—स्वात्मानमेव कल्पितभेदं गुरु. शास्तीति, तच्चायुक्तम् , तस्य स्वात्मनो मुक्ति निश्चिन्वत स्वव्यतिरेकेण तेषामभावं च पश्यतस्तदुपदेशार्थं प्रवृत्त्ययोगात्। प्रवृत्तौ च 'मन्मुक्त्यैवासि मुक्तस्त्वं मा यत्नं कुरु मुक्तये' ( इष्ट० ७।७ ) इत्येवोपदेशप्रसङ्गात्। किंचानादौ ससारे कस्यचिन्मुक्तिरासीत् ? न वा ? आद्ये नेदानीं ससारोपलम्भ. स्यादात्मान्तराभावात्। द्वितीयेऽपि कथं भविष्यतीति प्रत्याशा ? न च विद्याभावात्पूर्वममुक्ति.। शुकवामदेवप्रभृतीनामविद्यमाना विद्याऽन्यस्य भविष्यतीति प्रत्याशाऽसभवात्, गुरुसंप्रदायाभावाच्च। तस्मादेकात्मवादे बन्धमोक्षव्यवस्थानुपपत्ते. पारमार्थिक एवात्मभेदः समाश्रयणीय.।

---

विद्याविनिर्मितो गुरुरिति पक्ष दूषयित्वा गुर्वविद्याविनिर्मितः शिष्य इति पक्षं दूषयति—यच्चाहुरिति। तस्याप्यविद्यावस्थायामिव कल्पनेति वक्तव्यम्, सा चोत्पन्नविद्यया ध्वस्तेति शिष्यकल्पनैव नास्ति कथमनुशिष्यात्? भवतु तथाप्यधिगतपरमार्थत्वाच्छिष्यादितत्त्व जानन्न पृथक्तमुपदिशेदित्याह—तच्चायुक्तमित्यादिना। एव गुरुशिष्यव्यवस्थानुपपत्तिमुक्त्वा बद्धमुक्तव्यवस्थानुपपत्तिमप्याह—किंचेत्यादिना। ननु पूर्वं विद्यैव नोत्पन्ना तेनोपपन्नः ससारः, शुकादीनां तु विद्योत्पत्तिशास्त्रमर्थवादमात्रमिति, तत्राह—न च विद्येति। किंच पूर्वं कस्यचिदपि चेद्विद्या नोत्पन्ना, तर्हि गुरुसप्रदायाभावादद्यापि विद्या नोत्पद्येतेति निर्णयस्यैव सभवादनिर्मोक्षप्रसङ्ग इत्याह—गुरुसप्रदायेति। तदेवमविद्याश्रयानिरूपणादविद्याधीनो जीवब्रह्मणोर्जीवाना च भेद इत्यसबद्धम्। अतः पारमार्थिक एवात्मभेद इत्याह—तस्मादिति। घटान्योन्याभावत्वेन सिद्धसाधनतापरिहाराय आत्मप्रतियोगिकेत्युक्तम्। आत्मनो भिद्यत इत्यर्थः। भेदमात्रसत्यत्वेऽप्य

---

देखा जाता है'–ऐसा मानने पर यह भी मानना पड़ेगा कि वह शिष्य भी अपने शिष्य का गुरु होने से उसकी अविद्या से निर्मित है। इसी प्रकार समस्त गुरु-परम्परा, शिष्य-परम्परा की अविद्या से निर्मित है, फिर तो कोई पारमार्थिक आत्मा सिद्ध ही न होगा। यह जो कहा जाता है कि गुरु अपने आत्मा में ही भेद की कल्पना के द्वारा शिष्य बनाकर उसे उपदेश देता है (द्र० न्या० म० पृ० ३१६)। वह कहना भी अयुक्त है, क्योकि गुरु ने अपने को मुक्त समझ लिया है, अपने से समस्त शिष्यादि वर्ग का अभाव निश्चय कर बैठा है, अत उन्हे उपदेश करने के लिए गुरु की प्रवृत्ति ही नही हो सकती। यदि किसी प्रकार प्रवृत्ति होगी, तब भी उसे यही उपदेश देना चाहिए कि "शिष्यो! तुम सब मेरी मुक्ति से ही मुक्त हो चुके हो, अब मुक्ति के लिए तुम्हें यत्न करने की कोई आवश्यकता नही। और भी एक जिज्ञासा होती है कि इस अनादि संसार मे किसी की मुक्ति हुई है ? या नही ? यदि किसी की मुक्ति हो चुकी है, तब इस समय यह ससार-दर्शन नही होना चाहिए, क्योकि दूसरा आत्मा तो है नही, जो अविद्या से ससार देखे। यदि अभी तक किसी की मुक्ति नही हुई, तब भविष्य मे उसके होने की भी आशा नही हो सकती। गुरु-शिष्य-सम्प्रदाय भी समाप्त हो जायगा। इसलिए एकात्मवाद मे बन्ध मोक्ष-व्यवस्था नही बन सकती, अत. पारमार्थिक आत्मभेद मानना चाहिए। ( इष्टसिद्धि मे भी द्वैतवादी की ओर से यही कहा गया है—

"कस्य चिन्मुक्तिरासीच्चेदैकात्म्ये कस्य ससृति।
न चेन्मुक्तौ भविष्यन्त्यां मतौ कस्य निश्चय॥
तस्मादयुक्तमैकात्म्य ज्ञानाज्ञानाव्यवस्थिते।
गुरुशिष्याव्यवस्थानान्मुक्तामुक्ताव्यवस्थितेः॥
अत पुभेद एष्टव्यो द्वैत च परमार्थसत्।
तद्भावे गुरुशिष्यादिव्यवस्था युज्यते यत॥" इष्ट० ७।१०, ११ )

प्रयोगश्च—आत्मा,आत्मप्रतियोगिकान्योन्या भववान्, आत्मनिष्ठमिथ्याभेदातिरिक्तभेदवान्, वा लक्ष्यत्वाद्घटवत्। न च 'एको देव' सर्वभूतेषु गूढ" इत्याद्यागमविरोधः, तस्येश्वरैकत्व-प्रतिपादनपरत्वात्। न च तत्र सर्वभूतान्तरात्मत्वविरोध , तस्यैव नियामकतया सर्वभूतान्त-रावस्थानात्। तथा च श्रुति'—'य आत्मनि तिष्ठन्य आत्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीर य आत्मानमन्तरो यमयत्येप त आत्मान्तर्याम्यमृत' इति।

'एक एव तु भूतात्मा भूते भूते व्यवस्थित'।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥'

इतिस्मृतेरपीश्वरपरत्वात्तस्य कायव्यूहनिर्माणेन बहुधा भावस्याप्युपपत्तेः। तत्त्वमसीत्या-द्यैकात्म्योपदेशस्य चोपासनापरत्वात्। न चोपासनाविध्यश्रवणादतत्परत्वं शङ्कनीयम्, अपूर्व-त्वेन 'पूषा प्रपिष्टभाग' इत्यादाविव विधे कल्पयमानत्वात्। 'नेह नानास्ति किचने' त्यादेश्चे-श्वरभेदाभावपरत्वात्। 'मृत्यो स मृत्युम्' इत्यस्य भेददर्शननिन्दया अभेदोपासनाविधिपर-

---

नुमानमाह—**आत्मनिष्ठेति**। अतिरिक्तत्वमनधिकरणत्वम्, सिद्धसाधनतापरिहारार्थ मिथ्याभेदातिरिक्ते-त्युक्तम्। अप्रसिद्धविशेषणतानिवृत्त्यर्थमात्मनिष्ठपदम्। 'नन्वेको देवः सर्वभूतेषु गूढ. सर्वव्यापी सर्वभूता-न्तरात्मे'ति सर्वभूतानामन्तरात्मत्वमग्यस्य कीर्त्यते, स च क्षेत्रज्ञ एवेति कथमस्येश्वरविषयता? इत्याशङ्क्या-न्तर्यामितया तस्यापि तत्सभवतीत्याह—**न च तत्रेति**। नन्वेक एव तु भूतात्मेति प्रतिभूतभेदेन प्रति-भासमानजीवात्मनामेवैक्यप्रतिपादिका स्मृतिरस्तीति, तत्राह—**एक एवेति**। नन्वीश्वरस्यैकत्वात्कथ तत्र बहुधा दृश्यत इति निर्देशोपपत्तिस्तत्राह—**तस्येति**। ननु तत्त्वमसीति प्रकृतिविलक्षणेश्वरात्मता श्वेतकेतूप-लक्षितजीवस्य प्रतिपादयति तत्कथ जीवभेदस्तत्राह—**तत्त्वमसीति**। भिन्नेऽपि परमेश्वरे अभेददृष्टि कर्तव्या योषितीवाग्निदृष्टिरित्यर्थः। **पूषेति**। यथाहि—"तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि स." इति-वाक्येऽपूर्वत्वात्पूषोद्देशेन पिष्टभागविधिः कल्पितः एवमत्रापीत्यर्थः। आदिशब्देनोपरिधारणादि गृह्यते। श्रुत्यन्तरविरोध परिहरति—**नेहेति**। यद्यप्येते श्रुती कृतसमाधाने तथाप्यभ्युच्चयत्वेनात्रोपन्यस्येते। न

---

आत्म-भेद की सत्यता मे अनुमान प्रमाण भी है—"आत्मा, आत्मप्रतियोगिक भेदवाला है,या आत्मनिष्ठ मिथ्या भेद से अतिरिक्त भेदवाला है, लक्ष्य होने के कारण, जैसे—घट।" इस अनुमान मे "एको देव सर्वभूतेषु गूढ "(श्वेता० ६।११)—इस श्रुति का विरोध नहीं, क्योकि वह श्रुति ईश्वरगत एकत्व का प्रतिपादन करती है। उक्त श्रुति में "सर्वभूतान्तरात्मा" शब्द से भी ईश्वरगत सर्वभूतो में नियामक रूपसे अवस्थान ही विवक्षित है। जैसा कि श्रुति कहती है—"आत्मनि तिष्ठन् य आत्मनोऽन्तरो, यमात्मा न वेद, यस्यात्मा शरीर य आत्मानमन्तरो यमयत्येष आत्मान्तर्याम्यमृत." (जो ईश्वर सभी जीवो मे विराजमान है, जो जीव के अन्दर निवास करता है, किन्तु जिसे जीव नही जानता, जिसका आत्मा शरीर है, जो आत्माके अन्दर रहकर उसका नियमन करता है, वही यह आत्मा अन्तर्यामी और अमृत कहलाता है—श० प० १४।५।३)। "एक एव तु भूतात्मा"—यह स्मृति भी ईश्वर का प्रतिपादन करती हुई, ईश्वर की काय-व्यूह-निर्माण के द्वारा बहुरूपता बताती है। "तत्त्वमसि"—आदि श्रुतियो मे एकात्मता का उपदेश उपासना के लिए है। 'उपासना-विधि का श्रवण न होने से उक्त वाक्य उपासना परक नही हो सकता'—यह शङ्का नही करनी चाहिए, क्योंकि जैसे "पूषा प्रपिष्टभागोऽदन्तको हि स" (पूषा नाम के देवता के लिए पिष्ट हवि तैयार करनी चाहिए, क्योकि वह विना दाँत का है)—इस अर्थवाद वाक्य में पूषा देवता के उद्देश्य से पिष्टभाग रूप अज्ञात पदार्थ का प्रतिपादन देख उसकी विधि की कल्पना होती है, वैसे प्रकृत मे भी उपासना-विधि की कल्पना कर लेनी चाहिए। "नेह नानास्ति किंचन"—आदि वाक्य ईश्वर-भेदाभाव के बोधक है। "मृत्यो. स मृत्युमाप्नोति य इह नानेव पश्यति"—यह श्रुति भेद-

त्वात्। 'द्वासुपर्णा' 'अजामेकाम्' इत्यादिना च जीवेश्वरयोर्जीवानां च परस्परभेदस्य साक्षादेव प्रतिपादनात्। न च तत्र लोकसिद्धभेदानुवाद इति वाच्यम्, ईश्वरस्यालौकिकत्वादेव तद्भेदस्य लोकतोऽधिगमासंभवात्। जीवभेदस्य च लोकसिद्धत्वे प्रत्यक्षादिव्यतिरेकेण लोकशब्दार्थानिरूपणात्, प्रत्यक्षादिसिद्धत्वेन जीवभेदस्य प्रामाणिकत्वसिद्धिः।

सुखदुःखव्यवस्थानुपपत्तिरपि जीवभेदं साधयति। अन्यथैकस्मिन्कस्मिंश्चित्सुखिनि सुखिन एव सर्वे स्युर्दुःखिनि वा दुःखिन इति व्यवस्था न स्यात्। न च पादे मे वेदना शिरसि मे सुखमितिवदुपाधिनिबन्धना व्यवस्था, तद्वदेव शरीरभेदेऽपि भोगानुसंधानप्रसङ्गात्। न च सुखादीनां साक्ष्यत्वेन साक्षिधर्मत्वाभावात् तद्भेदव्यवस्थापकत्वासिद्धिः। प्रमातृव्यतिरिक्तसाक्षिणो दुर्निरूपत्वात्। तथा हि—तस्य द्रष्टृत्वे प्रमात्रन्तर्भावादद्रष्टृत्वे सुखादिसा-

केवलं श्रुत्यविरोधः, श्रुतिसिद्धश्चात्मभेद इत्याह—द्वा सुपर्णेति। अत्र हि द्वाविति जीवेश्वरौ द्वित्वेन निर्दिष्टौ तथा तयोरन्य इत्यनश्नन्नन्य इति च भोक्त्रभोक्तृतया परस्परमन्यत्वेन च निर्दिष्टौ। तथा अजामेकामित्यत्रापि तेजोऽबन्नलक्षणामविद्यामेको जहाति, अन्यश्च जुषमाणः प्रीयमाणोऽनुशेते इत्यजशब्दोपात्तजीवभेदः प्रतीयते बद्धाबद्धत्वलक्षणधर्मभेदश्चेत्यर्थः। यद्यपि जीवस्य लौकिकतया तद्भेदः शक्यानुवादः तथापि परमेश्वरस्यालौकिकत्वान्न तद्भेदः सम्भवदनुवाद इति तत्प्रतिपादनपरमिदं वाक्यमित्याह—ईश्वरेति। तत्किं जीवभेदप्रतिपादकत्वमुपेक्षितमस्य तथा चाप्रामाणिकभेदत्वाद् द्वैतसिद्धिरिति तत्राह—जीवेति। अस्यानुवादकत्वेऽपि यत्सिद्धमिदमनुवदति तदेव तत्र प्रमाणमित्यर्थः।

एवमनुमानागमाभ्यामात्मभेदं साधयित्वार्थापत्तिमप्याह सुखदुःखेति। ननु यथैकस्मिन्देहे पादशिरःप्रदेशनिष्ठतया सुखदुःखव्यवस्थायामपि न भेदः, तत्कस्य हेतोः ? औपाधिकभेदमादाय, तथा सर्वदेहेष्वप्येक एवात्मा तत्तद्देहोपाधिभेदाच्च शीतादिव्यवस्थेति किं न स्यात्तत्राह—न च पाद इति। तर्हि यथा सकलावयवेष्वेकस्य तत्रानुसंधानं तथा सकलक्षेत्रेष्वप्येकोऽनुसदधीत नचैतदस्तीत्यर्थः। ननु व्यधिकरणमिदमभिधीयते यत्सुखादिव्यवस्थयात्मभेद इति। अन्तःकरणधर्मा हि सुखादयः साक्ष्यत्वात्। न च साक्ष्याणां साक्षिधर्मत्वं तथा सति स्वधर्मग्राहकत्वे स्वग्राहकतया स्ववृत्तिविरोधप्रसङ्गादिति तत्राह—न च सुखादीनामिति। साक्षी द्रष्टा ? न वा ? इति विकल्पाद्यं दूषयति—द्रष्टृत्व इति। नहि प्रमात्र-

दर्शन-निन्दा के द्वारा अभेदोपासना-विधि-परक है। "द्वा सुपर्णा सयुजा सखाया" ( मुण्ड० ३।१।१ ), "अजामेकां लोहितशुक्लकृष्णाम्" ( श्वेता० ४।५ ) आदि श्रुतियों में जीवों का ईश्वर से और जीवों का परस्पर भेद साक्षात् ही प्रतिपादित है। 'इन श्रुतियों में लोक-सिद्ध भेद का अनुवाद मात्र है'—यह नहीं कह सकते, क्योंकि ईश्वर, अलौकिक है, अतः उसका भेद लोक-सिद्ध हो ही नहीं सकता। जीव-भेद अवश्य लोक-सिद्ध है, किन्तु यहाँ 'लोक' शब्द का अर्थ प्रत्यक्ष से भिन्न और कुछ नहीं हो सकता, अतः लोक-सिद्ध का अर्थ हुआ प्रत्यक्ष प्रमाण से प्रमाणित। तब तो जीव-भेद प्रमाणिक हो जाता है, उसका अपलाप ही कैसे होगा ?

सुख-दुःख की व्यवस्थानुपपत्ति भी जीव-भेद का साधक है। अन्यथा एक ही आत्माके होने पर यदि वह सुखी होगा, तब सभी सुखी ही होंगे और उसके दुःखी होने पर सब दुःखी ही होंगे, कोई सुखी तथा कोई दुःखी—यह व्यवस्था नहीं रहेगी। 'जैसे एक ही व्यक्ति अपने पैर में वेदना और शिरमें सुख का अनुभव करता है, वैसे ही उपाधि के भेद से एक ही आत्मासे सुख दुःख-भेद की व्यवस्था क्यों न बनेगी ?'—यह सन्देह युक्त नहीं, क्योंकि सब शरीरों में एक ही आत्मा के होने पर विभिन्न शरीरों के भोगों का स्मरण सभी को होना चाहिए। 'सुखादि, साक्षी के धर्म नहीं, अपि तु साक्ष्य ( साक्षिगम्य ) है, अतः वे भेद-व्यवस्थापक नहीं हो सकते'—यह कहना भी असगत है, क्योंकि प्रमाता से भिन्न साक्षी का निरूपण नहीं हो सकता। क्योंकि उसे द्रष्टा माने तो

धर्मत्वासिद्धेर्ब्रह्मरूपत्वे च संसारदशायामनाविर्भावात्, साक्षिप्रत्यक्ष नाम व्यवहाराङ्गं न सिध्येत्। प्रमाणाभावाच्च। न तावत्प्रत्यक्षमत्र प्रमाणम्, मानसप्रत्यक्षवेद्यत्वे प्रमात्रन्तर्भावप्रसङ्गात्। इच्छादय एतद्ग्राहकानित्यज्ञानातिरिक्तप्रत्यक्षवेद्याः, अर्थापरोक्षत्वात् रूपादिवदित्यनुमान प्रमाणमिति चेत्, न; ईश्वरप्रत्यक्षवेद्यतया सिद्धसाधनत्वात्। अनीश्वरवादिनां चेच्छादय एतद्ग्राहकानित्यानुमानातिरिक्तानुमानवेद्याः वेद्यत्वादिति साधनादाभाससमानयोगक्षेमत्वात्। अनित्यप्रत्यक्षवेद्यत्वे बाधकाभावाच्च। सुखादिविशिष्टस्यात्मनः स्वाश्रितज्ञानवेद्यत्वे कर्मकर्तृत्वविरोधप्रसङ्गो बाधक इति चेत्, मैवम्, स्वरूपमात्रेण ग्राहकस्य विशिष्टस्वरूपेण कर्मत्वेऽप्यविरोधात्। अन्यथा त्वन्मतेऽपि कर्तृत्वकरणत्वयोरेकत्र समावेशो न स्यात्। अभ्युपगम्यते हि केवलाया बुद्धे करणत्वमात्मविशिष्टरूपेण च कर्तृत्वम्, अविद्या-

तिरिक्तः कश्चिदस्ति सम्प्रतिपन्नो द्रष्टेति भावः। ननु द्विविध द्रष्टृत्व ज्ञानाकारेण परिणामित्वम्, अलुप्तचिद्रूपत्व चेति। तत्र पूर्वममुख्यम्, अयःपिण्डस्येव सक्रान्ताग्नेर्दग्धृत्वम्। उत्तर तु मुख्य वह्नेरिव, तत्र मुख्यो द्रष्टा साक्षी तेन न प्रमाता, नापि सुखादिसाधक इति। तर्हि मुक्तिदशायामेवैतादृशमभिव्यज्यत इति व्यवहारनिर्वाहकत्वव्याहतिरित्याह—ब्रह्मरूपत्व इति। नच प्रमात्रतिरिक्ते साक्षिणि किञ्चित्प्रमाणमस्तीत्याह—प्रमाणेति। प्रत्यक्षपक्षे हि न तावद्बाह्यमबाह्यत्वात्, आन्तरत्वेऽपि नित्यम्? अनित्य वा? अनित्यत्वे मानसमेव तदिति तद्वेद्य. प्रमातैव नित्य च प्रत्यक्ष न जीवेऽस्तीति भावः। अस्तु तर्ह्यनुमान साक्षिप्रत्यक्षे प्रमाणमिति शङ्कते—इच्छादय इति। प्रत्यक्षवेद्या इत्युक्त मानसप्रत्यक्षमादायार्थान्तरता तदर्थमनित्यज्ञानातिरिक्तेत्युक्तम्। तथा चानीश्वरवादिन प्रत्यप्रसिद्धविशेषणता तदर्थमेतद्ग्राहकेत्युक्तम्। अनेनै तद्ग्राहकानित्यप्रत्यक्षमादाय च साध्यप्रसिद्धिः पक्षे चैतद्ग्राहकानित्यज्ञानत्वानधिकरणत्वमेतद्ग्राहकत्वानधिकरणत्वान्न सम्भवति, तद्वेद्यत्वेन व्याघातात्, तस्मादनित्यज्ञानत्वानधिकरण किञ्चिन्नित्यप्रत्यक्षमादाय तद्ग्राह्यत्वमिच्छादीना सिध्यतीति नित्यसाक्षिप्रत्यक्षसिद्धिरित्यर्थः। अत्र तार्किकः प्राह—ईश्वरेति। अनीश्वरवादी त्वाभाससमानयोगक्षेमतामाह—अनीश्वरेति। शक्यते हि नित्यमपि किञ्चिदनुमानमेव साधयितुमित्यर्थः। विपक्षे बाधकाभावाच्च शङ्किताप्रयोजकतामाह—अनित्येति। न केवलमस्मन्मत एवेय गतिः यत्स्वरूपेण ग्राहकत्व सुखादिविशिष्टाकारेण ग्राह्यत्वमित्यनुपहितोपहितभेदाश्रयणम्, भवतोऽप्येवविधभेदाश्रयणमेव क्वचिच्छरणमित्याह—अन्यथेति। आत्मैक्याध्यस्तबुद्धिर्हि प्रमाता कर्तेति बोध्यन इत्यर्थः। उदाहरणान्तरमाह—अविद्येति। निर्विकल्पचैतन्यस्य सर्वसाक्षित्वादिविकल्पाभावादविद्या-

वह प्रमाता के अन्तर्गत हो जाता है, अद्रष्टा माने तो सुखादि का साधक नहीं हो सकता और यदि ब्रह्मरूप मानें, तब संसारावस्था में वह अभिव्यक्त न होगा, ऐसे साक्षी का प्रत्यक्ष, व्यवहार का अंग सिद्ध न होगा। प्रमाता से अतिरिक्त साक्षी के होने में कोई प्रमाण भी नहीं। प्रत्यक्ष प्रमाण मानने पर बाह्य प्रत्यक्ष तो सम्भव नहीं, मानस प्रत्यक्ष ही मानना होगा, तब तो प्रमाता में ही अन्तर्भाव होगा। "इच्छादि, अपने ग्राहक अनित्यज्ञान से अतिरिक्त प्रत्यक्ष से वेद्य हैं, अर्थापरोक्ष होने के कारण, जैसे—रूपादि"—यह अनुमान भी प्रमाण नहीं हो सकता, क्योंकि इच्छादि में ईश्वर की प्रत्यक्षवेद्यता लेकर सिद्ध-साधनता होती है। अनीश्वरवादियों के प्रति "इच्छादि अपने ग्राहक अनित्य अनुमान से अतिरिक्त अनुमान से वेद्य हैं, वेद्य होने से"—इस साधनाभास की समानता है। इच्छादि में अनित्यप्रत्यक्ष-वेद्यता में कोई बाधक भी नहीं। सुखादि-विशिष्ट आत्मा से स्वाश्रित ज्ञान को वेद्य मानने में कर्मत्व और कर्तृत्वरूप दो विरोधी धर्मों की एकत्र प्रसक्ति ही बाधक है—यह नहीं कह सकते, क्योंकि आत्मा के स्वरूपतः कर्त्ता और सुखादि विशिष्टरूप से कर्म होने से कोई विरोध नहीं। अन्यथा आपके मत में भी कर्तृत्व और करणत्व का एकत्र समावेश न हो सकेगा, क्योंकि आप केवल बुद्धि में करणत्व और आत्म-विशिष्टरूप से कर्तृत्व

विशिष्टस्य साक्षित्वं केवलाविद्यायाश्च साक्ष्यत्वमिति च स्वीकारात्। "ब्रह्म वा इदमग्र आसीत्, तदात्मानमेवावेदहं ब्रह्मास्मी"ति चात्मन एव वेद्यवेदकभावश्रवणात्। प्रमाणवत्त्वेन विरुद्धस्याप्यभ्युपगमे प्रकृतेऽप्यहं सुखीत्यनुभवसद्भावात्, नासौ दण्डवारितः। एतेन—सुखादिप्रतिपत्त्यन्यथानुपपत्तिरपि साक्षिसिद्धौ प्रमाणमिति परास्तम्, अन्यथाप्युपपत्तेः। न च व्यभिचारिकरणजन्यज्ञानानां चैतन्यरूपमनुगतमनुसंधातारमन्तरेण प्रतिसंधानानुपपत्तिः साक्षिणि प्रमाणम्, ज्ञानानां स्वयंप्रकाशत्वात् तदाश्रयतया सिद्धस्य स्थिरस्यात्मनः पूर्वोत्तरकालीनज्ञानानुसंधानोपपत्तेः। एतेन प्रमातृप्रमाणप्रमेयप्रतीत्यन्यथानुपपत्तिरपि परास्ता, त्रिपुटीप्रत्यक्षवादे घटमहं जानामीति त्रितयप्रतिभासोपपत्तेः। नापि 'साक्षी चेता केवलो निर्गुणश्च'इत्यागमः प्रमाणम्, साक्षादीक्षत इतीश्वरस्य सर्वापरोक्षदर्शिनः प्रतिपादनात्। तदेवं न साक्षिणः सिद्धिः। सिद्धावपि न साक्ष्याणां धर्मत्वक्षतिः, "आनन्दो विषयानुभवो

विशिष्टस्य साक्षित्वमित्यर्थः। श्रुतिरप्यात्मनो ग्राह्यग्राहकतां दर्शयतीत्याह—ब्रह्मेति। ननु तत्र तत्र श्रुत्यादय एव तथात्वे प्रमाणमिति न विरोधः, तर्ह्यत्रापि समानमिति परिहरति—प्रमाणेति। एवं प्रत्यक्षानुमाने साक्षिणि दूषयित्वा अर्थापत्तिं दूषयति—एतेनेति। अन्यथापीति। मानसवेद्यत्वेऽपि विरोधाभावस्योक्तत्वादित्यर्थः। ननु चक्षुरादिपरम्परव्यभिचारिकरणैर्जन्यानि यानि ज्ञानानि तेषु जानामि जानामीत्यनुगतः कश्चिदनुसंधाता तावत्प्रमीयते। स च स्फुरन्नेवानुसंधातुमर्हति, इतरथा जानामीति व्यवहारानिष्पत्तेः। न च तस्य ज्ञानान्तरतःस्फुरणम्, अनवस्थाभयात्। तस्माद्यः स्वप्रकाशः सकलस्वान्तवृत्त्यनुसंधाता साक्षी सोऽर्थापत्तिसिद्धः। अथवा यदिदं व्यावृत्तज्ञानेष्वनुसंधानरूपमद्राक्षमित्यादि तत्स्फुरणमन्तरेण न घटतेऽनुव्यवसायश्च नोत्पन्नस्तत्सत्त्वं च विप्रतिपन्नम्, अतस्तत्तद्वृत्तिसाधकसाक्ष्यर्थापत्तिसिद्ध इति तत्राह—न च व्यभिचारीति। अत्र स्फुरतानुसंधात्रा हि भवितव्यं तच्च संविदाश्रयत्वेनापि संभवति। न चानवस्था, तस्याः स्वप्रकाशत्वादिति प्रभाकरः परिहरति—ज्ञानानामिति। तार्किकपक्षे तु पूर्वोक्तरीत्या वृत्तिविरोधपरिहारेण मानसप्रत्यक्षमादाय परिहर्तव्यम्। आगमं साक्षिणि निषेधयति—नापि साक्षीति। चेता चेतन इत्यर्थः। तटस्थेश्वरमादायाप्युपपत्तेरिति भावः। किंच साक्ष्यस्य साक्षिधर्मत्वं न घटत इति वक्तुमेव न शक्यते, पञ्चपादीविरोधादित्याह—सिद्धावपीति। साक्षीरूपस्यात्मनो विशेषगुणधर्मवत्त्वेऽप्यनुमान-

मानते हैं। एवं अविद्या-विशिष्ट में साक्षित्व और केवल अविद्या में साक्ष्यत्व मानते हैं। "ब्रह्म वा इदमग्र आसीत्, तदात्मानमेवावेदाहं ब्रह्मास्मि"—इस श्रुति से आत्मा में ही वेद्यत्व और वेदकत्व—दोनो प्रतिपादित है। प्रमाण के बल पर विरुद्ध धर्मों को मानने पर प्रकृत में भी "अहं सुखी"—आदि अनुभवों के आधार पर विरुद्ध धर्म क्यों न माने जा सकेंगे ? इससे—'सुखादि-प्रतीति की अन्यथानुपपत्ति भी साक्षि-सिद्धि में प्रमाण है'—यह कहना भी निरस्त हो जाता है, क्योंकि सुखादि-प्रतीति, अन्यथा ( मन से ) भी उपपन्न हो जाती है। यदि कहें कि व्यभिचारी करणों से जन्य ज्ञानों का जब तक एक अनुभविता न हो, तब तक उनका अनुसन्धान या प्रत्यभिज्ञान सम्भव नहीं, अतः वह एक अनुभविता स्वयंप्रकाश साक्षी, अर्थापत्ति प्रमाण से सिद्ध होता है। तो यह नहीं कह सकते, क्योंकि स्वयंप्रकाश ज्ञान का आश्रय होने से ही यही आत्मा ( जीव ) पूर्वोत्तर काल के ज्ञानों का अनुसन्धान कर सकता है, इससे अतिरिक्त साक्षी मानने की क्या आवश्यकता ? इसी लिए प्रमाता-प्रमाण-प्रमिति के ज्ञान की अन्याथानुपपत्ति भी निराकृत हो जाती है, क्योंकि त्रिपुटी-प्रत्यक्ष-वाद ( प्रभाकर-मत ) में "घटमहं जानामि"—यहाँ प्रमाता-प्रमाण-प्रमिति—तीनों का भान माना जाता है। "साक्षी चेता केवलो निर्गुणश्च"—आदि आगम भी साक्षी में प्रमाण नहीं हो सकते; क्योंकि वहाँ "साक्षाद् ईक्षते"—इस व्युत्पत्ति के आधार पर सर्वापरोक्ष-दर्शी ईश्वर का प्रतिपादन है। इस प्रकार साक्षी की सिद्धि नहीं होती। सिद्धि होने पर भी साक्ष्य धर्मों में साक्षिवृत्तित्व की

नित्यत्वं चेति सन्ति धर्मा" इति साक्ष्याणामपि तद्धर्मत्वस्वीकारात्। किं चाकाशो विशेषगुणवद्व्यापद्रव्यान्य द्रव्यत्वाद्घटवदित्यनुमानादपि आत्मनां सुखादिविशेषगुणवत्त्वसिद्धिः। तथा च तद्व्यवस्थातस्तेषां नानात्वसिद्धिः।

अत्रोच्यते—यत्तावदुक्तं सर्वज्ञत्वाद् ब्रह्मणो नाविद्येति, तदयुक्तम्, यतः—

स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा स्थितम्।
तच्चोभयं विना विद्यासबन्धं नैव सिध्यति ॥ ४ ॥

स्वरूपप्रज्ञया चेत्सर्वज्ञत्वं ब्रह्मणोऽभ्युपगम्यते, तदा असङ्गस्य ब्रह्मणो नाविद्यामन्तरेणाशेषार्थसंगतिरिति सर्वज्ञत्वोपपत्त्यर्थमेव साभ्युपगमनीया। प्रमाणतः सर्वज्ञत्वेऽपि प्रमातृत्वस्य प्रमाणप्रमेयसंबन्धस्य चाविचारितरमणीयानाद्यविद्यासबन्धमन्तरेणासिद्धेः सर्वज्ञत्वमविद्या-

---

माह—किंचेति। द्रव्यान्य इत्युक्ते घटाद्यन्यत्वेनार्थान्तरता, तदर्थं व्यापकद्रव्यान्य इत्युक्तम्। तथापि कालदिगन्यत्वेनार्थान्तरता, तदर्थं विशेषगुणवदित्युक्तम्। यस्माच्च विशेषगुणवतो द्रव्यादाकाशोऽन्यः स आत्मा आकाशस्य पक्षत्वेन तदन्यत्वासंभवात्, घटे त्वाकाशान्यत्वेन साध्यसिद्धिः। फलितमाह—तथा चेति।

सिद्धान्ती समाधातुमुपक्रमते—अत्रेति। तत्राविद्याया जडनिष्ठत्वं तावन्न संभवति। अविद्येतरजडस्य तज्जृम्भणतया कारणस्य कार्याश्रितत्वायोगादप्रतीतिप्रसङ्गाच्च। नहि सा स्वप्रकाशा, तस्या आश्रयोऽपि चेज्जडः, केनैषा प्रकाश्येत? तस्मात्तन्निष्ठत्वं वक्तव्यं यत्प्रकाशादेषापि प्रकाशेत इति चैतन्यनिष्ठत्वमायाति। तत्रापि न जीवाश्रया, पूर्वोक्तदोषात्। यथा वक्ष्यते—'अनङ्गीकारपरास्ता' इति। नच ब्रह्मपक्षेऽपि दोषसाम्यम्, तदसिद्धेरित्यभिप्रेत्य ब्रह्माश्रितत्वपक्षोक्तदूषणानि परिहरति—**यत्तावदित्यादिना। स्वरूपत इति।** द्वेधा हि सर्वज्ञत्वं संभवति स्वभावभूतप्रज्ञया वा यथा तावकेश्वरस्य, प्रमाणजनितप्रज्ञया वा यथा वा तावकयोगिनामुभयथाप्यविद्यासबन्धमन्तरेण नोपपद्यते इति श्लोकार्थः। विवृणोति—**स्वरूपेत्यादिना**। यथा दृग्दृश्ययोराध्यासिक एव सबन्धो नान्यस्तथोपपादितः प्रथमपरिच्छेदे मिथ्यात्ववादे। **प्रमातृत्वस्येति।** प्रमाणजनितज्ञानाकारपरिणामी प्रमाता नाम। नच निर्विकल्पकचिन्मात्रात्मनः परिणामसंभवः, नापि केवलजडबुद्धेरनध्यस्तायाः प्रकाशाभासपरिणामः। तस्मादविद्यात्मनोरितरेतराध्यासविलसितः प्रमाता स चेन्द्रियाद्यधिष्ठाता, इतरथा तेषां करणत्वमस्य कर्तृत्वं च नोपपद्यत इति। नच तेष्वहममाभिमानहीनस्य तदधिष्ठातृत्वमस्ति, परकरणेष्वदर्शनात्। नचासङ्गस्याविद्याध्यासमन्तरेण तादृगभिमानसंभवः। प्रमाणप्रमेययोः संबन्धस्य चाध्यासिकत्वमधस्तादेवोपपादितं तत्प्रमाणजनितमपि सर्वज्ञत्वमविद्यावत्त्वकल्पकमेवेत्यर्थः। एवमविद्याश्रयत्वं सर्वज्ञत्वमनुरुणद्धि ननु विरुणद्धीत्युक्तम्, स्वरूपविरोधमा-

---

क्षति नहीं होती, क्योंकि "आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः"—इस प्रकार पञ्चपादिकाकार ने साक्ष्य पदार्थों को साक्षी का धर्म बताया है। "आकाश विशेषगुणवाले व्यापक द्रव्यों से अन्य हैं, द्रव्य होने से, जैसे—घट"—इस अनुमान से भी आत्मा में सुखादिरूप विशेषगुणवत्ता सिद्ध होती है। अतः सुख-दुःखादि की व्यवस्था से आत्मा में नानात्व सिद्ध होता है।

उत्तर पक्ष—यह जो कहा था कि सर्वज्ञ होने के कारण ब्रह्म, अविद्या का आश्रय नहीं हो सकता। वह कहना अयुक्त है, क्योंकि सर्वज्ञत्व दो प्रकार का होता है—एक स्वरूपतः और दूसरा प्रमाणों के द्वारा। वह दोनों प्रकार का सर्वज्ञत्व विभु आत्मा में, तब तक नहीं बन सकता, जब तक उसमें अविद्या का सम्बन्ध न हो। स्वरूपभूत बुद्धि के द्वारा यदि ब्रह्म में सर्वज्ञत्व मानते हैं, तब असङ्ग ब्रह्म का अविद्या के बिना सर्व अर्थों के साथ सम्बन्ध नहीं हो सकता, अतः सर्वज्ञत्व की उपपत्ति के लिए ब्रह्म में अविद्या माननी ही पड़ेगी। प्रमाणों के द्वारा सर्वज्ञत्व में भी प्रमातृत्व तथा प्रमाण-प्रमेय-सम्बन्ध की अनाद्यविद्या-सम्बन्ध के बिना सिद्धि नहीं हो सकती, अतः सर्वज्ञत्व, अविद्यावत्ता

वत्तामाक्षिपति, न तु प्रतिपक्षिपतीति कुतो विप्रतिषेध ? ननु प्रकाशरूपस्य कथमप्रकाशरूपाविद्याश्रयत्व परस्परविरोधिनोस्तम प्रकाशयोरिवाधाराधेयभावानुपपत्तेरिति चेत्, मैवम्, विकल्पासहत्वात्। किमप्रकाशशब्देन प्रकाशाभाव ? उत प्रकाशादन्यत् ? तद्विरुद्ध वा विवक्षितम् ? नाद्य, अविद्याया भावाभावविलक्षणत्वेनाभावत्वानभ्युपगमात्। द्वितीये तु दृष्टान्ताभाव, कि खलु चित्प्रकाशादन्यत्तदाश्रयं न भवतीति मां प्रत्युदाह्रियेत ? सवस्य जडस्य चित्प्रकाशाश्रयत्वाभ्युपगमात्। तदेकाश्रयस्य तेन सह विरोधासभवान्न तृतीयोऽपि। न चाविरुद्धत्वादनिवृत्ति., वेदान्तवाक्यजनितेन ब्रह्मैकाकारेण विज्ञानेन तदवच्छिन्नेन वा-चित्प्रसाशेन तन्निवृत्त्युपपत्ते। न च विज्ञानस्य निवर्तकान्तराभावदनिवृत्ति, भावे वा तन्नि वर्तकान्तरस्याभ्युपगन्तव्यत्वादनवस्थेति वाच्यम्, कारणनिवृत्त्यैव तन्निवृत्तेरप्यत्र सिद्धत्वात्। न च कार्येण कारणस्यानिवृत्ति। संस्कारेण तज्जनकस्य ज्ञानस्य स्मरणेन तज्जनकसंस्कारस्यान्त्यशब्देनोपान्तशब्दस्य च परीक्षकैर्नाशाभ्युपगमात्। लौकिके चारणिप्रभववेनाशुशुक्ष-

शङ्कय परिहरति —**ननु प्रकाशेत्यादिना**। विद्याया प्रकाशत्वमभिप्रेत्य नञ कोऽर्थोऽभिप्रेत इति विकल्प्य प्रथमेऽसिद्धिमाह—**नाद्य इति**। द्वितीये व्याप्त्यसिद्धिमाह—**द्वितीय इति**। नाविद्या चेतन्याश्रया चैतन्यान्यत्वादिति हि तदा साधनीयम्। नचैव क्वचिदपि व्याप्तिर्मां प्रति सप्रतिपन्नास्ति, प्रत्युत विरुद्धश्च, विद्यातिरिक्तस्य चिदेकायतनत्वेन व्याप्तेरित्यर्थः। चिदेकाश्रयता मत्त्वा तस्य मम विरोधपक्षो दूरधृत इत्याह—**तदेकेति**। ननु यदि नाविद्याया विज्ञानेन विरोधस्तर्हि तेन न विनिवर्त्यैतेत्यनिर्मोक्षो ब्रह्माश्रयवादिनामिति तत्राह—**न चाविरुद्धेति**। यद्यपि स्वरूपचैतन्य न निवर्तकमविद्यायास्तदाश्रयत्वात्तत्प्रकाशकत्वात् नित्यनिवृत्तिप्रसङ्गाच्च, तथापि वाक्यजनितब्रह्माकारचित्तवृत्तिफलकारूढचैतन्य तच्छायोपेता वा चित्तवृत्तिरविद्यानिवर्तिका, 'बुद्धीद्धो बोधो बोधेद्धा बुद्धिर्वा अविद्यानिवृत्तिहेतु' इति हि वृद्धा इति भावः। **विज्ञानस्येति**। अन्त.करणपरिणामस्येत्यर्थ.। नन्वविद्याकार्येणान्त.करणपरिणामेन कथ कारणाविद्यानिवृत्तिरविरोधात्। नहि जातु घटेन मृन्निवर्तमाना दृष्टचरीति तत्र लौकिकपरीक्षकाणा बहुशः समतत्वादित्याह—**न च कार्येणेत्यादिना**। ननु निमित्तनिवर्तकत्वेऽप्यसमवायिनिवर्तकत्व न दृष्टमिति

का आक्षेपक है, न कि निवारक, फिर ब्रह्म मे अविद्या का प्रतिषेध कैसे होगा ? 'प्रकाशरूप ब्रह्म, अप्रकाशरूप अविद्या का आश्रय कैसे होगा ? परस्पर विरोधी अन्धकार और प्रकाश का आधाराधेयभाव नही बन सकता'—यह सन्देह नही करना चाहिए, क्योकि यहाँ 'अप्रकाश' शब्द से क्या प्रकाशाभाव विवक्षित है ? या प्रकाश से भिन्न ? या प्रकाश-विरोधी ? प्रथम पक्ष युक्त नही, क्योकि भावाभाव से विलक्षण होने के कारण अविद्या अभावरूप नही बन सकती। द्वितीय पक्ष मे दृष्टान्त का अभाव है, क्योकि चित्प्रकाश से अन्य का चित्प्रकाश आश्रय नही होता, ऐसा हमारे लिए कोई उदाहरण आप नही उपस्थित कर सकते, इसका कारण यह कि चित्प्रकाशान्य समस्त जड़ का चित्प्रकाश को आश्रय हम मानते है। चिन्मात्र के आश्रय का उसके साथ विरोध सम्भव न होने से तृतीय पक्ष भी सगत नही। 'यदि अविद्याकी आश्रयता विरुद्ध नही, तब तो उसकी निवृत्ति नही होनी चाहिए'—यह शङ्का नही कर सकते, क्योकि वेदान्तवाक्य-जन्य ब्रह्माकार विज्ञान से या उस विज्ञानसे अवच्छिन्न चित्प्रकाश से उसकी निवृत्ति बन सकती है। यदि कहें विज्ञान का कोई और निवर्तक न होने से उसकी निवृत्ति नही हो सकती, यदि और निवर्तक माना जाय, तब अनवस्था होगी। तो यह नही कह सकते, क्योकि कारण की निवृत्ति से ही विज्ञान की निवृत्ति भी हो जाती है। 'कार्य ( ज्ञान ) से कारण ( अविद्या ) की निवृत्ति नही हो सकती'—यह भी नही कह सकते, क्योकि सस्कारसे उसके जनक ज्ञानका, स्मरणसे उसके जनक सस्कार का और अन्तिम शब्दसे उसके जनक पूर्व शब्द का नाश, शास्त्रकार मानते है, लोक मे भी अरणि-जन्य अग्नि से अरणि का एवं

णिनाऽरेणे कदलीफलोद्गमेन वा कदलीकाण्डादेः प्रक्षयदर्शनाच्च ।

ननु भवत्वेव ब्रह्माश्रया अविद्या, तस्याश्च को विषय ? किं स्वयमेव ब्रह्म ? उत द्वैतम् ? उभयं वा ? सर्वथाप्यनुपपन्नम्, सर्वज्ञस्य तत्तद्विषयज्ञाने सति तत्र तत्राज्ञानासंभवादिति चेत्, मैवम्, मा न जानामि त्वदुक्तमर्थं न जानामीति चावभासमानेऽपि विषये तस्याः स्वानुभवसिद्धत्वात् । जडस्याविद्यानिर्मितत्वेन तद्विषयविद्यानुपपत्तौ तन्निवर्त्याविद्यायास्तत्रासभवाच्च । जीवाश्रयाविद्यापक्षोद्भाविताास्तु दोषास्तदनङ्गीकारादेव परास्ताः । यत्तु ब्रह्मण एवाविद्याश्रयत्वे विद्वदविद्वद्गुरुशिष्यबन्धमोक्षव्यवस्था न स्यादिति, तदसत्, यावदविद्यं सर्वव्यवस्थानां स्वप्नवदुपपत्तेः । निवृत्तायां तस्या न काचिदपि व्यवस्था । न चाविद्यानिर्मितस्य गुरो कल्पितत्वेन विद्यावत्त्वानुपपत्ति, स्वप्न इव विद्यावत्तयैव कल्पनोपपत्ते । न च गुरो शिष्याविद्याकल्पितत्वे शिष्याणामपि स्वीयस्वीयशिष्याविद्याकल्पितत्वान्न कोऽपि परमार्थः

---

तत्राह—अन्त्यशब्देनेति । अथोपादाननिवर्तकत्वं न दृष्टचरमिति ब्रूयात्त प्रत्याह—कदलीति ।

एवमविद्याश्रयं निरूप्य तद्विषयं निरूपयति—ननु भवत्वेवमित्यादिना । ज्ञायमाने विषये अविद्या न सभवतीत्युक्तं पूर्वपक्षिणा, तदसिद्धमित्याह—मां न जानामीति । यथा च ज्ञानाज्ञानयोर्भिन्नविषयताऽसभवः तथोपपादितं भावरूपाज्ञानवादे । किंच विद्याविद्ययोस्तावत्समानविषयत्वं वक्तव्यमितरथातिप्रसङ्गात् । नच जगद्विषयिणी विद्या सभवतीति विषयचैतन्यमेवाविद्याया अपि विषय इत्याह—जडस्येति । एवं ब्रह्माश्रयत्वपक्षोक्तदूषणानि परिहृत्य जीवाश्रयत्वपक्षोक्तदोषाननङ्गीकारेण परिहरति—जीवेति । दूषणान्तरमनूद्य दूषयति—यत्त्वित्यादिना । तत्र किमनिवृत्तायामविद्याया व्यवस्थाभावः ? निवृत्ताया वा ? आद्ये प्राह—यावदिति । द्वितीये प्राह—निवृत्तायामिति । ननु भवतु स्वप्नवद्विद्यावतो गुरो कल्पितत्वं नापि कल्पितस्यार्थक्रियानुपपत्तिस्तथापि परमार्थः कोऽपि न निरूपितः स्यात्, तत्तच्छिष्याणामपि स्वस्वशिष्यगुरुतया कल्पितत्वादित्युक्तदोषोऽपरिहार्य इति, तत्राह—न च गुरोरिति । शिष्याविद्याकल्पितो गुरुरिति वदतामस्माकं शिष्यशब्देन किमवच्छिन्नचैतन्यमभिप्रेतमित्यबुध्यत भवान् ? अनवच्छिन्नं वा ? आद्येऽनधिगतपराभिसंधिरायुष्मान्, नह्यस्माभिरविद्याकल्पितस्य चिदवच्छेदस्याविद्याश्रयत्वमभ्युपेयते । कस्तर्हि शिष्यशब्दार्थः ? अज्ञातमात्रमनवच्छिन्नं चैतन्यमित्यवगच्छतु भवान् । द्वितीये

---

केले मे फलोत्पत्ति से केले का नाश देखा जाता है ।

यदि कहे कि मान लेते है—ब्रह्माश्रित अविद्या । किन्तु अविद्या का विषय क्या है ? क्या स्वयं ब्रह्म ? या द्वैत जगत् ? या उभय ? सर्वथा अनुपपन्न है, क्योकि सर्वज्ञ को तत्तत् विषय का ज्ञान होनेसे तत्तत् विषयका अज्ञान हो नही सकता । तो यह कहना उचित नही, क्योकि "मां न जानामि", "त्वदुक्तमर्थं न जानामि"—इस प्रकार प्रतीयमान विषय का अज्ञान, अनुभव-सिद्ध है । जड-वर्ग, अविद्या-निर्मित है, अत उसमे स्वविषयक ज्ञान न होने से ज्ञान-निवर्त्य अविद्या वहाँ सम्भव नही । जीवाश्रित अविद्या मानते ही नही, अत एव जीवाश्रित अविद्या-पक्ष के दोष निरस्त हो जाते है । यह जो कहा था कि ब्रह्म को अविद्या का आश्रय मानने पर विद्वान्-अविद्वान्, गुरु-शिष्य, बन्ध-मोक्ष की व्यवस्था न रहेगी । वह कहना भी अयुक्त है, क्योकि अविद्या-काल मे सभी व्यवस्थाएँ स्वप्न के समान ही बन जाती है । और अविद्या के निवृत्त हो जाने पर किसी प्रकार की व्यवस्था मानने की आवश्यकता ही नही । अविद्या-निर्मित गुरु, कल्पित होने से विद्यावान् कैसे होगा ? इस शङ्का का भी यही समाधान है कि स्वप्न के समान विद्यावत्ता की कल्पना से सब उपपत्ति हो जाती है । यह जो कहा था कि गुरु यदि शिष्य की अविद्या से कल्पित है, तब तो सभी शिष्य अपने-अपने शिष्यो से कल्पित होगे, फिर तो कोई आत्मा पारमार्थिक होगा ही नही । वह कहना भी युक्त नही, क्योकि

स्यादिति वाच्यम्, विकल्पासहत्वात्। गुरुशिष्यादिशब्दै: किं केनचित्परिच्छेदेन कवलीकृतं चैतन्यमभिधीयते? किं वा निरस्तसमस्तभेदम्? नाद्य, परिच्छिन्नस्य परिकल्पितत्वादेवाविद्याश्रयत्वानुपपत्तेः। द्वितीये तु सिद्धसाधनम्, यस्मादस्माभिरप्येतदेवाभिधीयते—विध्वस्तसमस्तविकल्पं चिन्मात्रमेव ब्रह्म स्वाविद्यापरिकल्पितांस्तत्तद्विकल्पान्पश्यत् संसरतीति। तादृशमेव चाकारमभिप्रेत्य गुरुरिति शिष्य इति चाभिलप्यते, न तु परिच्छिन्नं कंचनाकारम्। न चेत्परिच्छिन्नानामविद्या कथं तर्हि मदविद्यानिर्मितस्त्वं मदविद्यानिर्मितस्त्वमिति वादिप्रतिवादिनोरन्येषां च कोलाहल इति चेत्, मैवम्, विनैव तत्तत्परिच्छेदेष्वविद्यां स्वप्ने इव परस्मिन्नेव ब्रह्मणि गुरुरिति शिष्य इति चायमिति चाहमिति चैकस्मिन्नेव नानाप्रतिभासः स्वप्नदृशीव चिदात्मनीत्युक्तत्वादित्यलं मतिकर्दमेन। एतेन स्वात्मानमेव कल्पितभेदं गुरुः शास्तीत्यत्राभिहितोपालम्भः परास्तः, परमार्थत उत्पन्नविद्यो मुक्तश्च कश्चिच्छास्तीत्यनङ्गीकारात्। अविद्यानिर्मिते च गुरौ स्वाप्न इव कस्मादित्थं कुरुते कस्मान्नेति पर्यनुयोगायोगात्। यत्पुनरनादौ संसारे न कश्चिदपि मुक्तश्चेद्भविष्यति मुक्तिरिति प्रत्याशा न संभवति, विद्यो-

स्विष्टप्रसक्तिस्तदेतदभिप्रेत्याह—विकल्पासहत्वादित्यादिना। अनुभवविरोधं शङ्कते—न चेत् परिच्छिन्नानामिति। यथाहि—स्वप्नदृश्यपुरुषाणामज्ञानितया शिष्यगुर्वादिभेदेन प्रतीयमानानामपि नाज्ञानित्वम्, किंतु यस्तान्सर्वानवच्छेदान्कल्पयन्पश्यति तन्निष्ठैवाविद्या तन्निवर्तकविद्या च। एवमिहापि सकलकल्पनासाक्षिभूतचैतन्यस्थाविद्ययैव तथाविधकल्पनोपपत्तेर्नायं व्यवहारोऽवच्छेदेष्वविद्याकल्पक इति परिहरति—मैवम्, विनेति। एतेन स्वात्मानमेव कल्पितभेदं गुरुः शास्तीत्येतदपि समर्थितम्। गुरुशब्देनावच्छिन्नानभिलापादित्याह—एतेनेति। यत्तु न पृथगुपदिशेद् उपदिशन्वा मन्मुक्त्यैव मुक्तस्त्वमित्युपदिशेदित्युक्तम्, तत्राह— अविद्यानिर्मिते इति। शास्त्रप्रामाण्यादेवेति। अत्र वामदेवादिमुक्तिप्रतीतस्तावन्न विरोधः, स्वप्न इव मुक्तामुक्तकल्पनायाः संभवात्। नच तत्तच्छास्त्रप्रतिपादिततया स्वप्नवैलक्षण्यमपि मन्तव्यम्, तत्तच्छास्त्राणामतत्परत्वात्। नच देवताधिकरणन्यायः, अद्वितीयासङ्गचैतन्यब्रह्मविद्यासंबन्धप्रतिपादकश्रुतितदुद्भवयुक्तिजातविरोधे तन्न्यायानवतारात्। अखिलकल्पनानिवृत्तिस्तु चैतन्ये शास्त्रप्रामाण्यादेव

गुरु-शिष्यादिशब्दों से क्या किसी उपाधि से विशिष्ट चेतन विवक्षित है? या समस्त भेद-रहित चेतन? प्रथम पक्ष युक्त नहीं, क्योंकि विशिष्ट परिकल्पित होने के कारण ही अविद्या का आश्रय नहीं बन सकता। द्वितीय पक्ष में सिद्ध-साधनता है, क्योंकि हमारा भी यही मत है कि समस्त विकल्प-रहित चिन्मात्र ब्रह्म अपनी अविद्या से कल्पित विभिन्न विकल्पों को देखता हुआ संसरण करता है। उसी आकार के अभिप्राय से गुरु शिष्यादि शब्द प्रयुक्त होते हैं, न कि किसी परिच्छिन्न आकार के अभिप्राय से। यदि परिच्छिन्न चेतन के आश्रित अविद्या नहीं, तब "मेरी अविद्या से निर्मित आप है" "आप मेरी अविद्या से निर्मित है"—इस प्रकार वादी-प्रतिवादी में परस्पर कहा-सुनी क्यों होती है? इसका उत्तर यह है कि तत्तत् परिच्छेदों में अविद्या माने बिना ही स्वप्न के समान एक पर ब्रह्म में 'गुरु-शिष्य', 'अहम्-त्वम्'—इस प्रकार की नाना प्रतीतियाँ हो जाती है। इस से 'गुरु' अपने आत्मा को कल्पित कल्पित भेद से शिष्य समझकर उपदेश देता है'—इस सिद्धान्त पर किये गये आक्षेपों का निराकरण हो जाता है, क्योंकि परमार्थ दृष्टिसे यह नहीं माना जाता कि कोई तत्त्ववेत्ता मुक्त पुरुष किसी को उपदेश देता है। अविद्या-निर्मित गुरु के लिए ऐसा आक्षेप कभी नहीं हो सकता कि वह "तत्त्वमसि"—यह उपदेश क्यों करता है? और "मन्मुक्त्यैव मुक्तस्त्वम्"-यह उपदेश क्यों नहीं करता? यह जो आक्षेप किया था कि अनादि संसार में यदि अभी तक कोई भी मुक्त नहीं हुआ, तब भविष्य में क्या आशा? गुरु-शिष्य-सम्प्रदाय के न होने से विद्या की उत्पत्ति भी अनुपपन्न है। वह आक्षेप भी निरस्त हो जाता है, क्योंकि शास्त्र-प्रामाण्य से ही भविष्य में

त्पत्तिरप्यनुपपन्ना गुरुसम्प्रदायाभावादिति, तदपि प्रत्युक्तम्, शास्त्रप्रामाण्यादेव भविष्यति मुक्तिरिति प्रत्याशोपपत्तेः। न च गुरुसम्प्रदायाभावः, विद्वत्तया परिकल्पितगुरोस्तदुपपत्तेरुक्तत्वात्। प्रथमप्रयोगे च पारमार्थिकान्योन्याभाववत्त्वसाधने साध्यविकलो दृष्टान्तः, अद्वैतवादिभिः घटस्यापि वास्तवान्योन्याभावानभ्युपगमात्। व्यावहारिकसाधने च सिद्धसाधनत्वात्। द्वितीयप्रयोगे च कालात्ययापदिष्टता, 'एको देवः सर्वभूतेषु गूढः' इति श्रुत्या बाधात्। न चैषा श्रुतिरीश्वरपरा, अप्रसक्तनिषेधप्रसङ्गात्। नहीश्वरस्य प्रतिभूतं भेदो लोकतो वेदतः परीक्षकसमत्या वा प्रसक्तः। न च तस्यापि नियन्तृतया सर्वभूतान्तरवस्थानं 'य आत्मनि तिष्ठन्'इति श्रुतेरिति वाच्यम्, आत्मेश्वरभेदाभावस्य तत्र तत्र श्रुतिषु बहुशः प्रतिपादनात्। अन्तर्यामिब्राह्मणे च 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता'इत्यात्मभेदनिराकरणात्, 'य आत्मनि तिष्ठन्'इति चौपाधिकस्यात्मनो घटाकाशस्य महाकाशाधीनत्ववत्स्वानुगतात्माधीन-

भविष्यति। नच तदन्यतत्परम्, मुक्तौ तात्पर्यलिङ्गावगमात् भवदङ्गीकाराच्च। यथाच सर्वमुक्तिवादिना द्वैतिनामित. पूर्वमसञ्जातापि मुक्तिः सर्वजीवानां शास्त्रप्रामाण्यादेव भविष्यतीत्यध्यवसीयते। अथानुमानात्तत्राध्यवसायस्तदत्रापि तुल्यम्। शक्यते हि यो यत्साधनमनुतिष्ठतीति व्याप्तिर्ग्रहीतुम्, विभ्रमत्वादिति वाऽविशेषत इति भावः। यत्त्वात्मभेदे प्रमाणमुक्तम्—आत्मा आत्मप्रतियोगिकान्योन्याभाववानिति, तत्र पारमार्थिकतद्वत्त्वं साध्यते? व्यावहारिकं वा? उभयथापि दूषणमाह—**प्रथमप्रयोग इत्यादिना**। द्वितीयानुमाने दूषणमाह—**द्वितीयेति**। तत्र तावदात्मना परस्परभेदो न सिध्यति, आत्मनि भेदमात्रसाधनात्, तस्य च दृश्यप्रतियोगिकतयाप्युपपत्तेः, तस्याप्यवस्थितिं वदतो भेदखण्डनोक्तदोषा आवर्तनीयाः। भवतु चात्मभेदपरता तथापि कालात्ययापदेश इत्यर्थः। सत्प्रतिपक्षत्वं चास्य मिथ्यात्ववादेऽस्माभिरुपदर्शितम्। ईश्वरेऽप्रसङ्गमेवाह—**न हीश्वरस्येति**। किंच सर्वभूतान्तरात्मत्वव्यपदेशादपि प्रत्यगात्मन एवायमेकत्वव्यपदेशः, न तटस्थेश्वरस्य। यात्वन्तर्यामितया तटस्थेश्वरपक्षेऽप्यन्यथासिद्धिरुक्ता, तामनूद्य निराचष्टे—**न च तस्यापीति**। नच वाच्यमित्यन्वयः। न केवलं श्रुत्यन्तरे, अन्तर्यामिब्राह्मण एवात्मभेदो निराकृत इत्याह—**अन्तर्यामीति**। ननु तर्हि 'य आत्मनि तिष्ठ'न्नित्यात्मेश्वरयोराधाराधेयभावस्य का गतिरित्यत्राह—**य आत्मनीति**। यथाहि घटाकाशे महाकाशो वर्तत इति व्यपदिश्यते, तत्स्वरूपतया तत्रानुगतत्वात्, अत एव च महाकाशाधीनो घटाकाश इति व्यवहारः, तद्वदत्राप्यौपाधिकजीवात्मनः स्वरूप-

मुक्ति की आशा बन सकती है। गुरु-सम्प्रदाय का भी अभाव नहीं, क्योंकि विद्यावत्त्वरूप से कल्पित गुरु की उपपत्ति की जा चुकी है। आत्म-भेद-साधक प्रथम ( आत्मा, आत्मप्रतियोगिकान्योन्याभाववान्, लक्ष्यत्वाद् घटवत् ) प्रयोग से पारमार्थिक अन्योन्याभाववत्ता का साधन करने पर दृष्टान्त साध्य-विकल है, क्योंकि अद्वैतवादी घट मे भी पारमार्थिक अन्योन्याभाववत्ता नहीं मानते। व्यावहारिक अन्योन्याभाववत्ता का साधन करने पर सिद्ध-साधनता है। द्वितीय ( आत्मा, आत्मनिष्ठमिथ्याभेदातिरिक्तभेदवान् लक्ष्यत्वाद् घटवत् ) प्रयोग, "एको देवः सर्वभूतेषु गूढः" ( श्वेता० ६।११ ) आदि श्रुतियों से बाधित है। इस श्रुति को ईश्वरपरक मानने पर अप्राप्त-प्रतिषेध प्राप्त होगा, क्योंकि प्रत्येक भूत के भेद से ईश्वर मे भेद न लोकतः प्राप्त है, न वेद से और न शास्त्रकारों की सम्मति से, कि जिससे उस भेद का प्रतिषेध करने के लिए "एको देवः" मे एकत्व का विधान किया जाता। "य आत्मनि तिष्ठन्"—( श० प० १४।५।३० ) इस श्रुति के आधार पर यह भी नहीं कह सकते कि ईश्वर सभी आत्माओं मे अन्तर्यामीरूप से स्थित है, क्योंकि आत्मा और ईश्वर का अभेद बहुत श्रुतियों मे प्रतिपादित है। अन्तर्यामिब्राह्मण मे "नान्योऽतोऽस्ति द्रष्टा, नान्योऽतोऽस्ति श्रोता" ( बृह उ ३।७।२३ ) इस श्रुति ने स्पष्टरूप से आत्मभेद का निराकरण किया है। "य आत्मनि तिष्ठन्"—यह श्रुति घटाकाश की महाकाशाधीनता के समान औपाधिक आत्मा मे अपने अनुगत आत्मा की

तामात्रप्रतिपादनपरत्वात्, अन्यथा नित्यद्रव्याणां स्वतन्त्रया परस्पराधाराधेयभावानुपपत्ते-रनङ्गीकाराच्च श्रुतेरानर्थक्यप्रसङ्गात्।

न च तत्त्वमसीत्याद्युपासनापरम्, तथात्वे प्रमाणाभावात्। तथाहि किं प्रमाणान्तरविरोधादुपासनापरम्? उत स्वार्थे तात्पर्यावगमोपायाभावात्? नाद्य, जीवब्रह्मणोः प्रमाणान्तरागोचरतया तद्भेदस्यापि प्रमाणान्तरागोचरत्वात्। बिम्बप्रतिबिम्बयोरिव भेदावभासोपपत्तेश्च। नापि द्वितीयः। "तत्त्वमसि"इति नवकृत्वोऽभ्यासाद्, "अनेन जीवेन"इति चार्थवादोपादानाद्, "अथ ये अन्यथाऽतो विदुः"इति भेददर्शननिन्दनाद्, "अथ सम्पत्स्यते" इति फलश्रवणाद् "एकमेवाद्वितीयमैतदात्म्य" इति चोपक्रमोपसंहारयोरैकरूप्याद्, अपूर्वत्वान्मृदादिदृष्टान्तेश्चोपपादनात्। अन्यत्रापि "अहं ब्रह्मास्मि" 'स एष इह प्रविष्ट", "योऽन्यां देवतामुपास्ते", "स इदं सर्वं भवति"इत्यादिश्रवणादेकत्वे तात्पर्यावगमात्। "तद्धास्य विजज्ञौ"इति "तरति शोकमात्मवित्"

---

त्वात्परमात्मा तत्र तिष्ठन्निति तन्नियमयतीति च परमेश्वराधीनताप्रतिपादनार्थोऽयं व्यपदेश इत्यर्थः। किंच त्वत्पक्षेऽपि न मुख्योऽर्थः सम्भवति, नित्यद्रव्ययोः परापरात्मनोः परस्पराधाराधेयभावानुपपत्तेः, व्यापित्वाच्च न कुण्डबदरन्यायः, तस्मादनिच्छतापि नैरर्थक्यपरिहारायोक्तपरिहारः स्वाकर्तव्य इत्याह—**अन्यथेति**।

श्रुत्यन्तरस्योक्तान्यथासिद्धिं परिहरति—**न च तत्त्वमसीति**। यदि जीवब्रह्मणोर्भेदः प्रमाणान्तरगोचरस्तर्ह्येकत्वग्राहिप्रमाणैरैक्योपदेशो विरुध्येत, न तदस्तीत्याह—**जीवब्रह्मणोरिति**। ननु परमेश्वरविरुद्धधर्मवत्तया तावत्कर्ता भोक्ता दुःख्यहमिति भेदप्रतीतिरस्ति ततस्तद्विरुद्धोऽयमागम इति, तत्राह—**बिम्बेति**। अथवा यदि जीवब्रह्मभेदः प्रमाणान्तरागोचरः, कथं तर्हि तत्प्रतिभास इति, तत्राह—**बिम्बेति**। न वास्तवभेदसाधिकेयमित्यर्थः। तात्पर्यावगमोपायाभावादिति द्वितीयपक्षेऽसिद्धिं दर्शयन्नुपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्तिलक्षणषड्विधतात्पर्यलिङ्गानि दर्शयति—**नापि द्वितीय इत्यादिना। अथ य इति**। 'अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति'इत्यत्र ये अतः उक्तात् ऐक्यज्ञानात् व्यतिरेकेणान्यथा मत्तो भिन्नः परमेश्वरः अहं च तस्माद्भिन्नः संसारीति भेदेन परमेश्वरं विदुः तेऽन्यराजानः सन्तस्तदधीनतया स्वाराज्याभावात् क्षय्यलोकाः भवन्ति अपुनरावृत्तिलक्षणमुक्तिं न प्रतिपद्यन्ते, मृत्युरूपं संसारं च प्रतिपद्यन्त इति भेदनिन्दाश्रवणादित्यर्थः। एवं छान्दोग्यश्रुतौ लिङ्गादि दर्शयित्वा बृहदारण्यकेऽपि दर्शयति—**अन्यत्रापीति**। अतोऽप्युपासनापरत्वमस्य नास्तीत्याह—

---

आधीनतामात्र का प्रतिपादन करती है। अन्यथा नित्य द्रव्यों में स्वतन्त्रता के कारण परस्पर आधाराधेयभाव नहीं बन सकता और न माना ही जाता है, उसका प्रतिपादन करने में श्रुति ही व्यर्थ हो जायगी।

यह जो कहा था कि "तत्त्वमसि"—यह श्रुति उपासनापरक है, 'वहाँ जिज्ञासा होती है कि क्या प्रमाणान्तर का मुख्य अर्थ में विरोध होने के कारण उसे उपासनापरक माना जाता है? या स्वार्थ में तात्पर्य-बोधन का कोई उपाय न होने से? प्रथम पक्ष युक्त नहीं, क्योंकि प्रामाणान्तर के अगोचर होने के कारण जीव-ब्रह्म का भेद प्रामाणान्तर का विषय नहीं हो सकता। बिम्ब-प्रतिबिम्ब के समान भेद की प्रतीति हो भी सकती है। द्वितीय पक्ष भी संगत नहीं, क्योंकि अभेद में तात्पर्य-ग्रह के उपायभूत छह लिङ्गों की वहाँ उपलब्धि है—"तत्त्वमसि"—इस प्रकार नौ बार उपदेशरूप अभ्यास का, "अनेन जीवेन"—इस श्रुति से अर्थवाद का, "अथ येऽन्यथातो विदुः"—इस श्रुति से भेद-दर्शन-निन्दा का, "अथ सम्पत्स्यते"—वाक्य से फल का, "एकमेवाद्वितीयम्", "ऐतदात्म्यमिदम्"—इन वाक्यों से उपक्रम और उपसंहार की एकवाक्यता का, विषय की अपूर्वता का एवं मृत्तिका-दृष्टान्त से उपपादन का सद्भाव स्पष्टतः परिलक्षित है। छान्दोग्य के ही समान बृहदारण्यक उपनिषत् में भी "अहं ब्रह्मास्मि", "य एष इह प्रविष्टः", "योऽन्यां देवतामुपास्ते", "स इदं सर्वं भवति"-आदि लिङ्गों से अभेद में तात्पर्य का निश्चय होता है। "तद्धास्य विजज्ञौ"(छां० उ० ६।१६।३)

"तमसः पारं दर्शयति", "भिद्यते हृदयग्रन्थि" "ब्रह्म वेद ब्रह्मैव भवति" इति विद्याया अविद्यानिवृत्तिब्रह्मात्मभावफलकत्वश्रवणात्, उपासनाविज्ञानस्याप्रमाणत्वादविद्यानिवर्तकत्वायोगात्। परमार्थतो भिन्नस्यात्मनो ब्रह्मात्मत्वासम्भवात्स्थितस्य नष्टस्य वान्यस्यान्यात्मत्वायोगात्, उपासनपरत्वस्य वक्तुमयुक्तत्वात्। 'वेद भवति, विद्वान् न बिभेति, पश्यन् प्रतिपेदे, को मोहः कः शोक एकत्वमनुपश्यत' इत्यादिना विद्यातत्फलयोः समकालीनत्वप्रतिपादनात्, विधेयज्ञानापूर्वजन्यत्वे च तदयोगात्। 'नेह नानास्ती'त्यत्र च त्वप्रत्ययाश्रवणेन नानात्वस्यानिषेधात्, अप्रसक्तप्रतिषेधप्रसङ्गस्य च पूर्वमेव दर्शितत्वात्। नानाभूतस्य कार्यस्य प्रतिषेधे च कारणादन्यत्र कार्यस्याभावेन वाक्यस्य तन्मिथ्यात्वे पर्यवसानात्। उपासनाविधिपरत्वस्य निषेधादेव भेददर्शननिन्दायास्तत्परत्वायोगात्।

द्वासुपर्णेत्यादेश्च लोकसिद्धभेदानुवादकत्वात् लोकसिद्धत्वेऽपि भेदस्य देहात्मभाववत्

---

तद्धास्येत्यादिना। ननूपासनापि विद्यैव, अतः सापि किमित्यविद्यानिवर्तिका न भवेत्, तत्राह—उपासनेति। नह्युपासनाविधिर्विषयतात्त्विकत्वमप्यपेक्षते, योषिदग्न्यादावदर्शनात्। क्रियैव चैषोपासना विधेयत्वान्न प्रमितिः, नहि प्रमितिः पुरुषाधीनात्मलाभा, वस्त्वधीनत्वात्, तस्मादुपासना नाविद्यानिवर्तिकेत्यर्थः। इतोऽप्युपासनापरत्वमयुक्तमित्याह—परमार्थत इति। किमभिन्नस्यैव सतो जीवस्य ब्रह्मणैक्यमुपासनयोत्पाद्यते? भिन्नस्य वा? नाद्यः, अभेदस्य पूर्वमेव सिद्धत्वात्, भेदस्य च तत्र भ्रान्तिमात्रतया विद्यैकनिवर्त्यत्वात्। द्वितीये तु स्थित एव जीवे ब्रह्मैक्यम्? नष्टे वा? नोभयथापि, एकत्र विरुद्धत्वादपरत्र स्वरूपनाशेनापुरुषार्थत्वादित्यर्थः। इतोऽप्युपासनापरत्वं न घटते, यतो विद्योदयसमसमयमेव मोक्षः श्रूयते श्रुतिषु, उपासनापरत्वे ह्यपूर्वव्यवधानात्तदनुपपत्तेरित्याह—वेद भवतीत्यादिना। 'नेह नानास्ति किंचने'त्यस्यापि समस्तद्वैतनिषेधपरत्वमुपपादयति—नेहेति। व्याख्यातश्चायं मिथ्यात्ववादे ग्रन्थः। भवतु ब्रह्मणि नानाभूतवस्तुनिषेधस्तथापि कथं मिथ्यात्वसिद्धिर्यावतान्यत्रापि सत्त्वं सम्भाव्येतेह निषिद्धघटवादिति, तत्राह—कारणादन्यत्रेति। यत्तु भेददर्शननिन्दाऽभेदोपसनाविधिपरा न त्वतत्परेत्युक्तम्, तत्राह—उपासनेति।

यास्त्वात्मभेदे श्रुतयः पूर्वपक्षिणोदाहृतास्तासां कल्पितभेदविषयतयान्यथासिद्धिमाह—द्वासुपर्णेत्यादेश्चेति। ननु लोकोऽपि प्रत्यक्षाद्यन्यतमो निर्धारितविशेष इति तत्सिद्धत्वेऽपि प्रामाणिकत्वमेवापततीति—इत्युक्तम्,

---

"तरति शोकमात्मवित्" ( छां० ३।१।३ ) "तमसः पारं दर्शयति" (छां० ७।२६।२) "भिद्यते हृदयग्रन्थि" ( मुण्ड० २।२।८ ) "ब्रह्म वेद ब्रह्मैव भवति" ( मुण्ड० ३।२।९ ) आदि श्रुतियों में विद्या का फल, अविद्या-निवृत्ति और ब्रह्म-आत्मभाव की प्राप्ति प्रतिपादित है। उपासना-विज्ञान न तो प्रामाणिक है और न अविद्या का निवर्तक ही है। परमार्थतः भिन्न आत्मा में ब्रह्मभाव सम्भव नहीं अर्थात् विद्यमान या अविद्यमान अन्य वस्तु में अन्यरूपता कभी हो ही नहीं सकती, अतः उक्त श्रुतियों को उपासनापरक नहीं कहा जा सकता। श्रुतियों में "वेद भवति," "विद्वान् न बिभेति," पश्यन् प्रतिपेदे," "को मोहः कः शोक एकत्वमनुपश्यत"—इस रूप से विद्या और उसके फल मोक्ष की समानकालीनता श्रुत है, उपासना-पक्ष में उसकी उपपत्ति नहीं होती, क्योंकि उपास्य ज्ञान के अनन्तर अपूर्व से मोक्ष उत्पन्न होगा। "नेह नानास्ति"—यह श्रुति भी समस्त द्वैत का निषेध करती है, नानात्व का नहीं, क्योंकि वहाँ, नाना" शब्द के उत्तर 'त्व' प्रत्यय का श्रवण नहीं, नानात्व-निषेध-पक्ष में अप्रसक्त-प्रतिषेध की आपत्ति पूर्व ( पृ० ८८ ) ही दिखाई जा चुकी है। जब नानारूप कार्य का निषेध करते हैं, तब कारण से अन्यत्र कार्य के न होने से उक्त वाक्य का कार्य के मिथ्यात्व में तात्पर्य निश्चित हो जाता है। उपासना-विधि-परत्व का निषेध हो जाने से भेद-दर्शन-निन्दा, अभेदोपासनापरक नहीं हो सकती।

"द्वा सुपर्णा"—आदि श्रुतियाँ लोक-सिद्ध भेद का अनुवादमात्र करती हैं। लोक-सिद्ध होने पर

संवितृप्रादेशिकत्वादिवच्च प्रामाणिकत्वाप्रसङ्गात्। व्यवस्थानुपपत्तेश्च दुर्निरूपतया भेदासाधकत्वात्। व्यवस्थाशब्देन धर्मभेदमात्राभिधाने दाहपाकादेरिव धर्मिभेदासाधकत्वात्। भिन्नाधिकरणधर्मभेदाभिधाने चान्योन्याश्रयत्वात्। परस्परविरुद्धधर्मोक्तौ च विरोधस्य विचारासहत्वात्, सहानवस्थानस्यासिद्धेः, एकस्मिन्नप्यात्मनि पादे मे वेदना शिरसि मे सुखमिति युगपत् सुखदुःखयोरनुभवात्। अणुपरिमाणस्य मनसो युगपत्प्रदेशद्वयेन सन्निकर्षाभावेऽपि त्वगिन्द्रियेण व्यापकेन युगपत्सन्निकर्षात्। तत्तत्प्रदेशावच्छिन्नात्ममनःसंनिकर्षस्य च सुखदुःखनिदानत्वाङ्गीकारे सुखदुःखयोरणुमात्रतयोपलम्भप्रसङ्गात्, सकलदेहव्यापितया च तयोरनुत्पादप्रसङ्गात्। विनश्यदविनश्यतोश्च सुखदुःखयोः सहावस्थानस्य स्वयमेवाङ्गीकारात्।

तदसत्, देहात्मभावादौ व्यभिचारादित्याह—लोकसिद्धत्वेऽपीति। या तु सुखादिव्यवस्थान्यथानुपपत्तिरुक्ता, ता परिहरति—व्यवस्थेति। दुर्निरूपतामेव दर्शयति—व्यवस्थाशब्देनेति। अत्र किं भिन्नधर्माणां युगपदेकत्रावस्थानानुपपत्तिरधिकरणभेदसाधिका? उत भिन्नाधिकरणधर्माणामुक्तविधानुपपत्तिः? उत विरुद्धधर्माणामुक्तविधानुपपत्तिरिति? अत्राद्यं दूषयित्वा द्वितीयं दूषयति—भिन्नाधिकरणेति। तृतीये प्राह—परस्परेति। कोऽयं विरोधः सुखादीनाम्, किं सहानवस्थानम्? किं वा वध्यघातकभावः? उत भावाभावरूपत्वम्? आद्ये प्राह—सहानवस्थेति। ननु कथमणुपरिमाणस्य मनसः शिरःपादप्रदेशाभ्यां युगपत्सम्बन्धः? येन तत्तत्प्रदेशवर्तिसुखदुःखयोर्युगपदुत्पत्तिः स्यादतः समानाधिकरणक्रमेणोत्पन्नसुखदुःखयोर्भ्रान्तिरेव यौगपद्यप्रतीतिरिति, तत्राह—अणुपरिमाणस्येति। त्वगिन्द्रियं हि निखिलशरीरव्यापकत्वाद्युगपच्छीतोष्णाभ्यां सन्निकृष्यते, तच्चैकेन मनसाधिष्ठीयते, ततश्चोभयविषयज्ञानोत्पत्तौ युगपत्सुखदुःखयोरुत्पादो न विरुध्यते। त्वग्द्वारा च युगपत्सन्निकर्षाधिष्ठानादुभयविषयमेकं ज्ञानं सामग्रीसत्त्वात् समुत्पद्यत इत्यर्थः। ननु भवतु युगपज्ज्ञानम्, तथापि नैकत्र द्वयोरवस्थानम्, नहि यावदात्मसुखदुःखोत्पत्तिः, अनुपलम्भात्, किं तर्हि येन शरीरप्रदेशेन कण्टकादिसंयोगः समजनि तदवच्छिन्नात्मप्रदेशेन मनःसंयोगात्तत्रैव दुःखादय उत्पद्यन्ते। ततश्च सुखदुःखयोर्भिन्नप्रदेशावस्थितत्वादस्त्येव सहानवस्थानमिति, तत्राह—तत्तत्प्रदेशेति। अथवाऽसमवायिकारणमनःसंयोगक्रमात् सुखदुःखयोः क्रमोत्पादः किं न स्यादिति, तत्राह—तत्तत्प्रदेशेति। अण्विति। पादादिव्यापितया नोपलभ्येतेत्यर्थः दूषणान्तरं चाह—सकलेति। मनःसंयुक्तप्रदेशस्याणुपरिमाणतया तत्र सुखस्य निखिलशरीरव्यापितौ नोपलभ्येते-

भी भेद, देह में आत्मभाव या सूर्य में प्रादेशिकत्वादि के समान ही प्रामाणिक नहीं हो सकता। सुख-दुःखादि की व्यवस्थानुपपत्ति, स्वयं दुर्निरूपित होने से भेद-साधक नहीं हो सकती, क्योंकि 'व्यवस्था' शब्द से धर्म-भेदमात्र का अभिधान करने पर दाह-पाकादि के समान ही वह धर्मिभेदका-साधक नहीं हो सकता ( अर्थात् जैसे एक ही अग्नि में जलाना और पकानादि विभिन्न धर्म रहते हैं, वैसे ही न्यूनाधिक सुख-दुःखादि भी एक ही धर्मी में क्यों न रह जायँगे ? )। 'व्यवस्था' शब्द से भिन्नाधिकरण-वृत्ति धर्म का अभिधान मानने पर अन्योन्याश्रयता है और परस्पर विरुद्ध धर्मों की विवक्षा करने पर विरोध का निर्वचन सम्भव नहीं, क्योंकि सहानवस्थानरूप विरोध तो यहाँ सिद्ध ही नहीं हो सकता, क्योंकि एक ही आत्मा में "पादे मे वेदाना, शिरसि मे सुखम्"—इस प्रकार सहावस्थित सुख-दुःख का अनुभव होता है। अणुपरिमाण होने के कारण मन का तो युगपत् दोनों प्रदेशों से सम्बन्ध नहीं हो सकता, किन्तु शरीर-व्याप्त त्वगिन्द्रिय का युगपत् सन्निकर्ष हो जाता है। पादादि प्रदेशावच्छिन्न आत्मा के साथ मन सन्निकर्ष को सुख-दुःख का जनक मानकर (पादावच्छिन्न आत्मा में दुःख और शिरोऽवच्छिन्न आत्मा में सुख—इस प्रकार सहानवस्थान बनाने पर) मन के अणु होने से अणुप्रदेश में ही सुखादि का भान होना चाहिए, सकल शरीर में व्याप्त सुख-दुःख का उदय नहीं हो सकेगा। विनाशाविनाश अवस्थावाले सुख-दुःखों का सहावस्थान

वध्यघातकभावस्य च नाजात एकोऽन्य हन्ति नाप्यन्याधारम्, इति न्यायेन सहावस्थानाक्षेपकत्वात्। व्यवस्थायाश्च कल्पितभेदाश्रयत्वेनाप्युपपत्ते। अनुसंधानस्य च शरीरभेदादेवातीतशरीरेष्विव संभवात्। वर्तमानशरीरेष्वपि निदर्शनाभावादेव योगिनमनङ्गीकुर्वद्भिः अनुसंधानस्य प्रसञ्जयितुमशक्यत्वात्, योगिसद्भावाभ्युपगमेऽपि नयनावच्छिन्नस्यात्मन शब्दाद्यननुसंधानवदेकशरीरविशिष्टस्य शरीरान्तरेऽननुसंधानोपपत्ते। उपलक्षितस्य परमात्मन' सर्वज्ञस्य सर्वत्रानुसंधानेऽपि दोषाभावात्। अनुसधानेऽपि तस्याभोक्तृत्वादेव योगिवदीश्वरवच्च तस्य तत्तच्छरीरदुःखपरिहाराय प्रवृत्तेरप्रसङ्गात्।

सुखादीना च साध्याणा साक्षिधर्मत्वाभावेन तद्भेदासाधकत्वात् साक्षिणश्च प्रमाकरणा-

---

त्यर्थ। अल वा विवादेन, विनश्यदविनश्यतोर्भवतैव सहानवस्थानमङ्गीक्रियत इत्याह—**विनश्यदिति**। द्वितीयपक्ष प्रतिक्षिपति—**वध्यघातकेति**। नन्वस्त्वेव युक्तिपरिनिष्पन्नः पन्थाः, अनुभवस्य तु का गतिः ? नह्येकस्मिन्सुखिनि सर्वे सुखिनो दुःखिनि वा दुःखिन उपलभ्यन्त इति, तत्राह—**व्यवस्थायाश्चेति**। अङ्गीकृत्य सहानवस्थानमय काल्पनिकभेदमादाय परिहारः। एतेन भावाभावपक्षोऽपि प्रतिक्षिप्तः, एकस्मिन्नप्यात्मनि सुखादेस्तदभावस्य च भवद्भिरेवाङ्गीकारेणाव्यवस्थापकत्वात्। नच भावाभावत्वमपि शङ्कामधिरोहति, उभयोरपि गुणत्वेनाङ्गीकारात्। यत्तु पादाद्यवयवेष्विव निखिलशरीरेष्वेकस्यैवानुसधान स्यादिति, तत्राह—**अननुसधानस्येति**। नन्वतीतत्वमेव तत्रोपाधिः, ननु शरीरभेदः, इतरथा वर्तमानानेकशरीराधिष्ठातृयोगव्याप्तस्य तेष्वननुसधानप्रसङ्गादिति, तत्राह—**वर्तमानेति**। मीमासकाना तावदय न युक्त' प्रसङ्ग इत्यर्थः। तार्किकान्प्रत्यप्याह—**योगीति**। ननु यद्यपि चक्षुरवच्छिन्नस्य शब्दाद्यनुसधानं नास्ति तथाप्यस्त्येवैकस्तदुपलक्षितोऽनुसन्धाता, इतरथा य एवाह रूपमद्राक्ष स एव शृणोमीति प्रतिसधानाभावप्रसङ्गादिति, तत्राह—**उपलक्षितस्येति**। परमात्मानुसदधात्येवेत्यर्थ.। ननु कथ दोषाभाव ? यावता चरणतललग्नकण्टकोद्धरणाय पाणितलव्यापारवच्चैत्रगात्रवेदनापरिहाराय मैत्रगात्रव्यापारप्रसङ्गस्य दोषत्वादिति, तत्राह—**अनुसधानेऽपीति**। यथाहि भवता सर्वज्ञस्येश्वरस्य योगिनो वा सर्वत्रानुसधानेऽप्यप्रवृत्ति, तत्कस्य हेतो' ? अभोक्तृत्वात्, एवमस्मन्मतेऽपीत्यर्थः।

यच्च साध्यतया सुखादे. साक्षिधर्मत्वाभावाद् व्यधिकरणतयाऽव्यवस्थापकत्व पूर्वपक्षिणाशङ्क्य दूषित

---

आप स्वय ही मानते है। 'विरोध' शब्द का बध्यघातकभाव अर्थ करने पर दोनो मे सहावस्थान की अनिवार्यता माननी होगी, क्योकि यह नियम है कि एक ( घातक ) न तो बिना उत्पन्न हुए, दूसरे का घात कर सकता है और भिन्न आधार मे रहकर ही। कोई सुखी है तो कोई दुःखी—इस प्रकार की व्यवस्था तो कल्पित भेद को लेकर भी बन सकती है। यह जो कहा था कि सर्वत्र एक ही आत्मा केहाने पर दूसरे-दूसरे व्यक्तियों के अनुभवो का अनुसन्धान क्यो नही होता ? उसका उत्तर यह है कि शरीर के भेद से ही अननुसन्धान वैसे ही बन जाता है, जैसे एक ही आत्मा को अपने पूर्व शरीरो के अनुभवो का अनुसन्धान नही होता। 'वर्तमान अपने अनेक शरीरो के अनुभवो का अनुसन्धान योगी करता है'—यह आपादन वह व्यक्ति नही कर सकता, जो योगी नही मानता, क्योकि उसके लिए और कोई दृष्टान्त नहीं। हाँ, योगी माननेवाला वादी अवश्य यह कह सकता है, किन्तु उसे यह कह देना पर्याप्त है कि जैसे नेत्रावच्छिन्न आत्मा, शब्दानुसन्धान नही करता, वैसे ही एक शरीर-विशिष्ट आत्मा के अनुभव का अनुसन्धान शरीरान्तर मे नही होता। यदि कहा जाय कि नेत्राद्युपलक्षित आत्मा तो शब्दादि का अनुसन्धान करता ही है, तो इसमे इष्टापत्ति है, क्योकि सर्वज्ञ परमात्मा तो सबका अनुसन्धान करता ही है। अनुसन्धान होने पर भी वह उसका भोक्ता नही, अत. योगी या ईश्वर के ही समान उन-उन शरीरो के दु खो का परिहार करने के लिए उसकी प्रवृत्ति नही होती।

सुखादिरूप साध्य पदार्थ साक्षी के धर्म न होने से साक्षी के भेद के साधक नही हो सकते।

संनिधानेऽपि सुषुप्तावज्ञानसाधकस्य प्रमात्रन्तर्भावानुपपत्ते । तस्य च जीवात्मान्तर्भावात्साक्षिप्रत्यक्षस्य लौकिकव्यवहाराङ्गत्वोपपत्ते । न च साक्षिणि प्रमाणाभाव, यत —

'चैत्राग स्वविषयानित्यज्ञानातिरेकिणा ।
तदध्यक्षेण सवीक्ष्य प्रत्यक्षत्वात्पटादिवत्' ॥ ५ ॥

विवादाध्यासिता चैत्रेच्छाद्य एतद्ग्राहकाऽनित्यज्ञानातिरिक्तैतत्प्रत्यक्षग्राह्या एतत्प्रत्यक्षत्वादेतत्प्रत्यक्षपटादिवत् । न चाभाससमानयोगक्षेमत्वम्, अनुमानस्य नित्यत्वप्रसाधने लक्षणव्याघातात् । व्याप्याद्व्यापके बुद्धिरनुमानम्, साधनधर्मदर्शनात् साध्यधर्मविशिष्टे बुद्धिरनुमानम्, लिङ्गदर्शनात् संजायमान लैङ्गिकमनुमानम्, त्रिरूपाल्लिङ्गतोऽर्थदृगित्यादिलक्षणैरनित्यस्यैव ज्ञानस्यानुमानत्वेन लक्ष्यमाणत्वात्, विपक्षे बाधकाभावाच्च । मानसप्रत्यक्ष-

---

तदपि समर्थयते—सुखादीना चेति । यत्तु साक्षिणोऽपि द्रष्टृत्वे प्रमात्रन्तर्भाव', इतरथा व्यवहारानङ्गत्वमित्युक्तम्, तत्र द्रष्टृत्वेऽपि प्रमात्रन्तर्भाव परिहरति—साक्षिणश्चेति । प्रमाणैर्यः प्रमिणोति स प्रमाताऽतो नेवमसावित्यर्थः । ननु तर्हि जाग्रदादो ज्ञानादिसाधकत्व तस्य न स्यात्, अनुपरतप्रमाणव्यापारत्वात् तदानीम्, अतो व्यवहारानङ्गत्व तदवस्थमिति, तत्राह—तस्य चेति । अन्तर्भावात्स्वरूपतयेत्यर्थ' । साक्षिणि तार्किकं प्रत्यनुमानमाह—चैत्रेति । तदध्यक्षेण चैत्रप्रत्यक्षेणेत्यर्थः । इद च विशेषण पूर्वोक्तेश्वरप्रत्यक्षेणार्थान्तरतापरिहारार्थम्, नहीश्वरप्रत्यक्षं चैत्रप्रत्यक्षमिति भवतामङ्गीकार । श्लोक विवृणाति—विवादेति । अत्रायनित्यज्ञानातिरिक्तेति अनित्यज्ञानत्वानधिकरणमित्यर्थ. । ईश्वरप्रत्यक्षवेद्यतयार्थान्तरतानिवृत्त्यर्थमेतत्प्रत्यक्षपदम्, मानसप्रत्यक्षवेद्यतया सिद्धसाधनतानिवृत्त्यर्थमेतद्ग्राहकेति पदम्, तथा-चेच्छादिग्राहकनित्यापरोक्षसाक्षिसिद्धि., परोक्षादिष्वेतत्प्रत्यक्षाविषयेषु व्यभिचारनिवृत्त्यै हेतावेतत्पदम्, अतीन्द्रियेष्वव्यभिचाराय प्रत्यक्षपदम् । यत्तु नित्यानुमानस्यापि साधकतयाभाससमानयोगत्वमुक्तम्, तत्राह—न चाभासेति । जन्यत्वगर्भमनुमानलक्षणमित्यत्र तार्किकसमतिमाह—व्याप्यादित्यादिना । नच नित्यप्रत्यक्षाभ्युपगमेऽपि प्रत्यक्षलक्षणव्याघातः, साक्षात्कारिज्ञानत्वस्य तल्लक्षणत्वादीश्वरप्रत्यक्षस्य तार्किकैरङ्गीकारात् । मोक्षदशाया भाट्टैरविनाशिनोऽपरोक्षसुखज्ञानस्याङ्गीकारात् । गुरुमतेऽपि साक्षात्कारिज्ञानत्वस्यैव तल्लक्षणत्वात्तथाह भाट्ट—'साक्षात्प्रतीति. प्रत्यक्षम्' इति । स्वानुमानस्य च विपक्षे बाधकतर्कमाह—मानसप्रत्यक्षेति । तत्र तदुक्त साधन दूषयति—न च स्वरूपेणेति । नायमविरोधनिगमकः, एतस्मि-

---

प्रमा-करण-सन्निधान के बिना ही सुषुप्ति के अज्ञान का साधक होने से साक्षी, प्रमाता के अन्तर्गत नही हो सकता । साक्षी, जीव के अन्तर्गत है, अत साक्षिप्रत्यक्ष लौकिक व्यवहार का अङ्ग बन जाता है । साक्षी मे प्रमाणाभाव भी नही, क्योकि अनुमान प्रमाण है—"चैत्र के इच्छादि, स्वविषयक अनित्य ज्ञान से अतिरिक्त, चैत्र के प्रत्यक्ष से ग्राह्य है, प्रत्यक्ष होने के कारण, जैसे–पटादि ।" इस अनुमान मे जो ("इच्छाद्य एतद्ग्राहकानित्यानुमानातिरिक्तानुमानवेद्या वेद्यत्वात्"–इस) अनुमानाभास की समानता का दोष दिया था । वहाँ अनुमान मे नित्यत्व सिद्ध करने पर अनुमान-लक्षण से ही विरोध हो जाता है, क्योकि "व्याप्याद् व्यापके बुद्धिरनुमानम्" (व्याप्य से जन्य व्यापक की बुद्धि को अनुमान कहते है), "साधनधर्मदर्शनात् साध्यधमविशिष्टे बुद्धिरनुमानम्" (साधनरूप धर्म के दर्शन से साध्यरूप धर्म से विशिष्ट धर्मी का ज्ञान, अनुमान है), 'लिङ्गदर्शनात् सजायमानं लैङ्गिकज्ञानानुमानम्" (लिङ्ग-दर्शन से उत्पन्न होनेवाल लिङ्गा के ज्ञान का नाम अनुमान है), "त्रिरूपाल्लिङ्गतोऽर्थदृक्" (पक्ष-सत्त्व, सपक्ष-सत्त्व और विपक्षासत्त्वरूप तीनरूपो से युक्त लिङ्ग से जन्य साध्यविषयक ज्ञान को अनुमान कहा जाता है)—आदि लक्षणो से अनित्य ज्ञान को ही अनुमान सिद्ध किया गया है । एवं अनुमानाभास मे विपक्ष-बाधक कोई तर्क भी नही । किन्तु हमारे अनुमान मे विपक्ष-बाधक तर्क यह है कि इच्छादि से मानस प्रत्यक्ष की वेद्यता मानने पर कर्मकर्तृ-

वेद्यत्वे इच्छादे कर्मकर्तृभावस्यैव बाधकत्वात्। न च स्वरूपमात्रेण ग्राहकस्य विशिष्टरूपेण ग्राह्यत्वेऽप्यविरोध.। केवलस्य देवदत्तस्य गन्तृत्व कुण्डलविशिष्टस्य तु गन्तव्यत्वमिति तत्रापि विरोधाभावप्रसङ्गात्। दृश्यते च कर्तुरप्यन्यत्र करणता 'योधै राजा युध्यते', 'चारेण परसैन्यं कलयति' इत्यादिषु।

न चाविद्याविशिष्ट साक्षी, येन कर्तृकोटिनिविष्टाया अविद्याया कर्तृत्वं स्यात्, चिद्रूपस्यैवात्मन साक्ष्यसंबन्धे साक्षित्वेन व्यवहारात्, 'यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति' इत्यादिश्रुते । 'ब्रह्म वा इदमग्र आसीत्' 'तदात्मानमेवावेद्'इत्यादिना नात्मन कर्मकर्तृभावो विवक्ष्यते, किं तर्हि—वेदान्तवाक्यजनितब्रह्मैकाकारान्त करणवृत्तिरूपया विद्यया स्वत सिद्धस्यैवात्मनोऽब्रह्मत्वभ्रमकारणाविद्यानिवृत्ति, तथा चान्त करणविशिष्टस्यैव प्रमातृत्व विशुद्धस्य

---

न्विद्यमानेऽपि कर्तृकर्मत्वयोरेकत्र देवदत्तादौ विरोधदर्शनादित्यर्थः। यत्तु कर्तृकरणत्वयोरपि बुद्धौ विरोधस्तवापि समान इत्युक्तम्, तदसत्, लोके तयोर्बहुलमविरोधदर्शनादित्याह—**दृश्यत इति**। अन्यत्र, लोक इत्यर्थः। अत्र हि भटा युद्धकर्तारः, अथ च करणतया निर्दिश्यन्त इत्यर्थः।

या त्वविद्याया कर्तृत्वकर्मत्वप्रतिबन्दी गृहीता, ता परिहरति—**न चाविद्येति**। नाविद्याविशिष्टस्य साक्षित्वम्, नाप्युपलक्षितस्य, किंतु तदुपाधिकस्य। अथ कोऽयं विशेषणोपलक्षणोपाधीनां भेद? शृणु—

कार्यान्वयित्वेन तु भेदक यद्विशेषणं नैल्यमिवोत्पलस्य।
अनन्वयित्वेन तु भेदकानामुपाधितालक्षणता प्रसिद्धा॥

तयोरपि—यावत्कार्यमवस्थायिभेदहेतोरुपाधिता। कादाचित्कतया भेदधी हेतुरुपलक्षणम्॥

तेन नाविद्याया. कर्तृभाव इत्यर्थ.। **यद्वै तदिति**। इय हि साक्षाद् द्वैताभावनिबन्धनमदर्शनं स्वरूपतश्च दर्शनं वदतीत्युक्तिः। स्वाभाविकमेव सकलावभासकचैतन्य तस्य तत्तद्विषयानुषङ्गवशाच्च तत्तद्विषयानुभवत्व विकल्प्य निदर्शयतीत्यर्थः। या तु तदात्मानमेवावेदिति ब्रह्मणि कर्तृकर्मत्वप्रतिबन्दी गृहीता, ता परिहरति—**ब्रह्म वा इति**। ननु तथापि कर्मकर्तृत्वाभावे विमायात यावत्तैकस्यैव वेद्यत्ववेदितृत्वाङ्गीकारादिति, तत्राह—**तथा चेति**। नन्वेवं घट्टकुटीप्रभातायितम्, अन्तःकरणविशिष्टस्य प्रमातृत्वं स्वरूपेण च कर्मत्वमिति वदतैकस्यैव कर्मकर्तृत्वमौपाधिकश्च विरोधपरिहार इत्यङ्गीकारादिति, न, तदुभयस्याप्यसिद्धेः। न तावदन्त.करणविशिष्टतयास्य कर्तृत्वम्, आरोपात्। अन्त करणगत हि कर्तृत्वं धर्म्यध्यासद्वारा चैतन्ये परमारोप्यते, नहि दण्डदेवदत्तयोरिव विशेषणविशेष्यभाव.। तस्मादारोपितत्वान्न कर्तृत्वम्, नापि कर्मत्वम्, तज्जन्यातिशताभावात्। अस्तु वा कर्म वृत्तिव्याप्यतामात्रेण, तथापि कर्तृत्वाभावादेव वैषम्य-

---

भावापत्ति ही बाधक है। यह जो कहा था कि स्वरूपत ग्राहक को विशिष्टरूप से ग्रह कर्म मानने मे कोई विरोध नही। वह कहना भी उचित नही, क्योकि केवल देवदत्त मे गमन-कर्तृत्व और कुण्डल-विशिष्ट मे गमन-कर्मत्व की प्राप्तिरूप विरोध वहाँ भी है। हाँ, कर्तृत्व और करणत्व का किसी प्रकार का विरोध नही, क्योकि लोक में बहुधा कर्त्ता में करणत्व-व्यवहार देखा जाता है, जैसे—"योधैर्युध्यते राजा", "चारेण परसैन्यं कलयति"। यहाँ युद्ध के कर्त्ता योद्धाओं मे करणता का व्यवहार स्पष्ट है।

अविद्या-विशिष्ट को साक्षी नही माना जाता, जिससे कि कर्त्ता की कोटि मे प्रविष्ट अविद्या में कर्तृत्व मानना पड़े।। चिद्रूप आत्मा हा साक्ष्यपदार्थों के सम्बन्ध से साक्षी कहलाता है, क्योकि "यद्वै तन्न पश्यति"—आदि श्रुतियो से यही स्पष्ट होता है। "ब्रह्म वा इदमग्रे आसीत्, तदात्मानमेवावेद"—आदि श्रुतियो का तात्पर्य आत्मगत कर्मकर्तृभाव के बोधन मे नही, अपि तु वेदान्त वाक्य-जन्य, ब्रह्माकार, अन्त करण-वृत्तिरूप विद्या के द्वारा स्वत सिद्ध आत्मा में अब्रह्मत्व-भ्रम की कारण अविद्या की निवृत्ति। अत. अन्त.करण-विशिष्ट मे ही प्रमातृत्व और विशुद्ध ब्रह्म मे वृत्ति-व्या-

ब्रह्मणो वृत्तिव्याप्यत्वमिति कुतस्तत्रैकस्य कर्मकर्तृभाव ? न च नित्यबोधमन्तरेण पूर्वापर-बुद्धीनामनुसंधानसिद्धि , ग्राहकतया सिद्धेर्निराकृतत्वात् । न च 'साक्षी चेता केवलो निर्गुणश्चे'ति वाक्यमीश्वरपरत्वादात्मन साक्षित्वे न प्रमाणमिति युक्तम्; मायाविशिष्टरूपे तस्मिन् केवलो निर्गुण इति विशेषणानुपपत्ते । तस्मात्सर्वप्रत्यग्भूतं विशुद्ध ब्रह्मात्र जीवाभेदेन साक्षीति प्रतिपाद्यते । न चानन्दादीना साक्ष्याणा साक्षिधर्मत्वम् , आनन्दानुभवयोरात्मरूपत्वात् । न च नित्यत्व धर्म , विनाशराहित्येनोपलक्षितस्वरूपस्य तथा व्यपदेशात् । विशेषगुणवद्व्यापकान्यत्वसाधनं च प्रतिकल्पं जायमानाकाशभेदैरेव सिद्धसाधनम् , अर्थान्तरञ्चेश्वरवादिनामीश्वरेण, अनित्यपदप्रक्षेपे च पूर्वोक्त एव दोष । तथा च सुखादीनामात्मगुणत्वाभावान्न तद्व्यवस्थातस्तद्भेदसिद्धि । तदेव स्वाविद्या ब्रह्मैव संसरति स्वविद्यया च मुच्यत इति एकाविद्यापक्षे न कश्चिद्दोष , तथा नानाविद्यापक्षेऽपि ।

---

मिति, अनुसधानान्यथानुपपत्तिमपि साक्षिणि प्रमाणं समर्थयते—**न च नित्येति** । निराकृतत्वात्स्वप्रकाशवाद इति शेषः । आगममपि समर्थयते—**न च साक्षीति** । किमिति न युक्तम् ? तत्राह—**मायाविशिष्टेति** । नहि निर्विकारचैतन्यस्य मायानिवशमन्तरेण वियदाद्याकारविवर्तः सभवतीति भाव. । तदेवं न साक्षात्सुखादेः साक्षिधर्मत्वमित्युक्तम् , यत्तु पञ्चपादीवचनमुदाहृतम्, तत्परिहरति—**न चानन्दादीनामिति** । यच्चाकाशं पक्षीकृत्य विशेषगुणवद्व्यापकद्रव्यान्यत्वसाधनेनात्मनो भेदसाधनम् , तत्परिहरति—**विशेषगुणेति** । यस्य हि वेदान्तिनो वियदधिकरणन्यायेनाकाशोऽप्युत्पद्यते प्रलीयते चेति मतम् , तन्मते कल्पान्तरीयाद्विशेषगुणवद्व्यापकद्रव्यादाकाशादन्यत्वमादायाप्यर्थान्तरमित्मर्थ. । ईश्वरादन्यत्वमादायाप्यर्थान्तरतामाह—**अर्थान्तरं चेति** । नन्वनित्यविशेषगुणवद्व्यापकद्रव्यादन्यत्व सिषाधयिषितम् , नचेश्वरस्तथेति, तत्राह—**अनित्येति** । **पूर्वोक्त इति** । आकाशेनाऽर्थान्तरतेत्यर्थः । साक्ष्याणा साक्षिधर्मत्वाभावप्रतिपादनमुपसहरति—**तथा चेति** । समर्थितमेकजीववादमुपसहरति—**तदेवमिति** । एकाविद्यापक्षे इति । अत्र चाविद्याशब्देन तदधीनो जीवो लक्ष्यते । एकजीवपक्षे इत्यर्थः—**नानाविद्यापक्षेऽपीति** । नानाजीवपक्षे इत्यर्थ. । एव हि किमेकाविद्या किं नानाविद्येत्युत्तरग्रन्थसामञ्जस्यम् ।

---

प्यता ही उक्त श्रुति से विवक्षित है । इस लिए कहाँ एक में कर्मकर्तृभाव प्रसक्त होता है ? साक्षी रूप नित्य बोध के बिना पूर्वोत्तर के अनुभवो का अनुसन्धान नही हो सकता । यह जो कहा था कि स्वयप्रकाश ज्ञान की आश्रयता होने से ही अनुसन्धान बन जायगा, उसका निराकरण स्वप्रकाशवाद मे ही किया जा चुका है । "साक्षी चेता केवलो निर्गुणश्च"—यह वाक्य ईश्वरपरक होने से साक्षी मे प्रमाण नही—यह कहना भी युक्त नही , क्योकि माया-विशिष्टरूप ईश्वर के लिए "केवलो निर्गुणश्च"—इन विशेषणों का सामञ्जस्य नही होता । इस लिए सबका प्रत्यग्भूत विशुद्ध ब्रह्म ही यहाँ जीव-तादात्म्यापन्न साक्षीरूप से कहा गया है । आनन्दादि साक्ष्यपदार्थ, साक्षी के धर्म नही, अपि तु आनन्द और उसका अनुभव—दोनो आत्मरूप होते है । नित्यत्व भी उसका धर्म नही , क्योकि विनाशाभाव से उपलक्षित आत्मरूपता का ही नाम नित्यत्व है । यह जो (आकाशो विशेषगुणवद्व्यापकद्रव्यान्यः, द्रव्यत्वाद्, घटवत्–इस अनुमान से) आत्मा मे विशेषगुणवाले व्यापक द्रव्य का भेद सिद्ध किया था , वहाँ प्रत्येक कल्प मे पैदा होनेवाले आकाश-भेदो को लेकर सिद्ध-साधनता होती है । ईश्वरवादियो के मत से ईश्वर को लेकर अर्थान्तरता भी है । अनित्य पद जोड़ने पर पूर्वोक्त अर्थान्तरता दोष है । फलत. सुखादि, आत्मा के गुण नही, अत उनकी व्यवस्था से आत्म-भेद सिद्ध नही होता । इस प्रकार एक ब्रह्म ही अपनी अविद्या से बन्धन मे पड़ता और अपनी वद्या से मुक्त होता है । अत. एक अविद्यापक्ष मे कोई दोष नही, वैसे ही नाना अविद्या पक्ष मे भी ।

ननु नानाजीवाना किमेकाविद्या कल्पिका ? उत प्रतिजीवं भिन्ना ? नाद्य', एकमुक्तौ सर्वमुक्तिप्रसङ्गतादवस्थ्येन नानाजीवकल्पनायामपि व्यवस्थानुपपत्ते । न द्वितीय., कल्पनागौरवात्। ननु व्यवस्थानुपपत्तौ कल्पिकायां न कल्पनागौरवं दोष 'प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपी'ति न्यायादिति चेत्, मैवम्, व्यवस्थाया पारमार्थिकत्वे सत्यविद्याकार्यत्वानुपपत्तेस्तत्कल्पनावैयर्थ्यात्। अपारमार्थिकत्वे पुनरेकयैव तस्या सिद्धेरविद्याभेदकल्पना व्यर्था। अन्यथैकस्याप्यनन्तभेदभानायानन्ताविद्या. कल्प्या स्यु । सन्तु को दोष इति चेत्, तर्हि ताभिरेव सर्वकल्पनासिद्धेरात्मान्तरस्य न ता कल्प्या । न च तेषामप्यज्ञतया भानात् ताः कल्प्या इति वाच्यम्, अद्वैतवादिनस्तद्भेदभानस्य प्रामाणिकत्वाभावादप्रामाणिकस्य चैकाविद्याभिरेव सिद्धेर्नान्यस्याविद्या. कल्पनीयाः। किं च यथान्तरेणैवार्थान्तरमविद्यान्तर च स्वप्ने चराचरं जगत् त्वदविद्ययैव ते भाति, तथा जाग्रत्यपि किं न भायात्? अपि चोत्पन्नविद्यस्यात्मान्तरमोहस्तत्कार्याणि भान्ति ? न वा ? आद्ये निवृत्ताविद्यस्यापि

---

एव ब्रह्मस्वभावाविद्यासम्बन्धाद्यनुरोधेन विशदमतीन्प्रत्येकजीवपक्षः समर्थितः, ये तु मन्दमतयो निबिडद्वैतवासनाक्रन्दनजडतमशेमुषयो बद्धमुक्तादिव्यवस्थास्थेमनि बद्धास्था नानाजीवपक्षमेव रोचयन्ते तान्प्रति नानाजीवपक्षमप्याक्षेपसमाधानाभ्यामभिदर्शयति—नन्वित्यादिना । कल्पकसद्भावात्कल्पनागौरव न दोषायेति शङ्कते—ननु व्यवस्थेति । किमियं पारमार्थिकी व्यवस्था याऽनेकाऽविद्या विना नोपपद्यते ? किं वा काल्पनिकी ? पारमार्थिकीव्यवस्थाया नानाविद्यामभ्यर्थयमानः श्लाघनीयप्रज्ञो मातापितृमान्। द्वितीये त्वेकाविद्ययापि तत्सिद्धि.। अथ कल्प्यगुर्वादीनामनेकत्वात्कल्पिकाविद्याया अपि नानात्वम्, तर्ह्येकस्याप्यनेकघटपटादिप्रतीत्यर्थमनन्ताविद्याः कल्प्येरन्, तथाप्येकजीवगताऽविद्याभिरेव तत्सिद्धेरनेकजीवकल्पनावैयर्थ्यादित्याह—मैवम्, व्यवस्थाया इत्यादिना। अद्वैतवादिन इति । ये ते अज्ञा' प्रतीयन्ते तद्भेदस्याप्याविद्यत्वात्सकलकल्पनाकल्पिकाविद्यानामेकचैतन्यगतानामेव कल्पनात् स्थितिरित्यर्थ । किंच नाविद्यावनया व्यवहारमात्रादविद्याभेदक्लप्ति', नापि दृश्यभेदादविद्याभेद, स्वप्ने व्यभिचारादित्याह—किंचेति । किंचानेकजीवकल्पनायामपि गुरुशिष्यव्यवस्थानुपपत्ति समानेत्याह—अपि

---

शङ्का—नाना जीवो की एक ही अविद्या कल्पक है ? या अनेक ? प्रथम पक्ष में तो एक ही मुक्ति हो जाने पर सबकी मुक्ति का प्रसङ्ग बना है, अत नानाजीवो की कल्पना मे भी व्यवस्था अनुपपन्न ही रही। द्वितीय पक्ष मे कल्पना-गौरव है । यदि कहें कि व्यवस्था की अनुपपत्ति होने पर कल्पना का गौरव, दोषावह नही होता, जैसा कि कुमारिल भट्ट ने कहा है—प्रामाणिक अनन्त अदृष्टो की भी कल्पना सम्भव है । तो यह कहना सम्भव नही, क्योकि उक्त व्यवस्था को पारमार्थिक मानने पर अविद्या-कार्यत्व सम्भव न होने से नाना अविद्या की कल्पना ही व्यर्थ है । उक्त व्यवस्था के अपारमार्थिक होने पर भी एक ही अविद्या से सब व्यवस्था बन जाती है, नाना अविद्या की कल्पना व्यर्थ ही है। नही तो एक आत्मा की अविद्या मे भी अनन्त भेदो का भान बनाने के लिए अनन्त अविद्याएँ माननी होगी। इसे इष्टापत्ति कहने पर उन्ही से सर्व कल्पना की सिद्धि हो जाने से दूसरे आत्मा मे अनन्त अविद्याओ की कल्पना अनावश्यक होगी। यदि कहे कि दूसरे आत्माओ मे भी अज्ञता की प्रतीति होने से उनकी कल्पना आवश्यक है। तो यह नही कह सकते, क्योकि अद्वैतवादियो के मत से अज्ञ-भेद-भान प्रामाणिक नही, अप्रामाणिक भेद-भान तो एक जीव की ही अविद्याओ से बन सकता है, अन्य जीवो मे अविद्या-भेद कल्पना निरर्थक है। दूसरी बात यह भी है कि जैसे बिना ही गजादि पदार्थो के और बिना ही अविद्यान्तर के स्वप्न मे समस्त चराचर जगत् आपकी अविद्या से ही आप को प्रतीत होता है, वैसे जाग्रत मे भी क्यो न होगा ? यह भी यहाँ जिज्ञासा होती है कि जिस जीव मे विद्या उत्पन्न हो गई है, उसका मोह और मोह के कार्य प्रतीत

भेदभाने न भूमलक्षणब्रह्मप्राप्तिः। द्वितीये तु शिष्याद्यभानात् गुरोरुपदेशादिक्रिया न भवेत्। किं चैकस्य मोहो मोहान्तराणां तत्कार्याणां च भानहेतुः ? उत कल्पकः ? नाद्यः, मोहस्य प्रकाशरूपत्वाभावात्। न द्वितीयः, त्वन्मोहकल्पितस्य सम्प्रतिपन्नत्वन्मोहकल्पितवत्, अन्य-मोहत्वतत्कार्यत्वानुपपत्तेः। न चान्यमोहकल्प्यत्वम्, क्लृप्तत्वात्। न च त्वत्कल्पितस्यान्यमोह-स्यान्यमोहकल्पकत्वम्, कल्पितत्वात् रजतादिवत्। मोहान्तरतत्कार्याणां च स्वात्मदृश्यत्वे संप्रतिपन्नवत् तन्मोहत्वं तत्कार्यत्वं च स्यात्। अन्यमोहतत्कार्याणां चान्यदृश्यत्वस्यासम्प्रति-पन्नत्वात्, स्वमोहतत्कार्याणां च स्वदृश्यत्वस्योभयवादिसिद्धत्वात्। न चेन्द्रजालादेर्बहुमोह-कल्पितस्य बहुद्रष्टृकस्यैकस्य प्रसिद्धत्वात् दृष्टान्तसिद्धिः, तत्तन्मोहकल्पितस्य तत्तद्दृष्टस्य च भिन्नत्वात्। तदेव मया दृष्टं मयादृष्टमिति संवादस्य चैकरूपभ्रमोत्पादात् तन्निमित्तहर्षशो-कादिकार्याणामेकरूपत्वाच्चोपपत्तेः, एकदृष्टौत्पातिकसवितृसुष्याऽदावन्येषां विसंवादादेकमो-

चेति। किञ्चानेकजीववादिनापि त्वया त्वद्व्यतिरिक्तजीवतदज्ञानादिप्रतिभासस्तेषां पारमार्थिको नेष्यते, तथाच त्वदविद्यानिर्मितत्वं वक्तव्यम्, त्वद्दृश्यत्वात् तत्राप्यप्रकाशकत्वात्कल्पकत्वमेव त्वदविद्याया वक्तव्यम्, तथा चान्यमोहादित्वहानिः त्वन्मोहादित्वसिद्धिश्चेत्याह—किंचैकस्येत्यादिना। नन्वन्यमोहे-नापि कल्प्यत्वादन्यमोहजन्यत्वमप्यस्ति, तत्राह—न चान्येति। क्लृप्तत्वात्, त्वन्मोहेनेति शेषः। इतर-थानवस्थानात्। किंच त्वन्मोहकल्पितस्य मोहान्तरस्य स्वातन्त्र्येणान्यकल्पकत्वमपि नास्तीत्याह—न च त्वत्कल्पितस्येति। दूषणान्तरमाह—मोहान्तरेत्यादिना। विमतमोहतत्कार्याणि देवदत्तीयानि दृश्य-त्वात्सम्प्रतिपन्नवदित्यर्थः। अथान्यदृश्यत्वाद्वैपरीत्यमपि शक्यानुमानम्, न, हेतुदृष्टान्तयोरसिद्धेरित्याह—अन्यमोहेत्यादिना। स्वपक्षे दृष्टान्तसिद्धिमाह—स्वमोहेति। ननु मायाविप्रदर्शितप्रासादादिनिगरणा-देर्मोहविकल्पितस्यापि बहुदृश्यत्ववदत्राप्यन्यमोहादेरन्यदृश्यत्वं किं न स्यात्? तत्राह—न चेन्द्रजालेति। तत्रापि प्रतिपुरुषं भिन्नमेव दृश्यमित्यर्थः। तर्हि संवादः किंनिबन्धनः? तत्राह—तदेवेति। अथ केन बलेन प्रत्यभिज्ञा बाध्यत इति, अन्यत्र मोहकल्पितस्यासाधारण्यदर्शनादित्याह—एकदृष्टेति। एकमोह-

होते हैं? या नहीं? प्रथम पक्ष में अविद्या-रहित जीव को भी भेद-भान होने पर भूमा ब्रह्म की प्राप्ति नहीं होगी। द्वितीय पक्ष में शिष्यादि का भान न होने से गुरु की उपदेशादि क्रिया न बन सकेगी। नाना जीव-वाद में एक जीव का मोह, दूसरे जीवों के मोह तथा मोह-कार्यों का भासक माना जाता है? या कल्पक? प्रथम पक्ष तो युक्त नहीं, क्योंकि मोह, प्रकाशरूप न होने से किसी का भासक कैसे होगा? द्वितीय पक्ष भी संगत नहीं, क्योंकि एक जीव के मोह से कल्पित पदार्थ में अन्य मोहत्व और अन्य मोह कार्यत्व वैसे ही नहीं बन सकता जैसे एक जीव के मोह एवं मोह-कार्य कल्पित सर्पादि में न अन्य-मोहत्व होता है और न अन्य मोह-कार्यत्व। एक जीव के मोह में कल्पित पदार्थ में अन्य मोह-कल्पितत्व भी नहीं बन सकता, क्योंकि वह एक जीव के मोह से प्रथम ही क्लृप्त है— "एक जीव के मोह से कल्पित, अन्य का मोह, अन्यमोह का कल्पक नहीं होता, कल्पित होने से, जैसे—रजतादि।" एक जीव का दृश्य हो जाने से अन्य के मोह तथा मोह के कार्य को उस द्रष्टा-व्यक्ति का ही मोह तथा मोह-कार्य कहना पड़ेगा, क्योंकि अन्य का मोह तथा मोह-कार्य, दूसरे जीव का कभी दृश्य होता नहीं देखा जाता, अपितु उसी जीव का मोह तथा मोह-कार्य उसका दृश्य होता है—यह उभय-सम्मत है। यदि कहें कि ऐन्द्रजालिक-प्रदर्शित पदार्थ, अन्य के मोह से कल्पित होने पर भी अन्य के दृश्य होते हैं। तो यह नहीं कह सकते, क्योंकि वहाँ प्रत्येक व्यक्ति के मोह से कल्पित दृश्य, भिन्न-भिन्न होता है। सभी दर्शकों का पारस्परिक (वही वस्तु मैंने देखी—वही मैंने देखी—इस प्रकार का) संवाद, समानरूप भ्रम के कारण बन जाता है और तन्निमित्तक हर्ष-शोकादि की एकरूपता भी निभ जाती है। एक व्यक्ति से देखे गये अशुभ-सूचक सूर्य छिद्र

हकल्पितत्वस्य सिद्धे ,एकस्यैव प्रपञ्चस्य बहुमोहकल्पितत्वे चैकस्य धिया तन्नाशे सर्वमुक्तिरनाशेऽप्येकस्याप्यमुक्ति , न चैकमेव पुरुषभेदेन नष्टमनष्टं चेति युक्तम् , विरोधात्। अविरोधे वा तमेव प्रति युगपदेकमेव नष्टमनष्टं च स्यात्। द्विचन्द्रादेश्च युगपन्नष्टानष्टत्वस्यासंप्रतिपन्नत्वात्। भ्रान्तपुरुषभेदेन तस्यापि भेदात्। तस्मान्नाविद्याभेदो नापि तद्भेदाज्जीवभेदसिद्धिरिति स्थितम्।

अत्रोच्यते—यस्तावदेकैवाविद्येति पक्षे दोष., सोऽनभ्युपगमादेव परास्त , ब्रह्मण एकस्य तत्तदनाद्यनन्ताविद्यावच्छेदेनानन्तजीवनिर्भासास्पदत्वाभ्युपगमात् । सति च कल्पके कल्पनागौरवस्यादोषत्वात् , एकस्यापि च जीवस्यानेकाविद्यासद्भावाभ्युपगमात्। इष्टसिद्धिकारैरपि यावन्ति ज्ञानानि तावन्त्यज्ञानानीत्यनेकाविद्यास्वीकारात् नन्वपारमार्थिकत्वे भेदभानस्यैकाविद्ययैव तत्सिद्धेरविद्यान्तरकल्पना व्यर्था। न व्यर्था, विद्वदविद्वद्गुरुशिष्यबन्धमोक्षादिव्यवस्थासिद्धेरेव प्रयोजनत्वात्। एकाविद्यापक्षेऽपि स्वप्न इव व्यवस्था सिद्ध्यत्येवेति चेत् , तत्किं स्वप्नकल्पिकैवाविद्या जाग्रद्व्यवहारकल्पिका ? उतान्या ? आद्ये प्रबोधे स्वप्नकल्प-

---

कल्पितस्य दृष्टान्तस्य सिद्धिर्वाऽनेन समर्थ्यते। दूषणान्तरमाह—**एकस्यैवेति**। स्यादेतत्तस्य मोहो नष्टस्त प्रति प्रपञ्चोऽपि नष्ट एव इतर प्रति चानष्ट इत्यस्तु, नच विरोधलेशगन्धोऽपि, कल्पितस्याचिन्त्यस्वभावत्वादिति, तत्राह—**न चैकमेवेति**। ननु बहुदृष्टद्विचन्द्रादावप्येवभाव इति, नेत्याह—**द्विचन्द्रेति**। अनेकजीवदूषणमुपसहरति—**तस्मादिति**।

समाधातुमुपक्रमते—**अत्रेति**। ननु तर्हि कल्पनागौरवमुक्तम् , तत्राह—**सति चेति**। तर्ह्येकस्याप्यनेकाविद्या' कल्पयेरन् तत्कार्यभ्रमाणा विभिन्नत्वादिति, ओमित्याह—**एकस्यापीति**। एकजीववादिभिरप्ययमर्थोऽङ्गीक्रियत इत्याह—**इष्टसिद्धीति**। पूर्वपक्ष्याशयमनूद्य दूषयति—**नन्वित्यादिना**। नन्वियमपि व्यवस्थैकाविद्यया शक्यसपादेत्याशङ्क्य स्वप्नजाग्रत्प्रतिबन्द्या परिहरति—**तत्किं स्वप्नेत्यादिना**। ननु

---

( सूर्य के काले धब्बे ) आदि मे दूसरे व्यक्तियो को सवाद नही होता, अत एक के ही मोह की कल्पना सिद्ध नही होती। एक ही प्रपञ्च को बहुतो के मोह की कल्पना मानने पर एक के ज्ञान से उसका नाश हो जाने पर सबकी मुक्ति और न नाश होने पर किसी की मुक्ति नही होगी। एक ही प्रपञ्च पुरुष के भेद से किसी के प्रति नष्ट और किसी के प्रति अनष्ट हो—सम्भव नही , क्योकि एक ही वस्तु के युगपत् नाशानाश नितान्त विरुद्ध है। विरोध न मानने पर उसी पुरुष के प्रति एक ही वस्तु एक ही समय मे नष्ट और अनष्ट होनी चाहिए , किन्तु बहुदृष्ट द्विचन्द्रादि में युगपत् नाशानाश देखा नहीं जाता। भ्रान्त पुरुषो के भेद से द्विचन्द्रादि भ्रमो का भी भेद माना जाता है। अत न तो अविद्या का भेद सिद्ध होता है और न उसके भेद से जीव-भेद—यह वस्तु स्थिति है।

समाधान—एक अविद्या-पक्ष मे जो दोष दिया गया, वह एक अविद्या के न मानने से निरस्त हो जाता है, क्योकि एक ही ब्रह्म विभिन्न अनादि-अनन्त अविद्या-परिच्छेद से अनन्त जीवो के रूप मे निर्भासित होता माना जाता है। कल्पक के रहने पर कल्पना-गौरव दोष नही। एक जीव में भी अनेक अविद्याओ का सद्भाव माना ही जाता है। इष्टसिद्धिकारने भी जितने ज्ञान, उतने ही अज्ञान मानकर अनेक विद्या-पक्ष का ही समर्थन किया है। यह जो कहा था कि अपारमार्थिक भेद भान के एक ही अविद्या से सिद्ध हो जाने पर अविद्यान्तर की कल्पना व्यर्थ है। वहाँ हमारा कहना है कि वह व्यर्थ नही, क्योकि विद्वान्-अविद्वान् , गुरु-शिष्य, बन्ध-मोक्षादि की व्यवस्था सिद्ध करने के लिए अनेक अविद्या मानना आवश्यक है। यह जो कहा जाता है कि एक अविद्या-पक्ष मे भी स्वप्न के समान सब व्यवस्था सिद्ध हो जाती है। वहाँ जिज्ञासा होती है कि क्या (१) स्वप्न-कल्पक अविद्या ही जाग्रत व्यवहार की कल्पक है ? या (२) अन्य ? (१) प्रथम पक्ष मे

काविद्यानिवृत्तौ जाग्रद्व्यवहारोऽपि सर्वो निवर्तेतेति विनैव ब्रह्मविद्यां मुक्तिः स्यात्। अनिवृत्तौ वाऽविद्यायास्तत्त्वज्ञानान्निवृत्तौ दृष्टान्ताभावाद् ब्रह्मज्ञानादज्ञाननिवृत्तिर्न सिध्येत्। ननु तत्त्वावभासविरोधिनोरग्रहणमिथ्याज्ञानयो शुक्त्यादितत्त्वज्ञानान्निवृत्तेर्दृष्टत्वाद्ब्रह्मतत्त्वावभासविरोधिनोऽज्ञानस्य ब्रह्मतत्त्वज्ञानान्निवृत्तिवरगन्तु शक्यत इति चेत्, किमिदमनुमानम्? आहोस्विदर्थापत्तिः? अथवा दृष्टान्तदर्शनात्संभावनामात्रम? आद्ये तेनैवाज्ञानेनानैकान्तता, प्रबोधेऽपि तस्य निवृत्त्यनभ्युपगमात्। न द्वितीय, ज्ञाननिवर्त्यत्वमन्तरेणैव तत्त्वावभासविरोधित्वस्य स्वप्नाविद्यावदुपपत्ते। न तृतीय, स्वप्नाविद्यावद्वैपरीत्यस्यापि संभवात्। अथ श्रुतिप्रामाण्यात् ज्ञानादज्ञाननिवृत्त्यध्यवसाय, तर्हि 'भूयश्चान्ते विश्वमाया' इत्यादिश्रुतिप्रामाण्यादनेकान्यज्ञानानि तन्निवृत्तयश्च क्रमेणेति स्वीक्रियताम्। द्वितीये तु तवाप्यनेकाविद्याकल्पनादोषस्तदवस्थः। कार्यभेददर्शनस्य तत्कल्पकस्य भावाददोष इति चेत्, तत्किं भेददर्शन

निवर्तता नाम स्वाप्नव्यवहारनिवर्तकप्रबोधेन जाग्रद्व्यवहारोऽपि किं नश्छिन्नमिति, तत्राह—**विनैवेति**। यद्यपि जागरावस्थाया तद्विरोधिबाधकोदयेऽपि तस्य न निवृत्तिः, तथापि तत्त्वज्ञानादज्ञाननिवृत्तावस्ति दृष्टान्तान्तरमिति शङ्कते—**ननु तत्त्वेति**। **तेनैवेति**। स्वप्नाज्ञानेनेत्यर्थः। तस्यैव विवरण **प्रबोधेऽपीति**। विमत तत्त्वज्ञाननिवर्त्यं तत्त्वावभासविरोधित्वात् सप्रतिपन्नवदिति ह्यनुमानम्, तच्चेदमनैकान्तिक स्वप्नाज्ञाने इत्यर्थः। अर्थापत्तिपक्ष दूषयति—**न द्वितीय इति**। तत्त्वावभासविरोधित्व हि तत्त्वज्ञाननिवर्त्यत्वकल्पकम्। एतच्चानिवर्त्यत्वेऽप्युपपन्नं जागरप्रपञ्चवदित्यर्थः। **स्वप्नाविद्यावदिति** स्वप्नजागरकल्पकाविद्यावदिति विवक्षितम्। सभावनापक्ष दूषयति—**न तृतीय इति**। वैपरीत्येऽपि दृष्टान्तोऽस्तीत्यर्थः। न वय युक्तिबलात्कल्पयामः येनैते दोषा प्रादुष्युः किंतु, 'तरति शोकमात्मवि'दित्यादिश्रुतिबलात्तत्त्वज्ञानमज्ञाननिवर्तकमित्यवगच्छाम इति शङ्कते—**अथेति**। परिहरति—**तर्हीति**। अत्र हि विश्वशब्दान्माया बाहुल्य पुनःशब्दपर्यायभूयःशब्दात् क्रमान्निवृत्तिश्च प्रतीयत इत्यर्थः। तदेव स्वप्नकल्पकाविद्याव्यतिरिक्ता-

तो बिना ही ब्रह्मविद्या के मुक्ति सिद्ध हो जायगी क्योंकि जागने पर स्वप्न-कल्पक अविद्या का नाश हो जाने से समस्त जाग्रत व्यवहार भी निवृत्त हो जायगा। यदि जाग्रत के ज्ञान से स्वप्न-कल्पक अविद्या का नाश न माना जाय, तब तो अविद्या के तत्त्वज्ञान से नष्ट होने में कोई दृष्टान्त ही न रहेगा, किस दृष्टान्त के आधार पर ब्रह्मज्ञान से अज्ञान की निवृत्ति सिद्ध होगी? यदि कहे कि तत्त्वावभास के विरोधी अग्रहण और मिथ्या ज्ञान की शुक्त्यादि-तत्त्वज्ञान से निवृत्ति देखी जाती है, अत ब्रह्मतत्त्वावभास के विरोधी अज्ञान की ब्रह्मतत्त्व-ज्ञान से निवृत्ति सिद्ध हो जायगी। तो यहाँ जिज्ञासा होती है कि यह अनुमान है? या अर्थापत्ति? या दृष्टान्त-दर्शन से सभावनामात्र? प्रथम पक्ष ("विमतं तत्त्वज्ञाननिवर्त्यम्, तत्त्वावभासविरोधित्वात्, शुक्त्यज्ञानवत्" यह अनुमान) मानने पर स्वप्न-कल्पक अविद्या में ही व्यभिचार है, क्योंकि प्रबोधकाल में भी उसकी निवृत्ति नहीं मानी जाती। द्वितीय पक्ष भी युक्त नहीं, क्योंकि ज्ञान-निवर्त्यत्व के बिना ही तत्त्वावभासविरोधित्व स्वप्नाज्ञान में उपपन्न देखा जाता है। तृतीय पक्ष भी संगत नहीं, क्योंकि स्वप्नाज्ञान के ही समान विपरीत (तत्त्वज्ञान से अनिवर्त्यत्व) की भी सभावना की जा सकती है। श्रुति प्रमाण के बल पर ज्ञान से अज्ञान की निवृत्ति मानने पर "भूयश्चान्ते विश्वमाया"—इस श्रुति प्रमाण से अनेक अज्ञान एवं उनकी क्रमशः निवृत्ति भी माननी पड़ेगी। (२) द्वितीय (स्वप्न-कल्पक अविद्या से भिन्न अविद्या जाग्रत की कल्पक है) पक्ष मानने पर आपके मत में भी अनेक अविद्या-कल्पना का दोष आ जाता है। यदि कहे कि कार्य-भेदरूप कल्पक के रहने पर उक्त दोष नहीं। तो वहाँ प्रश्न उठता है कि वह भेद-दर्शन क्या पारमार्थिक है? या नहीं? पारमार्थिक मानने पर विरोध होता है, अत

पारमार्थिकम् ? उत न ? आद्ये विरोधान्न कल्पनासिद्धिः। द्वितीये त्वेकयैव तत्सिद्धेर्व्यर्थाऽनेकाविद्याकल्पनेति त्वदुक्ता दोषास्त्वामेवोपहन्यु'। कल्पितत्वाविशेषेऽपि किंचिद्व्यावहारिकं यद्देहाद्यात्मभावादिनिवर्तकात्मसाक्षात्कारपर्यन्तमनुवर्तते, किंचित्प्रातिभासिकं यत्प्रमातृत्वादिव्यवहारे सत्येव निवर्तत इत्यवान्तरभेदसिद्धये अविद्याभेदः कल्पनीय इति चेत्, तर्हि—

अविद्या कल्प्यतेऽनेका जाग्रत्स्वप्नविभेदिनी।
यथा तथैव कल्प्यन्तामनन्ता' सति कल्पके ॥ ६ ॥

ममापि मुक्तामुक्तादिरूपेण व्यावहारिकानन्तजीवानां शुकवामदेवपराशरप्रभृतीनां प्रतिभासनात्तदुपपत्तये तत्तद्धेतुभूतानेकाविद्याभ्युपगमेऽपि न दोषः। न चाद्वैतवादिनो मानतस्तेषामभानात्, भ्रान्तिसिद्धानां चैकयैवाविद्यया सिद्धेर्नानन्ताविद्याकल्पना युक्तेति वाच्यम्, विकल्पासहत्वात्। तत्किं तत्त्वावेदकमानस्यागम्यत्वम् ? उत व्यावहारिकस्य ? न प्रथम , जाग्रत्स्वप्नव्यवहारभेदस्यापि तथात्वेन तवाप्यविद्याभेदस्यासिद्धेः। न चरम., जीवभेदानामनुमानादिव्यावहारिकमानसिद्धत्वस्येष्टत्वात्। एतेन स्वप्नदिदर्शनेनैकाविद्ययैवालमिति प्रत्यवस्थान परास्तम्। यश्चोत्पन्नविद्यस्याविद्यान्तरतत्कार्याणां भानाभानयोर्दोष उद्भावित', स परस्यापि तुल्यः, त्वन्मते विदुषा द्वैतभाने भूमलक्षणब्रह्मप्राप्त्याभावप्रसङ्गात्। अभाने च

---

विद्याकल्प्यत्वं जागरस्येति द्वितीय पक्षः परिशेषितः। सम्प्रति तस्मिन् स्वसाम्यमाह—**द्वितीये त्विति**। उत्तरौ चोद्यपरिहारौ विशदौ। ननु स्वप्नजागरयोः कल्पितत्वाविशेषेऽप्यवान्तरवैलक्षण्याद्विलक्षणाविद्यापरिकल्पितत्वमिति शङ्कयित्वापि साम्य श्लोकेनाह—**अविद्येति**। **तर्हीति** च श्लोकस्योपकारः। सति कल्पक इत्येतद्विवरणपूर्वकमुत्तरार्ध विवृणोति—**ममापीति**। कृतसमाधानमप्याक्षेपमनूद्य भङ्ग्यन्तरेण समादधाति—**न चाद्वैतेत्यादिना**। **जाग्रत्स्वप्नेति**। यत्तत्त्वावेदकमानागम्य तदेकाविद्याकल्पितमिति नापि ते व्याप्तिः, जाग्रत्स्वप्नयोर्व्यभिचारादित्यर्थः। व्यावहारिकप्रमाणागम्यत्वमसिद्धमित्याह—**न चरम इति**।

---

कल्पना सिद्ध नहीं होती। भेद-दर्शन को पारमार्थिक न मानने पर एक ही अविद्या से वह सिद्ध हो जाता है, अनेक अविद्या-कल्पना व्यर्थ है—यह आपके ही लगाये दोष आपपर लागू हो जाते हैं। यदि कहें कि सभी के कल्पित होने पर भी कुछ पदार्थ व्यावहारिक होते हैं, जो कि देहात्मभाव-निवर्तक आत्म-साक्षात्कार होने तक अनुवृत्त ( बने ) रहते हैं और कुछ पदार्थ प्रातिभासिक होते हैं, जो कि प्रमातृत्वादि-व्यवहार के रहने पर ही निवृत्त हो जाते हैं—इस प्रकार अवान्तर भेद की सिद्धि के लिए अविद्या के भेद मानने चाहिएँ। तब तो जैसे जाग्रत तथा स्वप्न का भेद करनेवाली अनेक अविद्याएँ मानी जाती हैं, वैसे ही कल्पक के रहने पर अनन्त अविद्याओं की कल्पना कर लेनी चाहिए। अर्थात् हमारे मत में भी मुक्तामुक्तादि रूप से अनन्त व्यावहारिक शुक वामदेवादि जीवों की प्रतीति होती है, उसकी उपपत्ति के लिए उसकी हेतुभूत अनेक अविद्याओं को मानने पर भी कोई दोष नहीं। यह जो कहा था कि अद्वैत-वादियों के लिए प्रमाण से तो जीव-भेदों का भान होता नहीं और भ्रान्ति-सिद्ध जीव-भेद की तो एक ही अविद्या से सिद्धि हो जाती है, अत. अनन्त अविद्या-कल्पना युक्त नहीं। वह कहना युक्त नहीं , क्योंकि जीव-भेद, तत्त्वावेदक प्रमाण के अविषय हैं ? या व्यावहारिक प्रमाण के ? प्रथम पक्ष में तो जाग्रत्-स्वप्न व्यवहार-भेद भी वैसा ही है, अत आपके मत में भी अविद्या-भेद सिद्ध नहीं होता। अन्तिम पक्ष भी युक्त नहीं; क्योंकि जीव-भेद अनुमानादि व्यावहारिक प्रमाण के विषय ही माने जाते हैं। इसी कारण से 'स्वप्न-दृष्टान्त के बल पर एक ही अविद्या पर्याप्त है'—यह आक्षेप भी खण्डित हो जाता है। यह जो ज्ञानवान् को दूसरे के अज्ञान और अज्ञान-कार्य के भानाभान-पक्षों में दोषोद्भावन किया, वह वादी के मत में भी

यावदधिकारमवस्थितिराधिकारिकाणाम्, भोगेन त्वितरे क्षपयित्वाथ सपद्यत' इति-सूत्रविरोधात्, अविद्यालेशस्वीकारवैयर्थ्यप्रसङ्गाच्च। न चाविद्यान्तराणां तत्कार्याणां च तदविद्यात्व तत्कल्पितत्व चान्तरेणैव तस्य भानानुपपत्ति., त्वदभ्युपगताविद्यान्तरतत्कार्ययोरपि पर्यनुयोगसाम्यात्स्वप्नाविद्यातत्कार्याणां जाग्रदविद्यात्व तत्कार्यत्व चान्तरेण भानाभ्युपगमात्।

यच्चाविद्यान्तरतत्कार्याणामन्यद्दृश्यत्वे सप्रतिपन्नवत्तदविद्यात्वं तत्कार्यत्वं च स्यादिति, तदपि जाग्रत्स्वप्नकल्पकाविद्याभेदेनैव व्याख्यातम्, एकपुरुषसबन्धित्वेऽपि परस्पर भेदात्, अस्माभिरप्यविद्यानामेव ब्रह्मसंबधित्वाभ्युपगमाच्च। इन्द्रजालादिनिदर्शन च पूर्वोक्तन्यायेन परास्तम्, परकल्पितस्य पर प्रत्यपरोक्षत्वाभावेऽपि परोक्षतावभाससंभवस्योक्तत्वात्। एतेन सवितृसुषिरनिदर्शनमपि परास्तम्। तत्रापि तद्वचनात्परोक्षत्वोपपत्ते। तथापि गुरुशिष्ययो:

---

**एतेनेति**। व्यावहारिकप्रमाणगम्यत्वेनेत्यर्थः। दूषणान्तरमप्यनूद्य साम्येन परिहरति—**यावदधिकारमिति**। आधिकारिकाणामधिकारनिर्वर्तकाना सहस्राक्षसहस्ररश्मिव्यासवसिष्ठप्रभृतीना यावदधिकारमेवावस्थिति। अधिकारे तु परिसमाप्ते इहैव कैवल्य प्राप्नुवन्ति, तेषा जीवन्मुक्तिसाधनद्वारा ब्रह्मविद्याया पाक्षिकफलत्वनिरासफलमधिकरण भोगेनेति, **इतरे** प्रारब्धफले पुण्यपापे भोगेन क्षपयित्वा **संपद्यते** विदेहकैवल्य प्राप्नोतीत्यर्थः। यदि च प्रतिबुद्धतत्त्वस्य द्वैतभानमेव न स्यात् तदाऽविद्यालेशस्वीकारोऽपि वृथैकजीववादिनामित्याह—**अविद्येति**। पूर्वपक्षाशय दूषयति—**न चाविद्यान्तराणामिति**। एव वदतोऽव्यवस्थैव स्यात् त्वन्मोहादीनामप्यन्यमोहादित्वस्यैव शक्यसाधनत्वादित्यर्थः। पर्यनुयोगसाम्यमेव दर्शयति—**स्वप्नेति**। शक्यते हि वक्तुम् जागरेऽपि स्वप्नत्वं दृश्यत्वात्स्वप्नवदिति। अथापि यथा तयोरसकरस्तद्वदत्रापीत्यर्थ.।

यच्चान्यदृश्यत्वे बाधकमुक्तम् तदप्यनूद्य दूषयति—**यच्चेति**। अतिदेशमेव विशदयति—**एकपुरुषेति**। ननु तथापि तयोरेकदृश्यत्वादेकपुरुषसबन्धित्वमस्त्येव, तद्वद्विश्वाविद्यातत्कार्याणामपि स्यादिति तत्राह—**अस्माभिरपीति**। एकसबन्धित्वमस्माकमपि सिद्धमित्यर्थः। यत्त्विन्द्रजालादावप्यसाधारण्यमुक्त तत्परिहरति—**इन्द्रेति**। पूर्वोक्तन्यायमेवाह—**परेति**। यश्चेन्द्रजालादेरसाधारण्ये दृष्टान्त उक्तस्तमपि

---

समान है, क्योकि आपके मत में विद्वानो को द्वैत का भान मानने पर भूमरूप ब्रह्म की प्राप्ति नही होगी और द्वैत का भान न मानने पर "यावदधिकारमवस्थितिराधिकारिकाणाम्" (इन्द्रादि आधिकारिक पुरुषो की लोक मे स्थिति, अधिकारावधि-पर्यन्त होती है—ब्र० सू० ३।३।३२), "भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते" (प्रारब्धकर्मरूप पुण्य-पापो को भोग से समाप्त करके विदेह कैवल्य को प्राप्त होता है—ब्र० सू० ४।१।१९)—इन सूत्रो से विरोध होता है तथा अविद्या-लेश का मानना भी आपके मत मे व्यर्थ हो जाता है। 'किसी पुरुष की अविद्या तथा अविद्या के कार्य में तत्पुरुषीयत्व तथा तत्पुरुषीयाविद्याकल्पितत्व के बिना उसके भान की अनुपपत्ति होगी'—ऐसा नही कह सकते, क्योकि आपकी स्वीकृत अविद्या तथा उसके कार्य मे वही पर्यनुयोग हो सकता है, स्वप्नाविद्या और उसके कार्य मे जाग्रदविद्यात्व तत्कार्यत्व के बिना ही उसका भान माना जाता है।

यह जो कहा था कि अन्य पुरुष की अविद्या तथा उसके कार्य मे अन्यपुरुष की दृश्यता मानने पर उसी (दर्शक) पुरुष की ही वह अविद्या माननी होगी। वह कहना भी संगत नही, क्योकि जाग्रत-स्वप्न-कल्पक अविद्या-भेद के समान ही उसका भी समाधान है, अर्थात् एक पुरुष का सम्बन्ध होने पर भी अविद्याओ का परस्पर अवान्तर भेद होता है। हम भी अनन्त अविद्याओं मे एक ब्रह्म का सम्बन्ध मानते है। इन्द्रजालादि के दृष्टान्त भी पूर्वोक्त रीति से ही परास्त हो जाते हे, क्योकि अन्य-कल्पित वस्तु, अन्यपुरुष की अपरोक्ष न होने पर भी उसमे परोक्षतावभास सम्भव है—यह कहा जा चुका है। इससे सूर्य के छिद्र-दर्शन का भी समाधान हो जाता है, क्योकि वहाँ भी उसके वचन

परस्परमपरोक्षत्वाभावे कथमुपदेश. क्रियत इति चेत्, मैवम्, भूतभौतिकप्रपञ्चस्य कृत्स्नस्येश्वरमायाविनिर्मितत्वेऽपि सर्वापरोक्षत्वोपपत्ते.। 'यतो वा इमानि भूतानी'ति, 'अह कृत्स्नस्य जगत' प्रभव, जन्माद्यस्य यत' इति श्रुतिस्मृतिसूत्रभाष्यादिभिरस्यार्थस्य प्रतिपादितत्वात्। अन्यथा शुक्तिरजतादिवज्जीवाविद्यामात्रनिर्मितत्वे जगतो जीवादिकर्तृकत्वनिरासप्रयासवैयर्थ्यात्। जीवाविद्याकल्पितत्वे चेश्वरस्य जीवानामीश्वरो नियन्तेत्यादिश्रुतिस्मृतीनामप्रामाण्यप्रसङ्गात्। एकस्य प्रपञ्चस्य बहुमोहकल्पितत्वानङ्गीकारादेव तत्रोक्तदोषाणा दूरपरास्तत्वात्। स्वीयस्वीयविद्यया च स्वस्वाविद्यानिर्मितकर्तृत्वभोक्तृत्वादेर्बन्धस्य सकारणस्य निरासेन नित्यशुद्धबुद्धमुक्तस्वभावाख्यब्रह्मप्राप्तिलक्षणमुक्तेरप्युपपत्ते । ननु स्वस्वाविद्येति कथं जीवनिष्ठत्वेनाविद्या व्यपदिश्यते ? ब्रह्माश्रयत्वादविद्यानामिति चेत्, सत्यम्, ब्रह्मसंबन्धित्वेऽपि तासामवच्छिन्नजीवरूपपक्षपातितया प्रतिभानात्। दृष्टं हि लोके—मुखमात्रसबन्धिनोऽपि दर्पणस्य प्रतिबिम्बपक्षपातित्वम्, दृश्यते च घटस्याकाशमात्रसबन्धिनोऽप्यवच्छिन्नाकाशपक्षपाति-

---

दूषयति—**एतेनेति**। कल्पितस्यैव प्रपञ्चस्यानेकसाधारणत्वगमकश्रुत्याद्याह—**यत इत्यादिना**। नन्वेतेभ्यः कथ साधारण्य प्रतीयत इति, तत्राह—**जीवाविद्येति**। यदिहि कल्पितस्य साधारण्य न स्यात्तदाऽतत्साधारणाभिर्जैवीभिरविद्याभिः परिकल्पित स्यात्, तथाच सकलनियन्तृसाधारणपरमेश्वरकर्तृकत्व न भवेत्, तथाच तत्प्रतिपादकश्रुत्यादिविरोधः। यश्च सूत्रकारभाष्यकाराभ्या जीवकर्तृकत्वनिरासप्रयासः कृत सोऽपि वृथेत्यर्थः। दूषणान्तर चाह—**जीवाविद्येति**। यस्तु बहुमोहकल्पितत्वे सत्येकमुक्तौ सर्वमुक्तिदोष उक्तस्तमनङ्गीकारेण परिहरति—**एकस्येति**। ब्रह्माश्रितसकलसाधारणैकमायाविजृम्भितः प्रपञ्च इत्यभिमानः। ननु प्रपञ्चस्य जीवाविद्याऽविजृम्भितत्वे जीवगततत्त्वज्ञानादनिवृत्तेरनिर्मोक्षापात इति, तत्राह—**स्वीयस्वीयेति**। असाधारणप्रपञ्चनिवृत्त्यैव मोक्षः, नतु साधारणनिवृत्त्या। विद्यमानोऽपि मुक्त प्रति न भाति प्रविलीननिखिलकरणत्वादन्ध प्रतीव रूपादिरित्यर्थ । **स्वस्वाविद्येति**। निर्देशमाक्षिप्य समादधाति—**ननु स्वस्वेत्यादिना**। अहमज्ञ इति हि प्रतीतिः, नतु ब्रह्माज्ञमिति भाव.। ननु चिन्मात्रसबन्ध्यविद्याया' कथ जीवपक्षपातित्व न ब्रह्मपक्षपातित्वमिति शक्य वक्तुम्, सबन्धाविशेषादिति, तत्राह—**दृष्टं हीति**। द्वेधा हि सप्रदाय.—अविद्याप्रतिबिम्बितचैतन्य जीव इति वाऽविद्यावच्छिन्नमिति वा, तत्राद्यपक्ष उदा-

---

से परोक्ष ज्ञान सम्भव है। 'फिर भी गुरु-शिष्य की कल्पना का परस्पर अपरोक्ष न होने पर उपदेश कैसे किया जायगा ?'—यह सन्देह नही करना चाहिए, क्योकि समस्त भूत-भौतिक प्रपञ्च, ईश्वर की माया से निर्मित होने पर भी सभी की अपरोक्षता उसमे रह जाती है। यह बात "यतो वा इमानि भूतानि" ( तै० उ० ३।१ ), "अह कृत्स्नस्य जगत प्रभव' ( गी० ७।६ ), "जन्माद्यस्य यत" ( ब्र० सू० १।१।२ )—आदि श्रुति, स्मृति, सूत्र तथा भाष्य में स्पष्ट कही गई है। अन्यथा शुक्ति-रजत के समान जीव की अविद्या से निर्मिति मानने पर जगत् मे जीवादि-कर्तृत्व का निरास व्यर्थ हो जायगा। एव ईश्वर को जीवाविद्या-कल्पित मानने पर जीवो का ईश्वर नियन्ता है—इस तथ्य की प्रतिपादक श्रुतियों और स्मृतियो में अप्रामाण्य आ जायगा। एक प्रपञ्च, बहुत पुरुषो के मोह से कल्पित नही माना जाता, अत' उस पक्ष मे दिये गये दोष स्वयं दूर हो जाते हैं। अपनी-अपनी विद्या से अपनी-अपनी अविद्या-निर्मित कर्तृत्वादि बन्ध का समूल उच्छेद हो जाने पर नित्य शुद्ध, मुक्त स्वभाव ब्रह्मकी प्राप्तिरूप मुक्ति भी बन जाती है। 'स्वस्वाविद्या'—ऐसा कहकर अविद्या मे जीवनिष्ठता का व्यवहार कैसे होगा ? क्योकि अविद्याएँ तो ब्रह्म के अश्रित है'—यह शङ्का ठीक नही, क्योकि ब्रह्माश्रित रहने पर भी अविद्याएँ स्वावच्छिन्न जीवरूप की पक्षपाती होकर प्रतीत होती है ! लोक में यह देखा जाता है—केवल मुख का सम्बन्धी होने पर भी दर्पण, प्रतिबिम्ब का पक्षपाती

त्वम्, तस्मान्न किंचिदवद्यमिति ।

अपिच—सूत्रभाष्यादिवाक्यानां श्रुतिस्मृतिगिरामपि ।
मुख्यार्थत्वोपपत्त्यर्थं व्यवस्थैवाभ्युपेयताम् ॥ ७ ॥

एवं च सति 'नेतरोऽनुपपत्ते', "अनुपपत्तेस्तु न शारीर", "कर्मकर्तृव्यपदेशाच्च", "परात्तु तच्छ्रुते", "कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य", "यावदधिकारमवस्थिति", "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ", "प्रकाशादिवन्नैवं पर", "असन्ततेश्चाव्यतिकर." इत्येवमादीनि सूत्राणि तद्व्याख्यानपराणि भाष्याणि च सामञ्जस्येनोपपन्नार्थानि भवन्ति । "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथा ऋषीणां तथा मनुष्याणां तद्धैतत्प-

हरणमुक्तम्, अवच्छेद उदाहरणमाह—दृश्यते चेति ।

इदानीं तु जीवातिरिक्तेश्वरमीश्वराधीनता च जीवानां तदेकता च सूत्रभाष्यश्रुतिभिः क्रमेण साधयति—अपि चेति । श्लोकं विवृणोति—एवं च सतीति । इतर. शारीरः । 'कर्मकर्तृव्यपदेशा'दिति 'एतमित प्रेत्याभिसंभवितास्मी'तिप्राप्तृप्राप्तव्यतया जीवपरमेश्वरयोः कर्तृकर्मभावनिर्देशान्न कर्मीभूतो मनोमयत्वादिगुणकः शाण्डिल्यविद्याप्रतिपाद्यः शारीर इत्यर्थः । बद्धाबद्धव्यवस्थायामपि श्रौतलिङ्गमाह—तद्यो य इति । देवानां मध्ये यो यो वीप्सया चाधिकारमपत्तौ सर्वेषामपि मुक्तिः, ननु तार्किकाणामिव बद्धैक-

होता है एवं आकाशमात्र का सम्बन्धी होने पर भी घट, स्वावच्छिन्न आकाश का पक्षपाती होता है । अत. इस नाना अविद्या पक्ष में कोई दोष नही ।

दूसरी बात यह भी है कि सूत्र, भाष्य, श्रुति तथा स्मृति वाक्यो मे मुख्यार्थत्व की उपपत्ति के लिए यही व्यवस्था माननी होगी । इस प्रकार—"नेतरानुपपत्ते' (ब्रह्मेतर जीव, आनन्दमय नही हो सकता, क्योकि ऐसा मानने में प्रकरण की अनुपपत्ति होती है—ब्र० सू० १।१।१६), "अनुपपत्तेस्तु शारीरः" (जीव मे श्रुति-कथित गुणो की उपपत्ति न होने से शारीर आत्मा उपास्य नही—ब्र० सू० १।२।३), "कर्मकर्तृव्यपदेशाच्च" (प्रकृत मे उपास्य को प्राप्ति क्रिया का कर्म और जीव को कर्त्ता बताया गया है, इसलिए भी जीवात्मा, उपास्य नही हो सकता—ब्र०सू० १।२।४) "परात्तु तच्छ्रुते" (जीवात्मा में कर्तृत्वशक्ति, परमेश्वर की देन है—ऐसा ही श्रुति से प्रमाणित होता है—ब्र० सू० २।३।४१), "कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैर्थ्यादिभ्य." (पूर्वकृत् कर्मो के अनुसार जीव को ईश्वर शुभाशुभ कर्मो मे प्रेरित करता है—इसलिए तथा विधि-निषेध की सार्थकता के लिए भी ईश्वर को सर्वथा निर्दोष मानना पडता है—ब्र० सू० २।३।४२), "यावदधिकारमवस्थिति." (इन्द्रादि अधिकारारूढ पुरुषो की ससार मे अविस्थिति अधिकार की अवधि तक रहती है—ब्र० सू० ३।३।३२), "पराभिध्यानात्तु तिरोहित ततो ह्यस्य बन्धविपर्ययौ" (परमेश्वर के अभिध्यान से जीव के छिपे गुण प्रकट होते है, क्योकि परमेश्वर के अधीन ही जीव के बन्ध मोक्ष है—ब्र० सू० ३।२।५), "प्रकाशादिवन्नैव पर" (सूर्यादि के समान ही परमेश्वर भी जीवात्मा के दोषो से सम्बद्ध नही होता—ब्र० सू० २।३।४३), "असन्ततेश्चाव्यतिकर." (शरीररूप परिच्छेदो के कारण अन्य शरीरो मे एक जीव की व्यापकता नही होती, अत जीव के कर्मो का व्यतिकर = साङ्कर्य नही होता—ब्र० सू० २।३।४९)—आदि सूत्रो तथा उनके भाष्यो का समुचित सामञ्जस्य हो जाता है । "तद् यो यो देवानां प्रत्यबुध्यत, स एव तदभवत् तथा ऋषीणां तथा मनुष्याणाम् । तद्धैतत्पश्यन् ऋषिर्वामदेव. प्रतिपेदे अहं मनुरभवं सूर्यश्च" (देवो मे जो-जो ब्रह्म को जानता गया, वह-वह तद्रूप होता गया, वैसे ही ऋषियो और मनुष्यो मे । उस गर्भ मे ही ऋषि वामदेव को दिव्य ज्ञान हो गया कि मै ही मनु हुआ और मै ही कई जन्मों मे सूर्य बना—बृ० उ० १।४।१०)

श्यन् ऋषिर्वामदेव प्रतिपेदे अहं मनुरभवं सूर्यश्च", तस्मै मृदितकषायाय तमस पारं दर्शयति भगवान् सनत्कुमार, "अभय वै जनक प्राप्तोऽसि", "एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्य. प्रवव्राज", "तद्धास्य विजज्ञौ", "एकशत ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास", भृगुर्वै वारुणि. वरुणं पितरमुपससार", "स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह" इत्येवमादिश्रुतिस्मृतीतिहासपुराणवाक्यानि च मुख्यार्थे प्रामाण्यमश्नुवीरन्। तस्मादेकमपि ब्रह्मानेकोपाधिभिरवच्छिन्न लब्धनानाजीवभाव तत्र बद्धमिव, यत्र विद्यया अविद्योपाधिनिवृत्तिस्तत्र मुक्तमिव भवतीति नानाजीववादेऽपि बन्धमुक्तिव्यवस्थोपपद्यत इति केचिदाचार्या. प्रतिपेदिरे।

का पुनरविद्यानिवृत्ति । न तावत्सती, आत्मव्यतिरिक्तत्वे तस्या सद्द्वैततापत्ते । अव्य-

---

स्वभावाः केचिदिति दर्शितम्। तद्ब्रह्म प्रत्यबुध्यत प्रतिबुद्धवान् स एव तदभवत्, नतु स्वर्गादिष्विव भेदेन भोगमात्रम्। एव मनुष्यादिष्वपि। **एकशतमिति**। मघवानिन्द्र.। प्रजापतौ प्रजापतिसकाशे। एकोत्तरशत वर्षाणि ब्रह्मविद्यार्थं ब्रह्मचर्यमुवास उषितवान्। **स ब्रह्मविद्यामिति**। स ब्रह्मा ज्येष्ठपुत्रायाथर्वाय। अथर्वशब्दोऽयमकारान्त.। सर्वविद्याप्रतिष्ठा ब्रह्मविद्या प्राह। स्मृतीतिहासादि बहिरेव द्रष्टव्यम्। अनेकजीववादमुपसहरति—**तस्मादिति**। उपाधयोऽविद्याः। इवद्वयेन बन्धमोक्षयोरेकानेकपक्षद्वयेऽपि दुर्निरूपत्व प्रदर्श्यते, उक्त हि सप्रदायविद्भिः—

"न निरोधो न चोत्पत्तिर्न बद्धो न च साधक । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥" इति। **केचिदाचार्या** मण्डनमिश्रवाचस्पतिमिश्रमतावलम्बिनः।

सत्यज्ञानानन्तानन्दैकरसब्रह्मात्मनोऽविद्यया तिरोधान बन्धः, विद्यया तन्निवृत्तिश्च मोक्ष इत्युक्तम्, तत्र ब्रह्मण्यविद्याश्रयत्वविषयत्वोपपादनेन जीवापेक्षाविद्यातिरोधानरूपबन्धविधा निरूपिता। तिरोधानेन हि तत्पूर्वविपर्यासो विवक्ष्यते सप्रत्यविद्यानिवृत्तिलक्षणमोक्षतत्त्व निरूपयत्याक्षेपसमाधानाभ्याम्—**का पुनरित्यादिना**। तत्र किं सद्रूपिण्यविद्यानिवृत्तिः? असद्रूपिणी वा? सदसद्रूपिणी वा अनिर्वचनीया वा? पञ्चमप्रकारा वा? आत्ममात्र वा? सत्त्व पक्षेऽपि किमात्मातिरिक्ता? अनतिरिक्ता वा। प्रथमे चाह—**आत्मेति**। द्वितीये प्राह—

---

"तस्मै मृदितकषायाय तमसः पार दर्शयति भगवान् सनत्कुमार" ( उस मल-रहित अन्त करणवाले महर्षि को तम से परे ब्रह्म का दर्शन भगवान् सनत्कुमार ने करा दिया—छां० उ० ७।२६।२ ), "अभय वै जनक ! प्राप्तोऽसि" (बृ० उ० ४।२।४), "एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्य. प्रवव्राज" ( 'अरे मैत्रेयि ! इतना ही अमृतत्व है'—ऐसा कहकर याज्ञवल्क्य प्रव्रजित हो गया—बृ० उ० ४।५।१५ ), "तद्धास्य विजज्ञौ" ( छां० उ० ६।१६।३ ), "एकशत ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास" ( इन्द्र ने प्रजापति के पास एक सौ एक वर्ष तक ब्रह्म-विद्या के लिए ब्रह्मचर्य व्रत पालन किया—छां० उ० ८।११।३ ), "भृगुर्वै वारुणि· वरुणं पितरमुपससार ( तै० उ० ३।१ ), "स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह" ( ब्रह्मा ने अपने ज्येष्ठ पुत्र अथर्व को सर्व विद्याओ मे श्रेष्ठ ब्रह्मविद्या का उपदेश दिया—मु० उ० १।१।१ )—आदि श्रुतिवाक्य और ऐसे ही स्मृति, इतिहास पुराणादि के वाक्य भी उक्त व्यवस्था का आश्रय लेने से ही अपने मुख्यार्थ मे प्रमाण होगे। इसलिए एक ही ब्रह्म अनेक उपाधियो से परिच्छिन्न होकर नाना बद्ध जीव रूपो को धारण करता है और जहाँ विद्या के द्वारा अविद्यारूप उपाधि निवृत्त हो जाती है, वहाँ मुक्त जैसा हो जाता है। अत. नाना जीववाद मे भी बन्ध-मोक्ष की व्यवस्था बन जाती है—ऐसा कुछ आचार्य मानते है।

पूर्वपक्ष—अविद्या-निवृत्ति क्या है ? उसे सत् नही कह सकते, क्योकि आत्मा से भिन्न मानने पर द्वैतापत्ति होगी ( द्र० न्या० म० पृ० ३५२ )। आत्मा से भिन्न न मानने पर जिज्ञासा होती है कि निवृत्ति, आत्मरूप है ? या आत्मा, निवृत्तिरूप है ? निवृत्ति को आत्मरूप मानने पर सदा निवृत्ति

तिरिक्तत्वे चात्ममात्रत्वे सदानिवृत्ते संसारानुपलब्धिप्रसङ्गात्। तन्मात्रत्वे चात्मनस्तस्या ज्ञानजन्यतया पूर्वमभावात्, अज्ञानस्य स्वातन्त्र्यप्रसङ्गात्। नाप्यसति, तुच्छत्वे शशविषाणादिवत् ज्ञानाधीनत्वासंभवात्। अभावत्वे च तस्य निर्वाच्यत्वे द्वैतापातात्, अनिर्वाच्यत्वे च तत्कारणाविद्यावस्थानादनिर्मोक्षप्रसङ्गात्। भावस्याभावो निवृत्तिरभावस्य च भाव भावाभावविलक्षणस्याज्ञानस्य कथमभावो निवृत्ति स्यात्? नाप्यनिर्वचनीया, अविद्यातत्कार्ययोरन्यतरत्वापातात्। न चाविद्यातत्कार्ययोरन्यतरत्वे निवृत्तिमत्त्वमुपाधि; अनिर्वचनीयत्वेन निवृत्तिमत्त्वस्यापि साधनात्। न च निवृत्तेर्निवृत्तिमत्त्वेऽनवस्था, निवृत्तिमत्प्रध्वसपक्षे प्रध्वसमालावदुपपत्तेः। प्रध्वंसप्रध्वस इव प्रतियोगिनो बन्धस्यानुन्मज्जनादेवापुनरावृत्तिश्रुतेरप्यव्या-

अव्यतिरिक्तत्वे चेति। तत्रापि वक्तव्य किमविद्यानिवृत्तेरात्ममात्रत्वम्? आत्मनो वा निवृत्तिमात्रत्वम्? आद्ये प्राह—आत्ममात्रत्व इति। आत्मनः सदातनत्वादित्यर्थः। द्वितीय दूषयति—तन्मात्रेति। अविद्यानिवृत्तेस्तात्कालिकतया तन्मात्रात्मनोऽपि तात्कालिकत्वेन पूर्वमभावादज्ञानस्य साख्यप्रकृतिवत्स्वातन्त्र्य स्यादाश्रयाभावात्, आत्मनित्यत्वादयश्च बहवः कुप्येरन्निति भावः। असत्त्वपक्ष दूषयति—नापीति। तत्रापि किं निरुपाख्यमसत्त्वेनाभिप्रेयते यथा शशविषाणाद? किंवा सोपाख्यं यथा घटाभावादि? आद्ये प्राह—तुच्छत्व इति। नह्युत्पत्तिस्तस्य सभवतीत्यर्थ। द्वितीये प्राह—अभावत्वेति। तत्रापि किं निर्वाच्यमिति पक्षः यथा तार्किकप्रभृतीनाम्? उतानिर्वाच्यमिति यथा भवन्नये शुक्तिरजतादि? उभयत्रापि क्रमेण दूषणमाह—तस्य निर्वाच्यत्व इत्यादिना। तत्कारणेति। अविद्याकल्पिते ह्यनिर्वाच्य नाम तथाच कार्यानिर्वाच्यस्थितौ तदुपादानेनापि स्थातव्यमित्यर्थः। नच भावाभावविलक्षणाविद्याया निवृत्तिरभाव इत्यपि युक्तिसहमित्याह—भावस्येति। भावनिवृत्तेरेवाभावत्वमभावनिवृत्तेस्तु भावत्व प्रसिद्ध तदुभयविलक्षणाविद्यानिवृत्ति. कथमभाव स्यात्? एतच्च भावत्वेऽपि तुल्यम्। एतेन सदसद्रूपपक्षोऽपि प्रतिक्षिप्तः, अविद्यायाः सदसद्रूपत्वे हि तन्निवृत्तेः सदसद्रूपता स्यात्। अनिर्वचनीयपक्ष दूषयति—नापीति। ननु नानिर्वचनीयत्वस्याविद्यातत्कार्यत्वेन प्रतिबन्ध., निवृत्तिमत्त्वस्य तत्प्रयोजकत्वात्। नच निवृत्तेर्निवृत्तिमत्त्वमस्ति, अनवस्थानादपुनरावृत्तित्वव्याकोपाच्च। अतोनिवृत्तिमत्त्व व्यावर्तमानमविद्यातत्कार्यान्यतरत्वमप्यतो व्यावर्तयतीत्यानन्दबोधाचार्योक्त दूषयति—न चाविद्येति। साधनव्यापकत्वादनुपाधिरित्यर्थ। तत्र च बाधक परिहरति—न च निवृत्तेरिति। यथाहि प्रध्वसध्वसवादिनामनवस्था न दोष एवमित्यर्थः। अपुनरावृत्तित्वविरोध परिहरति—प्रध्वसप्रध्वंस इति। यथाह्युत्तरोत्तरध्वसानामपि

ही रहेगी ससार की उपलब्धि कभी न होगी। आत्मा को निवृत्तिस्वरूप यदि मानें, तब तो ज्ञान-जन्य निवृत्ति की सत्ता पूर्व में न होने कारण तद्रूप आत्मा भी ज्ञान से पूर्व न रहेगा, अत अज्ञान, आश्रय रहित स्वतन्त्र हो जायगा। अविद्या-निवृत्ति को असत् भी नही मान सकते, क्योकि असत् पक्ष मे शश-शृङ्ग के समान तुच्छ मानने पर वह ज्ञान के अधीन न रहेगी। अभावरूप मानने पर भी उसे निर्वाच्य कहेंगे? या अनिर्वाच्य? निर्वाच्य कहने पर द्वैतापत्ति और अनिर्वाच्य कहें, तब अनिर्वाच्य के रहने से अनिर्वाच्य की कारणभूत अविद्या की स्थिति भी माननी होगी, फिर अनिर्मोक्षतापत्ति होगी। दूसरी बात यह भी है कि भाव पदार्थ की निवृत्ति को अभाव और अभाव की निवृत्ति को भाव कहा जाता है, भावाभाव-विलक्षण अज्ञान की निवृत्ति को अभाव क्यो कर कहा जा सकेगा? अविद्या निवृत्ति को अनिर्वचनीय भी नही कह सकते, क्योकि अनिर्वचनीय कहने पर उसे या तो अविद्यारूप मानना होगा, या अविद्या का कार्य। 'अविद्या या अविद्या का कार्य वही होता है, जो निवृत्तिमान् हो'—ऐसा कहने पर अनिर्वचनीयत्व हेतु से निवृत्ति में निवृत्तिमत्त्व की भी सिद्धि हो जायगी। निवृत्ति की निवृत्ति मानने पर अनवस्थापत्ति को वैसे इष्टापत्ति माना जा सकता है, जैसे ध्वस-ध्वंस-माला को। जैसे ध्वस-ध्वस के रहने पर प्रतियोगी का पुनरुज्जीवन नही होता,

कोपात्। तस्मादनिर्वचनीयत्वे अविद्यातत्कार्ययोरन्यतरत्व प्रसज्यत एव। नापि पञ्चमप्रकारा, सदसद्विलक्षणतया तस्या अप्यनिर्वचनीयत्वप्रसङ्गात्, सदसद्विलक्षणमनिर्वचनीयमिति लक्षणाङ्गीकारात्। ननु नेद लक्षण किंतु ज्ञाननिवर्त्यमनिर्वचनीयम्, न चाज्ञाननिवृत्तिर्ज्ञाननिवर्त्या, ज्ञानजन्यत्वात्। ज्ञानानिवर्त्यापि च सा बाधगोचराऽतो न प्रपञ्चमिथ्यात्वसाधन सव्यभिचारम् 'नेह नानास्ति किंचने'ति प्रतिपन्नोपाधौ निषेधात्मबाधोऽज्ञाननिवृत्तेरपि तुल्य इति चेत्, मैवम्, अज्ञाननिवृत्तेर्ब्रह्मज्ञानरूपतया तज्जन्यत्वाभावात्, 'ज्ञातोऽर्थस्तज्ज्ञप्तिर्वाऽज्ञानहानि'रितीष्टसिद्धिकारैरभिधानात्, विद्यैव वाऽद्वया शान्ता तदस्तमय उच्यते' इति ब्रह्मसिद्धिकारैरप्युक्तत्वात्, ज्ञानजन्यसंस्कारे च ज्ञाननिवर्त्ये व्यभिचारात्। ननु तत्र ज्ञानान्तरेण ज्ञानान्तरजन्यसंस्कारो निवर्तते न तु तेनैवेति वैषम्यमिति चेत्,

---

प्रथमपदार्थविरोधितया तथाऽनुन्मज्जन तथाऽविद्यानिवृत्तिमालायाश्चापि प्राचीनाविद्याविरोधित्वादेव तदनुन्मज्जनादपुनरावृत्त्यविरोध इत्यर्थः। पञ्चमपक्ष दूषयति—**नापीति**। अथ सदसद्विलक्षणत्वेपि किमित्यनिर्वाच्यता ? तत्राह—**सदसदिति**। तत्र यदुक्त न्यायरत्नावलीकारैस्तदुद्भावयति दूषयितुम्—**ननु नेद-मित्यादिना**। नन्वियमपि ज्ञाननिवर्त्यैव, तत्राह—**नचेति**। स्यादेतत्—एवंविधाप्यविद्यानिवृत्तिर्दृश्या तावदभ्युपेयते आत्मव्यतिरिक्तत्वात्तथाच यदि नेयं ज्ञाननिवर्त्या तर्हि, दृश्यत्वहेतुरत्रैवानैकान्तिकमिति, तत्राह—**ज्ञानानिवर्त्यापीति**। ज्ञाननिवर्त्यत्वमन्यत् ज्ञानबाध्यत्व चान्यदित्यभिमानः। अथ कथं बाध्यत्वमस्या इति, तत्राह—**नेह नानेति**। तदेतद्दूषयति—**मैवमिति**। नहि विरोध्युदयमन्तरेण विरोधिनिवृत्तिर्नामान्या दृश्यते युज्यते वेत्यर्थः। अत्राचार्यसमतिमाह—**ज्ञातोऽर्थ इति**। मण्डनमिश्रसमतिमाह—**विद्यैवेति**। तदस्तमयः अविद्यास्तमयः। किंच किं जात्युपाधावियं व्याप्तिः यज्ज्ञानजातीयजन्य तत्तज्जातीयेन न निवर्त्यत इति ? किंवा व्यक्तौ ? आद्ये व्यभिचारमाह—**ज्ञानजन्येति**। द्वितीय

---

वैसे ही निवृत्ति की निवृत्ति के रहने पर भी प्रतियोगीभूत बन्ध का उन्मज्जन न होने से अपुनरावृत्ति-श्रुति से भी विरोध नहीं होता। अत निवृत्ति को अनिर्वचनीय मानने पर अविद्या और उसके कार्य में अन्यतररूप उसे मानना ही पडेगा। अविद्या-निवृत्ति को सत्, असत्, उभय और अनिर्वचनीय—इन चारो से भिन्न पञ्चम प्रकार भी नही माना जा सकता, क्योंकि उक्त चारों से भिन्न मानने पर सत् और असत् से भिन्न मानना ही होगा, तब तो वही अनिर्वचनीय पक्ष आ जायगा, क्योंकि "सद-सद्विलक्षणम्"—यही तो अनिर्वचनीय का लक्षण माना जाता है। यदि शङ्का करें कि अनिर्वचनीय का यह लक्षण नहीं, अपितु "ज्ञाननिवर्त्यम्"—यह लक्षण करेंगे। ज्ञान से जन्य होने के कारण अज्ञान-निवृत्ति, ज्ञान निवर्त्य नहीं हो सकती। ज्ञान से निवर्त्य न होने पर भी वह (अज्ञान-निवृत्ति) बाध-गोचर मानी जाती है, अत प्रपञ्च-मिथ्यात्व-साधन (दृश्यत्व हेतु) वहाँ व्यभिचारी नहीं होता। हाँ, "नेह नानास्ति किञ्चन'—इस प्रतिपन्नोपाधि में निषेध रूप ज्ञान की विषयता अज्ञान-निवृत्ति में भी रहने से बाध्यता बन जाती है। तो यह शङ्का युक्त नहीं, क्योंकि अज्ञान-निवृत्ति, ब्रह्मज्ञानरूप होने के कारण ज्ञान-जन्य नहीं मानी जा सकती। इष्टसिद्धिकार ने भी यही सिद्धान्त किया है—"ज्ञातोऽर्थस्तज्ज्ञप्तिर्वा तदज्ञानहानि" (इष्ट० पृ० ३६९) अर्थात् ज्ञात वस्तु या वस्तु का ज्ञान ही अज्ञान-निवृत्ति है। आचार्य मण्डन मिश्र का भी यही कहना है—

अविद्यास्तमयो मोक्ष सा संसार उदाहृता।
विद्यैव चाद्वया शान्ता तदस्तमय उच्यते॥ (ब्र० सि० ३।१०६)

अर्थात् अविद्या-निवृत्ति मोक्ष और अविद्या ससार है। अद्वय शान्तस्वरूप विद्या ही अविद्या-निवृत्ति है। 'जो ज्ञान-जन्य होता है, वह ज्ञान-निवर्त्य नहीं होता'—यह व्याप्ति भी ज्ञान-जन्य संस्कार में व्यभिचरित है, क्योंकि वह अपने कारणभूत ज्ञान से जन्य और अपने कार्यभूत ज्ञान से

मैवम्, ईश्वरज्ञानजन्यस्य जगतस्तज्ज्ञानेनैव निवर्त्यत्वाङ्गीकारात्, उत्पाद्य घटं नाशयिष्यामि इत्यभिसंधानस्थले कुलालज्ञानजन्यघटस्य तेनैव ज्ञानेन निवर्त्यत्वदर्शनाच्च। अज्ञाननिवृत्तेश्च ज्ञानानिवर्त्यत्वे प्रपञ्चमिथ्यात्वसाधनस्य तत्र व्यभिचारात्। ज्ञानानिवर्त्यत्वेऽपि बाध्यत्वात् न व्यभिचार इतिचेत्, न, ज्ञाननिवर्त्यत्वमन्तरेण बाध्यत्वस्यानिरूपणात्। सविलासाज्ञाननिवृत्तिर्बाध इत्यङ्गीकरणात्। नाप्यात्मैवाज्ञाननिवृत्ति; आत्मन सदातनत्वेनाज्ञाननिवृत्तेरपि तथात्वे संसाराभावप्रसङ्गात्, आत्मनस्तत्त्वज्ञानसाध्यत्वप्रसङ्गाच्च। ज्ञात आत्मा अज्ञाननिवृत्तिर्न स्वरूपेणैवेति चेत्, न, ज्ञानस्य विशेषणत्वे नित्यत्वे च मोक्षदशायामपि अन्त करणादेरवस्थानप्रसङ्गात्। अनित्यत्वे चाज्ञाननिवृत्तिरूपाया मुक्तेरप्यनित्यत्वापातात्। न च ज्ञानोपलक्षित एवात्माज्ञाननिवृत्ति, उपलक्षितत्वस्य नित्यत्वानित्वयो प्राचीनदोषानुषङ्गात्। तस्मान्नाज्ञाननिवृत्तिरुपपन्नेति।

---

मुद्रावयति—**ननु तत्रेति**। अत्रापि व्यभिचारमाह—**मैवमीश्वरेति**। जगत्सहारेऽपि सृष्टिवदीश्वरज्ञान निमित्तमेवेति भावः। अथाप्यनीश्वरज्ञान एवेय नियतिरिति ब्रूयात्, तर्हि तत्रापि व्यभिचारमाह—**उत्पाद्य घटमिति**। एक हीद ज्ञान यदुत्पाद्य नाशयिष्यामीति भावः। यच्च ज्ञाननिवर्त्यत्वज्ञानबाधयोर्भेदमादाय दृश्यत्वहेतोरनैकान्तिकतावारणम्, तदप्यसत्, ज्ञाननिवर्त्यत्वातिरिक्तस्य ज्ञानबाध्यत्वस्यानिरूपणादित्याह—**अज्ञानेत्यादिना**। अपसिद्धान्तश्चेत्याह—**सविलासेति**। षष्ठ पक्ष दूषयति—**नाप्यात्मैवेति**। आत्मनित्यत्वव्याहतिश्चेत्याह—**आत्मन इति**। **ज्ञानस्य विशेषणत्व इति**। ज्ञात आत्मेत्यत्र वृत्तिरूप तावज्ज्ञान वक्तव्यम्, स्वरूपज्ञान प्रति कर्मत्वाभावात्ततश्च तद्यदि विशेषण नित्य च तदा जन्यस्य कथ नित्यत्वमित्यास्ता तावत्। सन्तानरूपेण चेन्नित्यत्व तथापि तत्कारणान्त.करणादेरवस्थानान्न ससारतो विशेषः स्यादित्यर्थः। अथैतद्दोषभयादनित्यमेवाङ्गीक्रियते तर्ह्यपुनरावृत्तित्वव्याकोप इत्याह—**अनित्यत्वे चेति**। ननु ज्ञानोपलक्षितात्मरूपमविद्यानिवृत्तिस्तेन विशेषणपक्षप्रयुक्तदोषद्वयनिवृत्तिरिति, तत्राह—**न च ज्ञानेति** अत्राप्युपलक्षितत्वधर्ममादाय दूषणद्वयं सुवचमित्यर्थः। पूर्वपक्षमुपसहरति—**तस्मादिति**।

---

निवर्त्य होता है। यदि कहा जाय कि उक्त व्याप्ति का स्वरूप है—'जो जिस ज्ञान व्यक्ति से जन्य होता है, वह उस ज्ञान व्यक्ति से निवर्त्य नहीं होता।' सस्कार भी अपने जनक ज्ञान से निवर्त्य नही, अपितु ज्ञानान्तर से निवर्त्य होता है। तो यह भी कहना उचित नही, क्योकि ईश्वर-ज्ञान-जन्य जगत्, ईश्वर-ज्ञान से निवर्त्य माना जाता है एव जहाँ कुलाल 'घट को उत्पन्न करके नष्ट करूँगा'—ऐसा सङ्कल्प करके घट को बनाता और फोड़ता है, वहाँ कुलाल-ज्ञान-जन्य घट, उसी ज्ञान से निवर्त्य भी देखा जाता है। अज्ञान-निवृत्ति को ज्ञान-निवर्त्य न मानने पर प्रपञ्च मिथ्यात्व-साधन का वहाँ व्यभिचार भी होगा। यह जो कहा कि ज्ञान-निवर्त्य न होने पर ज्ञान-बाध्य होने से व्यभिचार नही। वह कहना नितान्त असगत है, क्योकि ज्ञान-निवर्त्यत्व ही तो बाध्यत्व है, उससे अतिरिक्त बाध्यत्व का निरूपण ही नही हो सकता, क्योंकि कार्य-सहित अज्ञान की निवृत्ति को ही बाध माना जाता है। अज्ञान-निवृत्ति को आत्म-स्वरूप भी नही कह सकते, क्योकि आत्मा तो सदातन है, अज्ञान-निवृत्ति को आत्मरूप मानने पर ससार का अभाव हो जायगा एवं आत्मा मे तत्त्वज्ञान-जन्यत्व की भी आपत्ति होगी। यदि कहे कि ज्ञात आत्मा ही अज्ञान-निवृत्तिरूप होता है, स्वरूपत नही। तो वहाँ ज्ञान को विशेषण मानते है ? या उपलक्षण ? विशेषण पक्ष मे नित्य मानने पर मोक्ष दशा मे भी वृत्तिरूप ज्ञान के उपादान अन्त करणादि की स्थिति माननी होगी और अनित्य मानने पर अज्ञान-निवृत्तिरूप मुक्ति को भी अनित्य मानना पड़ेगा। ज्ञान को उपलक्षण मानने पर भी नित्यत्वानित्यत्व-विकल्प के कथित दोष बने ही रहते है। अत. अज्ञान-निवृत्ति उपपन्न नही होती।

अत्रोच्यते—निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ।
उपलक्षणनाशेऽपि स्यान्मुक्तः पाचकादिवत् ॥ ८ ॥

यथा लोके सकारणस्य कलधौतविभ्रमस्य ज्ञाता शुक्तिरेव निवृत्तिः । न च तत्रापि नेदं रजतमित्यन्योन्याभावज्ञानं तन्निवर्तकमिति युक्तम् । अपरिज्ञाते शुक्तिशकले धर्मिप्रतियोगिसव्यपेक्षस्य तस्यैवासंभवात् । परिज्ञाते तु तेनैव तदुपपत्तावितरस्य कृतकरस्य वैयर्थ्यात् । इदमाकारपरिज्ञानस्य च भ्रान्तौ विद्यमानस्य तदविरोधात् । यथेहाप्यनृतजडदुःखानात्मद्वैतविरोधिसत्यज्ञानानन्दानन्ताद्वयलक्षणं ब्रह्मैव वेदान्तवाक्यजनितब्रह्मैकाकारान्तःकरणपरिणामदर्पणप्रतिबिम्बितं सविलासाज्ञाननिवृत्तिरिति युक्तमभ्युपगन्तुम् । न च ज्ञाततालक्षणोपलक्षणनाशे तेन घटितस्य मुक्तस्याभावप्रसङ्गः, पाचकादिवदवस्थानोपपत्तेः, न हि लोके पचनलवनादिक्रियायामतिवृत्ताया देवदत्तः पाचको लावको न भवति, न वा तथा व्यवह्रियते । एते-

आत्मैवाज्ञानहानिरिति पक्षं परिगृह्यानुपपादयति—**उपलक्षणेति** । यथाहि लोके पचनलवनादिक्रियानिवृत्तावपि देवदत्तः पाचको लावक इति प्रतीयते व्यवह्रियते, तथेहाप्युपलक्षणज्ञातत्वनाशेऽपि मुक्तिः स्यादिति । श्लोकार्थं विवृणाति—**यथा लोक इति** । कलधौतं रजतम् । ननु न शुक्तिज्ञानं रजतविभ्रमनिवर्तकं येन ज्ञातशुक्तिरेव तन्निवृत्तिः स्यादपितु नेदं रजतमित्यन्योन्याभावज्ञानम्, तथाच ज्ञातान्योन्याभाव एवान्यद्वा तन्निवृत्तिरिति कथमधिष्ठानमात्रत्वं तन्निवृत्तेरिति, तत्राह—**न च तत्रापीति** । कुतो न युक्तमित्यत आह—**अपरिज्ञात इति** । धर्मितया प्रतियोगितया वा अधिष्ठानस्य पूर्वभावित्वात्तेनैव च तदारोपनिवृत्तेः संसर्गमात्रारोपस्य चाधस्तादेव निरस्तत्वादन्योन्याभावज्ञानमर्थसिद्धानुवाद इत्यर्थः । नन्विदमाकारं ज्ञानमेवान्योन्याभावज्ञानजनकं न शुक्तिज्ञानम्, अतो न कृतकरत्वमिति, तत्राह—**इदमिति** । **तदविरोधात्** भ्रान्त्यविरोधात्तज्जनकत्वं न सम्भवतीति शेषः । इममेव न्यायं प्रकृतस्थलेऽपि योजयति—**तथेहापीति** । **अनन्तेति** चानात्मत्वविरुद्धाकारनिर्देशः । अप्रत्यग्भूतं हि वस्तुतः परिच्छिन्नं भवेदिति । उत्तरार्धं विवृणोति—**न च ज्ञातेति** । ये त्विमं पक्षं दोषबहुलतया मलीमसं मन्यमानाः प्राहुः—अत्र केचित्परिहारकातरतया परिहारमाचक्षते आत्मैवाज्ञानहानिरिति, तेषामनुशयमुन्मूलयति—**एतेनेति** ।

उत्तर पक्ष—ज्ञातत्वोपलक्षित आत्मा ही मोहनिवृत्तिरूप माना जाता है, उपलक्षण का नाश हो जाने पर भी पाचकादि के समान मुक्त पुरुष बना ही रहेगा । अर्थात् लोक में समूल रजत-भ्रम की निवृत्ति, ज्ञात शुक्ति रूप ही देखी जाती है । यहाँ शुक्ति-ज्ञान को रजत-भ्रम का निवर्तक न मानकर "नेदं रजतम्"—इस प्रकार के अन्योन्याभाव को निवर्तक मानना युक्त नहीं क्योंकि शुक्ति का ज्ञान न होने पर अनुयोगी-प्रतियोगी से सापेक्ष आन्योन्याभाव का ज्ञान ही सम्भव नहीं और शुक्ति का ज्ञान हो जाने पर उसी ज्ञान से उस भ्रम की निवृत्ति उपपन्न हो जाती है, फिर अन्योन्याभाव ज्ञान से पिष्ट-पेषण करने से क्या लाभ ? शुक्ति-ज्ञान से भिन्न केवल इदमाकार-ज्ञान, उक्त अन्योन्याभाव-ज्ञान का जनक नहीं माना जा सकता, क्योंकि वह स्वयं भ्रममें विद्यमान होने से उस भ्रम का विरोधी नहीं । वैसे (रजत-भ्रम-निवृत्ति के ज्ञात शुक्ति रूप होने के समान) ही प्रकृत में भी अनृत, जड, दुःख, अनात्म और अद्वैत का विरोधी सत्य, ज्ञान, आनन्द, अनन्त और अहम् रूप ब्रह्म ही वेदान्त वाक्य-जनित ब्रह्माकार अन्तःकरण के परिणामरूप दर्पण में प्रतिबिम्बित होकर ही कार्य-सहित अज्ञान की निवृत्ति है—यह मानना ही सर्वथा युक्त है । ज्ञातत्वरूप उपलक्षण के नष्ट हो जाने पर उससे घटित मुक्त का अभाव नहीं हो सकता, क्योंकि पाचकादि के समान ही उसका अवस्थान सम्भव है । लोक में पचन, लवनादि क्रिया के निवृत्त हो जाने से "देवदत्तः पाचको वा लावको वा न भवति"—यह व्यवहार नहीं देखा जाता । इससे ही अज्ञान

नाज्ञाननिवृत्तेरनित्यत्वे पुनरज्ञानस्य संसारस्य चोन्मज्जनापत्तिरित्यादयो दोषा· प्रत्युदस्ता , शुक्तिशकलादौ ज्ञाननाशेन ज्ञातत्वोपलक्षणनाशेऽपि निवृत्तस्याज्ञानस्य तद्विलासस्य वा पुनरुन्मज्जनादर्शनात् । पुनरुद्भवतो रजतादिविभ्रमस्याज्ञानान्तराधीनत्वात् , यावन्ति ज्ञानानि तावन्ति तन्निवर्त्यान्यज्ञानानीत्यभ्युपगमात् । इह च 'भूयश्चान्ते विश्वमायानिवृत्ति'रिति श्रुतेरशेषाज्ञाननिरासात् पुन संसारशङ्कातङ्कानवकाशात् ।

तस्मात्—विगीताज्ञानहानि· स्यात् ज्ञाताधिष्ठानमात्रकम् ।
तत्त्वाद्यदित्थं तत्ताद्दृग्यथा शुक्त्यादिक मितम् ॥ ९ ॥

एव सति 'यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानत., यत्र त्वस्य सवमात्मैवाभू'दित्याद्या श्रुतय. सर्वस्य द्वैतजातस्यात्ममात्रतया प्रविलयमुपपादयन्त्यो मुख्यार्थतामश्नुवीरन् । इतरथाऽनिर्वचनीयस्य पञ्चमप्रकारस्य वा अज्ञाननिवृत्तिरूपस्याङ्गीकारे ससारदशायामिव केवलात्ममात्ररूपेणावस्थानासंभवादुदाहृताः श्रुतय उपचरितार्था. कदर्थिता. स्यु । तस्मादुत्पन्ना

एतनेत्येतद्विशदयति—**शुक्तीति** । ज्ञातत्वविशिष्टपक्षपरित्यागादेव तत्प्रयुक्तदोषशान्तेः पञ्चमप्रकारे च प्रमाणाभावात्परिशेषस्य चैतनैवोपपत्तेरनुत्थानादिति भावः । ननु पुनरपि तत्रैव विभ्रमदर्शनादुन्मज्जनमस्त्येवेति, तत्राह—**पुनरुद्भवत इति** । नन्वेकमेवाज्ञानमिति, तत्राह—**यावन्तीति** । अंशा वा प्रदेशा वा अवयवा वस्तुतन्त्राश्चाङ्गीक्रियन्त इति न तस्यैवोन्मज्जनमिति भावः । नन्वत्रापि ससारान्तरस्याज्ञानान्तरस्य च पुनरुद्भवाऽस्त्विति, तत्राह—**इह चेति** । आतङ्को भयम् । ननु भवत्वेव सभावना किं पुनरत्र प्रमाणमिति, तदाह श्लोकेन—**विगीतेति** । लौकिकविभ्रमनिवृत्त्यार्थान्तरतापरिहाराय विगीतग्रहणम् । तत्त्वात् अज्ञानहानित्वात् । यथा शुक्त्यादिकमिति तदज्ञाननिवृत्तेरुपलक्षणम्, शुक्त्यादिमात्राज्ञाननिवृत्तिर्यथेत्यर्थः । एवमनुग्राहकतर्कस्थलीयमनुमानमुक्त्वानुग्राह्यभागमाह—**एव सतीति** । विजानतः पुसो यस्यामवस्थायां सर्वाणि भूतानि, भवन्तीति भूतानि कार्यमात्रम्, आत्मैवाभूत्तत्र तस्यामवस्थाया को मोहः कः शोक इति श्रुत्यर्थः । यदि हि पञ्चमप्रकार. स्यात् , तदा कथमात्मैवात्मव्यतिरिक्त समस्त वस्त्वभूदिति निर्दिश्येत ? अथ तस्याप्यारोपितत्वाद्वास्तववृत्तेर्नात्ममात्रत्वम् , तत्किमनिर्वचनीया अथ च पञ्चमप्रकारेतिव्याहत वक्तुमारब्धम्, एव यत्रत्वस्ये त्यादावपि, कदर्थिता उद्वेजिता. पीडिता इति यावत् ।

निवृत्ति के अनित्य होने पर अज्ञान तथा ससार के पुनरुद्भव-प्रसङ्गादि दोषो का निराकरण हो जाता है, क्योकि शुक्ति-शकलादि मे ज्ञानका नाश हो जाने पर ज्ञातत्वरूप उपलक्षण का नाश हो जानेसे भी निवृत्त अज्ञान और उसका काय पुन उत्पन्न होते नही देखा जाता । दुबारा जो रजत-भ्रम वहाँ देखा जाता है, वह दूसरे अज्ञान का कार्य माना जाता है, पहले अज्ञान का नही, क्योकि जितने ज्ञान होते है, उतने ही उनसे निवर्त्य अज्ञान माने जाते है । किन्तु प्रकृत मे "भूयश्चान्ते विश्वमायानिवृत्ति."—यह श्रुति अशेष अज्ञानकी निवृत्ति, ब्रह्म-ज्ञान से बताती है, अत. यहाँ पुन. ससारोद्भव की शङ्का के भय को अवकाश ही नही मिलता । इस लिए "विवादास्पद अज्ञान-निवृत्ति, ज्ञात अधिष्ठानमात्र होती है, अज्ञान-निवृत्ति होने के कारण, जैसे—रजत-भ्रम-निवृत्ति, ज्ञात शुक्ति स्वरूप होती है"—इस प्रकार के अनुमान प्रमाण के प्रवृत्त हो जाने पर "यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानत." (ईशा० ७) "यत्र त्वस्य सर्वमात्मैवाभूत्" (बृ० उ० ४।५।१५) आदि श्रुतियाँ समस्त द्वैत जगत् का आत्ममात्र मे प्रविलय बताती हुई मुख्यार्थक हो जाती है । अन्यथा अज्ञान-निवृत्ति को अनिर्वचनीय या पञ्चम प्रकार मानने पर ससार दशा के समान ही केवल आत्मरूप से उक्त निवृत्ति की अवस्थिति सम्भव न होने से उक्त श्रुतियाँ गौणार्थक, बाधितप्राय ही हो जायँगी । इस लिए आत्म-विज्ञान-सम्पन्न पुरुष के सकार्य अज्ञान की निवृत्ति

त्मविज्ञानस्य ज्ञात आत्मैव सविलासाज्ञाननिवृत्तिरितिस्थितम् ।

ननु ज्ञात आत्मैव चेत्सविलासाज्ञाननिवृत्तिस्तदोत्पन्नविज्ञानस्य शरीरादिप्रतिभासानुवृत्तिर्न स्यात् । न चाविद्यालेशात् तदनुवृत्ति , निवर्तकतत्त्वज्ञानोदये तल्लेशस्यापि निवृत्ते । प्रारब्धकर्मणा प्रतिबद्धं तत्त्वज्ञान शरीरादिप्रतिभासहेतुमविद्यालेश न निवर्तयतीति चेत् , मैवम् , कर्मणोऽप्यविद्याकार्यतया तन्निवृत्तौ तन्निवृत्ते., अनिवृत्तौ च कर्मणस्तत्कार्यस्य च शरीरादे. सत्यत्वप्रसङ्गात् । 'क्षीयन्ते चास्य कर्माणी त्यविशेषेणाशेषकर्मणां ज्ञानात् प्रक्षयश्रवणाच्च । न च 'तस्य तावदेव चिर यावन्न विमोक्ष्येऽथ संपत्स्य' इति विदुषो देहपातावधिश्रवणात् ,

वादार्थमुपसहरति—तस्मादिति ।

तदेवमविद्यानिवृत्तिर्मुक्तिरित्ययमर्थ उपपादितः, इदानी तत्रैव जीवन्मुक्तिलक्षणावान्तरविशेषमुपपादयति मुक्तिसिद्धये । तथाहि—ज्ञान ह्यविद्यानिवर्तकम् , तच्च तदुदयसमसमयमेव भवितुमर्हति, अविधिलक्षणत्वेन कालान्तरफलत्वाभावात् , शुक्त्यादितत्त्वज्ञानेषु सममयतादर्शनाच्च । तदिह यदि जीवति ज्ञानमुत्पन्नमप्यविद्या न निवर्तयेत् , का वार्ता कालान्तरे तन्निवर्तने ? जीवत एव च ज्ञानोत्पत्तिः, इतरथा तदुत्पादककरणाभावेनानुत्पत्तिप्रसङ्गात् , तद्यदि मुक्तिरस्ति अस्त्येव जीवन्मुक्तिः । अथ यदि न जीवन्मुक्ति. नास्त्येव मुक्तिरिति मुक्तिसिद्ध्यर्थमेवाय विचारः विद्यासप्रदायसिद्ध्यर्थम् , इतरथा हि तत्त्वविदः सद्यः शरीरपाते शिष्याद्यप्रतिभासादसाक्षात्कृततत्त्वस्य चानुपदेष्टृत्वाद्विहीनसप्रदायतयाऽनिर्मोक्ष एव पर्यवस्येत् । तदुक्तमाचार्यैर्जीवन्मुक्तिप्रकरणे—'जीवेन्मुक्तोस्ति मुक्तिर्यदी'त्यादिना । तत्र तावज्जीवन्मुक्तिमाक्षिपति—नन्वित्यादिना । अयमर्थ.—यद्यात्मातिरिक्ता स्यादविद्यानिवृत्तिस्तदा देहपातानन्तरमपि शक्यसभावनया स्याद्विदुष. शरीरादिप्रतिभासः, यदा तु ज्ञानोपलक्षितात्मैवेति समर्थ्यते तदाऽपलक्षितात्मनः सदातनत्वादुपलक्षणतत्सबन्धयोः सतोरुपलक्षणतानिष्पत्तेर्निवृत्तैवाविद्येति वचनीयम् , तथाच तदा क्रोडितस्थूलसूक्ष्मकलेवरयुगलविलयाच्छिष्यादिप्रतिभासाभाव इति भावः । नन्वविद्याया. कश्चिदेकदेशोऽस्ति ज्ञानेनाप्यनिवर्त्यः तन्निबन्धनोऽय शरीरादिप्रतिभास इति, तत्राह—न चेति । नहि समस्ताविद्याविनोदिविज्ञानमेकदेशेऽसमर्थमिति सभवतीत्यर्थः । समर्थस्यापि प्रतिबन्ध शङ्कते—प्रारब्धेति । यदि हि प्रारब्धकर्मण. स्थितिरेव स्यात्स्यात्तदा कारणवशपरिरक्षणम् , तदेव तु नास्तीति परिहरति—मैवं कर्मण इति । सत्यत्वप्रसङ्गादिति ? ज्ञानबाध्यत्व हि मिथ्यात्वमिति भावः । ननु कर्माणि क्षीयन्ते इति सामान्यवचनमिदम् । अस्ति चापरा श्रुतिस्तस्य तावदेव चिरमिति विदुषाऽपि शरीरपातावधि दर्शयन्ती तथा चैतदनुसारेण प्रारब्धकर्मव्यतिरिक्तकर्मविषये सा व्यवस्थापनीयेति, तत्राह—न च तस्य तावदेवेति । नेयं श्रुतिरपरो-

आत्मस्वरूप ही होती है—यह स्थिर हुआ ।

शङ्का—यदि ज्ञात आत्मा ही सकार्य अज्ञान की निवृत्ति है, तब विद्वान् को शरीरादि की प्रतीति नही रहेगी । लेशाविद्या से शरीरादि-प्रतीति की अनुवृत्ति नहीं कह सकते , क्योंकि निवर्तक तत्त्वज्ञान के उदय होने से ही अविद्या-लेश भी निवृत्त हो जाता है । 'प्रारब्ध कर्मरूप प्रतिबन्धक के रहने से तत्त्वज्ञान, शरीरादि-प्रतीति के हेतुभूत अविद्या-लेश की निवृत्ति नही कर सकता'—यह शङ्का नही कर सकते , क्योंकि प्रारब्ध कर्म भी अविद्या का कार्य है, अतः उसकी निवृत्ति से निवृत्त हो जाता है । निवृत्ति न मानने पर कर्म और उसका कार्य शरीरादि को सत्य मानना पड़ेगा । "क्षीयन्ते चास्य कर्माणि"—इस श्रुति में अविशेषरूप से अशेष कर्मों का ज्ञान से प्रक्षय कहा गया है । यदि कहें कि "तस्य तावदेव चिर यावन्न विमोक्ष्येऽथ सम्पत्स्ये" ( छां० उ० ६।१४।२ ) इस श्रुति मे विद्वान् के देह-पात की अवधि का कीर्तन होने से "क्षीयन्ते चास्य कर्माणि"—इस श्रुति का अर्थ करना होगा—प्रारब्ध कर्म से भिन्न सभी कर्म, विद्वान् के नष्ट हो जाते हैं । तो यह नही कह सकते , क्योंकि "तस्य तावदेव चिरम्"—यह श्रुति परोक्ष ज्ञानवाले पुरुष के ही शरीर-पात की

प्रारब्धकर्मव्यतिरिक्तकर्मविषयैषा श्रुतिरिति वाच्यम्, तस्याः परोक्षज्ञानिविषयत्वात्। ननु 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन' इत्यपरोक्षज्ञानिन एवोपदेष्टृत्वं दर्शयन्नीश्वरस्तत्त्वदर्शिनामपि शरीरादेस्तद्धेतूनां च कर्मणामवस्थानं सूचयतीति चेत्, मैवम्, ज्ञानिन इति परोक्षनिश्चयवतस्तत्त्वदर्शिन इति च तत्त्वदर्शनाभ्यासशीलस्य तत्र प्रतिपादितत्वात्। न चापरोक्षे परोक्षज्ञानविभ्रमः, स्वात्मनि स्वसुखादौ च परकीयानुमानादिज्ञानस्याविभ्रमत्वात्।

कश्चायमविद्यालेशः, किमविद्याया एकदेशः? किंवा तदाकारान्तरम्? नाद्य, अविद्यायाः घटादिवत्सावयवत्वानङ्गीकारात्। नापि द्वितीयः स्वाकारिनिवृत्तौ तदाकारावस्थानानुपपत्तेः। अस्तु तर्हि संस्कारादेव द्वैतप्रतिभासानुवृत्तिः, विनिवृत्तसर्पविभ्रमस्यापि संस्काराद्भयकम्पाद्यनुवृत्तिदर्शनात्, 'तिष्ठति संस्कारवशाच्चक्रभ्रमवद्धृतशरीर' इति च तन्त्रान्तरेऽप्य-

---

क्षज्ञानिविषया येन तदेकदेशविषयतया तां सङ्कोचयेदपि तु परोक्षज्ञानिविषयेति विरोधशङ्कैव नास्तीत्याह—**तस्या इति**। स्मृतिबलाज्जीवन्मुक्तिं शङ्कयित्वा दूषयति—**नन्वित्यादिना**। स्यादेतत्—भवतु परोक्षज्ञानिविषयो ज्ञानिन इति निर्देशः तत्त्वदर्शिन इति कथं तेषु सङ्गतः स्यात्? साक्षात्कारो हि दर्शनं नाम तस्मादेतदेव तत्त्वसाक्षात्कारिणां शरीरादिप्रतिभासे प्रमाणमिति, तत्राह—**तत्त्वदर्शिन इति चेति**। अत्र हि तत्त्वं द्रष्टुं शीलमेषामिति ताच्छील्ये णिनिप्रत्ययविधानात्तत्त्वदर्शनाभ्यासशालाः प्रतीयन्ते। नचापरोक्षज्ञानोदयेऽभ्यासावसरः, तदर्थत्वादभ्यासस्य। तस्मात्परोक्षज्ञानाभ्यासशीलिन इह विवक्षिताः। अत एव तत्समभिव्याहृतज्ञानशब्दोऽपि परोक्षज्ञानविषय इत्यर्थः। ननु परोक्षज्ञानशीलिनां तत्त्वदर्शित्वमनुपपन्नम्, अपरोक्षे परोक्षज्ञानस्यायथार्थतया विभ्रमत्वादित्यत्राह—**न चापरोक्ष इति**। स्वात्मा स्वसुखादि च स्वस्य तावदपरोक्षे इतरेषां च तत्रानुमानाच्छब्दाद्वा परोक्षज्ञानमुत्पद्यते, नच तद्भ्रान्तम्, अवितथार्थत्वाद् इतरथा प्रतिपाद्याप्रमित्या कथाऽप्रवृत्त्याद्यापात इति भावः।

एवमविद्यालेशस्थितिरनुपपन्नेत्युक्तम्, इदानीं लेश एवाविद्याया दुर्निरूप इत्याह—**कश्चायमिति**। **अनङ्गीकारादिति**। न निरवयवं न सावयवमित्यङ्गीकारात्, अद्रव्यत्वादनादितयावयवानारब्धत्वाच्चेत्यर्थः। मण्डनमिश्रमतमुद्भावयति—**अस्तु तर्हीति**। दृष्टचरं चेतदित्याह—**विनिवृत्तेति**। साङ्ख्यमप्रति-

---

अवधि बताती है, अपरोक्ष ज्ञानवाले के शरीर की नहीं। यदि कहें कि "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः"—इस ( गी० ४।३४ ) श्लोक में भगवान् स्पष्टरूप से अपरोक्ष ज्ञानी को उपदेष्टा बताते हुए उसके शरीर तथा उसके हेतु प्रारब्ध कर्म की स्थिति सूचित कर रहे हैं। तो यह भी नहीं कह सकते, क्योंकि उक्त श्लोक में 'ज्ञानी' पद का अर्थ है—परोक्ष निश्चयवाला और 'तत्त्वदर्शी' का अर्थ है—तत्त्वदर्शनाभ्यासी। यदि कहें कि परोक्ष ज्ञानवाला तत्त्व-दर्शी नहीं हो सकता, क्योंकि उसे अपरोक्ष तत्त्व में परोक्ष ज्ञान का विभ्रम होता है। तो यह भी नहीं कह सकते, क्योंकि अपरोक्ष वस्तु में परोक्ष ज्ञान को सर्वत्र विभ्रम नहीं कह सकते, कारण यह है कि एक व्यक्ति के अपरोक्ष आत्मा और सुखादि का जो परोक्ष ( अनुमान ) ज्ञान दूसरे को होता है, उसे भ्रम नहीं कहा जाता।

यह अविद्या-लेश भी क्या वस्तु है? क्या अविद्या का एकदेश? या अविद्या का आकारान्तर? प्रथम पक्ष युक्त नहीं, क्योंकि घटादि के समान अविद्या को सावयव पदार्थ नहीं माना जाता। द्वितीय पक्ष भी युक्त नहीं, क्योंकि अपने आकारी के निवृत्त हो जाने से उसका आकार विशेष स्थिर नहीं रह सकता। यदि कहें कि संस्कार के बल पर द्वैत-प्रतीति की अनुवृत्ति बन सकती है, निवृत्त सर्प-भ्रम के संस्कार से भय-कम्पादि की अनुवृत्ति देखी ही जाती है। सांख्याचार्यों ने भी कहा है—"ज्ञानी का शरीर संस्कार से वैसे ही स्थित रहता है, जैसे कि कुम्हार का चाक कुछ देर बिना घुमाए घूमता रहता है" ( सां० का० ६७ )। तो यह नहीं कह सकते, क्योंकि वह संस्कार भी

भिधानादिति चेत्, मैवम् , तस्याप्यविद्याकार्यत्वात्तन्निवृत्तौ तन्निवृत्तेः । अतथात्वे वा सत्त्वे द्वैतसत्यत्वापत्तेः, मिथ्यात्वे च भावरूपकार्यस्योपादानमन्तरेणानुपपत्तेः, निराश्रयत्वानुपपत्तेश्च । न चात्मैवाश्रयः, निरविद्यासंगस्य स्वतः कार्याश्रयत्वानुपपत्तेः । न च स्थितप्रज्ञगुणातीतलक्षणानां जीवन्मुक्तविषयत्वम् , साधकस्यैवावस्थाविशेषं प्राप्तस्य तत्राभिधानात् अतो न जीवन्मुक्तिर्युक्तिमतीति ।

अत्र वदामः— अविद्यालेशशब्देन मोहाकारान्तरोक्तितः ।
ज्ञानस्य प्रतिबन्धाच्च प्रबलारब्धकर्मभिः ॥ १० ॥
लेशानुवृत्तौ तज्जन्यकर्मादेरनुवृत्तितः ।
उत्पन्नात्मावबोधस्य जीवन्मुक्तिः प्रसिध्यति ॥ ११ ॥

एवं हि न्यायसुधायामाराध्यपादैरुपपादितम् , संसारमूलकारणभूताविद्या यद्यप्येकैव, तथापि तस्याः सन्त्येव बहवः आकारास्तत्रैकः प्रपञ्चस्य परमार्थसत्त्वभ्रमहेतुः, द्वितीयोऽर्थक्रियास-

---

मर्थाह—तिष्ठतीति । तदेव दूषयति—मैवमिति । अतथात्व इति । अविद्यानधीनतया अनिवृत्तावित्यर्थः । नन्वविद्याजन्यत्वाभावेऽपि मिथ्यात्वान्नाद्वैतव्याघात इति, तत्राह—मिथ्यात्व इति । भावरूपेत्यभावविलक्षणेत्यर्थः । इदं च प्रध्वसनिवृत्त्यर्थम् । दूषणान्तरमाह—निराश्रयत्वेति । ननु किमिति निराश्रयता ? यावता अविद्यासंस्कारस्याप्यविद्याश्रयभूतात्मैवाश्रयः, संस्काराधायकसंस्कारयोरेकाश्रयत्वनियमादिति, तत्राह—न चात्मैवेति । यथा निरवयवस्यैवाविद्याश्रयत्वं तद्वत्संस्काराश्रयत्वं किं न स्यादित्यत आह—कार्येति । अपरिणामित्वादितिभावः । ननु स्थितप्रज्ञलक्षणपरासु गीतासु 'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः' इत्यादिना तत्त्वसाक्षात्कारिणोऽपि दुःखाद्यनुद्वेगं दर्शयति । इतरथा क्वानुद्वेगं कुर्यात् ? तथा चतुर्दशाध्यायेऽपि गुणातीतलक्षणेषु—

'प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव । न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥

तुल्यप्रियाप्रिय'इत्यादिना प्रीत्यादिप्रतिभासोऽवसीयते इति, तत्राह—न च स्थितेति । तत्र तावदनुष्ठापकत्वाद्वचनस्यैतेषां संपादनपरं शास्त्रं तथाच साधक एवैवंगुणको भवेदित्युच्यते ? अथवा अपरोक्षज्ञानादर्वागेव काचिदुत्कृष्टामवस्था प्राप्तोऽत्र विवक्ष्यते ? सर्वथापि न जीवन्मुक्तलिङ्गत्वमित्यर्थः ।

समाधत्ते—अत्रेति । राद्धान्तहृदयं श्लोकाभ्यां संगृह्णाति सुखप्रतिपत्त्यर्थम्—अविद्येति । पूर्वार्धेनाविद्यालेशं विशदयति, तस्य च ज्ञानोदयेऽपि स्थितिमुत्तरार्धेन समर्थयते, उत्तरश्लोकेन च फलितमाह—लेशेति । अपसिद्धान्तशङ्कानिवृत्त्यै गुरुसंप्रदायप्रदर्शनपूर्वकमविद्यायाः आकारानाकारिनिवृत्तावाकारस्थितिं च दर्शयन् प्रथमार्धं विवृणोति—एवं हीत्यादिना । आराध्यपादाः स्वगुरवः ज्ञानसिद्धिकाराः ।

---

अविद्या का कार्य है, अविद्या की निवृत्ति से निवृत्त हो जायगा । यदि निवृत्त नहीं होता, तब सत्य है ? या मिथ्या ? सत्य मानने पर द्वैत-सत्यत्वापत्ति और मिथ्या मानने पर भावरूप कार्य अपने उपादान के विना नहीं रहता, अतः उसमें निराश्रयता नहीं बन सकती । आत्मा को उसका आश्रय नहीं कह सकते, क्योंकि अविद्या-रहित, असंग आत्मा स्वतः किसी कार्य का आश्रय नहीं बना करता । भगवद्गीता में जो स्थितप्रज्ञ गुणातीत के लक्षण, किए गये हैं वे जीवन्मुक्त पुरुष के नहीं, अपि तु अवस्था विशेष पर पहुँचे साधक का ही वहाँ अभिधान है, अतः जीवन्मुक्ति का मानना युक्तियुक्त नहीं ।

समाधान—'अविद्या-लेश' शब्दसे मोहके आकारान्तर का ग्रहण किया जाता है' प्रबल प्रारब्ध कर्म से प्रतिबद्ध ज्ञान अविद्या-लेश का निवर्तक नहीं होता । लेशाविद्या की अनुवृत्ति से उससे जन्य कर्मादि की अनुवृत्ति होती है,अतः आत्मवेत्ता की जीवन्मुक्ति सिद्ध हो जाती ।' न्यायसुधा में गुरुवर(ज्ञानोत्तमाचार्य)ने इस प्रकार उपपादन किया है—संसार-मूल-कारणभूत अविद्या यद्यपि एक ही है । तथापि उसके विभिन्न आकार हैं । उनमें एक आकार, प्रपञ्चगत परमार्थसत्त्व-भ्रम का हेतु होता है, दूसरा आकार अर्थक्रिया-

मर्थवस्तुकल्पक', तृतीयस्त्वपरोक्षप्रतिभासविषयाकारकल्पक । तत्राद्वैतसत्यत्वाध्यवसायेन समस्तद्वैतसत्यत्वकल्पकाकारो निवर्तते । अर्थक्रियासमर्थप्रपञ्चोपादानमायाकारस्तत्त्वसाक्षात्कारेण विलीयते । अपरोक्षप्रतिभासयोग्यार्थाभासजनकस्तु मायालेशो जीवन्मुक्तस्यानिवृत्त समाध्यवस्थाया तिरोहितोऽन्यदा देहाभासजगदाभासहेतुतयानुवर्तते । प्रारब्धकर्मफलोपभोगावसाने तु निवर्तते । श्रुतिरपि 'इन्द्रो मायाभि. पुरुरूप ईयत'इत्याद्या माया विविधाकारां दर्शयति । न च लेशस्यापि विरोधितत्त्वज्ञानोदयान्निवृत्ति किं नस्यादिति वाच्यम् , प्रबलै प्रारब्धकर्मभिर्ज्ञानस्य प्रतिबद्धत्वात् । तथाहि—विद्यार्थानि कर्माणि कर्मान्तरारब्धशरीरे फलं जनयन्ति । अन्यथा ज्ञानार्थानामपि कर्मणां भोगार्थत्वप्रसङ्गात् । तथा च शरीरारम्भककर्माण्युपजीव्य ज्ञानार्थानि कर्माणि तदविरोधेन स्वफल प्रयच्छन्तीति युक्तम् । तथा च तै प्रतिबद्धशक्तित्वात्तत्त्वज्ञानमविद्यालेश न निवर्तयति । न च कर्मणामप्यविद्याकार्यतया तन्निवृत्तौ

पादशब्दश्च पूजार्थस्तत्प्रणीत च वेदान्तप्रकरण न्यायसुधा । अपरोक्षेति । अपरोक्षप्रतिभासविषयभूता य आकारः पारमार्थिकत्वार्थक्रियासामर्थ्यरहिततया ज्ञातस्यापि प्रपञ्चस्य शुक्तिरजतादिवत्तत्समर्थकस्तृतीय आकार इत्यर्थः । एतेषा च क्रमेण निवर्तकज्ञानशरीराणि दर्शयति—तत्रेत्यादिना । तत्त्वसाक्षात्कारेणेति । अद्वैतात्मवस्तुसाक्षात्कारेणेत्यर्थः । ननु यदि साक्षात्कारे जातेऽपि जीवन्मुक्तस्य समाध्यवस्थाया तिरोहितोऽन्यदा चोद्बुद्धो वर्तेत कश्चिदाकार , केन तर्हि तस्य निवृत्तिस्तत्राह—प्रारब्धेति । उक्तार्थे श्रुतिमपि प्रमाणयति—श्रुतिरपीति । इन्द्रः परमेश्वरः । इदि परमैश्वर्ये इति भैमसेनिस्मृतेः । आदिशब्देन 'भूयश्चान्ते विश्वमायानिवृत्ति'रित्याद्या गृह्यन्ते । 'माया तु प्रकृति'मित्यादावेकत्वेन प्रतिपादितमायाया मायाभिरित्यादिबहुत्वाभिधानमाकारभेद एव घटत इतिभाव । उत्तरार्धं व्याचष्टे—न च लेशस्यापीत्यादिना । इदानीं प्रारब्धकर्मणा ज्ञानापेक्षया प्राबल्यमुपजीव्यतयोपपादयति—तथा हीत्यादिना । नन्वन्यैरेव कतिभिश्चित्कर्मभिर्ज्ञानार्थमेव देहमुत्पाद्य तत्त्वज्ञानमुत्पाद्यता किमिति कर्मान्तरारब्धशरीरोपजीवन ज्ञानोत्पादकानाम्, तथाच ज्ञानोत्पत्तौ देहनिवृत्तेर्न जीवन्मुक्तिरिति, तत्राह—अन्यथेति । भवतु कर्मान्तरारब्धशरीरे फलजनकत्वमेषा ततः किमिति, तत्राह—तथा चेति । ननु भवतु ज्ञानोत्पादककर्मणा प्रारब्धकर्मापेक्षया दौर्बल्यम्, ज्ञानस्य तु किमायात येनोत्पन्न ज्ञान तानि न निवर्तयतीति, तत्राह—तथा च तैरिति । उत्पद्यमानमेव तावत्यशे प्रतिबद्धशक्तिक कारणवशादुत्पद्यतामिति भावः । यत्तु प्रारब्धकर्मणा निरुपादानतया स्थितिरेव नोत्पद्यते, कुतः प्रतिबन्धकत्वमित्युक्तम्, तत् परिहरति—न च कर्मणामिति ।

समर्थवस्तु का कल्पक है, तीसरा आकार अपरोक्ष प्रतीति के विषयाकार का कल्पक माना जाता है । उनमे अद्वैत-सत्यत्व का निश्चय हो जाने पर पहला समस्त द्वैतगत सत्यत्व का कल्पक आकार निवृत्त हो जाता है । दूसरा अर्थक्रिया-समर्थ प्रपञ्च का उपादानभूत मायाकार, तत्त्व-साक्षात्कार से विलीन हो जाता है । तीसरा अपरोक्ष-प्रतीति-योग्य अर्थाकार ( माया-लेश ) जीवन्मुक्त का निवृत्त नही होता । हाँ, समाधि अवस्था मे वह तिरोहित होता और अन्य काल मे देह और जगद् के आभास का हेतु होकर अनुवृत्त रहता है । प्रारब्ध कर्म का फलोपभोग पूरा हो जाने पर निवृत्त हो जाता है । "इन्द्रो मायाभि पुरुरूप ईयते" ( ऋ० सं० ६।४७।१८ ) आदि श्रुतियाँ भी माया के विविध आकार दिखाती है । विरोधी तत्त्वज्ञान के उदय हो जाने से भी अविद्या-लेश निवृत्त नही होता—इसका कारण है—प्रबल प्रारब्ध कर्मों से ज्ञान का प्रतिबद्ध होना । आशय यह है कि ज्ञान-जनक कर्म, कर्मान्तर से आरब्ध शरीर मे अपना फल उत्पन्न करते है । अन्यथा ज्ञान-जनक कर्म भी भोगार्थक हो जायँगे । अत शरीर-आरम्भक कर्मों का आश्रय लेकर ज्ञान-जनक कर्म प्रारब्ध कर्म का विरोध न करते हुए ही अपना फल देते है । इसलिए उन प्रारब्ध कर्मो से प्रतिबद्धशक्तिक होने के कारण तत्त्वज्ञान अविद्या-लेश का नाशक नही होता । 'समस्त कर्म अपनी जनक अविद्या की निवृत्ति से

निवृत्ति', तज्जनकाविद्यालेशस्यानिवृत्तेः। नन्वेवं सतीतरेतराश्रयत्वम्—तत्त्वज्ञानशक्तिप्रतिबन्धककर्मणामवस्थानादविद्यालेशानुवृत्तिः, तदनुवृत्तौ च कर्मणामनुवृत्तिरिति, मैवम्, 'भूयश्चान्ते विश्वमायानिवृत्ति'रित्यत्र भूयोनिवृत्तिरिति विशेषणादुभयविधमायाकारनिवृत्तेराकारान्तरानुवृत्तेश्च मानान्तरेणाधिगमात्, प्रतीतावितरेतराश्रयत्वाभावात्। 'अन्ते विश्वमायानिवृत्ति' इति च श्रवणात्, प्रारब्धफलककर्मलक्षणस्य विद्याशक्तिप्रतिबन्धकस्य फलोपभोगेन निवृत्तौ प्रतिबन्धाभावे तत्त्वज्ञानाग्निशेषाविद्यानिवृत्तिरिति प्रतीतेश्च। अत एव 'क्षीयन्ते चास्ये'ति सामान्यश्रुते प्रारब्धकर्मव्यतिरिक्तकर्मनिवृत्तिपरत्वोपपत्ति, 'तस्य तावदेव चिर'मिति विदुष प्रारब्धकर्मतत्कार्ययोरवस्थानाधिगमाच्च, 'तद्धास्य विजज्ञा'विति विस्पष्टज्ञानोपजननस्याश्चर्यवत्प्रतिपादनात् परोक्षज्ञानविषयत्वानुपपत्तेः। अन्यथा श्रुतवाक्यस्य परोक्षज्ञानस्यावश्यभावितया तत्प्रतिपादनवैयर्थ्यात्। न च ज्ञानिनस्तत्त्वदर्शिन.'

---

निरुपादानकत्वमसिद्धमित्यर्थः। ज्ञप्तावितरेतराश्रय शङ्कते—**नन्वेवमिति**। नात्र प्रारब्धकर्मभिरेवाविद्यालेशावगतिः श्रुतिवशादपि शक्याधिगमत्वादिति परिहरति—**मैवम्, भूयश्चेति**। 'तस्याभिध्यानाद्योजनात्तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्ति'रिति श्वेताश्वतराणा मन्त्रोपनिषदि श्रूयते। अत्र च भूयोनिवृत्तिर्विश्वमायानिवृत्तिरिति प्रतीयते, तत्र विश्वग्रहणेनानेकमायाकारप्रतीतिस्तेषा च क्रमेण निवृत्तिर्भूयोनिवृत्तिरिति पौन.पुन्यापरपर्यायक्रियासमभिहाराभिधायिना भूयःशब्देनावगम्यते। अन्ते निवृत्तिरित्यनेन विदेहकैवल्यावस्थाया विलीयमानः कश्चिदाकारः प्रतीयते। **अन्ते विश्वमायानिवृत्तिरिति** च पूर्वमशेषमायाऽनिवृत्तिरिति च प्रतीयते। तदेव प्रारब्धकर्मणा प्रमाणमार्गेण विदेहनिर्वाणावस्थानाधिगमात्, 'क्षीयन्त'इति सामान्यश्रुति. सकोचमर्हतीत्याह—**अत एवेति**। ननु 'तस्य तावदेवे'ति श्रुतिः परोक्षज्ञानविषयतया प्रत्याख्यातेति, तत्राह—**तद्धास्येति**। तेन ह्याश्चर्यं द्योत्यत इत्यर्थः। ननु परोक्षज्ञानोत्पत्ताविदमाश्चर्यमस्तु श्रुतेः, भवति हि मूर्खेष्वनुत्पद्यमान परोक्षज्ञानमपि बुद्धिमत्सूत्पद्यमानमाश्चर्यहेतुरिति, तत्राह—**अन्यथेति**। अधीतवेदो विदितपदतदर्थसगतिकः श्रवणेऽधिक्रियते, नच तस्य परोक्षज्ञानसाधनोत्पत्तिराश्चर्यहेतु. प्रत्युतानुत्पत्तौ गर्हैव स्यादिति भावः। स्मृतेरन्यथासिद्धि परिहरति—**न च ज्ञानिन इति**। किंचा-

---

निवृत्त हो जाते हैं'—यह कहना संगत नहीं, क्योंकि प्रारब्ध कर्म के जनक अविद्या-लेश का नाश नहीं होता। यदि कहें कि इस प्रकार तो अन्योन्याश्रय होता है—तत्त्वज्ञान-शक्ति-प्रतिबन्धक कर्मों की अनुवृत्ति के ज्ञान से अविद्या-लेश की अनुवृत्ति का ज्ञान और अविद्या-लेश की अनुवृत्ति के ज्ञान से उन कर्मों की अनुवृत्ति का ज्ञान होता है। तो यह नहीं कह सकते, क्योंकि यहाँ प्रारब्ध कर्मों के ज्ञान से अविद्या-लेश का ज्ञान नहीं किया जाता, अपि तु "भूयश्चान्ते विश्वमायानिवृत्तिः"—यहाँ 'भूयो निवृत्ति' विशेषणों से पूर्वोक्त द्विविध माया-आकारों की निवृत्ति और तीसरे आकार की अनुवृत्ति का ज्ञान होता है, अत ज्ञानों मे अन्योन्याश्रयता नहीं। "अन्ते विश्वमायानिवृत्ति"—इस वाक्य के आधार पर ज्ञान-शक्ति-प्रतिबन्धकरूप प्रारब्ध कर्म की फलोपभोग से निवृत्ति होने पर प्रतिबन्धक-शून्य तत्त्वज्ञान से नि शेष अविद्या की निवृत्ति होती है—यह सिद्ध होता है। अत एव "क्षीयन्ते चास्य कर्माणि"—इस सामान्य श्रुति का प्रारब्ध कर्म से इतर कर्म का ही तत्त्वज्ञान से सद्य प्रक्षय-बोधन मे तात्पर्य मानना उचित है, क्योंकि "तस्य तावदेव चिरम्"—इस श्रुति से विद्वान् के प्रारब्ध कर्म और उसके कार्य का अवस्थान निश्चित होता है। "तद्धास्य विजज्ञौ"—यह श्रुति विस्पष्ट ज्ञानोपजनन में आश्चर्यवत्ता का प्रतिपादन करती है, अत परोक्षज्ञान-विषयक "तस्य तावदेव चिरम्"—यह श्रुति नहीं हो सकती। अन्यथा वाक्य के श्रोता को परोक्ष ज्ञान का होना तो अवश्यम्भावी है, उसका प्रतिपादन ही व्यर्थ होगा। "ज्ञानिनस्तत्त्व-

इति स्मृति. परोक्षनिश्चयवतस्तदभ्यसनशीलस्य प्रतिपादिका, दर्शनशब्देन साक्षात्कारस्यैवं रूपादिदर्शनस्येवाभिधानात् । स्वात्मनि चापरोक्षे परोक्षज्ञानस्य विभ्रमत्वात् । न च सुखादिविषयपरकीयानुमानादिज्ञाने व्यभिचार । स्वापरोक्षस्य स्वपरोक्षज्ञानविषयत्वे विभ्रमत्वाङ्गीकारात् ।

न चाकारिनिवृत्तौ तदाकारावस्थानासंभव, सामान्यविशेषघटितस्यापि वस्तुनो विशेष निवृत्तौ सामान्याकारावस्थानस्य परीक्षकैरभ्युपगमात् । न च साधक एवावस्थाविशेषं प्राप्त स्थितप्रज्ञो गुणातीतश्च, 'प्रजहाति यदा कामा'नित्याद्यभिहितविशेषणाना तत्रानुपपत्ते. । नहि सर्वकामाना विमोक परमात्मसाक्षात्कारमन्तरेणोपपन्न । 'रसवर्जं रसोऽप्यस्य पर दृष्ट्वा निवर्तते' इति स्मरणात्, 'यदा सर्व प्रमुच्यन्ते कामा येऽस्य हृदि श्रिता, अथ मर्त्योऽमृतो

---

परोक्षे परोक्षज्ञान विभ्रान्तमेव । नच परस्य परात्मानुमाने व्यभिचार । स्वापरोक्षे स्वपरोक्षविज्ञानस्य विभ्रमत्वाव्यभिचारादित्याह—**स्वात्मनि चेति**। यत्त्वाकार्यविद्यानिवृत्तावाकारावस्थितिर्न सम्भवतीत्युक्तम्, तत्परिहरति—**न चाकारीति** । अनुवृत्तव्यावृत्तात्मक हि समस्त वस्तु भाट्टैरभिप्रेयते । यथाहुः—

'कार्यरूपेण नानात्वमभेद. कारणात्मना । हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा'इति ।

तत्र यथा कटककेयूराद्याकारनाशेनाकारिनिवृत्तावप्याकारान्तरस्यानुवृत्स्यानिवृत्तत्त्विस्तथेत्यर्थः ।

यदि चात्र तार्किको विप्रतिपद्येत त प्रति सामान्यविशेषयोरत्यन्तभेदस्य समवायस्य च चिरातीतखण्डनस्मारणेन समतिरानेतव्या । नचाकारादतिरिक्ताकार्यपि निरूपणसहिष्णुः यन्निवृत्त्याऽस्यापि निवृत्तिरापाद्येत । ननु तथाप्यविद्याया कोऽयमाकार. ? किमवयवः ? कि वा तद्धर्म. ? नोभयथापि । किं तर्हि अविद्यैवावस्थान्तरमापन्ना । विचित्रशक्तिर्ह्यविद्याऽतः प्रारब्धभोगकर्मतत्कारणमात्ररूपेण तिष्ठतीत्यभ्युपेयम् । किञ्च स्थितप्रज्ञत्वेन च गुणातीतत्वेन च जीवन्मुक्तमेव भगवद्गीता प्रतिपादयति, न साधक शमादिसम्पन्नमपि, तस्यात्मसाक्षात्काराभावेन तत्प्रयुक्तसकलकामप्रहाणाभावादित्याह—**न चेत्यादिना** । साधक फलायोपात्तशमादिसाधनः । अवस्थाविशेषम् उपसर्जनीभूतमनोनाशवासनाक्षयाभ्यासशालित्वरूपम् । अन्त करणधर्माणा कामानां निवृत्ति प्रति विविक्तात्मसाक्षात्कार एव हेतुरित्येतदपि तत्रैव दर्शितमित्याह—**रसेति** । रसः कामः, दृष्ट्वा साक्षात्कृत्य । एतदेव श्रुतिरारण्यकी प्रकाशयतीत्याह—**यदेति** ।

---

दर्शिनः"—यह स्मृति भी परोक्ष निश्चयवाले तत्त्वाभ्यसनशील का प्रतिपादन नहीं करती, क्योंकि 'दर्शन' शब्द से 'रूपादि-दर्शन' के समान साक्षात्कार का ही अभिधान है। अपने अपरोक्ष आत्मा में परोक्ष ज्ञान विभ्रम ही है। सुखादि विषयक परकीय अनुमानादि ज्ञान मे जो व्यभिचार दिखाया था। वह युक्त नही, क्योकि स्वापरोक्ष में स्वपरोक्षज्ञान-विषयता होने पर ही विभ्रम माना जाता है। यह जो कहा था कि आकारी के निवृत्त हो जाने पर आकार का स्थित रहना सम्भव नही। वह कहना युक्त नही, क्योकि सामान्य-विशेष घटित वस्तु के विशेषाकार की निवृत्ति हो जाने पर सामान्याकार की स्थिति परीक्षक मानते है। यह जो कहा था कि साधक ही अवस्था विशेष मे पहुचकर स्थितप्रज्ञ, गुणातीत लक्षणो का लक्ष्य होता है। वह कहना भी अयुक्त ही है, क्योकि उसमें "प्रजहाति यदा कामान्"—आदि कथित विशेषण घट नही सकते, सर्व काम-निवृत्ति, परमात्म-साक्षात्कार के विना कभी उपपन्न ही नही हो सकती, क्योकि स्मृति कहती है—"रसवर्जं, रसोऽप्यस्य परं दृष्ट्वा निवर्तते" (विषय के लिए हृदयगत सूक्ष्म औत्सुक्य भी परब्रह्म दर्शन से निवृत्त हो जाता है गी० २।५९) श्रुति भी कहती है—

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदिश्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥" (बृ० उ० ४।४।७)

अर्थात् जब कि हृदय की सभी कामनाएँ निवृत्त हो जाती है, तब यह जीव अमर हो जाता है,

भवत्यत्र ब्रह्म समश्नुत'इतिश्रुतेश्च । तदेव श्रुतिस्मृतिपुराणादिष्वाघुष्यमाणा जीवन्मुक्ति प्रद्वेषमात्रेण नापलपितु शक्यत इति सिद्धम् ॥

इति श्रीगौडेश्वराचार्यपरमहसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्य-
श्रीमत्परमहसपरिव्राजकाचार्यश्रीचित्सुखमुनि
विरचिताया तत्त्वप्रदीपिकाया
चतुर्थ. परिच्छेद ॥ ४ ॥



फलितमाह—तदेवमिति ।

इति श्रीमत्परमहसपरिव्राजकाचार्यप्रत्यक्प्रकाशपूज्यपादशिष्यस्य प्रत्यकस्वरूप
भगवत' कृतौ तत्त्वप्रदीपिकाटीकाया नयनप्रसादिन्या
चतुर्थः परिच्छेद' ॥ ४ ॥



इसी जन्म में ब्रह्म की प्राप्ति कर लेता है । इस प्रकार श्रुति, स्मृति, इतिहास, पुराणादि मे प्रतिपादित जीवन्मुक्ति का केवल द्वेष से अपलाप नही किया जा सकता—यह सिद्ध हो गया ॥

प्रत्यक्तत्त्वप्रकाशा श्रुतिरवरुचिरा हसपीठावतसा,
स्वच्छच्छेदैश्चतुर्भिः कलितभुजलता तालपर्णादिवासा ।
मायामायां क्षिपन्ती मृदुतरहसितैः चित्सुधाश्रुपराग,
वाग्देवी चित्सुखीय भवतु सुखवहा चारु नि.श्रेयसे न ॥

दिशां नग्नताऽपाकृता कीतिवस्त्रै,
यदीयैः सुनिष्णातकै स्नातकैस्तै ।
तमेतं कथ न स्मरामो महान्तम्,
उदासीनविद्यालय काशिकेयम् ॥

परोपकारैकपरायणा ये,
गीर्वाणवाणीशरणार्पका मे ।
औदास्यदीक्षागुरवो मदीयाः,
जयन्ति पूज्या ऋषिरामपादा ॥

इति श्रीमत्परमहपरिव्राजकाचार्यस्वामि-
ऋषिरामशिष्यस्वामियोगीन्द्रानन्द-
कृततत्त्वप्रदीपिकानुवादे
चतुर्थ परिच्छेद'
॥ सम्पूर्णोऽय ग्रन्थः ॥



# परिशिष्टम्

## ( १ )

## तत्त्वप्रदीपिकास्थपूर्वोत्तरपक्षसंग्राहकश्लोकावलिः

### प्रथमः परिच्छेदः

स्तम्भाभ्यन्तरगर्भभावनिगदव्याख्याततद्वैभवो,
य पाञ्चाननपाञ्चजन्यवपुषा व्यादिष्टविश्वात्मत ।
प्रह्लादाभिहितार्थतत्क्षणमिलद्दृष्टप्रमाण हरि,
सोऽव्यात्. शरदिन्दुसुन्दरतनु सिंहाद्रिचूडामणि ॥१॥
ज्योतिर्यद् दक्षिणामूर्तिव्यासशंकरशब्दितम् ।
ज्ञानोत्तमाख्यं तद्वन्दे सत्यानन्दपदोदितम् ॥२॥
विप्रतिपत्तिव्रातध्वान्तध्वसप्रगल्भवाचाला ।
क्रियते चित्सुखमुनिना प्रत्यक्तत्त्वप्रदीपिका विदुषा ॥३॥
प्रमाणनखनिर्भिन्नमहामोहामरारये ।
नमस्कुर्मो नृसिंहाय स्वप्रकाशचिदात्मने ॥४॥
अपरोक्षव्यवहृतेर्योग्यस्याधीपदस्य न ।
संभवे स्वप्रकाशस्य लक्षणासंभव. कुतः ॥१॥
सामान्यतोऽनुमानेन प्रसिद्धेऽपि विशेषणे ।
कथं कथय पक्षोऽयमप्रसिद्धविशेषण. ॥२॥
चिद्रूपत्वादकर्मत्वात्स्वयंज्योतिरिति श्रुतेः ।
आत्मन. स्वप्रकाशत्व को निवारयितु क्षम. ॥३॥
संबन्धस्याश्रयत्वेन विज्ञानासमवायिन ।
इन्द्रियत्वाविघाताच्च मन प्रत्यक्षमात्मवत् ॥४॥
तमालश्यामलज्ञाने निर्बाधे जाग्रति स्फुटे ।
द्रव्यान्तर तम. कस्मादकस्मादपलप्यते ॥५॥
चक्षुः प्रकाशनाजन्यरूपवद्वीक्षणक्षमम् ।
रूपिग्राहीन्द्रियत्वेन यथैव स्पर्शनेन्द्रियम् ॥६॥
सर्वेषामपि भावानामाश्रयत्वेन संमते ।
प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता ॥७॥
अंशिन स्वांशगात्यन्ताभावस्य प्रतियोगिनः ।
अंशित्वादितरांशीव दिगेषैव गुणादिषु ॥८॥
अनादिभावरूपं यद्विज्ञानेन विलीयते ।
तदज्ञानमिति प्राज्ञा लक्षणं सम्प्रचक्षते ॥९॥
देवदत्तप्रमा तत्स्थप्रमाभावातिरेकिणः ।
अनादेर्ध्वंसिनी मात्वादविगीतप्रमा यथा ॥१०॥
स्वीकारे विभ्रमाणां स्यात् स्वीयसिद्धान्तबाधना ।
अनभ्युपगमे तेषामाश्रयासिद्धिरुद्धता ॥११॥

नयनं नयनोद्भूतसम्यग्ज्ञानातिरेकिण: ।
ज्ञानस्य कारण तत्त्वाद्यथैव नयनान्तरम् ॥१२॥
प्रत्येकं सदसत्त्वाभ्यां विचारपदवी न यत् ।
गाहते तदनिर्वाच्यमाहुर्वेदान्तवेदिन. ॥१३॥
एकालम्बनसंसर्गनिषेधे सदसत्त्वयो: ।
धर्मत्वाद्रूपरसवत् सिद्धानिर्वचनीयता ॥१४॥
दृष्टचैत्रसुतोत्पत्तेस्तत्पदाङ्कितवाससा ।
वार्ताहारेण यातस्य परिशेषविनिश्चिते. ॥१५॥
विवादाध्यासित' सिद्धः शब्दव्युत्पत्तिगोचरः ।
मेयत्वान्न्यायगम्यत्वात्तवाभिमतकार्य्यवत् ॥१६॥
कार्य्यस्यावगतेर्हेतु र्यादृश हितसाधनम् ।
प्रवृत्तेस्तादृशं हेतुर्व्यभिचारस्ततः कुत ॥१७॥
विवादाध्यासिता शब्दा. क्रियाकार्य्याभिधायिन ।
कार्य्यप्रत्ययहेतुत्वाद् आनयेत्यादिशब्दवत् ॥१८॥
संसर्गासंगिसम्यग्धीहेतुता या गिरामियम् ।
उक्ताखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ॥१९॥
सत्यज्ञानादिगीरेतत्संसर्गव्यतिरेकिणि ।
अर्थे प्रमाण मानत्वान्नयनादि प्रमाणवत् ॥२०॥
आहुर्विज्ञानसामग्रीजन्यत्वे सत्यजन्यता ।
तदन्यतःप्रमायास्तत्स्वतस्त्वमिति तद्विद. ॥२१॥
प्रमा विज्ञानसामग्रीजन्यत्वे सति नान्यतः ।
जायते व्यतिरिक्तत्वाद् अप्रमात पटादिवत् ॥२२॥
परास्य शक्तिर्विविधा सर्गाद्या भावशक्तय ।
इति श्रुतिस्मृतिमिता शक्ति' केन निवार्य्यते ॥२३॥
स्थितिस्थापकधर्मान्यातीन्द्रियाद्विष्ठसश्रयः ।
दहनो गुणयोगित्वाद् गुरुत्वाश्रयकुम्भवत् ॥२४॥
विनाभिधेयस्मरणम् अन्वयाप्रतिपति' ।
तत्तत्पदार्थस्मृतय' तेषामन्वयबोधिकाः ॥२५॥
शब्दास्तात्पर्य्यविषयव्यतिषङ्गस्य लक्षका ।
तत्तात्पर्य्याभिधानत्वात् क्ष्वेलं भुङ्क्ष्वेतिशब्दवत् ॥२६॥
श्रुतीनामीश्वराज्जन्म केवलं श्रुतिषु श्रुतम् ।
मानान्तरोपलब्धेऽर्थे रचना तु न मीयते ॥२७॥

## द्वितीयः परिच्छेदः

सापेक्षत्वात् सावधेश्च तत्त्वेऽद्वैतप्रसंगतः ।
एकाभावादसंदेहात् न रूपं वस्तुनो भिदा ॥ १ ॥
युगपद्ग्रहणायोगाद् अनवस्थाप्रसंगत. ।
परस्पराश्रयत्वाच्च धर्मभेदेऽपि नाक्षधीः ॥ २ ॥

नान्योन्याभावरूपोऽयं द्वैताभावप्रसगतः ।
तादात्म्यस्याप्यमानत्वात् प्रतियोग्यनिरूपणात् ॥ ३ ॥
अव्याप्तेरतिव्याप्तेर्द्रव्यं नैव गुणाश्रय ।
आद्ये क्षणे गुणाभावाद् गुणादावपि वीक्षणात् ॥ ४ ॥
द्रव्यत्वजातियोगित्वमपि नो द्रव्यलक्षणम् ।
तज्जातिव्यञ्जकाभावात् तन्मानस्यानिरूपणात् ॥ ५ ॥
सामान्यवानगुण इत्याद्यप्यस्य न लक्षणम् ।
अन्योन्याश्रयतापत्ते गुणस्याद्याप्यसिद्धित ॥ ६ ॥
गुणत्वजातियोगोऽपि न भवेद् गुणलक्षणम् ।
अन्योन्याश्रयदुष्टत्वात् जातेस्तद्व्यञ्जकस्य च ॥ ७ ॥
यथा श्रुतेऽसंभवित्वान्निरुक्तेरप्ययुक्तित ।
नानपेक्षतया हेतु कर्मयोगविभागयो ॥ ८ ॥
नैव व्याप्तेरसिद्धत्वात् अनध्यवसितत्वत. ।
यौगपद्यप्रतीतेश्च प्रत्यक्षत्वमुपेयुषाम् ॥ ९ ॥
अतिव्याप्त्या निराकुर्यादाद्यं पक्षचतुष्टयम् ।
अनेकत्वानिरुक्तेश्च पक्षमन्त्यं प्रतिक्षिपेत् ॥१०॥
जातेरव्याप्यसिद्धेश्च सत्तादेरप्यसिद्धित' ।
तदनाश्रयताऽन्यत्वलक्षणेऽन्योऽन्यसंश्रय ॥११॥
नित्यद्रव्यैकवृत्तित्वम् अयोगपरिहारत. ।
न लक्षणमतिव्याप्ते तवात्मत्वमनस्त्वयो ॥१२॥
आश्रयासिद्धिदुष्टत्वाद् अप्रसिद्धविशेषणात् ।
प्रमाणतामश्नुवीत न प्राभाकरभाट्टयो' ॥१३॥
न स्यादयुतसिद्धयादि समवायस्य लक्षणम् ।
विशेषणविशेष्यत्वसम्बन्धे व्यभिचारत ॥१४॥
घटस्तद्वृत्त्यनित्यान्यभावसम्बन्धवानयम् ।
संबन्धित्वादिति स्याच्चेन्नाभावे व्यभिचारत ॥१५॥
सिद्धे भेदे विरोधे च धर्मयोर्धर्मिभेदधी ।
तयोर्नाद्यापि संसिद्धिर्धर्मिभेदस्तदा कुत. ॥१६॥
अन्यत्र लिंगेन्द्रिययोरन्योन्यनिरपेक्षयो ।
दृष्टं सम्भूयकारित्वं विशिष्टानुमिति प्रति ॥१७॥
मानाधीना मेयसिद्धि र्मानसिद्धिश्च लक्षणात् ।
तच्चाध्यक्षादि मानेषु गीर्वाणैरपि दुर्भणम् ॥१८॥
अनिरुक्तेरवधृतेरतिव्याप्तेर्द्वयोरपि ।
अव्याप्तेर्विभ्रमाभेदाज्जातिसाङ्कर्यशङ्कित' ॥१९॥
आद्यकल्पेष्वतिव्याप्तेरव्याप्तेश्चान्त्ययोर्द्वयो. ।
न मिथ्याध्यवसायत्वं विपर्यासस्य लक्षणम् ॥२०॥
आद्ये कल्पेऽधिकव्याप्तेर्द्वयोश्चासंभवित्वतः ।
तुर्येऽतिव्याप्तितश्चान्त्येऽभावाद् व्यञ्जकमानयोः ॥२१॥

प्रमितेर्दुर्निरूपत्वाद् व्यञ्जकस्यानिरूपणात् ।
साक्षात्त्वं जातिसांकर्य्यान्न प्रत्यक्षस्य लक्षणम् ॥२२॥
किं व्यक्त्योरथवा जात्योस्तद्वतोर्वा विशेषयो ।
व्याप्तिस्त्वयेष्यते किं वा साध्यसाधनत्त्वयो. ॥२३॥
सा न व्यक्त्योस्तदानन्त्यान्न जात्योस्तदसंभवात् ।
न तद्वतोरुक्तदोपात् न च चतुर्थोऽनिरूपणात् ॥२४॥
न प्रत्यक्षमशक्यत्वात् नानुमाऽप्यनवस्थिते ।
नागमस्तद्दते भावान्नोपमाऽतत्प्रमेयत. ॥२५॥
नार्थापत्तिरनन्यत्वादनुमाफललोपनात् ।
नाभावो दुर्निरूप्यत्वान्न तर्कस्तर्कबाधनात् ॥२६॥
पूर्वोदितेन न्यायेन पक्षस्यैवानिरूपणे ।
कथं तद्वचनं वाच्य प्रतिज्ञेतिविपश्चिता ॥२७॥
अनुमानांगयो सिद्धेर्व्याप्तिपक्षगतत्वयो ।
उदाहृतेरुपनयात् पञ्चावयवता मुधा ॥२८॥
भूयोऽवयवसामान्य सादृश्य यच्च गोगतम् ।
विज्ञातमविकल्पेन प्रत्यभिज्ञायते यत ॥२९॥
वाचको गवयस्यायं तत्र वृत्त्यन्तरेऽसति ।
वृद्धै प्रयुज्यमानत्वाद् गोत्वे गौरितिगीरिव ॥३०॥
शब्दो मानं विवक्षायां ज्ञानेऽर्थे वा भवन्भवेत् ।
नाद्यौ तद्व्यभिचारित्वात् नान्त्य सगत्योगत: ॥३१॥
आप्तोदीरितवाक्येपु मालतीमाधवादिपु ।
व्यभिचारान्न तद्युक्तमाप्तत्वस्यानिरुक्तित ॥३२॥
आगमस्य बहिर्देशविपयत्वस्य कल्पनात् ।
प्रागेव देवदत्तस्य गृहेऽभावो मितो न वा ॥३३॥
आद्येऽनुमान तेनैव निष्प्रत्यूह प्रवर्तताम् ।
द्वितीये कल्पकाभावाद् अर्थापत्त्युदय. कुत ॥३४॥
तदसिद्धिरतिव्याप्ति सक्ति. सप्रतिसाधने ।
असंभवोऽतर्कता च दोपा. तेषा क्रमादमी ॥३५॥
केवलानुपलम्भस्य व्यभिचारनिवारिणी ।
योग्यता चेत्कुतो न स्यादनुमानमभावधी. ॥३६॥
सर्वस्य प्रतियोगित्वाद् दुर्लभा तदनिष्टता ।
द्विधाप्यात्माश्रयत्वाच्च न स्वशब्दो विशेषणम् ॥३७॥
अर्थान्तरत्वादाद्यस्य परस्योपाधिमत्त्वत ।
अन्त्यस्याभासतुल्यत्वात् प्रतिसाधनरोधनात् ॥३८॥
प्रमितत्वस्य वैयर्थ्यात् सिद्धस्यैवाश्रयत्वत. ।
देहात्मतावन्नियमाल्लक्षणैश्च व्यवस्थित: ॥३९॥
अन्योऽन्यसंश्रयापत्तेरतिव्याप्तिप्रसंगत. ।
अव्याप्तेरजसंयोगे द्रव्यत्वाद्यनिरूपणात् ॥४०॥

संयोगस्यापृथक्त्वेऽपि व्याहारव्यवहारयो' ।
समवाय इवोत्थानाद् वृथासामान्यकल्पना ॥४१॥
आत्माश्रयादतिव्याप्तेरयोगाद्व्यभिचारत ।
विशेषणाप्रसिद्धेश्च न विभाग प्रसिद्ध्यति ॥४२॥
सयोगस्य निरस्तत्वाद् गुणानामनिरूपणात् ।
जातेश्च दुर्निरूपत्वात् स्यादसभवि लक्षणम् ॥४३॥
प्रत्यक्षस्यान्यथासिद्धि स्यादेकत्वसमुच्चये ।
अनुमाऽप्याश्रयासिद्धिसाध्यवैकल्यदूपिता ॥४४॥
न च प्रमाणं संख्यायामप्येकत्वादिबुद्धय ।
गुणादिष्वपि तद्भावात् तद्बाधस्यानिरूपणात् ॥४५॥
प्रत्यक्षादनुमानाद्वा न जाति सेद्धुमर्हति ।
व्यञ्जकैरन्यथासिद्धे तद्वृत्तेश्चानिरूपणात् ॥४६॥
अद्रव्यवान्न सयोग साङ्कर्य्यान्नेतरावपि ।
पदार्थान्तरतापत्तेर्नान्यसंवन्धसभव ॥४७॥
परमाणुवहुत्वेन महत्वारम्भसंभवात् ।
त्र्यणुके द्व्यणुकारम्भप्रक्रियाऽपि न सिद्ध्यति ॥४८॥
परिमाणस्यसिद्धत्वे तदारम्भविचारणा ।
नाद्याऽपि सिद्धस्तदभावोऽभावाल्लक्षणमानयो ॥४९॥
आद्यस्योपाधिमत्त्वेन साध्याभावान्निदर्शने ।
द्वितीयस्योभयत्रापि प्रतिसाधनरोधनात् ॥५०॥
तत्त्वेन प्रत्यभिज्ञानात् तदाधेयानिपातत' ।
सख्याप्रमाणयोरैक्यादन्यथापाकसभवात् ॥५१॥
कालस्याहेतुतापत्तेर्नाधितोऽन्योन्यसंश्रयात् ।
स्वात्मवृत्तेरयुक्तत्वात् नियतत्वानिरुक्तित. ॥५२॥
हेतुसाकल्यरूपाया सामग्र्या तदसम्भवात् ।
कारणत्वानिरुक्तौ च सहकार्य्यनिरूपणात् ॥५३॥
जातेरहेतुतापत्ते रासभेऽतिप्रसक्तित ।
गगनादिषु चाव्याप्तेरन्वयादेरयोगतः ॥५४॥
अतिव्याप्ते स्ववृत्तित्वाद्भेदेऽभेदेऽप्यसंभवात् ।
कार्य्यस्य हेतुभि सिद्धेर्वृथा साकल्यकल्पना ॥५५॥
व्यापाराव्यापानादात्माश्रयत्वाद्निरुक्तित ।
समवायेऽस्य हेतुत्वे पूर्वदोपानुपङ्गत. ॥५६॥
असिद्धे प्रतिन्बधस्य नृश्टङ्गादावभावत ।
सत्त्वे सतीति चायुक्त दृष्टान्तादेरसिद्धित' ॥५७॥
अनिरुक्तेरतिव्याप्तेरव्याप्ते. तदसंभवात् ।
अतिप्रसगतोऽव्याप्ते मतुबर्थानिरूपणात् ॥५८॥
प्रत्यक्षागोचरत्वेन परत्वादेरलिगत. ।
स्वरूपतोऽनिमितत्त्वाद् उपाधौ निष्फलत्वत. ॥५९॥

दिवाकरपरिस्पन्द—पिण्डसगतिसभवात् ।
व्यापिनश्चेतनादेव कथं काल· प्रसिद्ध्यति ॥६०॥
इन्द्रियानधिगम्यत्वात् नाध्यक्षं नानुमा दिशि ।
वर्णैरर्थान्तरत्वेन साध्यासिद्धिर्निदर्शने ॥६१॥
भेदेऽप्ययुतसिद्धत्वाद् उपादानत्वसम्भवात् ।
तस्यापि दुर्निरूपत्वात् समवायाद्यसंगते ॥६२॥
युक्ते शब्दनिमित्तानामेकाधिकरणत्वत ।
शाब्द न तावद् घटते भेदाभेदप्रसाधकम् ॥६३॥
धर्माणामेकनिष्ठत्वमात्रेणैवोपपत्तितः ।
अभेदानुभवाभावादार्थं नैवास्य साधकम् ॥६४॥

## तृतीयः परिच्छेदः

साक्षात्करणहेतोरप्यप्रत्यक्षत्वसम्भवात् ।
दशमस्त्वमसीत्यादौ शब्दादेव तदुद्भवात् ॥१॥
तद्धेत्यादिश्रुते क्वापि मनसस्तदयोगत ।
शब्दत्वानुमितेर्बाधाद् व्यभिचारादनुत्थिते ॥२॥
प्रतिप्रयोगयोगाच्च विपक्षे बाधसम्भवात् ।
तस्याभासमानत्वाच्छब्दादेवापरोक्षधी ॥३॥
अभावाच्छ्रुतिलिङ्गादेरुपयोगानिरूपणात् ।
अधिकारविरोधाच्च कर्माङ्ग नात्मतत्त्वधी· ॥४॥
यज्ञादे करणत्वेन श्रुत्यैव प्रतिपादनात् ।
शेषत्वाधिगतावेव प्रक्रमस्याप्युपक्षयात् ॥५॥
निन्दाया देवताज्ञानविषयत्वेऽपि सम्भवात् ।
प्रक्रमस्यापि बाध्यत्वाद् बलीयस्या तृतीयया ॥६॥

## चतुर्थः परिच्छेदः

लीनशब्दनिदानेऽपि व्योम्नि तस्यानवस्थितेः । रूपाभावव्यवहृतेस्तदभावेऽपि चात्मनि ॥१॥
कुम्भ कुम्भेतराचित्कासुखान्यान्य प्रसाध्यताम् । कुम्भत्वेन यदित्थ तत्तथा कुम्भान्तर यथा ॥२॥
आत्मनोऽसुखरूपत्वाद्बन्धस्यान्यगतत्वत. । उपचारस्य चायोगात् सम्बन्धस्यानिरूपणात् ॥३॥
स्वरूपतः प्रमाणैर्वा सर्वज्ञत्व द्विधा स्थितम् । तच्चोभय विना विद्यासम्बध नैव सिद्ध्यति ॥४॥
चैत्रराग· स्वविषयानित्यज्ञानातिरेकिणा । तदध्यक्षेण संवीक्ष्य प्रत्यक्षत्वात् पटादिवत् ॥५॥
अविद्या कल्प्यतेऽनेका जाग्रत्स्वप्नविभेदिनी । यथा तथैव कल्प्यन्तामनन्ता सति कल्पके ॥६॥
सूत्रभाष्यादिवाक्यानां श्रुतिस्मृतिगिरामपि । मुख्यार्थत्वोपपत्त्यर्थं व्यवस्थैवाभ्युपेयताम् ॥७॥
निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षित. । उपलक्षणनाशेऽपि स्यान्मुक्तः पाचकादिवत् ॥८॥
विगीताज्ञानहानिः स्याज्ज्ञाताधिष्ठानमात्रकं । तत्त्वाद् यदित्थ तत्ताद्दग्यथा शुक्त्यादिक मितम्९॥
अविद्यालेशशब्देन मोहाकारान्तरोक्तित. । ज्ञानस्य प्रतिबन्धाच्च प्रबलारब्धकर्मभि· ॥१०॥
लेशानुवृत्तौ तज्जन्यकर्मादेरनुवृत्तितः । उत्पन्नात्मावबोधस्य जीवन्मुक्तिः प्रसिद्ध्यति ॥११॥

# परिशिष्टम्
## ( २ )
## तत्त्वप्रदीपिकोपात्तशासनशासकोत्करः

# परिशिष्टम्

## ( ३ )

### एते नयनमोदिन्यां ग्रन्थग्रन्थकृतो धृताः

# परिशिष्टम्

## ( ४ )

## तत्त्वप्रदीपिकोद्धारवाक्यजातं निरीक्ष्यताम्

| उद्धरणवाक्यानि | पृष्ठसंख्या | आकर |
|---|---|---|
| अक्षमा भवतः केयम् | १७ | बृ० वा० १।४।१२१९ |
| अग्निषोमीयम्पशुम् | ६३ | तै० सं० ६।१।११ |
| अजामेकाम् | ५७५ | श्वेता० उ० ४।५ |
| अतस्मिंस्तदिति प्रत्ययः | ३६९ | न्या० वा० |
| अत्रायम्पुरुषः स्वयंज्योति. | ४५ | बृ० उ० २।३९ |
| अतिदूरात्सामीप्यात् | २८४ | सा० का० ७ |
| अतिरात्रे षोडशिनम् | ६३ | प्र० पं० पृ० १८७ |
| अतो मानान्तरापूर्वम् | १६८ | प्र० प० |
| अथ यत्र सुप्तो न कचन कामम् | ४२ | बृ० उ० |
| अथ येऽन्यथाऽतो विदु. | ५८३ | बृ० उ० १।४।१० |
| अथ सम्पत्स्यते | ५८३ | बृ० उ० |
| अन्नादो वसुदानो विन्दते वसु | ८९ | बृ० उ० ४।४।२४ |
| अन्धन्तमः प्रविशन्ति | ५४१ | ईशा० ९ |
| अन्योऽन्यपरिहारेण | ३६० | |
| अन्वितस्याभिधानार्थम् | ४२२ | प्र० प० पृ० १८७ |
| अनादिनिधना नित्या | २६९,२७४ | म० भा० शा०प० २३१।५६ |
| अनुदिते जुहोति | ६३ | |
| अनुपपत्तेस्तु शारीरः | ५९७ | ब्र० सू० १।२।३ |
| अनुमानस्य तु परितः | २२१ | न्या० वा० तात्पर्यटीका |
| अनुमेयेन सम्बद्धम् | ३९६ | वै० भा० |
| अनेन जीवेन | ५८३ | छा० उ० ६।३।२ |
| अप्राप्य मनसा सह | ५३१ | तै० उ० २।४।१ |
| अभयं वै जनक प्राप्तोऽसि | ५९८ | बृ० उ० ४।२।४ |
| अय वै हरयः | ८८ | बृ० उ० २।५।१९ |
| अयुतसिद्धानाम् | ३३० | वै० भा० |
| अविद्यया मृत्युं तीर्त्वा | ५४८ | ईशा० ९ |
| अविनाशी वाऽरेऽयम् | ४१,४२ | बृ० उ० |
| अशरीर वाव सन्तम् | ५५८ | छा० उ० ८।१२।१ |
| असन्ततेश्चाव्यतिकरः | ५९७ | ब्र० सू० २३।४९ |
| असन्निकृष्टवाचा च | ४१५ | श्लो० वा० अनु० ५५।५६ |
| असम्भवद्विरुद्धधर्म० | ४४३ | न्या० ली० |
| अह कृत्स्नस्य जगतः | ६९६ | भ० गी० ७।६ |

